# SRIMANMAHABHARATAM

A NEW EDITION

MAINLY BASED ON

## THE SOUTH INDIAN TEXTS,

With footnotes and Readings.

### VANAPARVA III.

EDITED BY

T. R. KRISHNACHARYA & T. R. VYASACHARYA,

Proprietors, Madhva Vilas Book Depot, Kumbakonam.

*PRINTED AT THE*

*Javaji Dadaji's "Nirnaya-sagar" Press,*

**BOMBAY.**

1908.

॥ श्रीः ॥

# श्रीमन्महाभारतम् ।

## सटिप्पणम् ।

## वनपर्व ३.

---

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च

अनेकेषां विदुषां साहाय्येन दाक्षिणात्यबहुकोशानुसारेण

संशोध्य

मुंबापुर्यां

जावजी दादाजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

---

शाके १८३० कीलकनामसंवत्सरे ।

श्रीः ।

# श्रीमन्महाभारतम् ।

## वनपर्व ३ ।

## (अथ किर्मीरवधपर्व ॥ १ ॥)

### प्रथमोऽध्यायः ॥ १ ॥

द्यूतजितानां पाण्डवानां द्रौपद्यासह वनंप्रति प्रस्थानम् ॥ १ ॥ तदनु पौरैर्दुर्योधनगर्हणपूर्वकं पाण्डवैः सहारण्यवासेच्छया तदनुगमनम् ॥ २ ॥ युधिष्ठिरेण प्रार्थनया तेषां पुरंप्रति निवर्तनपूर्वकं सायं गङ्गातीरगवटमेत्य तत्रानुगतब्राह्मणैः सह सुखेन रात्रियापनम् ॥ ३ ॥

---

श्रीवेदव्यासाय नमः ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १

जनमेजय उवाच ।

एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः ।
धार्तराष्ट्रैः सहामात्यैर्निकृत्या द्विजसत्तम ॥ १
श्राविताः परुषा वाचः सृजन्तीर्वैरमुत्तमम् ।
किमकुर्वत कौरव्या मम पूर्वपितामहाः । २
कथं चैश्वर्यभूयिष्ठाः सहसा दुःखमेयुषः ।
वने विजह्रिरे पार्थाः शक्रप्रतिमतेजसः ॥ ३
के चैतानन्ववर्तन्त प्राप्तान्व्यसनमुत्तमम् ।
किमाचाराः किमाहाराः क्व च वासो महात्मनाम् ४
कथं द्वादश वर्षाणि वने तेषां महात्मनाम् ।
व्यतीयुर्ब्राह्मणश्रेष्ठ शूराणामनिवर्तिनाम् ॥ ५
कथं च राजपुत्री सा प्रवरा सर्वयोषिताम् ।
पतिव्रता महाभागा सततं प्रियवादिनी ॥ ६
वनवासमदुःखार्हा दारुणं प्रत्यपद्यत ।
एतदाचक्ष्व मे सर्वं विस्तरेण तपोधन ॥ ७
श्रोतुमिच्छामि तत्सर्वं भूरिद्रविणतेजसाम् ।
कथ्यमानं त्वया विप्र परं कौतूहलं हि मे ॥ ८

वैशंपायन उवाच ।

एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः ।
धार्तराष्ट्रैः सहामात्यैर्निर्ययुर्गजसाह्वयात् ॥ ९
वर्धमानपुरद्वारादभिनिष्क्रम्य ते तदा ।
उदङ्मुखाः शस्त्रभृतः प्रययुः सह कृष्णया ॥ १०
इन्द्रसेनादयश्चैतान्भृत्याः परिचतुर्दश ।
रथैरनुययुः शीघ्रैः स्त्रिय आदाय सर्वशः ॥ ११
'ततस्ते पुरुषव्याघ्रा रथानास्थाय भारत ।
ददृशुर्जाह्नवीतीरे प्रमाणाख्यं महावटम् ॥' १२
व्रजतस्तान्विदित्वा तु पौराः शोकाभिपीडिताः ।
गर्हयन्तोऽसकृद्भीष्मविदुरद्रोणगौतमान् ।
ऊचुर्वै समयं कृत्वा समागम्य परस्परम् ॥ १३

---

पार्था इति च्छत्रिन्यायेन माद्रीसुतयोरप्युपलक्षणम् । दुरात्मभिर्दुष्टचित्तैः । सहामात्यैः कर्णादिभिः । निकृत्या छलेन ॥ १ ॥ सृजद्भिर्वैरमुत्तममिति ख. ङ. झ. पाठः ॥ २ ॥ एयुषः प्राप्तवन्तः । कथं चैश्वर्यविभ्रष्टा इति ख. झ. पाठः ॥ ३ ॥ उत्तमं तीव्रम् ॥ ४ ॥ द्रविणं पराक्रमस्तेजो देहकान्तिश्च ते उभे पुष्कले येषां ते भूरिद्रविणतेजसः ॥ ८ ॥ गजसाह्वयात् हास्तिनपुरात् ॥ ९ ॥ वर्धमानपुरंनाम ग्रामविशेषस्तदभिमुखं द्वारं तस्मात् ॥ १० ॥ परिचतुर्दश अधिकचतुर्दशाः । पञ्चदशेत्यर्थः । संख्ययाव्ययासन्नेति समासः । समासान्तविधेरनित्यत्वात् डच्प्रत्ययस्याभावः ॥ ११ ॥ ऊचुर्विगतसंत्रासा इति

पौरा ऊचुः ।
नेदमस्ति कुलं सर्वं न वयं नच नो गृहाः ।
यत्र दुर्योधनः पापः सौबलेयेन पालितः ।
कर्णदुःशासनाद्यैश्च राज्यमेतच्चिकीर्षति ॥ १४
न तत्कुलं न चाचारो न धर्मोऽर्थः कुतः सुखम् ।
यत्र पापसहायोऽयं पापो राज्यं चिकीर्षति ॥१५
दुर्योधनो गुरुद्वेषी त्यक्तधर्मः प्रियानृतः ।
अर्थलुब्धोऽभिमानी च नीचः प्रकृतिनिर्घृणः ॥१६
नेयमस्ति मही कृत्स्ना यत्र दुर्योधनो नृपः ।
साधु गच्छामहे सर्वे यत्र गच्छन्ति पाण्डवाः ॥१७
सानुक्रोशा महात्मानो विजितेन्द्रियशत्रवः ।
ह्रीमन्तः कीर्तिमन्तश्च धर्माचारपरायणाः ॥ १८
वैशंपायन उवाच ।
एवमुक्त्वाऽनुजग्मुस्ते पाण्डवांस्तान्समेत्य च ।
ऊचुः प्राञ्जलयः सर्वे तान्कुन्तीमाद्रिनन्दनान् १९
क्व गमिष्यथ भद्रं वस्त्यक्त्वाऽस्मान्दुःखभागिनः ।
वयमप्यनुयास्यामो यत्र यूयं गमिष्यथ ॥ २०
अधर्मेण जिताञ्श्रुत्वा युष्मांस्त्यक्तघृणैः परैः ।
उद्विग्नाः स्मो भृशं सर्वे नास्मान्हातुमिहार्हथ ॥२१
भक्तानुरक्तान्सुहृदः सदा प्रियहिते रतान् ।
कुराजाधिष्ठिते राज्ये न विनश्येम सर्वशः ॥ २२
श्रूयतां चाभिधास्यामो गुणदोषान्नरर्षभाः ।
शुभाशुभाधिवासेन संसर्गः कुरुते यथा ॥ २३
वस्त्रमापस्तिलान्भूमिं गन्धो वासयते यथा ।
पुष्पाणामधिवासेन तथा संसर्गजा गुणाः ॥ २४
मोहजालस्य योनिर्हि मूढैरेव समागमः ।
अहन्यहनि धर्मस्य योनिः साधुसमागमः ॥ २५
तस्मात्प्राज्ञैश्च वृद्धैश्च सुस्वभावैस्तपस्विभिः ।
सद्भिश्च सह संसर्गः कार्यः शमपरायणैः ॥ २६
येषां त्रीण्यवदातानि विद्या योनिश्च कर्म च ।
ते सेव्यास्तैः समास्या हि शास्त्रेभ्योपि गरीयसी २७
निरारम्भा ह्यपि वयं पुण्यशीलेषु साधुषु ।
पुण्यमेवाप्नुयामेह पापं पापोपसेवनात् ॥ २८
असतां दर्शनात्स्पर्शात्संजल्पाच्च सहासनात् ।
धर्माचाराः प्रहीयन्ते सिद्ध्यन्ति च न मानवाः २९
बुद्धिश्च हीयते पुंसां नीचैः सह समागमात् ।
मध्यमैर्मध्यतां याति श्रेष्ठैः श्रेष्ठत्वमाप्नुयुः ॥ ३०
अनीचैर्नाप्यविषयैर्नाधर्मिष्ठैर्विशेषतः ।
ये गुणाः कीर्तिता लोके धर्मकामार्थसंभवाः ।
लोकाचारेषु संभूता वेदोक्ताः शिष्टसंमताः ॥३१
ते युष्मासु समस्ताश्च व्यस्ताश्चैवेह सद्गुणाः ।
इच्छामो गुणवन्मध्ये वस्तुं श्रेयोभिकाङ्क्षिणः ॥३२
युधिष्ठिर उवाच ।
धन्या वयं यदस्माकं स्नेहकारुण्ययन्त्रिताः ।
असतोऽपि गुणानाहुर्ब्राह्मणप्रमुखाः प्रजाः ॥ ३३
तदहं भ्रातृसहितः सर्वान्विज्ञापयामि वः ।
नान्यथा तद्धि कर्तव्यमस्मत्स्नेहानुकम्पया ॥ ३४
भीष्मः पितामहो राजा विदुरो जननी च मे ।
सुहृज्जनश्च प्रायो मे नगरे नागसाह्वये ॥ ३५
ते त्वस्मद्धितकामार्थं पालनीयाः प्रयत्नतः ।
युष्माभिः सहिताः सर्वे शोकसंतापविह्वलाः ॥३६
निवर्ततागता दूरं समागमनकाङ्क्षिणः ।
स्वजने न्यासभूते मे कार्या स्नेहान्विता मतिः ॥३७
एतद्धि मम कार्याणां परमं हृदि संस्थितम् ।
कृता तेन तु तुष्टिर्मे सत्कारश्च भविष्यति ॥ ३८
वैशंपायन उवाच ।
तथानुमन्त्रितास्तेन धर्मराजेन ताः प्रजाः ।
चक्रुरार्तस्वरं घोरं हा राजन्निति दुःखिताः ॥३९

---

ख. झ. पाठः ॥ १३ ॥ प्रकृतिनिर्घृणः स्वभावनिर्दयः । त्यक्ताचारसुहृज्जन इति झ. पाठः ॥ १६ ॥ सानुक्रोशाः सदयाः ॥ १८ ॥ भक्तान् आराधनापरान् । अनुरक्तान् प्रीतिमतः । सुहृदः वेतनाद्युपकारमनपेक्ष्य उपकारकान् । न विनश्येम विनाशं न प्रार्थयामहे । प्रार्थनायां लिङ् ॥ २२ ॥ आपः अपः ॥ २४ ॥ अवदातानि शुद्धानि । समास्या संगतिः ॥ २७ ॥ निरारम्भाः अग्निहोत्राद्यकुर्वाणा अपि ॥ २८ ॥ न सिद्ध्यन्ति सिद्धिश्चित्तशुद्धिस्तां न प्राप्नुवन्ति धर्माचारहीनत्वात् ॥ २९ ॥ अविषयैः अगोचरैरपरिचितैरित्यर्थः । धर्मकामार्थसंभवाः धर्मादीनां संभव उत्पत्तिर्येभ्यस्ते ॥ ३१ ॥ समस्ताः एकीभूताः । व्यस्ताः पृथक्पृथग्भूताः ॥ ३२ ॥ स्नेहो वात्सल्यं तत्सहिता अनुकम्पा दया ॥ ३४ ॥

गुणान्पार्थस्य संस्मृत्य दुःखार्ताः परमातुराः ।
अकामाः संन्यवर्तन्त समागम्याथ पाण्डवान् ४०
निवृत्तेषु तु पौरेषु रथानास्थाय पाण्डवाः ।
आजग्मुर्जाह्नवीतीरे प्रमाणाख्यं महावटम् ॥ ४१
ते तं दिवसशेषेण वटं गत्वा तु पाण्डवाः ।
ऊषुस्तां रजनीं वीराः संस्पृश्य सलिलं शुचि ॥४२
उदकेनैव तां रात्रिमूषुस्ते दुःखकर्शिताः ।
अनुजग्मुश्च तत्रैतान्स्नेहात्केचिद्द्विजातयः ॥ ४३
साग्नयोऽनग्नयश्चैव सशिष्यगणबान्धवाः ।
स तैः परिवृतो राजा शुशुभे ब्रह्मवादिभिः ॥४४
तेषां प्रादुष्कृताग्नीनां मुहूर्ते रम्यदारुणे ।
ब्रह्मघोषपुरस्कारः संजल्पः समजायत ॥ ४५
राजानं तु कुरुश्रेष्ठं ते हंसमधुरस्वराः ।
आश्वासयन्तो विप्राग्र्याः क्षपां सर्वां व्यनोदयन् ॥
'राजा तु भ्रातृभिः सार्धं तथा सर्वैः सुहृद्गणैः ।
अशेत तां निशां राजन्दुःखशोकसमाहितः ॥'४७

॥ इति श्रीमन्महाभाते अरण्यपर्वणि किर्मीरवधपर्वणि प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ॥ २ ॥

युधिष्ठिरेण वने स्वानुयायिनो ब्राह्मणान्प्रति स्वस्य हृतसर्वस्वतया तद्भरणस्य दुष्करत्वकथनपूर्वकं प्रतिनिवर्तनप्रार्थना ॥ १ ॥ ब्राह्मणैः स्वयमेवात्मभरणपूर्वकं स्वसहवासमात्रेऽर्थिते युधिष्ठिरेण स्वस्य तद्भरणाशक्तिचिन्तनेन विषादाधिगमः ॥ २ ॥ शौनकेन युधिष्ठिरंप्रति ब्राह्मणभरणाय तपसा सिद्धिसंपादनचोदना ॥ ३ ॥

---

वैशंपायन उवाच ।
प्रभातायां तु शर्वर्यां तेषामक्लिष्टकर्मणाम् ।
वनं यियासतां विप्रास्तस्थुर्भिक्षाभुजोऽग्रतः ।
तानुवाच ततो राजा कुन्तीपुत्रो युधिष्ठिरः ॥ १
वयं हि हृतसर्वस्वा हृतराज्या हृतश्रियः ।
फलमूलामिषाहारा वनं यास्याम दुःखिताः ॥ २
वनं च दोषबहुलं बहुव्यालसरीसृपम् ।
परिक्लेशश्च वो मन्ये ध्रुवं तत्र भविष्यति ॥ ३
ब्राह्मणानां परिक्लेशो दैवतान्यपि सादयेत् ।
किंपुनर्मामितो विप्रा निवर्तध्वं यथेष्टतः ॥ ४
ब्राह्मणा ऊचुः ।
गतिर्या भवतां राजंस्तां वयं गन्तुमुद्यताः ।
नार्हथास्मान्परित्यक्तुं भक्तान्सद्धर्मदर्शिनः ॥ ५
स्नेहकर्माणि भक्तेषु दैवतान्यपि कुर्वते ।
विशेषतो ब्राह्मणेषु सदाचारावलम्बिषु ॥ ६
युधिष्ठिर उवाच ।
ममापि परमा भक्तिर्ब्राह्मणेषु सदा द्विजाः ।
सहायविपरिभ्रंशस्त्वयं सादयतीव माम् ॥ ७
आहरेयुर्हि ये सर्वे फलमूलमृगांस्तथा ।
त इमे शोकजैर्दुःखैर्भ्रातरो मे विमोहिताः ॥ ८
द्रौपद्या विप्रकर्षेण राज्यापहरणेन च ।
दुःखार्दितानिमान्क्लेशैर्नाहं योक्तुमिहोत्सहे ॥ ९
ब्राह्मणा ऊचुः ।
अस्मत्पोषणजा चिन्ता मा भूत्ते हृदि पार्थिव ।
स्वयमाहृत्य वन्यानि त्वानुयास्यामहे वयम् ॥१०
अनुध्यानेन जप्येन विधास्यामः शिवं तव ।
कथाभिश्चानुकूलाभिः सह रंस्यामहे वने ॥ ११
युधिष्ठिर उवाच ।
एवमेतन्न संदेहो रमेयं ब्राह्मणैः सह ।
न्यूनभावात्तु पश्यामि प्रत्यादेशमिवात्मनः ॥१२
कथं द्रक्ष्यामि वः सर्वान्स्वयमाहृत्य भोजिनः ।

---

समागम्य संपृच्छय ॥ ४० ॥ ऊषुः वासं चक्रुः ॥ ४२ ॥ ऊषुर्निन्युः ॥ ४३ ॥ साग्नयः दारैः सहिताः । अनग्नयस्तदन्ये स्नातकब्रह्मचार्यादयः ॥ ४४ ॥ प्रादुष्कृताः प्रकटीकृताः अग्नयो यैस्ते । रम्यत्वं तापविरहात्संध्यारागादिशोभातश्च । दारुणो रक्षःपिशाचादिसंचारकालत्वात् ॥ ४५ ॥ प्रथमोऽध्यायः ॥१॥

प्रभातायामरुणोदयेन उद्दीपितायाम् ॥ १ ॥ अनुध्यानेन इष्टचिन्तनेन । जप्येन स्वस्त्ययनेन तथा विश्वासकरणैः सह रंस्यामहे इति ध. पाठः ॥ ११ ॥ प्रत्यादेशं धिक्कारम् ॥१२॥

मद्भक्त्या क्लिश्यतोऽनर्हान्धिक्पापान्धृतराष्ट्रजान् ॥
वैशंपायन उवाच ।
इत्युक्त्वा नृपतिः शोचन्निषसाद महीतले ॥ १४
तमध्यात्मरतो विद्वाञ्शौनको नाम वै द्विजः ।
योगे साङ्ख्ये च कुशलो राजानमिदमब्रवीत् ॥ १५
शोकस्थानसहस्राणि हर्षस्थानशतानि च ।
दिवसेदिवसे मूढमाविशन्ति न पण्डितम् ॥ १६
न हि ज्ञानविरुद्धेषु बहुदोषेषु कर्मसु ।
श्रेयोघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ १७
अष्टाङ्गां बुद्धिमाहुर्यां सर्वाश्रेयोभिघातिनीम् ।
श्रुतिस्मृतिसमायुक्तां राजन्सा त्वय्यवस्थिता १८
'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ।
ऊहापोहोऽर्थविज्ञानं तत्वज्ञानं च धीगुणाः ॥' १९
अर्थकृच्छ्रेषु दुर्गेषु व्यापत्सु स्वजनेष्वपि ।
शारीरमानसैर्दुःखैर्न सीदन्ति भवद्विधाः ॥ २०
श्रूयतां चाभिधास्यामि जनकेन यथा पुरा ।
आत्मव्यवस्थानकरा गीताः श्लोका महात्मना २१
मनोदेहसमुत्थाभ्यां दुःखाभ्यामर्दितं जगत् ।
तयोर्व्याससमासाभ्यां शमोपायमिमं शृणु ॥ २२
व्याधेरनिष्टसंस्पर्शाच्छ्रमादिष्टविवर्जनात् ।
दुःखं चतुर्भिः शारीरं कारणैः संप्रवर्तते ॥ २३
तदा तत्प्रतिकाराच्च सततं चाविचिन्तनात् ।
आधिव्याधिप्रशमनं क्रियायोगबलेन तु ॥ २४
मतिमन्तो व्यथोपेताः शमं प्रागेव कुर्वते ।
मानसस्य प्रियाख्यानैः संभोगोपनयैर्नृणाम् ॥ २५
मानसेन हि दुःखेन शरीरमुपतप्यते ।
अयःपिण्डेन तप्तेन कुम्भसंस्थमिवोदकम् ॥ २६
मानसं शमयेत्तस्माज्ज्ञानेनाग्निमिवाम्बुना ।
प्रशान्ते मानसे दुःखे शारीरमुपशाम्यति ॥ २७
मनसो दुःखमूलं तु स्नेह इत्युपलभ्यते ।
स्नेहात्तु सज्जते जन्तुर्दुःखयोगमुपैति च ॥ २८
स्नेहमूलानि दुःखानि स्नेहजानि भयानि च ।
शोकहर्षौ तथायासः सर्वं स्नेहात्प्रवर्तते ॥ २९
स्नेहात्कारुण्यरागौ च प्रजास्त्रीर्ष्यादयस्तथा ।
अश्रेयस्कावुभावेतौ पूर्वस्तत्र गुरुः स्मृतः ॥ ३०
कोटराग्निर्यथाऽशेषं समूलं पादपं दहेत् ।
धर्मार्थिनं तथाऽल्पोपि रागदोषो विनाशयेत् ॥ ३१
विप्रयोगे न तु त्यागी दोषदर्शी समागमे ।
विरागं भजते जन्तुर्निर्वैरो निष्परिग्रहः ॥ ३२
तस्मात्स्नेहं स्वपक्षेभ्यो मित्रेभ्यो धनसंचयात् ।
स्वशरीरसमुत्थं च ज्ञानेन विनिवर्तयेत् ॥ ३३
ज्ञानान्वितेषु युक्तेषु शास्त्रज्ञेषु कृतात्मसु ।
न तेषु सज्जते स्नेहः पद्मपत्रेष्विवोदकम् ॥ ३४
रागाभिभूतः पुरुषः कामेन परिकृष्यते ।
इच्छा संजायते तस्य ततस्तृष्णा विवर्धते ॥ ३५
तृष्णा हि सर्वपापिष्ठा नित्योद्वेगकरी नृणाम् ।
अधर्मबहुला चैव घोरा पापानुबन्धिनी ॥ ३६
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥
अनाद्यन्ता तु सा तृष्णा अन्तर्देहगता नृणाम् ।
विनाशयति भूतानि अयोनिज इवानलः ॥ ३८
यथैधः स्वसमुत्थेन वह्निना नाशमृच्छति ।

---

अध्यात्मं आत्मानमधिकृत्य प्रवृत्तं शास्त्रमध्यात्मं वेदान्तस्तत्र रतः । योगश्चित्तवृत्तिनिरोधः ॥ १५ ॥ शोकःस्थीयतेऽनेनेति व्युत्पत्त्या स्थानशब्दो हेतुवचनः । भयस्थानशतानि चेति झ. पाठः ॥ १६ ॥ अर्थकृच्छ्रेषु धननाशेषु । दुर्गेषु दुस्तरेषु शारीरदुःखेषु। आपत्सु स्त्रीकर्षणादिषु ॥ २० ॥ आत्मव्यवस्थानकराः मनःस्थैर्यहेतवः ॥ २१ ॥ व्याससमासाभ्यां विस्तरसंक्षेपाभ्याम् ॥ २२ ॥ अनिष्टं कण्टकादिः । श्रमो व्यायामः ॥ २३ ॥ प्रतिकारादौषधादिभिरुपशमनात् आधिप्रशमनमविचिन्तनात् । इदमेव क्रियायोगबलम् ॥ २४ ॥ प्रागेव मानसस्य शमं कुर्वते । प्रियाख्यानैरनुकूलवचनैः । संभोगोपनयैः स्त्र्यादिसमर्पणैः । मतिमन्तो ह्यतो वैद्या इति ख. च. झ. पाठः ॥ २५ ॥ स्नेहो रागः सज्जते प्रवर्तते ॥ २८ ॥ आयासः क्लेशः ॥ २९ ॥ विप्रयोगे विषयेण सह वियोगे त्यागी न किंतु सत्यपि समागमे यो विषयदोषदर्शी सएव त्यागी । स एव च विरागं भजते ॥ ३२ ॥ युक्तेषु नित्यवस्तुप्राप्तये उद्युक्तेषु । कृतात्मसु ध्यानेन संस्कृतचित्तेषु । तेषु प्रसिद्धेषु स्नेहो रागो न सज्जते न सङ्गं प्राप्नोति ॥ ३४ ॥ रागः रम्यवस्तुदर्शने चित्तस्योत्फुल्लता । कामस्तल्लिप्सा । इच्छा लब्धे तस्मिन् रुच्यतिशयात्पुनस्तदभिलाषः । पुनःपुनस्तल्लाभेप्यतृप्तिस्तृष्णा ॥ ३५ ॥ जीर्यतः जरामृत्युग्रस्तस्य ॥ ३७ ॥ अयः

तथाऽकृतात्मा लोभेन सहजेन विनश्यति ॥ ३९
राजतः सलिलादग्नेश्चोरतः स्वजनादपि ।
'अर्थिभ्यः कालतस्तस्मान्नित्यमर्थवतां भयम् ।'
भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ ४०
यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि ।
भक्ष्यते सलिले मत्स्यैस्तथा सर्वेण वित्तवान् ॥४१
अर्थ एव हि केषांचिदनर्थं भजते नृणाम् ।
अर्थश्रेयसि चासक्तो न श्रेयो विन्दते नरः ।
तस्मादर्थागमाः सर्वे मनोमोहविवर्धनाः ॥ ४२
कार्पण्यं दर्पमानौ च भयमुद्वेग एव च ।
अर्थजानि विदुः प्राज्ञा दुःखान्येतानि देहिनाम् ॥
अर्थस्योपार्जने दुःखमार्जितानां च रक्षणे ।
नाशे दुःखं व्यये दुःखं घ्नन्ति चैवार्थकारणात् ४४
अर्था दुःखं परित्यक्तुं पालिताश्चैव शत्रवः ।
दुःखेन चाधिगम्यन्ते तेषां नाशं न चिन्तयेत् ॥
असन्तोषपरा मूढाः संतोषं यान्ति पण्डिताः ।
अन्तो नास्ति पिपासायाः संतोषः परमं सुखम् ।
तस्मात्संतोषमेवेह परं पश्यन्ति पण्डिताः ॥ ४६
अनित्यं यौवनं रूपं जीवितं रत्नसंचयः ।
ऐश्वर्यं प्रियसंवासो गृध्येत्तत्र न पण्डितः ॥ ४७
त्यजेत स च यांस्तस्मात्तज्जान्क्लेशान्सहेत च ।
न हि संचयवान्कश्चिद्दृश्यते निरुपद्रवः ।
अतश्च धार्मिकैः पुम्भिरनीहार्थः प्रशस्यते ॥ ४८
धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता ।
प्रक्षालनाद्धि पङ्कस्य श्रेयो ह्यस्पर्शनं नृणाम् ॥४९
युधिष्ठिरैवमर्थेषु न स्पृहां कर्तुमर्हसि ।
धर्मेण यदि ते कार्यं विमुक्तेच्छो भवार्थतः ॥५०
युधिष्ठिर उवाच ।
नार्थोपभोगलिप्सार्थमियमर्थेप्सुता मम ।
भरणार्थं तु विप्राणां ब्रह्मन्काङ्क्षे न लोभतः ॥५१
कथं ह्यस्मद्विधो ब्रह्मन्वर्तमानो गृहाश्रमे ।
भरणं पालनं चापि न कुर्यादनुयायिनाम् ॥ ५२
संविभागो हि भूतानां सर्वेषामेव दृश्यते ।
तथैवापचमानेभ्यः प्रदेयं गृहमेधिना ॥ ५३
तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥ ५४
देयमार्तस्य शयनं स्थितश्रान्तस्य चासनम् ।
तृषितस्य च पानीयं क्षुधितस्य च भोजनम् ॥५५
चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम् ।
उत्थाय चासनं दद्यादेष धर्मः सनातनः ।
प्रत्युत्थायाभिगमनं कुर्यान्न्यायेन चार्चनाम् ॥५६
अग्निहोत्रमनड्वांश्च ज्ञातयोऽतिथिबान्धवाः ।
पुत्रा दाराश्च भृत्याश्च निर्दहेयुरपूजिताः ॥ ५७
आत्मार्थं पाचयेन्नान्नं न वृथा घातयेत्पशून् ।
न चैकः स्वयमश्नीयाद्विधिवर्जं न निर्वपेत् ॥ ५८
श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद्भुवि ।
वैश्वदेवं हि नामैतत्सायं प्रातश्च दीयते ॥ ५९
विघसाशी भवेत्तस्मान्नित्यं चामृतभोजनः ।
विघसो भुक्तशेषं तु यज्ञशेषं तथाऽमृतम् ॥ ६०
चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम् ।
अनुव्रजेदुपासीत स यज्ञः पञ्चदक्षिणः ॥ ६१
यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्तते ।
श्रान्तायादृष्टपूर्वाय तस्य पुण्यफलं महत् ॥ ६२
एवं यो वर्तते वृत्तिं वर्तमानो गृहाश्रमे ।
तस्य धर्मं परं प्राहुः कथं वा विप्र मन्यसे ॥ ६३
शौनक उवाच ।
अहो बत महत्कष्टं विपरीतमिदं जगत् ।
येनापत्रपते साधुरसाधुस्तेन तुष्यति ॥ ६४

---

तप्तायःपिण्डं अनलो वह्निः ॥ ३८ ॥ अकृतात्मा अनिर्जितचेताः ॥ ३९ ॥ अर्थश्रेयसि अर्थसाध्ये श्रेयसि ज्योतिष्टोमादौ ॥ ४२ ॥ पिपासायाः तृष्णायाः ॥ ४६ ॥ संचयान् अर्थान् । तज्जान् अर्थत्यागजान् । अनीहार्थः यदृच्छालब्धोऽर्थः ॥ ४८ ॥ अर्थतः धनात् ॥५०॥ अर्थोपभोगः विषयोपभोगः । अर्थेप्सुता धनेप्सुता ॥५१॥ दृश्यते पञ्चमहायज्ञेषु । अपचमानेभ्यः यत्यादिभ्यः ॥ ५३ ॥ तृणानि आसनार्थानि ॥ ५४ ॥ वृथा श्राद्धयज्ञादिनिमित्तंविना ॥ ५८ ॥ विश्वं सर्वजातीयं प्राणिजातं देवो देवता यस्मिंस्तद्विश्वदेवम् । स्वार्थे तद्धितः । वैश्वदेवं नाम कर्म ॥ ५९ ॥ अपरिक्लिष्टं कार्पण्यं विना । अध्वनि वर्तते मार्गस्थाय ॥ ६२ ॥

शिश्नोदरकृतेऽप्राज्ञः करोति विघसं बहु ।
मोहरागवशाक्रान्त इन्द्रियार्थवशानुगः ॥ ६५
ह्रियते बुध्यमानोपि नरो हारिभिरिन्द्रियैः ।
विमूढसंज्ञो दुष्टाश्वैरुद्भ्रान्तैरिव सारथिः ॥ ६६
षडिन्द्रियाणि विषयं समागच्छन्ति वै यदा ।
तदा प्रादुर्भवत्येषां पूर्वसंकल्पजं मनः ॥ ६७
मनो यस्येन्द्रियस्येह विषयान्याति सेवितुम् ।
तस्यौत्सुक्यं संभवति प्रवृत्तिश्चोपजायते ॥ ६८
ततः संकल्पवीर्येण कामेन विषयेषुभिः ।
विद्धः पतति लोभाग्नौ ज्योतिर्लोभात्पतङ्गवत् ६९
ततो दारैर्विहारैश्च मोहितश्च यथेप्सया ।
महामोहमुखे मग्नो नात्मानमवबुध्यते ॥ ७०
एवं पतति संसारे तासुतास्विह योनिषु ।
अविद्याकर्मतृष्णाभिर्भ्राम्यमाणोऽथ चक्रवत् ७१
ब्रह्मादिषु तृणान्तेषु भूतेषु परिवर्तते ।
जले भुवि तथाऽऽकाशे जायमानः पुनःपुनः ७२
अबुधानां गतिस्त्वेषा बुधानामपि मे शृणु ।
ये धर्मे श्रेयसि रता विमोक्षरतयो जनाः ॥ ७३
तदिदं वेदवचनं कुरु कर्म त्यजेति च ।
तस्माद्धर्मानिमान्सर्वान्नाभिमानात्समाचरेत् ॥७४

इज्याध्ययनदानानि तपः सत्यं क्षमा दमः ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ७५
अत्र पूर्वश्चतुर्वर्गः पितृयाणपथे स्थितः ।
कर्तव्यमिति यत्कार्यं नाभिमानात्समाचरेत् ७६
उत्तरो देवयानस्तु सद्भिराचरितः सदा ।
अष्टाङ्गेनैव मार्गेण विशुद्धात्मा समाचरेत् ॥ ७७
सम्यक्संकल्पसंबन्धात्सम्यक्चेन्द्रियनिग्रहात् ।
सम्यग्व्रतविशेषाच्च सम्यक्च गुरुसेवनात् ॥ ७८
सम्यगाहारयोगाच्च सम्यक्चाध्ययनागमात् ।
सम्यक्कर्मोपसंन्यासात्सम्यक्चित्तनिरोधनात् ॥७९
एवं कर्माणि कुर्वन्ति संसारविजिगीषवः ।
रागद्वेषविनिर्मुक्ता ऐश्वर्यवशमागताः ॥ ८०
रुद्राः साध्यास्तथाऽऽदित्या वसवोऽथ तथाश्विनौ ।
योगैश्वर्येण संयुक्ता धारयन्ति प्रजा इमाः ॥ ८१
तथा त्वमपि कौन्तेय शममास्थाय पुष्कलम् ।
तपसा सिद्धिमन्विच्छ योगसिद्धिं च भारत ॥८२
पितृमातृमयी सिद्धिः प्राप्ता कर्ममयी च ते ।
तपसा सिद्धिमन्विच्छ द्विजानां भरणाय वै ॥८३
सिद्धा हि यद्यदिच्छन्ति कुर्वते तदनुग्रहम् ।
तस्मात्तपः समास्थाय कुरुष्वात्ममनोरथम् ॥ ८४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि किर्मीरवधपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ॥ ३ ॥

युधिष्ठिरेण ब्राह्मणभरणाय धौम्यचोदनया सूर्यस्तुतिः ॥ १ ॥ स्तोत्रैः प्रसन्नेन सूर्येण युधिष्ठिरायाक्षयपात्रदानम् ॥ २ ॥

वैशंपायन उवाच ।
शौनकेनैवमुक्तस्तु कुन्तीपुत्रो युधिष्ठिरः ।
'प्रणम्य द्विजशार्दूलं पूज्यवाक्यं सुभाषितम् ।'
पुरोहितमुपागम्य भ्रातृमध्येऽब्रवीदिदम् ॥ १
प्रस्थितानुयातारो ब्राह्मणा वेदपारगाः ।

न चास्मि पोषणे शक्तो बहुदुःखसमन्वितः ॥ २
परित्यक्तुं न शक्नोमि दानशक्तिश्च नास्ति मे ।
कथमत्र मया कार्यं तद्ब्रूहि भगवन्मम ॥ ३
वैशंपायन उवाच ।
मुहूर्तमिव स ध्यात्वा धर्मेणान्वीक्ष्य तां गतिम् ।

---

विघसं देवताद्युपयुक्तशेषं कामुको बहुकरोति । इन्द्रियार्थाः शब्दादयः ॥ ६५ ॥ हारिभिः हरणशीलैः ॥ ६६ ॥ इन्द्रियस्येन्द्रियाणां विषयान् शब्दादीन् ॥ ६८ ॥ इति च वेदवचनमित्यन्वयः । फलेच्छां विनैव समाचरेदित्यर्थः ॥ ७४ ॥ कर्तव्यमवश्यानुष्ठेयं नित्याग्निहोत्रसंध्योपासनादि । अभिमानात्सङ्गात् ॥ ७६ ॥ अष्टाङ्गेन वक्ष्यमाणसंकल्पसंबन्धाद्यङ्गाष्टकवता तदाचरेदिति पूर्वेण संबन्धः । विशुद्धात्मा शुद्धचित्तः ॥ ७७ ॥ संकल्पो मानसं कर्म तस्य संबन्धो निरोधः ॥ ७८ ॥ कर्ममयी यज्ञयुद्धादिकर्मरूपसाधनप्रधाना सिद्धिः । पितृमातृमयी परलोकेहलोकफलप्रधाना ॥ ८३ ॥ द्वितीयोऽध्यायः ॥२॥

युधिष्ठिरमुवाचेदं धौम्यो धर्मभृतां वरः ॥ ४
पुरा सृष्टानि भूतानि पीड्यन्ते क्षुधया भृशम् ।
ततोऽनुकम्पया तेषां सविता स्वपिता यथा ॥ ५
गत्वोत्तरायणं तेजो रसानुद्धृत्य रश्मिभिः ।
दक्षिणायनमावृत्तो महीं वर्षति वारिणा ॥ ६
क्षेत्रभूते ततस्तस्मिन्नोषधीरोषधीपतिः ।
रवेस्तेजः समुद्धृत्य जनयामास वारिणा ॥ ७
निषिक्तश्चन्द्रतेजोभिः सूयते जगतो रविः ।
ओषध्यः षड्रसा मेध्यास्तदन्नं प्राणिनां भुवि ॥८
एवं भानुमयं ह्यन्नं भूतानां प्राणधारणम् ।
नाथोऽयं सर्वभूतानां तस्मात्तं शरणं व्रज ॥ ९
राजानो हि महात्मानो योनिकर्मविशोधिताः ।
उद्धरन्ति प्रजाः सर्वास्तप आस्थाय पुष्कलम् ॥१०
भौमेन कार्तवीर्येण वैन्येन नहुषेण च ।
तपोयोगसमाधिस्थैरुद्धृता ह्यापदः प्रजाः ॥ ११
तथा त्वमपि धर्मात्मन्कर्मणा च विशोधितः ।
तप आस्थाय धर्मेण द्विजातीन्भर भारत ॥ १२
वैशंपायन उवाच ।
एवमुक्तस्तु धौम्येन तत्कालसदृशं वचः ।
ततस्त्वध्यापयामास मन्त्रं सर्वार्थसाधकम् ।
अष्टाक्षरं परं मन्त्रमार्तस्य सततं प्रियम् ॥ १३
[विप्रत्यागसमाधिस्थः संयतात्मा दृढव्रतः ।
धर्मराजो विशुद्धात्मा तप आतिष्ठदुत्तमम् ॥] १४
पुष्पोपहारैर्बलिभिरर्चयित्वा दिवाकरम् ।
सोऽवगाह्य जलं राजा देवस्याभिमुखोऽभवत् १५
योगमास्थाय धर्मात्मा वायुभक्षो जितेन्द्रियः ।
गाङ्गेयं वार्युपस्पृश्य प्राणायामेन तस्थिवान् ।
[शुचिः प्रयतवाग्भूत्वा स्तोत्रमारब्धवांस्ततः १६

युधिष्ठिर उवाच ।
त्वं भानो जगतश्चक्षुस्त्वमात्मा सर्वदेहिनाम् ।
त्वं योनिः सर्वभूतानां त्वमाचारः क्रियावतां १७
त्वं गतिः सर्वसाङ्ख्यानां योगिनां त्वं परायणम् ।
अनावृतार्गलद्वारं त्वं गतिस्त्वं मुमुक्षताम् ॥ १८
त्वया संधार्यते लोकस्त्वया लोकः प्रकाश्यते ।
त्वया पवित्रीक्रियते निर्व्याजं पाल्यते त्वया ॥ १९
त्वामुपस्थाय काले तु ब्राह्मणा वेदपारगाः ।
स्वशाखाविहितैर्मन्त्रैरर्चन्त्यृषिगणार्चित ॥ २०
तव दिव्यं रथं यान्तमनुयान्ति वरार्थिनः ।
सिद्धचारणगन्धर्वा यक्षगुह्यकपन्नगाः ॥ २१
त्रयस्त्रिंशच्च वै देवास्तथा वैमानिका गणाः ।
सोपेन्द्राः समहेन्द्राश्च त्वामिष्ट्वा सिद्धिमागताः २२
उपयान्त्यर्चयित्वा तु त्वां वै प्राप्तमनोरथाः ।
दिव्यमन्दारमालाभिस्तूर्णं विद्याधरोत्तमाः ॥ २३
गुह्याः पितृगणाः सप्त ये दिव्या ये च मानुषाः ।
ते पूजयित्वा त्वामेव गच्छन्त्याशु प्रधानताम् ॥२४
वसवो मरुतो रुद्रा ये च साध्या मरीचिपाः ।
वालखिल्यादयः सिद्धाः श्रेष्ठत्वं प्राणिनां गताः २५
सब्रह्मकेषु लोकेषु सप्तस्वप्यखिलेषु च ।
न तद्भूतमहं मन्ये यदर्कादतिरिच्यते ॥ २६
सन्ति चान्यानि सत्वानि वीर्यवन्ति महान्ति च ।
न तु तेषां तथा दीप्तिः प्रभावो वा यथा तव ॥ २७
ज्योतींषि त्वयि सर्वाणि त्वं सर्वज्योतिषां पतिः ।
त्वयि सत्त्यं च सत्त्वं च सर्वे भावाश्च सात्त्विकाः २८
त्वत्तेजसा कृतं चक्रं सुनाभं विश्वकर्मणा ।
देवारीणां मदो येन नाशितः शार्ङ्गधन्वना ॥ २९
त्वमादायांशुभिस्तेजो निदाघे सर्वदेहिनाम् ।
सर्वौषधिरसानां च पुनर्वर्षासु मुञ्चसि ॥ ३०

---

धर्मेण योगमयेन ॥ ४ ॥ तेजो रसान् जलानि । उद्धृत्य आदाय ॥ ६ ॥ ओषधीपतिश्चन्द्रः ॥ ७ ॥ तपोयोगः व्रतस्वीकारः तत्पूर्वकः समाधिर्ध्यानं तत्स्थैः ॥ ११ ॥ विप्रत्यागसमाधिस्थः विप्रेभ्यस्त्यागः त्यज्यमानमन्नं तदर्थं समाधिस्थः नियमस्थः ॥ १४ ॥ सांख्यानां ज्ञाननिष्ठानाम् । योगिनां चित्तनिरोधकानाम् । आवृणोतीत्यावृतं कपाटम् । कर्तरिक्तः । अर्गला कपाटविष्टम्भकं तिर्यक्काष्ठं तदुभयरहितं मुक्तिद्वारं त्वं मुमुक्षतां गतिः प्राप्यं पदम् ॥ १८ ॥ सत्त्यं सत् पृथिव्यप्तेजांसि । त्यत् वाय्वाकाशौ तदात्मकं सत्त्यम् । सत्त्वं बुद्धिसत्त्वम् । सात्त्विका भावाः धर्मो ज्ञानं विराग ऐश्वर्यमित्याद्याः ॥ २८ ॥ सुनाभं सुदर्शनम् ॥ २९ ॥

तपन्त्यन्ये दहन्त्यन्ये गर्जन्त्यन्ये तथा घनाः ।
विद्योतन्ते प्रवर्षन्ति तव प्रावृषि रश्मयः ॥ ३१
न तथा सुखयत्यग्निर्न प्रावारा न कम्बलाः ।
शीतवातार्दितं लोकं यथा तव मरीचयः ॥ ३२
त्रयोदशद्वीपवतीं गोभिर्भासयसे महीम् ।
त्रयाणामपि लोकानां हितायैकः प्रवर्तसे ॥ ३३
तव यद्युदयो न स्यादन्धं जगदिदं भवेत् ।
न च धर्मार्थकामेषु प्रवर्तेरन्मनीषिणः ॥ ३४
आधानपशुबन्धेष्टिमन्त्रयज्ञतपःक्रियाः ।
त्वत्प्रसादादवाप्यन्ते ब्रह्मक्षत्रविशां गणैः ॥ ३५
यदहर्ब्रह्मणः प्रोक्तं सहस्रयुगसंमितम् ।
तस्य त्वमादिरन्तश्च कालज्ञैः परिकीर्तितः ॥ ३६
मनूनां मनुपुत्राणां जगतोऽमानवस्य च ।
मन्वन्तराणां सर्वेषामीश्वराणां त्वमीश्वरः ॥ ३७
संहारकाले संप्राप्ते तव क्रोधविनिःसृतः ।
संवर्तकाग्निस्त्रैलोक्यं भस्मीकृत्यावतिष्ठते ॥ ३८
त्वद्दीधितिसमुत्पन्ना नानावर्णा महाघनाः ।
सैरावताः साशनयः कुर्वन्त्याभूतसंप्लवम् ॥ ३९
कृत्वा द्वादशधाऽऽत्मानं द्वादशादित्यतां गतः ।
संहृत्यैकार्णवं सर्वं त्वं शोषयसि रश्मिभिः ॥४०
त्वामिन्द्रमाहुस्त्वं रुद्रस्त्वं विष्णुस्त्वं प्रजापतिः ।
त्वमग्निस्त्वं मनः सूक्ष्मं प्रभुस्त्वं ब्रह्म शाश्वतं ४१
त्वं हंसः सविता भानुरंशुमाली वृषाकपिः ।
विवस्वान्मिहिरः पूषा मित्रो धर्मस्तथैव च ॥४२
सहस्ररश्मिरादित्यस्तपनस्त्वं गवां पतिः ।
मार्तण्डोऽर्को रविः सूर्यः शरण्यो दिनकृत्तथा ४३
दिवाकरः सप्तसप्तिर्धामकेशी विरोचनः ।
आशुगामी तमोघ्नश्च हरिताश्वश्च कीर्त्यसे ॥ ४४

सप्तम्यामथवा षष्ठ्यां भक्त्या पूजां करोति यः ।
अनिर्विण्णोऽनहंकारी तं लक्ष्मीर्भजते नरम् ॥४५
न तेषामापदः सन्ति नाधयो व्याधयस्तथा ।
ये तवानन्यमनसा कुर्वन्त्यर्चनवन्दनम् ॥ ४६
सर्वरोगैर्विरहिताः सर्वपापविवर्जिताः ।
त्वद्भावभक्ताः सुखिनो भवन्ति चिरजीविनः ४७
त्वं ममापन्नकामस्य सर्वातिथ्यं चिकीर्षतः ।
अन्नमन्नपते दातुमभितः श्रद्धयाऽर्हसि ॥ ४८
ये च तेऽनुचराः सर्वे पादोपान्तं समाश्रिताः ।
माठरारुणदण्डाद्यास्तांस्तान्वन्देऽशनिक्षुभान् ४९
क्षुभया सहिता मैत्री याश्चान्या भूतमातरः ।
ताश्च सर्वा नमस्यामि पान्तु मां शरणागतम् ]५०
वैशंपायन उवाच ।
कण्ठदघ्ने जले स्थित्वा मन्त्रैः स्तोत्रैश्च तोषितः ।
ततो दिवाकरः प्रीतो दर्शयामास पाण्डवम् ।
दीप्यमानः स्ववपुषा ज्वलन्निव हुताशनः ॥ ५१
विवस्वानुवाच ।
यत्तेऽभिलषितं किंचित्तत्त्वं सर्वमवाप्स्यसि ।
अहमन्नं प्रदास्यामि सप्त पञ्च च ते समाः ॥५२
गृह्णीष्व पिठरं ताम्रं मया दत्तं नराधिप ।
यावद्वर्त्स्यति पाञ्चाली पात्रेणानेन सुव्रत ॥ ५३
फलमूलामिषं शाकं संस्कृतं यन्महानसे ।
चतुर्विधं तदन्नाद्यमक्षय्यं ते भविष्यति ।
इतश्चतुर्दशे वर्षे भूयो राज्यमवाप्स्यसि ॥ ५४
वैशंपायन उवाच ।
एवमुक्त्वा तु भगवांस्तत्रैवान्तरधीयत ॥ ५५
लब्ध्वा वरं तु कौन्तेयो जलादुत्तीर्य धर्मवित् ।
जग्राह पादौ धौम्यस्य भ्रातॄंश्च परिषस्वजे ॥ ५६

---

प्रावाराः वस्त्रविशेषाः ॥ ३२ ॥ गोभिः रश्मिभिः ॥ ३३ ॥ सैरावताः मेघस्योपरि यो मेघः स ऐरावतस्तत्सहिताः । आभूतं यावच्चतुर्विधभूतग्रामं तस्य संप्लवः जलेनाभिप्लावनम् ॥ ३९ ॥ हन्ति गच्छति विश्वं संहरतीति वा हंसः वृषाकपिः हरो हरिर्वा ॥ ४२ ॥ गवां रश्मीनाम् ॥ ४३ ॥ सप्तसप्तिः सप्ताश्वः । धामकेशी ज्योतिर्मयकिरणवान् ॥ ४४ ॥ अनिर्विण्णः पूजने आसक्तः ॥ ४५ ॥ त्वद्भावभक्ताः सूर्यएव सर्वत्रास्तीति भावो भावना तत्र भक्ता आदृताः ॥ ४७ ॥ श्रद्धया आतिथ्यं चिकीर्षत इति संबन्धः ॥ ४८ ॥ अशनिक्षुभान् विद्युदशन्यादिप्रवर्तकान् ॥ ४९ ॥ क्षुभामैत्र्यौ निग्रहानुग्रहकर्त्र्यौ देवते ॥ ५० ॥ पिठरं परिवेषणपात्रम् । ताम्रं ताम्रमयम् । वर्त्स्यति वृत्तिं जनजीविकारूपां करिष्यति । पात्रेण पात्रप्रसूतेनान्नेन ॥ ५३ ॥

द्रौपद्या सह संगम्य पश्यमानोऽपयात्प्रभुः ।
महानसे तदान्नं तु साधयामास पाण्डवः ॥ ५७
संस्कृतं प्रसवं याति स्वल्पमन्नं चतुर्विधम् ।
अक्षय्यं वर्धते चान्नं तेनाभोजयत द्विजान् ॥५८
भुक्तवत्सु च विप्रेषु भोजयित्वाऽनुजानपि ।
शेषं विघससंज्ञं तु पश्चाद्भुङ्क्ते युधिष्ठिरः ॥ ५९
युधिष्ठिरं भोजयित्वा शेषमश्नाति पार्षती ।
[द्रौपद्यां भुज्यमानायां तदन्नं क्षयमेति च ॥]६०
एवं दिवाकरात्प्राप्य दिवाकरसमप्रभः ।
कामान्मनोभिलषितान्ब्राह्मणेभ्योऽददात्प्रभुः ६१
पुरोहितपुरोगाश्च तिथिनक्षत्रपर्वसु ।
इज्यार्थे संप्रवर्तन्ते विधिमन्त्रप्रमाणतः ॥ ६२
ततः कृतस्वस्त्ययना धौम्येन सह पाण्डवाः ।
द्विजसङ्घैः परिवृताः प्रययुः काम्यकं वनम् ॥ ६३
'जनमेजय उवाच ।
पुष्पोपहारबलिभिर्बहुभिश्च यथाविधि ।
सर्वात्मभूतं संपूज्य यतप्राणो जितेन्द्रियः ॥ ६४
स्तवेन केन विप्रर्षे स तु राजा युधिष्ठिरः ।
विप्रार्थमाराधितवान्सूर्यमद्भुतविक्रमम् ॥ ६५
मयि स्नेहोऽस्ति चेद्ब्रह्मन्यद्यनुग्रहभागहम् ।
भगवन्नास्ति चेद्गुह्यं तच्च मे ब्रूहि सांप्रतम् ॥'६६
वैशंपायन उवाच ।
शृणुष्वावहितो राजञ्शुचिर्भूत्वा समाहितः ।
क्षणं च कुरु राजेन्द्र गुह्यं वक्ष्यामि ते हितम्६७
धौम्येन तु यथाप्रोक्तं पार्थाय सुमहात्मने ।
नाम्नामष्टोत्तरं पुण्यं शतं तच्छृणु भूपते ॥ ६८
सूर्योऽर्यमा भगस्त्वष्टा पूषाऽर्कः सविता रविः ।
गभस्तिमानजः कालो मृत्युर्धाता प्रभाकरः ॥६९
पृथिव्यापश्च तेजश्च खं वायुश्च परायणम् ।
सोमो बृहस्पतिः शुक्रो बुधोऽङ्गारक एव च ७०
इन्द्रो विवस्वान्दीप्तांशुः शुचिः शौरिः शनैश्चरः ।
ब्रह्मा विष्णुश्च रुद्रश्च स्कन्दो वैश्रवणो यमः ७१
वैद्युतो जाठरश्चाग्निरैन्धनस्तेजसां पतिः ।
धर्मध्वजो वेदकर्ता वेदाङ्गो वेदवाहनः ॥ ७२
कृतं त्रेता द्वापरश्च कलिः सर्वामराश्रयः ।
कला काष्ठा मुहूर्ताश्च पक्षा मासा ऋतुस्तथा ७३
संवत्सरकरोऽश्वत्थः कालचक्रो विभावसुः ।
पुरुषः शाश्वतो योगी व्यक्ताव्यक्तः सनातनः॥
लोकाध्यक्षः सुराध्यक्षो विश्वकर्मा तमोनुदः ।
वरुणः सागरोंशश्च जीमूतो जीवनोऽरिहा ॥ ७५
भूताश्रयो भूतपतिः सर्वभूतनिषेवितः ।
'मणिः सुवर्णो भूतात्मा कामदः सर्वतोमुखः।'
[स्रष्टा संवर्तको वह्निः सर्वस्यादिरलोलुपः ॥ ७६
अनन्तः कपिलो भानुः कामदः सर्वतोमुखः]।
जयो विशालो वरदः सर्वधातुनिषेचिता ॥ ७७
मनः सुपर्णो भूतादिः शीघ्रगः प्राणधारकः ।
धन्वन्तरिर्धूमकेतुरादिदेवोऽदितेः सुतः ॥ ७८
द्वादशात्माऽरविन्दाक्षः पिता माता पितामहः ।
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ॥ ७९
देवकर्ता प्रशान्तात्मा विश्वात्मा विश्वतोमुखः ।
चराचरात्मा सूक्ष्मात्मा मैत्रेण वपुषाऽन्वितः ८०
एतद्वै कीर्तनीयस्य सूर्यस्यामिततेजसः ।
नाम्नामष्टशतं पुण्यं शक्रेणोक्तं महात्मना ॥ ८१
शक्राच्च नारदः प्राप्तो धौम्यश्च तदन्तरम् ।
धौम्याद्युधिष्ठिरः प्राप्य सर्वान्कमानवाप्तवान्॥८२
सुरगणपितृयक्षसेवितं
ह्यसुरनिशाचरसिद्धवन्दितम् ।
वरकनकहुताशनप्रभं
त्वमपि मनस्यभिधेहि भास्करम् ॥ ८३
सूर्योदये यः सुसमाहितः पठे-
त्स पुत्रदारान्धनरत्नसंचयान् ।

महानसे पाकशालायाम् । साधयामास कारयामास अन्नमिति शेषः ॥ ५७ ॥ संस्कृतं पक्वम् । वन्यमन्नं चतुर्विधमिति क. पाठः ॥ ५८ ॥ पार्षती पृषतः द्रुपदपितुः गोत्रापत्यम् ॥ ६० ॥ प्रवर्तन्ते निःसरन्ति । विधिमन्त्रप्रमाणतः । विधिर्वसन्ते वसन्ते ज्योतिषा यजेतेत्यादिरज्ञातज्ञापनरूपः । मन्त्रः अनुष्ठेयार्थस्मारक इषेत्वेत्यादिः । तावेव प्रमाणे ताभ्यामित्यर्थः ॥ ६२ ॥ सर्वलोकनमस्कृत इति झ. पाठः ॥ ७६ ॥ मैत्रेयः करुणान्वित इति झ. पाठः ॥ ८० ॥ तृतीयोऽध्यायः ॥ ३ ॥

लभेत जातिस्मरतां नरः सदा
धृतिं च मेधां च स विन्दते पुमान् ॥८४
[इमं स्तवं देववरस्य यो नरः
प्रकीर्तयेच्छुचिसुमनाः समाहितः ।
स मुच्यते शोकदवाग्निसागरा-
ल्लभेत कामान्मनसा यथेप्सितान् ॥ ८५
[इमं स्तवं प्रयतमनाः समाधिना
पठेदिहान्योऽपि वरं समर्थयन् ।
तत्तस्य दद्याच्च रविर्मनीषितं
तदाऽऽप्नुयाद्यद्यपि तत्सुदुर्लभम् ॥ ८६
यश्चेदं धारयेन्नित्यं शृणुयाद्वाप्यभीक्ष्णशः ।
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ।
विद्यार्थी लभते विद्यां पुरुषोप्यथवा स्त्रियः॥ ८७
उभे संध्ये पठेन्नित्यं नारी वा पुरुषो यदि ।
आपदं प्राप्य मुच्येत बद्धो मुच्येत बन्धनात् ॥ ८८
संग्रामे च जयेन्नित्यं विपुलं चाप्नुयाद्वसु ।
मुच्यते सर्वपापेभ्यः सूर्यलोकं स गच्छति ॥] ८९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि किर्मीरवधपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

पाण्डवेषु वनं गतेषु सत्सु हितं पृष्टेन विदुरेण धृतराष्ट्रंप्रति पाण्डवानां पुना राज्ये स्थापनविधानम् ॥ १ ॥ ततो धृतराष्ट्रधिक्कृतेन विदुरेण पाण्डवान्प्रति प्रस्थानम् ॥ २ ॥

वैशंपायन उवाच ।
वनं प्रविष्टेष्वथ पाण्डवेषु
प्रज्ञाचक्षुस्तप्यमानोऽम्बिकेयः ।
धर्मात्मानं विदुरमगाधबुद्धिं
सुखासीनो वाक्यमुवाच राजा ॥ १
धृतराष्ट्र उवाच ।
प्रज्ञा च ते भार्गवस्येव शुद्धा
धर्मं च त्वं परमं वेत्थ सूक्ष्मम् ।
समश्च त्वं संमतः कौरवाणां
पथ्यं चैषां मम चैव ब्रवीहि ॥ २
एवं गते विदुर यदद्य कार्यं
पौराश्चेमे कथमस्मान्भजेरन् ।
ते चाप्यस्मान्नोद्धरेयुः समूला-
न्न कामये तांश्च विनश्यमानान् ॥ ३
'सौबलेनैव पापेन दुर्योधनहितैषिणा ।
क्रूरमाचरितं क्षत्तर्न मे प्रियमनुष्ठितम् ॥ ४
तथैवाङ्गीकृते तत्र तद्भवान्वक्तुमर्हति ।
उत्तरं प्राप्तकालं च किमन्यन्मन्यते क्षमम् ॥ ५
नास्ति धर्मे सहायत्वमिति मे दीर्यते मनः ।
यत्र पाण्डुसुताः सर्वे क्लिश्यन्ति वनमागताः ॥' ६
विदुर उवाच ।
त्रिवर्गोऽयं धर्ममूलो नरेन्द्र
राज्यं चेदं धर्ममूलं वदन्ति ।
धर्मे राजन्वर्तमानः स्वशक्त्या
पुत्रान्सर्वान्पाहि कुन्तीसुतांश्च ॥ ७
स वै धर्मो विप्रलब्धः सभायां
पापात्मभिः सौबलेयप्रधानैः ।
आहूय कुन्तीसुतमक्षवत्यां
पराजैषीत्सत्यसन्धं सुतस्ते ॥ ८
एतस्य ते दुष्प्रणीतस्य राज-
न्शेषस्याहं परिपश्याम्युपायम् ।
यथा पुत्रस्तव कौरव्य पापा-
न्मुक्तो लोके प्रतितिष्ठेत साधु ॥ ९
तद्वै सर्वं पाण्डुपुत्रा लभन्तां
यत्तद्राजन्नतिसृष्टं त्वयाऽऽसीत् ।
एष धर्मः परमो यत्स्वकेन
राजा तुष्येन्न परस्वेषु गृद्ध्येत् ॥ १०

कौरवाणां पाण्डवधार्तराष्ट्राणां समः पक्षपातशून्यः ॥ २ ॥ उद्धरेयुः उन्मूलयेयुः ॥ ३ ॥ अक्षवत्यां द्यूतक्रीडायाम् ॥ ८ ॥ उपायं प्रशान्तिप्रकारम् । शेषस्याहं परिपश्यामीति झ. ट. पाठः ॥ ९ ॥ अतिसृष्टं दत्तम् । स्वकेन धनेनेति शेषः ॥ १० ॥

[यशो न नश्येज्ज्ञातिभेदश्च न स्या-
द्धर्मो न स्यान्नैव चैवं कृते त्वाम् ।]
एतत्कार्यं तव सर्वप्रधानं
तेषां तुष्टिः शकुनेश्चावमानः ॥ ११
एवं शेषं यदि पुत्रेषु ते स्या-
देतद्राजंस्त्वरमाणः कुरुष्व ।
अथैतदेवं न करोषि राजन्
ध्रुवं कुरूणां भविता विनाशः ॥ १२
नहि क्रुद्धो भीमसेनोऽर्जुनो वा
शेषं कुर्याच्छात्रवाणामनीके ।
येषां योद्धा सव्यसाची कृतास्त्रो
धनुर्येषां गाण्डिवं लोकसारम् ॥ १३
येषां भीमो बाहुशाली च योद्धा
तेषां लोके किंनु न प्राप्यमस्ति ।
उक्तं पूर्वं जातमात्रे सुते ते
मया यत्ते हितमासीत्तदानीम् ॥ १४
पुत्रं त्यजेममहितं कुलस्य
हितं परं न च तत्त्वं चकर्थ ।
इदानीं ते हितमुक्तं न चेत्त्व-
मेवं कर्ता परितप्ताऽसि पश्चात् ॥ १५
यद्येतदेवमनुमन्ता सुतस्ते
संप्रीयमाणः पाण्डवैरेकराज्यम् ।
तापो न ते भविता प्रीतियोगा-
त्त्वं चेन्न गृह्णासि सुतं सहायैः ॥ १६
दुर्योधनं त्वहितं वै निगृह्य
पाण्डोः पुत्रं प्रकुरुष्वाधिपत्ये ।
'ध्रुवं विनाशस्तव पुत्रेण धीमन्
सबन्धुवर्गेण सहैव राजभिः ॥ १७
चतुर्दशे चैव वर्षे नरेन्द्र
कुलक्षयं प्राप्स्यसि राजसिंह ।
तस्मात्कुरुष्वाधिपत्ये नरेन्द्र
युधिष्ठिरं धर्मभृतां वरिष्ठम् ॥' १८
अजातशत्रुर्हि विमुक्तरागो
धर्मेणेमां पृथिवीं शास्तु राजन् ।
ततो राजन्पार्थिवाः सर्व एव
वैश्या इवास्मानुपतिष्ठन्तु सद्यः ॥ १९
दुर्योधनः शकुनिः सूतपुत्रः
प्रीत्या राजन्पाण्डुपुत्रान्भजन्तु ।
दुःशासनो याचतु भीमसेनं
सभामध्ये द्रुपदस्यात्मजां च ॥ २०
युधिष्ठिरं त्वं परिसान्त्वयस्व
राज्ये चैनं स्थापयस्वाभिपूज्य ।
त्वया पृष्टः किमहमन्यद्वदेय-
मेतत्कृत्वा कृतकृत्योसि राजन् ॥ २१

धृतराष्ट्र उवाच ।

एतद्वाक्यं विदुर यत्ते सभाया-
मिह प्रोक्तं पाण्डवान्प्राप्य मां च ।
हितं तेषामहितं मामकाना-
मेतत्सर्वं मम नावैति चेतः ॥ २२
इदं त्विदानीं गत एव निश्चितं
तेषामर्थे पाण्डवानां यदात्थ ।
तेनाद्य मन्ये नासि हितो ममेति
कथं हि पुत्रं पाण्डवार्थे त्यजेयम् ॥ २३
असंशयं तेऽपि ममैव पुत्रा
दुर्योधनस्तु मम देहात्प्रसूतः ।
स्वं वै देहं परहेतोस्त्यजेति
कोनु ब्रूयात्समतामन्ववेक्षन् ॥ २४
स मां जिह्मं विदुर सर्वं ब्रवीषि
मन्युं तेऽहमधिकं धारयामि ।
यथेच्छकं गच्छ वा तिष्ठ वा त्वं
सुसान्त्व्यमानाऽप्यसती स्त्री जहाति २५

---

एवं कृते सति त्वांप्रति धर्मो न स्यादिति नैव किंतु स्यादेव ॥ ११ ॥ चकर्थ कृतवान् । कर्ता करिष्यसि ॥ १५ ॥ एकराज्यं यदि अनुमन्ता तर्हि तापो न भविता । नचेत् यदि नानुमन्ता तर्हि सुतं निगृह्णीष्वेत्यर्थः ॥ १६ ॥ नचेन्निगृह्णीष्व सुतं सुखायेति झ. पाठः । तत्र पक्षान्तरमाह दुर्योधनमिति ॥ १७ ॥ नावैति नाङ्गीकरोति ॥ २२ ॥ जिह्मं कुटिलम्

वैशंपायन उवाच ।
एतावदुक्त्वा धृतराष्ट्रोऽन्वपद्य-
दन्तर्वेश्म सहसोत्थाय राजन् ।
नेदमस्तीत्यथ विदुरो भाषमाणः
संप्राद्रवद्यत्र पार्था बभूवुः ॥ २६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि किर्मीरवधपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

विदुरस्य काम्यकवने पाण्डवसमागमः ॥ १ ॥ तेन तेषु तत्र स्वागमनकारणनिवेदनम् ॥ २ ॥

वैशंपायन उवाच ।
पाण्डवास्तु वने वासमुद्दिश्य भरतर्षभाः ।
प्रययुर्जाह्नवीकूलात्कुरुक्षेत्रं सहानुगाः ॥ १
सरस्वतीदृषद्वत्यौ यमुनां च निषेव्य ते ।
ययुर्वनेनैव वनं सततं पश्चिमां दिशम् ॥ २
ततः सरस्वतीकूले समेषु मरुधन्वसु ।
काम्यकं नाम ददृशुर्वनं मुनिजनप्रियम् ॥ ३
तत्र ते न्यवसन्वीरा वने बहुमृगद्विजे ।
अन्वास्यमाना मुनिभिः सान्त्व्यमानाश्च भारत॥४
विदुरस्त्वथ पाण्डूनां सदा दर्शनलालसः ।
जगामैकरथेनैव काम्यकं वनमृद्धिमत् ॥ ५
ततो गत्वा विदुरः काम्यकं त-
च्छीघ्रैरश्वैर्वाहितः स्यन्दनेन ।
ददर्शासीनं धर्मात्मानं विविक्ते
सार्धं द्रौपद्या भ्रातृभिर्ब्राह्मणैश्च ॥ ६
ततोऽपश्यद्विदुरं तूर्णमारा-
दभ्यायान्तं सत्यसन्धः स राजा ।
अथाब्रवीद्भ्रातरं भीमसेनं
किंनु क्षत्ता वक्ष्यति नः समेत्य ॥ ७
कच्चिन्नायं वचनात्सौबलस्य
समाह्वातुं देवनायोपयाति ।
कच्चित्क्षुद्रः कुशली चाऽयुधानि
जेष्यत्यस्माकं पुनरेवाक्षवत्याम् ॥ ८
समाहूतः केनचिदाह्वाय
नाहं शक्तो भीमसेनापयातुम् ।
गाण्डीवे च संशयिते कथं नु
राज्यप्राप्तिः संशयिता भवेन्नः ॥ ९
वैशंपायन उवाच ।
तत उत्थाय विदुरं पाण्डवेयाः
प्रत्यगृह्णन्नृपते सर्व एव ।
तैः सत्कृतः स च तानाजमीढो
यथोचितं पाण्डुपुत्रान्समेयात् ॥ १०
समाश्वस्तं विदुरं ते नरर्षभा-
स्ततोऽपृच्छन्नागमनाय हेतुम् ।
स चापि तेभ्यो विस्तरतः शशंस
यथावृत्तं धृतराष्ट्रेऽम्बिकेये ॥ ११
विदुर उवाच ।
अवोचन्मां धृतराष्ट्रोऽभिगुप्त-
मजातशत्रो परिगृह्याभिपूज्य ।
एवं गते समतामभ्युपेत्य
पथ्यं तेषां मम चैव ब्रवीहि ॥ १२
मयाप्युक्तं यत्क्षमं कौरवाणां
हितं पथ्यं धृतराष्ट्रस्य चैव ।
तद्वै पथ्यं तन्मनो नाभ्युपैति
ततश्चाहं क्षममन्यन्न मन्ये ॥ १३
परं श्रेयः पाण्डवेया मयोक्तं
न मे तच्च श्रुतवानाम्बिकेयः ।

॥ २५ ॥ इदं कुलम् ॥ २६ ॥ चतुर्थोऽध्यायः ॥ ४ ॥
मरुधन्वसु मरुषु निर्जलदेशेषु । धन्वसु जाङ्गलदेशेषु ॥ ३ ॥
अपयातुं निवर्तितुम् । संशयिते पणीकृते सति । कथं नः राज्यप्राप्तिर्यतः संशयिता । गाण्डीवनाशादित्यर्थः ॥ ९ ॥
अभिगुप्तं अभिरक्षितारम् । हितोपदेशेनेति शेषः । कर्तरि क्तः । ब्रवीहीत्यवोचदिति संबन्धः ॥ १२ ॥ अन्यत् साम्नोऽन्यत् वैरम्

यथाऽऽतुरस्येव हि पथ्यमौषधं
न रोचते स्मास्य तदुच्यमानम् ॥ १४
न श्रेयसे यततेऽजातशत्रो
स्त्री श्रोत्रियस्येव गृहे प्रदुष्टा ।
ध्रुवं न रोचेद्भरतर्षभस्य
पतिः कुमार्या इव षष्टिवर्षः ॥ १५
ध्रुवं विनाशो नृप कौरवाणां
न वै श्रेयो धृतराष्ट्रः परैति ।
यथा च पर्णे पुष्करस्यावसिक्तं
जलं न तिष्ठेत्पथ्यमुक्तं तथाऽस्मिन् ॥ १६
ततः क्रुद्धो धृतराष्ट्रोऽब्रवीन्मां
यस्मिञ्श्रद्धा तव तत्र प्रयाहि ।
नाहं भूयः कामये त्वां सहायं
महीमिमां पालयितुं पुरं वा ॥ १७
सोऽहं त्यक्तो धृतराष्ट्रेण राज्ञा
प्रशासितुं त्वामुपयातो नरेन्द्र ।
तद्वै सर्वं यन्मयोक्तं सभायां
तद्धार्यतां यत्प्रवक्ष्यामि भूयः ॥ १८
क्लेशैस्तीव्रैर्युज्यमानः सपत्नैः
क्षमां कुर्वन्कालमुपासते यः ।
संवर्धयन्स्तोकमिवाग्निमात्मवान्
स वै भुङ्क्ते पृथिवीमेक एव ॥ १९
यस्याविभक्तं वसु राजन्सहायै-
स्तस्य दुःखस्यांशभाजः सहायाः ।
सहायानामेष संग्रहणेऽभ्युपायः
सहायाप्तौ पृथिवीप्राप्तिमाहुः ॥ २०
सत्यं श्रेष्ठं पाण्डवा निष्प्रलापं
तुल्यं चान्नं सह भोज्यं सहायैः ।
आत्मा चैषामग्रतो नातिवर्ते-
देवं वृत्तिर्वर्धते भूमिपाल ॥ २१
युधिष्ठिर उवाच ।
एवं करिष्यामि यथा ब्रवीषि
परां बुद्धिमुपगम्याप्रमत्तः ।
यच्चाप्यन्यद्देशकालोपपन्नं
तद्वै वाच्यं तत्करिष्यामि कृत्स्नम् ॥ २२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि किर्मीरवधपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

विदुरविप्रयोगखिन्नेन धृतराष्ट्रेण तदाह्वानाय संजयप्रेषणम् ॥ १ ॥ संजयाहूतेन विदुरेण पुनर्धृतराष्ट्रंप्रत्यागमनम् ॥ २ ॥

वैशंपायन उवाच ।
गते तु विदुरे राजन्नाश्रमं पाण्डवान्प्रति ।
धृतराष्ट्रो महाप्राज्ञः पर्यतप्यत दुर्मनाः ॥ १
[विदुरस्य प्रभावं च सन्धिविग्रहकारितम् ।
विवृद्धिं च परां मत्वा पाण्डवानां भविष्यति ॥]
स सभाद्वारमागम्य विदुरस्मारमोहितः ।
समक्षं पार्थिवेन्द्राणां विसंज्ञः प्रापतद्भुवि ॥ २
स तु लब्ध्वा चिरात्संज्ञां समुत्थाय महीतलात् ।
समीपोपस्थितं राजा संजयं वाक्यमब्रवीत् ॥ ४
भ्राता मम सुहृच्चैव साक्षाद्धर्म इवापरः ।
तस्य स्मृत्याऽद्य सुभृशं हृदयं दीर्यतीव मे ॥ ५
तमानय स्वधर्मज्ञं मम भ्रातरमाशु वै ।
इति ब्रुवन्स नृपतिः कृपणं पर्यदेवयत् ॥ ६
पश्चात्तापाभिसंतप्तो विदुरस्मारमोहितः ।
भ्रातृस्नेहादिदं राजा संजयं वाक्यमब्रवीत् ॥ ७
गच्छ संजय जानीहि भ्रातरं विदुरं मम ।

॥ १३ ॥ परैति परामृशति । पुष्करस्य कमलस्य ॥ १६ ॥ श्रद्धा इष्टोयमिति धीः ॥ १७ ॥ धार्यतां न विस्मर्तव्यम् ॥ १८ ॥ उपासते उपास्ते प्रतीक्षते । तृणैः स्तोकं अग्निमिव आत्मानं सहायसंपत्त्या संवर्धयन् । सहायार्जनोपायमाह यस्येति । अविभक्तं साधारणम् । वसु वित्तम् ॥ २० ॥ पञ्चमोऽध्यायः ॥५॥

महाप्राज्ञः विदुरोपदेशे स्थितानां जयो भविष्यतीति जानन् ॥ १ ॥ संधिविग्रहकारितं संधिविग्रहादिनीतिज्ञत्वकृतम् । भविष्यति आगामिनि काले ॥ २ ॥

यदि जीवति रोषेण मया पापेन निर्धुतः ॥ ८
न हि तेन मम भ्रात्रा सुसूक्ष्ममपि किंचन ।
व्यलीकं कृतपूर्वं वै प्राज्ञेनामितबुद्धिना ॥ ९
स व्यलीकं कथं प्राप्तो मत्तः परमबुद्धिमान् ।
न जह्याज्जीवितं प्राज्ञ तं गच्छानय संजय ॥ १०
तस्य तद्वचनं श्रुत्वा राज्ञस्तमनुमान्य च ।
संजयो बाढमित्युक्त्वा प्राद्रवत्काम्यकं प्रति ११
सोऽचिरेण समासाद्य तद्वनं यत्र पाण्डवाः ।
रौरवाजिनसंवीतं ददर्शाथ युधिष्ठिरम् ॥ १२
विदुरेण सहासीनं ब्राह्मणैश्च सहस्रशः ।
भ्रातृभिश्चाभिसंगुप्तं देवैरिव पुरंदरम् ॥ १३
युधिष्ठिरमुपागम्य पूजयामास संजयः ।
भीमार्जुनयमाश्चापि तद्युक्तं प्रतिपेदिरे ॥ १४
राज्ञा पृष्टः स कुशलं सुखासीनश्च संजयः ।
शशंसागमने हेतुमिदं चैवाब्रवीद्वचः ॥ १५
संजय उवाच ।
राजा स्मरति ते क्षत्तर्धृतराष्ट्रोऽम्बिकासुतः ।
तं पश्य गत्वा त्वं क्षिप्रं संजीवय च पार्थिवम् १६
सोऽनुमान्य नरश्रेष्ठान्पाण्डवान्कुरुनन्दनान् ।
नियोगाद्राजसिंहस्य गन्तुमर्हसि सत्तम ॥ १७
एवमुक्तस्तु विदुरो धीमान्स्वजनवत्सलः ।
युधिष्ठिरस्यानुमते पुनरायाद्गजाह्वयम् ॥ १८
तमब्रवीन्महातेजा धृतराष्ट्रोऽम्बिकासुतः ।
दिष्ट्या प्राप्तोसि धर्मज्ञ दिष्ट्या स्मरसि मेऽनघ १९
अद्य चाहं दिवारात्रौ त्वत्कृते भरतर्षभ ।
प्रजागरे प्रपश्यामि विचित्रं देहमात्मनः ॥ २०
वैशंपायन उवाच ।
सोऽङ्कमानीय विदुरं मूर्धन्याघ्राय चैव ह ।
क्षम्यतामिति चोवाच यदुक्तोसि मयाऽनघ ॥ २१
विदुर उवाच ।
क्षान्तमेव मया राजन्गुरुर्मे परमो भवान् ।
तथाऽहमागतः शीघ्रं त्वद्दर्शनपरायणः ॥ २२
भवन्ति हि नरव्याघ्र पुरुषा धर्मचेतनाः ।
दीनानुकम्पिनो राजन्नात्र कार्या विचारणा ॥ २३
पाण्डोः पुत्रा यादृशास्ते तादृशा मे सुतास्तव ।
दीना इतीव मे बुद्धिरभिपन्नाऽद्य तान्प्रति ॥ २४
वैशंपायन उवाच ।
अन्योन्यमनुनीयैवं भ्रातरौ द्वौ महाद्युती ।
विदुरो धृतराष्ट्रश्च लेभाते परमां मुदम् ॥ २५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि किर्मीरवधपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

विदुरस्य पुनरागमनेन खिद्यता दुर्योधनेन कर्णादिभिरालोचनम् ॥ १ ॥ कर्णादिषु समालोच्य पाण्डवजिघांसया प्रस्थितेषु तदा समागतेन श्रीव्यासेन तेषां प्रतिषेधनम् ॥ २ ॥

वैशंपायन उवाच ।
श्रुत्वा च विदुरं प्राप्तं राज्ञा च परिसान्त्वितम् ।
धृतराष्ट्रात्मजो राजा पर्यतप्यत दुर्मतिः ॥ १
स सौबलेयमानाय्य कर्णदुःशासनौ तथा ।
अब्रवीद्वचनं राजा प्रविश्याबुद्धिजं तमः ॥ २
एष प्रत्यागतो मन्त्री धृतराष्ट्रस्य संमतः ।
विदुरः पाण्डुपुत्राणां सुहृद्विद्वान्हिते रतः ॥ ३
यावदस्य पुनर्बुद्धिं विदुरो नापकर्षति ।
पाण्डवानयने तावन्मन्त्रयध्वं हितं मम ॥ ४
अथ पश्याम्यहं पार्थान्प्राप्तानिह कथंचन ।
पुनः शोषं गमिष्यामि निरसुर्निष्परिग्रहः ॥ ५
विषमुद्बन्धनं चैव शस्त्रमग्निप्रवेशनम् ।
करिष्ये न हि तानृद्धान्पुनर्द्रष्टुमिहोत्सहे ॥ ६
शकुनिरुवाच ।
किं बालिशमतिं राजन्नास्थितोसि विशांपते ।
गतास्ते समयं कृत्वा नैतदेवं भविष्यति ॥ ७

निर्धुतः निःसारितः ॥ ८ ॥ व्यलीकं अप्रियम् ॥ ९ ॥ त्यक्ष्यामि जीवितमिति झ. पाठः ॥ १० ॥ षष्ठोऽध्यायः ॥ ६ ॥

तमो रागद्वेषात्मकं मोहम् ॥ २ ॥ करिष्ये स्वीकरिष्ये । ऋद्धान् ऋद्धिमतः ॥ ६ ॥

सत्यवाक्ये स्थिताः सर्वे पाण्डवा भरतर्षभ ।
पितुस्ते वचनं तात न ग्रहीष्यन्ति कर्हिचित् ॥ ८
अथवा ते ग्रहीष्यन्ति पुनरेष्यन्ति वा पुरम् ।
निरस्य समयं सर्वे पणोऽस्माकं भविष्यति ॥ ९
सर्वे भवामो मध्यस्था राज्ञश्छन्दानुवर्तिनः ।
छिद्रं बहु प्रपश्यन्तः पाण्डवानां सुसंवृताः ॥ १०
दुःशासन उवाच ।
एवमेतन्महाप्राज्ञ यथा वदसि मातुल ।
नित्यं हि मे कथयतस्तव बुद्धिर्विरोचते ॥ ११
कर्ण उवाच ।
काममीक्षामहे सर्वे दुर्योधन तवेप्सितम् ।
ऐकमत्यं हि नो राजन्सर्वेषामेव लक्षये ॥ १२
[नागमिष्यन्ति ते धीरा अकृत्वा कालसंविदम् ।
आगमिष्यन्ति चेन्मोहात्पुनर्द्यूतेन ताञ्जय ॥] १३
वैशंपायन उवाच ।
एवमुक्तस्तु कर्णेन राजा दुर्योधनस्तदा ।
नातिहृष्टमनाः क्षिप्रमभवत्स पराङ्मुखः ॥ १४
उपलभ्य ततः कर्णो विवृत्य नयने शुभे ।
रोषाद्दुःशासनं चैव सौबलं च तमेव च ॥ १५
उवाच परमक्रुद्ध उद्यम्यात्मानमात्मना ।
अथो मम मतं यत्तु तन्निबोधत भूमिपाः ॥ १६
प्रियं सर्वे करिष्यामो राज्ञः किं करवामहे ।
न चास्य शक्नुमः स्थातुं प्रिये सर्वे ह्यतन्द्रिताः १७
वयं तु शस्त्राण्यादाय रथानास्थाय दंशिताः ।
गच्छामः सहिता हन्तुं पाण्डवान्वनगोचरान् १८
तेषु सर्वेषु शान्तेषु गतेष्वविदितां गतिम् ।
निर्विवादा भविष्यन्ति धार्तराष्ट्रास्तथा वयम् ॥ १९
यावदेव परिद्यूना यावच्छोकपरायणाः ।
यावन्मित्रविहीनाश्च तावद्गच्छाम माचिरम् ॥ २०
तस्य तद्वचनं श्रुत्वा पूजयन्तः पुनः पुनः ।
प्रहृष्टमनसः सर्वे प्रत्यूचुः सूतजं तदा ॥ २१
एवमुक्त्वा सुसंरब्धा रथैः सर्वे पृथक्पृथक् ।
निर्ययुः पाण्डवान्हन्तुं सहिताः कृतनिश्चयाः २२
तान्प्रस्थितान्परिज्ञाय कृष्णद्वैपायनः प्रभुः ।
आजगाम विशुद्धात्मा दृष्ट्वा दिव्येन चक्षुषा २३
प्रतिषिध्याथ तान्सर्वान्भगवाँल्लोकपूजितः ।
प्रज्ञाचक्षुषमासीनमुवाचाभ्येत्य सत्वरम् ॥ २४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि किर्मीरवधपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ॥ ८ ॥

तदा समागतेन व्यासेन धृतराष्ट्रंप्रति पाण्डवैः सह विरोधस्यानर्थहेतुत्वकथनपूर्वकं तैः सह शमविधानम् ॥ १ ॥

व्यास उवाच ।
धृतराष्ट्र महाप्राज्ञ निबोध वचनं मम ।
वक्ष्यामि त्वां कौरवाणां सर्वेषां हितमुत्तमम् ॥ १
न मे प्रियं महाबाहो यद्गताः पाण्डवा वनम् ।
निकृत्या निकृताश्चैव दुर्योधनपुरोगमैः ॥ २
ते स्मरन्तः परिक्लेशान्वर्षे पूर्णे त्रयोदशे ।
विमोक्ष्यन्ति विषं क्रुद्धाः कौरवेयेषु भारत ॥ ३
तदयं किंनु पापात्मा तव पुत्रः सुमन्दधीः ।
पाण्डवान्नित्यसंक्रुद्धो राज्यहेतोर्जिघांसति ॥ ४
वार्यतां साध्वयं मूढः शमं गच्छतु ते सुतः ।
वनस्थांस्तानयं हन्तुमिच्छन्प्राणान्विमोक्ष्यति ॥ ५
यथाऽऽह विदुरः प्राज्ञो यथा भीष्मो यथा वयम् ।
यथा कृपश्च द्रोणश्च तथा साधु विधीयताम् ॥ ६
विग्रहो हि महाप्राज्ञ स्वजनेन विगर्हितः ।

पणः कार्याकार्यविवेकलक्षणो व्यवहारः ॥ ९ ॥ छिद्रं समयातिक्रमदोषम् ॥ १० ॥ उपलभ्य दुर्योधनाशयमिति शेषः ॥ १५ ॥ उद्यम्योत्क्षिप्य । आत्मानं देहम् ॥ १६ ॥ प्रियं चिकीर्षामो नतु शक्नुमः प्रिये स्थातुमिति संबन्धः । धृतराष्ट्रेण निरुद्धलात् ॥ १७ ॥ परिद्यूनाः खिन्ना वर्जितविजिगीषा वा ॥ २० ॥ बाढमित्येव ते सर्वे इति झ. पाठः ॥ २१ ॥ सप्तमोऽध्यायः ॥ ७ ॥

निकृताः निर्जिताः ॥ २ ॥ विषमिव विषं शस्त्रम् ॥ ३ ॥

अधर्म्यमयशस्यं च मा राजन्प्रतिपद्यथाः ॥ ७
समीक्षा यादृशी ह्यस्य पाण्डवान्प्रति भारत ।
उपेक्ष्यमाणा सा राजन्महान्तमनयं व्रजेत् ॥ ८
अथवाऽयं सुमन्दात्मा वनं गच्छतु ते सुतः ।
पाण्डवैः सहितो राजन्नेक एवासहायवान् ॥ ९
ततः संसर्गजः स्नेहः पुत्रस्य तव पाण्डवैः ।
यदि स्यात्कृतकृत्यस्त्वं भवेथाः पुरुषर्षभ ॥ १०
अथवा जायमानस्य यच्छीलमनुजायते ।
श्रूयते तन्महाराज नामृतस्यापसर्पति ॥ ११
कथं वा मन्यते भीष्मो द्रोणोऽथ विदुरोपि वा ।
भवान्वाऽत्र परं कार्यं पुरा चार्थो निवर्तते ॥ १२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि किर्मीरवधपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ॥ ९ ॥

व्यासेन धृतराष्ट्रंप्रति पुत्रस्नेहस्य दुस्त्यजत्वे दृष्टान्तत्वेन सुरभ्युपाख्यानाख्यानपूर्वकं कौरवाणां जीवितस्य पाण्डवैः सह शमाधीनत्वाभिधानम् ॥ १ ॥

धृतराष्ट्र उवाच ।
भगवन्नाहमप्येतद्रोचये द्यूतसंभवम् ।
मन्ये तद्विधिनाऽऽकृष्य कारितोस्मीति वै मुने ॥ १
नैतद्रोचयते भीष्मो न द्रोणो विदुरो न च ।
गान्धार्या नेष्यते द्यूतं तत्र मोहात्प्रवर्तितम् ॥ २
परित्यक्तुं न शक्नोमि दुर्योधनमचेतनम् ।
पुत्रस्नेहेन भगवञ्जानन्नपि यतव्रत ॥ ३
व्यास उवाच ।
वैचित्रवीर्य नृपते सत्यमाह यथा भवान् ।
दृढं विद्मः परं पुत्रं परं पुत्रान्न विद्यते ॥ ४
इन्द्रोप्यश्रुनिपातेन सुरभ्या प्रतिबोधितः ।
अन्यैः समृद्धैरप्यर्थैर्न सुतान्मन्यते परम् ॥ ५
अत्र ते वर्तयिष्यामि महदाख्यानमुत्तमम् ।
सुरभ्याश्चैव संवादमिन्द्रस्य च विशांपते ॥ ६
त्रिविष्टपगता राजन्सुरभी प्रारुदत्किल ।
गवां माता पुरा तात तामिन्द्रोऽन्वकृपायत ॥ ७
इन्द्र उवाच ।
किमिदं रोदिषि शुभे कच्चित्क्षेमं दिवौकसाम् ।
मनुष्येष्वथवा गोषु नैतदल्पं भविष्यति ॥ ८
सुरभिरुवाच ।
विनिपातो न वः कश्चिद्दृश्यते त्रिदशाधिप ।
अहं तु पुत्रं शोचामि तेन रोदिमि कौशिक ॥ ९
पश्यैनं कर्षकं क्षुद्रं दुर्बलं मम पुत्रकम् ।
प्रतोदेनाभिनिघ्नन्तं लाङ्गलेन च पीडितम् ।
निषीदमानं सोत्कण्ठं वध्यमानं सुराधिप ॥ १०
'एनं दृष्ट्वा भृशं श्रान्तं वध्यमानं सुराधिप ।'
कृपाविष्टाऽस्मि देवेन्द्र मनश्चोद्विजते मम ॥ ११
एकस्तत्र बलोपेतो धुरमुद्वहतेऽधिकाम् ।
अपरोप्यबलप्राणः कृशो धमनिसंततः ।
कृच्छ्राद्वहते भारं तं वै शोचामि वासव ॥ १२
वध्यमानः प्रतोदेन तुद्यमानः पुनःपुनः ।
नैव शक्नोति तं भारमुद्वोढुं पश्य वासव ॥ १३
ततोऽहं तस्य शोकार्ता विरौमि भृशदुःखिता ।
अश्रूण्यावर्तयन्ती च नेत्राभ्यां करुणायती ॥ १४
शक्र उवाच ।
तव पुत्रसहस्रेषु पीड्यमानेषु शोभने ।
किं कृपायितवत्यत्र पुत्र एको निपीड्यते ॥ १५

---

समीक्षा विचारपूर्विका बुद्धिः ॥ ८ ॥ एतदपि दुर्घटमित्याह अथवेति ॥ ११ ॥ अष्टमोऽध्यायः ॥ ८ ॥
सुरभ्या देवधेन्वा ॥ ५ ॥ अन्वकृपायत अनुकम्पितवान् ॥ ७ ॥ कौशिक हे इन्द्र ॥ ९ ॥ प्रतोदेन तीक्ष्णाग्रलोहवता दण्डेन ॥ १० ॥ धुरं भारम् । धमनिसंततः शिराभिर्व्याप्तः । निर्मांस इत्यर्थः ॥ १२ ॥ वधो दण्डाघातेन । तोदः प्रतोदेन ॥ १३ ॥ कृपायितवती कृपांकृतवती । पुत्र एको निपीड्यते बहुषु पुत्रेषु एकः कश्चित् निपीड्यत एवेत्यर्थः ॥ १५ ॥

सुरभिरुवाच ।
यदि पुत्रसहस्राणि सर्वत्र समतैव मे ।
दीनस्य तु सतः शक्र पुत्रस्याभ्यधिका कृपा ॥ १६
व्यास उवाच ।
तदिन्द्रः सुरभेर्वाक्यं निशम्य भृशविस्मितः ।
जीवितेनापि कौरव्य मेनेऽभ्यधिकमात्मजम् ॥ १७
प्रववर्ष च तत्रैव सहसा तोयमुल्बणम् ।
कर्षकस्याचरन्विघ्नं भगवान्पाकशासनः ॥ १८
तद्यथा सुरभिः प्राह सममेवास्तु ते तथा ।
सुतेषु राजन्सर्वेषु हीनेष्वभ्यधिका कृपा ॥ १९
यादृशो मे सुतः पाण्डुस्तादृशो मेऽसि पुत्रक ।
विदुरश्च महाप्राज्ञः स्नेहादेतद्ब्रवीम्यहम् ॥ २०
चिराय तव पुत्राणां शतमेकश्च भारत ।
पाण्डोः पञ्चैव लक्ष्यन्ते तेऽपि मन्दाःसुदुःखिताः॥
कथं जीवेयुरत्यन्तं कथं वर्धेयुरित्यपि ।
इति दीनेषु पार्थेषु मनो मे परितप्यते ॥ २२
यदि पार्थिव कौरव्याञ्जीवमानानिहेच्छसि ।
दुर्योधनस्तव सुतः शमं गच्छतु पाण्डवैः ॥ २३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि किर्मीरवधपर्वणि नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ॥ १० ॥

धृतराष्ट्रेण दुर्योधनानुशासनं प्रार्थितेन व्यासेन तत्रागमिष्यन्तं मैत्रेयंप्रति तत्प्रार्थनाविधानपूर्वकं स्वावासंप्रति गमनम् ॥ १ ॥ तत्रागतेन मैत्रेयेण ऊर्वास्फालनपूर्वकं स्ववचनमनादृतवतो दुर्योधनस्य भीमसेनगदया तवोरुभेदो भूयादिति शापदानम् ॥ २ ॥

धृतराष्ट्र उवाच ।
एवमेतन्महाप्राज्ञ यथा वदसि मां मुने ।
अहं चैव विजानामि सर्वे चेमे नराधिपाः ॥ १
भवांश्च मन्यते साधु यत्कुरूणां सुखोदयम् ।
तदेव विदुरोऽप्याह भीष्मो द्रोणश्च मां मुने ॥ २
यदि त्वहमनुग्राह्यः कौरव्येषु दया यदि ।
अन्वशाधि दुरात्मानं पुत्रं दुर्योधनं मम ॥ ३
व्यास उवाच ।
अयमायाति वै राजन्मैत्रेयो भगवानृषिः ।
अन्वीक्ष्य पाण्डवान्भ्रातॄनिहैवाऽस्मद्दिदृक्षया ॥ ४
एष दुर्योधनं पुत्रं तव राजन्महानृषिः ।
अनुशास्ता यथान्यायं शमायास्य कुलस्य च ॥ ५
ब्रूयाद्यदेष कौरव्य तत्कार्यमविशङ्कया ।
अक्रियायां तु कार्यस्य पुत्रं ते शप्स्यते रुषा ॥ ६
वैशंपायन उवाच ।
एवमुक्त्वा ययौ व्यासो मैत्रेयः प्रत्यदृश्यत ।
पूजया प्रतिजग्राह सपुत्रस्तं नराधिपः ॥ ७
कृत्वाऽर्घ्याद्याः क्रियाः सर्वा विश्रान्तं मुनिसत्तमम् ।
प्रश्रयेणाब्रवीद्राजा धृतराष्ट्रोऽम्बिकासुतः ॥ ८
सुखेनागमनं कच्चिद्भगवन्कुरुजाङ्गले ।
कच्चित्कुशलिनो वीरा भ्रातरः पञ्च पाण्डवाः ॥ ९
समये स्थातुमिच्छन्ति कच्चिच्च भरतर्षभाः ।
कच्चित्कुरूणां सौभ्रात्रमव्युच्छिन्नं भविष्यति ॥ १०
मैत्रेय उवाच ।
तीर्थयात्रामनुक्रामन्प्राप्तोऽस्मि कुरुजाङ्गलान् ।
यदृच्छया धर्मराजं दृष्टवान्काम्यके वने ॥ ११
तं जटाजिनसंवीतं तपोवननिवासिनम् ।
समाजग्मुर्महात्मानं द्रष्टुं मुनिगणाः प्रभो ॥ १२
तत्राश्रौषं महाराज पुत्राणां तव विग्रहम् ।
अनयं द्यूतरूपेण महाभयमुपस्थितम् ॥ १३
ततोऽहं त्वामनुप्राप्तः कौरवाणामवेक्षया ।
सदा ह्यभ्यधिकः स्नेहः प्रीतिश्च त्वयि मे प्रभो १४

उल्बणं उत्कटम् ॥ १८ ॥ मन्दाः त्वत्पुत्रवत्कपटानभिज्ञाः ॥ २१ ॥ नवमोऽध्यायः ॥ ९ ॥

अनुशास्ता अनुशासिष्यति ॥ ५ ॥ अक्रियायां अकरणे । कार्यस्य अवश्यकर्तव्यस्य ॥ ६ ॥ यदृच्छया दैवात् ॥ ११ ॥

नैतदौपयिकं राजंस्त्वयि भीष्मे च जीवति ।
यदन्योन्येन ते पुत्रा विरुध्यन्ते कथंचन ॥ १५
मेढीभूतः स्वयं राजन्निग्रहे प्रग्रहे भवान् ।
किमर्थमनयं घोरमुत्पतन्तमुपेक्षसे ॥ १६
दस्यूनामिव यद्वृत्तं सभायां कुरुनन्दन ।
तेन न भ्राजसे राजंस्तापसानां समागमे ॥ १७
वैशंपायन उवाच ।
ततो व्यावृत्य राजानं दुर्योधनममर्षणम् ।
उवाच श्लक्ष्णया वाचा मैत्रेयो भगवानृषिः ॥१८
मैत्रेय उवाच ।
दुर्योधन महाबाहो निबोध वदतां वर ।
वचनं मे महाभाग ब्रुवतो यद्धितं तव ॥ १९
मा द्रुहः पाण्डवान्राजन्कुरुष्व हितमात्मनः ।
पाण्डवानां कुरूणां च लोकस्य च नरर्षभ ॥ २०
पाण्डवान्प्राप्य तात्रात्रौ किर्मीरो नाम राक्षसः ।
आवृत्य मार्गं रौद्रात्मा तस्थौ गिरिरिवाचलः २१
तं भीमः समरश्लाघी बलेन बलिनां वरः ।
जघान पशुमारेण व्याघ्रः क्षुद्रमृगं यथा ॥ २२
पश्य दिग्विजये राजन्यथा भीमेन पातितः ।
जरासन्धो महेष्वासो नागायुतबलो युधि ॥ २३
संबन्धी वासुदेवश्च श्यालाः सर्वे च पार्षताः ।
ते हि सर्वे नरव्याघ्राः शूरा विक्रान्तयोधिनः ॥२४
सर्वे नागायुतप्राणा वज्रसंहनना दृढाः ।
सत्यव्रतधराः सर्वे सर्वे पुरुषमानिनः ॥ २५
हन्तारो देवशत्रूणां रक्षसां कामरूपिणाम् ।
हिडिम्बबकमुख्यानां किर्मीरस्य च रक्षसः ।
कस्तान्युधि समासीत जरामरणवान्नरः ॥ २६
तस्य ते शम एवास्तु पाण्डवैर्भरतर्षभ ।
कुरु मे वचनं राजन्मा मृत्युवशमन्वगाः ॥ २७
वैशंपायन उवाच ।
एवं तु ब्रुवतस्तस्य मैत्रेयस्य विशांपते ।
ऊरुं करिकराकारं करेणाभिजघान सः ॥ २८
दुर्योधनः स्मितं कृत्वा चरणेनोल्लिखन्महीम् ।
न किंचिदुक्त्वा दुर्मेधास्तस्थौ किंचिदवाङ्मुखः २९
तमशुश्रूषमाणं तु विलिखन्तं वसुंधराम् ।
दृष्ट्वा दुर्योधनं राजन्मैत्रेयं कोप आविशत् ॥ ३०
स कोपवशमापन्नो मैत्रेयो मुनिसत्तमः ।
विधिना संप्रयुक्तश्च शापायास्य मनो दधे ॥ ३१
ततः स वार्युपस्पृश्य कोपसंरक्तलोचनः ।
मैत्रेयो धार्तराष्ट्रं तमशपद्दुष्टचेतसम् ॥ ३२
यस्मात्त्वं मामनादृत्य नेमां वाचं चिकीर्षसि ।
तस्मादस्यातिमानस्य सद्यः फलमवाप्स्यसि ॥ ३३
त्वदभिद्रोहसंयुक्तं युद्धमुत्पत्स्यते महत् ।
यत्र भीमो गदाघातैस्तवोरुं भेत्स्यते बली ॥ ३४
इत्येवमुक्ते वचने धृतराष्ट्रो महीपतिः ।
प्रसादयामास मुनिं नैतदेवं भवेदिति ॥ ३५
मैत्रेय उवाच ।
शमं यास्यति चेत्पुत्रस्तव राजन्यदा तदा ।
शापो न भविता तात विपरीते भविष्यति ॥ ३६
वैशंपायन उवाच ।
सविलक्षस्तु राजेन्द्रो दुर्योधनपिता तदा ।
मैत्रेयं प्राह किर्मीरः कथं भीमेन पातितः ॥ ३७
मैत्रेय उवाच ।
नाहं वक्ष्याम्यसूया ते न ते शुश्रूषते सुतः ।
एष ते विदुरः सर्वमाख्यास्यति गते मयि ॥ ३८
वैशंपायन उवाच ।
इत्येवमुक्त्वा मैत्रेयः प्रातिष्ठत यथागतम् ।
किर्मीरवधसंविग्नो भयं दुर्योधनो ययौ ॥ ३९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि किर्मीरवधपर्वणि दशमोऽध्यायः ॥ १० ॥

---

औपयिकं योग्यम् ॥ १५ ॥ मेढीभूतः खलदामस्तम्भीभूतः । प्रग्रहे अनुग्रहे ॥ १६ ॥ व्यावृत्य अभिमुखीभूयेत्यर्थः ॥ १८ ॥ पशुमारेण पशुमारणप्रकारेण ॥ २२ ॥ विक्रान्तयोधिनः विक्रान्ताश्च युद्धशीलाश्च ॥२४॥ वज्रसंहननाः वज्रकायाः ॥२५॥ दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ॥ ११ ॥

मैत्रेयचोदितेन विदुरेण धृतराष्ट्राय भीमकृतकिर्मीरवधप्रकारकथनम् ॥ १ ॥

धृतराष्ट्र उवाच ।
किर्मीरस्य वधं क्षत्तः श्रोतुमिच्छामि कथ्यताम् ।
रक्षसा भीमसेनस्य कथमासीत्समागमः ॥ १
विदुर उवाच ।
शृणु भीमस्य कर्मेदमतिमानुषकर्मणः ।
श्रुतपूर्वं मया तेषां कथान्तेषु पुनः पुनः ॥ २
इतः प्रयाता राजेन्द्र पाण्डवा द्यूतनिर्जिताः ।
जग्मुस्त्रिभिरहोरात्रैः काम्यकं नाम तद्वनम् ॥ ३
रात्रौ निशीथे त्वाभीले गतेऽर्धसमये नृप ।
प्रचारे पुरुषादानां रक्षसां घोरकर्मणाम् ॥ ४
तद्वनं तापसा नित्यमशेषा वनचारिणः ।
दूरात्परिहरन्ति स्म पुरुषादभयात्किल ॥ ५
तेषां प्रविशतां तत्र मार्गमावृत्य भारत ।
दीप्ताक्षं भीषणं रक्षः सोल्मुकं प्रत्यपद्यत ॥ ६
बाहू महान्तौ कृत्वा च तथास्यं च भयानकम् ।
स्थितमावृत्य पन्थानं येन यान्ति कुरूद्वहाः ॥ ७
दष्टोष्ठदंष्ट्रं ताम्राक्षं प्रदीप्तोर्ध्वशिरोरुहम् ।
सार्करश्मितडिच्चक्रं सबलाकमिवाम्बुदम् ॥ ८
सृजन्तं राक्षसीं मायां महानादनिनादितम् ।
मुञ्चन्तं विपुलान्नादान्सतोयमिव तोयदम् ॥ ९
तस्य नादेन संत्रस्ताः पक्षिणः सर्वतोदिशम् ।
विमुक्तनादाः संपेतुः स्थलजा जलजैः सह ॥ १०
संप्रद्रुतमृगद्वीपिमहिषर्क्षसमाकुलम् ।
तद्वनं तस्य नादेन संप्रस्थितमिवाभवत् ॥ ११
तस्योरुवाताभिहतास्ताम्रपल्लवबाहवः ।
विदूरजाताश्च लताः समाश्लिष्यन्ति पादपान् १२
तस्मिन्क्षणेऽथ प्रववौ मारुतो भृशदारुणः ।
रजसा संवृतं तेन नष्टर्क्षमभवन्नभः ॥ १३
पञ्चानां पाण्डुपुत्राणामविज्ञातो महारिपुः ।
पञ्चानामिन्द्रियाणां तु शोकावेश इवातुलः ॥ १४
स दृष्ट्वा पाण्डवान्दूरात्कृष्णाजिनसमावृतान् ।
आवृणोत्तद्वनद्वारं मैनाक इव पर्वतः ॥ १५
तं समासाद्य वित्रस्ता कृष्णा कमललोचना ।
अदृष्टपूर्वं संत्रासान्न्यमीलयत लोचने ॥ १६
दुःशासनकरोत्सृष्टविप्रकीर्णशिरोरुहा ।
पञ्चपर्वतमध्यस्था नदीवाकुलतां गता ॥ १७
विमुह्यमानां तां तत्र जगृहुः पञ्च पाण्डवाः ।
इन्द्रियाणि प्रसक्तानि विषयेषु यथा रतिम् ॥ १८
अथ तां राक्षसीं मायामुत्थितां घोरदर्शनाम् ।
रक्षोघ्नैर्विविधैर्मन्त्रैर्धौम्यः सम्यक्प्रयोजितैः ॥ १९
पश्यतां पाण्डुपुत्राणां नाशयामास वीर्यवान् ।
स नष्टमायोऽतिबलः क्रोधविस्फारितेक्षणः ॥ २०
कामुमूर्तिधरः क्रूरः कालकल्पो व्यदृश्यत ।
तमुवाच ततो राजा दीर्घप्रज्ञो युधिष्ठिरः ॥ २१
को भवान्कस्य वा किं ते क्रियतां कार्यमुच्यताम् ।
प्रत्युवाचाथ तद्रक्षो धर्मराजं युधिष्ठिरम् ॥ २२
अहं बकस्य वै भ्राता किर्मीर इति विश्रुतः ।
वनेऽस्मिन्काम्यके शून्ये निवसामि गतज्वरः २३
युधि निर्जित्य पुरुषानाहारं नित्यमाचरन् ।
के यूयमभिसंप्राप्ता भक्ष्यभूता ममान्तिकम् ।
युधि निर्जित्य वः सर्वान्भक्षयिष्ये गतज्वरः २४
विदुर उवाच ।
युधिष्ठिरस्तु तच्छ्रुत्वा वचस्तस्य दुरात्मनः ।
आचचक्षे ततः सर्वं गोत्रनामादि भारत ॥ २५
पाण्डवो धर्मराजोऽहं यदि ते श्रोत्रमागतः ।
सहितो भ्रातृभिः सर्वैर्भीमसेनार्जुनादिभिः ॥ २६
हृतराज्यो वने वासं वस्तुं कृतमतिस्ततः ।
वनमभ्यागतो घोरमिदं तव परिग्रहम् ॥ २७
'विस्मयं परमं गत्वा राक्षसो घोरदर्शनः ।'
किर्मीरस्त्वब्रवीदेनं दिष्ट्या देवैरिदं मम ।

आभीले भयंकरे । अर्द्धसमयेऽर्द्धज्ञाने गतेसति । लोके तन्द्रावति सतीत्यर्थः ॥ ४ ॥ महानादः कुञ्जरे स्याद्वार्षिकाब्दे भयानके इति विश्वः ॥ ९ ॥

उपपादितमद्येह चिरकालान्मनोरथम् ॥ २८
भीमसेनवधार्थं हि नित्यमभ्युद्यतायुधः ।
चरामि पृथिवीं कृत्स्नां नैनं चासादयाम्यहम्॥२९
सोयमासादितो दिष्ट्या भ्रातृहा काङ्क्षितश्चिरम् ।
अनेन हि मम भ्राता बको विनिहतः प्रियः॥३०
वैत्रकीयवने राजन्ब्राह्मणच्छद्मरूपिणा ।
विद्याबलमुपाश्रित्य न ह्यस्त्यस्यौरसं बलम्॥३१
हिडिम्बश्च सखा मह्यं दयितो वनगोचरः ।
हतो दुरात्मनाऽनेन स्वसा चास्य हृता पुरा॥३२
सोयमभ्यागतो मूढो ममेदं गहनं वनम् ।
प्रचारसमयेऽस्माकमर्द्धरात्रे स्थिते समे ॥ ३३
अद्यास्य यातयिष्यामि तद्वैरं चिरसंभृतम् ।
तर्पयिष्यामि च बकं रुधिरेणास्य भूरिणा ॥ ३४
अद्याहमनृणो भूत्वा भ्रातुः सख्युस्तथैव च ।
शान्तिं लब्धास्मि परमां हत्वा राक्षसकण्टकम्॥३५
यदि तेन पुरा मुक्तो भीमसेनो बकेन वै ।
अद्यैनं भक्षयिष्यामि पश्यतस्ते युधिष्ठिर ॥ ३६
एनं हि विपुलप्राणमद्य हत्वा वृकोदरम् ।
संभक्ष्य जरयिष्यामि यथाऽगस्त्यो महासुरम्॥३७
एवमुक्तस्तु धर्मात्मा सत्यसन्धो युधिष्ठिरः ।
नैतदस्तीति सक्रोधो भर्त्सयामास राक्षसम्॥३८
ततो भीमो महाबाहुरारुज्य तरसा द्रुमम् ।
दशव्याममथोद्विद्धं निष्पत्रमकरोत्तदा ॥ ३९
चकार सज्यं गाण्डीवं वज्रनिष्पेषगौरवम् ।
निमेषान्तरमात्रेण तथैव विजयोऽर्जुनः ॥ ४०
निवार्य भीमो जिष्णुं तं तद्रक्षो मेघनिःस्वनम् ।
अभिद्रुत्याब्रवीद्वाक्यं तिष्ठतिष्ठेति भारत ॥ ४१
इत्युक्त्वैनमतिक्रुद्धः कक्ष्यामुत्पीड्य पाण्डवः ।
निष्पिष्य पाणिना पाणिं संदष्टौष्ठपुटो बली ।
तमभ्यधावद्वेगेन भीमो वृक्षायुधस्तदा ॥ ४२
यमदण्डप्रतीकाशं ततस्तं तस्य मूर्धनि ।
पातयामास वेगेन कुलिशं मघवानिव ॥ ४३
असंभ्रान्तं तु तद्रक्षः समरे प्रत्यदृश्यत ।
चिक्षेप चोल्मुकं दीप्तमशनिं ज्वलितामिव ॥ ४४
तदुदस्तमलातं तु भीमः प्रहरतां वरः ।
पदा सव्येन चिक्षेप तद्रक्षः पुनराव्रजत् ॥ ४५
किर्मीरश्चापि सहसा वृक्षमुत्पाट्य पाण्डवम् ।
दण्डपाणिरिव क्रुद्धः समरे प्रत्यधावत ॥ ४६
तद्वृक्षयुद्धमभवन्महीरुहविनाशनम् ।
वालिसुग्रीवयोर्भ्रात्रोर्यथा स्त्रीकाङ्क्षिणोः पुरा॥४७
शीर्षयोः पतिता वृक्षा बिभिदुर्नैकधा तयोः ।
यथैवोत्पलपत्राणि मत्तयोर्द्विपयोस्तथा ॥ ४८
मूर्ध्नि जर्झरभूतास्तु बहवस्तत्र पादपाः ।
चीराणीव व्युदस्तानि रेजुस्तत्र महावने ॥ ४९
तद्वृक्षयुद्धमभवन्मुहूर्तं भरतर्षभ ।
राक्षसानां च मुख्यस्य नराणामुत्तमस्य च ॥ ५०
ततः शिलां समुत्क्षिप्य भीमस्य युधि तिष्ठतः ।
प्राहिणोद्राक्षसः क्रुद्धो भीमसेनश्चचाल ह ॥ ५१
तं शिलाताडनजडं पर्यधावत राक्षसः ।
बाहुविक्षिप्तकिरणः स्वर्भानुरिव भास्करम् ॥ ५२
तावन्योन्यं समाश्लिश्य प्रकर्षन्तौ परस्परम् ।
उभावपि चकाशेते प्रवृद्धौ वृषभाविव ॥ ५३
तयोरासीत्सुतुमुलः संप्रहारः सुदारुणः ।
नखदंष्ट्रायुधवतोर्व्याघ्रयोरिव दृप्तयोः ॥ ५४
दुर्योधननिकाराच्च बाहुवीर्याच्च दर्पितः ।
कृष्णानयनदृष्टश्च व्यवर्धत वृकोदरः ॥ ५५
अभिहत्याथ बाहुभ्यां प्रत्यगृह्णादमर्षितः ।
मातङ्गमिव मातङ्गः प्रभिन्नकरटामुखम् ॥ ५६

वैत्रकीयवने एकचक्रायाम् ॥ ३१ ॥ मह्यं मम ॥ ३२ ॥ लब्धास्मि लप्स्यामि ॥ ३५ ॥ महासुरं वातापिम् ॥ ३७ ॥ आरुज्य भङ्क्त्वा । दशव्यामं विस्तारितयोः करयोस्तिर्यगन्तरम् । उद्विद्धं उत्पाटितम् ॥ ३९ ॥ वज्रेण निष्पेषश्चूर्णीभावो यस्य पर्वतस्य तद्वत् गौरवं गुरुत्वं यस्य तत्तथा ॥ ४० ॥ कक्ष्यामुत्पीड्य परिधानवस्त्रं दृढीकृत्य ॥ ४२ ॥ उदस्तं उत्क्षिप्तम् । अलातं उल्मुकम् । रक्षः राक्षसम् ॥ ४५ ॥ चीराणि वृक्षवल्कलानि ॥ ४९ ॥ निकारात् परिभवात् । कृष्णाया आनयनं दृष्टं येन स तथा । द्रौपद्याकर्षणेन कुपित इत्यर्थः ॥ ५५ ॥ प्रभिन्नकरटामुखं प्रभिन्ने व्यक्तीभूते करटयोर्गण्डयोर्मुखे मदनिर्गममार्गौ यस्य तम् ॥ ५६ ॥

स चाप्येनं ततो रक्षः प्रतिजग्राह वीर्यवान् ।
तमाक्षिपद्भीमसेनो बलेन बलिनां वरः ॥ ५७
तयोर्भुजविनिष्पेषादुभयोर्बलिनोस्तदा ।
शब्दः समभवद्घोरो वेणुस्फोटसमो युधि ॥ ५८
अथैनमाक्षिप्य बलाद्गृह्य मध्ये वृकोदरः ।
धूनयामास वेगेन वायुश्चण्ड इव द्रुमम् ॥ ५९
स भीमेन परामृष्टो दुर्बलो बलिनां रणे ।
व्यस्पन्दत यथाप्राणं विचकर्ष च पाण्डवम् ॥ ६०
तत एनं परिश्रान्तमुपलक्ष्य वृकोदरः ।
योक्त्रयामास बाहुभ्यां पशुं रशनया यथा ॥ ६१
विनदन्तं महानादं भिन्नभेरीस्वनं बली ।
भ्रामयामास सुचिरं विस्फुरन्तमचेतसम् ॥ ६२
तं विषीदन्तमाज्ञाय राक्षसं पाण्डुनन्दनः ।
प्रगृह्य तरसा दोर्भ्यां पशुमारममारयत् ॥ ६३
आक्रम्य च कटीदेशे जानुना राक्षसाधमम् ।
पीडयामास पाणिभ्यां तस्य कण्ठं वृकोदरः ॥ ६४
अथ जर्जरसर्वाङ्गं व्यावृत्तनयनोल्बणम् ।
भूतले भ्रामयामास वाक्यं चेदमुवाच ह ॥ ६५
हिडिम्बबकयोः पाप न त्वमश्रुप्रमार्जनम् ।
करिष्यसि गतश्चापि यमस्य सदनं प्रति ॥ ६६
इत्येवमुक्त्वा पुरुषप्रवीर-
स्तं राक्षसं क्रोधपरीतचेताः ।
विस्रस्तवस्त्राभरणं स्फुरन्त-
मुद्भ्रान्तचित्तं व्यसुमुत्ससर्ज ॥ ६७
तस्मिन्हते तोयदतुल्यरूपे
कृष्णां पुरस्कृत्य नरेन्द्रपुत्राः ।
भीमं प्रशस्याथ गुणैरनेकै-
र्हृष्टास्ततो द्वैतवनाय जग्मुः ॥ ६८
विदुर उवाच ।
एवं विनिहतः सङ्ख्ये किर्मीरो मनुजाधिप ।
भीमेन वचनात्तस्य धर्मराजस्य कौरव ॥ ६९
ततो निष्कण्टकं कृत्वा वनं तदपराजितः ।
द्रौपद्या सह धर्मज्ञो वसतिं तामुवास ह ॥ ७०
समाश्वास्य च ते सर्वे द्रौपदीं भरतर्षभाः ।
प्रहृष्टमनसः प्रीत्या प्रशशंसुर्वृकोदरम् ॥ ७१
भीमबाहुबलोत्पिष्टे विनष्टे राक्षसे ततः ।
विविशुस्ते वनं वीराः क्षेमं निहतकण्टकम् ॥ ७२
स मया गच्छता मार्गे विनिकीर्णो भयावहः ।
वने महति दुष्टात्मा दृष्टो भीमबलाद्धतः ॥ ७३
तत्राश्रौषमहं चैतत्कर्म भीमस्य भारत ।
ब्राह्मणानां कथयतां ये तत्रासन्समागताः ॥ ७४
वैशंपायन उवाच ।
एवं विनिहतं सङ्ख्ये किर्मीरं रक्षसां वरम् ।
श्रुत्वा ध्यानपरो राजा निशश्वासार्तवत्तदा ॥ ७५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि किर्मीरवधपर्वणि एकादशोऽध्यायः ॥ ११ ॥

समाप्तं च किर्मीरवधपर्व ॥ १ ॥

---

## ( अथार्जुनाभिगमनपर्व ॥ २ ॥ )

### द्वादशोऽध्यायः ॥ १२ ॥

श्रीकृष्णेन स्वीयैः सह वने पाण्डवसमीपगमनम् ॥ १ ॥ अर्जुनेन कृष्णस्तवनम् ॥ २ ॥ स्वदुःखनिवेदनपूर्वकं रुदन्त्या द्रौपद्याः कृष्णेन समाश्वासनम् ॥ ३ ॥

वैशंपायन उवाच ।
भोजाः प्रव्रजिताञ्श्रुत्वा वृष्णयश्चान्धकैः सह ।
पाण्डवान्दुःखसंतप्तान्समाजग्मुर्महावने ॥ १
पाञ्चालस्य च दायादो धृष्टकेतुश्च चेदिपः ।

व्यस्पन्दत किंचिच्चलनं कृतवान् ॥ ६० ॥ योक्त्रयामास बबन्ध । रशनया पशुमिव ॥ ६१ ॥ पशुमारं पशुमिव मारयित्वा ॥ ६३ ॥ एकादशोऽध्यायः ॥ ११ ॥

केकयाश्च महावीर्या भ्रातरो लोकविश्रुताः ॥ २
वने द्रष्टुं ययुः पार्थान्क्रोधामर्षसमन्विताः ।
गर्हयन्तो धार्तराष्ट्रान्किं कुर्म इति चाब्रुवन् ॥ ३
वासुदेवं पुरस्कृत्य सर्वे ते क्षत्रियर्षभाः ।
परिवार्योपविविशुर्धर्मराजं युधिष्ठिरम् ।
अभिवाद्य कुरुश्रेष्ठं विषण्णः केशवोऽब्रवीत् ॥ ४
वासुदेव उवाच ।
दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः ।
दुःशासनचतुर्थानां भूमिः पास्यति शोणितम् ॥५
एतान्निहत्य समरे ये च तेषां पदानुगाः ।
तांश्च सर्वान्विनिर्जित्य सहितान्स नराधिपान् ६
ततः सर्वेऽभिषिञ्चामो धर्मराजं युधिष्ठिरम् ।
निकृत्याऽभिचरन्वध्य एष धर्मः सनातनः ॥ ७
वैशंपायन उवाच ।
पार्थानामभिषङ्गेण तथा क्रुद्धं जनार्दनम् ।
अर्जुनः शमयामास दिधक्षन्तमिव प्रजाः ॥ ८
संक्रुद्धं केशवं दृष्ट्वा पूर्वदेवेषु फल्गुनः ।
कीर्तयामास कर्माणि सत्यकीर्तेर्महात्मनः ॥ ९
पुरुषस्याप्रमेयस्य सत्यस्यामिततेजसः ।
प्रजापतिपतेर्विष्णोर्लोकनाथस्य धीमतः ॥ १०
अर्जुन उवाच ।
दशवर्षसहस्राणि यत्रसायंगृहो मुनिः ।
व्यचरस्त्वं पुरा कृष्ण पर्वते गन्धमादने ॥ ११
दशवर्षसहस्राणि दशवर्षशतानि च ।
पुष्करेष्ववसः कृष्ण त्वमपो भक्षयन्पुरा ॥ १२
ऊर्ध्वबाहुर्विशालायां बदर्यां मधुसूदन ।
अतिष्ठ एकपादेन वायुभक्षः शतं समाः ॥ १३
कृष्णाजिनोत्तरासङ्गः कृशो धमनिसंततः ।
आसीः कृष्ण सरस्वत्यां सत्रे द्वादशवार्षिके ॥ १४
प्रभासमप्यथासाद्य तीर्थं पुण्यजनार्चितम् ।
तत्र कृष्ण महातेजा दिव्यं वर्षसहस्रकम् ॥ १५
आतिष्ठस्त्वमथैकेन पादेन नियमस्थितः ।
लोकप्रवृत्तिहेतोस्त्वमिति व्यासो ममाब्रवीत् १६
क्षेत्रज्ञः सर्वभूतानामादिरन्तश्च केशव ।
निधानं तपसां कृष्ण यज्ञस्त्वं च सनातनः ॥ १७
'योगकर्ता हृषीकेशः सांख्यकर्ता सनातनः ।
शीलस्त्वं सर्वयोगानां करणं नियमस्य च ॥' १८
निहत्य नरकं भौममाहृत्य मणिकुण्डले ।
प्रथमोत्पादितं कृष्ण मेध्यमश्वमवासृजः ॥ १९
कृत्वा तत्कर्म लोकानामृषभः सर्वलोकजित् ।
अवधीस्त्वं रणे सर्वान्समेतान्दैत्यदानवान् ॥ २०
ततः सर्वेश्वरत्वं च संप्रदाय शचीपतेः ।
मानुषेषु महाबाहो प्रादुर्भूतोऽसि केशव ॥ २१
स त्वं नारायणो भूत्वा हरिरासीः परंतप ।
ब्रह्मा सोमश्च सूर्यश्च धर्मो धाता यमोऽनलः २२
वायुर्वैश्रवणो रुद्रः कालः खं पृथिवी दिशः ।
अजश्चराचरगुरुः स्रष्टा त्वं पुरुषोत्तम ॥ २३
तुरायणादिभिर्देव क्रतुभिर्भूरिदक्षिणैः ।
अयजो भूरितेजा वै कृष्ण चैत्ररथे वने ॥ २४
शतं शतसहस्राणि सुवर्णस्य जनार्दन ।
एकैकस्मिंस्तदा यज्ञे परिपूर्णानि दत्तवान् ॥ २५
अदितेरपि पुत्रत्वमेत्य यादवनन्दन ।
त्वं विष्णुरिति विख्यात इन्द्रादवरजो विभुः २६
शिशुर्भूत्वा दिवं खं च पृथिवीं च परंतप ।
त्रिभिर्विक्रमणैः कृष्ण क्रान्तवानसि तेजसा ॥२७
संप्राप्य दिवमाकाशमादित्यस्यन्दने स्थितः ।
अत्यरोचश्च भूतात्मन्भास्करं स्वेन तेजसा ॥२८
प्रादुर्भावसहस्रेषु तेषुतेषु त्वया विभो ।
अधर्मरुचयः कृष्ण निहताः शतशोऽसुराः ॥२९
सादिता मौरवाः पाशा निशुम्भनरकौ हतौ ।
कृतः क्षेमः पुनः पन्थाः पुरं प्राग्ज्योतिषं प्रति ३०
जारूथ्यामाहुतिः क्राथः शिशुपालो नृपैः सह ।

---

निकृत्या छलेन ॥ ७ ॥ अभिषङ्गेण दुःखेन पराभवेन वा ॥ ८ ॥ यत्र सायंकालस्तत्रैव गृहं यस्य स यत्रसायंगृहः ॥ ११ ॥ उत्तरासङ्ग उत्तरीयवस्त्रम् ॥ १४ ॥ क्षेत्रज्ञः अन्तरात्मेत्यर्थः ॥ १७ ॥ भौमं भूमिपुत्रम् । मेध्यं यज्ञियम् ॥१९॥ तत्कर्म अश्वोत्सर्गाख्यम् ॥ २० ॥ संप्राप्य सम्यग्व्याप्य । आदित्यस्यन्दने सूर्यदेहे भास्करमण्डलाभिमानिनं जीवम् ॥ २८ ॥ सादिताः छिन्नाः मौरवाः आन्त्रतन्तिमयाः । मुर वेष्टने अस्मादौणादिके उक्प्रत्यये तद्धितः ॥ ३० ॥ जारूथ्यां

जरासन्धश्च शैब्यश्च शतधन्वा च निर्जितः ॥३१
तथा पर्जन्यघोषेण रथेनादित्यवर्चसा ।
अहार्षी रुक्मिणीं भैष्मीं रणे निर्जित्य रुक्मिणं ३२
इन्द्रद्युम्नो हतः कोपाद्यवनश्च कशेरुमान् ।
हतः सौभपतिः साल्वस्त्वया सौभं च पातितम् ३३
एवमेते युधि हता भूयश्चान्याञ्शृणुष्व ह ।
इरावत्यां हतो भोजः कार्तवीर्यसमो युधि ।
गोपतिस्तालकेतुश्च त्वया विनिहतावुभौ ॥ ३४
तां च भोगवतीं पुण्यामृषिकान्तां जनार्दन ।
द्वारकामात्मसात्कृत्वा समुद्रं गमयिष्यसि ॥ ३५
न क्रोधो न च मात्सर्यं नानृतं मधुसूदन ।
त्वयि तिष्ठति दाशार्ह न नृशंस्यं कुतोऽनृजु॥३६
आसीनं चैत्यमध्ये त्वां दीप्यमानं स्वतेजसा ।
आगम्य ऋषयः सर्वेऽयाचन्ताभयमच्युत ॥ ३७
युगान्ते सर्वभूतानि संक्षिप्य मधुसूदन ।
आत्मनैवात्मसात्कृत्वा जगदासीः परंतप ॥ ३८
युगादौ तव वार्ष्णेय नाभिपद्मादजायत ।
ब्रह्मा चराचरगुरुर्यस्येदं सकलं जगत् ।
तं हन्तुमुद्यतौ घोरौ दानवौ मधुकैटभौ ॥ ३९
तयोर्व्यतिक्रमं दृष्ट्वा क्रुद्धस्य भवतो हरेः ।
ललाटाज्जातवाञ्शंभुः शूलपाणिस्त्रिलोचनः ॥४०
इत्थं तावपि देवेशौ त्वच्छरीरसमुद्भवौ ।
त्वन्नियोगकरावेताविति मे नारदोऽब्रवीत् ॥ ४१
तथा नारायण पुरा क्रतुभिर्भूरिदक्षिणैः ।
इष्टवांस्त्वं महासत्रं कृष्ण चैत्ररथे वने ॥ ४२
नैवं परे नापरे वा करिष्यन्ति कृतानि वा ।
यानि कर्माणि देव त्वं बाल एव महाबलः ४३
कृतवान्पुण्डरीकाक्ष बलदेवसहायवान् ।
वैराजभवने चापि ब्रह्मणा न्यवसः सह ॥ ४४
वैशंपायन उवाच ।
एवमुक्त्वा महात्मानमात्मा कृष्णस्य पाण्डवः ।
तूष्णीमासीत्ततः पार्थमित्युवाच जनार्दनः ॥४५
ममैव त्वं तवैवाहं ये मदीयास्तवैव ते ।
यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु ॥
नरस्त्वमसि दुर्धर्ष हरिर्नारायणो ह्यहम् ।
काले लोकमिमं प्राप्तौ नरनारायणावृषी ॥ ४७
अनन्यः पार्थ मत्तस्त्वं त्वत्तश्चाहं तथैव च ।
नावयोरन्तरं शक्यं वेदितुं भरतर्षभ ॥ ४८
वैशंपायन उवाच ।
'इत्युक्त्वा पुण्डरीकाक्षः पाण्डवं सुप्रियं वचः ।
प्रीयमाणो हृषीकेशस्तूष्णीं तत्र बभूव सः ॥४९
एवमुक्ते तु वचने केशवेन महात्मना ।
तस्मिन्वीरसमावाये संरब्धेष्वथ राजसु ॥ ५०
धृष्टद्युम्नमुखैर्वीरैर्भ्रातृभिः परिवारिता ।
पाञ्चाली पुण्डरीकाक्षमासीनं यादवैः सह ।
अभिगम्याब्रवीत्कृष्णा शरण्यं शरणैषिणी ॥ ५१
द्रौपद्युवाच ।
'वासुदेव हृषीकेश वासवावरजाच्युत ।
देवदेवोसि देवानामिति द्वैपायनोऽब्रवीत् ॥' ५२
पूर्वे प्रजाभिसर्गे त्वामाहुरेकं प्रजापतिम् ।
स्रष्टारं सर्वलोकानामसितो देवलोऽब्रवीत् ॥ ५३
विष्णुस्त्वमसि दुर्धर्ष त्वं यज्ञो मधुसूदन ।
यष्टा त्वमसि यष्टव्यो जामदग्न्यो यथाऽब्रवीत् ५४
ऋषयस्त्वां क्षमामाहुः सत्यं च पुरुषोत्तम ।
सत्याद्यज्ञोसि संभूतः कश्यपस्त्वां यथाऽब्रवीत् ॥
साध्यानामपि देवानां शिवानामीश्वरेश्वर ।
लोकभावन लोकेश यथा त्वां नारदोऽब्रवीत् ५६
ब्रह्मशंकरशक्राद्यैर्देववृन्दैः पुनः पुनः ।
क्रीडसे त्वं नरव्याघ्र बालः क्रीडनकैरिव ॥ ५७
द्यौश्च ते शिरसा व्याप्ता पद्भ्यां च पृथिवी प्रभो ।
जठरे खमिमे लोकाः पुरुषोसि सनातनः ॥ ५८
विद्यातपोभितप्तानां तपसा भावितात्मनाम् ।
आत्मदर्शनतृप्तानामृषीणामसि सत्तमः ॥ ५९
राजर्षीणां पुण्यकृतामाहवेष्वनिवर्तिनाम् ।

नगर्याम् ॥ ३१ ॥ सौभं खेचरं पुरम् ॥ ३२ ॥ नृशंसं निर्दयलम् ॥ ३६ ॥ चैत्यं आयतनं आध्यात्मिकं हृदयपुण्डरीकं । बाह्यं देवालयादि ॥३७॥ आत्मनैव निमित्तान्तरं विना ॥ ३८ ॥ समावाये समूहे । संरब्धेषु कुपितेषु ॥ ५० ॥

सर्वधर्मोपपन्नानां त्वं गतिः पुरुषर्षभ ।
त्वं प्रभुस्त्वं विभुश्च त्वं भूतात्मा त्वं विचेष्टसे६०
लोकपालाश्च लोकाश्च नक्षत्राणि दिशो दश ।
नभश्चन्द्रश्च सूर्यश्च त्वयि सर्वं प्रतिष्ठितम् ॥ ६१
मर्त्यता चैव भूतानाममरत्वं दिवौकसाम् ।
त्वयि सर्वं महाबाहो लोककार्यं प्रतिष्ठितम् ॥ ६२
सा तेऽहं दुःखमाख्यास्ये प्रणयान्मधुसूदन ।
ईशस्त्वं सर्वभूतानां ये दिव्या ये च मानुषाः ६३
कथं नु भार्या पार्थानां तव कृष्ण सखी विभो ।
धृष्टद्युम्नस्य भगिनी सभां कृष्येत मादृशी ॥ ६४
स्त्रीधर्मिणी वेपमाना शोणितेन समुक्षिता ।
एकवस्त्रा विकृष्टाऽसि दुःखिता कुरुसंसदि ॥६५
राज्ञां मध्ये सभायां तु रजसाऽतिपरिप्लुता ।
दृष्ट्वा च मां धार्तराष्ट्राः प्राहसन्पापचेतसः ॥ ६६
दासीभावेन मां भोक्तुमीषुस्ते मधुसूदन ।
जीवत्सु पाण्डुपुत्रेषु पाञ्चालेषु च वृष्णिषु ॥ ६७
नन्वहं कृष्ण भीष्मस्य धृतराष्ट्रस्य चोभयोः ।
स्नुषा भवामि धर्मेण साऽहं दासीकृता बलात्६८
गर्हये पाण्डवांस्त्वेव युधि श्रेष्ठान्महाबलान् ।
यत्क्लिश्यमानां प्रेक्षन्ते धर्मपत्नीं यशस्विनीम् ६९
धिग्बलं भीमसेनस्य धिक्पार्थस्य च गाण्डिवम् ।
यौ मां विप्रकृतां क्षुद्रैर्मर्षयेतां जनार्दन ॥ ७०
शाश्वतोऽयं धर्मपथः सद्भिराचरितः सदा ।
यद्भार्यां परिरक्षन्ति भर्तारोऽल्पबला अपि ॥७१
भार्यायां रक्ष्यमाणायां प्रजा भवति रक्षिता ।
प्रजायां रक्ष्यमाणायामात्मा भवति रक्षितः ॥७२
आत्मा हि जायते तस्यां तस्माज्जाया भवत्युत ।
भर्ता च भार्यया रक्ष्यः कथं जायान्ममोदरे ॥७३
नन्विमे शरणं प्राप्तं न त्यजन्ति कदाचन ।
ते मां शरणमापन्नां नान्वपद्यन्त पाण्डवाः ॥ ७४

पञ्चभिः पतिभिर्जाताः कुमारा मे महौजसः ।
एतेषामप्यवेक्षार्थं त्रातव्याऽसि जनार्दन ॥ ७५
प्रतिविन्ध्यो युधिष्ठिरात्सुतसोमो वृकोदरात् ।
अर्जुनाच्छ्रुतकीर्तिश्च शतानीकस्तु नाकुलिः ॥७६
कनिष्ठाच्छ्रुतकर्मा च सर्वे सत्यपराक्रमाः ।
प्रद्युम्नो यादृशः कृष्ण तादृशास्ते महारथाः ॥७७
नन्विमे धनुषि श्रेष्ठा अजेया युधि शात्रवैः ।
किमर्थं धार्तराष्ट्राणां सहन्ते दुर्बलीयसाम् ॥ ७८
अधर्मेण हृतं राज्यं सर्वे दासाः कृतास्तथा ।
सभायां परिकृष्टाऽहमेकवस्त्रा रजस्वला ॥ ७९
नाधिज्यमपि यच्छक्यं कर्तुमन्येन गाण्डिवम् ।
अन्यत्रार्जुनभीमाभ्यां त्वया वा मधुसूदन ॥८०
धिग्बलं भीमसेनस्य धिक्पार्थस्य च पौरुषम् ।
यत्र दुर्योधनः कृष्ण मुहूर्तमपि जीवति ॥ ८१
य एतानाक्षिपद्राष्ट्रात्सह मात्राऽविहिंसकान् ।
अधीयानान्पुरा बालान्व्रतस्थान्मधुसूदन ॥ ८२
भोजने भीमसेनस्य पापः प्राक्षेपयद्विषम् ।
कालकूटं नवं तीक्ष्णं संभृतं रोमहर्षणम् ॥ ८३
तज्जीर्णमविकारेण सहान्नेन जनार्दन ।
सशेषत्वान्महाबाहो भीमस्य पुरुषोत्तम ॥ ८४
प्रमाणकोट्यां विश्वस्तं तथा सुप्तं वृकोदरम् ।
बद्ध्वैनं कृष्ण गङ्गायां प्रक्षिप्य पुरमाव्रजत् ॥ ८५
यदा विबुद्धः कौन्तेयस्तदा संछिद्य बन्धनम् ।
उदतिष्ठन्महाबाहुर्भीमसेनो महाबलः ॥ ८६
आशीविषैः कृष्णसर्पैः सुप्तंचैनमदंशयत् ।
सर्वेष्वेवाङ्गदेशेषु न ममार च शत्रुहा ॥ ८७
प्रतिबुद्धस्तु कौन्तेयः सर्वान्सर्पानपोथयत् ।
सारथिं चास्य दयितमपहस्तेन जघ्निवान् ॥ ८८
पुनः सुप्तानुपाधाक्षीद्बालकान्वारणावते ।
शयानानार्यया सार्धं को नु तत्कर्तुमर्हति ॥ ८९

स्त्रीधर्मिणी रजस्वला ॥ ६५ ॥ ईषुः ऐच्छन् ॥ ६७ ॥ स्नुषा वधूः ॥ ६८ ॥ धर्मपत्नीं यज्ञसंयोगिनीम् ॥ ६९ ॥ विप्रकृतां दुःखंप्रापिताम् । मर्षयेतां क्षमेताम् ॥ ७० ॥ जायात् उत्पद्येत् ॥ ७३ ॥ नान्वपद्यन्त नानुगृहीतवन्तः ॥ ७४ ॥ धार्तराष्ट्राणामपराधम् । दुर्बलीयसां दुर्बलतराणाम् ॥ ७८ ॥

अधिज्यमारोपितगुणम् ॥ ८० ॥ सशेषत्वात् । आयुषइति शेषः ॥ ८४ ॥ प्रमाणकोट्यां प्रमाणाख्यो गङ्गातीरस्थो वटविशेषस्तत्प्रदेशे ॥ ८५ ॥ अपोथयत् प्रहृतवान् । अपहस्तेन हस्तपृष्ठेन ॥ ८८ ॥ उपाधाक्षीत् दाहार्थं उपहृतवान् । आर्या श्वश्रूः ॥ ८९ ॥

यत्रार्या रुदती भीता पाण्डवानिदमब्रवीत् ।
महद्व्यसनमापन्ना शिखिना परिवारिता ॥ ९०
हा हतास्मि कुतोन्वद्य भवेच्छान्तिरिहानलात् ।
अनाथा विनशिष्यामि बालकैः पुत्रकैः सह ॥९१
तत्र भीमो महाबाहुर्वायुवेगपराक्रमः ।
आर्यामाश्वासयामास भ्रातॄंश्चापि वृकोदरः ॥९२
वैनतेयो यथा पक्षी गरुत्मान्पततांवरः ।
तथैवाभिपतिष्यामि भयं वो नेह विद्यते ॥ ९३
आर्यामङ्केन वामेन राजानं दक्षिणेन च ।
अंसयोश्च यमौ कृत्वा पृष्ठे बीभत्सुमेव च ॥ ९४
सहसोत्पत्य वेगेन सर्वानादाय वीर्यवान् ।
भ्रातॄनार्यां च बलवान्मोक्षयामास पावकात् ९५
ते रात्रौ प्रस्थिताः सर्वे सह मात्रा यशस्विनः ।
अभ्यगच्छन्महारण्ये हिडिम्बवनमन्तिकात् ॥ ९६
श्रान्ताः प्रसुप्तास्तत्रेमे मात्रा सह सुदुःखिताः ।
सुप्तांश्चैनानभ्यगच्छद्धिडिम्बा नाम राक्षसी ॥९७
सा दृष्ट्वा पाण्डवांस्तत्र सुप्तान्मात्रा सह क्षितौ ।
हृच्छयेनाभिभूतात्मा भीमसेनमकामयत् ॥ ९८
भीमस्य पादौ कृत्वा तु स्वउत्सङ्गे ततोऽबला ।
पर्यमर्दत संहृष्टा कल्याणी मृदुपाणिना ॥ ९९
तामबुद्ध्यदमेयात्मा बलवान्सत्यविक्रमः ।
पर्यपृच्छत तां भीमः किमिहेच्छस्यनिन्दिते ॥१००
एवमुक्ता तु भीमेन राक्षसी कामरूपिणी ।
भीमसेनं महात्मानमाह चैवमनिन्दिता ॥ १०१
पलायध्वमितः क्षिप्रं मम भ्रातैष वीर्यवान् ।
आगमिष्यति वो हन्तुं तस्माद्गच्छत माचिरम् १०२
अथ भीमोऽभ्युवाचैनां साभिमानमिदं वचः ।
नोद्विजेयमहं तस्मान्निहनिष्येऽहमागतम् ॥ १०३
तयोः श्रुत्वा तु संजल्पमागच्छद्राक्षसाधमः ।
भीमरूपो महानादान्विसृजन्भीमदर्शनः ॥ १०४
राक्षस उवाच ।
केन सार्धं कथयसि आनयैनं ममान्तिकम् ।
हिडिम्बे भक्षयिष्यामो न चिरं कर्तुमर्हसि ॥१०५
सा कृपासंगृहीतेन हृदयेन मनस्विनी ।
नैनमैच्छत्तदाकर्तुमनुक्रोशादनिन्दिता ॥ १०६
स नादान्विनदन्घोरान्राक्षसः पुरुषादकः ।
अभ्यद्रवत वेगेन भीमसेनं तदा किल ॥ १०७
तमभिद्रुत्य संक्रुद्धो वेगेन महता बली ।
अगृह्णात्पाणिना पाणिं भीमसेनस्य राक्षसः ॥१०८
इन्द्राशनिसमस्पर्शं वज्रसंहननं दृढम् ।
संहत्य भीमसेनाय व्याक्षिपत्सहसा करम् ॥१०९
गृहीतं पाणिना पाणिं भीमसेनस्य रक्षसा ।
नामृष्यत महाबाहुस्तत्राक्रुद्ध्यद्वृकोदरः ॥ ११०
तदासीत्तुमुलं युद्धं भीमसेनहिडिम्बयोः ।
सर्वास्त्रविदुषोर्घोरं वृत्रवासवयोरिव ॥ १११
विक्रीड्य सुचिरं भीमो राक्षसेन सहानघ ।
निजघान महावीर्यस्तं तदा निर्बलं बली ॥११२
हत्वा हिडिम्बं भीमोऽथ प्रस्थितो भ्रातृभिः सह ।
हिडिम्बामग्रतः कृत्वा यस्यां जातो घटोत्कचः ॥
ततः संप्राद्रवन्सर्वे सह मात्रा परंतपाः ।
एकचक्रामभिमुखाः संवृता ब्राह्मणव्रजैः ॥ ११४
प्रस्थाने व्यास एषां च मन्त्री प्रियहिते रतः ।
ततोऽगच्छन्नेकचक्रां पाण्डवाः संशितव्रताः ११५
तत्राप्यासादयामासुर्बकं नाम महाबलम् ।
पुरुषादं प्रतिभयं हिडिम्बेनैव संमितम् ॥ ११६
तं चापि विनिहत्योग्रं भीमः प्रहरतां वरः ।
सहितो भ्रातृभिः सर्वैर्द्रुपदस्य पुरं ययौ ॥ ११७
लब्धाऽहमपि तत्रैव वसता सव्यसाचिना ।
यथा त्वया जिता कृष्ण रुक्मिणी भीष्मकात्मजा ॥
एवं सुयुद्धे पार्थेन जिताऽहं मधुसूदन ।
स्वयंवरे महत्कर्म कृत्वा न सुकरं परैः ॥ ११९
एवं क्लेशैः सुबहुभिः क्लिश्यमाना सुदुःखिता ।
निवसाम्यार्यया हीना कृष्ण धौम्यपुरःसुरा १२०
त इमे सिंहविक्रान्ता वीर्येणाभ्यधिकाः परैः ।

वैनतेयः विनतापुत्रः ॥ ९३ ॥ कृपासंगृहीतेन स्नेहवशेन ॥ १०६ ॥ संहत्य मुष्टीकृत्य ॥ १०९ ॥ एवं क्लेशैः सुबहुभिः क्लिश्यमानाः सुदुःखिताः । निवसामार्यया हीनाः कृष्ण धौम्यपुरस्सरा इति क. ट. द. पाठः ॥ ११९ ॥

निहीनैः परिक्लिश्यन्ति समुपेक्षन्ति मां कथं १२१
एतादृशानि दुःखानि सहन्ती दुर्बलीयसाम् ।
दीर्घकालं प्रदीप्ताऽस्मि पापानां पापकर्मणाम् १२२
कुले महति जाताऽस्मि दिव्येन विधिना किल ।
पाण्डवानां प्रिया भार्या स्नुषा पाण्डोर्महात्मनः॥
केशग्रहमनुप्राप्ता का नु जीवेत मादृशी ।
पञ्चानामिन्द्रकल्पानां प्रेक्षतां मधुसूदन ॥ १२४
इत्युक्त्वा प्रारुदत्कृष्णा मुखं प्रच्छाद्य पाणिना ।
पद्मकोशप्रकाशेन मृदुना मृदुभाषिणी ॥ १२५
स्तनावपतितौ पीनौ सुजातौ शुभलक्षणौ ।
अभ्यवर्षत पाञ्चाली दुःखजैरश्रुबिन्दुभिः॥ १२६
चक्षुषी परिमार्जन्ती निःश्वसन्ती पुनःपुनः ।
बाष्पपूर्णेन कण्ठेन क्रुद्धा वचनमब्रवीत् ॥ १२७
नैव मे पतयः सन्ति न पुत्रा न च बान्धवाः ।
न भ्रातरो न च पिता नैव त्वं मधुसूदन॥१२८
ये मां विप्रकृतां क्षुद्रैरुपेक्षध्वं विशोकवत् ।
न च मे शाम्यते दुःखं कर्णो यत्प्राहसत्तदा १२९
चतुर्भिः कारणैः कृष्ण त्वया रक्ष्याऽस्मि नित्यशः।
संबन्धाद्गौरवात्सख्यात्प्रभुत्वेनैव केशव ॥ १३०
वैशंपायन उवाच ।
अथ तामब्रवीत्कृष्णस्तस्मिन्वीरसमागमे ।
रोदिष्यन्ति स्त्रियो ह्येवं येषां क्रुद्धासि भामिनि ॥
बीभत्सुशरसंछन्नाञ्शोणितौघपरिप्लुतान् ।
निहतान्वल्लभान्वीक्ष्य शयानान्वसुधातले ॥१३२
यत्समर्थं पाण्डवानां तत्करिष्यामि मा शुचः ।
सत्यं ते प्रतिजानामि राज्ञां राज्ञी भविष्यसि १३३
पतेद्द्यौर्हिमवाञ्शीर्येत्पृथिवी शकली भवेत् ।
शुष्येत्तोयनिधिः कृष्णे न मे मोघं वचो भवेत् ॥
तच्छ्रुत्वा द्रौपदी वाक्यं प्रतिवाक्यमथाच्युतात् ।
साचीकृतमवैक्षत्सा पाञ्चाली मध्यमं पतिम् १३५
आबभाषे महाराज द्रौपदीमर्जुनस्तदा ।
मा रोदीः शुभताम्राक्षि यदाह मधुसूदनः ।
तथा तद्भविता देवि नान्यथा वरवर्णिनि ॥१३६
धृष्टद्युम्न उवाच ।
अहं द्रोणं हनिष्यामि शिखण्डी तु पितामहम् ।
दुर्योधनं भीमसेनः कर्णं हन्ता धनंजयः ॥ १३७
रामकृष्णौ व्यपाश्रित्य अजेयाः स्म रणे स्वसः ।
अपि वृत्रहणा युद्धे किं पुनर्धृतराष्ट्रजैः ॥ १३८
वैशंपायन उवाच ।
इत्युक्तेऽभिमुखा वीरा वासुदेवमुपास्थिताः ।
तेषां मध्ये महाबाहुः केशवो वाक्यमब्रवीत् १३९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः ॥ १३ ॥

कृष्णेन युधिष्ठिरंप्रति तद्व्यसनस्य द्वारकायां स्वस्यासांनिध्यहेतुकत्वकथनेन समाश्वासनम् ॥ १ ॥

वासुदेव उवाच ।
नैतत्कृच्छ्रमनुप्राप्तो भवान्स्याद्वसुधाधिप ।
यद्यहं द्वारकायां स्यां राजन्सन्निहितः पुरा ॥ १
आगच्छेयमहं द्यूतमनाहूतोऽपि कौरवैः ।
आम्बिकेयेन दुर्धर्ष राज्ञा दुर्योधनेन च ।
वारयेयमहं द्यूतं बहून्दोषान्प्रदर्शयन् ॥ २
भीष्मद्रोणौ समानाय्य कृपं बाह्लीकमेव च ।
वैचित्रवीर्यं राजानमलं द्यूतेन कौरव ॥ ३
पुत्राणां तव राजेन्द्र त्वन्निमित्तमिति प्रभो ।
तत्राचक्षमहं दोषान्यैर्भवान्व्यतिरोपितः ॥ ४
वीरसेनसुतो यैस्तु राज्यात्प्रभ्रंशितः पुरा ।
अतर्कितविनाशश्च देवनेन विशांपते ॥ ५

---

विशोकवद्विशोका इव ॥ १२९ ॥ संबन्धात् पितृष्वस्रीयभार्यात्वात् । गौरवादग्निकुण्डोद्भवत्वात् । सख्यात् भक्तिमत्त्वात् । प्रभुत्वेन सामर्थ्यवत्त्वेन त्वदीयेन ॥ १३० ॥ स्वसः हे भगिनि ॥ १३८ ॥ द्वादशोऽध्यायः ॥ १२ ॥

अहं तत्र द्यूते दोषान् अचक्षं व्यक्तं कथितवान् स्वामित्वर्थः ॥ ४ ॥ वीरसेनसुतः नलः । यैः अक्षैरिति शेषः ॥ ५ ॥

सातत्यं च प्रसङ्गस्य वर्णयेयं यथातथम् ॥ ६
स्त्रियोऽक्षा मृगया पानमेतत्कामसमुत्थितम् ।
दुःखं चतुष्टयं प्रोक्तं यैर्नरो भ्रश्यते श्रियः ॥ ७
तत्र सर्वत्र वक्तव्यं मन्यन्ते शास्त्रकोविदाः ।
विशेषतश्च वक्तव्यं द्यूते पश्यन्ति तद्विदः ॥ ८
एकाहाद्द्रव्यनाशोऽत्र ध्रुवं व्यसनमेव च ।
अभुक्तनाशश्चार्थानां वाक्पारुष्यं च केवलम् ॥ ९
एतच्चान्यच्च कौरव्य प्रसङ्गिकटुकोदयम् ।
द्यूते ब्रूयां महाबाहो समासाद्याम्बिकासुतम् ॥१०
एवमुक्तो यदि मया गृह्णीयाद्वचनं मम ।
अनामयं स्याद्धर्मश्च कुरूणां कुरुवर्धन ॥ ११
न चेत्स मम राजेन्द्र गृह्णीयान्मधुरं वचः ।
पथ्यं च भरतश्रेष्ठ निगृह्णीयां बलेन तम् ॥ १२
अथैनमविनीतेन सुहृदो नाम दुर्हृदः ।
सभासदोऽनुवर्तेरंस्तांश्च हन्यां दुरोदरान् ॥ १३
असान्निध्यं तु कौरव्य ममानर्तेष्वभूत्तदा ।
येनेदं व्यसनं प्राप्ता भवन्तो द्यूतकारितम् ॥ १४
सोहमेत्य कुरुश्रेष्ठ द्वारकां पाण्डुनन्दन ।
अश्रौषं त्वां व्यसनिनं युयुधानाद्यथातथम् ॥ १५
श्रुत्वैव चाहं राजेन्द्र परमोद्विग्नमानसः ।
तूर्णमभ्यागतोसि त्वां द्रष्टुकामो विशांपते ॥ १६
अहो कृच्छ्रमनुप्राप्ताः सर्वे स्म भरतर्षभ ।
सोऽहं त्वां व्यसने मग्नं पश्यामि सह सोदरैः १७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः ॥ १४ ॥

कृष्णेन युधिष्ठिरंप्रति साल्वेन युद्धस्य स्वस्यानागमनहेतुत्वकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
असान्निध्यं कथं कृष्ण तवासीद्वृष्णिनन्दन ।
क्व चासीद्विप्रवासस्ते किंचाकार्षीः प्रवासतः ॥ १
कृष्ण उवाच ।
साल्वस्य नगरं सौभं गतोऽहं भरतर्षभ ।
निहन्तुं कौरवश्रेष्ठ तत्र मे शृणु कारणम् ॥ २
महातेजा महाबाहुर्यः स राजा महायशाः ।
दमघोषात्मजो वीरः शिशुपालो मया हतः ॥ ३
यज्ञे ते भरतश्रेष्ठ राजसूयेऽर्हणां प्रति ।
स रोषवशमापन्नो नामृष्यत दुरात्मवान् ॥ ४
श्रुत्वा तं निहतं साल्वस्तीव्ररोषसमन्वितः ।
उपायाद्द्वारकां शून्यामिहस्थे मयि भारत ॥ ५
स तत्र युद्धमकरोद्बालकैर्वृष्णिपुङ्गवैः ।
निवृत्तः कामगं सौभमारुह्यैव नृशंसवत् ॥ ६
'चिरजीवी नृपः सोऽपि प्रसादात्पद्मजन्मनः ।'
ततो वृष्णिप्रवीरांस्तान्बालान्हत्वा बहूंस्तदा ।
पुरोद्यानानि सर्वाणि भेदयामास दुर्मतिः ॥ ७
उक्तवांश्च महाबाहो क्वासौ वृष्णिकुलाधमः ।
वासुदेवः स मन्दात्मा वसुदेवसुतो गतः ॥ ८
तस्य युद्धार्थिनो दर्पं युद्धे नाशयिताऽस्म्यहम् ।
आनर्ताः सत्यमाख्यात तत्र गन्ताऽस्मि यत्र सः ९
तं हत्वा विनिवर्तिष्ये कंसकेशिनिषूदनम् ।
अहत्वा न निवर्तिष्ये सत्येनायुधमालभे ॥ १०
क्वासौ क्वासाविति पुनस्तत्रतत्र प्रधावति ।
मया सह रणे योद्धुं काङ्क्षमाणः स सौभराट् ११
अद्य तं पापकर्माणं क्षुद्रं विश्वासघातिनम् ।
शिशुपालवधामर्षाद्गमयिष्ये यमक्षयम् ॥ १२
मम पापस्वभावेन भ्राता येन निपातितः ।
शिशुपालो महीपालस्तं वधिष्ये महीतले ॥ १३
भ्राता बालश्च राजा च न च संग्रामकोविदः ।

सातत्यमविच्छेदम् । प्रसङ्गस्य द्यूतक्रीडायाः हीयमानोऽपि जयाशया पुनःपुनर्दीव्यत्येवेत्यर्थः ॥ ६ ॥ अपनीतेनेतिपाठे अन्यायेन। दुरोदरान् द्यूतकारान्॥ १३ ॥ एत्यागत्य । युयुधा-नात्सात्यकेः ॥ १५ ॥ त्रयोदशोऽध्यायः ॥ १३ ॥
सौभं सुष्ठु भान्ति ते शुभाः काञ्चनादयो धातवस्तज्जम् ॥ ६ ॥ आख्यात कथयत ॥ ९ ॥

प्रमत्तश्च हतो वीरस्तं हनिष्ये जनार्दनम् ॥ १४
एवमादि महाराज विलप्य दिवमास्थितः ।
कामगेन स सौभेन क्षिप्त्वा मां कुरुनन्दन ॥ १५
तमश्रौषमहं गत्वा यथा वृत्तः स दुर्मतिः ।
मयि कौरव्य दुष्टात्मा मार्तिकावतको नृपः॥१६
ततोऽहमपि कौरव्य रोषव्याकुललोचनः ।
निश्चित्य मनसा राजन्वधायास्य मनो दधे॥१७
आनर्तेषु विमर्दं च क्षेपं चात्मनि कौरव ।
प्रवृद्धमवलेपं च तस्य दुष्कृतकर्मणः ॥ १८
ततः सौभवधायाहं प्रतस्थे पृथिवीपते ।
स मया सागरावर्ते दृष्ट आसीत्परीप्सता ॥ १९
ततः प्रध्माप्य जलजं पाञ्चजन्यमहं नृप ।
आहूय साल्वं समरे युद्धाय समवस्थितः ॥ २०
तन्मुहूर्तमभूद्युद्धं तत्र मे दानवैः सह ।
शवीभूताश्च मे सर्वे भूतले च निपातिताः ॥२१
एतत्कार्यं महाबाहो येनाहं नागमं तदा ।
श्रुत्वैव हास्तिनपुरे द्यूतं चाविनयोत्थितम् ।
द्रुतमागतवान्युष्मान्द्रष्टुकामः सुदुःखितान् ॥२२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः ॥ १५ ॥

कृष्णेन युधिष्ठिरंप्रति साल्वसमागमसमये उग्रसेनकृतद्वारकारक्षणप्रकारकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
वासुदेव महाबाहो विस्तरेण महामते ।
सौभस्य वधमाचक्ष्व न हि तृप्यामि कथ्यतः ॥१
वासुदेव उवाच ।
हतं श्रुत्वा महाबाहो मया श्रौतश्रवं नृप ।
उपायाद्भरतश्रेष्ठ साल्वो द्वारवतीं पुरीम् ॥ २
अरुणत्तां सुदुष्टात्मा सर्वतः पाण्डुनन्दन ।
साल्वो वैहायसं चापि तत्पुरं व्यूह्य धिष्ठितः ॥३
तत्रस्थोऽथ महीपालो योधयामास तां पुरीम् ।
अभिसारेण सर्वेण तत्र युद्धमवर्तत ॥ ४
पुरी समन्ताद्विहिता सपताका सतोरणा ।
सचक्रा सहुडा चैव सयन्त्रखनका तथा ॥ ५
सोपशल्यप्रतोलीका साट्टाट्टालकगोपुरा ।
सचक्रग्रहिणी चैव सोल्कालातावपोथिका ॥ ६
सोष्ट्रिका भरतश्रेष्ठ सभेरीपणवानका ।
सतोमराङ्कुशा राजन्सशतघ्नीकलाङ्गला ॥ ७
सभुशुण्ड्यश्मगुडका सायुधा सपरश्वधा ।
लोहचर्मवती चापि साग्निः सगुडशृङ्गिका ।
शास्त्रदृष्टेन विधिना सुयुक्ता भरतर्षभ ॥ ८
रथैरनेकैर्विविधैर्गदसाम्बोद्धवादिभिः ।
पुरुषैः कुरुशार्दूल समर्थैः प्रतिवारणे ॥ ९
अतिख्यातकुलैर्वीरैर्दृष्टवीर्यैश्च संयुगे ।

मार्तिकावतकः एतन्नामकदेशवासी ॥ १६ ॥ अवलेपं गर्वं ज्ञात्वेति शेषः ॥ १८ ॥ सागरस्य आसमन्ताद्वर्तो वर्तनं यस्मिन्सागरद्वीपे इत्यर्थः ॥ १९ ॥ जलजं शङ्खम् ॥ २० ॥ चतुर्दशोऽध्यायः ॥ १४ ॥

कथ्यतः कथयतः ॥ १ ॥ श्रुतश्रवा शिशुपालमाता ॥ २ ॥ पताका ध्वजाञ्चलः । तोरणानि बहिर्द्वाराणि । चक्राणि योधगणाः । हुडास्तदाश्रयस्थानानि । यन्त्राणि आग्नेयौषधबलेन दृषत्पिण्डोत्क्षेपणानि । खनकाः सुरंगद्वारा गुप्तमार्गकर्तारः ॥ ५ ॥ उपशल्या लोहमुखाः कीलास्तद्युक्ताः । प्रतोल्यो रथ्यामार्गा यस्यां सा । अट्टालकाः उपरिगृहाः । गोपुराणि पुरद्वाराणि । साट्टानि अट्टेन अन्नेन सहितानि अट्टालकादीनि यस्यां सा चक्रग्रहणी सैन्यनिग्राहिका । सोल्कालातावपोथिका सोल्कमलातं ज्वालासहितमुल्मुकं यस्यां सा सोल्कालाता । अवबद्धाः पोथिकाः यन्त्रबद्धाः काष्ठपाषाणादयो रिपूणामुपरि पातनाय यस्यामिति प्राञ्चः । सकचग्रहिणी चैव इति क. ट. पाठः ॥६॥ उष्ट्रिका मृच्चर्ममयानि भाण्डानि । सर्ष्टिका साङ्कुशेति क. ट. पाठः । ऋष्टय आयुधविशेषाः ॥ ७ ॥ अश्मगुडकाः वर्तुलीकृताः पाषाणाः । लोहमयानि चर्माणि कमठपृष्ठाकाराणि प्रहारवारकाणि । साग्निः आग्नेयौषधसहिता । गुडा गोलकाः । शृङ्गिकास्तदुत्क्षेपकयन्त्राणि ॥ ८ ॥ समन्तात्परिपालिते इति क. पाठः ॥ ९ ॥

मध्यमेन च गुल्मेन रक्षिभिः सा सुरक्षिता ।
उत्क्षिप्तगुल्मैश्च तथा हयैश्च सपताकिभिः ॥ १०
आघोषितं च नगरे न पातव्या सुरेति वै ।
प्रमादं परिरक्षद्भिरुग्रसेनोद्धवादिभिः ॥ ११
प्रमत्तेष्वभिघातं हि कुर्यात्साल्वो नराधिपः ।
इति कृत्वाऽप्रमत्तास्ते सर्वे वृष्ण्यन्धकाः स्थिताः १२
आनर्ताश्च तथा सर्वे नटनर्तकगायकाः ।
बहिर्निर्वासिताः सर्वे रक्षद्भिर्वित्तसंचयम् ॥ १३
संक्रमा भेदिताः सर्वे नावश्च प्रतिषेधिताः ।
परिखाश्चापि कौरव्य कीलैः सुनिचिताः कृताः १४
उदपानाः कुरुश्रेष्ठ तथैवाप्यम्बरीषकाः ।
समन्तात्क्रोशमात्रं च कारिता विषमा च भूः ।
'संक्रमा भेदिताः सर्वे प्राकाराश्च नवीकृताः ॥' १५
प्रकृत्या विषमं दुर्गं प्रकृत्या च सुरक्षितम् ।
प्रकृत्या चायुधोपेतं विशेषेण तदाऽनघ ॥ १६
सुरक्षितं सुगुप्तं च सर्वायुधसमन्वितम् ।
तत्पुरं भरतश्रेष्ठ यथेन्द्रभवनं तथा ॥ १७
न चामुद्रोऽभिनिर्याति न चामुद्रः प्रवेश्यते ।
वृष्ण्यन्धकपुरे राजंस्तदा सौभसमागमे ॥ १८
अनुरथ्यासु सर्वासु चत्वरेषु च कौरव ।
बलं बभूव राजेन्द्र प्रभूतगजवाजिमत् ॥ १९
दत्तवेतनभक्तं च दत्तायुधपरिच्छदम् ।
कृतोपधानं च तदा बलमासीद्विशांपते ॥ २०
न कुप्यवेतनी कश्चिन्न चातिक्रान्तवेतनी ।
नानुग्रहभृतः कश्चिन्न चादृष्टपराक्रमः ॥ २१
एवं सुविहिता राजन्द्वारका भूरिदक्षिणैः ।
आहुकेन सुगुप्ता च राज्ञा राजीवलोचन ॥ २२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः ॥ १६ ॥

कृष्णेन युधिष्ठिरंप्रति साल्वयादवयुद्धवर्णनम् ॥ १ ॥

वासुदेव उवाच ।
तां तूपयातो राजेन्द्र साल्वः सौभपतिस्तदा ।
प्रभूतनरनागेन बलेनोपविवेश ह ॥ १
समे निविष्टा सा सेना प्रभूतसलिलाशये ।
चतुरङ्गबलोपेता साल्वराजाभिपालिता ॥ २
वर्जयित्वा श्मशानानि देवतायतनानि च ।
वल्मीकांश्चैव चैत्यांश्च संनिविष्टमभूद्बलम् ॥ ३
अनीकानां विभागेन पन्थानः सुकृतास्तथा ।
प्रथमा नवमाश्चैव साल्वस्य शिबिरे नृप ॥ ४
सर्वायुधसमोपेतं सर्वशस्त्रविशारदम् ।
रथनागाश्वकलिलं पदातिजनसंकुलम् ॥ ५
तुष्टपुष्टबलोपेतं वीरलक्षणलक्षितम् ।
विचित्रध्वजसन्नाहं विचित्ररथकार्मुकम् ॥ ६
संनिवेश्य च कौरव्य द्वारकायां नरर्षभ ।
अभिसारयामास तदा वेगेन पतगेन्द्रवत् ॥ ७
तदापतन्तं संदृश्य बलं साल्वपतेस्तदा ।
निर्याय योधयामासुः कुमारा वृष्णिनन्दनाः ॥ ८
असहन्तोऽभियानं तत्साल्वराजस्य कौरव ।

---

निवासिताः क्षिप्रं इति झ. पाठः ॥ १३ ॥ संक्रमा नदीसेतवः । कीलैः शूलैः । सुनिचिता व्याप्ताः ॥ १४ ॥ उदपानाः कूपाः । अम्बरीषो गुप्ताग्निः । विषमा लोहकण्टकाद्याकीर्णा ॥ १५ ॥ अनुरथ्यासु प्रतिरथ्यम् ॥ १९ ॥ वेतनं धनम् । भक्तं नित्यभोजनम् । कृतोपधानं कृतविशेषम् ॥ २० ॥ कुप्यं स्वर्णरूप्येतरद्धनं ताम्रादि । ग्रहो रणोद्यमस्तमनुलक्षीकृत्य भृतोऽनुग्रहभृतस्तत्कालस्वीकृतो न कश्चित् किंतु चिरसंभृता एव । नादत्तवेतनः कश्चित् इति क. ठ. पाठः ॥ २१ ॥ आहुकेन उग्रसेनेन । भूरिदक्षिणेति झ. पाठः ॥ २२ ॥ पञ्चदशोऽध्यायः ॥ १५ ॥

समे देशे ॥ २ ॥ प्रवणाय च नैवासन्निति झ. पाठः ॥ ४ ॥ कलिलं संकटम् । पदातिध्वजसंकुलमिति झ. पाठः ॥ ५ ॥ अभिसारयामास नगरसमीपं गमयामास । सैन्यं पतगेन्द्रवत्सौभं चोपरितः अभिसारयामास ॥ ७ ॥ आपतन्तमापतत् ॥ ८ ॥

चारुदेष्णश्च साम्बश्च प्रद्युम्नश्च महारथः ॥ ९
ते रथैर्दंशिताः सर्वे विचित्राभरणध्वजाः ।
संसक्ताः साल्वराजस्य बहुभिर्योधपुङ्गवैः ॥ १०
गृहीत्वा कार्मुकं साम्बः साल्वस्य सचिवं रणे ।
योधयामास संहृष्टः क्षेमधूर्तिं चमूपतिम् ॥ ११
तस्य बाणमयं वर्षं जाम्बवत्याः सुतो महत् ।
मुमोच भरतश्रेष्ठ यथावर्षं सहस्रदृक् ॥ १२
तद्बाणवर्षं तुमुलं विषेहे स चमूपतिः ।
क्षेमधूर्तिर्महाराज हिमवानिव निश्चलः ॥ १३
ततः साम्बाय राजेन्द्र क्षेमधूर्तिरपि स्वयम् ।
मुमोच मायाविहितं शरजालं महत्तरम् ॥ १४
ततो मायामयं जालं माययैव विदार्य सः ।
साम्बः शरसहस्रेण रथमस्याभ्यवर्षत ॥ १५
ततः स विद्धः साम्बेन क्षेमधूर्तिश्चमूपतिः ।
अपायाज्जवनैरश्वैः साम्बबाणप्रपीडितः ॥ १६
तस्मिन्विप्रद्रुते शूरे साल्वस्याथ चमूपतौ ।
वेगवान्नाम दैतेयः सुतं मेऽभ्यद्रवद्बली ॥ १७
अभिपन्नस्तु राजेन्द्र साम्बो वृष्णिकुलोद्वहः ।
वेगं वेगवतो राजंस्तस्थौ वीरो विधारयन् ॥ १८
स वेगवति कौन्तेय साम्बो वेगवतीं गदाम् ।
चिक्षेप तरसा वीरो व्याविद्ध्यन्सत्यविक्रमः ॥ १९
तया त्वभिहतो राजन्वेगवान्यपतद्भुवि ।
वातरुग्ण इव क्षुण्णो जीर्णमूलो वनस्पतिः ॥ २०
तस्मिन्निपतिते वीरे गदारुग्णे महासुरे ।
प्रविश्य महतीं सेनां योधयामास मे सुतः ॥ २१
चारुदेष्णेन संसक्तो विविन्ध्यो नाम दानवः ।
महारथः समाज्ञातो महाराज महाधनुः ॥ २२
ततः सुतुमुलं युद्धं चारुदेष्णविविन्ध्ययोः ।
वृत्रवासवयो राजन्यथापूर्वं तथाऽभवत् ॥ २३
अन्योन्यस्याभिसंक्रुद्धावन्योन्यं जघ्नतुः शरैः ।
विनदन्तौ महाराज सिंहाविव महाबलौ ॥ २४
रौक्मिणेयस्ततो बाणमग्न्यर्कोपमवर्चसम् ।
अभिमन्त्र्य महास्त्रेण संदधे शत्रुनाशनम् ॥ २५
स विविन्ध्याय सक्रोधः समाहूय महारथः ।
चिक्षेप मे सुतो राजन्स गतासुरथापतत् ॥ २६
विविन्ध्यं निहतं दृष्ट्वा तां च विक्षोभितां चमूम् ।
कामगेन स सौभेन साल्वः पुनरुपागमत् ॥ २७
ततो व्याकुलितं सर्वं द्वारकावासि तद्बलम् ।
दृष्ट्वा साल्वं महाबाहो सौभस्थं पृथिवीगतम् ॥ २८
ततो निर्याय कौरव्य अवस्थाप्य च तद्बलम् ।
आनर्तानां महाराज प्रद्युम्नो वाक्यमब्रवीत् ॥ २९
सर्वे भवन्तस्तिष्ठन्तु सर्वे पश्यन्तु मां युधि ।
निवारयन्तं संग्रामे बलात्सौभं सराजकम् ॥ ३०
अयं सौभपतेः सेनामायसैर्भुजगैरिव ।
धनुर्भुजविनिर्मुक्तैर्नाशयाम्यद्य यादवाः ॥ ३१
आश्वसध्वं न भीः कार्या सौभराडद्य नश्यति ।
मयाऽभिपन्नो दुष्टात्मा ससौभो विनशिष्यति ॥ ३२
एवं ब्रुवति संहृष्टे प्रद्युम्ने पाण्डुनन्दन ।
धिष्ठितं तद्बलं द्वारि युयुधे च यथासुखम् ॥ ३३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि षोडशोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः ॥ १७ ॥

कृष्णेन युधिष्ठिरंप्रति साल्वप्रद्युम्नयुद्धवर्णनम् ॥ १ ॥

**वासुदेव उवाच ।**

एवमुक्त्वा रौक्मिणेयो यादवान्यादवर्षभ ।

क्षेमधूर्तिः सयन्निवेति क. ट. पाठः । अपायात्पलायितः ॥ १६ ॥ अभिपन्नः आभिमुख्येनासादितः ॥ १८ ॥ व्याविध्य सत्यविक्रमः इति झ. पाठः । तत्र व्याविध्य भ्रामयित्वेत्यर्थः ॥ १९ ॥ रुग्णः क्षुण्णश्च गजादिपदाघातैः ॥ २० ॥ सौभेन खेचरेण पुरेण ॥ २७ ॥ निर्याय निर्गत्य । अवस्थाप्य आश्वास्य । आनर्तानां द्वारकावासिनाम् ॥ २९ ॥ धनुर्भुजविनिर्मुक्तैः धनुषः भुजेन कौटिल्येन अत्याकर्षणजेन निर्मुक्तैः । भुज कौटिल्ये तुदादिः ॥ ३१ ॥ धिष्ठितं अधिष्ठितम् ॥ ३३ ॥ षोडशोऽध्यायः ॥ १६ ॥

दंशितैर्हरिभिर्युक्तं रथमास्थाय काञ्चनम् ॥ १
उच्छ्रित्य मकरं केतुं व्यात्ताननमलङ्कृतम् ।
उत्पतद्भिरिवाकाशं तैर्हयैरन्वयात्परान् ॥ २
विक्षिपन्नादयंश्चापि धनुः श्रेष्ठं महाबलैः ।
तूणखड्गधरः शूरो बद्धगोधाङ्गुलित्रवान् ॥ ३
सविद्युच्छुरितं चापं विहरन्वै तलात्तलम् ।
मोहयामास दैतेयान्सर्वान्सौभनिवासिनः ॥ ४
तस्य विक्षिपतश्चापं संदधानस्य चासकृत् ।
नान्तरं ददृशे कश्चिन्निघ्नतः शात्रवान्रणे ॥ ५
मुखस्य वर्णो न विकल्पतेऽस्य
चेलुश्च गात्राणि न चापि तस्य ।
सिंहोन्नतं चाप्यभिगर्जतोऽस्य
शुश्राव लोकोऽद्भुतवीर्यमग्र्यम् ॥ ६
जलेचरः काञ्चनयष्टिसंस्थो
व्यात्ताननः शत्रुबलप्रमाथी ।
वित्रासयन्राजति वाहमुख्ये
साल्वस्य सेनाप्रमुखे ध्वजाग्र्यः ॥ ७
ततस्तूर्णं विनिष्पत्य प्रद्युम्नः शत्रुकर्शनः ।
साल्वमेवाभिदुद्राव विधित्सुः कलहं नृप ॥ ८
अभियानं तु वीरेण प्रद्युम्नेन महारणे ।
नामर्षयत संक्रुद्धः साल्वः कुरुकुलोद्वह ॥ ९
सरोषमदमत्तो वै कामगादवरुह्य च ।
प्रद्युम्नं योधयामास साल्वः परपुरंजयः ॥ १०
तयोः सुतुमुलं युद्धं साल्ववृष्णिप्रवीरयोः ।
समेता ददृशुर्लोका बलिवासवयोरिव ॥ ११
तस्य मायामयो वीर रथो हेमपरिष्कृतः ।
सपताकः सध्वजश्च सानुकर्षः स तूणवान् ॥ १२
स तं रथवरं श्रीमान्समारुह्य किल प्रभो ।
मुमोच बाणान्कौरव्य प्रद्युम्नाय महाबलः ॥ १३
ततो बाणमयं वर्षं व्यसृजत्तरसा रणे ।
प्रद्युम्नो भुजवेगेन साल्वं संमोहयन्निव ॥ १४
स तैरभिहतः सङ्ख्ये नामर्षयत सौभराट् ।
शरान्दीप्ताग्निसंकाशान्मुमोच तनये मम ॥ १५
तमापतन्तं बाणौघं स चिच्छेद महाबलः ।
ततश्चान्याञ्शरान्दीप्तान्प्रचिक्षेप सुते मम ॥ १६
स साल्वबाणै राजेन्द्र विद्धो रुक्मिणिनन्दनः ।
मुमोच बाणं त्वरितो मर्मभेदिनमाहवे ॥ १७
तस्य वर्म विभिद्याशु स बाणो मत्सुतेरितः ।
विवेश हृदयं पत्री स पपात भृशाहतः ॥ १८
तस्मिन्निपतिते वीरे साल्वराजे विचेतसि ।
संप्राद्रवन्दानवेन्द्रा दारयन्तो वसुंधराम् ॥ १९
हाहाकृतमभूत्सैन्यं साल्वस्य पृथिवीपते ।
नष्टसंज्ञे निपतिते तदा सौभपतौ नृपे ॥ २०
तत उत्थाय राजेन्द्र प्रतिलभ्य च चेतनाम् ।
मुमोच बाणान्सहसा प्रद्युम्नाय महाबलः ॥ २१
तेन बाणेन महता प्रद्युम्नः समरे स्थितः ।
जत्रुदेशे भृशं विद्धो व्यथितो ददृशे तदा ॥ २२
तं स विद्ध्वा महाराज साल्वो रुक्मिणिनन्दनम् ।
ननाद सिंहनादं वै नादेनापूरयन्महीम् ॥ २३
ततो मोहं समापन्ने तनये मम भारत ।
मुमोच बाणांस्त्वरितः पुनरन्यान्दुरात्मवान् ॥ २४
स तैरभिहतो बाणैर्बहुभिस्तेन मोहितः ।
निश्चेष्टः कौरवश्रेष्ठ प्रद्युम्नोऽभूद्रणाजिरे ॥ २५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

---

हरिभिः अश्वैः ॥ १ ॥ व्यात्ताननमिवान्तकं इति झ॰ पाठः। अन्वयात् उपगतः ॥ २ ॥ विक्षिपन् परान्धिक्कुर्वन् । महाबलैः हयैः ॥ ३ ॥ समानं विद्युच्छुरितेन विद्युत्कम्पनेनेति। विद्युच्छुरितम् । तलात्तलं सव्यापसव्यहस्ततलपरिवर्तेन ॥ ४ ॥ विक्षिपतः कर्षतः ॥ ५ ॥ विकल्पते भिद्यते ॥ ६ ॥ जलेचरः मीनः। सर्वैतिमिप्रमाथी इति झ॰ पाठः। वाहमुख्ये रथश्रेष्ठे ॥ ७ ॥ सानुकर्षः रथाधस्थकाष्ठं अनुकर्षः सः । रथः तूणवान् ॥ १२ ॥ आपततेति विसर्गलोप आर्षः ॥ १६ ॥ जत्रुदेशे कण्ठमूले ॥ २२ ॥ सप्तदशोऽध्यायः ॥ १७ ॥

## अष्टादशोऽध्यायः ॥ १८ ॥

प्रद्युम्ने साल्वबाणाभिहत्या मूर्च्छिते सारथिना रणाङ्गणादन्यतो रथयापनम् ॥ १ ॥ ततः प्रतिबुद्धेन प्रद्युम्नेन सारथिं प्रति सविषादोक्तिः ॥ २ ॥

वासुदेव उवाच ।
साल्वबाणार्दिते तस्मिन्प्रद्युम्ने बलिनांवरे ।
वृष्णयो भग्नसंकल्पा विव्यथुः पृतनामुखे ॥ १
हाहाकृतमभूत्सर्वं वृष्ण्यन्धकबलं ततः ।
प्रद्युम्ने मोहिते राजन्साल्वः प्रमुदितोऽभवत् ॥ २
तं तथा मोहितं दृष्ट्वा सारथिर्जवनैर्हयैः ।
रणादपाहरत्तूर्णं शिक्षितो दारुकिस्तदा ॥ ३
नातिदूरापयाते तु रथे रथवरप्रणुत् ।
धनुर्गृहीत्वा यन्तारं लब्धसंज्ञोऽब्रवीदिदम् ॥ ४
सौते किं ते व्यवसितं कस्माद्यासि पराङ्मुखः ।
नैष वृष्णिप्रवीराणामाहवे धर्म उच्यते ॥ ५
कच्चित्सौते न ते मोहः साल्वं दृष्ट्वा महाहवे ।
विषादो वा रणं दृष्ट्वा ब्रूहि मे त्वं यथातथम् ॥ ६
सौतिरुवाच ।
जानार्दने न मे मोहो नापि मां भयमाविशत् ।
अतिभारं तु ते मन्ये साल्वं केशवनन्दन ॥ ७
सोभियाति शनैर्वीर बलवानेष पापकृत् ।
मोहितश्च रणे शूरो रक्ष्यः सारथिना रथी ॥ ८
आयुष्मंस्त्वं मया नित्यं रक्षितव्यस्त्वयाऽप्यहम् ।
रक्षितव्यो रणे नित्यमिति कृत्वाऽपयाम्यहम् ॥ ९
एकश्चासि महाबाहो बहवश्चापि दानवाः ।
न समं रौक्मिणेयाहं रणे मत्वाऽपयामि वै ॥ १०
वासुदेव उवाच ।
एवं ब्रुवति सूते तु तदा मकरकेतुमान् ।
उवाच सूतं कौरव्य संनिवर्त्य रथं पुनः ॥ ११
दारुकात्मज मैवं त्वं पुनः कार्षीः कथंचन ।
व्यपयानं रणात्सौते जीवतो मम कर्हिचित् ॥ १२
न स वृष्णिकुले जातो यो वै त्यजति संगरम् ।
यो वा निपतितं हन्ति तवास्मीति च वादिनम् ॥
तथा स्त्रियं च यो हन्ति बालं वृद्धं तथैव च ।
विरथं मुक्तकेशं च भग्नशस्त्रायुधं तथा ॥ १४
त्वं च सूतकुले जातो विदितः सूतकर्मणि ।
धर्मज्ञश्चासि वृष्णीनामाहवेष्वपि दारुके ॥ १५
स जानंश्चरितं कृत्स्नं वृष्णीनां पृतनामुखे ।
अपयानं पुनः सौते मैवं कार्षीः कथंचन ॥ १६
अपयातं हतं पृष्ठे भ्रान्तं रणपलायितम् ।
गदाग्रजो दुराधर्षः किं मां वक्ष्यति माधवः ॥ १७
केशवस्याग्रजो वाऽपि नीलवासा मदोत्कटः ।
किं वक्ष्यति महाबाहुर्बलदेवः समागतः ॥ १८
किं वक्ष्यति शिनेर्नप्ता रणसिंहो महारथः ।
अपयातं रणात्सूत साम्बश्च समितिंजयः ॥ १९
चारुदेष्णश्च दुर्धर्षस्तथैव गदसारणौ ।
अक्रूरश्च महाबाहुः किं मां वक्ष्यति सारथे ॥ २०
शूरं संभावितं शान्तं नित्यं पुरुषमानिनम् ।
स्त्रियश्च वृष्णिवीराणां किं मां वक्ष्यन्ति संगताः ॥
प्रद्युम्नोऽयमुपायाति भीतस्त्यक्त्वा महाहवम् ।
धिगेनमिति वक्ष्यन्ति न तु वक्ष्यन्ति साध्विति ॥
धिग्वाचा परिहासोपि मम वा मद्विधस्य वा ।
मृत्युनाऽभ्यधिकः सौते स त्वं मा व्यपयाः पुनः ॥
भारं हि मयि संन्यस्य यातो मधुनिहा हरिः ।
यज्ञं भारतसिंहस्य न हि शक्योऽद्य मर्षितुम् २४
कृतवर्मा मया वीरो निर्यास्यन्नेव वारितः ।
साल्वं निवारयिष्येऽहं तिष्ठ त्वमिति सूतज ॥ २५
स च संभावयन्मां वै निवृत्तो हृदिकात्मजः ।
तं समेत्य रणं त्यक्त्वा किं वक्ष्यामि महारथं २६
उपयान्तं दुराधर्षं शङ्खचक्रगदाधरम् ।
पुरुषं पुण्डरीकाक्षं किं वक्ष्यामि महाभुजम् ॥ २७
सात्यकिं बलदेवं च ये चान्येऽन्धकवृष्णयः ।

परे च मुदिता भृशम् । इति झ. पाठः ॥ २ ॥ निवर्तय रथं पुनः इति झ. पाठः ॥ ११ ॥ शिनेर्नप्ता सात्यकिः ॥ १९ ॥

अष्टादशोऽध्यायः ॥ १८ ॥

मया स्पर्धन्ति सततं किं नु वक्ष्यामि तानहं २८
त्यक्त्वा रणमिमं सौते पृष्ठतोऽभ्याहतः शरैः ।
त्वयाऽपनीतो विवशो न जीवेयं कथंचन ॥ २९
संनिवर्त रथेनाशु पुनर्दारुकनन्दन ।
न चैतदेवं कर्तव्यमथापत्सु कथंचन ॥ ३०
न जीवितमहं सौते बहु मन्ये कथंचन ।
अपयातो रणाद्भीतः पृष्ठतोऽभ्याहतः शरैः ॥ ३१
कदाऽपि सूतपुत्र त्वं जानीषे मां भयार्दितम् ।
अपयातं रणं हित्वा यथा कापुरुषं तथा ॥ ३२
अयुक्तं तु मया त्यक्तुं संग्रामं दारुकात्मज ।
मयि युद्धार्थिनि भृशं स त्वं याहि यतो रणम् ३३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

---

## एकोनविंशोऽध्यायः ॥ १९ ॥

प्रद्युम्नपराजितस्य साल्वस्य रणादपयानम् ॥ १ ॥

वासुदेव उवाच ।
एवमुक्तस्तु कौन्तेय सूतपुत्रस्ततो मृधे ।
प्रद्युम्नमब्रवीच्छ्लक्ष्णं मधुरं वाक्यमञ्जसा ॥ १
न मे भयं रौक्मिणेय संग्रामे यच्छतो हयान् ।
युद्धज्ञोऽसि च वृष्णीनां नात्र किंचिदतोऽन्यथा २
आयुष्मन्नुपदेशस्तु सारथ्ये वर्ततां स्मृतः ।
सर्वार्थेषु रथी रक्ष्यस्त्वं चापि भृशपीडितः ॥ ३
त्वं हि साल्वप्रयुक्तेन शरेणाभिहतो भृशम् ।
कश्मलाभिहतो वीर ततोऽहमपयातवान् ॥ ४
स त्वं सात्वतमुख्याद्य लब्धसंज्ञो यदृच्छया ।
पश्य मे हयसंयाने शिक्षां केशवनन्दन ॥ ५
दारुकेणाहमुत्पन्नो यथावच्चैव शिक्षितः ।
वीतभीः प्रविशाम्येतां साल्वस्य महतीं चमूम् ६
वासुदेव उवाच ।
एवमुक्त्वा ततो वीरो हयान्संचोद्य संगरे ।
रश्मिभिस्तु समुद्यम्य जवेनाभ्यपतत्तदा ॥ ७
मण्डलानि विचित्राणि यमकानीतराणि च ।
सव्यानि च विचित्राणि दक्षिणानि च सर्वशः ८
प्रतोदेनाहता राजन्रश्मिभिश्च समुद्यताः ।
उत्पतन्त इवाकाशं विबभुस्ते हयोत्तमाः ॥ ९
ते हस्तलाघवोपेतं विज्ञाय नृप दारुकिम् ।
उह्यमाना इव तदा नास्पृशंश्चरणैर्महीम् ॥ १०
सोपसव्यां चमूं तस्य साल्वस्य भरतर्षभ ।
चकार नातियत्नेन तदद्भुतमिवाभवत् ॥ ११
अमृष्यमाणोपसव्यं साल्वः समितिदारुणः ।
यन्तारमस्य सहसा त्रिभिर्बाणैः समार्दयत् ॥ १२
दारुकस्य सुतस्तं तु बाणवेगमचिन्तयन् ।
भूय एव महाबाहो प्रययावपसव्यतः ॥ १३
ततो बाणान्बहुविधान्पुनरेव स सौभराट् ।
मुमोच तनये वीर मम रुक्मिणिनन्दने ॥ १४
तानप्राप्ताञ्शितैर्बाणैश्चिच्छेद परवीरहा ।
रौक्मिणेयः स्मितं कृत्वा दर्शयन्हस्तलाघवं ॥ १५
छिन्नान्दृष्ट्वा तु तान्बाणान्प्रद्युम्नेन च सौभराट् ।
आसुरीं दारुणीं मायामास्थाय व्यसृजच्छरान् १६
प्रयुज्यमानमाज्ञाय दैतेयास्त्रं महाबलम् ।
ब्रह्मास्त्रेणान्तरा छित्त्वा मुमोचान्यान्पतत्रिणः १७
ते तदस्त्रं विधूयाशु विव्यधू रुधिराशनाः ।
शिरस्युरसि वक्त्रे च स मुमोह पपात च ॥ १८
तस्मिन्निपतिते क्षुद्रे साल्वे बाणप्रपीडिते ।
रौक्मिणेयोऽपरं बाणं संदधे शत्रुतापनः ॥ १९
तमर्चितं सर्वदाशार्हपूगै-
राशीर्भिरर्कज्वलनप्रकाशम् ।
दृष्ट्वा शरं ज्यामभिनीयमानं
बभूव हाहाकृतमन्तरिक्षम् ॥ २०

---

यमकानि सदृशानि । इतराणि विसदृशानि ॥ ८ ॥ दह्यमाना इवेति ख. झ. पाठः ॥१०॥ एकोनविंशोऽध्यायः ॥१९॥

ततो देवगणाः सर्वे सेन्द्राः सहधनेश्वराः ।
नारदं प्रेषयामासुः श्वसनं च मनोजवम् ॥ २१
तौ रौक्मिणेयमागम्य वचोऽब्रूतां दिवौकसाम् ।
नैव वध्यस्त्वया वीर साल्वराजः कथंचन ॥ २२
संहरस्व पुनर्बाणमवध्योऽयं त्वया रणे ।
एतस्य च शरस्याजौ नावध्योस्ति पुमान्कचित् २३
मृत्युरस्य महाबाहो रणे देवकिनन्दनः ।
कृष्णः संकल्पितो धात्रा तन्मिथ्या न भवेदिति॥
ततः परमसंहृष्टः प्रद्युम्नः शरमुत्तमम् ।
संजहार धनुःश्रेष्ठात्तूणे चैव न्यवेशयत् ॥ २५
तत उत्थाय राजेन्द्र साल्वः परमदुर्मनाः ।
व्यपायात्सबलस्तूर्णं प्रद्युम्नशरपीडितः ॥ २६
स द्वारकां परित्यज्य साल्वो वृष्णिभिरार्दितः ।
सौभमास्थाय राजेन्द्र दिवमाचक्रमे तदा ॥ २७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

## विंशोऽध्यायः ॥ २० ॥

कृष्णेन युधिष्ठिरंप्रति स्वस्य साल्वेन सह युद्धप्रकारकथनम् ॥ १ ॥

वासुदेव उवाच ।
आनर्तनगरं मुक्तं ततोऽहमगमं तदा ।
महाक्रतौ राजसूये निवृत्ते नृपते तव ॥ १
अपश्यं द्वारकां चाहं महाराज हतत्विषम् ।
निःस्वाध्यायवषट्कारां निर्भूषणवरस्त्रियम् ॥ २
अनभिज्ञेयरूपाणि द्वारकोपवनानि च ।
दृष्ट्वा शङ्कोपपन्नोऽहमपृच्छं हृदिकात्मजम् ॥ ३
अस्वस्थनरनारीकमिदं वृष्णिकुलं भृशम् ।
किमिदं नरशार्दूल श्रोतुमिच्छामि तत्त्वतः ॥ ४
एवमुक्तः स तु मया विस्तरेणेदमब्रवीत् ।
रोधं मोक्षं च साल्वेन हार्दिक्यो राजसत्तम ॥ ५
ततोऽहं भरतश्रेष्ठ श्रुत्वा सर्वमशेषतः ।
विनाशे साल्वराजस्य तदैवाकरवं मतिम् ॥ ६
ततोऽहं भरतश्रेष्ठ समाश्वास्य पुरे जनम् ।
राजानमाहुकं चैव तथैवाकनदुन्दुभिम् ॥ ७
सर्वान्वृष्णिप्रवीरांश्च हर्षयन्नब्रुवं तदा ।
अप्रमादः सदा कार्यो नगरे यादवर्षभाः ॥ ८
साल्वराजविनाशाय प्रयातं मां निबोधत ।
नाहत्वा तं निवर्तिष्ये पुरीं द्वारवतीं प्रति ॥ ९
ससाल्वं सौभनगरं हत्वा द्रष्टास्मि वः पुनः ।
त्रिःसामा हन्यतामेषा दुन्दुभिः शत्रुभीषणा १०
ते मयाऽऽश्वासिता वीरा यथावद्भरतर्षभ ।
सर्वे मामब्रुवन्हृष्टाः प्रयाहि जहि शात्रवान् ॥ ११
तैः प्रहृष्टात्मभिर्वीरैराशीर्भिरभिनन्दितः ।
वाचयित्वा द्विजश्रेष्ठान्प्रणम्य शिरसा भवम् ॥ १२
शैब्यसुग्रीवयुक्तेन रथेनानादयन्दिशः ।
प्रध्माय शङ्खप्रवरं पाञ्चजन्यमहं नृप ॥ १३
प्रयातोस्मि नरव्याघ्र बलेन महता वृतः ।
क्लृप्तेन चतुरङ्गेण यत्तेन जितकाशिना ॥ १४
समतीत्य बहून्देशान्गिरींश्च बहुपादपान् ।
सरांसि सरितश्चैव मार्तिकावतमासदम् ॥ १५
तत्राश्रौषं नरव्याघ्र साल्वं सागरमन्तिकात् ।
प्रयान्तं सौभमास्थाय तमहं पृष्ठतोऽन्वगाम् १६
'दृष्टवानसि राजेन्द्र साल्वराजमथान्तिके ।'
ततः सागरमासाद्य कुक्षौ तस्य महोर्मिणः ।
समुद्रनाभ्यां साल्वोऽभूत्सौभमास्थाय शत्रुहन् ॥
'स मामालोक्य सहसा सेनां स्वां प्राहिणोन्मृधे ।
मद्बाहुना च सेनायां शिष्टायां किंचिदेव च' १८

हृदिकात्मजं कृतवर्माणम् ॥ ३ ॥ त्रिःसामा त्रिस्वरा नीचमन्द्रतारभावेन ॥ १० ॥ वाचयित्वा स्वस्तिवादानिति शेषः । शिरसा हरमिति ट. पाठः । शिरसाहुकमिति क. पाठः ॥ १२ ॥ जितकाशिना जयशोभिना ॥ १४ ॥ मार्तिकावतं देशविशेषम् । आसदं प्राप्तः ॥ १५ ॥ सागरमन्तिकात् सागरसमीपे । अन्वगां अनुगतवानस्मि ॥ १६ ॥ महोर्मिणः महोर्मिमतः । व्रीह्यादित्वादिनिः । नाभ्यां गर्भे गुप्त इत्यर्थः ॥ १७ ॥

स समालोक्य सहसा स्मयन्निव युधिष्ठिर ।
आह्वयामास दुष्टात्मा युद्धायैव मुहुर्मुहुः ॥ १९
तस्य शार्ङ्गविनिर्मुक्तैर्बहुभिर्मर्मभेदिभिः ।
पुरं नासाद्यत शरैस्ततो मां रोष आविशत् ॥ २०
स चापि पापप्रकृतिर्दैतेयापशदो नृप ।
मय्यवर्षत दुर्धर्षः शरधाराः सहस्रशः ॥ २१
सैनिकान्मम सूतं च हयांश्च स समाकिरत् ।
अचिन्तयन्तस्तु शरान्वयं युध्याम भारत ॥ २२
ततः शतसहस्राणि शराणां नतपर्वणाम् ।
चिक्षिपुः समरे वीरा मयि साल्वपदानुगाः ॥ २३
ते हयांश्च रथं चैव ध्वजं दारुकमेव च ।
छादयामासुरसुरास्तैर्बाणैर्मर्मभेदिभिः ॥ २४
न हया न रथो वीर न ध्वजो न च दारुकः ।
अदृश्यन्त शरैश्छन्नास्तथाऽहं सैनिकाश्च मे ॥ २५
ततोऽहमपि कौन्तेय शराणामयुतान्बहून् ।
आमन्त्रितानां धनुषा दिव्येन विधिनाऽक्षिपम् २६
न तत्र विषयस्त्वासीन्मम सैन्यस्य भारत ।
खे विषक्तं हि तत्सौभं क्रोशमात्र इवाभवत् २७
ततस्ते प्रेक्षकाः सर्वे देवा वै दिवमास्थिताः ।
हर्षयामासुरुच्चैर्मां सिंहनादतलस्वनैः ॥ २८
मत्कार्मुकविनिर्मुक्ता दानवानां महारणे ।
अङ्गेषु रुधिराक्तास्ते विविशुः शलभा इव ॥ २९
ततो हलहलाशब्दः सौभमध्ये व्यवर्धत ।
वध्यतां विशिखैस्तीक्ष्णैः पततां च महार्णवे ३०
ते निकृत्तभुजस्कन्धाः कवन्धाकृतिदर्शनाः ।
नदन्तो भैरवान्नादान्निपतन्ति स्म दानवाः ।
पतितास्तेऽपि भक्ष्यन्ते समुद्रांभोनिवासिभिः ३१
ततो गोक्षीरकुन्देन्दुमृणालरजतप्रभम् ।
जलजं पाञ्चजन्यं वै प्राणेनाहमपूरयम् ॥ ३२
तान्दृष्ट्वा पतितांस्तत्र साल्वः सौभपतिस्ततः ।
मायायुद्धेन महता योधयामास मां युधि ॥ ३३
ततो गदा हलाः प्रासाः शूलशक्तिपरश्वथाः ।
असयः शक्तिकुलिशपाशर्ष्टिकनपाः शराः ।
पट्टसाश्च भुशुण्ड्यश्च प्रपतन्त्यनिशं मयि ॥ ३४
तामहं माययैवाशु प्रतिगृह्य व्यनाशयम् ।
तस्यां हतायां मायायां गिरिशृङ्गैरयोधयत् ॥ ३५
ततोऽभवत्तम इव प्रकाश इव चाभवत् ।
दुर्दिनं सुदिनं चैव शीतमुष्णं च भारत ॥ ३६
अङ्गारपांसुवर्षं च शस्त्रवर्षं च भारत ।
एवं मायां प्रकुर्वाणो योधयामास मां रिपुः ॥ ३७
विज्ञाय तदहं सर्वं माययैव व्यनाशयम् ।
यथाकालं तु युद्धेन व्यधमं सर्वतः शरैः ॥ ३८
'ततो हतायां च मया मायायां युधि दानवः ।
मायामन्यां महाराज चकार मतिमोहिनीम् ॥' ३९
ततो व्योम महाराज शतसूर्यमिवाभवत् ।
शतचन्द्रं च कौन्तेय सहस्रायुततारकम् ॥ ४०
ततो नाज्ञायत तदा दिवारात्रं तथा दिशः ।
ततोऽहं मोहमापन्नः प्रज्ञास्त्रं समयोजयम् ॥ ४१
तदस्त्रमस्तमस्त्रेण विधूतं शरतूलवत् ।
तथा तदभवद्युद्धं तुमुलं रोमहर्षणम् ।
लब्धालोकस्तु राजेन्द्र पुनः शत्रुमयोधयम् ॥ ४२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि विंशोऽध्यायः ॥ २० ॥

---

## एकविंशोऽध्यायः ॥ २१ ॥

कृष्णसाल्वयोर्युद्धम् ॥ १ ॥ साल्वेन स्वमायासृष्टवसुदेवस्य शिरश्छेदनप्रदर्शनेन कृष्णव्यामोहनम् ॥ २ ॥ ततो मुहूर्तेन प्रतिबुद्धेन कृष्णेन स्वानुभूतस्य मायिकत्वाध्यवसायः ॥ ३ ॥

वासुदेव उवाच ।

एवं स पुरुषव्याघ्रः साल्वो राज्ञां महारिपुः ।

तस्य पुरं मदीयैः शरैर्नासाद्यतेति संबन्धः ॥२०॥ आमन्त्रितानां अभिमन्त्रितानाम् । दिव्येन विधिना अलौकिकया अस्त्रविद्यया ॥ २६ ॥ वध्यतां वध्यमानानाम् ॥ ३० ॥ प्राणेन बलेन ॥ ३२ ॥ शक्त्यादीनां कनो दीप्तिर्गतिः शोभा वा तां पान्ति ते । कार्तिकेयेन्द्रवरुणयमायुधतुल्या इत्यर्थः ॥ ३४ ॥ विंशोऽध्यायः ॥ २० ॥

युध्यमानो मया सङ्ख्ये वियदभ्यगमत्पुनः ॥ १

ततः शतघ्नीश्च महागदाश्च
दीप्तांश्च शूलान्मुसलानसींश्च ।
चिक्षेप रोषान्मयि मन्दबुद्धिः
साल्वो महाराज जयाभिकाङ्क्षी ॥ २

तानाशुगैरापततोऽहमाशु
निवार्य तूर्णं खगमान्ख एव ।
द्विधा त्रिता चाच्छिनमाशु मुक्तै-
स्ततोऽन्तरिक्षे निनदो बभूव ॥ ३

ततः शतसहस्रेण शराणां नतपर्वणाम् ।
दारुकं वाजिनश्चैव रथं च समवाकिरत् ॥ ४
ततो मामब्रवीद्वीर दारुको विह्वलन्निव ।
स्थातव्यमिति तिष्ठामि साल्वबाणप्रपीडितः ।
अवस्थातुं न शक्नोमि अङ्गं मे व्यवसीदति ॥ ५
इति तस्य निशम्याहं सारथेः करुणं वचः ।
अवेक्षमाणो यन्तारमपश्यं शरपीडितम् ॥ ६
न तस्योरसि नो मूर्ध्नि न काये न भुजद्वये ।
अन्तरं पाण्डवश्रेष्ठ पश्याम्यनिचितं शरैः ॥ ७
स तु बाणवरोत्पीडाद्विस्रवत्यसृगुल्बणम् ।
अभिवृष्टो यथा मेघैर्गिरिर्गैरिकधातुमान् ॥ ८
अभीशुहस्तं तं दृष्ट्वा सीदन्तं सारथिं रणे ।
अस्तम्भयं महाबाहो साल्वबाणप्रपीडितम् ॥ ९
अथ मां पुरुषः कश्चिद्द्वारकानिलयोऽब्रवीत् ।
त्वरितो रथमारोप्य सौहृदादिव भारत ॥ १०
आहुकस्य वचो वीर तस्यैव परिचारकः ।
विषण्णः सन्नकण्ठेन तन्निबोध युधिष्ठिर ॥ ११
द्वारकाधिपतिर्वीर आह त्वामाहुको वचः ।
केशवेहि विजानीष्व यत्त्वां पितृसखोऽब्रवीत् १२
उपयात्वा तु साल्वेन द्वारकां वृष्णिनन्दन ।
विषक्ते त्वयि दुर्धर्ष हतः शूरसुतो बलात् ॥ १३
तदलं साधुयुद्धेन निवर्तस्व जनार्दन ।
द्वारकामेव रक्षस्व कार्यमेतन्महत्तव ॥ १४

इत्यहं तस्य वचनं श्रुत्वा परमदुर्मनाः ।
निश्चयं नाधिगच्छामि कर्तव्यस्येतरस्य च ॥ १५
सात्यकिं बलदेवं च प्रद्युम्नं च महारथम् ।
जगर्हे मनसा वीर तच्छ्रुत्वा महदप्रियम् ॥ १६
अहं हि द्वारकायाश्च पितुश्च कुरुनन्दन ।
तेषु रक्षां समाधाय प्रयातः सौभपातने ॥ १७
बलदेवो महाबाहुः कच्चिज्जीवति शत्रुहा ।
सात्यकी रौक्मिणेयश्च चारुदेष्णश्च वीर्यवान् ।
साम्बप्रभृतयश्चैवेत्यहमासं सुदुर्मनाः ॥ १८
एतेषु हि नरव्याघ्र जीवत्सु न कथंचन ।
शक्यः शूरसुतो हन्तुमपि वज्रभृता स्वयम् ॥१९
हतः शूरसुतो व्यक्तं व्यक्तं चैते परासवः ।
बलदेवमुखाः सर्वे इति मे निश्चिता मतिः ॥२०
सोहं सर्वविनाशं तं चिन्तयानो मुहुर्मुहुः ।
अविह्वलो महाराज पुनः साल्वमयोधयम् ॥ २१
ततोऽपश्यं महाराज प्रपतन्तमहं तदा ।
सौभाच्छूरसुतं वीर ततो मां मोह आविशत् २२
तस्य रूपं प्रपततः पितुर्मम नराधिप ।
ययातेः क्षीणपुण्यस्य स्वर्गादिव महीतलम् ॥२३
विशीर्णमलिनोष्णीषप्रकीर्णाम्बरमूर्धजः ।
प्रपतन्दृश्यते ह स्म क्षीणपुण्य इव ग्रहः ॥ २४
ततः शार्ङ्गं धनुःश्रेष्ठं करात्प्रपतितं मम ।
मोहापन्नश्च कौन्तेय रथोपस्थ उपाविशम् ॥ २५
ततो हाहाकृतं सर्वं सैन्यं मे गतचेतनम् ।
मां दृष्ट्वा रथनीडस्थं गतासुमिव भारत ॥ २६
प्रसार्य बाहू पततः प्रसार्य चरणावपि ।
रूपं पितुर्मे विबभौ शकुनेः पततो यथा ॥ २७
तं पतन्तं महाबाहो शूलपट्टसपाणयः ।
अभिघ्नन्तो भृशं वीर मम चेतो ह्यकम्पयन् ॥२८

ततो मुहूर्तात्प्रतिलभ्य संज्ञा-
महं तदा वीर महाविमर्दे ।

---

बाणवरोत्पीडात् क्षतस्थानात् । उल्बणमुत्कटम् ॥ ८ ॥ अस्तम्भयमाश्वासितवान् ॥ ९ ॥ पितृसख आहुकः ॥ १२ ॥ विषक्तेऽन्यत्र व्यासक्ते । शूरसुतो वसुदेवः ॥ १३ ॥ अहं जगर्हे निन्दितवान् ॥ १६ ॥ एकविंशोऽध्यायः ॥ २१ ॥

न तत्र सौभं न रिपुं च साल्वं
पश्यामि वृद्धं पितरं न चापि ॥ २९
ततो ममासीन्मनसि मायेयमिति निश्चितम् ।
प्रबुद्धोस्मि ततो भूयः शतशो वाऽकिरं शरान् ३०

॥ इति श्रीमन्महाभाते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

## द्वाविंशोऽध्यायः ॥ २२ ॥

कृष्णेन युधिष्ठिरंप्रति स्वेन साल्वसंहारकथनपूर्वकं सुभद्राभिमन्युभ्यां सह द्वारकागमनम् ॥ १ ॥ धृष्टद्युम्नधृष्टकेतुभ्यां यथाक्रमं द्रौपदेयान्नकुलभार्यां चादाय स्वस्वनगरगमनम् ॥ २ ॥

वासुदेव उवाच ।
ततोऽहं भरतश्रेष्ठ प्रगृह्य रुचिरं धनुः ।
शरैरपातयं सौभाच्छिरांसि विबुधद्विषाम् ॥ १
शरांश्चाशीविषाकारानूर्ध्वगांस्तिग्मतेजसः ।
प्रैषयं साल्वराजाय शार्ङ्गमुक्तान्सुवाससः ॥ २
ततो नादृश्यत तदा सौभं कुरुकुलोद्वह ।
अन्तर्हितं माययाऽभूत्ततोऽहं विस्मितोऽभवम् ॥ ३
अथ दानवसङ्घास्ते विकृताननमूर्धजाः ।
उदक्रोशन्महाराज धिष्ठिते मयि भारत ॥ ४
ततोऽस्त्रं शब्दसाहं वै त्वरमाणो महारणे ।
अयोजयं तद्वधाय ततः शब्द उपारमत् ॥ ५
हतास्ते दानवाः सर्वे यैः स शब्द उदीरितः ।
शरैरादित्यसंकाशैर्ज्वलितैः शब्दसाधनैः ॥ ६
तस्मिन्नुपरते शब्दे पुनरेवान्यतोऽभवत् ।
शब्दोऽपरो महाराज तत्रापि प्राहरं शरैः ॥ ७
एवं दश दिशः सर्वास्तिर्यगूर्ध्वं च भारत ।
नादयामासुरसुरास्ते चापि निहता मया ॥ ८
ततः प्राग्ज्योतिषं गत्वा पुनरेव व्यदृश्यत ।
सौभं कामगमं वीर मोहयन्मम चक्षुषी ॥ ९
ततो लोकान्तकरणो दानवो दारुणाकृतिः ।
शिलावर्षेण महता सहसा मां समावृणोत् ॥ १०
सोहं पर्वतवर्षेण वध्यमानः समन्ततः ।
वल्मीक इव राजेन्द्र पर्वतोपचितोऽभवम् ॥ ११
ततोऽहं पर्वतचितः सहयः सहसारथिः ।
अप्रख्यातिमियां राजन्सध्वजः पर्वतैश्चितः ॥ १२
ततो वृष्णिप्रवीरा ये ममासन्सैनिकास्तदा ।
ते भयार्ता दिशः सर्वे सहसा विप्रदुद्रुवुः ॥ १३
ततो हाहाकृतमभूत्सर्वं किल विशांपते ।
द्यौश्च भूमिश्च खं चैवादृश्यमाने तथा मयि ॥ १४
ततो विषण्णमनसो मम राजन्सुहृज्जनाः ।
रुरुदुश्चुक्रुशुश्चैव दुःखशोकसमन्विताः ॥ १५
द्विषतां च प्रहर्षोऽभूदार्तिश्च सुहृदामपि ।
एवं विजितवान्वीर पश्चादश्रौषमच्युत ॥ १६
ततोऽहमिन्द्रदयितं सर्वपाषाणभेदनम् ।
वज्रमुद्यम्य तान्सर्वान्पर्वतान्समशातयम् ॥ १७
ततः पर्वतभारार्ता मन्दप्राणविचेष्टिताः ।
हया मम महाराज वेपमाना इवाभवन् ॥ १८
मेघजाल इवाकाशे विदार्याभ्युदितं रविम् ।
दृष्ट्वा मां बान्धवाः सर्वे हर्षमाहारयन्पुनः ॥ १९
ततः पर्वतभारार्तान्मन्दप्राणविचेष्टितान् ।
हयान्संदृश्य मां सूतः प्राह तात्कालिकं वचः २०
साधु संपश्य वार्ष्णेय साल्वं सौभपतिं स्थितम् ।

सुवाससः सुपुङ्खान् ॥ २ ॥ विकृताननमूर्धजा इति तेषां स्वरूपकथनं नतु तद्दर्शनम् । धिष्ठिते प्रागल्भ्येन स्थिते । विष्ठिते इति पाठेपि सएवार्थः ॥ ४ ॥ शब्दएव साहो लक्ष्यं यत्र तत्तथा शब्दवेधि शब्देऽस्त्रमुपारमन्न्यपतदित्यर्थः । शब्दसाहं शब्दबाधानिवारकं वा ॥ ५ ॥ शब्दसाधनैः शब्दएव साधनं लक्ष्यसंबन्धे कारणं येषां तैः । पुरस्तादृश्यत्वात् ॥ ६ ॥ प्राग्ज्योतिषं पूर्वसमुद्रतीरस्थं नगरविशेषम् । यतः कामगमं अतः प्राग्ज्योतिषं गत्वा व्यदृश्यत ॥ ९ ॥ अप्रख्यातिं अदर्शनम् । इयां प्राप्तवान् ॥ १२ ॥ एवं मां सौभराजो विजितवान् एतदप्यहं पश्चादश्रौषं पूर्वं मोहमापन्नः सन् संज्ञालाभानन्तरं श्रुतवान्सारथिमुखेनेति शेषः । एवमज्ञातवान्वीरेति ट. पाठः ॥ १६ ॥ इन्द्रदयितं इन्द्रदैवत्यम् । वज्रं वज्रास्त्रम् समशातयं नाशितवान् ॥ १७ ॥ आहारयन्प्राप्तवन्तः ॥ १९ ॥ तात्कालिकं तत्कालयोग्यम् ॥ २० ॥

अलं कृष्णावमन्यैनं साधु यत्नं समाचर ॥ २१
मार्दवं सखितां चैव साल्वादद्य व्यपाहर ।
जहि साल्वं महाबाहो मैनं जीवय केशव ॥ २२
सर्वैः पराक्रमैर्वीर वध्यः शत्रुरमित्रहन् ।
न शत्रुरवमन्तव्यो दुर्बलोऽपि बलीयसा ।
योपि स्यात्पीठगः कश्चित्किं पुनः समरे स्थितः २३
स त्वं पुरुषशार्दूल सर्वयत्नैरिमं प्रभो ।
जहि वृष्णिकुलश्रेष्ठ मा त्वां कालोऽत्यगात्पुनः ॥
जितवाञ्जामदग्र्यं यः कोटिवर्षगणान्बहून् ।
स एष नान्यैर्वध्यो हि त्वामृते नास्ति कश्चन २५
नैष मार्दवसाध्यो वै मतो नापि सखा तव ।
येन त्वं योधितो वीर द्वारका चावमर्दिता ॥२६
एवमादि तु कौन्तेय श्रुत्वाऽहं सारथेर्वचः ।
तत्त्वमेतदिति ज्ञात्वा युद्धे मतिमधारयम् ॥ २७
वधाय साल्वराजस्य सौभस्य च निपातने ।
दारुकं चाब्रुवं वीर मुहूर्तं स्थीयतामिति ॥ २८
ततोऽप्रतिहतं दिव्यमभेद्यमतिवीर्यवत् ।
आग्नेयमस्त्रं दयितं सर्वसाहं महाप्रभम् ।
योजयं तत्र धनुषा दानवान्तकरं रणे ॥ २९
यक्षाणां राक्षसानां च दानवानां च संयुगे ।
राज्ञां च प्रतिलोमानां भस्मान्तकरणं महत् ॥ ३०
क्षुरान्तममलं चक्रं कालान्तकयमोपमम् ।
अनुमन्त्र्याहमतुलं द्विषतां विनिबर्हणम् ॥ ३१
जहि सौभं स्ववीर्येण ये चात्र रिपवो मम ।
इत्युक्त्वा भुजवीर्येण तस्मै प्राहिणवं रुषा ॥ ३२
रूपं सुदर्शनस्यासीदाकाशे पततस्तदा ।
द्वितीयस्येव सूर्यस्य युगान्ते प्रतपिष्यतः ॥ ३३
तत्समासाद्य नगरं सौभं व्यपगतत्विषम् ।
मध्येन पाटयामास क्रकचो दार्विवोच्छ्रितम् ३४
द्विधा कृतं ततः सौभं सुदर्शनबलाद्धतम् ।
महेश्वरशरोद्धूतं पपात त्रिपुरं यथा ॥ ३५

तस्मिन्निपतिते सौभे चक्रमागात्करं मम ।
पुनश्चादाय वेगेन साल्वायेत्यहमब्रुवम् ॥ ३६
ततः साल्वं गदां गुर्वीमाविध्यन्तं महाहवे ।
द्विधा चकार सहसा प्रजज्वाल च तेजसा ॥३७
तस्मिन्विनिहते वीरे दानवास्त्रस्तचेतसः ।
हाहाभूता दिशो जग्मुरर्दिता मम सायकैः ॥ ३८
ततोऽहं समवस्थाप्य रथं सौभसमीपतः ।
शङ्खं प्रध्माप्य हर्षेण सुहृदः पर्यहर्षयम् ॥ ३९
तन्मेरुशिखराकारं विध्वस्ताट्टालगोपुरम् ।
दह्यमानमभिप्रेक्ष्य स्त्रियस्ताः संप्रदुद्रुवुः ॥ ४०
एवं निहत्य समरे सौभं साल्वं निपात्य च ।
आनर्तात्पुनरागम्य सुहृदां प्रीतिमावहम् ॥ ४१
तदेतत्कारणं राजन्नागमं नागसाह्वयम् ।
यद्यागां परवीरघ्न न हि जीवेत्सुयोधनः ॥ ४२
मय्यागतेऽथवा वीर द्यूतं न भविता तथा ।
अद्याहं किं करिष्यामि भिन्नसेतुरिवोदकम् ॥ ४३
वैशंपायन उवाच ।
एवमुक्त्वा महाबाहुः कौरवं पुरुषोत्तमः ।
आमन्त्र्य प्रययौ श्रीमान्पाण्डवान्मधुसूदनः ॥ ४४
अभिवाद्य महाबाहुर्धर्मराजं युधिष्ठिरम् ।
राज्ञा मूर्धन्युपाघ्रातो भीमेन च महाभुजः ॥ ४५
परिष्वक्तश्चार्जुनेन यमाभ्यां चाभिवादितः ।
संमानितश्च धौम्येन द्रौपद्या चार्चितोऽश्रुभिः ॥४६
सुभद्रामभिमन्युं च रथमारोप्य काञ्चनम् ।
आरुरोह रथं कृष्णः पाण्डवैरभिपूजितः ॥ ४७
शैब्यसुग्रीवयुक्तेन रथेनादित्यवर्चसा ।
द्वारकां प्रययौ कृष्णः समाश्वास्य युधिष्ठिरम् ४८
ततः प्रयाते दाशार्हे धृष्टद्युम्नोपि पार्षतः ।
द्रौपदेयानुपादाय प्रययौ स्वपुरं तदा ॥ ४९
धृष्टकेतुः स्वसारं च समादायाथ चेदिराट् ।
जगाम पाण्डवान्दृष्ट्वा रम्यां शुक्तिमतीं पुरीम् ॥५०

पीठगः स्वासनस्थः । अयुध्यमानोपीत्यर्थः ॥ २३ ॥ प्रतिलोमानां विपरीताचाराणां म्लेच्छानाम् ॥ ३० ॥ क्षुरान्तं तीक्ष्णपरिधि ॥ ३१ ॥ तस्मै सौभाय । प्राहिणवं प्रहितवान् ॥ ३२ ॥ युगान्ते परिवेष्टत इति ट.. पाठः ॥ ३३ ॥ क्रकचः दन्तुरखड्गः ॥ ३४ ॥ उदकं धारयितुमिति शेषः ॥ ४३ ॥ धृष्टकेतुः शिशुपालसुतः । स्वसारं करेणुमतीं नकुलभार्याम्

केकयाश्चाप्यनुज्ञाताः कौन्तेयेनामितौजसा ।
आमन्त्र्य पाण्डवान्सर्वान्प्रययुस्तेऽपि भारत ॥ ५१
ब्राह्मणाश्च विशश्चैव तथा विषयवासिनः ।
विसृज्यमानाः सुभृशं न त्यजन्ति स्म पाण्डवान् ॥
समवायः स राजेन्द्र सुमहाद्भुतदर्शनः ।
आसीन्महात्मनां तेषां काम्यके भरतर्षभ ॥ ५३
युधिष्ठिरस्तु विप्रांस्ताननुमान्य महामनाः ।
शशास पुरुषान्काले रथान्योजयतेति वै ॥ ५४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥

---

## त्रयोविंशोऽध्यायः ॥ २३ ॥

कृष्णादीनां पाण्डवान्दृष्ट्वा वनात्स्वनगरगमनानन्तरं पाण्डवैः पौराणामाश्वासनपूर्वकं नगरंप्रति निवर्तनम् ॥ १ ॥

वैशंपायन उवाच ।
तस्मिन्दशार्हाधिपतौ प्रयाते
युधिष्ठिरो भीमसेनार्जुनौ च ।
यमौ च कृष्णा च पुरोहितश्च
रथान्महार्हान्परमाश्वयुक्तान् ॥ १
अस्थाय वीराः सहिता वनाय
प्रतस्थिरे भूतपतिप्रकाशाः ।
हिरण्यनिष्कान्वसनानि गाश्च
प्रदाय शिक्षाक्षरमन्त्रविद्भ्यः ॥ २
प्रेष्याः पुरो विंशतिरात्तशस्त्रा
धनूंषि शस्त्राणि शरांश्च दीप्तान् ।
मौर्वीश्च यन्त्राणि च सायकांश्च
सर्वे समादाय जघन्यमीयुः ॥ ३
ततस्तु वासांसि च राजपुत्र्या
धात्र्यश्च दास्यश्च विभूषणं च ।
तदिन्द्रसेनस्त्वरितः प्रगृह्य
जघन्यमेवोपययौ रथेन ॥ ४
ततः कुरुश्रेष्ठमुपेत्य पौराः
प्रदक्षिणं चक्रुरदीनसत्वाः ।
तं ब्राह्मणाश्चाभ्यवदन्प्रसन्ना
मुख्याश्च सर्वे कुरुजाङ्गलानाम् ॥ ५
स चापि तानभ्यवदत्प्रसन्नः
सहैव तैर्भ्रातृभिर्धर्मराजः ।
तस्थौ च तत्राधिपतिर्महात्मा
दृष्ट्वा जनौघं कुरुजाङ्गलानाम् ॥ ६
पितेव पुत्रेषु स तेषु भावं
चक्रे कुरूणामृषभो महात्मा ।
ते चापि तस्मिन्भरतप्रबर्हे
तथा बभूवुः पितरीव पुत्राः ॥ ७
ततस्तमासाद्य महाजनौघाः
कुरुप्रवीरं परिवार्य तस्थुः ।
हानाथ हाधर्म इति ब्रुवाणा
ह्रीताश्च सर्वेऽश्रुमुखा बभूवुः ॥ ८
वरः कुरूणामधिपः प्रजानां
पितेव पुत्रानपहाय चास्मान् ।
पौरानिमाञ्जानपदांश्च सर्वान्
हित्वा प्रयातः क्व नु धर्मराजः ॥ ९
धिग्धार्तराष्ट्रं सुनृशंसबुद्धिं
धिक्सौबलं पापमतिं च कर्णम् ।
अनर्थमिच्छन्ति नरेन्द्र पापा
ये धर्मनित्यस्य सततस्तवोग्राः ॥ १०
स्वयं निवेश्याप्रतिमं महात्मा
पुरं महादेवपुरप्रकाशम् ।

---

॥ ५० ॥ केकयाः सहदेवश्यालाः ॥ ५१ ॥ शशास आज्ञापयामास ॥ ५४ ॥ द्वाविंशोऽध्यायः ॥ २२ ॥

भूतपतिः शिवः । निष्कः अष्टोत्तरशतं सुवर्णानि वक्षोऽलंकारो वा । शिक्षेतिव्याकरणाद्यङ्गानामुपलक्षणम् । अक्षराणि वेदः । नित्यत्वात्क्षरणशून्यः । मन्त्रः प्रणवः ॥ २ ॥ पुरः प्रागेव । जघन्यं पाश्चात्यं द्वारकादेशम् ॥ ३ ॥ राजपुत्र्या सुभद्रया सह ॥ ४ ॥ तदा बभूवुरिति झ. पाठः ॥ ७ ॥ ह्रीताः कुराज्ये तिष्ठाम इति लज्जिताः ॥ ८ ॥ अनर्थं द्यूतजम्

शतक्रतुप्रस्थममोघकर्मा
हित्वा प्रयातः क्वनु धर्मराजः ॥ ११
चकार यामप्रतिमां महात्मा
सभां मयो देवसभाप्रकाशाम् ।
तां देवगुप्तामिव देवमायां
हित्वा प्रयातः क्वनु धर्मराजः ॥ १२
तान्धर्मकामार्थविदुत्तमौजा
बीभत्सुरुच्चैः सहितानुवाच ।
आदास्यते वासमिमं निरुध्य
वनेषु राजा द्विषतां यशांसि ॥ १३
द्विजातिमुख्याः सहिताः पृथक्क
भवद्भिरासाद्य तपस्विनश्च ।
प्रसाद्य धर्मार्थविदश्च वाच्या
यथार्थसिद्धिः परमा भवेन्नः ॥ १४
इत्येवमुक्ते वचनेऽर्जुनेन
ते ब्राह्मणाः सर्ववर्णाश्च राजन् ।
मुदाऽभ्यनन्दन्सहिताश्च चक्रुः
प्रदक्षिणं धर्मभृतांवरिष्ठम् ॥ १५
आमन्त्र्य पार्थं च वृकोदरं च
धनंजयं याज्ञसेनीं यमौ च ।
प्रतस्थिरे राष्ट्रमपेतहर्षा
युधिष्ठिरेणानुमता यथास्वम् ॥ १६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

## चतुर्विंशोऽध्यायः ॥ २४ ॥

पाण्डवैश्चिरावस्थाननिर्धारणपूर्वकं द्वैतवनप्रवेशः ॥ १ ॥

वैशंपायन उवाच ।
ततस्तेषु प्रयातेषु कौन्तेयः सत्यसंगरः ।
अभ्यभाषत धर्मात्मा भ्रातॄन्सर्वान्युधिष्ठिरः ॥ १
द्वादशेमाः समाऽस्माभिर्वस्तव्यं निर्जने वने ।
समीक्षध्वं महारण्ये देशं बहुमृगद्विजम् ॥ २
बहुपुष्पफलं रम्यं शिवं पुण्यजनोचितम् ।
यत्रेमा द्वादश समाः सुखं प्रतिवसेमहि ॥ ३
एवमुक्ते प्रत्युवाच धर्मराजं धनंजयः ।
गुरुवन्मानववरं मानयित्वा मनस्विनम् ॥ ४
भवानेव महर्षीणां वृद्धानां पर्युपासिता ।
अज्ञातं मानुषे लोके भवतो नास्ति किंचन ॥ ५
त्वया ह्युपासिता नित्यं ब्राह्मणा वेदपारगाः ।
द्वैपायनप्रभृतयो नारदश्च महातपाः ॥ ६
यः सर्वलोकद्वाराणि नित्यं संचरते वशी ।
देवलोकाद्ब्रह्मलोकं गन्धर्वाप्सरसामपि ॥ ७
अनुभावांश्च जानासि ब्राह्मणानां न संशयः ।
प्रभावांश्चैव वेत्थ त्वं सर्वेषामेव पार्थिव ॥ ८
त्वमेव राजञ्जानासि श्रेयःकारणमेव च ।
यत्रेच्छसि महाराज निवासं तत्र कुर्महे ॥ ९
इदं द्वैतवनं नाम सरः पुण्यजनोषितम् ।
बहुपुष्पफलं रम्यं नानाद्विजनिषेवितम् ॥ १०
अत्रेमा द्वादश समा विहरेमेति रोचये ।
यदि तेऽनुमतं राजन्किमन्यन्मन्यते भवान् ॥ ११
युधिष्ठिर उवाच ।
ममाप्येतन्मतं पार्थ त्वया यत्समुदाहृतम् ।
गच्छामः पुण्यविख्यातं महद्द्वैतवनं सरः ॥ १२

॥ १० ॥ बीभत्सुरर्जुनः आदास्यते आच्छिद्य ग्रहीष्यति । यशांसि यशस्कराणि दिव्यसभादीनि ॥ १३ ॥ भवद्भिः पौरैः वाच्याः प्रार्थ्याः ॥ १४ ॥ त्रयोविंशोऽध्यायः ॥ २३ ॥

सत्यसंगरः सत्यप्रतिज्ञः ॥ १ ॥ समाः वर्षाणि । संधिरार्षः ॥ १ ॥ अनुभावान् कर्तव्याकर्तव्यविषयान्निश्चयान् । प्रभावो निग्रहानुग्रहशक्तिः । सर्वा गतीर्विजानासि इति क. पाठः ॥ ८ ॥ द्वैतं द्वौ शोकमोहौ इतौ गतौ यस्मात्तद्वीतं द्वीतमेव द्वैतम् । स्वार्थे तद्धितः । वनं जलं यस्मिन् द्वैतवनम् ॥ १० ॥ विहरेम प्रीत्यानयेम ॥ ११ ॥

वैशंपायन उवाच ।
ततस्ते प्रययुः सर्वे पाण्डवा धर्मचारिणः ।
ब्राह्मणैर्बहुभिः सार्धं पुण्यं द्वैतवनं सरः ॥ १३
ब्राह्मणाः साग्निहोत्राश्च तथैव च निरग्नयः ।
स्वाध्यायिनो भिक्षवश्च तथैव वनवासिनः॥ १४
बहवो ब्राह्मणास्तत्र परिवव्रुर्युधिष्ठिरम् ।
तपस्विनः सत्यशीलाः शतशः संशितव्रताः ॥१५
ते यात्वा पाण्डवास्तत्र ब्राह्मणैर्बहुभिः सह ।
पुण्यं द्वैतवनं रम्यं विविशुर्भरतर्षभाः ॥ १६
तत्सालतालाम्रमधूकनीप-
कदम्बसर्जार्जुनकर्णिकारैः ।
तपात्यये पुष्पधरैरुपेतं
महावनं राष्ट्रपतिर्ददर्श ॥ १७
महाद्रुमाणां शिखरेषु तस्थु-
र्मनोरमां वाचमुदीरयन्तः ।
मयूरदात्यूहचकोरसङ्घा-
स्तस्मिन्वने बर्हिणकोकिलाश्च ॥ १८
करेणुयूथैः सह यूथपानां
मदोत्कटानामचलप्रभाणाम् ।
महान्ति यूथानि महाद्विपानां
तस्मिन्वने राष्ट्रपतिर्ददर्श ॥ १९
मनोरमां भोगवतीमुपेत्य
पूतात्मनां चीरजटाधराणाम् ।
तस्मिन्वने धर्मभृतां निवासे
ददर्श सिद्धर्षिगणाननेकान् ॥ २०
ततः स यानादवरुह्य राजा
सभ्रातृकः सजनः काननं तत् ।
विवेश धर्मात्मवतां वरिष्ठ-
स्त्रिविष्टपं शक्र इवामितौजाः ॥ २१
तं सत्यसन्धं सहिताऽभिपेतु-
र्दिदृक्षवश्चारणसिद्धसङ्घाः ।
वनौकसश्चापि नरेन्द्रसिंहं
मनस्विनं तं परिवार्य तस्थुः ॥ २२
स तत्र वृद्धानभिवाद्य सर्वान्
प्रत्यर्चितो राजवद्देववच्च ।
विवेश सर्वैः सहितो द्विजाग्र्यैः
कृताञ्जलिर्धर्मभृतां वरिष्ठः ॥ २३
स पुण्यशीलः पितृवन्महात्मा
तपस्विभिर्धर्मपरैरुपेत्य ।
प्रत्यर्चितः पुष्पधरस्य मूले
महाद्रुमस्योपविवेश राजा ॥ २४
भीमश्च कृष्णा च धनंजयश्च
यमौ च ते चानुचरा नरेन्द्रम् ।
विमुच्य वाहानवशाश्च सर्वे
तत्रोपतस्थुर्भरतप्रबर्हाः ॥ २५
लतावतानावनतः स पाण्डवै-
र्महाद्रुमः पञ्चभिरेव धन्विभिः ।
बभौ निवासोपगतैर्महात्मभि-
र्महागिरिर्वारणयूथपैरिव ॥ २६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशोऽध्यायः ॥ २५ ॥

मार्कण्डेयेन पाण्डवानुपेत्य धर्मोपदेशपूर्वकमुत्तरदिग्गमनम् ॥ १ ॥

वैशंपायन उवाच ।
तत्काननं प्राप्य नरेन्द्रपुत्राः
सुखोचिता वासमुपेत्य कृच्छ्रम् ।
विजह्रुरिन्द्रप्रतिमाः शिवेषु
सरस्वतीसालवनेषु तेषु ॥ १

---

यात्वा गत्वा ॥ १६ ॥ तपात्यये वर्षासु ॥ १७ ॥ करेणुः हस्तिनी ॥ १९ ॥ भोगवतीं सरस्वतीं नदीम् ॥ २० ॥ चारणाः देवगायनाः ॥ २२ ॥ महाद्रुमः कदम्बः ॥ २४ ॥ लताव-तानावनतः वल्लीतन्तुभिराव्रततया नम्रः ॥ २६ ॥ चतु-र्विंशोऽध्यायः ॥ २४ ॥

महावनेष्वम्बुफलोचितेषु सरस्वतीति ख. पाठः । भागीर-

यतींश्च राजा स मुनींश्च सर्वा-
स्तस्मिन्वने मूलफलैरुदग्रैः ।
द्विजातिमुख्यानृषभः कुरूणां
संतर्पयामास महानुभावः ॥ २

इष्टीश्च पित्र्याणि तथा क्रियाश्च
महावने वसतां पाण्डवानाम् ।
पुरोहितस्तत्र समृद्धतेजा-
श्चकार धौम्यः पितृवन्नृपाणाम् ॥ ३

अपेत्य राष्ट्राद्वसतां तु तेषा-
मृषिः पुराणोऽतिथिराजगाम ।
तमाश्रमं तीव्रसमृद्धतेजा
मार्कण्डेयः श्रीमतां पाण्डवानाम् ॥ ४

तमागतं ज्वलितहुताशनप्रभं
महामनाः कुरुवृषभो युधिष्ठिरः ।
अपूजयत्सुरऋषिमानवार्चितं
महामुनिं ह्यनुपमसत्ववीर्यवान् ॥ ५

स सर्वविद्द्रौपदीं वीक्ष्य दीनां
युधिष्ठिरं भीमसेनार्जुनौ च ।
संस्मृत्य रामं मनसा महात्मा
तपस्विमध्येऽस्मयतामितौजाः ॥ ६

तं धर्मराजो विमना इवाब्रवी-
त्सर्वे ह्रिया सन्ति तपस्विनोऽमी ।
भवानिदं किं स्मयतीव हृष्ट-
स्तपस्विनां पश्यतां मामुदीक्ष्य ॥ ७

मार्कण्डेय उवाच ।

न तात हृष्यामि न च स्मयामि
प्रहर्षजो मां भजते न दर्पः ।
तवापदं त्वद्य समीक्ष्य रामं
सत्यव्रतं दाशरथिं स्मरामि ॥ ८

स चापि राजा सह लक्ष्मणेन
वने निवासं पितुरेव शासनात् ।
धन्वी चरन्पार्थ मयैव दृष्टो
गिरेः पुरा ऋष्यमूकस्य सानौ ॥ ९

सहस्रनेत्रप्रतिमो महात्मा
यमस्य नेता नमुचेश्च हन्ता ।
पितुर्निदेशादनघः स्वधर्मं
चरन्वने दाशरथिश्चकार ॥ १०

स चापि शक्रस्य समप्रभावो
महानुभावः समरेष्वजेयः ।
विहाय भोगानचरद्वनेषु
नेशे बलस्येति चरेदधर्मम् ॥ ११

भूपाश्च नाभागभगीरथादयो
महीमिमां सागरान्तां विजित्य ।
सत्येन तेऽप्यजयंस्तात लोका-
न्नेशे बलस्येति चरेदधर्मम् ॥ १२

अलर्कमाहुर्नरवर्य सन्तं
सत्यव्रतं काशिकरूशराजम् ।
विहाय राज्यानि वसूनि चैव
नेशे बलस्येति चरेदधर्मम् ॥ १३

धात्रा विधिर्यो विहितः पुराणै-
स्तं पूजयन्तो नरवर्य सन्तः ।
सप्तर्षयः पार्थ दिवि प्रभान्ति
नेशे बलस्येति चरेदधर्मम् ॥ १४

महाबलान्पर्वतकूटमात्रा-
न्विषाणिनः पश्य गजान्नरेन्द्र ।
स्थितान्निदेशे नरवर्य धातु-
र्नेशे बलस्येति चरेदधर्मम् ॥ १५

सर्वाणि भूतानि नरेन्द्र पश्य
तथा यथावद्विहितं विधात्रा ।
स्वयोनितः कर्म सदाचरन्ति
नेशे बलस्येति चरेदधर्मम् ॥ १६

---

थीसालवनेष्विति क. पाठः ॥ १ ॥ इष्टीः दर्शपौर्णमासाद्याः । पित्र्याणि पिण्डपितृयज्ञदर्शश्राद्धादीनि ॥ ३ ॥ राष्ट्रात् अपेत्य निर्गत्य वने वसताम् ॥ ४ ॥ अस्मयत विस्मितवान् ॥ ६ ॥ ह्रिया प्रागल्भ्यसंकोचेन ॥ ७ ॥ बलस्य बहुसामर्थ्यस्य ईशे प्रभवामीति हेतोरधर्मं न चरेत् । शक्तौ सत्यां धर्ममेवाचरेन्नत्वधर्ममित्यर्थः । नेशो बलस्येतीति क. पाठः ॥ ११ ॥ धात्रा ईशेन पुराणैर्वेदवाक्यैर्विहितो विधिरग्निहोत्रादिः ॥ १४ ॥ पशवोऽपि बलवानस्मीति दर्पेणाधर्मं न चरन्तीत्याह महाबला-

सत्येन धर्मेण यथार्हवृत्त्या
ह्रिया तथा सर्वभूतान्यतीत्य ।
यशश्च तेजश्च तवापि दीप्तं
विभावसोर्भास्करस्येव पार्थ ॥ १७
यथाप्रतिज्ञं च महानुभाव
कृच्छ्रं वने वासमिमं निरुष्य ।
ततः श्रियं तेजसा तेन दीप्ता-
मादास्यसे पार्थिव कौरवेभ्यः ॥ १८
वैशंपायन उवाच ।
तमेवमुक्त्वा वचनं महर्षि-
स्तपस्विमध्ये सहितं सुहृद्भिः ।
आमन्त्र्य धौम्यं सहितांश्च पार्था-
स्ततः प्रतस्थे दिशमुत्तरां सः ॥ १९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

## षड्विंशोऽध्यायः ॥ २६ ॥

दाल्भ्येन युधिष्ठिरंप्रति ब्राह्मणस्य क्षत्रवृद्धिकारणत्वकथनम् ॥ १ ॥ महर्षीणां युधिष्ठिराभिगमनम् ॥ २ ॥

वैशंपायन उवाच ।
वसत्सु वै द्वैतवने पाण्डवेषु महात्मसु ।
अनुकीर्णं महारण्यं ब्राह्मणैः समपद्यत ॥ १
ईर्यमाणेन सततं ब्रह्मघोषेण सर्वशः ।
ब्रह्मलोकसमं पुण्यमासीद्द्वैतवनं सरः ॥ २
यजुषामृचां साम्नां च गद्यानां चैव सर्वशः ।
आसीदुच्चार्यमाणानां निःस्वनो हृदयंगमः ॥ ३
ज्याघोषश्चैव पार्थानां ब्रह्मघोषश्च धीमताम् ।
संसृष्टं ब्रह्मणा क्षत्रं भूय एव व्यरोचत ॥ ४
अथाब्रवीद्बको दाल्भ्यो धर्मराजं युधिष्ठिरम् ।
सन्ध्यां कौन्तेयमासीनमृषिभिः परिवारितम् ॥ ५
पश्य द्वैतवने पार्थ ब्राह्मणानां तपस्विनाम् ।
होमवेलां कुरुश्रेष्ठ संप्रज्वलितपावकाम् ॥ ६
चरन्ति धर्मं पुण्येऽस्मिंस्त्वया गुप्ता धृतव्रताः ।
भृगवोऽङ्गिरसश्चैव वासिष्ठाः काश्यपैः सह ॥ ७
आगस्त्याश्च महाभागा आत्रेयाश्चोत्तमव्रताः ।
सर्वस्य जगतः श्रेष्ठा ब्राह्मणाः संगतास्त्वया ॥ ८
इदं तु वचनं पार्थ शृण्वेकाग्रमना मम ।
भ्रातृभिः सह कौन्तेय यत्त्वां वक्ष्यामि कौरव ॥ ९
ब्रह्म क्षत्रेण संसृष्टं क्षत्रं च ब्रह्मणा सह ।
उदीर्णे दहतः शत्रून्वनानीवाग्निमारुतौ ॥ १०
नाब्राह्मणस्तात चिरं बुभूषे-
दिच्छन्निमं लोकममुं च जेतुम् ।
विनीतधर्मार्थमपेतमोहं
लब्ध्वा द्विजं हन्ति नृपः सपत्नान् ॥ ११
चरन्नैश्रेयसं धर्मं प्रजापालनकारितम् ।
नाध्यगच्छद्बलिर्लोके तीर्थमन्यत्र वै द्विजात् ॥ १२
अनूनमासीदसुरस्य कामै-
र्वैरोचनेः श्रीरपि चाक्षयाऽऽसीत् ।
लब्ध्वा महीं ब्राह्मणसंप्रयोगा-
त्तेष्वाचरन्दुष्टमथो व्यनश्यत् ॥ १३
नाब्राह्मणं भूमिरियं सभूति-
र्वर्णं द्वितीयं भजते चिराय ।
समुद्रनेमिर्नमते तु तस्मै
यं ब्राह्मणः शास्ति नयैर्विनीतम् ॥ १४
कुञ्जरस्येव संग्रामे परिगृह्याङ्कुशग्रहम् ।

निति । विषाणं दन्तः ॥ १५ ॥ विभा प्रभा सैव वसु वित्तं यस्य ॥ १७ ॥ आदास्यसे ग्रहीष्यसि ॥ १८ ॥ पञ्चविंशोऽध्यायः ॥ २५ ॥

अनुकीर्णं व्याप्तम् ॥ १ ॥ गद्यानां ब्राह्मणवाक्यानां पादाक्षरादिनियमहीनानाम् । साम्नां च निगमानां च भारतेति क. पाठः । भाष्याणां चैव सर्वश इति ख. पाठः ॥ ३ ॥ संध्यामुपास्येति शेषः ॥ ५ ॥ नृपः अब्राह्मणो ब्राह्मणहीनो न बुभूषेत् न भवितुमिच्छेत् । तस्येच्छतोपि जयो दुर्लभ इत्यर्थः । विनीतौ सम्यक् शिक्षितौ धर्मार्थौ येन ॥ ११ ॥ तीर्थमुपायम् ॥ १२ ॥ वैरोचनेर्बलेः ॥ १३ ॥ अङ्कुशग्रहमङ्कुशेन निगृह्णाति

ब्राह्मणैर्विप्रहीनस्य क्षत्रस्य क्षीयते बलम् ॥ १५
ब्राह्मण्यनुपमा दृष्टिः क्षात्रमप्रतिमं बलम् ।
तौ यदा चरतः सार्धं तदा लोकः प्रसीदति ॥१६
यथा हि सुमहानग्निः कक्षं दहति सानिलः ।
तथा दहति राजन्यो ब्राह्मणेन समं रिपुम् ॥ १७
ब्राह्मणेष्वेव मेधावी बुद्धिपर्येषणं चरेत् ।
अलब्धस्य च लाभाय लब्धस्य परिवृद्धये ॥ १८
अलब्धलाभाय च लब्धवृद्धये
यथार्हतीर्थप्रतिपादनाय ।
यशस्विनं वेदविदं विपश्चितं
बहुश्रुतं ब्राह्मणमेव वासयेत् ॥ १९
ब्राह्मणेषूत्तमा भक्तिस्तव नित्यं युधिष्ठिर ।
तेन ते सर्वलोकेषु दीप्यते प्रथितं यशः ॥ २०
वैशंपायन उवाच ।
ततस्ते ब्राह्मणाः सर्वे बकं दाल्भ्यमपूजयन् ।
युधिष्ठिरे स्तूयमाने भूयः सुमनसोऽभवन् ॥ २१
द्वैपायनो नारदश्च जामदग्न्यः पृथुश्रवाः ।
इन्द्रद्युम्नो भालुकिश्च कृतचेताः सहस्रपात् ॥२२
कर्णश्रवाश्च मुञ्जश्च लवणाश्वश्च काश्यपः ।
हारीतः स्थूणकर्णश्च अग्निवेश्योऽथ शौनकः॥२३
कृतवाक्च सुवाक्चैव बृहदश्वो विभावसुः ।
ऊर्ध्वरेता वृषामित्रः सुहोत्रो होत्रवाहनः ॥ २४
एते चान्ये च बहवो ब्राह्मणाः संशितव्रताः ।
अजातशत्रुमानर्चुः पुरंदरमिवर्षयः ॥ २५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

## सप्तविंशोऽध्यायः ॥ २७ ॥

भीमादिसंनिधाने युधिष्ठिरंप्रति द्रौपद्याः सविषादवचनम् ॥ १ ॥

वैशंपायन उवाच ।
ततो वनगताः पार्थाः सायाह्ने सह कृष्णया ।
उपविष्टाः कथाश्चक्रुर्दुःखशोकपरायणाः ॥ १
प्रिया च दर्शनीया च पण्डिता च पतिव्रता ।
अथ कृष्णा धर्मराजमिदं वचनमब्रवीत् ॥ २
द्रौपद्युवाच ।
न नूनं तस्य पापस्य दुःखमस्मासु किंचन ।
विद्यते धार्तराष्ट्रस्य नृशंसस्य दुरात्मनः ॥ ३
यस्त्वां राजन्मया सार्धमजिनैः प्रतिवासितम् ।
वनं प्रस्थाप्य दुष्टात्मा नान्वतप्यत दुर्मतिः ॥ ४
आयसं हृदयं नूनं तस्य दुष्कृतकर्मणः ।
यस्त्वां धर्मपरं श्रेष्ठं रूक्षाण्यश्रावयत्तदा ।
'वचनान्यपरोक्षाणि दुर्वाच्यानि च संसदि ॥' ५
सुखोचितमदुःखार्हं दुरात्मा ससुहृद्गणः ।
ईदृशं दुःखमानीय मोदते पापपूरुषः ॥ ६
चतुर्णामेव पापानामस्रं न पतितं तदा ।
त्वयि भारत निष्क्रान्ते वनायाजिनवाससि ॥ ७
दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः ।
दुर्भ्रातुस्तस्य चोग्रस्य राजन्दुःशासनस्य च ॥ ८
इतरेषां तु सर्वेषां कुरूणां कुरुसत्तम ।
दुःखेनाभिपरीतानां नेत्रेभ्यः प्रापतज्जलम् ॥ ९
इदं च शयनं दृष्ट्वा यच्चासीत्ते पुरातनम् ।
शोचामि त्वां महाराज दुःखानर्हं सुखोचितम् ॥१०
दान्तं यच्च सभामध्य आसनं रत्नभूषितम् ।
दृष्ट्वा कुशबृसीं चेमां शोको मां दारयत्ययम् ॥ ११
यदपश्यं सभायां त्वां राजभिः परिवारितम् ।
तच्च राजन्नपश्यन्त्याः का शान्तिर्हृदयस्य मे ॥ १२
या त्वाऽहं चन्दनादिग्धमपश्यं सूर्यवर्चसम् ।
सा त्वां पङ्कमलादिग्धं दृष्ट्वा मुह्यामि भारत ॥ १३
या त्वाऽहं कौशिकैर्वस्त्रैः शुभ्रैराच्छादितं पुरा ।

तम् । परिगृह्य वर्जयित्वा । परिवर्जने ॥ १५ ॥ बुद्धिपर्येषणं बुद्धेः साकल्येन संग्रहणम् ॥ १८ ॥ यथार्हतीर्थे यथायोग्यपात्रे । प्रतिपादनाय दानाय ॥ १९ ॥ षड्विंशोऽध्यायः ॥ २६ ॥

अस्मासु दुःखितेष्विति शेषः ॥ ३ ॥ आनीय प्रापय्य ॥ ६ ॥ अस्रं नेत्रजलम् ॥ ७ ॥ दान्तं गजदन्तमयम् । कुशबृसीं कुशासनम् ॥ ११ ॥ आदिग्धं लिप्तम् ॥ १३ ॥ कौशिकैः

दृष्टवत्यसि राजेन्द्र साऽद्य पश्यामि चीरिणम् १४
यत्र तद्रुक्मपात्रीभिर्ब्राह्मणेभ्यः सहस्रशः ।
ह्रियते ते गृहादन्नं संस्कृतं सार्वकामिकम् ॥ १५
यतीनामगृहाणां ते तथैव गृहमेधिनाम् ।
दीयते भोजनं राजन्नतीव गुणवत्प्रभो ॥ १६
सत्कृतानि सहस्राणि सर्वकामैः पुरा गृहे ।
सर्वकामैः सुविहितैर्यदपूजयथा द्विजान् ।
तच्च राजन्नपश्यन्त्याः का शान्तिर्हृदयस्य मे ॥ १७
यत्ते भ्रातॄन्महाराज युवानो मृष्टकुण्डलाः ।
अभोजयन्त मृष्टान्नैः सूदाः परमसंस्कृतैः ॥ १८
सर्वांस्तानद्य पश्यामि वने वन्येन जीविनः ।
अदुःखार्हान्मनुष्येन्द्र नोपशाम्यति मे मनः ॥ १९
भीमसेनमिमं चापि दुःखितं वनवासिनम् ।
ध्यायतः किं न मन्युस्ते प्राप्ते काले विवर्धते ॥ २०
भीमसेनं हि कर्माणि स्वयं कुर्वाणमच्युतम् ।
सुखार्हं दुःखितं दृष्ट्वा कस्माद्राजन्नुपेक्षसे ॥ २१
सत्कृतं विविधैर्यानैर्वस्त्रैरुच्चावचैस्तथा ।
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ २२
अयं कुरून्रणे सर्वान्हन्तुमुत्सहते प्रभुः ।
त्वत्प्रतिज्ञां प्रतीक्षंस्तु सहतेऽयं वृकोदरः ॥ २३
योऽर्जुनेनार्जुनस्तुल्यो द्विबाहुर्बहुबाहुना ।
शरातिसर्गे शीघ्रत्वात्कालान्तकयमोपमः ॥ २४
यस्य शस्त्रप्रतापेन प्रणताः सर्वपार्थिवाः ।
यज्ञे तव महाराज ब्राह्मणानुपतस्थिरे ॥ २५
तमिमं पुरुषव्याघ्रं पूजितं देवदानवैः ।
ध्यायन्तमर्जुनं दृष्ट्वा कस्माद्राजन्न कुप्यसि ॥ २६
दृष्ट्वा वनगतं पार्थमदुःखार्हं सुखोचितम् ।
न च ते वर्धते मन्युस्तेन मुह्यामि भारत ॥ २७
यो देवांश्च मनुष्यांश्च सर्पांश्चैकरथोऽजयत् ।
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ २८
यो यानैरद्भुताकारैर्हयैर्नागैश्च संवृतः ।
प्रसह्य वित्तान्यादत्त पार्थिवेभ्यः परंतप ॥ २९
क्षिपत्येकेन वेगेन पञ्चबाणशतानि यः ।
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ३०
श्यामं बृहन्तं तरुणं चर्मिणामुत्तमं रणे ।
नकुलं ते वने दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ३१
दर्शनीयं च शूरं च माद्रीपुत्रं युधिष्ठिर ।
सहदेवं वने दृष्ट्वा कस्मात्क्षमसि पार्थिव ॥ ३२
नकुलं सहदेवं च दृष्ट्वा ते दुःखितावुभौ ।
अदुःखार्हौ मनुष्येन्द्र कस्मान्मन्युर्न वर्धते ॥ ३३
द्रुपदस्य कुले जातां स्नुषां पाण्डोर्महात्मनः ।
धृष्टद्युम्नस्य भगिनीं वीरपत्नीमनुव्रताम् ।
मां वै वनगतां दृष्ट्वा कस्मात्क्षमसि पार्थिव ॥ ३४
नूनं च तव नैवास्ति मन्युर्भरतसत्तम ।
यत्ते भ्रातॄंश्च मां चैव दृष्ट्वा न व्यथते मनः ॥ ३५
न निर्मन्युः क्षत्रियोऽस्ति लोके निर्वचनं स्मृतम् ।
तदद्य त्वयि पश्यामि क्षत्रिये विपरीतवत् ॥ ३६
यो न दर्शयते तेजः क्षत्रियः काल आगते ।
सर्वभूतानि तं पार्थ सदा परिभवन्त्युत ॥ ३७
तत्त्वया न क्षमा कार्या शत्रून्प्रति कथंचन ।
तेजसैव हि ते शक्या निहन्तुं नात्र संशयः ॥ ३८
तथैव यः क्षमाकाले क्षत्रियो नोपशाम्यति ।
अप्रियः सर्वभूतानां सोमुत्रेह च नश्यति ॥ ३९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

## अष्टाविंशोऽध्यायः ॥ २८ ॥

द्रौपद्या युधिष्ठिरंप्रति कालभेदेन क्षमाकोपयोरवश्याश्रयणीयत्वे प्रमाणतया बलिप्रह्लादसंवादानुवादपूर्वकं प्रकृते कोपस्यावश्यादरणीयत्वोक्तिः ॥ १ ॥

द्रौपद्युवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।

कोशजैः ॥ १४ ॥ अगृहाणां ब्रह्मचारिणाम् ॥ १६ ॥ सर्वकामैः काम्यमानैरन्नैः सर्वैः काभैर्मनोरथैर्द्विजाम् अपूजयथाः ॥ १७ ॥ अर्जुनेन कार्तवीर्येण ॥ २४ ॥ आदत्त आत्तवान् ॥ २९ ॥ चर्मिणां खड्गचर्मधराणाम् ॥ ३१ ॥ निर्वचनं क्षत्रियशब्दस्य क्षरते हिनस्तीति क्षत्रमिति ॥ ३६ ॥ सप्तविंशोऽध्यायः ॥ २७ ॥

प्रह्लादस्य च संवादं बलेर्वैरोचनस्य च ॥ १
असुरेन्द्रं महाप्राज्ञं धर्माणामागतागमम् ।
बलिः पप्रच्छ दैत्येन्द्रं प्रह्लादं पितरं पितुः ॥ २
क्षमा स्विच्छ्रेयसी तात उताहो तेज इत्युत ।
एतन्मे संशयं तात यथावद्ब्रूहि पृच्छते ॥ ३
श्रेयो यदत्र धर्मज्ञ ब्रूहि मे तदसंशयम् ।
करिष्यामि हि तत्सर्वं यथावदनुशासनम् ॥ ४
तस्मै प्रोवाच तत्सर्वमेवं पृष्टः पितामहः ।
सर्वनिश्चयवित्प्राज्ञः संशयं परिपृच्छते ॥ ५
प्रह्लाद उवाच ।
न श्रेयः सततं तेजो न नित्यं श्रेयसी क्षमा ।
इति तात विजानीहि द्वयमेतदसंशयम् ॥ ६
यो नित्यं क्षमते तात बहून्दोषान्स विन्दति ।
भृत्याः परिभवन्त्येनमुदासीनास्तथाऽरयः ॥ ७
सर्वभूतानि चाप्यस्य न नमन्ते कदाचन ।
तस्मान्नित्यं क्षमा तात पण्डितैरपि वर्जिता ॥ ८
अवज्ञाय हितं भृत्या भजन्ते बहुदोषताम् ।
आदातुं चास्य वित्तानि प्रार्थयन्तेऽल्पचेतसः ॥९
यानं वस्त्राण्यलंकाराञ्शयनान्यासनानि च ।
भोजनान्यथ पानानि सर्वोपकरणानि च ॥ १०
आददीरन्नधिकृता यथाकाममचेतसः ।
प्रदिष्टानि च देयानि न दद्युर्भर्तृशासनात् ॥११
न चैनं भर्तृपूजाभिः पूजयन्ति कदाचन ।
अवज्ञानं हि लोकेऽस्मिन्मरणादपि गर्हितम् ॥ १२
क्षमिणं तादृशं तात ब्रुवन्ति कटुकान्यपि ।
प्रेष्याः पुत्राश्च भृत्याश्च तथोदासीनवृत्तयः ॥ १३
अप्यस्य दारानिच्छन्ति परिभूय क्षमावतः ।
दाराश्चास्य प्रवर्तन्ते यथाकाममचेतसः ॥ १४
तथा च नित्यमुदिता यदि नाल्पमपीश्वरात् ।
दण्डमर्हन्ति दुष्यन्ति दुष्टाश्चाप्यपकुर्वते ॥ १५
'अकृतोपद्रवः कश्चिन्महानपि न पूज्यते ।
पूजयन्ति नरा नागान्न तार्क्ष्यं नागघातिनम् ॥' १६
एते चान्ये च बहवो नित्यं दोषाः क्षमावताम् ।
अथ वैरोचने दोषानिमान्विद्ध्यक्षमावताम् ॥ १७
अस्थाने यदि वा स्थाने सततं रजसावृतः ।
क्रुद्धो दण्डान्प्रणयति विविधान्स्वेन तेजसा ॥ १८
मित्रैः सह विरोधं च प्राप्नुते तेजसाऽऽवृतः ।
आप्नोति द्वेष्यतां चैव लोकात्स्वजनतस्तथा ॥ १९
सोऽवमानादर्थहानिमुपालम्भमनादरम् ।
संतापद्वेषमोहांश्च शत्रूंश्च लभते नरः ॥ २०
क्रोधाद्दण्डान्मनुष्येषु विविधान्पुरुषोऽनयात् ।
भ्रश्यते शीघ्रमैश्वर्यात्प्राणेभ्यः स्वजनादपि ॥ २१
योपकर्तॄंश्च हर्तॄंश्च तेजसैवोपगच्छति ।
तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव ॥ २२
यस्मादुद्विजते लोकः कथं तस्य भवो भवेत् ।
अन्तरं तस्य दृष्ट्वैव लोको विकुरुते ध्रुवम् ॥ २३
तस्मान्नात्युत्सृजेत्तेजो न च नित्यं मृदुर्भवेत् ।
कालेकाले तु संप्राप्ते मृदुस्तीक्ष्णोपि वा भवेत् २४
काले मृदुर्यो भवति काले भवति दारुणः ।
स वै सुखमवाप्नोति लोकेऽमुष्मिन्निहैव च ॥ २५
क्षमाकालांस्तु वक्ष्यामि शृणु मे विस्तरेण तान् ।
ये ते नित्यमसंत्याज्या यथा प्राहुर्मनीषिणः २६
पूर्वोपकारी यस्ते स्यादपराधे गरीयसि ।
उपकारेण तत्तस्य क्षन्तव्यमपराधिनः ॥ २७
अबुद्धिमाश्रितानां तु क्षन्तव्यमपराधिनाम् ।
न हि सर्वत्र पाण्डित्यं सुलभं पुरुषेण वै ॥ २८
अथ चेद्बुद्धिजं कृत्वा ब्रूयुस्ते तदबुद्धिजम् ।
पापान्स्वल्पेऽपि तान्हन्यादपराधे तथाऽनृजून् २९
सर्वस्यैकोपराधस्ते क्षन्तव्यः प्राणिनो भवेत् ।
द्वितीये सति वध्यस्तु स्वल्पेऽप्यपकृते भवेत् ३०
अजानता भवेत्कश्चिदपराधः कृतो यदि ।
क्षन्तव्यमेव तस्याहुः सुपरीक्ष्य परीक्षया ॥ ३१

आगतागमं प्राप्तरहस्यम् ॥ २ ॥ श्रेयः प्रशस्ततरम् । अत्र क्षमातेजसोर्मध्ये ॥ ४ ॥ अस्य एनम् ॥ ८ ॥ अधिकृताः अन्नपानादिसंरक्षणे नियुक्ताः । प्रदिष्टानि इदमस्मै देयमित्याज्ञापितानि ॥ ११ ॥ एनं क्षमिणम् । भर्तृपूजाभिः स्वाम्युचितमानेन ॥ १२ ॥ तेजसा क्रोधेन ॥ १८ ॥ उपालम्भं धिक्कारम् ॥ २० ॥ उपकर्तॄनिति च्छेदः । संधिरार्षः । उपकर्तॄन् कोशादिवृद्धिकरान् । हर्तॄन् चोरान् ॥ २२ ॥ भवः ऐश्वर्यम् । अन्तरं छिद्रम् ॥ २३ ॥ अबुद्धिं मौढ्यम् ॥ २८ ॥

मृदुना दारुणं हन्ति मृदुना हन्त्यदारुणम् ।
नासाध्यं मृदुना किंचित्तस्मात्तीव्रतरं मृदु ॥ ३२
देशकालौ तु संप्रेक्ष्य बलाबलमथात्मनः ।
अन्वीक्ष्य कारणं चैव कार्यं तेजः क्षमापि वा ॥'३३
नादेशकाले किंचित्स्याद्देशकालौ प्रतीक्षताम् ।
तथा लोकभयाच्चैव क्षन्तव्यमपराधितम् ॥ ३४
एत एवंविधाः कालाः क्षमायाः परिकीर्तिताः ।
अतोऽन्यथाऽनुवर्तत्सु तेजसः काल उच्यते ॥ ३५
तदहं तेजसः कालं तव मन्ये नराधिप ।
धार्तराष्ट्रेषु लुब्धेषु सततं चापकारिषु ॥ ३६
न हि कश्चित्क्षमाकालो विद्यतेऽद्य कुरून्प्रति ।
तेजसश्चागते काले तेज उत्स्रष्टुमर्हसि ॥ ३७
मृदुर्भवत्यवज्ञातस्तीक्ष्णादुद्विजते जनः ।
काले प्राप्ते द्वयं चैतद्यो वेद स महीपतिः ॥ ३८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

## एकोनत्रिंशोऽध्यायः ॥ २९ ॥

युधिष्ठिरेण द्रौपदींप्रति क्रोधे बहुदोषोद्भावनपूर्वकं क्रोधगर्हणम् ॥ १ ॥

'वैशंपायन उवाच ।
द्रौपद्या वचनं श्रुत्वा श्लक्ष्णाक्षरपदं शुभम् ।
उवाच द्रौपदीं राजा स्मयमानो युधिष्ठिरः ॥ १
कारणे भवती क्रुद्धा धार्तराष्ट्रस्य दुर्मतेः ।
येन क्रोधं महाप्राज्ञे बहुधा बहुमन्यसे ।
क्रोधमूलं हरं शत्रुं कारणैः शृणु तं मम ॥' २
युधिष्ठिर उवाच ।
क्रोधो हन्ता मनुष्याणां क्रोधो भावयिता पुनः ।
इति विद्धि महाप्राज्ञे क्रोधमूलौ भवाभवौ ॥ ३
यो हि संहरते क्रोधं भावस्तस्य सुशोभने ।
'यो न संहरते क्रोधं तस्याभावो भवत्युत ।
अभावकारणं तस्मात्क्रोधो भवति शोभने ॥' ४
यः पुनः पुरुषः क्रोधं नित्यं विसृजते शुभे ।
तस्याभावाय भवति क्रोधः परमदारुणः ॥ ५
क्रोधमूलो विनाशो हि प्रजानामिह दृश्यते ।
तत्कथं मादृशः क्रोधमुत्सृजेल्लोकनाशनम् ॥ ६
क्रुद्धः पापं नरः कुर्यात्क्रुद्धो हन्याद्गुरूनपि ।
क्रुद्धः परुषया वाचा श्रेयसोऽप्यवमन्यते ॥ ७
वाच्यावाच्ये हि कुपितो न प्रजानाति कर्हिचित् ।
नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते तथा ॥ ८
हिंस्यात्क्रोधादवध्यांस्तु वध्यान्संपूजयीत च ।
आत्मानमपि च क्रुद्धः प्रेषयेद्यमसादनम् ॥ ९
एतान्दोषान्प्रपश्यद्भिर्जितः क्रोधो मनीषिभिः ।
इच्छद्भिः परमं श्रेय इह चामुत्र चोत्तमम् ॥ १०
तं क्रोधं वर्जितं धीरैः कथमस्मद्विधश्चरेत् ।
एतद्द्रौपदि संस्मृत्य न मे मन्युः प्रवर्धते ॥ ११
आत्मानं च परांश्चैव त्रायते महतो भयात् ।
क्रुध्यन्तमप्रतिक्रुध्यन्द्वयोरेष चिकित्सकः ॥ १२
मूढो यदि क्लिश्यमानः क्रुध्यतेऽशक्तिमान्नरः ।
बलीयसां मनुष्याणां त्यजत्यात्मानमन्ततः ॥ १३
तस्यात्मानं संत्यजतो लोका नश्यन्त्यनात्मनः ।
तस्माद्द्रौपद्यशक्तस्य मन्योर्नियमनं स्मृतम् ॥ १४
विद्वांस्तथैव यः शक्तः क्लिश्यमानः प्रकुप्यति ।
स नाशयित्वा द्वेष्टारं परलोके न नन्दति ॥ १५
तस्माद्बलवता चैव दुर्बलेन च नित्यदा ।
क्षन्तव्यं पुरुषेणाहुरापत्स्वपि विजानता ॥ १६

अपकृते अपकारे ॥ ३० ॥ मृदुना साम्ना ॥ ३२ ॥ उत्स्रष्टुं प्रयोक्तुम् ॥ ३७ ॥ अष्टाविंशोऽध्यायः ॥ २८ ॥

भावयिता वर्धयिता । जितःसन्निति शेषः ॥ ३ ॥ पापं न कः कुर्यात् इति क. पाठः ॥ ७ ॥ चरेदाचरेत् ॥ ११ ॥ द्वयोरात्मपरयोः चिकित्सकः दोषापहर्ता । क्रुध्यन्तमप्रतिक्रुध्या-जयेल्लोकांश्च शाश्वतान् इति ख. पाठः ॥ १२ ॥ बलीयसामुपरि यदि अशक्तिमान् क्रुध्यते तर्हि आत्मानं देहं त्यजति । मनुष्याणामात्मनैव विपद्यते इति ख. पाठः । मनुष्याणां त्यजत्यात्मानमात्मना इति झ. पाठः ॥ १३ ॥ अनात्मनः अजितचित्तस्य ॥ १४ ॥

मन्योर्हि विजयं कृष्णे प्रशंसन्तीह साधवः ।
क्षमावतो जयो नित्यं साधोरिह सतां मतम् १७
सत्यं चानृततः श्रेयो नृशंसाच्चानृशंसता ।
तमेवं बहुदोषं तु क्रोधं सद्भिर्विवर्जितम् ।
मादृशो विसृजेत्तस्मात्सर्वलोकविनाशनम् ॥ १८
तेजस्वीति यमाहुर्वै पण्डिता दीर्घदर्शिनः ।
न क्रोधोऽभ्यन्तरस्तस्य भवतीति विनिश्चितम्१९
यस्तु क्रोधं समुत्पन्नं प्रज्ञया परिबाधते ।
तेजस्विनं तं विदुषो मन्यन्ते तत्त्वदर्शिनः ॥ २०
क्रुद्धो हि कार्यं सुश्रोणि न यथावत्प्रपश्यति ।
नाकार्यं न च मर्यादां नरः क्रुद्धोऽनुपश्यति २१
हन्त्यवध्यानपि क्रुद्धो गुरून्रूक्षैस्तुदत्यपि ।
तस्मात्तेजसि कर्तव्ये क्रोधो दूरात्प्रतिष्ठितः ॥ २२
दाक्ष्यं ह्यमर्षः शौर्यं च शीघ्रत्वमिति तेजसः ।
गुणाः क्रोधाभिभूतेन न शक्याः प्राप्तुमञ्जसा २३
क्रोधं त्यक्त्वा तु पुरुषः सम्यक्तेजोऽभिपद्यते ।
कालयुक्तं महाप्राज्ञैः क्रुद्धैस्तेजः सुदुर्लभम् ॥ २४
क्रोधस्त्वपण्डितैः शश्वत्तेज इत्यभिनिश्चितम् ।
रजस्तु लोकनाशाय विहितं मानुषान्प्रति ॥ २५
तस्माच्छश्वत्त्यजेत्क्रोधं पुरुषः सम्यगाचरन् ।
श्रेयान्स्वधर्मानपगो न क्रुद्ध इति निश्चितम् ॥ २६
यदि सर्वमबुद्धीनामतिक्रान्तमचेतसाम् ।
अतिक्रमो मद्विधस्य कथं स्वित्स्यादनिन्दिते २७
यदि न स्युर्मानुषेषु क्षमिणः पृथिवीसमाः ।
न स्यात्सन्धिर्मनुष्याणां क्रोधमूलो हि विग्रहः२८
अभिषक्तो ह्यभिषजेदाहन्याद्गुरुणा हतः ।
एवं विनाशो भूतानामधर्मः प्रथितो भवेत् ॥२९

रजः रजोगुणपरिणामः ॥ २५ ॥ स्वधर्मान् अपगः अपहाय गच्छतीति तथा । द्वितीयाया अलुगार्षः ॥ २६ ॥ सर्वं क्षमार्जवादिकम् । अबुद्धीनां मूढैः अतिक्रान्तं लङ्घितम् । अनिन्दिते प्रशस्ते विषये क्षमादौ ॥ २७ ॥ अभिषक्तः तापितः । अभिषजेत्तापयेत् ॥ २९ ॥ आक्रुष्टो वाचा ताडितः । हतोऽन्येनाभिगतः । हिंसितस्ताडितः ॥ ३० ॥ जन्म उत्पत्तिः । तत्रहेतुः । प्रजानां संधिः दम्पत्योः प्रीतिः । एवं संकुचिते लोके इति प्रजानां वृद्धिमूलं हि इति च. क. पाठः ॥ ३२ ॥ अभवाय अनैश्वर्याय ॥ ३३ ॥ जन्म प्रतिपद्यते । अन्यथा क्रोधप्राबल्ये

आक्रुष्टः पुरुषः सर्वं प्रत्याक्रोशेदनन्तरम् ।
प्रतिहन्याद्धतश्चैव तथा हिंस्याच्च हिंसितः ॥ ३०
हन्युर्हि पितरः पुत्रान्पुत्राश्चापि तथा पितॄन् ।
हन्युश्च पतयो भार्याः पतीन्भार्यास्तथैव च ॥३१
एवं संकुपिते लोके जन्म कृष्णे न विद्यते ।
प्रजानां सन्धिमूलं हि जन्म विद्धि शुभानने ॥ ३२
ताः क्षीयेरन्प्रजाः सर्वाः क्षिप्रं द्रौपदि तादृशाः ।
तस्मान्मन्युर्विनाशाय प्रजानामभवाय च ॥ ३३
यस्मात्तु लोके दृश्यन्ते क्षमिणः पृथिवीसमाः ।
तस्माज्जन्म च भूतानां भवश्च प्रतिपद्यते ॥ ३४
क्षन्तव्यं पुरुषेणेह सर्वापत्सु सुशोभने ।
क्षमावतो हि भूतानां जन्म चैव प्रकीर्तितम् ३५
आक्रुष्टस्ताडितः क्रुद्धः क्षमते यो बलीयसा ।
यश्च नित्यं जितक्रोधो विद्वानुत्तमपूरुषः ।
प्रभाववानपि नरस्तस्य लोकाः सनातनाः ॥ ३६
क्रोधनस्त्वल्पविज्ञानः प्रेत्य चेह च नश्यति ३७
अत्राप्युदाहरन्तीमा गाथा नित्यं क्षमावताम् ।
गीताः क्षमावतां कृष्णे काश्यपेन महात्मना ३८
क्षमा धर्मः क्षमा यज्ञः क्षमा वेदाः क्षमा श्रुतम् ।
यस्तमेवं विजानाति स सर्वं क्षन्तुमर्हति ॥ ३९
क्षमा ब्रह्म क्षमा सत्यं क्षमा भूतं च भावि च ।
क्षमा तपः क्षमा शौचं क्षमयेदं धृतं जगत् ॥ ४०
अति यज्ञविदां लोकान्क्षमिणः प्राप्नुवन्ति च ।
अति ब्रह्मविदां लोकानति चापि तपस्विनाम् ४१
अन्ये वै यजुषां लोकाः कर्मिणामपरे तथा ।
क्षमावतां ब्रह्मलोके लोकाः परमपूजिताः ॥ ४२
क्षमा तेजस्विनां तेजः क्षमा ब्रह्म तपस्विनाम् ।

पूर्ववयस्येव दम्पत्योर्नाशाज्जन्मासंभव इत्यर्थः ॥ ३४ ॥ बलीयसा आक्रुष्टस्ताडितो वाऽशक्तः क्षमते तथा यः प्रभाववानपि क्षमते तस्य लोका इत्यर्थः ॥ ३६ ॥ क्षमावतां गाथाः प्रशंसाः । क्षमावतां मध्ये महात्मना ॥ ३८ ॥ ब्रह्म ब्राह्मणजातिः । भूतं संचितं तपः भावि च क्षमैव रक्षति ॥ ४० ॥ अति अतिक्रम्य प्राप्नुवन्ति । तदूर्ध्वं पदमिति शेषः । ब्रह्मविदां वेदविदाम् ॥ ४१ ॥ यजुषां त्रेताग्निसाध्यकर्मवताम् । कर्मिणां वापीकूपादिधर्मवताम् ॥ ४२ ॥

क्षमा सत्यं सत्यवतां क्षमा यज्ञः क्षमा शमः ४३
तां क्षमां तादृशीं कृष्णे कथमस्मद्विधस्त्यजेत् ।
यत्र ब्रह्म च सत्यं च यज्ञा लोकाश्च धिष्ठिताः ॥
'इज्यन्ते यज्वनां लोकाः क्षमिणामपरे तथा ।'
क्षन्तव्यमेव सततं पुरुषेण विजानता ।
यदा हि क्षमते सर्वं ब्रह्म संपद्यते तदा ॥ ४५
क्षमावतामयं लोकः परश्चैव क्षमावताम् ।
इह सन्मानमृच्छन्ति परत्र च परां गतिम् ॥४६
येषां मन्युर्मनुष्याणां क्षमयाऽभिहतः सदा ।
तेषां परतरे लोकास्तस्मात्क्षान्तिः परा मता ॥४७
इति गीताः काश्यपेन गाथा नित्यं क्षमावताम् ।
श्रुत्वा गाथाः क्षमायास्त्वं तुष्य द्रौपदि मा क्रुधः॥
पितामहः शान्तनवः शमं संपूजयिष्यति ।
कृष्णश्च देवकीपुत्रः शमं संपूजयिष्यति ॥ ४९
आचार्यो विदुरः क्षत्ता शममेव वदिष्यतः ।
कृपश्च संजयश्चैव शममेव वदिष्यतः ॥ ५०
सोमदत्तो युयुत्सुश्च द्रोणपुत्रस्तथैव च ।
पितामहश्च नो व्यासः शमं वदति नित्यशः ॥५१
एतैर्हि राजा नियतं चोद्यमानः शमं प्रति ।
राज्यं दातेति मे बुद्धिर्न चेल्लोभान्नशिष्यति ५२
कालोऽयं दारुणः प्राप्तो भरतानामभूतये ।
निश्चितं मे सदैवैतत्पुरस्तादपि भामिनि ॥ ५३
सुयोधनो नार्हतीति क्षमा मामेव विन्दति ।
अर्हस्तत्राहमित्येवं तस्मान्मां विन्दते क्षमा ॥५४
एतदात्मवतां वृत्तमेष धर्मः सनातनः ।
क्षमा चैवानृशंस्यं च तत्कर्ताऽस्म्यहमञ्जसा ॥५५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

## त्रिंशोऽध्यायः ॥ ३० ॥

भर्तृव्यसनदर्शनदूनया द्रौपद्या युधिष्ठिरंप्रति धर्मादितोऽपि विधेरेव प्राबल्योपपादनम् ॥ १ ॥

द्रौपद्युवाच ।
नमो धात्रे विधात्रे च यौ मोहं चक्रतुस्तव ।
पितृपैतामहे राज्ये वोढव्ये तेऽन्यथा मतिः ॥ १
[कर्मभिश्चिन्तितो लोको गत्यांगत्यां पृथग्विधः ।
तस्मात्कर्माणि नित्यानि लोभान्मोक्षं यियासति ॥]
नेह धर्मानृशंस्याभ्यां न क्षान्त्या नार्जवेन च ।
पुरुषः श्रियमाप्नोति न घृणित्वेन कर्हिचित् ॥३
त्वां चेद्व्यसनमभ्यागादिदं भारत दुःसहम् ।
स त्वं नार्हसि नापीमे भ्रातरस्ते महौजसः ॥ ४
न हि तेऽध्यगमञ्जातु तदानीं नाद्य भारत ।
धर्मात्प्रियतरं किंचिदपि चेज्जीवितादपि ॥ ५
धर्मार्थमेव ते राज्यं धर्मार्थं जीवितं च ते ।
ब्राह्मणा गुरवश्चैव जानन्त्यपि च देवताः ॥ ६
भीमसेनार्जुनौ चोभौ माद्रेयौ च मया सह ।
त्यजेस्त्वमिति मे बुद्धिर्न तु धर्मं परित्यजेः ॥ ७
राजानं धर्मगोप्तारं धर्मो रक्षति रक्षितः ।
इति मे श्रुतमार्याणां त्वां तु मन्ये न रक्षति ॥८
त्यक्त्वाऽन्यान्हि नरव्याघ्र नित्यदा धर्म एव ते।
बुद्धिः सततमन्वेति छायेव पुरुषं निजा ॥ ९
नावमंस्था हि सदृशान्नावराञ्श्रेयसः कुतः ।
अवाप्य पृथिवीं कृत्स्नां न ते शृङ्गमवर्धत ॥ १०
स्वाहाकारैः स्वधाभिश्च पूजाभिरपि च द्विजान् ।
देवताश्च पितॄंश्चैव सततं पार्थ सेवसे ॥ ११
ब्राह्मणाः सर्वकामैस्ते सततं पार्थ तर्पिताः ।

---

तुष्य तुष्टा भव ॥ ४८ ॥ दाता दास्यति ॥ ५२ ॥ अभूतये नाशाय ॥ ५३ ॥ एकोनत्रिंशोऽध्यायः ॥ २९ ॥

धात्रे ईश्वराय । विधात्रे पूर्वकर्मणे ॥ १ ॥ चिन्तितः कल्पितो लोको भोगसाधनम् । गत्यांगत्यां ऊर्ध्वाधोमध्यमोत्तमाधमयोनिषु । नित्यानि अपरिहार्यफलानि । लोभात् मोहात् मोक्षं कर्मफलेभ्यो दुःखेभ्यो मुक्तिं यियासति प्राप्तुमिच्छति ॥ २ ॥ धर्मात्प्रियतरं नहि त्वं अध्यगमन् ज्ञातवन्तः किंतु जीवितादपि प्रियतरं धर्ममेवाध्यगमन् ॥ ५ ॥ शृङ्गं प्रभुत्वाभिमानः ॥ १० ॥

यतयो मोक्षिणश्चैव गृहस्थाश्चैव भारत ॥ १२
भुञ्जते रुक्मपात्रीभिर्यत्राहं परिचारिका ।
आरण्यकेभ्यो वन्यानि भोजनानि प्रयच्छसि ।
नादेयं ब्राह्मणेभ्यस्ते गृहे किंचन विद्यते ॥ १३
यदिदं वैश्वदेवान्ते सायं प्रातः प्रदीयते ।
तद्दत्त्वाऽतिथिभृत्येभ्यो राजञ्शिष्टेन जीवसि॥१४
इष्टयः पशुबन्धाश्च काम्यनैमित्तिकाश्च ये ।
वर्तन्ते पाकयज्ञाश्च सदा यज्ञाश्च तेऽनघ ॥ १५
अस्मिन्नपि महारण्ये विजने दस्युसेविते ।
राष्ट्रादपेत्य वसतो धर्मस्ते नावसीदति ॥ १६
अश्वमेधो राजसूयः पौण्डरीकोऽथ गोसवः ।
इष्टास्त्वया महायज्ञा बहवोऽन्ये सदक्षिणाः॥ १७
राजन्परीतया बुद्ध्या विषमेऽक्षपराजये ।
पार्थ मित्राणि चास्मांश्च वसूनि च पराजितः॥ १८
ऋजोर्मृदोर्वदान्यस्य धीमतः सत्यवादिनः ।
कथमक्षव्यसनजा बुद्धिरापतिता तव ॥ १९
अतीव मोह आयाति मनश्च परिदूयते ।
निशाम्य व्यसनं पार्थ तवेदमतिदुःसहम् ॥ २०
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ईश्वरस्य वशे लोकस्तिष्ठते नात्मनो यथा ॥ २१
धातैव खलु भूतानां सुखदुःखे प्रियाप्रिये ।
ददाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन् ॥ २२
यथा दारुमयीं योषां नरो धीरः समाहितः ।
इङ्गयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजाः ॥ २३
आकाश इव भूतानि व्याप्य सर्वाणि भारत ।
ईश्वरो विदधातीह कल्याणं यच्च पापकम् ॥ २४
शकुनिस्तन्तुबद्धो वा नीयतेऽयमनीश्वरः ।
ईश्वरस्य वशे तिष्ठन्नान्येषामात्मनः प्रभुः ॥ २५
मणिः सूत्र इव प्रोतो नस्योत इव गोवृषः ।
धातुरादेशमन्वेति तन्मयो हि तदर्पणः ॥ २६
नात्माधीनो मनुष्योऽयं कालं भजति कंचन ।
स्रोतसो मध्यमापन्नः कूलवृक्ष इव च्युतः ॥ २७
अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वर्गं नरकमेव च ॥ २८
यथा वायोस्तृणाग्राणि वशं यान्ति बलीयसः ।
धातुरेवं वशं यान्ति सर्वभूतानि भारत ॥ २९
आर्ये कर्मणि युञ्जानः पापे वा पुनरीश्वरः ।
व्याप्य भूतानि चरते न चायमिति लक्ष्यते ३०
हेतुमात्रमिदं धातुः शरीरं क्षेत्रसंज्ञितम् ।
येन कारयते कर्म शुभाशुभफलं विभुः ॥ ३१
पश्य मायाप्रभावोऽयमीश्वरेण यथा कृतः ।
यो हन्ति भूतैर्भूतानि मोहयित्वाऽऽत्ममायया३२
अन्यथा परिदृष्टानि मुनिभिस्तत्त्वदर्शिभिः ।
अन्यथा परिवर्तन्ते वेगा इव नभस्वतः ॥ ३३
अन्यथैव हि वर्तन्ते पुरुषास्तानि तानि च ।
अन्यथैव प्रभुस्तानि करोति विकरोति च ॥ ३४
यथा काष्ठेन वा काष्ठमश्मानं चाश्मना पुनः ।
अयसा चाप्ययश्छिन्द्यान्निर्विचेष्टमचेतनम् ॥३५
एवं स भगवान्देवः स्वयंभूः प्रपितामहः ।
निहन्ति भूतैर्भूतानि छद्म कृत्वा युधिष्ठिर ॥ ३६
संप्रयोज्य वियोज्यायं कामकारकरः प्रभुः ।
क्रीडते भगवान्भूतैर्बालः क्रीडनकैरिव ॥ ३७
न मातृपितृवद्राजन्धाता भूतेषु वर्तते ।
रोषादिव प्रवृत्तोऽयं यथाऽयमितरो जनः ॥ ३८
आर्याञ्शीलवतो दृष्ट्वा ह्रीमतो वृत्तिकर्शितान् ।
अनार्यान्सुखिनश्चैव विह्वलानिव चिन्तये ॥ ३९
तवेमामापदं दृष्ट्वा समृद्धिं च सुयोधने ।
धातारं गर्हये पार्थ विषमं योऽनुपश्यति ॥ ४०
आर्यशास्त्रातिगे क्रूरे लुब्धे धर्मापचायिनि ।
धार्तराष्ट्रे श्रियं दत्त्वा धाता किं फलमश्नुते ॥४१

ते त्वया ॥ १२ ॥ पाकयज्ञा गृह्याग्निसाध्या इष्टयः ॥ १५ ॥ परीतया विपरीतया ॥ १८ ॥ ऋजोरवक्रस्य । मृदोर्दयालोः ॥ १९ ॥ धाता ईश्वरः । तथैव खलु इति क. पाठः । शुक्रं प्राक्कर्मबीजम् । उच्चरन्नुत्कर्षेणानुसरन् ॥ २२ ॥ अन्तर्बहिर्व्याप्तौ आकाशदृष्टान्तः । भूतानि जरायुजादीनि ॥ २४ ॥ बद्धो वा बद्धइव ॥ २५ ॥ नसि नासिकायाम् । नस्यं नासासूत्रं तेन वा ओतः प्रोतः ॥ २६ ॥ संप्रयोज्य संयोगं कृत्वा कामकार इच्छा तयैव करोतीति कामकारकरः । क्रीडनकैः सारीप्रभृतिभिः ॥ ३७ ॥

कर्म चेत्कृतमन्वेति कर्तारं नान्यमृच्छति ।
कर्मणा तेन पापेन लिप्यते नूनमीश्वरः ॥ ४२

अथ कर्मकृतं पापं न चेत्कर्तारमृच्छति ।
कारणं बलमेवेह जनाञ्शोचामि दुर्बलान् ॥ ४३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

---

## एकत्रिंशोऽध्यायः ॥ ३१ ॥

युधिष्ठिरेण द्रौपदींप्रति धर्मस्य साफल्योपपादनम् ॥ १ ॥

युधिष्ठिर उवाच ।
वल्गु चित्रपदं श्लक्ष्णं याज्ञसेनि त्वया वचः ।
उक्तं तच्छ्रुतमस्माभिर्नास्तिक्यं तु प्रभाषसे ॥ १
नाहं धर्मफलाकाङ्क्षी राजपुत्रि चराम्युत ।
ददामि देयमित्येव यजे यष्टव्यमित्युत ॥ २
अस्तु वाऽत्र फलं मा वा कर्तव्यं पुरुषेण यत् ।
गृहे निवसता कृष्णे यथाशक्ति करोमि तत् ॥३
धर्मं चरामि सुश्रोणि न धर्मफलकारणात् ।
आगमाननतिक्रम्य सतां वृत्तमवेक्ष्य च ॥ ४
धर्म एव मनः कृष्णे स्वभावाच्चैव मे धृतम् ।
[धर्मवाणिज्यको हीनो जघन्यो धर्मवादिनाम्]५
न धर्मफलमाप्नोति यो धर्मं दोग्धुमिच्छति ।
यश्चैनं शङ्कते कृत्वा नास्तिक्यात्पापचेतनः ॥ ६
अतिवादान्मदाच्चैव मा धर्ममभिशङ्कथाः ।
धर्मातिशङ्की पुरुषस्तिर्यग्गतिपरायणः ॥ ७
धर्मो यस्यातिशङ्क्यः स्यादार्षं वा दुर्बलात्मनः ।
वेदाच्छूद्र इवापेयात्स लोकादजरामरात् ॥ ८
वेदाध्यायी धर्मपरः कुले जातो मनस्विनि ।
स्थविरेषु स योक्तव्यो राजभिर्धर्मचारिभिः ॥ ९
पापीयान्स हि शूद्रेभ्यस्तस्करेभ्यो विशिष्यते ।
शास्त्रातिगो मन्दबुद्धिर्यो धर्ममतिशङ्कते ॥ १०
प्रत्यक्षं हि त्वया दृष्ट ऋषिर्गच्छन्महातपाः ।
मार्कण्डेयोऽप्रमेयात्मा धर्मेण चिरजीविता ॥ ११
व्यासो वसिष्ठो मैत्रेयो नारदो लोमशः शुकः ।
अन्ये च ऋषयः सर्वे धर्मेणैव सुचेतसः ॥ १२
प्रत्यक्षं पश्यसि ह्येतान्दिव्ययोगसमन्वितान् ।
शापानुग्रहणे शक्तान्देवेभ्योऽपि गरीयसः ॥ १३
एते हि धर्ममेवादौ वर्णयन्ति सदाऽनघे ।
कर्तव्यममरप्रख्याः प्रत्यक्षागमबुद्धयः ॥ १४
अतो नार्हसि कल्याणि धातारं धर्ममेव च ।
रजोमूढेन मनसा क्षेप्तुं शङ्कितुमेव च ॥ १५
उन्मत्तान्मन्यते बालः सर्वानागतनिश्चयान् ।
धर्मातिशङ्की नान्यस्मिन्प्रमाणमधिगच्छति ॥१६
आत्मप्रमाण उन्नद्धः श्रेयसो ह्यवमन्यते ।
इन्द्रियप्रीतिसंबद्धं यदिदं लोकसाक्षिकम् ।
एतावन्मन्यते बालो मोहमन्यत्र गच्छति ॥ १७
प्रायश्चित्तं न तस्यास्ति यो धर्ममतिशङ्कते ।
ध्यायन्स कृपणः पापो न लोकान्प्रतिपद्यते॥१८
प्रमाणाद्धि निवृत्तो हि वेदशास्त्रार्थनिन्दकः ।
कामलोभानुगो मूढो नरकं प्रतिपद्यते ॥ १९
यस्तु नित्यं कृतमतिर्धर्ममेवाभिपद्यते ।
अशङ्कमानः कल्याणि सोऽमुत्रानन्त्यमश्नुते ॥२०
आर्षं प्रमाणमुत्क्राम्य धर्मं न प्रतिपालयन् ।
सर्वशास्त्रातिगो मूढः शं जन्मसु न विन्दति ॥ २१
यस्य नार्षं प्रमाणं स्याच्छिष्टाचारश्च भामिनि ।
न वै तस्य परो लोको नायमस्तीति निश्चयः २२
शिष्टैराचरितं धर्मं कृष्णे मास्मातिशङ्कथाः ।
पुराणमृषिभिः प्रोक्तं सर्वज्ञैः सर्वदर्शिभिः ॥ २३

---

कृतं कर्म यदि कर्तारमेव गच्छति नत्वन्यं तर्हि कारयितृत्वादीश्वरोपि पापेन लिप्येतैवेत्यर्थः ॥ ४२ ॥ त्रिंशोऽध्यायः ॥ ३० ॥

वल्गु शोभनम् । श्लक्ष्णं सुकुमारम् । नास्तिक्यं वेदविद्विष्टम् ॥ १ ॥ दोषो दुर्बोध आत्मन इति ट. पाठः । अदोषो दुर्बलात्मनः इति ध. पाठः ॥८॥ मूढ आजन्म स न नन्दतीति ट. पाठः । आजन्मसु न नन्दतीति ध. पाठः । आत्मानं स विनश्यतीति क. पाठः ॥ २१ ॥

धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम् ।
सैव नौः सागरस्येव वणिजः पारमिच्छतः ॥ २४
अफलो यदि धर्मः स्याच्चरितो धर्मचारिभिः ।
अप्रतिष्ठे तमस्येतज्जगन्मज्जेदनिन्दिते ॥ २५
निर्वाणं नाधिगच्छेयुर्जीवेयुः पशुजीविकाम् ।
विघातेनैव युज्येयुर्न चार्थं कंचिदाप्नुयुः ॥ २६
तपश्च ब्रह्मचर्यं च यज्ञः स्वाध्याय एव च ।
दानमार्जवमेतानि यदि स्युरफलानि वै ॥ २७
नाचरिष्यन्परे धर्मं परे परतरेऽपि च ।
विप्रलम्भोऽयमत्यन्तं यदि स्युरफलाः क्रियाः २८
ऋषयश्चैव देवाश्च गन्धर्वासुरराक्षसाः ।
ईश्वराः कस्य हेतोस्ते चरेयुर्धर्ममादृताः ॥ २९
फलदं त्विह विज्ञाय धातारं श्रेयसि स्थितम् ।
धर्मं तेऽव्यचरन्कृष्णे स हि धर्मः सनातनः ॥३०
स चायं सफलो धर्मो न धर्मोऽफल उच्यते ।
दृश्यन्तेऽपि हि विद्यानां फलानि तपसां तथा ३१
त्वय्येतद्वै विजानीहि जन्म कृष्णे यथाश्रुतम् ।
वेत्थ चापि यथा जातो धृष्टद्युम्नः प्रतापवान् ३२
एतावदेव पर्याप्तमुपमानं शुचिस्मिते ।
कर्मणां फलमस्तीति धीरोऽल्पेनापि तुष्यति ॥३३
बहुनाऽपि ह्यविद्वांसो नैव तुष्यन्त्यबुद्धयः ।
तेषां न धर्मजं किंचित्प्रेत्य कर्मास्ति शर्म वा ३४
कर्मणामुत पुण्यानां पापानां च फलोदयः ।
प्रभवश्चाप्ययश्चैव देवगुह्यानि भामिनि ॥ ३५
नैतानि वेद यः कश्चिन्मुह्यन्त्यत्र प्रजा इमाः ।
[अपि कल्पसहस्रेण न स श्रेयोऽधिगच्छति] ३६
रक्ष्याण्येतानि देवानां गूढमाया हि देवताः ।
कृशाङ्गाः सुव्रताश्चैव तपसा दग्धकिल्बिषाः ।
प्रसन्नैर्मानसैर्युक्ताः पश्यन्त्येतानि वै द्विजाः॥३७
न फलादर्शनाद्धर्मः शङ्कितव्यो न देवताः ।
यष्टव्यं च प्रयत्नेन दातव्यं चानसूयता ॥ ३८
कर्मणां फलमस्तीह तथैतद्धर्मशासनम् ।
ब्रह्मा प्रोवाच पुत्राणां यदृषिर्वेद काश्यपः ॥ ३९
तस्मात्ते संशयः कृष्णे नीहार इव नश्यतु ।
विमृश्य सर्वमस्तीति नास्तिक्यं भावमुत्सृज ॥४०
ईश्वरं चापि भूतानां धातारं मा च वै क्षिप ।
शिक्षस्वैनं नमस्वैनं मा तेऽभूद्बुद्धिरीदृशी ॥ ४१
यस्य प्रसादात्तद्भक्तो मर्त्यो गच्छत्यमर्त्यताम् ।
उत्तमां देवतां कृष्णे मातिवोचः कथंचन ॥ ४२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

## द्वात्रिंशोऽध्यायः ॥ ३२ ॥

युधिष्ठिरंप्रति द्रौपद्या ब्राह्मणोक्तबृहस्पतिनीतिकथनम् ॥ १ ॥

द्रौपद्युवाच ।
नावमन्ये न गर्हे च धर्मं पार्थ कथंचन ।
ईश्वरं कुत एवाहमवमंस्ये प्रजापतिम् ॥ १
आर्ताऽहं प्रलपामीदमिति मां विद्धि भारत ।
भूयश्च विलपिष्यामि सुमनास्त्वं निबोध मे ॥ २
कर्म खल्विह कर्तव्यं जातेनामित्रकर्शन ।
अकर्माणो हि जीवन्ति स्थावरा नेतरे जनाः॥३
आमातृस्तन्यपानाच्च यावच्छय्योपसर्पणम् ।
जङ्गमाः कर्मणा वृत्तिमाप्नुवन्ति युधिष्ठिर ॥ ४
जङ्गमेषु विशेषेण मनुष्या भरतर्षभ ।
इच्छन्ति कर्मणा वृत्तिमवाप्तुं प्रेत्य चेह च ॥ ५
उत्थानमभिजानन्ति सर्वभूतानि भारत ।
प्रत्यक्षं फलमश्नन्ति कर्मणां लोकसाक्षिकम् ॥६
पश्यन्तः स्वं समुत्थानमुपजीवन्ति जन्तवः ।
अपि धाता विधाता च यथाऽयमुदके बकः ॥ ७
[अकर्मणां वै भूतानां वृत्तिः स्यान्न हि काचन ।

स वै नौः सागरस्येवेति ट. पाठः ॥ २४ ॥

एकत्रिंशोऽध्यायः ॥ ३१ ॥

तदेवाभिप्रपद्येत न विहन्यात्कदाचन ॥] ८
स्वकर्म कुरु माहासीः कर्मणा भव दंशितः ।
कृत्यं हि योऽभिजानाति सहस्रे सोऽस्ति नास्ति वा ॥
तस्य चापि भवेत्कार्यं विवृद्धौ रक्षणे तथा ।
भक्ष्यमाणो ह्यनावापः क्षीयेत हिमवानपि ॥ १०
उत्सीदेरन्प्रजाः सर्वा न कुर्युः कर्म चेद्यदि ।
[तथा ह्येता न वर्धेरन्कर्म चेदफलं भवेत् ॥] ११
दृष्ट्वाऽपि च फलं कर्म पश्यामः कुर्वतो जनान् ।
नान्यथा ह्यपि जानन्ति वृत्तिं लोकाः कथंचन ॥
यश्च दिष्टपरो लोके यश्चापि हठवादकः ।
उभावपि शठावेतौ कर्मबुद्धिः प्रशस्यते ॥ १३
यो हि दिष्टमुपासीत निर्विचेष्टः सुखं स्वपन् ।
अवसीदेत्सुदुर्बुद्धिरामो घट इवोदके ॥ १४
तथैव हठबुद्धिर्यः शक्तः कर्मण्यकर्मकृत् ।
आसीत न चिरं जीवेदनाथ इव दुर्बलः ॥ १५
अकस्मादिह यः कश्चिदर्थं प्राप्नोति पूरुषः ।
तं हठेनेति मन्यन्ते स हि यत्नो न कस्यचित् ॥
यश्चापि कश्चित्पुरुषो दिष्टं नाम भजत्युत ।
दैवेन विधिना पार्थ तद्दैवमिति निश्चितम् ॥ १७
यत्तावत्कर्मणा किंचित्फलमाप्नोति पूरुषः ।
प्रत्यक्षं चक्षुषा दृष्टं तत्पौरुषमिति श्रुतम् ॥ १८
स्वभावतः प्रवृत्तो यः प्राप्नोत्यर्थं न कारणात् ।
तत्स्वभावात्मकं विद्धि फलं पुरुषसत्तम ॥ १९
एवं हठाच्च दैवाच्च स्वभावात्कर्मणस्तथा ।
यानि प्राप्नोति पुरुषस्तत्फलं पूर्वकर्मणाम् ॥ २०
धातापि हि स्वकर्मैव तैस्तैर्हेतुभिरीश्वरः ।
विदधाति विभज्येह फलं पूर्वकृतं नृणाम् ॥ २१
यद्धि यः पुरुषः किंचित्कुरुते वै शुभाशुभम् ।
तद्धातृविहितं विद्धि पूर्वकर्मफलोदयम् ॥ २२
कारणं तस्य देहोऽयं धातुः कर्मणि कर्मणि ।
स यथा प्रेरयत्येनं तथाऽयं कुरुतेऽवशः ॥ २३
तेषुतेषु हि कृत्येषु विनियोक्ता महेश्वरः ।
सर्वभूतानि कौन्तेय कारयत्यवशान्यपि ॥ २४
मनसाऽर्थान्विनिश्चित्य पश्चात्प्राप्नोति कर्मणा ।
बुद्धिपूर्वं स्वयं वीर पुरुषस्तत्र कारणम् ॥ २५
संख्यातुं नैव शक्यानि कर्माणि पुरुषर्षभ ।
अगारनगराणां हि सिद्धिः पुरुषहैतुकी ॥ २६
तिले तैलं गवि क्षीरं काष्ठे पावकमन्ततः ।
एवं धीरो विजानीयादुपायं चास्य सिद्धये ॥ २७
ततः प्रवर्तते पश्चात्कारणेष्वस्य सिद्धये ।
तां सिद्धिमुपजीवन्ति कर्मणामिह जन्तवः ॥ २८
कुशलेन कृतं कर्म कर्त्रा साधु स्वनुष्ठितम् ।
इदं त्वकुशलेनेति विशेषादुपलभ्यते ॥ २९
इष्टापूर्तफलं न स्यान्न शिष्यो न गुरुर्भवेत् ।
पुरुषः कर्मसाध्येषु स्याच्चेदयमकारणम् ॥ ३०
कर्तृत्वादेव पुरुषः कर्मसिद्धौ प्रशस्यते ।
असिद्धौ निन्द्यते चापि कर्मनाशः कथं त्विह ॥ ३१
सर्वमेव हठेनैके दैवेनैके वदन्त्युत ।
पुंसः प्रयत्नजं केचिद्दैवमेतद्विशिष्यते ॥ ३२
न चैवैतावता कार्यं मन्यन्त इति चापरे ।
अस्ति सर्वमदृश्यं तु दिष्टं चैव तथा हठः ॥ ३३
दृश्यते हि हठाच्चैव दिष्टाच्चार्थस्य संततिः ।
किंचिद्दैवाद्धठात्किंचित्किंचिदेव स्वकर्मतः ॥ ३४
पुरुषः फलमाप्नोति चतुर्थं नात्र कारणम् ।
कुशलाः प्रतिजानन्ति ये वै तत्त्वविदो जनाः ॥ ३५
तथैव धाता भूतानामिष्टानिष्टफलप्रदः ।
यदि न स्यान्न भूतानां कृपणो नाम कश्चन ॥ ३६
यंयमर्थमभिप्रेप्सुः कुरुते कर्म पूरुषः ।
तत्तत्सफलमेव स्याद्यदि न स्यात्पुरा कृतम् ॥ ३७
त्रिद्वारामर्थसिद्धिं तु नानुपश्यन्ति ये नराः ।
तथैवानर्थसिद्धिं च यथा लोकास्तथैव ते ॥ ३८
कर्तव्यमेव कर्मेति मनोरेष विनिश्चयः ।
एकान्तेन ह्यनीहोऽयं वर्ततेऽस्मासु संप्रति ॥ ३९
कुर्वतो हि भवत्येव प्रायेणेह युधिष्ठिर ।

अपिवाह्य फलं कर्मेति ट. ध. पाठः ॥ १२ ॥ यत्नवान्कर्मणेति ध. पाठः ॥ १८ ॥ त्रैधमेतन्निरुच्यते इति झ. पाठः ॥ ३२ ॥ दैवशिष्टं तथा हठमिति क. पाठः । दैवादिष्टं तथा हठ इति ठ. पाठः ॥ ३३ ॥ एकान्ते नह्यनर्थोऽयमिति क. ध. पाठः ॥ ३९ ॥

एकान्तफलसिद्धिं तु न विन्दत्यलसः क्वचित् ॥४०
असंभवे त्वस्य हेतुः प्रायश्चित्तं तु लक्ष्यते ।
कृते कर्मणि राजेन्द्र तथाऽनृण्यमवाप्नुते ॥ ४१
अलक्ष्मीराविशत्येनं शयानमलसं नरम् ।
निःसंशयं फलं लब्ध्वा दक्षो भूतिमुपाश्नुते ॥ ४२
अनर्थं संशयावस्थं गृणन्त्यामुक्तसंशयाः ।
धीरा नराः कर्मरता न तु निःसंशयाः क्वचित् ४३
एकान्ते नह्यनर्थोऽयं वर्ततेऽस्मासु सांप्रतम् ।
स तु निःसंशयं न स्यात्त्वयि कर्मण्यवस्थिते ॥ ४४
अथवाऽसिद्धिरेव स्यान्महिमा तु तदेव ते ।
वृकोदरस्य बीभत्सोर्भ्रात्रोश्च यमयोरपि ॥ ४५
अन्येषां कर्म सफलमस्माकमपि वा पुनः ।
विप्रकर्षेण बुद्ध्येत कृतकर्मा यथा फलम् ॥ ४५
पृथिवीं लाङ्गलेनेह कृष्ट्वा बीजं वपत्युत ।
आस्तेऽथ कर्षकस्तूष्णीं पर्जन्यस्तत्र कारणम् ॥ ४७
वृष्टिश्चेन्नानुगृह्णीयादनेनास्तत्र कर्षकः ।
यदन्यः पुरुषः कुर्यात्तत्कृतं सफलं मया ॥ ४८
तच्चेदं फलमस्माकमपराधो न मे क्वचित् ।
इति धीरोऽन्ववेक्ष्यैव नात्मानं तत्र गर्हयेत् ॥४९
कुर्वतो नार्थसिद्धिर्मे भवतीति ह भारत ।
निर्वेदो नात्र गन्तव्यो द्वावन्तौ यस्य कर्मणः ५०
सिद्धिर्वाऽप्यथवाऽसिद्धिरप्रवृत्तिरतोऽन्यथा ।
बहूनां समवाये हि भावानां कर्म सिध्यति ५१
गुणाभावे फलं न्यूनं भवत्यफलमेव च ।
अनारम्भे हि न फलं न गुणो दृश्यते क्वचित् ॥५२
देशकालावुपायांश्च मङ्गलं स्वस्तिसिद्धये ।
युनक्ति मेधया धीरो यथायोगं यथाबलम् ॥५३
अप्युपायेन तत्कार्यमुपदेष्टा पराक्रमः ।
भूयिष्ठं कर्मयोगेषु सर्व एव पराक्रमः ॥ ५४
यत्र धीमानवेक्षेत श्रेयांसं बहुभिर्गुणैः ।
साम्नैवार्थं ततो लिप्सेत्कर्म चास्मै प्रयोजयेत् ५५
व्यसनं नाभिकाङ्क्षेत विनाशं वा युधिष्ठिर ।
अपि सिन्धोर्गिरेर्वाऽपि किं पुनर्मर्त्यधर्मिणः ५६
उत्थानयुक्तः सततं परेषामन्तरैषणे ।
आनृण्यमाप्नोति नरः परस्यात्मन एव च ॥ ५७
न त्वेवात्माऽवमन्तव्यः पुरुषेण कदाचन ।
न ह्यात्मपरिभूतस्य भूतिर्भवति शोभना ॥ ५८
एवं संस्थितिका सिद्धिरियं लोकस्य भारत ।
चित्रा सिद्धिगतिः प्रोक्ता कालावस्थाविभागशः ॥
ब्राह्मणं मे पिता पूर्वं वासयामास पण्डितम् ।
सर्वं चार्थमिमं प्राह पित्रे मे भरतर्षभ ॥ ६०
नीतिं बृहस्पतिप्रोक्तां भ्रातॄन्मेऽग्राहयत्पुरा ।
तेषां सकाशादश्रौषमहमेतां तदा गृहे ॥ ६१
स मां राजन्कर्मवतीमागतामाह सान्त्वयन् ।
शुश्रूषमाणामासीनां पितुरङ्के युधिष्ठिर ॥ ६२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

## त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

भीमेन युधिष्ठिरंप्रति नीतिव्युत्पादनपूर्वकं युद्धेन राज्याहरणकर्तव्यत्वोक्तिः ॥ १ ॥

वैशंपायन उवाच ।
याज्ञसेन्या वचः श्रुत्वा भीमसेनो ह्यमर्षणः ।
निश्वसन्नुपसंगम्य क्रुद्धो राजानमब्रवीत् ॥ १
राजन्सत्पदवीं धर्म्यां व्रज सत्पुरुषोचिताम् ।
धर्मकामार्थहीनानां किं नो वस्तुं तपोवने ॥ २
नैव धर्मेण तद्राज्यं नार्जवेण न चौजसा ।
अक्षकूटमधिष्ठाय हृतं दुर्योधनेन वै ॥ ३
गोमायुनेव सिंहानां दुर्बलेन बलीयसाम् ।

संस्थितिका ईदृग्व्यवस्थावती सिद्धिः फलसिद्धिः ॥ ५९ ॥ कर्मवतीमागतां किंचित्कार्योद्देशेन पितुरन्तिके आगताम् ॥ ६२ ॥ द्वात्रिंशोऽध्यायः ॥ ३२ ॥

किंप्रयोजनमिति शेषः । राज्यस्यपदवीमिति झ. ठ. पाठः ॥ २ ॥ कूटं कपटम् ॥ ३ ॥

आमिषं विघसाशेन तद्वद्राज्यं हि नो हृतम् ॥४
धर्मलेशप्रतिच्छन्नः प्रभवं धर्मकामयोः ।
अर्थमुत्सृज्य किं राजन्दुःखेन परितप्यसे ॥ ५
भवतोऽनुविधानेन राज्यं नः पश्यतां हृतम् ।
अहार्यमपि शक्रेण गुप्तं गाण्डीवधन्वना ॥ ६
कुणीनामिव बिल्वानि पङ्गूनामिव धेनवः ।
हृतमैश्वर्यमस्माकं जीवतां भवतः कृते ॥ ७
भवतः प्रियमित्येवं महद्व्यसनमीदृशम् ।
धर्मकामे प्रतीतस्य प्रतिपन्नाः स्म भारत ॥ ८
कर्शयामः स्वमित्राणि नन्दयामश्च शात्रवान् ।
आत्मानं भवतः शास्त्रैर्नियम्य भरतर्षभ ॥ ९
यद्वयं न तदैवैतान्धार्तराष्ट्रान्निहन्म हि ।
भवतः शास्त्रमादाय तन्नस्तपति दुष्कृतम् ॥ १०
अथैनामन्ववेक्षस्व मृगचर्यामिवात्मनः ।
अवीराचरितां राजन्नबलस्थैर्निषेविताम् ॥ ११
यां न कृष्णो न बीभत्सुर्नाभिमन्युर्न सृञ्जयाः ।
न चाहमभिनन्दामि न च माद्रीसुतावुभौ ॥१२
भवान्धर्मो धर्म इति सततं व्रतकर्शितः ।
कच्चिद्राजन्न निर्वेदादापन्नः क्लीबजीविकाम् ॥१३
दुर्मनुष्या हि निर्वेदमफलं सर्वघातकम् ।
अशक्ताः श्रियमाहर्तुमात्मनः कुर्वते प्रियम् ॥१४
स भवान्दृष्टिमाञ्शक्तः पश्यन्नस्मासु पौरुषम् ।
आनृशंस्यपरो राजन्नात्मार्थमवबुध्यसे ॥ १५
अस्मानमी धार्तराष्ट्राः क्षममाणानहिंसतः ।
अशक्तानेव मन्यन्ते तद्दुःखं नाहवे वधः ॥ १६
तत्र चेद्युध्यमानानामजिह्ममनिवर्तिनाम् ।
सर्वशो हि वधः श्रेयान्प्रेत्य लोकांल्लभेमहि ॥१७
अथवा वयमेवैतान्निहत्य भरतर्षभ ।
आददीमहि गां सर्वां तथापि श्रेय एव नः ॥१८
सर्वथा कार्यमेतन्नः स्वधर्ममनुतिष्ठताम् ।
काङ्क्षतां विपुलां कीर्तिं वैरं प्रतिचिकीर्षताम् ॥१९
आत्मार्थं युध्यमानानां जीविते कृत्यलक्षणे ।
अन्यैरपि हृते राज्ये प्रशंसैव न गर्हणा ॥ २०
कर्शनार्थो हि यो धर्मो विप्राणामात्मनस्तथा ।
व्यसनं नाम तद्राजन्न धर्मः स कुवर्त्मतत् ॥२१
सर्वथा धर्मनित्यं तु पुरुषं धर्मदुर्बलम् ।
जहतस्तात धर्मार्थौ प्रेतं दुःखसुखे यथा ॥ २२
यस्य धर्मो हि धर्मार्थं क्लेशभाङ्न स पण्डितः ।
न स धर्मस्य वेदार्थं सूर्यस्यान्धः प्रभामिव ॥२३
यस्य चार्थार्थ एवार्थः स च नार्थस्य कोविदः ।
रक्षयते भृतकः पुण्यं यथा स्यात्तादृगेव सः ॥२४
अतिवेलं हि योऽर्थार्थी नेतरावनुतिष्ठति ।
स वध्यः सर्वभूतानां ब्रह्महेव जुगुप्सितः ॥ २५
सततं यश्च कामार्थी नेतरावनुतिष्ठति ।
मित्राणि तस्य नश्यन्ति धर्मार्थाभ्यां च हीयते २६
तस्य धर्मार्थहीनस्य कामान्ते निधनं ध्रुवम् ।
कामतो रममाणस्य मीनस्येवाम्भसः क्षये ॥ २७
तस्माद्धर्मार्थयोर्नित्यं न प्रमाद्यन्ति पण्डिताः ।
प्रकृतिः सा हि कामस्य पावकस्यारणिर्यथा ॥२८
सर्वथा धर्ममूलोऽर्थो धर्मश्चार्थपरिग्रहः ।
इतरेतरयोर्नीतौ विद्धि मेघोदधी यथा ॥ २९
द्रव्यार्थस्पर्शसंयोगे या प्रीतिरुपजायते ।
स कामश्चित्तसंकल्पः शरीरं नास्य दृश्यते ॥३०
अर्थार्थी पुरुषो राजन्बृहन्तं धर्ममिच्छति ।

---

विघसो भूतबलिशेषः श्वकाकादियोग्यस्तद्भक्षकेण शुनकेनेत्यर्थः ॥ ४ ॥ धर्मलेशः प्रतिज्ञापालनजस्तेन प्रतिच्छन्न आवृतः । अर्थं राज्याख्यम् ॥ ५ ॥ कुणीनां हस्तविकलानाम् । पङ्गूनां पादविकलानाम् । अनादरे षष्ठी ॥७॥ धर्मकामे धर्मेच्छायाम् । प्रतीतस्य विश्वस्तस्य ॥८॥ शास्त्रैः शमवचनैः । न जयामः स्वशात्रवानिति क.ध. पाठः ॥ ९ ॥ मृगचर्यामिव । एनां वनचर्याम् । बलस्थैर्न निषेवितां बलवद्भिरसेवितामित्यर्थः ॥ ११ ॥ न आपन्न इति संबन्धः ॥ १३ ॥ गां पृथिवीम् ॥ १८ ॥ कृत्यलक्षणे करणीयस्वरूपे ॥२०॥ कुधर्मतत् इति पाठे कुधर्मं तनोतीति कुधर्मतत् कुधर्मबीजमित्यर्थः ॥ २१ ॥ धर्मार्थौ बलसाध्यहेमन्तप्रातःस्नानशत्रुजयसंभवौ ॥२२॥ धर्मार्थं नत्वर्थकामार्थम् । अर्थं प्रयोजनम् ॥२३॥यस्य चात्मार्थमेवार्थ इति झ.पाठः॥२४॥अतिवेलमत्यन्तम् ॥ २५ ॥ साहि धर्मार्थरूपाहि ॥ २८ ॥ अर्थपरिग्रहोऽर्थोऽर्थमेवालम्बनीयः । इतरेतरयोर्नीतौ । धर्मादर्थः प्रणीयतेऽर्थाच्च धर्म इत्यर्थः । मेघादुदधिपुष्टिरुदधेर्मेघपूर्तिरिव ॥ २९ ॥ द्रव्यस्य स्रक्चन्दनादेः स्पर्शः । अर्थस्य स्वर्णादेः संयोगो लाभः

अर्थमिच्छति कामार्थी न कामादन्यमिच्छति ॥३१
न हि कामेन कामोऽन्यः सिध्यते फलमेव तत् ।
उपयोगात्फलस्यैव काष्ठाद्भस्सेव पण्डितः ॥ ३२
इमाञ्शकुनकान्राजन्हन्ति वैतंसिको यथा ।
एतद्रूपमधर्मस्य भूतेषु च विहिंसनम् ॥ ३३
कामाल्लोभाच्च धर्मस्य प्रवृत्तिं यो न पश्यति ।
स वध्यः सर्वभूतानां प्रेत्य चेह च दुर्मतिः ॥ ३४
व्यक्तं ते विदितो राजन्नर्थो द्रव्यपरिग्रहः ।
प्रकृतिं चापि वेत्थास्य विकृतिं चापि भूयसीम् ३५
तस्य नाशं विनाशं वा जरया मरणेन वा ।
अनर्थ इति मन्यन्ते सोयमस्मासु वर्तते ॥ ३६
इन्द्रियाणां च पञ्चानां मनसो हृदयस्य च ।
विषये वर्तमानानां या प्रीतिरुपजायते ॥ ३७
स काम इति मे बुद्धिः कर्मणां फलमुत्तमम् ।
एवमेव पृथग्दृष्ट्वा धर्मार्थौ काममेव च ॥ ३८
न धर्मपर एव स्यान्न चार्थपरमो नरः ।
न कामपरमो वा स्यात्सर्वान्सेवेत सर्वदा ॥ ३९
धर्मं पूर्वे धनं मध्ये जघन्ये काममाचरेत् ।
अहन्यनुचरेदेवमेष शास्त्रकृतो विधिः ॥ ४०
कामं पूर्वे धनं मध्ये जघन्ये धर्ममाचरेत् ।
वयस्यनुचरेदेवमेष शास्त्रकृतो विधिः ॥ ४१
धर्मं चार्थं च कामं च यथावद्वदतांवर ।
विभज्य काले कालज्ञः सर्वान्सेवेत पण्डितः ॥ ४२
मोक्षो वा परमं श्रेय एष राजन्सुखार्थिनाम् ।
प्राप्तिं वा बुद्धिमास्थाय सोपायां कुरुनन्दन ॥४३
तद्वाऽऽशु क्रियतां राजन्प्राप्तिर्वाप्यधिगम्यताम् ।
जीवितं ह्यातुरस्येव दुःखमन्तरवर्तिनः ॥ ४४
विदितश्चैव मे धर्मः सततं चरितश्च ते ।
जानन्तस्त्वयि शंसन्ति सुहृदः कर्मचोदनाम् ४५
दानं यज्ञाः सतां पूजा वेदधारणमार्जवम् ।
एष धर्मः परो राजन्फलवान्प्रेत्य चेह च ॥ ४६
एष नार्थविहीनेन शक्यो राजन्निषेवितुम् ।
अखिलाः पुरुषव्याघ्र गुणाः स्युर्यद्यपीतरे ॥ ४७
धर्ममूलं जगद्राजन्नान्यद्धर्माद्विशिष्यते ।
धर्मश्चार्थेन महता शक्यो राजन्निषेवितुम् ॥ ४८
न चार्थो भैक्ष्यचर्येण नापि क्लैब्येन कर्हिचित् ।
वेत्तुं शक्यस्तथा राजन्केवलं धर्मबुद्धिना ॥ ४९
प्रतिषिद्धा हि ते याञ्चा यया सिध्यति वै द्विजः ।
तेजसैवार्थलिप्सायां यतस्व पुरुषर्षभ ॥ ५०
भैक्ष्यचर्या न विहिता न च विट्शूद्रजीविका ।
क्षत्रियस्य विशेषेण धर्मस्तु बलमौरसम् ॥ ५१
स्वधर्मं प्रतिपद्यस्व जहि शत्रून्समागतान् ।
धार्तराष्ट्रवनं पार्थ मया पार्थेन नाशय ॥ ५२
उदारमेव विद्वांसो धर्मं प्राहुर्मनीषिणः ।
उदारं प्रतिपद्यस्व नावरे स्थातुमर्हसि ॥ ५३
अनुबुध्यस्व राजेन्द्र वेत्थ धर्मान्सनातनान् ।
क्रूरकर्माऽभिजातोसि यस्मादुद्विजते जनः ॥ ५४
प्रजापालनसंभूतं फलं तव न गर्हितम् ।
एष ते विहितो राजन्धात्रा धर्मः सनातनः ॥५५
तस्माद्विचलितः पार्थ लोके हास्यं गमिष्यसि ।
स्वधर्माद्धि मनुष्याणां चलनं न प्रशस्यते ॥ ५६
स क्षात्रं हृदयं कृत्वा त्यक्त्वेदं शिथिलं मनः ।
वीर्यमास्थाय कौरव्य धुरमुद्वह धुर्यवत् ॥ ५७
न हि केवलधर्मात्मा पृथिवीं जातु कश्चन ।
पार्थिवो व्यजयद्राजन्न भूतिं न पुनः श्रियम् ॥५८
जिह्वां दत्त्वा बहूनां हि क्षुद्राणां लुब्धचेतसाम् ।

---

॥ ३० ॥ न कामादर्थमृच्छतीति क. ध. पाठः ॥ ३१ ॥ साध्यते फलमेव तदिति झ. पाठः । उपयोगः साक्षात्प्रीत्युत्पादनेन कृतार्थत्वम् । काष्ठाद्भस्म साध्यं नतु भस्मतोपि भस्मान्तरं साध्यमस्ति तद्वत् ॥ ३२ ॥ वैतंसिको वीतंसेन जीवतीति पक्षिहन्ता । वीतंसं बन्धनोपाये मृगाणां पक्षिणामपीति विश्वः ॥ ३३ ॥ धर्मं पूर्वे अहनि चरेत् ॥ ४० ॥ कामं पूर्वे वयसि चरेत् ॥ ४१ ॥ प्राप्तिर्महोदयो वा राज्यलाभजः तन्मोक्षाख्यं श्रेयः । दुःखं दुःखदम् ॥ ४४ ॥ कर्मचोदनां प्रवृत्तिजनकं वेदवाक्यं शंसन्ति कथयन्ति ॥ ४५ ॥ क्लैब्येन कातर्येण । वेत्तुं लब्धुम् ॥ ४९ ॥ द्विजः ब्राह्मणः ॥ ५० ॥ औरसं उत्साहः ॥ ५१ ॥ उदारं ईश्वरभावम् । अवरे अनैश्वर्ये ॥५३॥ क्रूरं हिंसात्मकं क्षात्रं कर्म यस्य ॥ ५४ ॥ जिह्वां जिह्वायाः प्रियं साध्वन्नं उत्कोचमित्यर्थः । क्षुद्राणां शत्रुपक्षीयाणाम् । निकृत्या भेदरूपेण छलेन । शल्यकः व्याधः । स हि मृगेभ्यो

निकृत्या लभते राज्यमाहारमिव शल्यकः ॥ ५९
भ्रातरः पूर्वजाताश्च सुसमृद्धाश्च सर्वशः ।
निकृत्या निर्जिता देवैरसुराः पाण्डवर्षभ ॥ ६०
एवं बलवतः सर्वमिति बुद्ध्वा महीपते ।
जहि शत्रून्महाबाहो परां निकृतिमास्थितान् ॥ ६१
न ह्यर्जुनसमः कश्चिद्युधि योद्धा धनुर्धरः ।
भविता वा पुमान्कश्चिन्मत्समो वा गदाधरः ६२
सत्वेन कुरुते युद्धं राजन्सुबलवानपि ।
न प्रमाणेन नोत्साहात्सत्वस्थो भव पाण्डव ॥ ६३
सत्वं हि मूलमर्थस्य वितथं यदतोऽन्यथा ।
न तु प्रसक्तं भवति वृक्षच्छायेव हैमनी ॥ ६४
अर्थत्यागोऽपि कार्यः स्यादर्थं श्रेयांसमिच्छता ।
बीजौपम्येन कौन्तेय मा ते भूदत्र संशयः ॥ ६५
अर्थेन तु समोऽनर्थो यत्र लभ्यो महोदयः ।
न तत्र विपणः कार्यः खरकण्डूयनं हि तत् ॥ ६६
एवमेव मनुष्येन्द्र धर्मं त्यक्त्वाऽल्पकं नरः ।
बृहन्तं धर्ममाप्नोति स बुद्ध इति निश्चितम् ॥ ६७
अमित्रं मित्रसंपन्नं मित्रैर्भिन्दन्ति पण्डिताः ।
भिन्नैर्मित्रैः परित्यक्तं दुर्बलं कुरुते वशे ॥ ६८
सत्वेन कुरुते युद्धं राजन्सुबलवानपि ।
नोद्यमेन न होत्राभिः सर्वाः स्वीकुरुते प्रजाः ६९
सर्वथा संहतैरेव दुर्बलैर्बलवानपि ।
अमित्रः शक्यते हन्तुं मधुहा भ्रमरैरिव ॥ ७०
यथा राजन्प्रजाः सर्वाः सूर्यः पाति गभस्तिभिः ।
हन्ति चैव तथैव त्वं सदृशः सवितुर्भव ॥ ७१
एतच्चापि तपो राजन्पुराणमिति नः श्रुतम् ।
विधिना पालनं भूमेर्यत्कृतं नः पितामहैः ॥ ७२
न तथा तपसा राजँल्लोकान्प्राप्नोति क्षत्रियः ।
यथा सृष्टेन युद्धेन विजयेनेतरेण वा ॥ ७३

अपेयात्किल भा सूर्याल्लक्ष्मीश्चन्द्रमसस्तथा ।
इति लोको व्यवसितो दृष्ट्वेमां भवतो व्यथाम् ७४
भवतश्च प्रशंसाभिर्निन्दाभिरितरस्य च ।
कथयन्त्यः परिषदः पृथग्राजन्समागताः ॥ ७५
इदमभ्यधिकं राजन्ब्राह्मणाः कुरवश्च ते ।
समेताः कथयन्तीह मुदिताः सत्यसन्धताम् ॥ ७६
यन्न मोहान्न कार्पण्यान्न लोभान्न भयादपि ।
अनृतं किंचिदुक्तं ते न कामान्नार्थकारणात् ॥ ७७
यदेनः कुरुते किंचिद्राजा भूमिमवाप्नुवन् ।
सर्वं तन्नुदते पश्चाद्यज्ञैर्विपुलदक्षिणैः ॥ ७८
ब्राह्मणेभ्यो ददद्ग्रामान्गाश्च राजन्सहस्रशः ।
मुच्यते वीर पापेभ्यस्तमोभ्य इव चन्द्रमाः ॥ ७९
पौरजानपदाः सर्वे प्रायशः कुरुनन्दन ।
सवृद्धबालाः सहिताः शंसन्ति त्वां युधिष्ठिर ॥ ८०
श्वदृतौ क्षीरमासक्तं ब्रह्म वा वृषले यथा ।
सत्यं स्तेने बलं नार्यां राज्यं दुर्योधने तथा ॥ ८१
इति लोके निर्वचनं पुरश्चरति भारत ।
अपि चैताः स्त्रियो बालाः स्वाध्यायमधिकुर्वते ॥
इमामवस्थां च गते सहास्माभिररिंदम ।
हन्त नष्टाः स्म सर्वे वै भवतोपद्रवे सति ॥ ८३
स भवान्रथमास्थाय सर्वोपकरणान्वितम् ।
त्वरमाणोऽभिनिर्यातु विप्रेभ्योऽर्थविभावकः ८४
वाचयित्वा द्विजश्रेष्ठानद्यैव गजसाह्वयम् ।
अस्त्रविद्भिः परिवृतो भ्रातृभिर्दृढधन्विभिः ॥ ८५
आशीविषसमैर्वीरैर्मरुद्भिरिव वृत्रहा ।
अमित्रांस्तेजसा मृद्नन्नसुरानिव वृत्रहा ।
श्रियमादत्स्व कौन्तेय धार्तराष्ट्रान्महाबल ॥ ८६
न हि गाण्डीवमुक्तानां शराणां गार्ध्रवाससाम् ।
स्पर्शमाशीविषाभानां मर्त्यः कश्चन संसहेत् ॥ ८७

---

भक्ष्यं दत्त्वा विश्वास्य हत्वा आहारं लभते तद्वत् ॥ ५९ ॥ सत्वेन बलेन । प्रमाणेन संघेन । उत्साहेन शत्रुपक्षीयैः सह संधानलक्षणेन ॥ ६३ ॥ एवमेव बीजौपम्येन ॥ ६७ ॥ होत्राभिः सान्त्वेन आह्वानैः ॥ ६९ ॥ संहतैर्मिलितैः । मधुहा मध्वर्थं गतः । ओहाङ् गतौ इत्यस्य रूपम् । कालप्रतीक्षायां हि शत्रुर्बलवान् भूत्वाऽस्मान् जेष्यतीति भावः ॥ ७० ॥ हन्ति रसशोषणेन । पाति वर्षेण ॥ ७१ ॥ पुराणं अनादि ॥ ७२ ॥ इतरेण मरणेन ॥ ७३ ॥ अपेयात् अपगच्छेत् । व्यवसितः निश्चितः ॥ ७४ ॥ एनः पापम् । अवाप्नुवन् अवाप्तिहेतोः ॥ ७८ ॥ श्वदृतौ सारमेयचर्मकोशे । ब्रह्म वेदः । वृषले शूद्रे ॥ ८१ ॥ स्वाध्यायमधिकुर्वते श्वदृताविति श्लोकं वेदवत् स्त्र्यादयो नित्यं पठन्तीत्यर्थः ॥ ८२ ॥ भवता हेतुना । उपद्रवे राज्यभ्रंशे ॥ ८३ ॥ अर्थविभावको जयार्जितमर्थं प्रदातुम् ॥ ८४ ॥ वाचयित्वा आशीर्वादान् ॥ ८५ ॥ धार्तराष्ट्रादिति च्छेदः ॥ ८६ ॥

न स वीरो न मातङ्गो न च सोऽश्वोस्ति भारत।
यः सहेत गदावेगं मम क्रुद्धस्य संयुगे ॥ ८८
सृञ्जयैः सह कैकेयैर्वृष्णीनां वृषभेण च ।
कथंस्विद्युधि कौन्तेय न राज्यं प्राप्नुयामहे ॥ ८९
शत्रुहस्तगतां राजन्कथंस्विन्नाहरेर्महीम् ।
इह यत्नमुपाहृत्य बलेन महताऽन्वितः ॥ ९०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

युधिष्ठिरेण भीमंप्रति स्वेन प्रतिज्ञाया दुस्त्यजत्वोक्तिपूर्वकं प्रतिज्ञाकालावसानप्रतिपालनविधानम् ॥ १ ॥

वैशंपायन उवाच ।

स एवमुक्तस्तु महानुभावः
सत्यव्रतो भीमसेनेन राजा ।
अजातशत्रुस्तदनन्तरं वै
धैर्यान्वितो वाक्यमिदं बभाषे ॥ १

असंशयं भारत सत्यमेत-
द्यन्मां तुदन्वाक्यशल्यैः क्षिणोषि ।
न त्वां विगर्हे प्रतिकूलमेत-
न्ममानयाद्धि व्यसनं व आगात् ॥ २

अहं ह्यक्षानन्वपद्यं जिहीर्षन्
राज्यं सराष्ट्रं धृतराष्ट्रस्य पुत्रात् ।
तन्मां शठः कितवः प्रत्यदेवी-
त्सुयोधनार्थं सुबलस्य पुत्रः ॥ ३

महामायः शकुनिः पार्वतीयः
सभामध्ये प्रवपन्नक्षपूगान् ।
अमायिनं मायया प्रत्यजैषी-
त्ततोऽपश्यं वृजिनं भीमसेन ॥ ४

अक्षांश्च दृष्ट्वा शकुनेर्यथावत्
कामानुकूलानयुजो युजश्च ।
शक्यो नियन्तुमभविष्यदात्मा
मन्युस्तु हन्यात्पुरुषस्य धैर्यम् ॥ ५

यन्तुं नात्मा शक्यते पौरुषेण
मानेन वीर्येण च तात नद्धः ।
न ते वाचो भीमसेनाभ्यसूये
मन्ये तथा तद्भवितव्यमासीत् ॥ ६

स नो राजा धृतराष्ट्रस्य पुत्रो
न्यपातयद्व्यसने राज्यमिच्छन् ।
दास्यं च नोऽगमयद्भीमसेन
यत्राभवच्छरणं द्रौपदी नः ॥ ७

त्वं चापि तद्वेत्थ धनंजयश्च
पुनर्द्यूतायागतास्तां सभां नः ।
यन्माऽब्रवीद्धृतराष्ट्रस्य पुत्र
एकग्लहार्थं भरतानां समक्षम् ॥ ८

वने समा द्वादश राजपुत्र
यथाकामं विदितमजातशत्रो ।
अथापरं चाविदितश्चरेथाः
सर्वैः सह भ्रातृभिश्छन्नरूपः ॥ ९

त्वां चेच्छ्रुत्वा तात तथा चरन्त-
मवभोत्स्यन्ते भारतानां चराश्च ।
अन्यांश्चरेथास्तावतोऽब्दांस्तथा त्वं
निश्चित्य तत्प्रतिजानीहि पार्थ ॥ १०

चरैश्चेन्नो विदितः कालमेतं
युक्तो राजन्मोहयित्वा मदीयान् ।
ब्रवीमि सत्यं कुरुसंसदीह
तवैव ता भारत पञ्च नद्यः ॥ ११

---

उपाहृत्य आलम्ब्य ॥ ९० ॥ त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

अन्वपद्यमनुसृतवान् ॥ ३ ॥ प्रवपन् पातयन् । अक्षपूगान् पाशसमूहान् । वृजिनं दुःखदं व्यसनम् ॥ ४ ॥ अयुजो विषमान् । युजः समान् । शक्य इति यः पुरुषस्य धैर्यं हन्यात् स मन्युर्यदि नाभविष्यत्तर्ह्यात्मा मनो नियन्तुं शक्यः अभविष्यदित्यध्याहृत्य योज्यम् ॥ ५ ॥ समा वर्षाणि । अथापरं वर्षम् । छन्नगूढ इति झ. पाठः ॥ ९ ॥ अवभोत्स्यन्ते ज्ञास्यन्ति । बुद्ध्येरन्वै भारतानामिति क. पाठः ॥ १० ॥ नो इति निपातः । वित-

वयं चैतद्भारत सर्वे एव
त्वया जिताः कालमपास्य भोगान् ।
चरेम इत्याह पुरा स राजा
मध्ये कुरूणां स मयोक्तस्तथेति ॥ १२

तत्र द्यूतमभवन्नो जघन्यं
यस्मिञ्जिताः प्रव्रजिताश्च सर्वे ।
इत्थं तु देशाननुसंचरामो
वनानि कृच्छ्राणि च कृच्छ्ररूपाः ॥ १३

सुयोधनश्चापि न शान्तिमिच्छन्
भूयः स मन्योर्वशमन्वगच्छत् ।
उद्योजयामास कुरूंश्च सर्वान्
ये चास्य केचिद्वशमन्वगच्छन् ॥ १४

तां सिद्धिमास्थाय सतां सकाशे
को नाम जह्यादिह राज्यहेतोः ।
आर्यस्य मन्ये मरणाद्गरीयो
यद्धर्ममुत्क्रम्य महीं प्रशासेत् ॥ १५

तदैव चेद्वीरकर्माकरिष्यो
यदा द्यूते परिघं पर्यमृक्षः ।
बाहू दिधक्षन्वारितः फल्गुनेन
किं दुष्कृतं भीम तदाऽभविष्यत् ॥ १६

प्रागेव चैवं समयक्रियायाः
किं नाब्रवीः पौरुषमाविदानः ।
प्राप्तं तु कालं त्वभिपद्य पश्चात्
किं मामिदानीमतिवेलमात्थ ॥ १७

भूयोपि दुःखं मम भीमसेन
दूये विषस्येव रसं हि पीत्वा ।
यद्याज्ञसेनीं परिक्लिश्यमानां
संदृश्य तत्क्षान्तमिति स्म भीम ॥ १८

न त्वद्य शक्यं भरतप्रवीर
कृत्वा यदुक्तं कुरुवीरमध्ये ।
कालं प्रतीक्षस्व सुखोदयाय
पाकं फलानामिव बीजवापः ॥ १९

यदा हि पूर्वं निकृतो निकृन्ते-
द्वैरं सपुष्पं सफलं विदित्वा ।
महागुणं हरति हि पौरुषेण
तदा वीरो जीवति जीवलोके ॥ २०

श्रियं च लोके लभते समग्रां
मन्ये चास्मै शत्रवः सन्नमन्ते ।
मित्राणि चैनमतिरागाद्भजन्ते
देवा इवेन्द्रमुपजीवन्ति चैनम् ॥ २१

मम प्रतिज्ञां च निबोध सत्यां
वृणे सत्यममृताज्जीविताच्च ।
राज्यं च पुत्राश्च यशो धनं च
सर्वं न सत्यस्य कलामुपैति ॥ २२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

## पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

भीमेन युधिष्ठिरंप्रति सोपपत्तिकं वनवासापूरणेनैव दुर्योधननिग्रहचोदना ॥ १ ॥

भीमसेन उवाच ।
सन्धिं कृत्वैव कालेन ह्यन्तकेन पतत्रिणा ।

---

स्तादिपञ्चनद्युपलक्षितो देशः ॥ ११ ॥ सर्वे शतमपि भ्रातरः । स राजा दुर्योधनः ॥ १२ ॥ नोऽस्माकम् । जघन्यं नीचम् । कृच्छ्ररूपाः क्लिष्टरूपाः । वनानि दुर्गाणि च घोररूपा इति क. ध. पाठः ॥ १३ ॥ शान्तिं नेच्छन् अनिच्छन् । उद्योजयामासोत्कर्षेण स्वेच्छया तेषु तेषु दुर्गदेशादिपालनकार्येष्विष्टान्योजितवान् ॥ १४ ॥ तं संधिमास्थायेति झ. ट. पाठः ॥ १५ ॥ पर्यमृक्षः परामृष्टवानसि । दिधक्षन् दग्धुमिच्छन् ॥ १६ ॥ आविदानो जानन् । प्राप्तं कालं कालतुल्यां विपदमभिपद्य स्वीकृत्य ॥ १७ ॥ भूयोपि बह्वपि । दूये उपतप्ये ॥ १८ ॥ बीजवापः कृषीवलः । पक्तिं फलानामिति झ. ध. पाठः ॥ १९ ॥ वैरं वैरिसमूहम् । सपुष्पं सफलं विदित्वा पुष्टतरं ज्ञात्वा यदि निकृन्तेत् छिन्द्यात् तदा हि प्रसिद्धं महागुणं महान्तं गुणं हरति आहरति ॥ २० ॥ अमृतात् देवभावात् । कलां षोडशं भागम् ॥ २२ ॥ चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

अनन्तेनाप्रमेयेण स्रोतसा सर्वहारिणा ॥ १
प्रत्यक्षं मन्यसे कालं मर्त्यः सन्कालबन्धनः ।
फेनधर्मा महाराज फलधर्मा तथैव च ॥ २
निमेषादपि कौन्तेय यस्यायुरपचीयते ।
सूच्येवाञ्जनचूर्णानि किमिति प्रतिपालयेत् ॥ ३
यो नूनममितायुः स्यादथवाऽऽयुःप्रमाणवित् ।
स कालं वै प्रतीक्षेत सर्वप्रत्यक्षदर्शिवान् ॥ ४
प्रतीक्ष्यमाणः कालो नः समा राजंस्त्रयोदश ।
आयुषोपचयं कृत्वा मरणायोपनेष्यति ॥ ५
शरीरिणां हि मरणं शरीरे नित्यमाश्रितम् ।
प्रागेव मरणात्तस्माद्राज्यायैव घटामहे ॥ ६
यो न याति प्रसंख्यानमस्पष्टो भूमिवर्धनः ।
अयातयित्वा वैराणि सोऽवसीदति गौरिव ॥ ७
यो न यातयते वैरमल्पसत्वोद्यमः पुमान् ।
अफलं जन्म तस्याहं मन्ये दुर्जातजीविनः ॥ ८
हैरण्यौ भवतो बाहू श्रुतिर्भवति पार्थिवी ।
हत्वा द्विषन्तं संग्रामे भुङ्क्ष्व बाहुजितं वसु ॥ ९
हत्वा वै पुरुषो राजन्निकर्तारमरिंदम ।
अह्नाय नरकं गच्छेत्स्वर्गेणास्य स संमितः ॥ १०
अमर्षजो हि संतापः पावकाद्दीप्तिमत्तरः ।
येनाहमभिसंतप्तो न नक्तं न दिवा शये ॥ ११
अयं च पार्थो बीभत्सुर्वरिष्ठो ज्याविकर्षणे ।
आस्ते परमसंतप्तो नूनं सिंह इवाशये ॥ १२
योऽयमेको नुदेत्सर्वाल्लोके राजन्धनुर्भृतः ।
सोयमात्मजमूष्माणं महाहस्तीव यच्छति ॥ १३
नकुलः सहदेवश्च वृद्धा माता च वीरसूः ।
तवैव प्रियमिच्छन्त आसते जडमूकवत् ॥ १४
सर्वे तेऽप्रियमिच्छन्ति बान्धवाः सह सृञ्जयैः ।
अहमेकश्च संतप्तो माता च प्रतिविन्ध्यतः ॥ १५
प्रियमेव तु सर्वेषां यद्ब्रवीम्युत किंचन ।
सर्वे हि व्यसनं प्राप्ताः सर्वे युद्धाभिनन्दिनः १६
नातः पापीयसी काचिदापद्राजन्भविष्यति ।
यन्नो नीचैरल्पबलै राज्यमाच्छिद्य भुज्यते ॥ १७
शीलदोषाद्घृणाविष्ट आनृशंस्यात्परंतप ।
क्लेशांस्तितिक्षसे राजन्नान्यः कश्चित्प्रशंसति ॥ १८
श्रोत्रियस्येव ते राजन्मन्दकस्याविपश्चितः ।
अनुवाकहता बुद्धिर्नैषा तत्त्वार्थदर्शिनी ॥ १९
घृणी ब्राह्मणरूपोसि कथं क्षत्रेष्वजायथाः ।
अस्यां हि योनौ जायन्ते प्रायशः क्रूरबुद्धयः २०
अश्रौषीस्त्वं राजधर्मान्यथा वै मनुरब्रवीत् ।
क्रूरान्निकृतिसंपन्नान्विहितानशमात्मकान् ॥ २१
धार्तराष्ट्रान्महाराज क्षमसे किं दुरात्मनः ।
कर्तव्ये पुरुषव्याघ्र किमास्से पीठसर्पवत् ॥ २२
बुद्ध्या वीर्येण संयुक्तः श्रुतेनाभिजनेन च ।
तृणानां मुष्टिनैकेन हिमवन्तं च पर्वतम् ।
छन्नमिच्छसि कौन्तेय योऽस्मान्संवर्तुमिच्छसि ॥ २३
अज्ञातचर्यागूढेन पृथिव्यां विश्रुतेन च ।
दिवीव पार्थ सूर्येण न शक्याऽऽचरितुं त्वया २४
बृहत्साल इवानूपे शाखापुष्पपलाशवान् ।
हस्ती श्वेत इवाज्ञातः कथं जिष्णुश्चरिष्यति ॥ २५
इमौ च सिंहसंकाशौ भ्रातरौ सहितौ शिशू ।
नकुलः सहदेवश्च कथं पार्थ चरिष्यतः ॥ २६

---

पतत्रिणा बाणवत् शीघ्रगामिना स्रोतसा नित्यवाहिना ॥ १ ॥ प्रत्यक्षं प्रत्यक्षेण ज्ञातम् । कालबन्धनः कालवश्यः । फेनधर्मा निःसारः । फलधर्मा पतनशीलः ॥ २ ॥ सूच्येवाञ्जनचूर्णस्य । यथा कज्जलक्षोदस्यातिश्लक्ष्णस्य सूक्ष्माग्रया सूच्यापि किंचिदपचीयते एवं निमेषादपि यस्यायुरपचीयते स किमिति अवधिं प्रतिपालयेन्न कथमपीत्यध्याहृत्य योज्यम् । सूच्येवाञ्जनचूर्णस्येति झ. पाठः ॥ ३ ॥ प्रसंख्यानं प्रकृष्टां साधुकीर्तिम् । यतः अस्पष्टः शौर्याद्यभावादितरैरविदितः । भूमिवर्धनः भूमिहिंसकः । भूमेर्भारभूत इत्यर्थः । अयातयित्वा अनिस्तीर्य । गौर्बलीवर्दइव । सोप्यशक्तश्चेत् गोषु संख्यानं स्पष्टतां वाप्य प्राप्नुवन्भूमेर्भारभूतो भवति ॥ ७ ॥ दुर्जातशायिन इति क. पाठः ॥ ८ ॥ हैरण्यौ हिरण्यस्वामिनौ । श्रुतिः कीर्तिः । पार्थिवी पृथोः राज्ञ इवेत्यर्थः ॥ ९ ॥ निकर्तारं वञ्चकम् । अह्नाय सद्यः ॥ १० ॥ आशये स्वस्थाने ॥ १२ ॥ प्रतिविन्ध्यतः प्रतिविन्ध्यस्य माता द्रौपदी ॥ १५ ॥ अनुवाकः गुरूक्तिमनुवचनं तेन हता । अर्थज्ञानशून्यस्य । वेदाक्षरमात्राभ्यासिनः ॥ १९ ॥ घृणी दयालुः ॥ २० ॥ आस्से तूष्णींभूतोसि । पीठसर्पवत् अजगरवत् ॥ २२ ॥ संवर्तुं संवरीतुं छादितुम् ॥ २३ ॥ अनूपे बहुजले देशे ॥ २५ ॥

पुण्यकीर्ती राजपुत्री द्रौपदी वीरसूरियम् ।
विश्रुता कथमज्ञाता कृष्णा पार्थ चरिष्यति॥२७
मां चापि राजञ्जानन्ति ह्याकुमारमिमाः प्रजाः।
अज्ञातचर्यां पश्यन्ति मेरोरिव निगूहनम् ॥ २८
तथैव बहवोऽस्माभी राष्ट्रेभ्यो विप्रवासिताः ।
राजानो राजपुत्राश्च धार्तराष्ट्रमनुव्रताः ॥ २९
न हि तेऽप्युपशाम्यन्ति निकृता वा निराकृताः ।
अवश्यं तैर्निकर्तव्यमस्माकं तत्प्रियैषिभिः ॥ ३०
तेऽप्यस्मासु प्रयुञ्जीरन्प्रच्छन्नान्सुबहूंश्चरान् ।
आचक्षीरंश्च नो ज्ञात्वा ततः स्यात्सुमहद्भयम् ॥३१
अस्माभिरुषिताः सम्यग्वने मासास्त्रयोदश ।
परिमाणेन तान्पश्य तावतः परिवत्सरान् ॥ ३२
अस्ति मासः प्रतिनिधिर्यथा प्राहुर्मनीषिणः ।
पूतिकानिव सोमस्य तथेदं क्रियतामिति ॥ ३३
अथवाऽनडुहे राजन्साधवे साधुवाहिने ।
सौहित्यदानादेतस्मादेनसः प्रतिमुच्यते ॥ ३४
तस्माच्छत्रुवधे राजन्क्रियतां निश्चयस्त्वया ।
क्षत्रियस्य हि सर्वस्य नान्यो धर्मोऽस्ति संयुगात्॥३५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

## षट्त्रिंशोऽध्यायः ॥ ३६ ॥

भीमयुधिष्ठिरसंवादसमयसंनिहितेन व्यासेन युधिष्ठिराय प्रतिस्मृतिविद्योपदेशः ॥ १ ॥ युधिष्ठिरेण व्यासवचनात्परिजनैः सह द्वैतवनात्काम्यकवनगमनम् ॥ २ ॥

वैशंपायन उवाच ।
भीमसेनवचः श्रुत्वा कुन्तीपुत्रो युधिष्ठिरः ।
निःश्वस्य पुरुषव्याघ्रः संप्रदध्यौ परंतपः ॥ १
श्रुता मे राजधर्माश्च वर्णानां च पृथक्पृथक् ।
आयत्यां च तदात्वे च यः पश्यति स पश्यति॥२
धर्मस्य जानमानोऽहं गतिमग्र्यां सुदुर्विदाम् ।
कथं बलात्करिष्यामि मेरोरिव विवर्तनम् ॥ ३
स मुहूर्तमिव ध्यात्वा विनिश्चित्येतिकृत्यताम् ।
भीमसेनमिदं वाक्यमपदान्तरमब्रवीत् ॥ ४
एवमेतन्महाबाहो यथा वदसि भारत ।
इदमन्यत्समादत्स्व वाक्यं मे वाक्यकोविद ॥ ५
महापापानि कर्माणि यानि केवलसाहसात् ।
आरभ्यन्ते भीमसेन व्यथन्ते तानि भारत ॥ ६
सुमन्त्रिते सुविक्रान्ते सुकृते सुविचारिते ।
सिद्ध्यन्त्यर्था महाबाहो दैवं चात्र प्रदक्षिणम् ॥७
यत्तु केवलचापल्याद्बलदर्पोत्थितः स्वयम् ।
आरब्धव्यमिदं कार्यं मन्यसे शृणु तत्र मे ॥ ८
भूरिश्रवाः शलश्चैव जलसन्धश्च वीर्यवान् ।
भीष्मो द्रोणश्च कर्णश्च द्रोणपुत्रश्च वीर्यवान् ॥ ९
धार्तराष्ट्रा दुराधर्षा दुर्योधनपुरोगमाः ।
सर्व एव कृतास्त्राश्च सततं चाततायिनः ॥ १०
राजानः पार्थिवाश्चैव येऽस्माभिरुपतापिताः ।
ते श्रिताः कौरवं पक्षं जातस्नेहाश्च सांप्रतम्॥११
दुर्योधनहिते युक्ता न तथाऽस्मासु भारत ।
पूर्णकोशा बलोपेताः प्रयतिष्यन्ति रक्षणे ॥ १२
सर्वे कौरवसैन्यस्य सपुत्रामात्यसैनिकाः ।
संविभक्ता हि मात्राभिर्भोगैरपि च सर्वशः ॥१३
दुर्योधनेन ते वीरा मानिताश्च विशेषतः ।
प्राणांस्त्यक्ष्यन्ति संग्रामे इति मे निश्चिता मतिः॥
समा यद्यपि भीष्मस्य वृत्तिरस्मासु तेषु च ।

निकर्तव्यं नीचं सूचनादिकर्म कर्तव्यम् ॥ ३० ॥ अनडुहे पूर्णं घासमुपाहृत्यानृतान्मुच्यत इति धर्मशास्त्रोक्तं प्रायश्चित्तं वा कर्तव्यमित्याहाथवेति । सौहित्यमातृप्तिभोजनम् ॥ ३४ ॥ पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

आयत्यामुत्तरकाले तदात्वे वर्तमानकाले । यस्तान्पश्यति ॥ २ ॥ इतिकृत्यतामितिकर्तव्यताम् । अपदान्तरमविलम्बितम् ॥ ४ ॥ व्यथन्ते व्यथयन्ति ॥ ६ ॥ सुविचारिते निश्चिते सति ॥ ७ ॥ सैन्यस्य सैन्यसंबन्धिनः सर्वे । मात्राभिरंशपरिच्छेदैः ॥ १३ ॥

द्रोणस्य च महाबाहो कृपस्य च महात्मनः ॥ १५
अवश्यं राजपिण्डस्तैर्निर्वेश्य इति मे मतिः ।
तस्मात्त्यक्ष्यन्ति संग्रामे प्राणानपि सुदुस्त्यजान् ॥
सर्वे दिव्यास्त्रविद्वांसः सर्वे धर्मपरायणाः ।
अजेयाश्चेति मे बुद्धिरपि देवैः सवासवैः ॥ १७
अमर्षी नित्यसंरब्धस्तत्र कर्णो महारथः ।
सर्वास्त्रविदनाधृष्यो ह्यभेद्यकवचावृतः ॥ १८
अनिर्जित्य रणे सर्वानेतान्पुरुषसत्तमान् ।
अशक्यो ह्यसहायेन हन्तुं दुर्योधनस्त्वया ॥ १९
न निद्रामधिगच्छामि चिन्तयानो वृकोदर ।
अतिसर्वान्धनुर्ग्राहान्सूतपुत्रस्य लाघवम् ॥ २०
वैशंपायन उवाच ।
एतद्वचनमाज्ञाय भीमसेनोऽत्यमर्षणः ।
बभूव शान्तिसंयुक्तो गुरोर्वचनवारितः ॥ २१
तयोः संवदतोरेवं तदा पाण्डवयोर्द्वयोः ।
आजगाम महायोगी व्यासः सत्यवतीसुतः ॥२२
सोऽभिगम्य यथान्यायं पाण्डवैः प्रतिपूजितः ।
युधिष्ठिरमिदं वाक्यमुवाच वदतांवरः ॥ २३
युधिष्ठिर महाबाहो वेद्मि ते हृदयस्थितम् ।
मनीषया ततः क्षिप्रमागतोस्मि नरर्षभ ॥ २४
भीष्माद्द्रोणात्कृपात्कर्णाद्द्रोणपुत्राच्च भारत ।
दुर्योधनान्नृपसुतात्तथा दुःशासनादपि ॥ २५
यत्ते भयममित्रघ्न हृदि संपरिवर्तते ।
तत्तेऽहं नाशयिष्यामि विधिदृष्टेन हेतुना ॥ २६
तच्छ्रुत्वा धृतिमास्थाय कर्मणा प्रतिपादय ।
प्रतिपाद्य तु राजेन्द्र ततः क्षिप्रं ज्वरं जहि ॥ २७
तत एकान्तमानाय्य पाराशर्यो युधिष्ठिरम् ।
अब्रवीदुपपन्नार्थमिदं वाक्यविशारदः ॥ २८
श्रेयसस्तेऽपरः कालः प्राप्तो भरतसत्तम ।
येनाभिभविता शत्रून्रणे पार्थो धनुर्धरः ॥ २९

गृहाणेमां मया प्रोक्तां सिद्धिं मूर्तिमतीमिव ।
विद्यां प्रतिस्मृतिं नाम प्रपन्नाय ब्रवीमि ते ॥३०
यामवाप्य महाबाहुरर्जुनः साधयिष्यति ।
अस्त्रहेतोर्महेन्द्रं च रुद्रं चैवाभिगच्छतु ॥ ३१
वरुणं च कुबेरं च धर्मराजं च पाण्डव ।
शक्तो ह्येष सुरान्द्रष्टुं तपसा विक्रमेण च ॥ ३२
ऋषिरेष महातेजा नारायणसहायवान् ।
पुराणः शाश्वतो देवस्त्वजेयो जिष्णुरच्युतः ॥३३
अस्त्राणीन्द्राच्च रुद्राच्च लोकपालेभ्य एव च ।
समादाय महाबाहुर्महत्कर्म करिष्यति ॥ ३४
वनादस्माच्च कौन्तेय वनमन्यद्विचिन्त्यताम् ।
निवासार्थाय यद्युक्तं भवेद्वः पृथिवीपते ॥ ३५
एकत्र चिरवासो हि न प्रीतिजननो भवेत् ।
तापसानां च शान्तानां भवेदुद्वेगकारकः ॥ ३६
मृगाणामुपरोधश्च वीरुदोषधिसंक्षयः ।
बिभर्षि च बहून्विप्रान्वेदवेदाङ्गपारगान् ॥ ३७
वैशंपायन उवाच ।
एवमुक्त्वा प्रपन्नाय शुचये भगवान्प्रभुः ।
प्रोवाच योगतत्त्वज्ञो योगविद्यामनुत्तमाम् ॥ ३८
धर्मराजाय धीमान्स व्यासः सत्यवतीसुतः ।
अनुज्ञाय च कौन्तेयं तत्रैवान्तरधीयत ॥ ३९
युधिष्ठिरस्तु धर्मात्मा तद्ब्रह्म मनसा यतः ।
धारयामास मेधावी कालेकाले सदाऽभ्यसन् ४०
स व्यासवाक्यमुदितो वनाद्द्वैतवनात्ततः ।
ययौ सरस्वतीकूले काम्यकं नाम काननम् ॥४१
तमन्वयुर्महाराज शिक्षाक्षरविशारदाः ।
ब्राह्मणास्तपसा युक्ता देवेन्द्रमृषयो यथा ॥ ४२
ततः काम्यकमासाद्य पुनस्ते भरतर्षभ ।
न्यविशन्त महात्मानः सामात्याः सपदानुगाः ४३
तत्र ते न्यवसन्राजन्कंचित्कालं मनस्विनः ।
धनुर्वेदपरा वीरा गृणाना वेदमुत्तमम् ॥ ४४

राजपिण्डो राजदत्तो ग्रासो निर्वेश्य आनृण्यार्थं शोधनीयः ॥ १६ ॥ लाघवं शीघ्रताम् ॥ २० ॥ साधयिष्यति राज्यम् ॥ ३१ ॥ शाश्वतो देवो विष्णोरंशः सनातन इति क. ठ. ध. पाठः ॥ ३३ ॥ अनुज्ञाय पृष्ट्वा ॥ ३९ ॥ ब्रह्म मन्त्रम् ॥ ४० ॥ सामात्याः सपरिच्छदा इति झ. पाठः ॥ ४३ ॥
षट्त्रिंशोऽध्यायः ॥ ३६ ॥

चरन्तो मृगयां नित्यं शुद्धैर्बाणैर्मृगार्थिनः । पितृदैवतविप्रेभ्यो निर्वपन्तो यथाविधि ॥ ४५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

## सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

युधिष्ठिरेण व्यासोपदिष्टमन्त्रोपदेशपूर्वकमस्त्रग्रहणाय स्वर्गंप्रत्यर्जुनस्य प्रस्थापनम् ॥ १ ॥ स्वर्गं प्रस्थितेनार्जुनेन मध्येपथमिन्द्रकीलगिरौ तपश्चर्या ॥ २ ॥ तत्र मुनिरूपिण इन्द्रस्य दर्शनम् ॥ ३ ॥ दिव्यास्त्रदानं याचितेनेन्द्रेणार्जुनंप्रति तपसा रुद्रप्रसादनानन्तरमस्त्रलाभाय स्वर्गागमनचोदना ॥ ४ ॥

वैशंपायन उवाच ।
कस्यचित्त्वथ कालस्य धर्मराजो युधिष्ठिरः ।
संस्मृत्य मुनिसंदेशमिदं वचनमब्रवीत् ॥ १
विविक्ते विदितप्रज्ञमर्जुनं पुरुषर्षभ ।
सान्त्वपूर्वं स्मितं कृत्वा पाणिना परिसंस्पृशन् २
स मुहूर्तमिव ध्यात्वा वनवासमरिंदमः ।
धनंजयं धर्मराजो रहसीदमुवाच ह ॥ ३
भीष्मे द्रोणे कृपे कर्णे द्रोणपुत्रे च भारत ।
धनुर्वेदश्चतुष्पाद एतेष्वद्य प्रतिष्ठितः ॥ ४
दैवं ब्राह्मं चासुरं च सप्रयोगचिकित्सितम् ।
सर्वास्त्राणां प्रयोगं च अभिजानन्ति कृत्स्नशः ॥५
ते सर्वे धृतराष्ट्रस्य पुत्रेण परिसान्त्विताः ।
संविभक्ताश्च तुष्टाश्च गुरुवत्तेषु वर्तते ।
सर्वयोधेषु चैवास्य सदा प्रीतिरनुत्तमा ॥ ६
आचार्या मानितास्तुष्टाः शान्तिं व्यवहरन्त्युत ।
शक्तिं न हापयिष्यन्ति ते काले प्रतिपूजिताः ॥७
अद्य चेयं मही कृत्स्ना दुर्योधनवशानुगा ।
सग्रामनगरा पार्थ ससागरवनाकरा ॥ ८
भवानेव प्रियोऽस्माकं त्वयि भारः समाहितः ॥९
अत्र कृत्यं प्रपश्यामि प्राप्तकालमरिंदम ।
कृष्णद्वैपायनात्तात गृहीतोपनिषन्मया ॥ १०
गृहीतया तया सम्यग्जगत्सर्वं प्रकाशते ।
तेन त्वं ब्रह्मणा तात संयुक्तः सुसमाहितः ॥११
देवतानां यथाकालं प्रसादं प्रतिपालय ।
तपसा योजयात्मानमुग्रेण भरतर्षभ ॥ १२
धनुष्मान्कवची खड्गी मुनिः साधुव्रते स्थितः ।
न कस्यचिद्ददन्मार्गं गच्छ तातोत्तरां दिशम् ॥१३
इन्द्रे ह्यस्त्राणि दिव्यानि समस्तानि धनंजय ।
वृत्राद्भीतैर्बलं देवैस्तदा शक्रे समर्पितम् ॥ १४
तान्येकस्थानि सर्वाणि ततस्त्वं प्रतिपत्स्यसे ।
'अनेन ब्रह्मणा तात सर्वं संप्रतिपद्यते ॥' १५
शक्रमेव प्रपद्यस्व स तेऽस्त्राणि प्रदास्यति ।
दीक्षितोऽद्यैव गच्छ त्वं द्रष्टुं देवं पुरंदरम् ॥ १६
वैशंपायन उवाच ।
एवमुक्त्वा धर्मराजस्तमध्यापयत प्रभुः ॥ १७
दीक्षितं विधिना तेन यतवाक्कायमानसम् ।
अनुजज्ञे तदा वीरं भ्राता भ्रातरमग्रजः ॥ १८
निदेशाद्धर्मराजस्य द्रष्टुकामः पुरंदरम् ।
धनुर्गाण्डीवमादाय तथाऽक्षय्ये महेषुधी ॥ १९
कवची सतलत्राणो बद्धगोधाङ्गुलित्रवान् ।
हुत्वाऽग्निं ब्राह्मणान्निष्कैः स्वस्तिवाच्य महाभुजः ॥
प्रातिष्ठत महाबाहुः प्रगृहीतशरासनः ।
वधाय धार्तराष्ट्राणां निःश्वस्योर्ध्वमुदैक्षत ॥ २१
तं दृष्ट्वा तत्र कौन्तेयं प्रगृहीतशरासनम् ।

---

विविक्तेऽवितथप्रज्ञमिति क. पाठः ॥ २ ॥ दैवं इन्द्रवरुणायस्त्रम् । ब्राह्मं ब्रह्मास्त्रम् । चिकित्सा परप्रयुक्तानां प्रतीकारः ॥ ५ ॥ गुरुवत् गुरुष्विव ॥ ६ ॥ शान्तिं दोषपरिहारं कर्तुं व्यवहरन्ति यतन्ते । शक्तिं सामर्थ्यं न हापयिष्यन्ति त्याजयिष्यन्ति अपितु उद्दीपयिष्यन्ति ॥ ७ ॥ उपनिषत् रहस्यविद्या ॥ १० ॥ तया प्रयुक्तया सम्यगिति झ. पाठः ॥ ११ ॥ प्रतिपालय प्राप्नुहि ॥ १२ ॥ मार्गं न ददत् अददत् ॥ १३ ॥ बलं सर्वास्त्ररूपम् ॥ १४ ॥ ततः शक्रात् ॥ १५ ॥ दीक्षितः स्वीकृतव्रतः ॥ १६ ॥ अध्यापयत विद्यया योजितवान् ॥ १७ ॥ अनुजज्ञे गमनाय अनुज्ञातवान् ॥ १८ ॥

अब्रुवन्ब्राह्मणाः सिद्धा भूतान्यन्तर्हितानि च २२
क्षिप्रमाप्नुहि कौन्तेय मनसा यद्यदिच्छसि ।
संसाधयस्व कौन्तेय ध्रुवोस्तु विजयस्तव ॥ २३
अब्रुवन्ब्राह्मणाः पार्थमिति कृत्वा जयाशिषः ।
'सिद्धचारणसङ्घाश्च गन्धर्वाश्च तमब्रुवन् ॥ २४
स्वस्तिव्रतमुपाधत्स्व सङ्कल्पस्तव सिद्ध्यताम् ।
मनोरथाश्च ते सर्वे समृद्ध्यन्तां महारथ ॥ २५
एवमुक्तोऽभिवाद्यैतान्बद्धाञ्जलिपुटस्तथा ।
तपोयोगमनाः पार्थः पुरोहितमवन्दत ॥ २६
ततः प्रीतमना जिष्णुस्तावुभावभ्यवन्दत ।
सहोदरावतिरथौ युधिष्ठिरवृकोदरौ ॥ २७
तं क्रान्तमनसौ पूर्णमभिगम्य महारथौ ।
यमौ गाण्डीवधन्वानमभ्यवादयतामुभौ ॥ २८
अभिवाद्य तु तौ वीरावूचतुः पाकशासनिम् ।
अवाप्तव्यानि सर्वाणि दिव्यान्यस्त्राणि वासवात् ।
अस्त्राण्याप्नुहि कौन्तेय मनसा यद्यदिच्छसि ॥२९
गिरो ह्यशिथिलाः सर्वा निर्दोषाः संमताः सताम् ।
त्वमेकः पाण्डवेष्वद्य संप्राप्तोसि धनञ्जय ॥ ३०
न चाधर्मविदं देवा नासिद्धं नातपस्विनम् ।
द्रष्टुमिच्छन्ति कौन्तेय चलचित्तं शठं न च ॥३१
रोरूयमाणः कटुकमीर्ष्यकः कटुकाक्षरः ।
शठकः श्लाघकः क्षेप्ता हन्ता च विचिकित्सिता ३२
विश्वस्य हन्ता मायावी क्रोधनोऽनृतभाषिता ।
अत्याशी नास्तिकोऽदाता मित्रध्रुक्सर्वशङ्कितः ३३
आक्रोष्टा चातिमानी च रौद्रो लुब्धोऽथ लोलुपः ।
स्तेनश्च मद्यपश्चैव भ्रूणहा गुरुतल्पगः ॥ ३४
संभावितात्मा चात्यर्थं नृशंसः पुरुषश्च यः ।
नैते लोकानाप्नुवन्ति निर्लोकास्ते धनञ्जय ॥३५
आनृशंस्यमनुक्रोशः सत्यं करुणवेदिता ।
दमः स्थितिर्धृतिर्धर्मः क्षमा कृत्यमनुत्तमम् ॥३६
दया शमश्च धर्मश्च गुरुपूजा कृतज्ञता ।
मैत्रता द्विजभक्तिश्च वसन्ति त्वयि फल्गुन ।
व्यपेक्षा सर्वभूतेषु कृपा दानं मतिः स्मृतिः ३७
तस्मात्कौरव्य शक्रेण समेष्यसि धनञ्जय ।
त्वादृशेन हि देवानां श्लाघनीयः समागमः ॥३८
सुहृदां सोदराणां च सर्वेषां भरतर्षभ ।
त्वं गतिः परमा तात वृत्रहा मरुतामिव ॥ ३९
तस्मिंस्त्रयोदशे वर्षे भ्रातरः सुहृदश्च ते ।
सर्वे हि संश्रयिष्यन्ति बाहुवीर्यं महाबल ॥ ४०
स पार्थ पितरं गच्छ सहस्राक्षमरिन्दम ।
मुष्टिग्रहणमादत्स्व सर्वाण्यस्त्राणि वासवात् ॥४१
शतशृङ्गे महाबाहो मघवानिदमब्रवीत् ।
शृण्वतां सर्वभूतानां त्वामुपाघ्राय मूर्धनि ॥ ४२
विदितः सर्वभूतानां दिवं तात गमिष्यसि ।
प्राप्य पुण्यकृतां लोकांस्त्रंस्यसे जयतांवर ॥ ४३
मानितस्त्रिदशैः पार्थ विहृत्य सुसुखं दिवि ।
अवाप्य परमास्त्राणि पृथिवीं पुनरेष्यसि ॥ ४४
गुणांस्ते वासवस्तात खाण्डवं दहति त्वयि ।
शृण्वतां सर्वभूतानां पुनः पुनरभाषत ॥ ४५
तां प्रतिज्ञां नरश्रेष्ठ कर्तुमर्हसि वासवीम् ।
कंचिद्देशमितः प्राप्य तपोयोगमना भव ॥ ४६
कर्तुमर्हसि कौरव्य मघवद्वचनं हितम् ।
दीक्षित्वाऽद्यैव गच्छ त्वं द्रष्टाऽसि त्वं पुरन्दरम् ४७
तौ परिष्वज्य बीभत्सुः कृष्णामामन्त्र्य चाप्युभौ ।
मनांस्यादाय सर्वेषां प्रयातः पुरुषर्षभः ॥' ४८
तं तथा प्रस्थितं वीरं सिंहस्कन्धोरसं तदा ।
प्राञ्जलिः पाण्डवं कृष्णा देवानां कुर्वती नमः ।
वाग्भिः परमशुद्धाभिर्मङ्गलाभिरभाषत ॥ ४९
नमो धात्रे विधात्रे च स्वस्ति गच्छ वनाद्वनम् ।
'धर्मस्त्वां जुषतां पार्थ भास्करश्च विभावसुः ।
ब्रह्मा त्वां ब्राह्मणाश्चैव पालयन्तु धनञ्जय ॥'५०
ज्येष्ठापचायी ज्येष्ठस्य भ्रातुर्वचनमास्थितः ।
प्रपद्येथा वसूंन्रुद्रानादित्यान्समरुद्गणान् ।
विश्वेदेवांस्तथा साध्याञ्शान्त्यर्थं भरतर्षभ ॥५१
स्वस्ति तेस्त्वान्तरिक्षेभ्यो दिव्येभ्यो भरतर्षभ ।
पार्थिवेभ्यश्च सर्वेभ्यो ये केचित्परिपन्थिनः ॥५२
अवरोधाद्वने वासात्सर्वस्वहरणादपि ।
इदं दुःखतरं मन्ये पुत्रेभ्यश्च विवासनात् ॥ ५३

ज्येष्ठापचायी ज्येष्ठपूजनशीलः ॥ ५१ ॥

मास्माकं क्षत्रियकुले जातुचित्पुनरुद्भवः ।
ब्राह्मणेभ्यो नमस्यामि येषां नायुधजीविका ॥५४
इदं मे परमं दुःखं यः स पापः सुयोधनः ।
दृष्ट्वा मां गौरिति प्राह प्रहसन्राजसंसदि ॥ ५५
तस्माद्दुःखादिदं दुःखं गरीय इति मे मतिः ।
यत्तत्परिषदो मध्ये बह्वयुक्तमभाषत ॥ ५६
'ध्वंसितः स्वगृहेभ्यश्च राष्ट्राच्च भरतर्षभ ।
वने प्रतिष्ठितो भूत्वा सौहार्दादवतिष्ठसे ॥ ५७
जेता यः सर्वशत्रूणां यः पावकमतर्पयः ।
जनस्त्वां पश्यतीदानीं गच्छन्तं भरतर्षभ ॥' ५८
अस्मिन्नूनं महारण्ये भ्रातरः सुहृदश्च ते ।
त्वत्कथाः कथयिष्यन्ति चारणा ऋषयस्तथा ॥५९
यत्ते कुन्ती महाबाहो जातस्यैच्छद्धनञ्जय ।
तत्तेऽस्तु सर्वं कौन्तेय यथा च स्वयमिच्छसि ६०
'वसुदेवस्वसा देवी त्वामार्या पुनरागतम् ।
पश्यतु त्वां पृथा पार्थ सहस्राक्षमिवादितिः' ६१
नूनं ते भ्रातरः सर्वे त्वत्कथाभिः प्रजागरे ।
रंस्यन्ते तव कर्माणि कीर्तयन्तः पुनः पुनः ॥६२
न च नः पार्थ भोगेषु न धने नोत जीविते ।
तुष्टिर्बुद्धिर्भवित्री वा त्वयि दीर्घप्रवासिनि ॥ ६३
त्वयि नः पार्थ सर्वेषां सुखदुःखे प्रतिष्ठिते ।
जीवितं मरणं चैव राज्यमैश्वर्यमेव च ॥ ६४
आपृष्टो नोसि कौन्तेय स्वस्ति प्राप्नुहि पाण्डव ।
कृतास्त्रं स्वस्तिमन्तं त्वां द्रक्ष्यामि पुनरागतम् ६५
बलवद्भिर्विरुद्धं न कार्यमेतत्त्वयाऽनघ ।
प्रयाह्यविघ्नेनैवाशु विजयाय महाबल ॥ ६६
ह्रीः श्रीः कीर्तिर्धृतिः पुष्टिरुमा लक्ष्मीः सरस्वती ।
इमा वै तव पान्थस्य पालयन्तु धनञ्जय ॥ ६७
वैशंपायन उवाच ।
एवमुक्त्वाऽऽशिषः कृष्णा विरराम यशस्विनी ६८
ततः प्रदक्षिणं कृत्वा भ्रातॄन्धौम्यं च पाण्डवः ।
प्रातिष्ठत महाबाहुः प्रगृह्य रुचिरं धनुः ॥ ६९
'शनैरिव दिशं वीर उदीचीं भरतर्षभ ।
संहरंस्तरसा वृक्षाँल्लता वल्लीश्च भारत ।
असज्जमानो वृक्षेषु जगाम सुमहाबलः ॥' ७०
तस्य मार्गादपाक्रामन्सर्वभूतानि गच्छतः ।
युक्तस्यैन्द्रेण योगेन पराक्रान्तस्य शुष्मिणः ॥७१
सोऽगच्छत्पर्वतांस्तात तपोधननिषेवितान् ।
दिव्यं हैमवतं पुण्यं देवजुष्टं परंतपः ॥ ७२
अगच्छत्पर्वतं पुण्यमेकाह्नैव महामनाः ।
मनोजवगतिर्भूत्वा योगयुक्तो यथाऽनिलः ॥ ७३
हिमवन्तमतिक्रम्य गन्धमादनमेव च ।
अत्यक्रामत्स दुर्गाणि दिवारात्रमतन्द्रितः ॥ ७४
इन्द्रकीलं समासाद्य ततोऽतिष्ठद्धनंजयः ।
'गत्वा स षडहोरात्रान्सप्तमेऽहनि पाण्डवः ॥ ७५
प्रस्थेन्द्रकीलस्य शुभे तपोयोगपरोऽभवत् ।
ऊर्ध्वबाहुर्न चाङ्गानि प्रास्पन्दयत किंचन ॥ ७६
समाहितात्मा नियतः सहस्राक्षसुतोऽच्युतः ।'
अन्तरिक्षे स शुश्राव तिष्ठेति स वचस्तदा ॥ ७७
तच्छ्रुत्वा सर्वतो दृष्टिं चारयामास पाण्डवः ।
अथापश्यत्सव्यसाची वृक्षमूले तपस्विनम् ॥ ७८
ब्राह्म्या श्रिया दीप्यमानं पिङ्गलं जटिलं कृशम् ।
सोऽब्रवीदर्जुनं तत्र स्थितं दृष्ट्वा महातपाः ॥ ७९
कस्त्वं तातेह संप्राप्तो धनुष्मान्कवची शरी ।
निबद्धाऽसितलत्राणः क्षत्रधर्ममनुव्रतः ॥ ८०
नेह शस्त्रेण कर्तव्यं शान्तानामेष आलयः ।
विनीतक्रोधहर्षाणां ब्राह्मणानां तपस्विनाम् ॥८१
नेहास्ति धनुषा कार्यं न संग्रामोऽत्र कर्हिचित् ।
निक्षिपैतद्धनुस्तात प्राप्तोसि परमां गतिम् ॥ ८२
इत्यनन्तौजसं वीरं यथा चान्यं पृथग्जनम् ।
तथा हसन्निवाभीक्ष्णं ब्राह्मणोऽर्जुनमब्रवीत् ।
न चैनं चालयामास धैर्यात्सुधृतनिश्चयम् ॥ ८३
तमुवाच ततः प्रीतः स द्विजः प्रहसन्निव ।
वरं वृणीष्व भद्रं ते शक्रोऽहमरिसूदन ॥ ८४

गौरिति बहुपुरुषभोग्येत्युपहासः ॥ ५५ ॥ अभाषत शत्रुर्यत् तस्माद्दुःखादिदं लब्धियोगजमिति पूर्वेण संबन्धः ॥ ५६ ॥

प्रातिष्ठत महाबाहुः सुमनाः प्रीतिमांस्त्वदेति क. पाठः ॥ ६९ ॥ शुष्मिणो बलिनः ॥ ७१ ॥ विनीतौ जितौ क्रोधहर्षौ यैः ॥८१॥

एवमुक्तः सहस्राक्षं प्रत्युवाच धनंजयः ।
प्राञ्जलिः प्रणतो भूत्वा शूरः कुरुकुलोद्वहः ॥८५
ईप्सितो ह्येष वै कामो वरं चैनं प्रयच्छ मे ।
त्वत्तोऽद्य भगवन्नस्त्रं कृत्स्नमिच्छामि वेदितुम् ८६
प्रत्युवाच महेन्द्रस्तं प्रीतात्मा प्रहसन्निव ।
इह प्राप्तस्य किं कार्यमस्त्रैस्तव धनंजय ॥ ८७
कामान्वृणीष्व लोकांस्त्वं प्राप्तोसि परमां गतिम् ।
एवमुक्तः प्रत्युवाच सहस्राक्षं धनंजयः ॥ ८८
न लोभान्न पुनः कामान्न देवत्वं पुनः सुखम् ।
न च सर्वामरैश्वर्यं कामये त्रिदशाधिप ॥ ८९
भ्रातॄंस्तान्विपिने त्यक्त्वा वैरमप्रतियात्य च ।
अकीर्तिं सर्वलोकेषु गच्छेयं शाश्वतीः समाः ॥९०
एवमुक्तः प्रत्युवाच वृत्रहा पाण्डुनन्दनम् ।
सान्त्वयञ्श्लक्ष्णया वाचा सर्वलोकनमस्कृतः ९१
यदा द्रक्ष्यसि भूतेशं त्र्यक्षं शूलधरं शिवम् ।
तदा दाताऽस्मि ते तात दिव्यान्यस्त्राणि सर्वशः ॥
क्रियतां दर्शने यत्नो देवस्य परमेष्ठिनः ।
दर्शनात्तस्य कौन्तेय संसिद्धः स्वर्गमेष्यसि ॥ ९३
इत्युक्त्वा फल्गुनं शक्रो जगामादर्शनं पुनः ।
अर्जुनोप्यथ तत्रैव तस्थौ योगसमन्वितः ॥ ९४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

समाप्तं चार्जुनाभिगमनपर्व ॥ २ ॥

---

# (अथ कैरातपर्व ॥ ३ ॥)

## अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

अर्जुनेन हिमवच्छिखरे तपश्चरणम् ॥ १ ॥ पार्थतपोभीरुभिर्महर्षिभिः प्रार्थितेन महादेवेनाश्वासनपूर्वकमृषीणां प्रतिनिवर्तनम् ॥ २ ॥

जनमेजय उवाच ।
भगवञ्श्रोतुमिच्छामि पार्थस्याक्लिष्टकर्मणः ।
विस्तरेण कथामेतां यथाऽस्त्राण्युपलब्धवान् ॥ १
कथं च पुरुषव्याघ्रो दीर्घबाहुर्धनंजयः ।
वनं प्रविष्टस्तेजस्वी निर्मनुष्यमभीतवत् ॥ २
किंचानेन कृतं तत्र वसता ब्रह्मवित्तम ।
कथं च भगवान्स्थाणुर्देवराजश्च तोषितः ॥ ३
एतदिच्छाम्यहं श्रोतुं त्वत्प्रसादाद्द्विजोत्तम ।
त्वं हि सर्वज्ञ दिव्यं च मानुषं चैव वेत्थ ह ॥४
अत्यद्भुतं महाप्राज्ञ रोमहर्षणमर्जुनः ।
भवेन सह संग्रामं चकाराप्रतिमं किल ।
पुरा प्रहरतांश्रेष्ठः संग्रामेष्वपराजितः ॥ ५
यच्छ्रुत्वा नरसिंहानां दैन्यहर्षातिविस्मयात् ।
शूराणामपि पार्थानां हृदयानि चकम्पिरे ॥ ६
यद्यच्च कृतवानन्यत्पार्थस्तदखिलं वद ॥ ७
न ह्यस्य निन्दितं जिष्णोः सुसूक्ष्ममपि लक्षये ।
चरितं यस्य शूरस्य तन्मे सर्वं प्रकीर्तय ॥ ८
वैशंपायन उवाच ।
कथयिष्यामि ते तात कथामेतां महात्मनः ।
दिव्यां कौरवशार्दूल महतीमद्भुतोपमाम् ॥ ९
गात्रसंस्पर्शसंबद्धां त्र्यम्बकेण महाहवे ।
पार्थस्य देवदेवेन शृणु सम्यक्समागमम् ॥ १०
युधिष्ठिरनियोगात्स जगामामितविक्रमः ।
शक्रं सुरेश्वरं द्रष्टुं देवदेवं च शंकरम् ॥ ११
दिव्यं तद्धनुरादाय खड्गं च पुरुषर्षभः ।
महाबलो महाबाहुरर्जुनः कार्यसिद्धये ॥ १२

---

कामान् काम्यन्त इति व्युत्पत्त्या इष्टान् ॥ ८८ ॥ अप्रतियात्यानिस्तीर्य ॥ ९० ॥ सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

खड्गं च कनकत्सरुं इति झ. पाठः । तत्र कनकत्सरुं स्वर्णमुष्टिमित्यर्थः ॥ १२ ॥

दिशं ह्युदीचीं कौरव्यो हिमवच्छिखरं प्रति ।
ऐन्द्रिः स्थिरमना राजन्सर्वलोकमहारथः ॥ १३
त्वरया परया युक्तस्तपसे धृतनिश्चयः ।
वनं कण्टकितं घोरमेक एवान्वपद्यत ॥ १४
नानापुष्पफलोपेतं नानापक्षिनिनादितम् ।
नानामृगगणाकीर्णं सिद्धचारणसेवितम् ॥ १५
ततः प्रयाते बीभत्सौ वनं मानुषवर्जितम् ।
शङ्खानां पटहानां च शब्दः समभवद्दिवि ॥ १६
पुष्पवर्षं च सुमहन्निपपात महीतले ।
मेघजालं च सततं छादयामास सर्वतः ॥ १७
सोतीत्य वनदुर्गाणि सन्निकर्षे महागिरेः ।
शुशुभे हिमवत्पृष्ठे वसमानोऽर्जुनस्तदा ॥ १८
तत्रतत्र द्रुमान्फुल्लान्विहगैर्वल्गुनादितान् ।
नदीश्च विपुलावर्ता वैदूर्यनीलसंनिभाः ॥ १९
हंसकारण्डवोद्गीताः सारसाभिरुतास्तथा ।
पुंस्कोकिलरुताश्चैव क्रौञ्चबर्हिणनादिताः ॥ २०
मनोहरवनोपेतास्तस्मिन्नतिरथोऽर्जुनः ।
पुण्यशीतामलजलाः पश्यन्प्रीतमनाऽभवत् ॥ २१
रमणीये वनोद्देशे रममाणोऽर्जुनस्तदा ।
तपस्युग्रे वर्तमान उग्रतेजा महामनाः ॥ २२
दर्भचीरं निवस्याथ दण्डाजिनविभूषितः ।
शीर्णं च पतितं भूमौ पर्णं समुपभुक्तवान् ॥ २३
पूर्णेपूर्णे त्रिरात्रे तु मासमेकं फलाशनः ।
द्विगुणेनैव कालेन द्वितीयं मासमत्ययात् ॥ २४
तृतीयमपि मासं स क्रमेणाहारमाचरन् ।
चतुर्थे त्वथ संप्राप्ते मासे भरतसत्तमः ॥ २५
वायुभक्षो महाबाहुरभवत्पाण्डुनन्दनः ।
ऊर्ध्वबाहुर्निरालम्बः पादाङ्गुष्ठाग्रधिष्ठितः ॥ २६
सदोपस्पर्शनाच्चास्य बभूवुरमितौजसः ।
विद्युदम्भोरुहनिभा जटास्तस्य महात्मनः ॥ २७
ततो महर्षयः सर्वे जग्मुर्देवं पिनाकिनम् ।
विवेदयिषवः पार्थं तपस्युग्रे समास्थितम् ॥ २८
नीलकण्ठं महादेवमभिवाद्य प्रणम्य च ।
सर्वे निवेदयामासुः कर्म तत्फल्गुनस्य ह ॥ २९
एकः पार्थो महातेजा हिमवत्पृष्ठमाश्रितः ।
उग्रे तपसि दुष्पारे स्थितो धूमापयन्दिशः ॥ ३०
तस्य देवेश न वयं विद्मः सर्वे चिकीर्षितम् ।
संतापयति नः सर्वानसौ साधु निवार्यताम् ॥ ३१
तेषां तद्वचनं श्रुत्वा मुनीनां भावितात्मनाम् ।
उमापतिर्भूतपतिर्वाक्यमेतदुवाच ह ॥ ३२
न वो विषादः कर्तव्यः फल्गुनं प्रति सर्वशः ।
शीघ्रं गच्छत संहृष्टा यथागतमतन्द्रिताः ॥ ३३
अहमस्य विजानामि संकल्पं मनसि स्थितम् ।
नास्य स्वर्गस्पृहा काचिन्नैश्वर्यस्य न चायुषः ।
यत्तस्य काङ्क्षितं प्राप्तुं तत्करिष्येऽहमद्य वै ॥ ३४
वैशंपायन उवाच ।
तच्छ्रुत्वा शर्ववचनमृषयः सत्यवादिनः ।
प्रहृष्टमनसो जग्मुर्यथास्वं पुनराश्रमम् ॥ ३५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि कैरातपर्वणि अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

## एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

किरातरूपिणा हरेणार्जुनस्य पराजयः ॥ १ ॥ तथा पार्थपूजास्तुतिसंतुष्टेन तेन तदाश्वासनम् ॥ २ ॥

वैशंपायन उवाच ।
गतेषु तेषु सर्वेषु तपस्विषु महात्मसु ।
पिनाकपाणिर्भगवान्सर्वपापहरो हरः ॥ १
कैरातं वेषमास्थाय काञ्चनद्रुमसन्निभम् ।

---

ऐन्द्रिरर्जुनः ॥ १३ ॥ कण्टकितं कण्टकाक्रान्तम् ॥ १४ ॥ दर्भचीरं तृणमयं वासः । निवस्य परिधाय ॥ २३ ॥ द्विगुणेन षड्रात्रेण अत्ययात् अतिवाहितवान् ॥ २४ ॥ पक्षेणाहारमाचरन् इति झ. पाठः ॥ २५ ॥ निरालम्बो निराश्रयः ॥ २६ ॥ धूमापयन् धूमवतीरिव कुर्वन् ॥ ३० ॥ संकल्पं मनोरथम् ॥ ३४ ॥ अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

विभ्राजमानो वपुषा गिरिर्मेरुरिवापरः ॥ २
श्रीमद्धनुरुपादाय शरांश्चाशीविषोपमान् ।
निष्पपात महार्चिष्मान्दहन्कक्षमिवानलः ॥ ३
देव्या सहोमया श्रीमान्समानव्रतवेषया ।
नानावेषधरैर्हृष्टैर्भूतैरनुगतस्तदा ॥ ४
किरातवेषसंछन्नः स्त्रीभिश्चापि सहस्रशः ।
अशोभत तदा राजन्स देशोऽतीव भारत ॥ ५
क्षणेन तद्वनं सर्वं निःशब्दमभवत्तदा ।
नादः प्रस्रवणानां च पक्षिणां चाप्युपारमत् ॥ ६
स सन्निकर्षमागम्य पार्थस्याक्लिष्टकर्मणः ।
मूकं नाम दितेः पुत्रं ददर्शाद्भुतदर्शनम् ॥ ७
वाराहं रूपमास्थाय तर्जयन्तमिवार्जुनम् ।
हन्तुं परमदुष्टात्मा तमुवाचाथ फल्गुनः ॥ ८
गाण्डीवं धनुरादाय शरांश्चाशीविषोपमान् ।
सज्यं धनुर्वरं कृत्वा ज्याघोषेण निनादयन् ॥ ९
यन्मां प्रार्थयसे हन्तुमनागसमिहागतम् ।
तस्मात्त्वां पूर्वमेवाहं नेष्यामि यमसादनम् ॥ १०
दृष्ट्वा तं प्रहरिष्यन्तं फल्गुनं दृढधन्विनम् ।
किरातरूपी सहसा वारयामास शंकरः ॥ ११
मयैष प्रार्थितः पूर्वं नीलमेघसमप्रभः ।
अनादृत्यैव तद्वाक्यं प्रजहाराथ फल्गुनः ॥ १२
किरातश्च समं तस्मिन्नेकलक्ष्ये महाद्युतिः ।
प्रमुमोचाशनिप्रख्यं शरमग्निशिखोपमम् ॥ १३
तौ मुक्तौ सायकौ ताभ्यां समं तत्र निपेततुः ।
मूकस्य गात्रे विस्तीर्णे शैलपृष्ठनिभे तदा ॥ १४
यथाऽशनेर्विनिष्पेषो वज्रस्येव च पर्वते ।
तथा तयोः सन्निपातः शरयोरभवत्तदा ॥ १५
स विद्धो बहुभिर्बाणैर्दीप्तास्यैः पन्नगैरिव ।
ममार राक्षसं रूपं भूयः कृत्वा सुदारुणम् ॥ १६
स ददर्श ततो जिष्णुः पुरुषं काञ्चनप्रभम् ।
किरातवेषसंछन्नं स्त्रीसहायममित्रहा ॥ १७
तमब्रवीत्प्रीतमनाः कौन्तेयः प्रहसन्निव ।
को भवानटते शून्ये वने स्त्रीगणसंवृतः ॥ १८
न त्वमस्मिन्वने घोरे बिभेषि कनकप्रभ ।
किमर्थं च त्वया विद्धो मृगोऽयं मत्परिग्रहः ॥ १९
मयाऽभिपन्नः पूर्वं हि राक्षसोऽयमिहागतः ।
कामात्परिभवाद्वाऽपि न मे जीवन्विमोक्ष्यसे २०
न ह्येष मृगयाधर्मो यस्त्वयाऽद्य कृतो मयि ।
तेन त्वां भ्रंशयिष्यामि जीवितात्पर्वताश्रयम् २१
इत्युक्तः पाण्डवेयेन किरातः प्रहसन्निव ।
उवाच श्लक्ष्णया वाचा पाण्डवं सव्यसाचिनं २२
न मत्कृते त्वया वीर भीः कार्या वनमन्तिकात् ।
इयं भूमिः सदाऽस्माकमुचिता वसतां वने ॥ २३
त्वया तु दुष्करः कस्मादिह वासः प्ररोचितः ।
वयं तु बहुसत्त्वेऽस्मिन्निवसामस्तपोधन ॥ २४
भवांस्तु कृष्णवर्त्माभः सुकुमारः सुखोचितः ।
कथं शून्यमिमं देशमेकाकी विचरिष्यति ॥ २५
अर्जुन उवाच ।
गाण्डीवमाश्रयं कृत्वा नाराचांश्चाग्निसन्निभान् ।
निवसामि महारण्ये द्वितीय इव पावकः ॥ २६
एष चापि मया जन्तुर्मृगरूपं समाश्रितः ।
राक्षसो निहतो घोरो हन्तुं मामिह चागतः ॥ २७
किरात उवाच ।
मयैष धन्वनिर्मुक्तैस्ताडितः पूर्वमेव हि ।
बाणैरभिहतः शेते नीतश्च यमसादनम् ॥ २८
ममैवायं लक्ष्यभूतः पूर्वमेव परिग्रहः ।
ममैव च प्रहारेण जीविताद्व्यपरोपितः ॥ २९
दोषान्स्वान्नार्हसेऽन्यस्मै वक्तुं स्वबलदर्पितः ।
अभिषक्तोसि मन्दात्मन्न मे जीवन्विमोक्ष्यसे ३०
स्थिरो भव विमोक्ष्यामि सायकानशनीनिव ।
घटस्व परया शक्त्या मुञ्च त्वमपि सायकान् ३१
तस्य तद्वचनं श्रुत्वा किरातस्यार्जुनस्तदा ।
रोषमाहारयामास ताडयामास चेषुभिः ॥ ३२
ततो हृष्टेन मनसा प्रतिजग्राह सायकान् ।

---

भूतैः प्रमथाख्यैः स्वपार्षदैः ॥ ४ ॥ समं एककालम् ॥ १३ ॥ अशनिर्मेघजं वज्रम् । वज्रं इन्द्रप्रहरणम् । संनिपातो योगः ॥ १५ ॥ स दानवः राक्षसमिव ॥१६॥ अभिपन्नः परिगृहीतः । कामात् यदृच्छातः । परिभवात् ममाभिभवाय ॥ २० ॥ मत्कृते मन्निमित्तम् । वनमन्तिकाद्वनस्य समीपे ॥ २३ ॥ प्ररोचितः स्वीकृतः ॥ २४ ॥ दोषान्मृगया-

भूयोभूय इति प्राह मन्दमन्देत्युवाच ह ॥ ३३
प्रहरस्व शरानेतान्नाराचान्मर्मभेदिनः ।
इत्युक्तो बाणवर्षं स मुमोच सहसाऽर्जुनः ॥ ३४
ततस्तौ तत्र संरब्धौ गर्जमानौ मुहुर्मुहुः ।
शरैराशीविषाकारैस्ततक्षाते परस्परम् ॥ ३५
ततोऽर्जुनः शरवर्षं किराते समवासृजत् ।
तत्प्रसन्नेन मनसा प्रतिजग्राह शंकरः ॥ ३६
मुहूर्तं शरवर्षं तु प्रतिगृह्य पिनाकधृक् ।
अक्षतेन शरीरेण तस्थौ गिरिरिवाचलः ॥ ३७
स दृष्ट्वा बाणवर्षं तु मोघीभूतं धनंजयः ।
परमं विस्मयं चक्रे साधुसाध्विति चाब्रवीत् ॥ ३८
अहोऽयं सुकुमाराङ्गो हिमवच्छिखराश्रयः ।
गाण्डीवमुक्तान्नाराचान्प्रतिगृह्णात्यविह्वलः ॥ ३९
कोऽयं देवो भवेत्साक्षाद्रुद्रो यक्षः सुरोऽसुरः ।
विद्यते हि गिरिश्रेष्ठे त्रिदशानां समागमः ॥ ४०
न हि मद्बाणजालानामुत्सृष्टानां सहस्रशः ।
शक्तोऽन्यः सहितुं वेगमृते देवं पिनाकिनम् ॥ ४१
देवो वा यदि वा यक्षो रुद्रादन्यो व्यवस्थितः ।
अहमेनं शरैस्तीक्ष्णैर्नयामि यमसादनम् ॥ ४२
ततो हृष्टमना जिष्णुर्नाराचान्मर्मभेदिनः ।
व्यसृजच्छतधा राजन्मयूखानिव भास्करः ॥ ४३
तान्प्रसन्नेन मनसा भगवाँल्लोकभावनः ।
शूलपाणिः प्रत्यगृह्णाच्छिलावर्षमिवाचलः ॥ ४४
क्षणेन क्षीणबाणोऽथ संवृत्तः फल्गुनस्तदा ।
वित्रासं च जगामाथ तं दृष्ट्वा शरसंक्षयम् ॥ ४५
चिन्तयामास जिष्णुस्तु भगवन्तं हुताशनम् ।
पुरस्तादक्षयौ दत्तौ तूणौ येनास्य खाण्डवे ॥ ४६
किं तु मोक्ष्यामि धनुषा यन्मे बाणाः क्षयं गताः ।
अयं च पुरुषः कोपि बाणान्ग्रसति सर्वशः ॥ ४७
अहमेनं धनुष्कोट्या शूलाग्रेणेव कुञ्जरम् ।
नयामि दण्डधारस्य यमस्य सदनं प्रति ॥ ४८
प्रगृह्याथ धनुष्कोट्या ज्यापाशेनावकृष्य च ।
मुष्टिभिश्चापि हतवान्वज्रकल्पैर्महाद्युतिः ॥ ४९
संप्रायुध्यद्धनुष्कोट्या कौन्तेयः परवीरहा ।
तदप्यस्य धनुर्दिव्यं जग्राह गिरिगोचरः ॥ ५०
ततोऽर्जुनो ग्रस्तधनुः खड्गपाणिरतिष्ठत ।
युद्धस्यान्तमभीप्सन्वै वेगेनाभिजगाम तम् ॥ ५१
तस्य मूर्ध्नि शितं खड्गमसक्तं पर्वतेष्वपि ।
मुमोच भुजवीर्येण विक्रम्य कुरुनन्दनः ॥ ५२
तस्य मूर्धानमासाद्य पफालासिवरो हि सः ।
ततो वृक्षैः शिलाभिश्च योधयामास फल्गुनः ५३
तदा वृक्षान्महाकायः प्रत्यगृह्णादथो शिलाः ।
किरातरूपी भगवांस्ततः पार्थो महाबलः ॥ ५४
मुष्टिभिर्वज्रसंस्पर्शैर्धूममुत्पादयन्मुखे ।
प्रजहार दुराधर्षे किरातसमरूपिणि ॥ ५५
ततः शक्राशनिसमैर्मुष्टिभिर्भृशदारुणैः ।
किरातरूपी भगवानर्दयामास फल्गुनम् ॥ ५६
ततश्चटचटाशब्दः सुघोरः समजायत ।
पाण्डवस्य च मुष्टीनां किरातस्य च युध्यतः ॥ ५७
सुमुहूर्तं तयोर्युद्धमभवल्लोमहर्षणम् ।
भुजप्रहारसंयुक्तं वृत्रवासवयोरिव ॥ ५८
महाराज ततो जिष्णुः किरातमुरसा बली ।
पाण्डवं च विचेष्टन्तं किरातोप्यहनद्बलात् ॥ ५९
तयोर्भुजविनिष्पेषात्संघर्षेणोरसोस्तथा ।
समजायत गात्रेषु पावकोऽङ्गारधूमवान् ॥ ६०
तत एनं महादेवः पीड्य गात्रैः सुपीडितम् ।
तेजसा व्यक्रमद्रोषाच्चेतस्तस्य विमोहयन् ॥ ६१
ततोऽभिपीडितैर्गात्रैः पिण्डीकृत इवाबभौ ।
फल्गुनो गात्रसंरुद्धो देवदेवेन भारत ॥ ६२
निरुच्छ्वासोऽभवच्चैव सन्निरुद्धो महामनाः ।
ततः पपात संमूढस्ततः प्रीतोऽभवद्भवः ॥ ६३
स मुहूर्तं तथा भूत्वा सचेताः पुनरुत्थितः ।
रुधिरेणाप्लुताङ्गस्तु पाण्डवो भृशदुःखितः ॥ ६४
शरण्यं शरणं गत्वा भगवन्तं पिनाकिनम् ।

---

धर्मातिक्रमरूपान् ॥ ३० ॥ नाराचान् शरजातिभेदान् ॥ ३४ ॥ अहोऽयमिति संधिरार्षः ॥ ३९ ॥ सहितुं सोढुम् ॥ ४१ ॥ असक्तमकुण्ठितम् ॥ ५२ ॥ पफाल विशीर्णः ॥ ५३ ॥ धूमं क्रोधावेशेन ॥ ५५ ॥ पीड्य निपीड्य ॥ ६१ ॥ गात्रेषु संरुद्धश्चलनहीनः ॥ ६२ ॥

मृन्मयं स्थण्डिलं कृत्वा माल्येनापूजयद्भवम् ॥६५
तच्च माल्यं तदा पार्थः किरातशिरसि स्थितम् ।
अपश्यत्पाण्डवश्रेष्ठो हर्षेण प्रकृतिं गतः ॥ ६६
पपात पादयोस्तस्य ततः प्रीतोऽभवद्भवः ।
[उवाच चैनं वचसा मेघगम्भीरगीर्हरः ।
जातविस्मयमालोक्य ततः क्षीणाङ्गसंहतिम् ॥६७
भव उवाच ।
भोभो फल्गुन तुष्टोस्मि कर्मणाऽप्रतिमेन ते ।
शौर्येणानेन धृत्या च क्षत्रियो नास्ति ते समः ६८
समं तेजश्च वीर्यं च ममाद्य तव चानघ ।
प्रीतस्तेऽहं महाबाहो पश्य मां भरतर्षभ ॥ ६९
ददामि ते विशालाक्ष चक्षुः पूर्वं मुनिर्भवान् ।
विजेष्यसि रणे शत्रूनपि सर्वान्दिवौकसः ॥ ७०
[प्रीत्या च तेऽहं दास्यामि यदस्त्रमनिवारितम् ।
त्वं हि शक्तो मदीयं तदस्त्रं धारयितुं क्षणात्॥]७१
वैशंपायन उवाच ।
ततो देवं महादेवं गिरिशं शूलपाणिनम् ।
ददर्श फल्गुनस्तत्र सह देव्या महाद्युतिम् ॥ ७२
स जानुभ्यां महीं गत्वा शिरसा प्रणिपत्य च ।
प्रसादयामास हरं पार्थः परपुरंजयः ॥ ७३
अर्जुन उवाच ।
कपर्दिन्सर्वभूतेश भगनेत्रनिपातन ।
[देवदेव महादेव नीलग्रीव जटाधर ॥ ७४
कारणानां च परमं जाने त्वां त्र्यम्बकं विभुम् ।
देवानां च गतिं देवं त्वत्प्रसूतमिदं जगत् ॥ ७५
अजेयस्त्वं त्रिभिर्लोकैः सदेवासुरमानुषैः ।
शिवाय विष्णुरूपाय विष्णवे शिवरूपिणे ॥ ७६
दक्षयज्ञविनाशाय हरिरूपाय ते नमः ।
ललाटाक्षाय शर्वाय मीढुषे शूलपाणये ॥ ७७
पिनाकगोप्त्रे सूर्याय मङ्गल्याय च वेधसे ।
प्रसादये त्वां भगवन्सर्वभूतमहेश्वर ॥ ७८
गणेशं जगतः शम्भुं लोककारणकारणम् ।
प्रधानपुरुषातीतं परं सूक्ष्मतरं हरम् ॥ ७९
व्यतिक्रमं मे भगवन्क्षन्तुमर्हसि शंकर ।
भगवन्दर्शनाकाङ्क्षी प्राप्तोस्मीमं महागिरिम् ॥ ८०
दयितं तव देवेश तापसालयमुत्तमम् ।
प्रसादये त्वां भगवन्सर्वलोकनमस्कृतम् ॥ ८१
न मे स्यादपराधोऽयं महादेवातिसाहसात् ।
कृतो मयाऽयमज्ञानाद्विमर्दो यस्त्वया सह ।
शरणं प्रतिपन्नाय तत्क्षमस्वाद्य शंकर ॥ ८२
वैशंपायन उवाच ।
तमुवाच महातेजाः प्रहसन्वृषभध्वजः ।
प्रगृह्य रुचिरं बाहुं क्षान्तमित्येव फल्गुनम् ॥ ८३
परिष्वज्य च बाहुभ्यां प्रीतात्मा भगवान्हरः ।
पुनः पार्थं सान्त्वपूर्वमुवाच वृषभध्वजः ॥ ८४
'गङ्गाङ्कितजटः शर्वः पार्थस्यामिततेजसः ।
प्रगृह्य रुचिरं बाहुं वृत्तं ताम्रतलाङ्गुलिम् ॥' ८५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि कैरातपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

## चत्वारिंशोऽध्यायः ॥ ४० ॥

महादेवेन पार्थाय स्वग्रस्तगाण्डीवादिप्रत्यर्पणपूर्वकं पाशुपतास्त्रप्रदानम् ॥ १ ॥

देवदेव उवाच ।
नरस्त्वं पूर्वदेहे वै नारायणसहायवान् ।
बदर्यां तप्तवानुग्रं तपो वर्षायुतान्बहून् ॥ १
त्वयि वा परमं तेजो विष्णौ वा पुरुषोत्तमे ।
युवाभ्यां पुरुषाग्र्याभ्यां तेजसा धार्यते जगत् ॥२
शक्राभिषेके सुमहद्धनुर्जलदनिःस्वनम् ।
प्रगृह्य दानवाः शस्तास्त्वया कृष्णेन च प्रभो ॥३
तदेतदेव गाण्डीवं तव पार्थ करोचितम् ।

प्रकृतिं स्वास्थ्यम् ॥ ६६ ॥ चक्षुः दिव्यज्ञानम् ॥ ७० ॥
मीढुषे वर्षकाय ॥ ७७ ॥ एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

शस्ताः मारिताः ॥ ३ ॥

* कुण्डलान्तर्गताः श्लोकाः क. ध. पुस्तकयोर्न दृश्यन्ते ।

मायामास्थाय तद्रत्तं मया पुरुषसत्तम ॥ ४
तूणौ चाप्यक्षयौ भूयस्तव पार्थ करोचितौ ।
भविष्यति शरीरं च नीरुजं कुरुनन्दन ॥ ५
प्रीतिमानस्मि वै पार्थ भवान्सत्यपराक्रमः ।
गृहाण वरमस्मत्तः काङ्क्षितं यन्नरर्षभ ॥ ६
न त्वया सदृशः कश्चित्पुमान्मर्त्येषु भारत ।
दिवि वा वर्तते क्षत्रं त्वत्प्रधानमरिंदम ॥ ७
अर्जुन उवाच ।
वरं ददासि चेन्मह्यं कामं प्रीत्या वृषध्वज ।
कामये दिव्यमस्त्रं तद्धोरं पाशुपतं प्रभो ॥ ८
यत्तद्ब्रह्मशिरो नाम रौद्रं भीमपराक्रमम् ।
युगान्ते दारुणे प्राप्ते कृत्स्नं संहरते जगत् ॥ ९
[कर्णभीष्मकृपद्रोणैर्भविता तु महाहवः ।
त्वत्प्रसादान्महादेव जयेयं तान्यथा युधि ॥]१०
जयेयं येन संग्रामे दानवान्राक्षसांस्तथा ।
राक्षश्चैव पिशाचांश्च गन्धर्वानथ पन्नगान् ॥ ११
यस्मिञ्शूलसहस्राणि गदाश्चोग्रप्रदर्शनाः ।
शराश्चाशीविषाकाराः संभवन्त्यनुमन्त्रिताः ॥ १२
युध्येयं येन भीष्मेण द्रोणेन च कृपेण च ।
सूतपुत्रेण च रणे नित्यं कटुकभाषिणा ॥ १३
एष मे प्रथमः कामो भगवन्भगनेत्रहन् ।
त्वत्प्रसादाद्विनिर्वृत्तः समर्थः स्यामहं यथा ॥१४
भव उवाच ।
ददामि तेऽस्त्रं दयितमहं पाशुपतं विभो ।
समर्थो धारणे मोक्षे संहारेऽपि च पाण्डव ॥१५
न तद्वेद महेन्द्रोपि न यमो न च यक्षराट् ।
वरुणोप्यथवा वायुः कुतो वेत्स्यन्ति मानवाः१६
न त्वया सहसा पार्थ मोक्तव्यं पुरुषे क्वचित् ।
जगद्विनिर्दहेत्सर्वमल्पतेजसि पातितम् ॥ १७
अवध्यो नाम नास्त्यस्य त्रैलोक्ये सचराचरे ।
मनसा चक्षुषा वाचा धनुषा च निपात्यते ॥ १८
वैशंपायन उवाच ।
तच्छ्रुत्वा त्वरितः पार्थः शुचिर्भूत्वा समाहितः ।
उपसंगृह्य विश्वेशमधीष्वेत्यथ सोऽब्रवीत् ॥ १९
ततस्त्वध्यापयामास सरहस्यनिवर्तनम् ।
तदस्त्रं पाण्डवश्रेष्ठं मूर्तिमन्तमिवान्तकम् ॥ २०
उपतस्थे महात्मानं यथा त्र्यक्षमुमापतिम् ।
प्रतिजग्राह तच्चापि प्रीतिमानर्जुनस्तदा ॥ २१
ततश्चचाल पृथिवी सपर्वतवनद्रुमा ।
ससागरवनोद्देशा सग्रामनगराकरा ॥ २२
शङ्खदुन्दुभिघोषाश्च भेरीणां च सहस्रशः ।
तस्मिन्मुहूर्ते संप्राप्ते निर्घातश्च महानभूत् ॥ २३
अथास्त्रं जाज्वलद्धोरं पाण्डवस्यामितौजसः ।
मूर्तिमद्विष्ठितं पार्श्वे ददृशुर्देवदानवाः ॥ २४
स्पृष्टस्य त्र्यम्बकेणाथ फल्गुनस्यामितौजसः ।
यत्किंचिदशुभं देहे तत्सर्वं नाशमीयिवत् ॥ २५
स्वर्गं गच्छेत्यनुज्ञातस्त्र्यम्बकेण तदाऽर्जुनः ।
प्रणम्य शिरसा राजन्प्राञ्जलिर्भवमैक्षत ॥ २६
ततः प्रभुस्त्रिदिवनिवासिनां वशी
महामतिर्गिरिश उमापतिः शिवः ।
धनुर्महद्दितिजपिशाचसूदनं
ददौ भवः पुरुषवराय गाण्डिवम् ॥ २७
ततः शुभं गिरिवरमीश्वरस्तदा
सहोमयाऽसिततटसानुकन्दरम् ।
विहाय तं पतगमहर्षिसेवितं
जगाम खं पुरुषवरस्य पश्यतः ॥ २८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि कैरातपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

---

त्वत्प्रधानं त्वमेव श्रेष्ठो यस्मिन् क्षत्रे ॥ ७ ॥ विनिर्वृत्तः विशेषेण कृतकृत्यः ॥ १४ ॥ संहारे निवर्तने ॥ १५ ॥ मनसा संकल्पमात्रेण निपात्यते शत्रुः धनुषेति बाणप्रयोगेण ॥ १८ ॥ अधीष्व अध्यापय ॥ १९ ॥ निर्घात उत्पातः ॥ २३ ॥ वशी वश इच्छा तद्वान् । तज्जयीत्यर्थः ॥ २७ ॥ चत्वारिंशोऽध्यायः ॥ ४० ॥

## एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

यमवरुणकुबेरैरर्जुनायास्त्रदानम् ॥ १ ॥ अर्जुनंप्रति शक्रेण स्वर्गागमनचोदना ॥ २ ॥

वैशंपायन उवाच ।
तस्य संपश्यतस्त्वेव पिनाकी गोवृषध्वजः ।
जगामादर्शनं भानुर्लोकस्येवास्तमीयिवान् ॥ १
ततोऽर्जुनः परं चक्रे विस्मयं परवीरहा ।
मया साक्षान्महादेवो दृष्ट इत्येव भारत ॥ २
धन्योस्म्यनुगृहीतोस्मि यन्मया त्र्यम्बको हरः ।
पिनाकी वरदो रूपी दृष्टः स्पृष्टश्च पाणिना ॥ ३
कृतार्थं चावगच्छामि परमात्मानमात्मना ।
शत्रूंश्च विजितान्सर्वान्निर्वृत्तं च प्रयोजनम् ॥ ४
इत्येवं चिन्तयानस्य पार्थस्यामिततेजसः ।
ततो वैडूर्यवर्णाभो भासयन्सर्वतो दिशः ।
यादोगणवृतः श्रीमानाजगाम जलेश्वरः ॥ ५
नागैर्नदैर्नदीभिश्च दैत्यैः साध्यैर्मरुद्गणैः ।
वरुणो यादसांभर्ता वशी तं देशमागमत् ॥ ६
अथ जाम्बूनदवपुर्विमानेन महार्चिषा ।
कुबेरः समनुप्राप्तो यक्षैरनुगतः प्रभुः ॥ ७
विद्योतयन्निवाकाशमद्भुतोपमदर्शनः ।
धनानामधिपः श्रीमानर्जुनं द्रष्टुमागतः ॥ ८
तथा लोकान्तकः श्रीमान्यमः साक्षात्प्रतापवान् ।
मर्त्यमूर्तिधरैः सार्धं पितृभिर्लोकभावनैः ॥ ९
दण्डपाणिरचिन्त्यात्मा सर्वभूतविनाशकृत् ।
वैवस्वतो धर्मराजो विमानेनावभासयन् ॥ १०
त्रीँल्लोकान्गुह्यकांश्चैव गन्धर्वांश्चैव पन्नगान् ।
द्वितीय इव मार्ताण्डो युगान्ते समुपस्थिते ॥ ११
भानुमन्ति विचित्राणि शिखराणि महागिरेः ।
समास्थायार्जुनं तत्र ददृशुस्तपसान्वितम् ॥ १२
ततो मुहूर्ताद्भगवानैरावतशिरोगतः ।
आजगाम सहेन्द्राण्या शक्रः सुरगणैर्वृतः ॥ १३
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
शुशुभे नागराजस्थः सितमभ्रमिव स्थितः ॥ १४
संस्तूयमानो गन्धर्वैर्ऋषिभिश्च तपोधनैः ।
शृङ्गं गिरेः समासाद्य तस्थौ सूर्य इवोदितः ॥ १५
अथ मेघस्वनो धीमान्व्याजहार शुभां गिरम् ।
यमः परमधर्मज्ञो दक्षिणां दिशमास्थितः ॥ १६
अर्जुनार्जुन पश्यास्माँल्लोकपालान्समागतान् ।
दृष्टिं ते वितरामोऽद्य भवानर्हति दर्शनम् ॥ १७
पूर्वर्षिरमितात्मा त्वं नरो नाम महाबलः ।
नियोगाद्ब्रह्मणस्तात मर्त्यतां समुपागतः ॥ १८
त्वया च वसुसंभूतो महावीर्यः पितामहः ।
भीष्मः परमधर्मात्मा जेतव्यश्च रणेऽनघ ॥ १९
क्षत्रं चाग्निसमस्पर्शं भारद्वाजेन रक्षितम् ।
दानवाश्च महावीर्या ये मनुष्यत्वमागताः ।
निवातकवचाश्चैव संसाध्याः कुरुनन्दन ॥ २०
पितुर्ममांशो देवस्य सर्वलोकप्रतापिनः ।
कर्णश्च सुमहावीर्यस्त्वया वध्यो धनंजय ॥ २१
अंशाश्च क्षितिसंप्राप्ता देवगन्धर्वरक्षसाम् ।
त्वया निपातिता युद्धे स्वकर्मफलनिर्जिताम् ।
गतिं प्राप्स्यन्ति कौन्तेय यथास्वमरिकर्शन ॥ २२
अक्षया तव कीर्तिश्च लोके स्थास्यति फल्गुन ।
त्वया साक्षान्महादेवस्तोषितो हि महामृधे ॥ २३
लघ्वी वसुमती चापि कर्तव्या विष्णुना सह ॥ २४
गृहाणास्त्रं महाबाहो दण्डमप्रतिवारणम् ।
अनेनास्त्रेण सुमहत्त्वं हि कर्म करिष्यसि ॥ २५
वैशंपायन उवाच ।
प्रतिजग्राह पार्थोपि विधिवत्कुरुनन्दनः ।
समन्त्रं सोपरोधं च समोक्षविनिवर्तनम् ॥ २६
ततो जलधरश्यामो वरुणो यादसांपतिः ।
पश्चिमां दिशमास्थाय गिरमुच्चारयन्प्रभुः ॥ २७
पार्थ क्षत्रियमुख्यस्त्वं क्षत्रधर्मे व्यवस्थितः ।
पश्य मां पृथुताम्राक्ष वरुणोस्मि जलेश्वरः ॥ २८

निर्वृत्तं निष्पन्नम् ॥ ४ ॥ यादांसि जलजन्तवस्तेषां गणः ॥ ५ ॥ नागैः सर्पैः ॥ ६ ॥ भानुमन्ति दीप्तिमन्ति ॥ १२ ॥ वितरामो यच्छामः ॥ १७ ॥ संसाध्याः जेतव्याः ॥ २० ॥ मम पितुः सूर्यस्य ॥ २१ ॥ मृधे संग्रामे ॥ २३ ॥ लघ्वी भारशून्या ॥ २४ ॥

मया समुद्यतान्पाशान्वारुणाननिवारितान् ।
प्रतिगृह्णीष्व कौन्तेय सरहस्यनिवर्तनान् ॥ २९
एभिस्तदा मया वीर संग्रामे तारकामये ।
दैतेयानां सहस्राणि संयतानि महात्मनाम् ॥३०
तस्मादिमान्महासत्व मत्प्रसादसमुत्थितान् ।
गृहाण न हि ते मुच्येदन्तकोप्याततायिनः ॥३१
अनेन त्वं यदाऽस्त्रेण संग्रामे विचरिष्यसि ।
तदा निःक्षत्रिया भूमिर्भविष्यति न संशयः ॥३२
'ततस्तान्वारुणानस्त्रान्दिव्यानस्त्रविदांवरः ।
प्रतिजग्राह विधिवद्वरुणाद्वासविस्तदा ॥' ३३
ततः कैलासनिलयो धनाध्यक्षोऽभ्यभाषत ।
दत्तेष्वस्त्रेषु दिव्येषु वरुणेन यमेन च ॥ ३४
प्रीतोऽहमपि ते प्राज्ञ पाण्डवेय महाबल ।
त्वया सह समागम्य अजितेन तथैव च ॥ ३५
सव्यसाचिन्महाबाहो पूर्वदेव सनातन ।
सहास्माभिर्भवाञ्श्रान्तः पुराकल्पेषु नित्यशः ३६
दर्शनं ते त्विदं दिव्यं प्रदिशामि नरर्षभ ।
अमानुषान्महाबाहो दुर्जयानपि जेष्यसि ॥ ३७
मत्तश्चैव भवानाशु गृह्णात्वस्त्रमनुत्तमम् ।
अनेन त्वमनीकानि धार्तराष्ट्रस्य धक्ष्यसि ॥ ३८
मत्तोऽपि त्वं गृहाणास्त्रमन्तर्धानं प्रियं मम ।
ओजस्तेजोद्युतिकरं प्रस्वापनमरातिनुत् ॥ ३९
महात्मना शंकरेण त्रिपुरं निहतं यदा ।
तदैतदस्त्रं निर्मुक्तं येन दग्धा महासुराः ॥ ४०
त्वदर्थमुद्यतं चेदं मया सत्यपराक्रम ।
त्वमर्हो धारणे चास्य मेरुप्रतिमगौरव ॥ ४१
ततोऽर्जुनो महाबाहुर्विधिवत्कुरुनन्दनः ।
कौबेरमधिजग्राह दिव्यमस्त्रं महाबलः ॥ ४२
ततोऽब्रवीद्देवराजः पार्थमक्लिष्टकारिणम् ।
सान्त्वयञ्श्लक्ष्णया वाचा दिव्यदुन्दुभिनिःस्वनः ॥
कुन्तीमातर्महाबाहो त्वमीशानः पुरातनः ।
परां सिद्धिमनुप्राप्तः साक्षाद्देवगतिं गतः ॥ ४४
देवकार्यं तु सुमहत्त्वया कार्यमरिंदम ।
आरोढव्यस्त्वया स्वर्गः सज्जीभव महाद्युते ॥४५
रथो मातलिसंयुक्त आगतस्त्वत्कृते मम ।
तत्र तेऽहं प्रदास्यामि सर्वाण्यस्त्राणि कौरव ॥४६
तान्दृष्ट्वा लोकपालांस्तु समेतान्गिरिमूर्धनि ।
जगाम विस्मयं धीमान्कुन्तीपुत्रो धनंजयः ॥४७
ततोऽर्जुनो महातेजा लोकपालान्समागतान् ।
पूजयामास विधिवद्वाग्भिरद्भिः फलैरपि ॥ ४८
ततः प्रतिययुर्देवाः प्रतिपूज्य धनंजयम् ।
यथागतेन विबुधाः सर्वे कामं मनोजवाः ॥ ४९
ततोऽर्जुनो मुदं लेभे लब्धास्त्रः पुरुषर्षभः ।
कृतार्थमथ चात्मानं स मेने पूर्णमानसम् ॥ ५०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि कैरातपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

कैरातपर्व समाप्तम् ॥ ३ ॥

---

## (अथेन्द्रलोकाभिगमनपर्व ॥ ४ ॥)

### द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

पार्थेन मातलिसमानीतरथारोहणेन स्वर्गगमनम् ॥ १ ॥

वैशंपायन उवाच ।
गतेषु लोकपालेषु पार्थः शत्रुनिबर्हणः ।
चिन्तयामास राजेन्द्र देवराजरथागमम् ॥ १
तस्य चिन्तयमानस्य गुडाकेशस्य धीमतः ।

संयतानि बद्धानि ॥३०॥ अजितेन कृष्णेन यथा तथैव प्रीतोस्मि ॥ ३५ ॥ पूर्वदेव नर ॥ ३६ ॥ उद्यतमुपस्थितम् ॥ ४१ ॥ देवगतिं देवानां परायणत्वम् ॥४४॥ आगन्ता इति झ.पाठः । आगन्ता आयास्यतीत्यर्थः ॥ ४५ ॥ एकचत्वारिंशोऽध्यायः ॥४१

रथो मातलिसंयुक्त आजगाम महाप्रभः ॥ २
नभो वितिमिरं कुर्वञ्जलदान्पाटयन्निव ।
दिशः संपूरयन्नादैर्महामेघरवोपमैः ॥ ३
असयः शक्तयो भीमा गदाश्चोग्रप्रदर्शनाः ।
दिव्यप्रभावाः प्रासाश्च विद्युतश्च महाप्रभाः ॥ ४
तथैवाशनयश्चैव चक्रयुक्तास्तुलागुडाः ।
वायुस्फोटाः सनिर्घाताः शङ्खमेघस्वनास्तथा ॥ ५
तत्र नागा महाकाया ज्वलितास्याः सुदारुणाः ।
सिताभ्रकूटप्रतिमाः संहताश्च यथोपलाः ॥ ६
दशवाजिसहस्राणि हरीणां वातरंहसाम् ।
वहन्ति यं नेत्रमुषं दिव्यं मायामयं रथम् ॥ ७
तत्रापश्यन्महानीलं वैजयन्तं महाप्रभम् ।
ध्वजमिन्दीवरश्यामं वंशं कनकभूषणम् ॥ ८
तस्मिन्रथे स्थितं सूतं तप्तहेमविभूषितम् ।
दृष्ट्वा पार्थो महाबाहुर्देवराजमतर्कयत् ॥ ९
तथा तर्कयतस्तस्य फल्गुनस्याथ मातलिः ।
सन्नतः प्रस्थितो भूत्वा वाक्यमर्जुनमब्रवीत् ॥ १०
भोभो शक्रात्मज श्रीमञ्शक्रस्त्वां द्रष्टुमिच्छति ।
आरोहतु भवाञ्शीघ्रं रथमिन्द्रस्य संमतम् ॥ ११
आह माममरश्रेष्ठः पिता तव शतक्रतुः ।
कुन्तीसुतमिह प्राप्तं पश्यन्तु त्रिदशालयाः ॥ १२
एष शक्रः परिवृतो देवैर्ऋषिगणैस्तथा ।
गन्धर्वैरप्सरोभिश्च त्वां दिदृक्षुः प्रतीक्षते ॥ १३
अस्माल्लोकाद्देवलोकं पाकशासनशासनात् ।
आरोह त्वं मया सार्धं लब्धास्त्रः पुनरेष्यसि ॥ १४
अर्जुन उवाच ।
मातले गच्छ शीघ्रं त्वमारोहस्व रथोत्तमम् ।
राजसूयाश्वमेधानां शतैरपि सुदुर्लभम् ॥ १५
पार्थिवैः सुमहाभागैर्यज्वभिर्भूरिदक्षिणैः ।
दैवतैर्वा दुरारोहं दानवैर्वा रथोत्तमम् ॥ १६
नातप्ततपसा शक्य एष दिव्यो महारथः ।
द्रष्टुं वाऽप्यथवा स्प्रष्टुमारोढुं कुत एव च ॥ १७
त्वयि प्रतिष्ठिते साधो रथस्थे स्थिरवाजिनि ।
पश्चादहमथारोक्ष्ये सुकृती सत्पथं यथा ॥ १८
वैशंपायन उवाच ।
तस्य तद्वचनं श्रुत्वा मातलिः शक्रसारथिः ।
आरुरोह रथं शीघ्रं हयाञ्जग्राह रश्मिभिः ॥ १९
ततोऽर्जुनो हृष्टमना गङ्गायामाप्लुतः शुचिः ।
जजाप जप्यं कौन्तेयो विधिवत्कुरुनन्दनः ॥ २०
ततः पितॄन्यथान्यायं तर्पयित्वा यथाविधि ।
मन्दरं शैलराजं तमाप्रष्टुमुपचक्रमे ॥ २१
साधूनां पुण्यशीलानां मुनीनां पुण्यकर्मणाम् ।
त्वं सदा संश्रयः शैल स्वर्गमार्गाभिकाङ्क्षिणाम् ॥ २२
त्वत्प्रसादात्सदा शैल ब्राह्मणाः क्षत्रिया विशः ।
स्वर्गं प्राप्ताश्चरन्ति स्म देवैः सह गतव्यथाः ॥ २३
अद्रिराज महाशैल मुनिसंश्रय तीर्थवन् ।
गच्छाम्यामन्त्रयित्वा त्वां सुखमस्म्युषितस्त्वयि २४
तव सानूनि कुञ्जाश्च नद्यः प्रस्रवणानि च ।
तीर्थानि च सुपुण्यानि मया दृष्टान्यनेकशः ॥ २५
फलानि च सुगन्धीनि भक्षितानि ततस्ततः ।
सुसुगन्धाश्च वार्योघास्त्वच्छरीरविनिःसृताः ।
अमृतास्वादसदृशाः पीताः प्रस्रवणोदकाः ॥ २६
शिशुर्यथा पितुश्चाङ्के सुखं शेते तटे तथा ।
मया तवाङ्के ललितं शैलराज महाप्रभो ॥ २७
अप्सरोगणसंकीर्णे ब्रह्मघोषानुनादिते ।
सुखमस्म्युषितः शैल तव सानुषु नित्यदा ॥ २८
एवमुक्त्वार्जुनः शैलमामन्त्र्य परवीरहा ।
आरुरोह रथं दिव्यं द्योतयन्निव भास्करः ॥ २९
स तेनादित्यरूपेण दिव्येनाद्भुतकर्मणा ।
ऊर्ध्वमाचक्रमे धीमान्प्रहृष्टः कुरुनन्दनः ॥ ३०
सोऽदर्शनपथं यातो मर्त्यानां धर्मचारिणाम् ।
ददर्शाद्भुतरूपाणि विमानानि सहस्रशः ॥ ३१
न तत्र सूर्यः सोमो वा द्योतते न च पावकः ।
स्वयैव प्रभया तत्र द्योतन्ते पुण्यलब्धया ॥ ३२

पाटयन् द्विधाकुर्वन् ॥ ३ ॥ तुलागुडाः भाण्डगोलकाः । वायुस्फोटाः वेगवशाद्वायुं जनयन्तः ॥ ५ ॥ हरीणां पीतकौशेयसंनिभानां वाजिनां सहस्राणीत्येकदेशान्वयः ॥ ७ ॥ वैजयन्तं नाम्ना देवेन्द्रध्वजम् ॥ ८ ॥ आप्लुतः स्नातः ॥ २० ॥ ललितं क्रीडितम् ॥ २७ ॥

तारारूपाणि यानीह दृश्यन्ते द्युतिमन्ति वै ।
आकाशे विप्रकृष्टत्वात्तनूनि सुमहान्त्यपि ॥ ३३
तानि तत्र प्रभास्वन्ति रूपवन्ति च पाण्डवः ।
ददर्श स्वेषु धिष्ण्येषु दीप्तिमन्ति स्वयाऽर्चिषा ३४
तत्र राजर्षयः सिद्धा वीराश्च निहता युधि ।
तपसा च जितं स्वर्गं संपेतुः शतसङ्घशः ॥ ३५
गन्धर्वाणां सहस्राणि सूर्यज्वलिततेजसाम् ।
गुह्यकानामृषीणां च तथैवाप्सरसां गणान् ॥३६
लोकानात्मप्रभान्पश्यन्फल्गुनो विस्मयान्वितः ।
पप्रच्छ मातलिं प्रीत्या स चाप्येनमुवाच ह ॥३७
एते सुकृतिनः पार्थ स्वेषु धिष्ण्येष्ववस्थिताः ।
तान्दृष्टवानसि विभो तारारूपाणि भूतले ॥ ३८
ततोऽपश्यत्स्थितं द्वारि मत्तं विजयिनं गजम् ।
ऐरावतं चतुर्दन्तं कैलासमिव शृङ्गिणम् ॥ ३९
स सिद्धमार्गमाक्रम्य कुरुपाण्डवसत्तमः ।
व्यरोचत यथापूर्वं मान्धाता पार्थिवोत्तमः ॥४०
अभिचक्राम लोकान्स राज्ञां राजीवलोचनः ॥४१
[एवं स संक्रमंस्तत्र स्वर्गलोके महायशाः ।]
ततो ददर्श शक्रस्य पुरींताममरावतीम् ॥ ४२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि इन्द्रलोकाभिगमनपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

## त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

इन्द्रेणार्जुनस्य सबहुमानं स्वार्धासनारोपणम् ॥ १ ॥

वैशंपायन उवाच ।
ददर्श स पुरीं रम्यां सिद्धचारणसेविताम् ।
सर्वर्तुकुसुमैः पुण्यैः पादपैरुपशोभिताम् ॥ १
तत्र सौगन्धिकानां च पुष्पाणां पुण्यगन्धिनाम् ।
उपवीज्यमानो मिश्रेण वायुना पुण्यगन्धिना ॥२
नन्दनं च वनं दिव्यमप्सरोगणसेवितम् ।
ददर्श दिव्यकुसुमैराह्वयद्भिरिव द्रुमैः ॥ ३
नातप्ततपसा शक्यो द्रष्टुं नानाहिताग्निना ।
स लोकः पुण्यकर्तॄणां नापि युद्धे पराङ्मुखैः ॥ ४
नायज्वभिर्नाव्रतिकैर्न वेदश्रुतिवर्जितैः ।
नानाप्लुताङ्गैस्तीर्थेषु यज्ञदानबहिष्कृतैः ॥ ५
नापि यज्ञहनैः क्षुद्रैर्द्रष्टुं शक्यः कथंचन ।
पानपैर्गुरुतल्पैश्च मांसादैर्वा दुरात्मभिः ॥ ६
स तद्दिव्यं वनं पश्यन्दिव्यगीतनिनादितम् ।
प्रविवेश महाबाहुः शक्रस्य दयितां पुरीम् ॥ ७
तत्र देवविमानानि कामगानि सहस्रशः ।
संस्थितान्यभियातानि ददर्शायुतशस्तदा ॥ ८
संस्तूयमानो गन्धर्वैरप्सरोभिश्च पाण्डवः ।
पुष्पगन्धवहैः पुण्यैर्वायुभिश्चानुवीजितः ॥ ९
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
हृष्टाः संपूजयामासुः पार्थमक्लिष्टकारिणम् ॥ १०
आशीर्वादैः स्तूयमानो दिव्यवादित्रनिःस्वनैः ।
प्रतिपेदे महाबाहुः शङ्खदुन्दुभिनादितम् ॥ ११
नक्षत्रमार्गं विपुलं सुरवीथीति विश्रुतम् ।
इन्द्राज्ञया ययौ पार्थः स्तूयमानः समन्ततः ॥१२
तत्र साध्यास्तथा विश्वे मरुतोऽथाश्विनौ तथा ।
आदित्या वसवो रुद्रास्तथा ब्रह्मर्षयोऽमलाः॥१३
राजर्षयश्च बहवो दिलीपप्रमुखा नृपाः ।
तम्बुरुर्नारदश्चैव गन्धर्वौ च हाहा हूहूः ॥ १४
तान्स सर्वान्समागम्य विधिवत्कुरुनन्दनः ।
ततोऽपश्यद्देवराजं शतक्रतुमरिंदमः ॥ १५
ततः पार्थो महाबाहुरवतीर्य रथोत्तमात् ।
ददर्श साक्षाद्देवेशं पितरं पाकशासनम् ॥ १६
पाण्डुरेणातपत्रेण हेमदण्डेन चारुणा ।

---

विप्रकृष्टत्वात् दूरत्वात् । सुमहान्त्यपि तनूनि सूक्ष्माणि दृश्यन्ते ॥ ३३ ॥ धिष्ण्येषु स्थानेषु ॥ ३४ ॥ संक्रमन् गच्छन्
॥ ४२ ॥ द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
नन्दनं नामतः ॥ ३ ॥

दिव्यगन्धाधिवासेन व्यजनेन विधूयता ॥ १७
विश्वावसुप्रभृतिभिर्गन्धर्वैः स्तुतिवन्दिभिः ।
स्तूयमानं द्विजाग्र्यैश्च ऋग्यजुःसामसंस्तवैः ॥ १८
ततोऽभिगम्य कौन्तेयः शिरसाऽभ्यगमद्बली ।
स चैनं वृत्तपीनाभ्यां बाहुभ्यां प्रत्यगृह्णत ॥ १९
ततः शक्रासने पुण्ये देवर्षिगणसेविते ।
शक्रः पाणौ गृहीत्वैनमुपावेशयदन्तिके ॥ २०
मूर्ध्नि चैनमुपाघ्राय देवेन्द्रः परवीरहा ।
अङ्कमारोपयामास प्रश्रयावनतं तदा ॥ २१
सहस्राक्षनियोगात्स पार्थः शक्रासनं तदा ।
आरुरुक्षुरमेयात्मा द्वितीय इव वासवः ॥ २२
ततः प्रेम्णा वृत्रशत्रुरर्जुनस्य शुभं मुखम् ।
पस्पर्श पुण्यगन्धेन करेण परिसान्त्वयन् ॥ २३
प्रमार्जमानः शनकैर्बाहू चास्यायतौ शुभौ ।
ज्याशरक्षेपकठिनौ स्तम्भाविव हिरण्मयौ ॥ २४
वज्रग्रहणचिह्नेन करेण परिसान्त्वयन् ।
मुहुर्मुहुर्वज्रधरो बाहू चास्फोटयञ्शनैः ॥ २५
स्मयन्निव गुडाकेशं प्रेक्षमाणः सहस्रदृक् ।
हर्षेणोत्फुल्लनयनो न चातृप्यत वृत्रहा ॥ २६
एकासनोपविष्टौ तौ शोभयांचक्रतुः सभाम् ।
सूर्याचन्द्रमसौ व्योम चतुर्दश्यामिवोदितौ ॥ २७
तत्र स्म गाथा गायन्ति साम्ना परमवल्गुना ।
गन्धर्वास्तुम्बुरुश्रेष्ठाः कुशला गीतसामसु ॥ २८
घृताची मेनका रम्भा पूर्वचित्तिः स्वयंप्रभा ।
उर्वशी मिश्रकेशी च दण्डगौरी वरूथिनी ॥ २९
गोपाली सहजन्या च कुम्भयोनिः प्रजागरा ।
चित्रसेना चित्रलेखा सहा च मधुरस्वरा ॥ ३०
एताश्चान्याश्च ननृतुस्तत्रतत्र शुचिस्मिताः ।
चित्तप्रमथने युक्ताः सिद्धानां पद्मलोचनाः ॥ ३१
महाकटितटश्रोण्यः कम्पमानैः पयोधरैः ।
कटाक्षहावमाधुर्यैश्चेतोबुद्धिमनोहरैः ॥ ३२
[ततो देवाः सगन्धर्वाः समादायार्घ्यमुत्तमम् ।
शक्रस्य मतमाज्ञाय पार्थमानर्चुरञ्जसा ॥ ३३
पाद्यमाचमनीयं च प्रतिग्राह्य नृपात्मजम् ।
प्रवेशयामासुरथो पुरंदरनिवेशनम् ॥ ३४
एवं संपूजितो जिष्णुरुवास भवने पितुः ।
उपशिक्षन्महास्त्राणि ससंहाराणि पाण्डवः ॥ ३५
शक्रस्य हस्ताद्दयितं वज्रमस्त्रं च दुःसहम् ।
अशनीश्च महानादा मेघबर्हिणलक्षणाः ॥ ३६
गृहीतास्त्रस्तु कौन्तेयो भ्रातॄन्सस्मार पाण्डवः ।
पुरंदरनियोगाच्च पञ्चाब्दानवसत्सुखी ॥ ३७
ततः शक्रोऽब्रवीत्पार्थं कृतास्त्रं काल आगते ।
नृत्यं गीतं च कौन्तेय चित्रसेनादवाप्नुहि ॥ ३८
वादित्रं देवविहितं नृलोके यन्न विद्यते ।
तदर्जयस्व कौन्तेय श्रेयो वै ते भविष्यति ॥ ३९
सखायं प्रददौ चास्य चित्रसेनं पुरंदरः ।
स तेन सह संगम्य रेमे पार्थो निरामयः ॥ ४०
गीतवादित्रनृत्यानि भूय एवादिदेश ह ।
तथाऽपि नालभच्छर्म तरस्वी द्यूतकारितम् ॥ ४१
दुःशासनवधामर्षी शकुनेः सौबलस्य च ।
ततस्तेनातुलां प्रीतिमुपागम्य क्वचित्क्वचित् ।
गान्धर्वमतुलं नृत्यं वादित्रं चोपलब्धवान् ॥ ४२
स शिक्षितो नृत्यगुणाननेका-
न्वादित्रगीतार्थगुणांश्च सर्वान् ।
न शर्म लेभे परवीरहन्ता
भ्रातॄन्स्मरन्मातरं चैव कुन्तीम् ॥ ४३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि इन्द्रलोकाभिगमनपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

प्रश्रयावनतं विनयेन प्रह्वीभूतम् ॥ २१ ॥ वज्रग्रहणस्य चिह्नं किणो यस्मिन् ॥ २५ ॥ गीतानि अमन्त्रोपरि गानम् । साम मन्त्रोपरि गानम् ॥ २८ ॥ चेतः अलोचनात्मिका चित्तवृत्तिः । बुद्धिरध्यवसायरूपा । मनः संकल्पविकल्पात्मकम् । कटाक्षादिभिः चित्तस्य वृत्त्यन्तरं हरन्तीत्यर्थः ॥ ३२ ॥ त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

## चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

उर्वश्यामर्जुनस्य दृष्टिविशेषेण तस्य तस्यामनुरागोत्प्रेक्षिणा शक्रेण चित्रसेनद्वारा तस्यास्तंप्रति यापनम् ॥ १ ॥ तया स्वप्रार्थनां व्यर्थीकृतवते पार्थाय क्लीबो भवेति शापदानम् ॥ २ ॥ शक्रेण तच्छापस्य भाव्यज्ञातवासमात्रोपयोगितया पर्यवसानम् ॥ ३ ॥

वैशंपायन उवाच ।
कदाचित्स हि देवेन्द्रश्चित्रसेनं रहोऽब्रवीत् ।
पार्थस्य चक्षुरुर्वश्यां सक्तं विज्ञाय वासवः ॥ १
गन्धर्वराज गच्छाद्य प्रहितोऽप्सरसांवराम् ।
उर्वशीं पुरुषव्याघ्रं सोपातिष्ठतु फल्गुनम् ॥ २
यथा न तामभिसृतां विद्यादसन्नियोगतः ।
तथा त्वया विधातव्यं स्त्रीसंसर्गविशारद ॥ ३
एवमुक्तस्तथेत्युक्त्वा सोऽनुज्ञां प्राप्य वासवात् ।
गन्धर्वराजोऽप्सरसमभ्यगादुर्वशीं वराम् ॥ ४
तां दृष्ट्वा विदितो हृष्टः स्वागतेनार्चितस्तया ।
सुखासीनः सुखासीनां स्मितपूर्वं वचोऽब्रवीत् ॥ ५
विदितं तेऽस्तु सुश्रोणि प्रेषितोऽहमिहागतः ।
त्रिदिवस्यैकराजेन त्वत्प्रसादाभिनन्दिना ॥ ६
यः स देवमनुष्येषु प्रख्यातः सहजैर्गुणैः ।
श्रिया शीलेन रूपेण श्रुतेन च बलेन च ।
प्रख्यातः शौर्यवीर्याभ्यां प्रपन्नः प्रतिभानवान् ७
तेजस्वी सौम्यशीलश्च क्षमावाञ्जितमत्सरः ।
साङ्गोपनिषदान्वेदांश्चतुराख्यानपञ्चमान् ॥ ८
योऽधीते गुरुशुश्रूषां मेधां चाष्टगुणाश्रयाम् ।
ब्रह्मचर्येण दाक्ष्येण प्रसवैर्वयसाऽपि च ॥ ९
एको वै रक्षिता चैव त्रिदिवं मघवानिव ।
अकत्थनो मानयिता स्थूललक्ष्यः प्रियंवदः ॥ १०
सुहृदश्चान्नपानेन विविधेनाभिवर्षति ।
सत्यवागूर्जितो वक्ता रूपवाननहंकृतः ॥ ११
भक्तानुकम्पी कान्तश्च प्रियश्च स्थिरसंगरः ।
प्रार्थनीयैर्गुणगणैर्महेन्द्रवरुणोपमः ॥ १२
विदितस्तेऽर्जुनो वीरः स स्वर्गफलमाप्तवान् ।
तव शक्राभ्यनुज्ञातः पादावद्य प्रपद्यताम् ।
तदेवं कुरु कल्याणि प्रपन्नस्त्वां धनंजयः ॥ १३
एवमुक्ता स्मितं कृत्वा स्वात्मानं बहुमान्य च ।
प्रत्युवाचोर्वशी प्रीता चित्रसेनमनिन्दिता ॥ १४
यत्त्वस्य कथितः सत्यो गुणोद्देशस्त्वयाऽनघ ।
तं श्रुत्वाऽन्यं प्रियं नारी वृणुयात्किमतोऽर्जुनं १५
महेन्द्रस्य नियोगेन त्वत्तः संप्रणयेन च ।
तस्य चाहं गुणौघेन फल्गुने जातमन्मथा ।
गच्छ त्वं हि यथाकाममागमिष्याम्यहं सुखम् ॥ १६
वैशंपायन उवाच ।
ततो विसृज्य गन्धर्वं कृतकृत्या शुचिस्मिता ।
उर्वशी चाकरोत्स्नानं पार्थप्रार्थनलालसा ॥ १७
स्नानालङ्कारनेपथ्यैर्गन्धमाल्यैश्च शोभनैः ।
धनंजयस्य रूपेण शरैर्मन्मथचोदितैः ॥ १८
अतिविद्धेन मनसा मन्मथेन प्रदीपिता ।
दिव्यास्तरणसंस्तीर्णे विस्तीर्णे शयनोत्तमे ॥ १९
चित्तसंकल्पभावेन सुचित्ताऽनन्यमानसा ।
मनोरथेन संप्राप्तं रमयन्तीव फल्गुनम् ॥ २०
निशाम्य चन्द्रोदयनं विगाढे रजनीमुखे ।
प्रस्थिता सा पृथुश्रोणी पार्थस्य भवनं महत् ॥ २१
मृदुकुञ्चितदीर्घेण कुसुमोत्तमधारिणा ।
केशपाशेन ललना गच्छमाना व्यराजत ॥ २२
भ्रूक्षेपालापमाधुर्यैः कान्त्या सौम्यतयाऽपि च ।
शशिनं वक्रचन्द्रेण साऽऽह्वयन्तीव गच्छती ॥ २३
दिव्याङ्गरागौ सुमुखौ दिव्यचन्दनरूषितौ ।
गच्छन्त्या हाररुचिरौ स्तनौ तस्या ववल्गतुः ॥ २४
स्तनोद्वहनसंक्षोभान्नाम्यमाना पदेपदे ।

प्रतिभानं समये स्फूर्तिः ॥ ७ ॥ चतुराख्यानपञ्चमान् चतुःचतुःसंख्यान् । विभक्तिलोप आर्षः ॥ ८ ॥ गुरुशुश्रूषां मेधां च प्रत्येकमष्टगुणां अधीते प्राप्नोति। प्रसवैर्वृद्धैं मातुः कुले द्वे पितुस्तैश्चतुर्भिः ॥ ९ ॥ स्थूललक्ष्यो दाता ॥ १० ॥ कान्तः सुखदः ॥ १२ ॥ स्वर्गफलं त्वत्सङ्गम् ॥ १३ ॥ आह्वयन्ती स्पर्धया युद्धार्थम् ॥ २३ ॥

त्रिवलीदामचित्रेण मध्येनातीव शोभिना ॥ २५
रथकूबरविस्तीर्णं नितम्बोन्नतपीवरम् ।
मन्मथायतनं शुभ्रं रशनादामभूषितम् ॥ २६
ऋषीणामपि दिव्यानां मनोव्याघातकारणम् ।
सूक्ष्मवस्त्रधरं भाति जघनं निरवद्यवत् ॥ २७
गूढगुल्फधरौ पादौ ताम्रायततलाङ्गुली ।
कूर्मपृष्ठोन्नतौ चास्याः शोभेते किङ्किणीकिणौ २८
शीधुपानेन चाल्पेन तुष्टा च मदनेन च ।
विलासितैश्च विविधैः प्रेक्षणीयतराऽभवत् ॥ २९
सिद्धचारणगन्धर्वैः साध्यैर्याति विलासिनी ।
बह्वाश्चर्येऽपि वै स्वर्गे दर्शनीयतमाकृतिः ॥ ३०
सुसूक्ष्मेणोत्तरीयेण मेघवर्णेन राजता ।
तन्वभ्रावृता व्योम्नि चन्द्रलेखेव गच्छति ॥ ३१
ततः प्राप्तातिदुष्प्रापा मनसाऽपि विकर्मभिः ।
भवनं पाण्डुपुत्रस्य फल्गुनस्य शुचिस्मिता ॥ ३२
तत्र द्वारमनुप्राप्ता द्वारस्थैश्च निवेदिता ।
अर्जुनस्य नरश्रेष्ठ उर्वशी शुभलोचना ॥ ३३
उपातिष्ठत तद्वेश्म निर्मलं सुमनोहरम् ।
स शङ्कितमना राजन्प्रत्यगच्छत तां निशि ॥ ३४
दृष्ट्वैव चोर्वशीं पार्थो लज्जासंवृतलोचनः ।
तदाऽभिवादनं कृत्वा गुरुपूजां प्रयुक्तवान् ॥ ३५

अर्जुन उवाच ।

अभिवादये त्वां शिरसा प्रवराप्सरसांवरे ।
किं चागमनकृत्यं ते ब्रूहि सर्वं यथातथम् ।
किमाज्ञापयसे देवि प्रेष्यस्तेऽहमुपस्थितः ॥ ३६
अकामं फल्गुनं ज्ञात्वा इङ्गितज्ञा तदोर्वशी ।
गन्धर्ववचनं सर्वं श्रावयामास फल्गुनम् ॥ ३७

उर्वश्युवाच ।

यथा मे चित्रसेनेन कथितं मनुजोत्तम ।
तत्तेऽहं संप्रवक्ष्यामि यथा चाहमिहागता ॥ ३८
उपस्थाने महेन्द्रस्य वर्तमाने मनोरमे ।
तवागमनतुष्ट्या च स्वर्गस्य परमोत्सवे ॥ ३९

उन्नतः पीवरश्च नितम्बो यस्येति विशेषणं विशेष्येण बहुलमिति बाहुलकात्समासः ॥ २६ ॥

रुद्राणां चैव सान्निध्यमादित्यानां च सर्वशः ।
समागमेऽश्विनोश्चैव वसूनां च नरोत्तम ॥ ४०
महर्षीणां च सङ्घेषु राजर्षिप्रवरेषु च ।
सिद्धचारणयक्षेषु महोरगगणेषु च ॥ ४१
उपविष्टेषु सर्वेषु स्थानमानप्रभावतः ।
ऋद्ध्या प्रज्वलमानेषु अग्निसोमार्कवर्ष्मसु ॥ ४२
वीणासु वाद्यमानासु गन्धर्वैः शक्रनन्दन ।
दिव्ये मनोरमे गीते प्रवृत्ते पृथुलोचन ॥ ४३
सर्वाप्सरःसु मुख्यासु प्रनृत्तासु कुरूद्वह ।
त्वं किलानिमिषः पार्थ मामेकां तत्र दृष्टवान् ४४
तत्र चावभृथे तस्मिन्नुपस्थाने दिवौकसाम् ।
तव पित्राऽभ्यनुज्ञाता गताः स्वनिलयान्सुराः ४५
तथैवाप्सरसः सर्वा विशिष्टाः स्वगृहं गताः ।
अपि चान्याश्च शत्रुघ्न तव पित्रा विसर्जिताः ४६
ततः शक्रेण संदिष्टश्चित्रसेनो ममान्तिकम् ।
प्राप्तः कमलपत्राक्ष स च मामब्रवीत्स्वयम् ॥ ४७
त्वत्कृतेऽहं सुरेशेन प्रेषितो वरवर्णिनि ।
प्रियं कुरु महेन्द्रस्य मम चैवात्मनश्च ह ॥ ४८
शक्रतुल्यं रणे शूरं रूपौदार्यगुणान्वितम् ।
पार्थं प्रार्थय सुश्रोणि त्वमित्येवं तदाऽब्रवीत् ४९
ततोऽहं समनुज्ञाता तेन पित्रा च तेऽनघ ।
तवान्तिकमनुप्राप्ता शुश्रूषितुमरिंदम ॥ ५०
न केवलं हि चक्रेण प्रेषिता चाहमागता ।
चिराभिलषितो वीर ममाप्येष मनोरथः ॥ ५१

वैशंपायन उवाच ।

तां तथा ब्रुवतीं श्रुत्वा भृशं लज्जान्वितोऽर्जुनः ।
उवाच कर्णौ हस्ताभ्यां पिधाय त्रिदशोपमः ॥ ५२
दुःश्रुतं मेऽस्तु सुभगे यन्मां वदसि भामिनि ।
गुरुदारैः समाना मे निश्चयेन वरानने ॥ ५३
[यथा कुन्ती महाभागा यथेन्द्राणी शची मम ।
तथा त्वमपि कल्याणी नात्र कार्या विचारणा] ५४
यच्चेक्षिताऽसि विस्पष्टं विशेषेण मया शुभे ।

अवभृथो यज्ञान्तस्नानं तत्प्राप्ये ॥ ४५ ॥

तच्च मे कारणं सर्वं शृणु सत्येन सुस्मिते ॥ ५५
इयं पौरववंशस्य जननी मुदतीति ह ।
त्वामहं दृष्टवांस्तत्र विस्मयोत्फुल्ललोचनः ॥ ५६
न मामर्हसि कल्याणि अन्यथा ध्यातुमप्सरः ।
गुरोर्गुरुतरा मे त्वं मम त्वं वंशवर्धिनी ॥ ५७
उर्वश्युवाच ।
अनावृताश्च सर्वाः स्म देवराजाभिनन्दन ।
गुरुस्थाने न मां वीर नियोक्तुं त्वमिहार्हसि ॥ ५८
पितरः सोदराः पुत्रा नप्तारो वा त्विहागताः ।
तपसा रमयन्त्यस्मान्न च तेषां व्यतिक्रमः ॥ ५९
तत्प्रसीद न मामार्तां विसर्जयितुमर्हसि ।
हृच्छयेन च संतप्तां भक्तां च भज मानद ॥ ६०
अर्जुन उवाच ।
शृणु सत्यं वरारोहे यत्त्वां वक्ष्याम्यनिन्दिते ।
शृण्वन्तु मे दिशश्चैव विदिशश्च सदेवताः ॥ ६१
यथा कुन्ती च माद्री च शची चैव समा इह ।
तथा च वंशजननी त्वं हि मेऽद्य गरीयसी ॥ ६२
गच्छ मूर्ध्ना प्रपन्नोस्मि पादौ ते वरवर्णिनि ।
त्वं हि मे मातृवत्पूज्या रक्ष्योऽहं पुत्रवत्त्वया ६३
वैशंपायन उवाच ।
ततोऽवधूता पार्थेन उर्वशी क्रोधमूर्च्छिता ।
वेपन्ती भ्रुकुटीवक्रा शशापाथ धनंजयम् ॥ ६४
उर्वश्युवाच ।
तव पित्राऽभ्यनुज्ञातां स्वयं च गृहमागताम् ।
यस्मान्मां नाभिनन्देथाः कामबाणवशंगताम् ६५
तस्मात्त्वं नर्तकः पार्थ स्त्रीमध्ये मानवर्जितः ।
अपुंस्त्वेन च विख्यातः षण्ढवद्विचरिष्यसि ॥ ६६
एवं दत्त्वाऽर्जुने शापं स्फुरितोष्ठी श्वसन्त्यथ ।
पुनः प्रत्यागता क्षिप्रमुर्वशी स्वं निवेशनम् ॥ ६७
पार्थोपि लब्ध्वा शापं तं तां निशां दुःखितोऽवसत् ।
विवक्षुश्चित्रसेनाय प्रातः सर्वमहृष्टवत् ॥ ६८
ततः प्रभाते विमले गन्धर्वाय यथातथम् ।
निवेदयामास तदा चित्रसेनाय पाण्डवः ॥ ६९
तच्च सर्वं यथावृत्तं शापं चैव यथातथम् ।
अवेदयच्च शक्रस्य चित्रसेनोऽपि सर्वशः ॥ ७०
तदा त्वानाय्य तनयं विविक्ते हरिवाहनः ।
सान्त्वयित्वा शुभैर्वाक्यैः स्मयमानोऽभ्यभाषत ॥
सुपुत्राद्य पृथा तात त्वया पुत्रेण सत्तम ।
ऋषयोपि हि धैर्येण जिता वै ते महाभुज ॥ ७२
यं च दत्तवती शापमुर्वशी तव मानद ।
स चापि तेऽर्थकृत्तात साधकश्च भविष्यति ॥ ७३
अज्ञातवासो वस्तव्यो भवद्भिर्भूतलेऽनघ ।
वर्षे त्रयोदशे वीर तत्र त्वं गमयिष्यसि ॥ ७४
तेन नर्तकवेषेण अपुंस्त्वेन तथैव च ।
वर्षमेकं विहृत्यैव ततः पुंस्त्वमवाप्स्यसि ॥ ७५
एवमुक्तस्तु शक्रेण फल्गुनः परवीरहा ।
मुदं परमिकां लेभे न च शापं व्यचिन्तयत् ॥ ७६
चित्रसेनेन सहितो गन्धर्वेण यशस्विना ।
रेमे स स्वर्गभवने पाण्डुपुत्रो धनंजयः ॥ ७७
य इमां शृणुयान्नित्यं धृतिं पाण्डुसुतस्य वै ।
न तस्य कामः कामेषु पापकेषु प्रवर्तते ॥ ७८
इदममरवरात्मजस्य घोरं
शुचि चरितं विनिशाम्य फल्गुनस्य ।
व्यपगतमदम्भरागदोषा-
स्त्रिदिवगताऽभिरमन्ति मानवेन्द्राः ॥ ७९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि इन्द्रलोकाभिगमनपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

## पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

शक्रेण स्वर्गमागतं लोमशंप्रति पार्थमहिमानुवर्णनपूर्वकं युधिष्ठिराय तद्वृत्तान्तकथनप्रार्थना ॥ १ ॥

वैशंपायन उवाच ।
ततो देवाः सगन्धर्वाः समादायार्घ्यमुत्तमम् ।

पुरोर्वंशे हि ये पुत्रा इति झ. पाठः ॥ ५९ ॥ इदममरवरात्मजस्यघोरां धृतिमचलां च धनञ्जयस्य श्रुत्वा । अपगतभयदम्भरागरोषास्त्रिदिवगता रमयन्ति मानवेन्द्राः । इति क. घ. पाठः ॥ ७९ ॥ चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

शक्रस्य मतमाज्ञाय पार्थमानर्चुरञ्जसा ॥ १
पाद्यमाचमनीयं च प्रतिग्राह्य नृपात्मजम् ।
प्रवेशयामासुरथो पुरन्दरनिवेशनम् ॥ २
एवं संपूजितो जिष्णुरुवास भवने पितुः ।
उपशिक्षन्महास्त्राणि ससंहाराणि पाण्डवः ॥ ३
स शक्रहस्तादृयितं वज्रमस्त्रं दुरुत्सहम् ।
अशनिं च महानादां मेघबृंहितलक्षणाम् ॥ ४
गृहीतास्त्रस्तु कौन्तेयो भ्रातॄन्सस्मार पाण्डवः ।
पुरन्दरनियोगाच्च पञ्चाब्दमवसत्सुखम् ॥ ५
ततः शक्रोऽब्रवीत्पार्थं कृतास्त्रं काल आगते ।
नृत्तं गीतं च कौन्तेय चित्रसेनादवाप्नुहि ॥ ६
वादित्रं देवविहितं नृलोके यन्न विद्यते ।
मदाज्ञया च कौन्तेय श्रेयो वै ते भविष्यति ॥ ७
सखायं प्रददौ चास्य चित्रसेनं पुरन्दरः ।
स तेन सह संगम्य रेमे पार्थो निरामयः ॥ ८
कदाचिदटमानस्तु महर्षिरथ लोमशः ।
जगाम शक्रभवनं पुरंदरदिदृक्षया ॥ ९
स समेत्य नमस्कृत्य देवराजं महामुनिः ।
ददर्शार्धासनगतं पाण्डवं वासवस्य हि ॥ १०
ततः शक्राभ्यनुज्ञात आसने विष्टरोत्तरे ।
निषसाद द्विजश्रेष्ठः पूज्यमानो महर्षिभिः ॥ ११
तस्य दृष्ट्वाऽभवद्बुद्धिः पार्थमिन्द्रासने स्थितम् ।
कथं नु क्षत्रियः पार्थः शक्रासनमवाप्तवान् ॥ १२
किं त्वस्य सुकृतं कर्म के लोका वै विनिर्जिताः ।
स एवमनुसंप्राप्तः स्थानं देवनमस्कृतम् ॥ १३
तस्य विज्ञाय संकल्पं शक्रो वृत्रविमर्दनः ।
लोमशं प्रहसन्वाक्यमिदमाह शचीपतिः ॥ १४
देवर्षे श्रूयतां यत्ते मनसैतद्विवक्षितम् ।
नायं केवलमर्त्योऽभूत्क्षत्रियत्वमुपागतः ॥ १५
महर्षे मम पुत्रोऽयं कुन्त्यां जातो महाभुजः ।
अस्त्रहेतोरिह प्राप्तः कस्माच्चित्कारणान्तरात् ॥ १६
अहो नैनं भवान्वेत्ति पुराणमृषिसत्तमम् ।
शृणु मे वदतो ब्रह्मन्योऽयं यच्चास्य कारणम् ॥ १७
नरनारायणौ यौ तौ पुराणावृषिसत्तमौ ।
ताविमावभिजानीहि हृषीकेशधनंजयौ ॥ १८
विख्यातौ त्रिषु लोकेषु नरनारायणावृषी ।
कार्यार्थमवतीर्णौ तौ पृथ्वीं पुण्यप्रतिश्रयाम् ॥ १९
यन्न शक्यं सुरैर्द्रष्टुमृषिभिर्वा महात्मभिः ।
तदाश्रमपदं पुण्यं बदरीनाम विश्रुतम् ॥ २०
स निवासोऽभवद्विप्र विष्णोर्जिष्णोस्तथैव च ।
यतः प्रववृते गङ्गा सिद्धचारणसेविता ॥ २१
तौ मन्नियोगाद्ब्रह्मर्षे क्षितौ जातौ महाद्युती ।
भूमेर्भारावतरणं महावीर्यौ करिष्यतः ॥ २२
उद्वृत्ता ह्यसुराः केचिन्निवातकवचा इति ।
विप्रियेषु स्थिताऽस्माकं वरदानेन मोहिताः ॥ २३
तर्कयन्ते सुरान्हन्तुं बलदर्पसमन्विताः ।
देवान्न गणयन्त्येते तथा दत्तवरा हि ते ॥ २४
पातालवासिनो रौद्रा दनोः पुत्रा महाबलाः ।
सर्वे देवनिकाया हि नालं योधयितुं हि तान् ॥ २५
योसौ भूमिगतः श्रीमान्विष्णुर्मधुनिषूदनः ।
कपिलो नाम देवोसौ भगवानजितो हरिः ॥ २६
येन पूर्वं महात्मानः खनमाना रसातलम् ।
दर्शनादेव निहताः सगरस्यात्मजा विभो ॥ २७
तेन कार्यं महत्कार्यमस्माकं द्विजसत्तम ।
पार्थेन च महायुद्धे समेताभ्यामसंशयम् ॥ २८
सोऽसुरान्दर्शनादेव शक्तो हन्तुं सहानुगान् ।
निवातकवचान्सर्वान्नागानिव महाह्रदे ॥ २९
किंतु नाल्पेन कार्येण प्रबोध्यो मधुसूदनः ।
तेजसः सुमहाराशिः प्रबुद्धः प्रदहेज्जगत् ॥ ३०
अयं तेषां समस्तानां शक्तः प्रतिसमासने ।
तान्निहत्य रणे शूरः पुनर्यास्यति मानुषान् ॥ ३१
भवानस्मन्नियोगेन यातु तावन्महीतलम् ।
काम्यके द्रक्ष्यसे वीरं निवसन्तं युधिष्ठिरम् ३२
स वाच्यो मम संदेशाद्धर्मात्मा सत्यसंगरः ।
नोत्कण्ठा फल्गुने कार्या कृतास्त्रः शीघ्रमेष्यति ३३
नाशुद्धबाहुवीर्येण नाकृतास्त्रेण वा रणे ।

देवनिकायाः देवसमूहाः । नालं न समर्थाः ॥ २५ ॥ प्रबोध्यो विज्ञाप्यः ॥ ३० ॥ तेषां निवातकवचानाम् । प्रतिसमासने संक्षेपणे ॥ ३१ ॥

भीष्मद्रोणादयो युद्धे शक्याः प्रतिसमासितुम् ३४
गृहीतास्त्रो गुडाकेशो महाबाहुर्महामनाः।
नृत्तवादित्रगीतानां दिव्यानां पारमीयिवान् ३५
भवानपि विविक्तानि तीर्थानि मनुजेश्वर।
भ्रातृभिः सहितः सर्वैर्द्रष्टुमर्हत्यरिंदम ॥ ३६
तीर्थेष्वाप्लुत्य पुण्येषु विपाप्मा विगतज्वरः।
राज्यं भोक्ष्यसि धर्मेण सुखी विगतकल्मषः॥३७
भवांश्चैनं द्विजश्रेष्ठ पर्यटन्तं महीतलम्।
त्रातुमर्हति विप्राग्र्य तपोबलसमन्वितः॥ ३८
गिरिदुर्गेषु च सदा देशेषु विषमेषु च।
वसन्ति राक्षसा रौद्रास्तेभ्यो रक्षां विधास्यति॥३९
एवमुक्ते महेन्द्रेण बीभत्सुरपि लोमशम्।
उवाच प्रयतो वाक्यं रक्षेथाः पाण्डुनन्दनम्॥४०
[यथा गुप्तस्त्वया राजा चरेत्तीर्थानि सत्तम।
दानं दद्याद्यथा चैव तथा कुरु महामुने॥] ४१
वैशंपायन उवाच।
तथेति संप्रतिज्ञाय लोमशः सुमहातपाः।
काम्यकं वनमुद्दिश्य समुपायान्महीतलम्॥ ४२
ददर्श तत्र कौन्तेयं धर्मराजमरिंदमम्।
तापसैर्भ्रातृभिश्चैव सर्वतः परिवारितम्॥ ४३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि इन्द्रलोकाभिगमनपर्वणि पञ्चचत्वारिंशोऽध्यायः॥ ४५॥

## षट्चत्वारिंशोऽध्यायः॥ ४६॥

अर्जुनस्य पाशुपतास्त्रलाभस्वर्लोकगमनादिश्रवणेन परिखिद्यता धृतराष्ट्रेण संजयाग्रे स्वपुत्रान्प्रति परिशोचनम्॥ १॥

जनमेजय उवाच।
अत्यद्भुतमिदं कर्म पार्थस्यामिततेजसः।
धृतराष्ट्रो महातेजाः श्रुत्वा तत्र किमब्रवीत्॥ १
वैशंपायन उवाच।
शक्रलोकगतं पार्थं श्रुत्वा राजाऽम्बिकासुतः।
द्वैपायनादृषिश्रेष्ठात्संजयं वाक्यमब्रवीत्॥ २
श्रुतं मे सूत कार्त्स्न्येन कर्म पार्थस्य धीमतः।
कच्चित्तवापि विदितं याथातथ्येन सारथे॥ ३
प्रमत्तो ग्राम्यधर्मेषु मन्दात्मा पापनिश्चयः।
मम पुत्रः सुदुर्बुद्धिः पृथिवीं घातयिष्यति॥ ४
यस्य नित्यमृता वाचः स्वैरेष्वपि महात्मनः।
त्रैलोक्यमपि तस्य स्याद्योद्धा यस्य धनंजयः॥५
अस्यतः कर्णिनाराचांस्तीक्ष्णाग्रांश्च शिलाशितान्।
नार्जुनस्याग्रतस्तिष्ठेदपि मृत्युर्जरातिगः॥ ६
मम पुत्रा दुरात्मानः सर्वे मृत्युवशंगताः।
येषां युद्धं दुराधर्षैः पाण्डवैः समुपस्थितम्॥ ७
तस्यैव च न पश्यामि युधि गाण्डीवधन्वनः।
अनिशं चिन्तयानोऽपि य एनमुदियाद्युधि॥ ८
द्रोणकर्णौ प्रतीयातां यदि भीष्मोऽपि वा रणे।
महान्स्यात्संशयो लोके न तु पश्यामि नो जयम्॥९
घृणी कर्णः प्रमादी च आचार्यः स्थविरो गुरुः।
अमर्षी बलवान्पार्थः संरम्भी दृढविक्रमः॥ १०
भवेत्सुतुमुलं युद्धं सर्वस्याप्यपराजितम्।
सर्वे ह्यस्त्रविदः शूराः सर्वे प्राप्ता महद्यशः॥ ११
अपि सर्वेश्वरत्वं हि न वाञ्छेरन्पराजिताः।
वधे नूनं भवेच्छान्तिरेतेषां फल्गुनस्य वा॥ १२
न तु हन्ताऽर्जुनस्यास्ति जेता वाऽस्य न विद्यते।
मन्युस्तस्य कथं शाम्येन्मन्दान्प्रति समुत्थितः॥१३
त्रिदशेशसमो वीरः खाण्डवेऽग्निमतर्पयत्।
जिगाय पार्थिवान्सर्वान्राजसूये महाक्रतौ॥ १४
शेषं कुर्याद्गिरेर्वज्रो निपतन्मूर्ध्नि संजय।
न तु कुर्युः शराः शेषं क्षिप्तास्तात किरीटिना॥१५
यथा हि किरणा भानोस्तपन्तीह चराचरम्।
तथा पार्थभुजोत्सृष्टाः शरास्तप्स्यन्ति मत्सुतान्१६
अपि तद्रथघोषेण भयार्ता सव्यसाचिनः।
प्रतिभाति विदीर्णेव सर्वतो भारती चमूः॥ १७

गुडाकेशोऽर्जुनः॥ ३५॥ संप्रतिज्ञायाङ्गीकृत्य॥ ४२॥ पञ्चचत्वारिंशोऽध्यायः॥ ४५॥

ऋताः सत्याः॥ ५॥ प्रतीयातां प्रतिगच्छेताम्॥ ९॥ घृणी दयालुः। प्रमादी अनवहितः। संरम्भी उद्यमी॥ १०॥

समुद्धरन्प्रवपंश्चैव बाणान्
स्थाताऽऽततायी समरे किरीटी ।
सृष्टोऽन्तकः सर्वहरो विधात्रा
भवेद्यथा तद्वदवारणीयः ॥ १८
संजय उवाच ।
यदेतत्कथितं राजंस्त्वया दुर्योधनं प्रति ।
सर्वमेतद्यथातत्त्वं नतु मिथ्या महीपते ॥ १९
मन्युना हि समाविष्टाः पाण्डवास्त्वमितौजसः ।
दृष्ट्वा कृष्णां सभां नीतां धर्मपत्नीं यशस्विनीं २०
दुःशासनस्य ता वाचः श्रुत्वा वै कटुकोदयाः ।
कर्णस्य च महाराज न स्वप्स्यन्तीति मे मतिः २१
श्रुतं हि ते महाराज यथा पार्थेन संयुगे ।
एकादशतनुः स्थाणुर्धनुषा परितोषितः ॥ २२
कैरातं वेषमास्थाय योधयामास फल्गुनम् ।
जिज्ञासुः सर्वदेवेशः कपर्दी भगवान्स्वयम् ॥ २३
'लेभे पाशुपतं चापि परमास्त्रं महाद्युतिः ।'
तत्रैनं लोकपालास्ते दर्शयामासुरर्जुनम् ।
अस्त्रहेतोः पराक्रान्तं तपसा कौरवर्षभम् ॥ २४
नैतदुत्सहते चान्यो लब्धुमन्यत्र फल्गुनात् ।
साक्षाद्दर्शनमेतेषामीश्वराणां नरो भुवि ॥ २५
महेश्वरेण यो राजन्न जीर्णो ग्रस्तमूर्तिमान् ।
कस्तमुत्सहते वीरो युद्धे जरयितुं पुमान् ॥ २६
आसादितमिदं घोरं तुमुलं रोमहर्षणम् ।
द्रौपदीं परिकर्षद्भिः कोपयद्भिश्च पाण्डवान् ॥२७
यत्र विस्फुरमाणौष्ठो भीमः प्राह वचोऽर्थवत् ।
दृष्ट्वा दुर्योधनेनोरू द्रौपद्या दर्शितावुभौ ॥ २८
ऊरुं भेत्स्यामि ते पाप गदया वज्रकल्पया ।
त्रयोदशानां वर्षाणामन्ते दुर्द्यूतदेविनः ॥ २९
सर्वे प्रहरतां श्रेष्ठाः सर्वे चामिततेजसः ।
सर्वे सर्वास्त्रविद्वांसो देवैरपि सुदुर्जयाः ॥ ३०
मन्ये मन्युसमुद्भूताः पुत्राणां तव संयुगे ।
अन्तं पार्थाः करिष्यन्ति वीर्यामर्षसमन्विताः ३१
धृतराष्ट्र उवाच ।
किं कृतं सूत कर्णेन वदता परुषं वचः ।
पर्याप्तं वैरमेतावद्यत्कृष्णा सा सभां गता ॥ ३२
अपीदानीं मम सुतास्तिष्ठेरन्मन्दचेतसः ।
येषां भ्राता गुरुर्ज्येष्ठो विनये नावतिष्ठते ॥ ३३
ममापि वचनं सूत न शुश्रूषति मन्दभाक् ।
दृष्ट्वा मां चक्षुषा हीनं निर्विचेष्टमचेतसम् ॥ ३४
ये चास्य सचिवा मन्दाः कर्णसौबलकादयः ।
ते तस्य भूयसो दोषान्वर्धयन्ति विचेतसः ॥ ३५
स्वैरं मुक्ता ह्यपि शराः पार्थेनामिततेजसा ।
निर्दहेयुर्मम सुतान्किंपुनर्मन्युनेरिताः ॥ ३६
पार्थबाहुबलोत्सृष्टा महाचापविनिःसृताः ।
दिव्यास्त्रमन्त्रमुदिताः सादयेयुः सुरानपि ॥ ३७
यस्य मन्त्री च गोप्ता च सुहृच्चैव जनार्दनः ।
हरिस्त्रैलोक्यनाथः स किंनु तस्य न निर्जितम् ३८
इदं हि सुमहच्चित्रमर्जुनस्येह संजय ।
महादेवेन बाहुभ्यां यत्समेत इति श्रुतिः ॥ ३९
प्रत्यक्षं सर्वलोकस्य खाण्डवे यत्कृतं पुरा ।
फल्गुनेन सहायार्थे वह्नेर्दामोदरेण च ॥ ४०
सर्वथा न हि मे पुत्राः सहामात्याः सबान्धवाः ।
क्रुद्धे पार्थे च भीमे च वासुदेवे च सात्वते ॥४१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि इन्द्रलोकाभिगमनपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

## सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

वैशंपायनेन जनमेजयंप्रति पाण्डवानां वने भोज्यवस्तुकथनम् ॥ १ ॥

जनमेजय उवाच ।
यदिदं शोचितं राज्ञा धृतराष्ट्रेण वै मुने ।

प्रवपन् प्रेरयन् । स्थाता स्थास्यति ॥ १८ ॥ नैतदुत्पत्स्यतेऽन्यो हि इति क. ध. पाठः ॥ २५ ॥ न जीर्णो न क्षीणः ॥ २६ ॥ अन्तं नाशम् । भार्यामर्षसमन्विताः इति झ. पाठः ॥ ३१ ॥ विनये नीतौ ॥ ३३ ॥ नहि सन्तीति शेषः ॥ ४१ ॥ षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

प्रव्राज्य पाण्डवान्वीरान्सर्वमेतन्निरर्थकम् ॥ १
कथं च राजपुत्रं तमुपेक्षेतात्पचेतसम् ।
दुर्योधनं पाण्डुपुत्रान्कोपयानं महारथान् ॥ २
किमासीत्पाण्डुपुत्राणां वने भोजनमुच्यताम् ।
वन्यं वाऽप्यथवा कृष्टमेतदाख्यातु नो भवान् ॥ ३
वैशंपायन उवाच ।
वानेयं च मृगांश्चैव शुद्धैर्बाणैर्निपातितान् ।
ब्राह्मणानां निवेद्याग्रमभुञ्जत महारथाः ॥ ४
तांस्तु शूरान्महेष्वासांस्तदा निवसतो वने ।
अन्वयुर्ब्राह्मणा राजन्साग्नयोऽनग्नयस्तथा ॥ ५
ब्राह्मणानां सहस्राणि स्नातकानां महात्मनाम् ।
दश मोक्षविदां तद्वद्यान्बिभर्ति युधिष्ठिरः ॥ ६
रुरून्कृष्णमृगांश्चैव मेध्यांश्चान्यान्मनोरमान् ।
बाणैरुन्मथ्य विविधैर्ब्राह्मणेभ्यो न्यवेदयत् ॥ ७
न तत्र कश्चिद्दुर्वर्णो व्याधितो वाऽपि दृश्यते ।
कृशो वा दुर्बलो वाऽपि दीनो भीतोपि वा पुनः ८
पुत्रानिव प्रियान्भ्रातॄञ्ज्ञातीनिव सहोदरान् ।
पुपोष कौरवश्रेष्ठो धर्मराजो युधिष्ठिरः ॥ ९
पतींश्च द्रौपदी सर्वान्द्विजातींश्च यशस्विनी ।
मातेव भोजयित्वाऽग्रे शिष्टमाहारयत्तदा ॥ १०
प्राचीं राजा दक्षिणां भीमसेनो
यमौ प्रतीचीमथवाऽप्युदीचीम् ।
धनुर्धरा मांसहेतोर्मृगाणां
क्षयं चक्रुर्नित्यमेवोपगम्य ॥ ११
तथा तेषां वसतां काम्यके वै
विहीनानामर्जुनेनोत्सुकानाम् ।
पञ्चैव वर्षाणि तथा व्यतीयु-
रधीयतां जपतां जुह्वतां च ॥ १२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि इन्द्रलोकाभिगमनपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

## अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

धृतराष्ट्रेण संजयाग्रे पाण्डवपराक्रमस्मरणेन पुत्रान्प्रति परिशोचनम् ॥ १ ॥ संजयेन धृतराष्ट्रंप्रति स्वस्य चारमुखात् पाण्डवदिदृक्षया वनं गतानां कृष्णादीनां दुर्योधनादिवधप्रतिज्ञाश्रवणकथनम् ॥ २ ॥

वैशंपायन उवाच ।
तेषां तच्चरितं श्रुत्वा मनुष्यातीतमद्भुतम् ।
चिन्ताशोकपरीतात्मा मन्युनाभिपरिप्लुतः ॥ १
दीर्घमुष्णं च निःश्वस्य धृतराष्ट्रोऽम्बिकासुतः ।
अब्रवीत्संजयं सूतमामन्त्र्य भरतर्षभ ॥ २
न रात्रौ न दिवा सूत शान्तिं प्राप्नोमि वै क्षणम् ।
संचिन्त्य दुर्णयं घोरमतीतं द्यूतजं हि तत् ॥ ३
तेषामसह्यवीर्याणां शौर्यं धैर्यं धृतिं पराम् ।
अन्योन्यमनुरागं च भ्रातॄणामतिमानुषम् ॥ ४
देवपुत्रौ महाभागौ देवराजसमद्युती ।
नकुलः सहदेवश्च पाण्डवौ युद्धदुर्मदौ ॥ ५
दृढायुधौ दूरपातौ युद्धे च कृतनिश्चयौ ।
शीघ्रहस्तौ दृढक्रोधौ नित्ययुक्तौ रथे स्थितौ ॥ ६
भीमार्जुनौ पुरोधाय यदा तौ रणमूर्धनि ।
स्थास्येते सिंहविक्रान्तावश्विनाविव दुःसहौ ॥ ७
निःशेषमिह पश्यामि मम सैन्यस्य संजय ॥ ८
तौ ह्यप्रतिरथौ युद्धे देवपुत्रौ महारथौ ।
द्रौपद्यास्तं परिक्लेशं न क्षंस्येतेऽत्यमर्षिणौ ॥ ९
वृष्णयोऽथ महेष्वासाः पाञ्चाला वा महौजसः ।
युधि सत्याभिसन्धेन वासुदेवेन रक्षिताः ।
प्रधक्ष्यन्ति रणे पार्थाः पुत्राणां मम वाहिनीम् ॥ १०
रामकृष्णप्रणीतानां वृष्णीनां सूतनन्दन ।
न शक्यः सहितुं वेगः पर्वतैरपि दुःसहः ॥ ११
तेषां मध्ये महेष्वासो भीमो भीमपराक्रमः ।

कृष्टं कर्षणजं ग्राम्यधान्यम् ॥ ३ ॥ शुद्धैर्विषालिप्तैः । वानेयं वनभवम् ॥ ४ ॥ अनग्नयः परिव्राजकाः ॥ ५ ॥ आहारयत् आहारं कृतवती ॥ १० ॥ सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
न क्षंस्येते क्षमां न करिष्यतः ॥९॥ सहितुं सोढुम् ॥ ११ ॥

शैक्यया वीरघातिन्या गदया विचरिष्यति ॥१२
तथा गाण्डीवनिर्घोषं विस्फूर्जितमिवाशनेः ।
गदावेगं च भीमस्य नालं सोढुं नराधिपाः ॥१३
ततोऽहं सुहृदां वाचो दुर्योधनवशानुगः ।
स्मरणीयाः स्मरिष्यामि मया या न कृताः पुरा ॥१४
संजय उवाच ।
व्यतिक्रमोऽयं सुमहांस्त्वया राजन्नुपेक्षितः ।
समर्थेनापि यन्मोहात्पुत्रस्ते न निवारितः ॥ १५
श्रुत्वाऽयं निर्जितान्द्यूते पाण्डवान्मधुसूदनः ।
त्वरितः काम्यके पार्थान्समभावयदच्युतः ॥ १६
द्रुपदस्य तथा पुत्रा धृष्टद्युम्नपुरोगमाः ।
विराटो धृष्टकेतुश्च केकयाश्च महारथाः ॥ १७
तैश्च यत्कथितं राजन्दृष्ट्वा पार्थान्पराजितान् ।
चारेण विदितं सर्वं तन्मया वेदितं च ते ॥ १८
समागम्य वृतस्तत्र पाण्डवैर्मधुसूदनः ।
सारथ्ये फल्गुनस्याजौ तथेत्याह च तान्हरिः ॥१९
अमर्षितो हि कृष्णोपि दृष्ट्वा पार्थांस्तदा गतान् ।
कृष्णाजिनोत्तरासङ्गानब्रवीच्च युधिष्ठिरम् ॥ २०
या सा समृद्धिः पार्थानामिन्द्रप्रस्थे बभूव ह ।
राजसूये मया दृष्टा नृपैरन्यैः सुदुर्लभा ॥ २१
यत्र सर्वान्महीपालाञ्शस्त्रतेजोभयार्दितान् ।
सवङ्गाङ्गान्सपौण्ड्रौढ्रान्सचोलद्रविडान्ध्रकान् ॥२२
सागरानूपकांश्चैव ये च पत्तनवासिनः ।
सिंहलान्बर्बरान्म्लेच्छान्ये च लङ्कानिवासिनः २३
पश्चिमानि च राष्ट्राणि शतशः सागरान्तिकान् ।
पह्लवान्दरदान्सर्वान्किरातान्यवनाञ्शकान् ॥ २४
हारहूणांश्च चीनांश्च तुषारान्सैन्धवांस्तथा ।
जागुडान्रामठान्मुण्डान्स्त्रीराज्यमथ तङ्गणान् २५
केकयान्मालवांश्चैव तथा काश्मीरकानपि ।
अद्राक्षमहमाहूतान्यज्ञे ते परिवेषकान् ॥ २६
सा ते समृद्धिर्यैरात्ता चपला प्रतिसारिणी ।
आदाय जीवितं तेषामाहरिष्यामि तामहम् ॥ २७
रामेण सह कौरव्य भीमार्जुनयमैस्तथा ।
अक्रूरगदसाम्बैश्च प्रद्युम्नेनाहुकेन च ॥ २८
धृष्टद्युम्नेन वीरेण शिशुपालात्मजेन च ।
दुर्योधनं रणे हत्वा सद्यः कर्णं च भारत ।
दुःशासनं सौबलेयं यश्चान्यः प्रतियोत्स्यति ॥२९
ततस्त्वं हास्तिनपुरे भ्रातृभिः सहितो वसन् ।
धार्तराष्ट्रीं श्रियं प्राप्य प्रशाधि पृथिवीमिमां ३०
अथैनमब्रवीद्राजा तस्मिन्वीरसमागमे ।
शृण्वत्स्वेतेषु वीरेषु धृष्टद्युम्नमुखेषु च ॥ ३१
प्रतिगृह्णामि ते वाचमिमां सत्यां जनार्दन ।
अमित्रान्मे महाबाहो सानुबन्धान्हनिष्यसि ॥ ३२
वर्षात्त्रयोदशादूर्ध्वं सत्यं मां कुरु केशव ।
प्रतिज्ञातो वने वासो राज्ञांमध्ये मया ह्ययम् ३३
धर्मराजस्य वचनं प्रतिश्रुत्य सभासदः ।
धृष्टद्युम्नपुरोगास्ते समयामासुरञ्जसा ॥ ३४
केशवं मधुरैर्वाक्यैः कालयुक्तैरमर्षितम् ।
पाञ्चालीं प्राहुरक्लिष्टां वासुदेवस्य शृण्वतः ॥ ३५
दुर्योधनस्तव क्रोधाद्देवि त्यक्ष्यति जीवितम् ।
प्रतिजानीम ते सत्यं मा शुचो वरवर्णिनि ॥ ३६
ये स्म ते कुरवः कृष्णे दृष्ट्वा त्वां प्राहसंस्तदा ।
मांसानि तेषां खादन्तो हरिष्यन्ति वृकद्विजाः ३७
पास्यन्ति रुधिरं तेषां गृध्रा गोमायवस्तथा ।
उत्तमाङ्गानि कर्षन्तो यैः कृष्टाऽसि सभातले ३८
तेषां द्रक्ष्यसि पाञ्चालि गात्राणि पृथिवीतले ।
क्रव्यादैः कृष्यमाणानि भक्ष्यमाणानि चासकृत् ॥
परिक्लिष्टाऽसि यैस्तत्र यैश्चासि समुपेक्षिता ।
तेषामुत्कृत्तशिरसां भूमिः पास्यति शोणितम् ४०
एवं बहुविधा वाचस्त ऊचुः पुरुषर्षभाः ।
सर्वे तेजस्विनः शूराः सर्वे चाहतलक्षणाः ॥ ४१
ते धर्मराजेन वृता वर्षादूर्ध्वं त्रयोदशात् ।
पुरस्कृत्योपयास्यन्ति वासुदेवं महारथाः ॥ ४२

शैक्यया शिक्यस्थया भूमिं भित्त्वा पातालं प्रवेक्ष्यतीति भयादन्तरिक्षे एव धृतयेत्यर्थः ॥ १२ ॥ प्रतिसारिणी प्रतीपं सरतीति नीचानुगामिनीत्यर्थः । आहरिष्यामि इदानीमेवेति शेषः । अतएव प्रार्थना सत्यं मां कुर्विति ॥ २७ ॥ समयामासुः समं युक्तमित्याचख्युः । समशब्दात्तदाचष्ट इति णिच् लिटि आम् ॥ ३४ ॥

रामश्च कृष्णश्च धनंजयश्च
प्रद्युम्नसाम्बौ युयुधानभीमौ ।
माद्रीसुतौ केकयराजपुत्राः
पाञ्चालपुत्राः सह मत्स्यराज्ञा ॥ ४३

एतान्सर्वाँल्लोकवीरानजेया-
न्महात्मनः सानुबन्धान्ससैन्यान् ।
को जीवितार्थी समरेऽभ्युदीया-
त्क्रुद्धान्सिंहान्केसरिणो यथैव ॥ ४४

धृतराष्ट्र उवाच ।
यन्माऽब्रवीद्विदुरो द्यूतकाले
त्वं पाण्डवाञ्जेष्यसि चेन्नरेन्द्र ।
ध्रुवं कुरूणामयमन्तकालो
महाभयो भविता शोणितौघः ॥ ४५

मन्ये यथा तद्भवितेति सूत
यथा क्षत्ता प्राह वचः पुरा माम् ।
असंशयं भविता युद्धमेत-
द्गते काले पाण्डवानां यथोक्तम् ॥ ४६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि इन्द्रलोकाभिगमनपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

समाप्तमिन्द्रलोकाभिगमनपर्व ॥ ४ ॥

---

# ( अथ नलोपाख्यानपर्व ॥ ५ ॥ )

## एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

भीमयुधिष्ठिरसंवादसमये बृहदश्वागमनम् ॥ १ ॥ युधिष्ठिरंप्रति बृहदश्वेन नलोपाख्यानकथनारम्भः ॥ २ ॥

जनमेजय उवाच ।
अस्त्रहेतोर्गते पार्थे शक्रलोकं महात्मनि ।
युधिष्ठिरप्रभृतयः किमकुर्वत पाण्डवाः ॥ १

वैशंपायन उवाच ।
अस्त्रहेतोर्गते पार्थे शक्रलोकं महात्मनि ।
न्यवसन्कृष्णया सार्धं काम्यके भरतर्षभाः ॥ २

ततः कदाचिदेकान्ते विविक्ते मृदुशाद्वले ।
दुःखार्ता भरतश्रेष्ठा निषेदुः सह कृष्णया ॥ ३

धनंजयं शोचमानाः साश्रुकण्ठाः सुदुःखिताः ।
तद्वियोगार्दितान्सर्वाञ्शोकः समभिपुप्लुवे ॥ ४

धनंजयवियोगाच्च राज्यभ्रंशाच्च दुःखिताः ।
अथ भीमो महाबाहुर्युधिष्ठिरमभाषत ॥ ५

निदेशात्ते महाराज गतोऽसौ भरतर्षभः ।
अर्जुनः पाण्डुपुत्राणां यस्मिन्प्राणाः प्रतिष्ठिताः ६

यस्मिन्विनष्टे पाञ्चालाः सह पुत्रैस्तथा वयम् ।
सात्यकिर्वासुदेवश्च विनश्येयुर्न संशयः॥ ७

योसौ गच्छति धर्मात्मा बहूञ्क्लेशान्विचिन्तयन् ।
भवन्नियोगाद्बीभत्सुस्ततो दुःखतरं नु किम् ॥ ८

यस्य बाहू समाश्रित्य वयं सर्वे महात्मनः ।
मन्यामहे जितानाजौ परान्प्राप्तां च मेदिनीम् ९

यस्य प्रभावाद्धि वयं सभामध्ये धनुष्मतः ।
'जितान्मन्यामहे सर्वान्धार्तराष्ट्रान्ससौबलान् १०

यस्य प्रभावान्न मया सभामध्ये महाबलाः ।'
नीता लोकममुं सर्वे धार्तराष्ट्राः ससौबलाः ॥ ११

ते वयं बाहुबलिनः क्रोधमुत्थितमात्मनः ।
सहामहे भवन्मूलं वासुदेवेन पालिताः ॥ १२

मया हि सह कृष्णेन हत्वा कर्णमुखान्परान् ।
स्वबाहुविजितां कृत्स्नां प्रशाधीमां वसुंधराम् १३

भवतो द्यूतदोषेण सर्वे वयमुपप्लुताः ।
अहीनपौरुषा राजन्बलिभिर्बलवत्तराः ॥ १४

---

युयुधानः सात्यकिः ॥ ४३ ॥ केसरिणः क्रोधेनोच्छ्रितसटान् ॥ ४४ ॥ अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

पुप्लुवे प्लावितवान् ॥ ४ ॥ निदेशात् आज्ञातः ॥ ६ ॥ अमुं लोकं परलोकम् ॥ ११ ॥ बलिभिः सामन्तदत्तैर्धनैर्बलवत्तराः

क्षात्रं धर्मं महाराज त्वमवेक्षितुमर्हसि ।
न हि धर्मो महाराज क्षत्रियस्य वनाश्रयः ॥ १५
राज्यमेव परं धर्मं क्षत्रियस्य विदुर्बुधाः ।
स क्षत्रधर्मविद्राजन्माधर्म्यान्नीनशः पथः ॥ १६
प्राग्द्वादश समा राजन्धार्तराष्ट्रान्निहन्महि ।
निवर्त्य च वनात्पार्थमानाय्य च जनार्दनम् १७
व्यूढानीकान्महाराज जवेनैव महाहवे ।
धार्तराष्ट्रानमुं लोकं गमयाम विशांपते ॥ १८
सर्वानहं हनिष्यामि धार्तराष्ट्रान्ससौबलान् ।
दुर्योधनं च कर्णं च यो वाऽन्यः प्रतियोत्स्यते१९
मया प्रशमिते पश्चात्त्वमेष्यसि वनं पुनः ।
एवं कृते न ते दोषो भविष्यति विशांपते ॥ २०
यज्ञैश्च विविधैस्तात कृतं पापमरिंदम ।
अवधूय महाराज गच्छेम स्वर्गमुत्तमम् ॥ २१
एवमेतद्भवेद्राजन्यदि राजा न बालिशः ।
अस्माकं दीर्घसूत्रः स्याद्भवान्धर्मपरायणः ॥ २२
निकृत्या निकृतिप्रज्ञा हन्तव्या इति निश्चयः ।
न हि नैकृतिकं हत्वा निकृत्या पापमुच्यते ।
तथा भारत धर्मेषु धर्मज्ञैरिह दृश्यते ॥ २३
अहोरात्रं महाराज तुल्यं संवत्सरेण ह ।
तथैव वेदवचनं श्रूयते नित्यदा विभो ।
संवत्सरो महाराज पूर्णो भवति कृच्छ्रतः ॥ २४
यदि वेदाः प्रमाणं ते दिवसादूर्ध्वमच्युत ।
त्रयोदशादितः कालो ज्ञायतां परिनिष्ठितः ॥२५
कालो दुर्योधनं हन्तुं सानुबन्धमरिंदम ।
एकाग्रां पृथिवीं सर्वां पुरा राजन्करोति सः॥२६
द्यूतप्रियेण राजेन्द्र तथा तद्भवता कृतम् ।
प्रायेणाज्ञातचर्यायां वयं सर्वे निपातिताः ॥ २७
न तं देशं प्रपश्यामि यत्र सोऽस्मान्सुदुर्जनः ।
न विज्ञास्यति दुष्टात्मा चारैरिति सुयोधनः ॥२८
अधिगम्य च सर्वान्नो वनवासमिमं ततः ।
प्रव्राजयिष्यति पुनर्निकृत्याऽधमपूरुषः ।
यद्यस्मानभिगच्छेत पापः स हि कथंचन ॥ २९
अज्ञातचर्यामुत्तीर्णान्दृष्ट्वा च पुनराह्वयेत् ।
द्यूतेन ते महाराज पुनर्युद्धं प्रवर्तते ॥ ३०
भवांश्च पुनराहूतो द्यूतेनैवापनेष्यति ।
स तथाऽक्षेषु कुशलो निश्चितो गतचेतनः ॥ ३१
चरिष्यसि महाराज वनेषु वसतीः पुनः ॥ ३२
यद्यस्मान्सुमहाराज कृपणान्कर्तुमर्हसि ।
यावज्जीवमवेक्षस्व वेदधर्मांश्च कृत्स्नशः ।
निकृत्या निकृतिप्रज्ञो हन्तव्य इति निश्चयः ३३
अनुज्ञातस्त्वया गत्वा यावच्छक्ति सुयोधनम् ।
यथैव कक्षमुत्सृष्टो दहेदनिलसारथिः ।
हनिष्यामि तथा मन्दमनुजानातु मे भवान् ॥३४

वैशंपायन उवाच ।

एवं ब्रुवाणं भीमं तु धर्मराजो युधिष्ठिरः ।
उवाच सान्त्वयन्राजा मूर्ध्न्युपाघ्राय पाण्डवम् ३५
असंशयं महाबाहो हनिष्यसि सुयोधनम् ।
वर्षात्त्रयोदशादूर्ध्वं सह गाण्डीवधन्वना ॥ ३६
यत्त्वमाभाषसे पार्थ प्राप्तः काल इति प्रभो ।
अनृतं नोत्सहे वक्तुं न ह्येतन्मयि विद्यते ॥ ३७
अन्तरेणापि कौन्तेय निकृतिं पापनिश्चयम् ।
हन्ता त्वमसि दुर्धर्ष सानुबन्धं सुयोधनम् ॥ ३८
एवं ब्रुवति भीमं तु धर्मराजे युधिष्ठिरे ।
आजगाम महाभागो बृहदश्वो महानृषिः ॥ ३९
तमभिप्रेक्ष्य धर्मात्मा संप्राप्तं धर्मचारिणम् ।
शास्त्रवन्मधुपर्केण पूजयामास धर्मराट् ॥ ४०
आश्वस्तं चैनमासीनमुपासीनो युधिष्ठिरः ।
अभिप्रेक्ष्य महाबाहुः कृपणं बह्वभाषत ॥ ४१
अक्षद्यूते च भगवन्धनं राज्यं च मे हृतम् ।
आहूय निकृतिप्रज्ञैः कितवैरक्षकोविदैः ॥ ४२
अनक्षज्ञस्य हि सतो निकृत्या पापनिश्चयैः ।
भार्या च मे सभां नीता प्राणेभ्योपि गरीयसी ॥४३
पुनर्द्यूतेन मां जित्वा वनवासं सुदारुणम् ।

॥ १४ ॥ बालिशः बालवद्वृथाहठी । दीर्घसूत्रः चिरकारी ॥ २२ ॥ पुरा अग्रे ॥ २६ ॥ द्यूतेन द्यूतार्थम् ॥ ३० ॥

अपनेष्यति दूरीकरिष्यति । श्रियमिति शेषः ॥ ३१ ॥ कक्षं तृणम् ॥ ३४ ॥

प्राव्राजयन्महारण्यमजिनैः परिवारितम् ॥ ४४
अहं वने दुर्वसतीर्वसन्परमदुःखितः ।
अक्षद्यूताभिषङ्गेण गिरः शृण्वन्सुदारुणाः ॥ ४५
आर्तानां सुहृदां वाचो द्यूतप्रभृति शंसताम् ।
अहं हृदि श्रिताः स्मृत्वा सर्वरात्रीर्विचिन्तयन्॥४६
यस्मिंश्च वयमायत्ताः सदा गाण्डीवधन्वनि ।
'स चेन्द्रलोकं गतवानस्त्रहेतोर्महाबलः ॥' ४७
विना महात्मना तेन गतसत्व इवासहे ।
कदा द्रक्ष्यामि बीभत्सुं कृतास्त्रं पुनरागतम् ॥४८
'इति सर्वे महेष्वासं चिन्तयाना धनंजयम् ।
अनेन तु विषण्णोऽहं कारणेन सहानुजः ॥ ४९
वनवासान्निवृत्तं मां पुनस्ते पापबुद्धयः ।
जानन्तः प्रीयमाणा वै देवने भ्रातृभिः सह ।
द्यूतेनैवाह्वयिष्यन्ति बलादक्षेषु तद्विदः ॥ ५०
आहूतश्च पुनर्द्यूते नास्मि शक्तो निवर्तितुम् ।
पणे च मम नात्यर्थं वसु किंचन विद्यते ॥ ५१
एतत्सर्वमनुध्यायंश्चिन्तयानो दिवानिशम् ।
न मत्तो दुःखिततरः पुमानस्तीह कश्चन ॥' ५२
नास्ति राजा मया कश्चिदल्पभाग्यतरो भुवि ।
भवता दृष्टपूर्वो वा श्रुतपूर्वोऽपि वा क्वचित् ।
न मत्तो दुःखिततरः पुमानस्तीति मे मतिः॥५३
'एवं ब्रुवन्तं दुःखार्तमुवाच भगवानृषिः ।
शोकं व्यपनुदन्प्राज्ञो धर्मराजस्य धीमतः ॥ ५४

बृहदश्व उवाच ।
न विषादे मनः कार्यं त्वया बुद्धिमतांवर ।
आगमिष्यति बीभत्सुरमित्रांश्च विजेष्यते ॥' ५५
यद्ब्रवीषि महाराज न मत्तो विद्यते क्वचित् ।
अल्पभाग्यतरः कश्चित्पुमानस्तीति पाण्डव ॥ ५६
अत्र ते वर्णयिष्यामि यदि शुश्रूषसेऽनघ ।
यस्त्वत्तो दुःखिततरो राजाऽऽसीत्पृथिवीपते॥५७
वैशंपायन उवाच ।
अथैनमब्रवीद्राजा ब्रवीतु भगवानिति ।
इमामवस्थां संप्राप्तं श्रोतुमिच्छामि पार्थिवम् ॥५८
बृहदश्व उवाच ।
शृणु राजन्नवहितः सह भ्रातृभिरच्युत ।
यस्त्वत्तो दुःखिततरो राजाऽऽसीत्पृथिवीपते॥५९
निषधेषु महीपालो वीरसेन इति श्रुतः ।
तस्य पुत्रोऽभवन्नाम्ना नलो धर्मार्थकोविदः॥६०
स निकृत्या जितो राजा पुष्करेणेति नः श्रुतम् ।
वनवासं सुदुःखार्तो भार्यया न्यवसत्सह ॥ ६१
न तस्य दासा न रथो न भ्राता न च बान्धवाः ।
वने निवसतो राजन्नश्रूयन्त कदाचन ॥ ६२
भवान्हि संवृतो वीरैर्भ्रातृभिर्देवसंमितैः ।
ब्रह्मकल्पैर्द्विजाग्र्यैश्च तस्मान्नार्हसि शोचितुम् ॥६३
युधिष्ठिर उवाच ।
विस्तरेणाहमिच्छामि नलस्य सुमहात्मनः ।
चरितं वदतांश्रेष्ठ तन्ममाख्यातुमर्हसि ॥ ६४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

## पञ्चाशोऽध्यायः ॥ ५० ॥

दमयन्त्यां समुत्कण्ठितेन नलेन वने विहरत्सु हंसेष्वेकतमस्य ग्रहणम् ॥ १ ॥ प्रतिक्रियाप्रतिज्ञानेन आत्मानं मोचितवता हंसेन नलगुणानुवर्णनेन दमयन्त्या नले रागोत्पादनम् ॥ २ ॥

बृहदश्व उवाच ।
आसीद्राजा नलो नाम वीरसेनसुतो बली ।
उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः ॥ १
'यज्वा दानपतिर्दक्षः सदा शीलपुरस्कृतः ।'
अतिष्ठन्मनुजेन्द्राणां मूर्ध्नि देवपतिर्यथा ।
उपर्युपरि सर्वेषामादित्य इव तेजसा ॥ २

जयन्तः प्रीयमाणा वै इति क. पाठः ॥ ५० ॥ पुष्करेण राज्ञा ॥ ६१ ॥ एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

उपपन्नो युक्तः ॥ १ ॥

ब्रह्मण्यो वेदविच्छूरो निषधेषु महीपतिः ।
अक्षप्रियः सत्यवादी महानक्षौहिणीपतिः ॥ ३
ईप्सितो वरनारीणामुदारः संयतेन्द्रियः ।
रक्षिता धन्विनां श्रेष्ठः साक्षादिव मनुः स्वयम् ४
तथैवासीद्विदर्भेषु भीमो भीमपराक्रमः ।
शूरः सर्वगुणैर्युक्तः प्रजाकामः स चाप्रजाः ॥ ५
स प्रजार्थे परं यत्नमकरोत्सुसमाहितः ।
तमभ्यगच्छद्ब्रह्मर्षिर्दमनो नाम भारत ॥ ६
तं स भीमः प्रजाकामस्तोषयामास धर्मवित् ।
महिष्या सह राजेन्द्र सत्कारेण सुवर्चसम् ॥ ७
तस्मै प्रसन्नो दमनः सभार्याय वरं ददौ ।
कन्यारत्नं कुमारांश्च त्रीनुदारान्महायशाः ॥ ८
दमयन्तीं दमं दान्तं दमनं च सुवर्चसम् ।
उपपन्नान्गुणैः सर्वैर्भीमान्भीमपराक्रमान् ॥ ९
दमयन्ती तु रूपेण तेजसा वपुषा श्रिया ।
सौभाग्येन च लोकेषु यशः प्राप सुमध्यमा ॥१०
अथ तां वयसि प्राप्ते दासीनां समलंकृतम् ।
शतं सखीनां च तदा पर्युपास्ते शचीमिव ॥ ११
तत्र स्म राजते भैमी सर्वाभरणभूषिता ।
सखीमध्येऽनवद्याङ्गी विद्युत्सौदामनी यथा ॥१२
अतीव रूपसंपन्ना श्रीरिवायतलोचना ।
न देवेषु न यक्षेषु तादृग्रूपवती क्वचित् ॥ १३
मानुषेष्वपि चान्येषु दृष्टपूर्वाऽथवा श्रुता ।
चित्तप्रमाथिनी बाला देवानामपि सुन्दरी ॥१४
नलश्च नरशार्दूलो रूपेणाप्रतिमो भुवि ।
कंदर्प इव रूपेण मूर्तिमानभवत्स्वयम् ॥ १५
तस्याः समीपे तु नलं प्रशशंसुः कुतूहलात् ।
नैषधस्य समीपे तु दमयन्तीं पुनःपुनः ॥ १६
तयोरदृष्टः कामोऽभूच्छृण्वतोः सततं गुणान् ।
अन्योन्यं प्रति कौन्तेय स व्यवर्धत हृच्छयः ॥१७
अशक्नुवन्नलः कामं तदा धारयितुं हृदा ।
अन्तःपुरसमीपस्थे वन आस्ते रहोगतः ॥ १८

स ददर्श ततो हंसाञ्जातरूपपरिच्छदान् ।
वने विचरतां तेषामेकं जग्राह पक्षिणम् ॥ १९
ततोऽन्तरिक्षगो वाचं व्याजहार नलं तदा ।
हन्तव्योसि न ते राजन्करिष्यामि तव प्रियम् ॥२०
दमयन्तीसकाशे त्वां कथयिष्यामि नैषध ।
यथा त्वदन्यं पुरुषं न सा मंस्यति कर्हिचित् ॥२१
'तव चैव यथा भार्या भविष्यति तथाऽनघ ।
विधास्यामि नरव्याघ्र सोऽनुजानातु मां भवान् ॥'
एवमुक्तस्ततो हंसमुत्ससर्ज महीपतिः ।
ते तु हंसाः समुत्पत्य विदर्भानगमंस्ततः ॥ २३
विदर्भनगरीं गत्वा दमयन्त्यास्तदान्तिके ।
निपेतुस्ते गरुत्मन्तः सा ददर्शाथ तान्खगान् ॥२४
सा तानद्भुतरूपान्वै दृष्ट्वा सखिगणावृता ।
हृष्टा ग्रहीतुं खगमांस्त्वरमाणोपचक्रमे ॥ २५
अथ हंसा विससृपुः सर्वतः प्रमदावने ।
एकैकशस्तदा कन्यास्तान्हंसान्समुपाद्रवन् ॥ २६
दमयन्ती तु यं हंसं समुपाधावदन्तिके ।
स मानुषीं गिरं कृत्वा दमयन्तीमथाब्रवीत् ॥२७
दमयन्ति नलो नाम निषधेषु महीपतिः ।
अश्विनोः सदृशो रूपे न समास्तस्य मानुषाः ॥२८
[कन्दर्प इव रूपेण मूर्तिमानभवत्स्वयम् ।]
तस्य वै यदि भार्या त्वं भवेथा वरवर्णिनि ।
सफलं ते भवेज्जन्म रूपं चेदं सुमध्यमे ॥ २९
वयं हि देवगन्धर्वमनुष्योरगराक्षसान् ।
दृष्टवन्तो न चास्माभिर्दृष्टपूर्वस्तथाविधः ॥ ३०
त्वं चापि रत्नं नारीणां नरेषु च नलो वरः ।
विशिष्टाया विशिष्टेन संगमो गुणवान्भवेत् ॥ ३१
एवमुक्ता तु हंसेन दमयन्ती विशांपते ।
अब्रवीत्तत्र तं हंसं त्वमप्येवं नलं वद ॥ ३२
तथेत्युक्त्वाऽण्डजः कन्यां विदर्भस्य विशांपते ।
पुनरागम्य निषधान्नले सर्वं न्यवेदयत् ॥ ३३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

---

सौदामनी प्रावृषेण्यमेघसंबन्धिनी ॥१२॥ मूर्तिमान् शरीरी ॥१५॥ प्रशशंसुः वार्ताहरा इति शेषः ॥१६॥ हृच्छयः कामः ॥ १७ ॥ जातरूपपरिच्छदान् सुवर्णपक्षान् ॥ १९ ॥ अन्तरिक्षगः खगः ॥२०॥ गरुत्मन्तः पक्षिणः ॥२४॥ पञ्चाशत्तमोऽध्यायः ॥५०॥

## एकपञ्चाशोऽध्यायः ॥ ५१ ॥

नारदेनेन्द्रादीन्प्रति दमयन्तीगुणानुवर्णनपूर्वकं तत्स्वयंवरप्रवृत्तिकथनम् ॥ १ ॥ तत्स्वयंवरार्थमागच्छद्भिरिन्द्रादिभिः पथि दृष्टस्य नलस्य दमयन्तीघटनायां दूत्येन वरणम् ॥ २ ॥

बृहदश्व उवाच ।
दमयन्ती तु तच्छ्रुत्वा वचो हंसस्य भारत ।
तदा प्रभृति न स्वस्था नलं प्रति बभूव सा ॥ १
ततश्चिन्तापरा दीना विवर्णवदना कृशा ।
बभूव दमयन्ती तु निःश्वासपरमा तदा ॥ २
ऊर्ध्वदृष्टिर्ध्यानपरा बभूवोन्मत्तदर्शना ।
पाण्डुवर्णा क्षणेनाथ हृच्छयाविष्टचेतना ॥ ३
न शय्यासनभोगेषु रतिं विन्दति कर्हिचित् ।
न नक्तं न दिवा शेते हाहेति रुदती मुहुः ॥ ४
तामस्वस्थां तदाकारां सख्यस्ता जज्ञुरिङ्गितैः ॥ ५
ततो विदर्भपतये दमयन्त्याः सखीजनः ।
न्यवेदयत्तामस्वस्थां दमयन्तीं नरेश्वर ॥ ६
तच्छ्रुत्वा नृपतिर्भीमो दमयन्तीसखीगणात् ।
चिन्तयामास तत्कार्यं सुमहत्स्वां सुतां प्रति ।
किमर्थं दुहिता मेऽद्य नातिस्वस्थेव लक्ष्यते ॥ ७
स समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनाम् ।
अपश्यदात्मना कार्यं दमयन्त्याः स्वयंवरम् ॥ ८
स संनिपातयामास महीपालान्विशांपतिः ।
एषोऽनुभूयतां वीराः स्वयंवर इति प्रभो ॥ ९
श्रुत्वा तु पार्थिवाः सर्वे दमयन्त्याः स्वयंवरम् ।
अभिजग्मुस्ततो वीरा राजानो भीमशासनात् ॥ १०
हस्त्यश्वरथघोषेण नादयन्तो वसुंधराम् ।
विचित्रमाल्याभरणैर्बलैर्दृश्यैः स्वलंकृतैः ॥ ११
तेषां भीमो महाबाहुः पार्थिवानां महात्मनाम् ।
यथार्हमकरोत्पूजां तेऽवसंस्तत्र पूजिताः ॥ १२
एतस्मिन्नेव काले तु सुराणामृषिसत्तमौ ।
अटमानौ महात्मानाविन्द्रलोकमितो गतौ ॥ १३
नारदः पर्वतश्चैव महाप्राज्ञौ महाव्रतौ ।
देवराजस्य भवनं विविशाते सुपूजितौ ॥ १४
तावर्चयित्वा मघवा ततः कुशलमव्ययम् ।
पप्रच्छानामयं चापि तयोः सर्वगतं विभुः ॥ १५
नारद उवाच ।
आवयोः कुशलं देव सर्वत्रगतमीश्वर ।
लोके च मघवन्कृत्स्ने नृपाः कुशलिनो विभो ॥ १६
बृहदश्व उवाच ।
नारदस्य वचः श्रुत्वा पप्रच्छ बलवृत्रहा ।
धर्मज्ञाः पृथिवीपालास्त्यक्तजीवितयोधिनः ॥ १७
शस्त्रेण निधनं काले ये गच्छन्त्यपराङ्मुखाः ।
अयं लोकोऽक्षयस्तेषां यथैव मम कामधुक् ॥ १८
क्व नु ते क्षत्रियाः शूरा नहि पश्यामि तानहम् ।
आगच्छतो महीपालान्दयितानतिथीन्मम ॥ १९
एवमुक्तस्तु शक्रेण नारदः प्रत्यभाषत ।
शृणु मे मघवन्येन न दृश्यन्ते महीक्षितः ॥ २०
विदर्भराज्ञो दुहिता दमयन्तीति विश्रुता ।
रूपेण समतिक्रान्ता पृथिव्यां सर्वयोषितः ॥ २१
तस्याः स्वयंवरः शक्र भविता नचिरादिव ।
तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः ॥ २२
तां रत्नभूतां लोकस्य प्रार्थयन्तो महीक्षितः ।
काङ्क्षन्ति स्म विशेषेण बलवृत्रनिषूदन ॥ २३
एतस्मिन्कथ्यमाने तु लोकपालाश्च साग्निकाः ।
आजग्मुर्देवराजस्य समीपममरोत्तमाः ॥ २४
ततस्ते शुश्रुवुः सर्वे नारदस्य वचो महत् ।
श्रुत्वैव चाब्रुवन्हृष्टा गच्छामो वयमप्युत ॥ २५
ततः सर्वे महाराज सगणाः सहवाहनाः ।
विदर्भानभिजग्मुस्ते यतः सर्वे महीक्षितः ॥ २६
नलोपि राजा कौन्तेय श्रुत्वा राज्ञां समागमम् ।
अभ्यगच्छददीनात्मा दमयन्तीमनुव्रतः ॥ २७
अथ देवाः पथि नलं ददृशुर्भूतले स्थितम् ।
साक्षादिव स्थितं मूर्त्या मन्मथं रूपसंपदा ॥ २८

जज्ञुः ज्ञातवत्यः । इङ्गितैः अभिप्रायसूचकैश्चेष्टितैः ॥ ५ ॥ अनुभूयतां प्रेक्ष्यतां भवद्भिः ॥ ९ ॥ महीक्षितः पृथ्वीश्वराः

तं दृष्ट्वा लोकपालास्ते भ्राजमानं यथा रविम् ।
तस्थुर्विगतसंकल्पा विस्मिता रूपसंपदा ॥ २९
ततोऽन्तरिक्षे विष्टभ्य विमानानि दिवौकसः ।
अब्रुवन्नैषधं राजन्नवतीर्य नभस्तलात् ॥ ३०
भोभो निषधराजेन्द्र नल सत्यव्रतो भवान् ।
अस्माकं कुरु साहाय्यं दूतो भव नरोत्तम ॥ ३१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥

## द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

नलेन दमयन्त्यामिन्द्रादिनिदेशनिवेदनम् ॥ १ ॥

बृहदश्व उवाच ।
तेभ्यः प्रतिज्ञाय नलः करिष्य इति भारत ।
अथैतान्परिपप्रच्छ कृताञ्जलिरुपस्थितः ॥ १
के वै भवन्तः कश्चासौ यस्याहं दूत ईप्सितः ।
किंच तत्र मया कार्यं कथयध्वं यथातथम् ॥ २
एवमुक्ते नैषधेन मघवानभ्यभाषत ।
अमरान्वै निबोधास्मान्दमयन्त्यर्थमागतान् ॥ ३
अहमिन्द्रोऽयमग्निश्च तथैवायमपांपतिः ।
शरीरान्तकरो नृणां यमोऽयमपि पार्थिव ॥ ४
त्वं वै समागतानस्मान्दमयन्त्यै निवेदय ।
लोकपाला महेन्द्राद्याः समायान्ति दिदृक्षवः ॥५
प्राप्तुमिच्छन्ति देवास्त्वां शक्रोऽग्निर्वरुणो यमः ।
तेषामन्यतमं देवं पतित्वे वरयस्व ह ॥ ६
एवमुक्तः स शक्रेण नलः प्राञ्जलिरब्रवीत् ।
एकार्थसमवेतं मां न प्रेषयितुमर्हथ ॥ ७
कथं हि जातसंकल्पः स्त्रियमुत्सृजते पुमान् ।
परार्थमीदृशं वक्तुं तद्वै पश्यामरेश्वर ॥ ८
'एवमुक्तो नैषधेन मघवान्पुनरब्रवीत् ।'
करिष्य इति संश्रुत्य पूर्वमस्मासु नैषध ।
न करिष्यसि कस्मात्त्वं व्रज नैषध माचिरम् ॥ ९
'स वै त्वमागतानस्मान्दमयन्त्यै निवेदय ।
श्रेयसा योक्ष्यसे हि त्वं कुर्वन्नमरशासनम् ॥' १०
बृहदश्व उवाच ।
एवमुक्तः स देवैस्तैर्नैषधः पुनरब्रवीत् ।
सुरक्षितानि वेश्मानि प्रवेष्टुं कथमुत्सहे ॥ ११
प्रवेक्ष्यसीति तं शक्रः पुनरेवाभ्यभाषत ।
जगाम स तथेत्युक्त्वा दमयन्त्या निवेशनम् ॥१२
ददर्श तत्र वैदर्भीं सखीगणसमावृताम् ।
देदीप्यमानां वपुषा श्रिया च वरवर्णिनीम् ॥१३
अतीव सुकुमाराङ्गीं तनुमध्यां सुलोचनाम् ।
आक्षिपन्तीमिव च तां शशिनं स्वेन तेजसा ॥१४
तस्य दृष्ट्वैव ववृधे कामस्तां चारुहासिनीम् ।
सत्यं चिकीर्षमाणस्तु धारयामास हृच्छयम् ॥ १५
ततस्ता नैषधं दृष्ट्वा संभ्रान्ताः परमाङ्गनाः ।
आसनेभ्यः समुत्पेतुस्तेजसा तस्य धर्षिताः ॥ १६
प्रशशंसुश्च सुप्रीता नलं ता विस्मयान्विताः ।
न चैनमभ्यभाषन्त मनोभिस्त्वभ्यपूजयन् ॥ १७
अहो रूपमहो कान्तिरहो धैर्यं महात्मनः ।
कोऽयं देवोऽथवा यक्षो गन्धर्वो वा भविष्यति ॥१८
न तास्तं शक्नुवन्ति स्म व्याहर्तुमपि किंचन ।
तेजसा धर्षितास्तस्य लज्जावत्यो वराङ्गनाः ॥ १९
अथैनं स्मयमानेव स्मितपूर्वाभिभाषिणी ।
दमयन्ती नलं वीरमभ्यभाषत विस्मिता ॥ २०
कस्त्वं सर्वानवद्याङ्ग मम हृच्छयवर्धन ।
प्राप्तोऽस्यमरवद्वीर ज्ञातुमिच्छामि तेऽनघ ॥ २१
कथमागमनं चेह कथं चासि न लक्षितः ।
सुरक्षितं हि मे वेश्म राजा चैवोग्रशासनः ॥२२
एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह ।
नलं मां विद्धि कल्याणि देवदूतमिहागतम् ॥२३

॥ ३० ॥ विगतो विनष्टः दमयन्तीं प्राप्स्याम इति संकल्पो येषाम् ॥ २९ ॥ एकपञ्चाशोऽध्यायः ॥ ५१ ॥

धर्षिता अभिभूताः ॥ १६ ॥ द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

देवास्त्वां प्राप्तुमिच्छन्ति शक्रोऽग्निर्वरुणो यमः ।
तेषामन्यतमं देवं पतिं वरय शोभने ॥ २४
तेषामेव प्रभावेण प्रविष्टोऽहमलक्षितः ।
प्रविशन्तं न मां कश्चिदपश्यन्नाप्यवारयत् ॥ २५
एतदर्थमहं भद्रे प्रेषितः सुरसत्तमैः ।
एतच्छ्रुत्वा शुभे बुद्धिं प्रकुरुष्व यथेच्छसि ॥ २६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

## त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

नलदमयन्तीसंवादः ॥ १ ॥ नलेनेन्द्रादीन्प्रति दमयन्तीवचननिवेदनम् ॥ २ ॥

बृहदश्व उवाच ।
सा नमस्कृत्य देवेभ्यः प्रहस्य नलमब्रवीत् ।
प्रणयस्व यथाश्रद्धं राजन्किं करवाणि ते ॥ १
अहं चैव हि यच्चान्यन्ममास्ति वसु किंचन ।
तत्सर्वं तव विस्रब्धं कुरु प्रणयमीश्वर ॥ २
हंसानां वचनं यत्तु तन्मां दहति पार्थिव ।
त्वत्कृते हि मया वीर राजानः सन्निपातिताः ॥ ३
यदि त्वं भजमानां मां प्रत्याख्यास्यसि मानद ।
विषमग्निं जलं रज्जुमास्थास्ये तव कारणात् ॥ ४
एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह ।
तिष्ठत्सु लोकपालेषु कथं मानुषमिच्छसि ॥ ५
येषामहं लोककृतामीश्वराणां महात्मनाम् ।
न पादरजसा तुल्यो मनस्ते तेषु वर्तताम् ॥ ६
विप्रियं ह्याचरन्मर्त्यो देवानां मृत्युमृच्छति ।
त्राहि मामनवद्याङ्गि वरयस्व सुरोत्तमान् ॥ ७
विरजांसि च वासांसि दिव्याश्चित्राः स्रजस्तथा ।
भूषणानि तु दिव्यानि देवान्प्राप्य तु भुङ्क्ष्व वै ॥ ८
य इमां पृथिवीं कृत्स्नां संक्षिप्य ग्रसते पुनः ।
हुताशमीशं देवानां का तं न वरयेत्पतिम् ॥ ९
यस्य दण्डभयात्सर्वे भूतग्रामाः समागताः ।
धर्ममेवानुरुध्यन्ति का तं न वरयेत्पतिम् ॥ १०
धर्मात्मानं महात्मानं दैत्यदानवमर्दनम् ।
महेन्द्रं सर्वदेवानां का तं न वरयेत्पतिम् ॥ ११
क्रियतामविशङ्केन मनसा यदि मन्यसे ।
वरुणं लोकपालानां सुहृद्वाक्यमिदं शृणु ॥ १२
नैषधेनैवमुक्ता सा दमयन्ती वचोऽब्रवीत् ।
समाप्लुताभ्यां नेत्राभ्यां शोकजेनाथ वारिणा ॥ १३
देवेभ्योऽहं नमस्कृत्य सर्वेभ्यः पृथिवीपते ।
वृणे त्वामेव भर्तारं सत्यमेतद्ब्रवीमि ते ॥ १४
तामुवाच ततो राजा वेपमानां कृताञ्जलिम् ।
दौत्येनागत्य कल्याणि नोत्सहे स्वार्थमीप्सितं ॥ १५
कथं ह्यहं प्रतिश्रुत्य देवतानां विशेषतः ।
परार्थे यत्नमारभ्य कथं स्वार्थमिहोत्सहे ॥ १६
एष धर्मो यदि स्वार्थो ममापि भविता ततः ।
एवं स्वार्थं करिष्यामि तथा भद्रे विधीयताम् ॥ १७
ततो बाष्पाकुलां वाचं दमयन्ती शुचिस्मिता ।
प्रत्याहरन्ती शनकैर्नलं राजानमब्रवीत् ॥ १८
अस्त्युपायो मया दृष्टो निरपायो नरेश्वर ।
येन दोषो न भविता तव राजन्कथंचन ॥ १९
त्वं चैव हि नरश्रेष्ठ देवाश्चेन्द्रपुरोगमाः ।
आयान्तु सहिताः सर्वे मम यत्र स्वयंवरः ॥ २०
ततोऽहं लोकपालानां सन्निधौ त्वां नरेश्वर ।
वरयिष्ये नरव्याघ्र नैवं दोषो भविष्यति ॥ २१
एवमुक्तस्तु वैदर्भ्या नलो राजा विशांपते ।
आजगाम पुनस्तत्र यत्र देवाः समागताः ॥ २२
तमपश्यंस्तथाऽऽयान्तं लोकपाला महेश्वराः ।
दृष्ट्वा चैनं ततोऽपृच्छन्वृत्तान्तं सर्वमेव तम् ॥ २३
कच्चिद्दृष्टा त्वया राजन्दमयन्ती शुचिस्मिता ।

यथाश्रद्धं देवेभ्यो नमस्कृत्य प्रणयस्वेति संबन्धः । प्रणयस्व परिणयस्व । मामिति शेषः ॥ १ ॥ विस्रब्धं सविश्वासं यथास्यात्तथा प्रणयं परिणयनं विवाहम् ॥ २ ॥ सन्निपातिताः मेलिताः ॥ ३ ॥ मृत्युकारणादिति क. ध. पाठः ॥ ४ ॥

किमब्रवीच्च नः सर्वान्वद भूमिपतेऽनघ ॥ २४

नल उवाच ।

भवद्भिरहमादिष्टो दमयन्त्या निवेशनम् ।
प्रविष्टः सुमहाकक्ष्यं दण्डिभिः स्थविरैर्वृतम् ॥२५
प्रविशन्तं च मां तत्र न कश्चिद्दृष्टवान्नरः ।
ऋते तां पार्थिवसुतां भवतामेव तेजसा ॥ २६
सख्यश्चास्या मया दृष्टास्ताभिश्चाप्युपलक्षितः ।
विस्मिताश्चाभवन्सर्वा दृष्ट्वा मां विबुधेश्वराः ॥२७
वर्ण्यमानेषु च मया भवत्सु रुचिरानना ।
मामेव गतसंकल्पा वृणीते सा सुरोत्तमाः ॥ २८
अब्रवीच्चैव मां बाला आयान्तु सहिताः सुराः ।
त्वया सह नरव्याघ्र मम यत्र स्वयंवरः ॥ २९
तेषामहं संनिधौ त्वां वरयिष्यामि नैषध ।
एवं तव महाबाहो दोषो न भवितेति ह ॥ ३०
एतावदेव विबुधा यथावृत्तमुपाहृतम् ।
मया शेषे प्रमाणं तु भवन्तस्त्रिदशेश्वराः ॥ ३१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

## चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

स्वयंवरमण्टपे इन्द्राग्नियमवरुणैर्नलसारूप्येण तत्पार्श्वे समुपवेशनम् ॥ १ ॥ दमयन्त्या स्वगुणसंतुष्टेन्द्रादिप्रसादेन नलस्यैव वरणम् ॥ २ ॥

बृहदश्व उवाच ।

अथ काले शुभे प्राप्ते तिथौ पुण्ये क्षणे तथा ।
आजुहाव महीपालान्भीमो राजा स्वयंवरे ॥ १
तच्छ्रुत्वा पृथिवीपालाः सर्वे हृच्छयपीडिताः ।
त्वरिताः समुपाजग्मुर्दमयन्तीमभीप्सवः ॥ २
कनकस्तम्भरुचिरं तोरणेन विराजितम् ।
विविशुस्ते नृपा रङ्गं महासिंह इवाचलम् ॥ ३
तत्रासनेषु विविधेष्वासीनाः पृथिवीक्षितः ।
सुरभिस्रग्धराः सर्वे प्रमृष्टमणिकुण्डलाः ॥ ४
तां राजसमितिं पूर्णां नागैर्भोगवतीमिव ।
संपूर्णां पुरुषव्याघ्रैर्व्याघ्रैर्गिरिगुहामिव ।
'प्रविवेश नलो देवैः पुण्यश्लोको नराधिप ॥' ५
तत्र स्म पीना दृश्यन्ते बाहवः परिघोपमाः ।
आकारवर्णसुश्लक्ष्णाः पञ्चशीर्षा इवोरगाः ॥ ६
सुकेशान्तानि चारूणि सुनासानि शुभानि च ।
मुखानि राज्ञां शोभन्ते नक्षत्राणि यथा दिवि ७
दमयन्ती ततो रङ्गं प्रविवेश शुभानना ।
मुष्णन्ती प्रभया राज्ञां चक्षूंषि च मनांसि च ॥ ८
तस्या गात्रेषु पतिता तेषां दृष्टिर्महात्मनाम् ।
तत्रतत्रैव सक्ताऽभून्न चचाल च पश्यताम् ॥ ९
ततः संकीर्त्यमानेषु राज्ञां नामसु भारत ।
ददर्श भैमी पुरुषान्पञ्च तुल्याकृतीनिह ॥ १०
तान्समीक्ष्य ततः सर्वान्निर्विशेषाकृतीन्स्थितान् ।
संदेहादथ वैदर्भी नाभ्यजानान्नलं नृपम् ॥ ११
'निर्विशेषवयोवेषरूपाणां तत्र सा शुभा ।'
यंयं हि ददृशे तेषां तंतं मेने नलं नृपम् ।
सा चिन्तयन्ती बुद्ध्याऽथ तर्कयामास भामिनी १२
कथं नु देवाञ्जानीयां कथं विद्यां नलं नृपम् ।
एवं संचिन्तयन्ती सा वैदर्भी भृशदुःखिता ॥१३
श्रुतानि देवलिङ्गानि तर्कयामास भारत ।
देवानां यानि लिङ्गानि स्थविरेभ्यः श्रुतानि मे १४
तानीह तिष्ठतां भूमावेकस्यापि न लक्षये ।
एवं विचिन्त्य बहुधा विचार्य च पुनः पुनः ॥१५
शरणं प्रति देवानां प्राप्तकालममन्यत ।
वाचा च मनसा चैव नमस्कारं प्रयुज्य सा ॥१६
देवेभ्यः प्राञ्जलिर्भूत्वा वेपमानेदमब्रवीत् ।
हंसानां वचनं श्रुत्वा यथा मे नैषधो वृतः ।
पतित्वे तेन सत्येन देवास्तं प्रदिशन्तु मे ॥ १७

महाकक्ष्यं महान्तं राजद्वारप्रदेशम् ॥ २५ ॥ अतःपरं प्रमाणं तु भवन्तोऽमरसत्तमा इति क॰ पाठः ॥ ३१ ॥ त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

सुनासाक्षिभ्रुवाणि चेति क्ष॰ पाठः ॥ ७ ॥ मुष्णन्ती हरन्ती

मनसा वचसा चैव यथा नातिचराम्यहम् ।
तेन सत्येन विबुधास्तमेव प्रदिशन्तु मे ॥ १८
यथा देवैः स मे भर्ता विहितो निषधाधिपः ।
तेन सत्येन मे देवास्तमेव प्रदिशन्तु मे ॥ १९
यथेदं व्रतमारब्धं नलस्याराधने मया ।
तेन सत्येन मे देवास्तमेव प्रदिशन्तु मे ॥ २०
स्वं चैव रूपं पुष्यन्तु लोकपाला महेश्वराः ।
यथाऽहमभिजानीयां पुण्यश्लोकं नराधिपम् ॥२१
निशम्य दमयन्त्यास्तत्करुणं प्रतिदेवितम् ।
निश्चयं परमं तथ्यमनुरागं च नैषधे ॥ २२
मनोविशुद्धिं बुद्धिं च भक्तिं रागं च नैषधे ।
यथोक्तं चक्रिरे देवाः सामर्थ्यं लिङ्गधारणे ॥२३
साऽपश्यद्विबुधान्सर्वानस्वेदान्स्तब्धलोचनान् ।
अम्लानस्रग्रजोहीनान्स्थितानस्पृशतः क्षितिम् २४
छायाद्वितीयो म्लानस्रग्रजःस्वेदसमन्वितः ।
भूमिष्ठो नैषधश्चैव निमेषेण च सूचितः ॥ २५
सा समीक्ष्य तु तान्देवान्पुण्यश्लोकं च भारत ।
नैषधं वरयामास भैमी धर्मेण पाण्डव ॥ २६
विलज्जमाना वस्त्रान्तं जग्राहायतलोचना ।
स्कन्धदेशेऽसृजत्तस्य स्रजं परमशोभनाम् ॥ २७
वरयामास चैवैनं पतित्वे वरवर्णिनी ।
ततो हाहेति सहसा मुक्तः शब्दो नराधिपैः ॥२८
देवैर्महर्षिभिस्तत्र साधुसाध्विति भारत ।
विस्मितैरीरितः शब्दः प्रशंसद्भिर्नलं नृपम् ॥ २९
दमयन्तीं तु कौरव्य वीरसेनसुतो नृपः ।
आश्वासयद्वरारोहां प्रहृष्टेनान्तरात्मना ॥ ३०
यत्त्वं भजसि कल्याणि पुमांसं देवसन्निधौ ।
तस्मान्मां विद्धि भर्तारमेतत्ते वचने रतम् ॥ ३१
यावच्च मे धरिष्यन्ति प्राणा देहे शुचिस्मिते ।
तावत्त्वयि भविष्यामि सत्यमेतद्ब्रवीमि ते ॥ ३२
दमयन्तीं तथा वाग्भिरभिनन्द्य कृताञ्जलिः ॥ ३३
तौ परस्परतः प्रीतौ दृष्ट्वा त्वग्निपुरोगमान् ।
तानेव शरणं देवाञ्जग्मतुर्मनसा तदा ॥ ३४
वृते तु नैषधे भैम्या लोकपाला महौजसः ।
प्रहृष्टमनसः सर्वे नलायाष्टौ वरान्ददुः ॥ ३५
प्रत्यक्षदर्शनं यज्ञे गतिं चानुत्तमां शुभाम् ।
नैषधाय ददौ शक्रः प्रीयमाणः शचीपतिः ॥ ३६
अग्निरात्मभवं प्रादाद्यत्र वाञ्छति नैषधः ।
लोकानात्मप्रभांश्चैव ददौ तस्मै हुताशनः ॥ ३७
यमस्त्वन्नरसं प्रादाद्धर्मे च परमां स्थितिम् ।
अपांपतिरपां भावं यत्र वाञ्छति नैषधः ।
स्रजश्चोत्तमगन्धाढ्याः सर्वे च मिथुनं ददुः ॥३८
वरानेवं प्रदायास्य देवास्ते त्रिदिवं गताः ।
'एतत्सर्वं नलोऽपश्यद्दमयन्ती च भारत ।
यथा स्वप्नं महाराज तथैव ददृशुर्जनाः ॥ ३९
ततः स्वयंवरं चक्रे भीमो राजाऽतिमानुषम् ।
समागतेषु सर्वेषु भूपालेषु विशांपते ॥ ४०
दमयन्त्यपि तद्दृष्ट्वा राजमण्डलमृद्धिमत् ।
अन्वीक्ष्य नैषधं वव्रे भैमी धर्मेण भारत ॥ ४१
वृते च नैषधे भैम्या निवृत्ते च स्वयंवरे ।
सर्व एव महीपालाः प्रतिजग्मुर्यथागतम् ॥' ४२
पार्थिवाश्चानुभूयास्य विवाहं विस्मयान्विताः ।
दमयन्त्याश्च मुदिताः प्रतिजग्मुर्यथागतम् ॥ ४३
गतेषु पार्थिवेन्द्रेषु भीमः प्रीतो महामनाः ।
विवाहं कारयामास दमयन्त्या नलस्य च ॥ ४४
उष्य तत्र तथाकामं नैषधो द्विपदांवरः ।
भीमेन समनुज्ञातो जगाम नगरं स्वकम् ।
अवाप्य नारीरत्नं तु पुण्यश्लोकोपि पार्थिवः ॥ ४५
रेमे सह तया राजञ्छच्येव बलवृत्रहा ।
अतीव मुदितो राजा भ्राजमानोंऽशुमानिव ॥ ४६
अरञ्जयत्प्रजा वीरो धर्मेण परिपालयन् ।
ईजे चाप्यश्वमेधेन ययातिरिव नाहुषः ।

॥ ८ ॥ लोकपालाः सहेश्वरा इति झ. पाठः ॥ २१ ॥ अम्ला. नस्रजश्च ते रजोहीनाश्चेति विग्रहः । छायाविहीनानम्लानस्रजोऽ- स्वेदसमन्वितानिति क. पाठः ॥ २४ ॥ यद्यस्मान्मां भजसि तस्मात्ते तव वचने रतं इत्येतत् विद्धि ॥ ३१ ॥

आत्मभवं आत्मन आविर्भावम् ॥ ३७ ॥ अन्नरसं यादृशे तादृशेप्यन्ने विशिष्टरसवत्ताम् । भावं सत्ताम् । मिथुनं एकैकेन द्वयं द्वयमपीत्यर्थः ॥ ३८ ॥ अनुभूय दृष्ट्वा ॥ ४३ ॥ उष्य वासं कृत्वा ॥ ४५ ॥ चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

अन्यैश्च बहुभिर्धीमान्क्रतुभिश्चाप्तदक्षिणैः ॥ ४७
पुनश्च रमणीयेषु वनेषूपवनेषु च ।
दमयन्त्या सह नलो विजहारामरोपमः ॥ ४८
जनयामास च ततो दमयन्त्यां महामनाः ।
इन्द्रसेनं सुतं चापि इन्द्रसेनां च कन्यकाम् ॥ ४९
एवं स यजमानश्च विहरंश्च नराधिपः ।
ररक्ष वसुसंपूर्णां वसुधां वसुधाधिपः ॥ ५०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

## पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

दमयन्तीस्वयंवरादनन्तरं दिवं गच्छतामिन्द्रादीनां मध्येमार्गं कलिद्वापरयोर्दर्शनम् ॥ १ ॥ तैः स्वयंवरे दमयन्त्या नलवरणं निवेदितेन द्वापरद्वितीयेन कलिना नलपराभवप्रतिज्ञानम् ॥ २ ॥

बृहदश्व उवाच ।
वृते तु नैषधे भैम्या लोकपाला महौजसः ।
यान्तो ददृशुरायान्तं द्वापरं कलिना सह ॥ १
अथाब्रवीत्कलिं शक्रः संप्रेक्ष्य बलवृत्रहा ।
द्वापरेण सहायेन कले ब्रूहि क्व यास्यसि ॥ २
ततोऽब्रवीत्कलिः शक्रं दमयन्त्याः स्वयंवरम् ।
गत्वा हि वरयिष्ये तां मनो हि मम तां गतम् ॥ ३
तमब्रवीत्प्रहस्येन्द्रो निर्वृत्तः स स्वयंवरः ।
वृतस्तया नलो राजा पतिरस्मत्समीपतः ॥ ४
एवमुक्तस्तु शक्रेण कलिः कोपसमन्वितः ।
देवानामन्त्र्य तान्सर्वानुवाचेदं वचस्तदा ॥ ५
देवानां मानुषं मध्ये यत्सा पतिमविन्दत ।
ननु तस्या भवेन्न्याय्यं विपुलं दण्डधारणम् ॥ ६
एवमुक्ते तु कलिना प्रत्यूचुस्ते दिवौकसः ।
अस्माभिः समनुज्ञाते दमयन्त्या नलो वृतः ॥ ७
का हि सर्वगुणोपेतं नाश्रयेत नलं नृपम् ।
यो वेद धर्मानखिलान्यथावच्चरितव्रतः ॥ ८
योऽधीते चतुरो वेदान्सर्वानाख्यानपञ्चमान् ।
नित्यं तृप्ता गृहे यस्य देवा यज्ञेषु धर्मतः ।
अहिंसानिरतो यश्च सत्यवादी दृढव्रतः ॥ ९
यस्मिन्दाक्ष्यं धृतिर्ज्ञानं तपः शौचं दमः शमः ।
ध्रुवाणि पुरुषव्याघ्रे लोकपालसमे नृपे ॥ १०
एवंरूपं नलं यो वै कामयेच्छपितुं कले ।
आत्मानं स शपेन्मूढो हन्यादात्मानमात्मना ॥ ११
एवंगुणं नलं यो वै कामयेच्छपितुं कले ।
कृच्छ्रे स नरके मज्जेदगाधे विपुले ह्रदे ॥ १२
एवमुक्त्वा कलिं देवा द्वापरं च दिवं ययुः ।
ततो गतेषु देवेषु कलिर्द्वापरमब्रवीत् ॥ १३
संयन्तुं नोत्सहे कोपं नले वत्स्यामि द्वापर ।
भ्रंशयिष्यामि तं राज्यान्न भैम्या सह रंस्यते ॥ १४
त्वमप्यक्षान्समाविश्य साहाय्यं कर्तुमर्हसि ।
'मम प्रियकृते ह्यस्मिन्कृतवांश्च भविष्यसि ॥' १५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

## षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

कलिचोदनया पुष्करेण नलाह्वानम् ॥ १ ॥ नलपुष्करयोरक्षदेवनम् ॥ १ ॥

बृहदश्व उवाच ।
एवं स समयं कृत्वा द्वापरेण कलिः सह ।
आजगाम ततस्तत्र यत्र राजा स नैषधः ॥ १
स नित्यमन्तरप्रेक्षी निषधेष्ववसच्चिरम् ।
अथास्य द्वादशे वर्षे ददर्श कलिरन्तरम् ॥ २
कृत्वा मूत्रमुपस्पृश्य संध्यामन्वास्त नैषधः ।

निर्वृत्तः समाप्तः ॥ ४ ॥ अस्माभिः समनुज्ञातो दमयन्त्येति क. ध. पाठः ॥७॥ धर्मवादी दृढव्रत इति क. पाठः ॥९॥ शौचं दया क्षमेति क. पाठः ॥ १० ॥ पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

समयं संकेतम् ॥ १ ॥ अन्वास्त उपासितवान् ॥ ३ ॥

अकृत्वा पादयोः शौचं तत्रैनं कलिराविशत् ॥ ३
स समाविश्य च नलं समीपं पुष्करस्य च ।
गत्वा पुष्करमाहेदमेहि दीव्य नलेन वै ॥ ४
अक्षद्यूते नलं जेता भवान्हि सहितो मया ।
निषधान्प्रतिपद्यस्व जित्वा राज्यं नलं नृपम् ॥ ५
एवमुक्तस्तु कलिना पुष्करो नलमभ्ययात् ।
कलिश्चैव वृषो भूत्वा तं वै पुष्करमन्वयात् ॥ ६
आसाद्य तु नलं वीरं पुष्करः परवीरहा ।
दीव्यावेत्यब्रवीद्भ्राता वृषेणेति मुहुर्मुहुः ॥ ७
न चक्षमे ततो राजा समाह्वानं महामनाः ।
वैदर्भ्याः प्रेक्षमाणायाः पाशकालममन्यत ॥ ८
'ततः स राज्ञा सहसा देवितुं संप्रचक्रमे ॥ ९
भ्रात्रा देवाभिभूतेन दैवाविष्टो जनाधिपः ।'
हिरण्यस्य सुवर्णस्य यानयुग्यस्य वाससाम् ।
आविष्टः कलिना द्यूते जीयते स्म नलस्तदा ॥ १०
तमक्षमदसंमत्तं सुहृदां न तु कश्चन ।
निवारणेऽभवच्छक्तो दीव्यमानमरिंदमम् ॥ ११
ततः पौरजनाः सर्वे मन्त्रिभिः सह भारत ।
राजानं द्रष्टुमागच्छन्निवारयितुमातुरम् ॥ १२
ततः सूत उपागम्य दमयन्त्यै न्यवेदयत् ।
एष पौरजनो देवि द्वारि तिष्ठति कार्यवान् ॥ १३
निवेद्यतां नैषधाय सर्वाः प्रकृतयः स्थिताः ।
अमृष्यमाणा व्यसनं राज्ञो धर्मार्थदर्शिनः ॥ १४
ततः सा बाष्पकलया वाचा दुःखेन कर्शिता ।
उवाच नैषधं भैमी शोकोपहतचेतना ॥ १५
राजन्पौरजनो द्वारि त्वां दिदृक्षुरवस्थितः ।
मन्त्रिभिः सहितः सर्वै राजभक्तिपुरस्कृतः ।
'वृद्धैर्ब्राह्मणमुख्यैश्च वणिग्भिश्च समन्वितः ॥ १६
आगतं सहितं राजंस्त्वत्प्रसादावलम्बनम् ।'
तं द्रष्टुमर्हसीत्येवं पुनः पुनरभाषत ॥ १७
तां तथा रुचिरापाङ्गीं विलपन्तीं तथाविधाम् ।
आविष्टः कलिना राजा नाभ्यभाषत किंचन १८
ततस्ते मन्त्रिणः सर्वे ते चैव पुरवासिनः ।
नायमस्तीति दुःखार्ता व्रीडिता जग्मुरालयान् १९
तथा तदभवद्द्यूतं पुष्करस्य नलस्य च ।
युधिष्ठिर बहून्मासान्पुण्यश्लोकस्त्वजीयत ॥ २०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

---

## सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

द्यूते नलपराजयमुत्पश्यन्त्या दमयन्त्या चोदितेन सारथिना तत्पुत्रमिथुनस्य रथारोपणेन भीमनगरप्रापणम् ॥ १ ॥

बृहदश्व उवाच ।
दमयन्ती ततो दृष्ट्वा पुण्यश्लोकं नराधिपम् ।
उन्मत्तवदनुन्मत्ता देवने कृतचेतसम् ॥ १
भयशोकसमाविष्टा राजन्भीमसुता ततः ।
चिन्तयामास तत्कार्यं सुमहत्पार्थिवं प्रति ॥ २
सा शङ्कमाना तत्पापं चिकीर्षन्ती च तत्प्रियम् ।
नलं च हृतसर्वस्वमुपलभ्येदमब्रवीत् ॥ ३
बृहत्सेनामतियशां तां धात्रीं परिचारिकाम् ।
हितां सर्वार्थकुशलामनुरक्तां सुभाषिताम् ॥ ४
बृहन्सेने व्रजामात्यानानाय्य नलशासनात् ।
आचक्ष्व यद्धृतं द्रव्यमवशिष्टं च यद्वसु ॥ ५
'इत्येवं सा समादिष्टा बृहत्सेना नरेश्वर ।
उवाच देव्या वचनं मन्त्रिणां सा समीपतः ॥' ६
ततस्ते मन्त्रिणः सर्वे विज्ञाय नलशासनम् ।
अपि नो भागधेयं स्यादित्युक्त्वा पुनराव्रजन् ७
तास्तु सर्वाः प्रकृतयो द्वितीयं समुपस्थिताः ।

---

स कलिः । नलं समाविश्य रूपान्तरेण पुष्करं चाब्रवीत् । दीव्य द्यूतं कुरु ॥ ४ ॥ वृषः श्रेष्ठः पाशश्रेष्ठो भूत्वा ॥ ६ ॥ वृषेणाक्षमुख्येन । अब्रवीत्प्रीत्येति क. पाठः ॥ ७ ॥ यानेषु युग्यं युगवहं रथादि तस्य ॥ १० ॥ नायमस्ति नष्टोयमित्यर्थः ॥ १९ ॥ पुण्यः पावनः श्लोको यशो यस्य । अजीयत जितः ॥ २० ॥ षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

द्वितीयं द्वितीयवारम् । नच तत्प्रत्यवबुध्यतेति क. ध. पाठः ॥ ८ ॥

न्यवेदयद्व्रीमसुता न च तत्प्रत्यनन्दत ॥ ८
वाक्यमप्रतिनन्दन्तं भर्तारमभिवीक्ष्य सा ।
दमयन्ती पुनर्वेश्म व्रीडिता प्रविवेश ह ॥ ९
निशाम्य सततं चाक्षान्पुण्यश्लोकपराङ्मुखान् ।
नलं च हृतसर्वस्वं धात्रीं पुनरुवाच ह ॥ १०
बृहत्सेने पुनर्गच्छ वार्ष्णेयं नलशासनात् ।
सूतमानय कल्याणि महत्कार्यमुपस्थितम् ॥ ११
बृहत्सेना तु सा श्रुत्वा दमयन्त्याः प्रभाषितम् ।
वार्ष्णेयमानयामास पुरुषैराप्तकारिभिः ॥ १२
वार्ष्णेयं तु ततो भैमी सान्त्वयच्छ्लक्ष्णया गिरा ।
उवाच देशकालज्ञा प्राप्तकालमनिन्दिता ॥ १३
जानीषे त्वं यथा राजा सम्यग्वृत्तः सदा त्वयि ।
तस्य त्वं विषमस्थस्य साहाय्यं कर्तुमर्हसि ॥ १४
यथायथा हि नृपतिः पुष्करेणैव जीयते ।
तथातथाऽस्य वै द्यूते रागो भूयोऽभिवर्धते ॥ १५
यथा च पुष्करस्याक्षाः पतन्ति वशवर्तिनः ।
तथा विपर्ययश्चापि नलस्याक्षेषु दृश्यते ॥ १६
सुहृत्स्वजनवाक्यानि यथाऽयं न शृणोति च ।
ममापि च तथा वाक्यं नाभिनन्दति नैषधः १७
यथा राज्ञः प्रदीप्तानां भाग्यानामद्य सारथे ।
नूनं मन्ये न शेषोऽस्ति नैषधस्य महात्मनः ॥ १८
यत्तु मे वचनं राजा नाभिनन्दति मोहितः ।
शरणं त्वां प्रपन्नाऽस्मि सारथे कुरु मद्वचः ।
न हि मे शुध्यते भावो विनाशं प्रति सारथे ॥ १९
नलस्य दयितानश्वान्योजयित्वा मनोजवान् ।
रथमारोप्य मिथुनं कुण्डिनं यातुमर्हसि ॥ २०
मम ज्ञातिषु निक्षिप्य दारकौ स्यन्दनं तथा ।
अश्वांश्चेमान्यथाकामं वस वाऽन्यत्र गच्छ वा ॥ २१
दमयन्त्यास्तु तद्वाक्यं वार्ष्णेयो नलसारथिः ।
न्यवेदयदशेषेण नलामात्येषु मुख्यशः ॥ २२
तैः समेत्य विनिश्चित्य सोऽनुज्ञातो महीपते ।
ययौ मिथुनमारोप्य विदर्भांस्तेन वाहिना ॥ २३
हयांस्तत्र विनिक्षिप्य सूतो रथवरं च तम् ।
इन्द्रसेनां च तां कन्यामिन्द्रसेनं च बालकम् ॥ २४
आमन्त्र्य भीमं राजानमार्तः शोचन्नलं नृपम् ।
क्व नु यास्यामि मनसा चिन्तयानो मुहुर्मुहुः ।
अटमानस्ततोऽयोध्यां जगाम नगरीं तदा ॥ २५
ऋतुपर्णं स राजानमुपतस्थे सुदुःखितः ।
भृतिं च स ददौ चास्य सारथ्येन नियोजितः ॥ २६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

---

## अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

द्यूते पुष्करजितेन नलेन दमयन्त्या सह वनप्रवेशः ॥ १ ॥ अन्तरिक्षे पक्षिरूपेण समुत्पतद्भिरक्षैरात्मजिघृक्षोर्नलस्य अन्तरीयवस्त्रापकर्षणेन पलायनम् ॥ २ ॥

---

बृहदश्व उवाच ।
ततस्तु याते वार्ष्णेये पुण्यश्लोकस्य दीव्यतः ।
पुष्करेण हृतं राज्यं यच्चापि वसु किंचन ॥ १
हृतराज्यं नलं राजन्प्रहसन्पुष्करोऽब्रवीत् ।
द्यूतं प्रवर्ततां भूयः प्रतिपाणोऽस्ति कस्तव ॥ २
शिष्टा ते दमयन्त्येका सर्वमन्यद्धृतं मया ।
दमयन्त्याः पणः साधु वर्ततां यदि मन्यसे ॥ ३
पुष्करेणैवमुक्तस्य पुण्यश्लोकस्य मन्युना ।
व्यदीर्यतेव हृदयं न चैनं किंचिदब्रवीत् ॥ ४
ततः पुष्करमालोक्य नलः परममन्युमान् ।
'उवाच विद्यतेऽन्यच्च धनं मम नराधम ॥ ५
पणरूपेण निक्षिप्य पुण्यश्लोकः सुदुर्मनाः ।

---

कदाचिद्विनश्येदपीति झ. पाठः ॥ १९ ॥ मिथुनं कुमारीं कुमारं च । कुण्डिनं भीमस्य नगरम् ॥ २० ॥ मुख्यशः मुख्येषु मुख्येषु ॥ २२ ॥ वाहिना अश्वरथेन ॥ २३ ॥ भृतिं वेतनम् ॥ २६ ॥ सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

प्रतिपाणः पणनीयं द्रव्यम् ॥ २ ॥

उत्तरीयं तथा वस्त्रं तस्याश्चाभरणानि च ।'
उत्सृज्य सर्वगात्रेभ्यो भूषणानि महायशाः ॥ ६
एकवासा ह्यसंवीतः सुहृच्छोकविवर्धनः ।
निश्चक्राम ततो राजा त्यक्त्वा सुविपुलां श्रियम् ॥ ७
दमयन्त्येकवस्त्राऽथ गच्छन्तं पृष्ठतोऽन्वगात् ।
स तया नगराभ्याशे त्रिरात्रं नैषधोऽवसत् ॥ ८
पुष्करस्तु महाराज घोषयामास वै पुरे ।
नले यः सम्यगातिष्ठेत्स गच्छेद्वध्यतां मम ॥ ९
पुष्करस्य तु वाक्येन तस्य विद्वेषणेन च ।
पौरा न तस्य सत्कारं कृतवन्तो युधिष्ठिर ॥ १०
स तथा नगराभ्याशे सत्कारार्हो न सत्कृतः ।
त्रिरात्रमुषितो राजा जलमात्रेण वर्तयन् ॥ ११
[पीड्यमानः क्षुधा तत्र फलमूलानि कर्षयन् ।
प्रातिष्ठत ततो राजा दमयन्ती तमन्वगात् ॥]१२
क्षुधया पीड्यमानस्तु नलो बहुतिथेऽहनि ।
अपश्यच्छकुनान्कांश्चिद्धिरण्यसदृशच्छदान् ॥ १३
स चिन्तयामास तदा निषधाधिपतिर्बली ।
अस्ति भक्ष्यो ममाद्यापि वसु चेदं भविष्यति १४
ततस्तानन्तरीयेण वाससा स समावृणोत् ।
तस्य तद्वस्त्रमादाय सर्वे जग्मुर्विहायसा ॥ १५
उत्पतन्तः खगा वाक्यमेतदाहुस्ततो नलम् ।
दृष्ट्वा दिग्वाससं भूमौ स्थितं दीनमधोमुखम् १६
वयमक्षाः सुदुर्बुद्धे तव वासो जिहीर्षवः ।
आगता न हि नः प्रीतिः सवाससि गते त्वयि ॥
तान्समीक्ष्य गतानक्षानात्मानं च विवाससम् ।
पुण्यश्लोकस्तदा राजा दमयन्तीमथाब्रवीत् ॥ १८
येषां प्रकोपादैश्वर्यात्प्रच्युतोऽहमनिन्दिते ।
प्राणयात्रां न विन्देयं दुःखितः क्षुधयाऽन्वितः ॥
येषां कृते न सत्कारमकुर्वन्मयि नैषधाः ।
इमे ते शकुना भूत्वा वासश्चापहरन्ति मे ॥ २०
वैषम्यं परमं प्राप्तो दुःखितो गतचेतनः ।
भर्ता तेऽहं निबोधेदं वचनं हितमात्मनः ॥ २१
एते गच्छन्ति बहवः पन्थानो दक्षिणापथम् ।
अवन्तीमृक्षवन्तं च समतिक्रम्य पर्वतम् ॥ २२
एष विन्ध्यो महाशैलः पयोष्णी च समुद्रगा ।
आश्रमाश्च महर्षीणां बहुमूलफलान्विताः ॥ २३
एष पन्था विदर्भाणामेष यास्यति कोसलान् ।
अतःपरं च देशोऽयं दक्षिणो दक्षिणापथः ॥ २४
एतद्वाक्यं नलो राजा दमयन्तीं समाहितः ।
उवाचासकृदार्तो हि भैमीमुद्दिश्य भारत ॥ २५
ततः सा बाष्पकलया वाचा दुःखेन कर्शिता ।
उवाच दमयन्ती तं नैषधं करुणं वचः ॥ २६
उद्वेपते मे हृदयं सीदन्त्यङ्गानि सर्वशः ।
तव पार्थिव संकल्पं चिन्तयन्त्याः पुनः पुनः ॥२७
हृतराज्यं हृतद्रव्यं विवस्त्रं क्षुच्छ्रमान्वितम् ।
कथमुत्सृज्य गच्छेयमहं त्वां निर्जने वने ॥ २८
श्रान्तस्य ते क्षुधार्तस्य चिन्तयानस्य तत्सुखम् ।
वने घोरे महाराज नाशयिष्याम्यहं क्लमम् ॥ २९
न च भार्यासमं किंचिन्नरस्यार्तस्य भेषजम् ।
नित्यं हि सर्वदुःखेषु सत्यमेतद्ब्रवीमि ते ॥ ३०
नल उवाच ।
एवमेतद्यथाऽऽत्थ त्वं दमयन्ति सुमध्यमे ।
नास्ति भार्यासमं मित्रं नरस्यार्तस्य भेषजम् ॥ ३१
न चाहं त्यक्तुकामस्त्वां किमलं भीरु शङ्कसे ।
त्यजेयमहमात्मानं न चैव त्वामनिन्दिते ॥ ३२
दमयन्त्युवाच ।
यदि मां त्वं महाराज न विहातुमिहेच्छसि ।
तत्किमर्थं विदर्भाणां पन्थाः समुपदिश्यते ॥ ३३
अवैमि चाहं नृपते न तु मां त्यक्तुमर्हसि ।
चेतसा त्वपकृष्टेन मां त्यजेथा महीपते ॥ ३४
पन्थानं हि ममाभीक्ष्णमाख्यासि च नरोत्तम ।
अतो निमित्तं शोकं मे वर्धयस्यमरोपम ॥ ३५
यदि चायमभिप्रायस्तव राजन्भविष्यति ।
सहितावेव गच्छावो विदर्भान्यदि मन्यसे ॥ ३६

अपकृष्टेन कलिकर्षितेन ॥ ३४ ॥

अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

विदर्भराजस्तत्र त्वां पूजयिष्यति मानद । तेन त्वं पूजितो राजन्सुखं वत्स्यसि नो गृहे ३७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

## एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

नलेन स्वपन्त्या दमयन्त्या वस्त्रार्धच्छेदनपूर्वकं परित्यागेनापयानम् ॥ १ ॥

बृहदश्व उवाच ।
'इत्युक्तः स तदा देव्या नलो वचनमब्रवीत् ।'
यथा राज्यं तव पितुस्तथा मम न संशयः ।
न तु तत्र गमिष्यामि विषमस्थः कथंचन ॥ १
कथं समृद्धो गत्वाऽहं तव हर्षविवर्धनः ।
परिद्यूनो गमिष्यामि तव शोकविवर्धनः ॥ २
इति ब्रुवन्नलो राजा दमयन्तीं पुनःपुनः ।
सान्त्वयामास कल्याणीं वाससोर्धेन संवृताम् ॥ ३
तावेकवस्त्रसंवीतावटमानावितस्ततः ।
क्षुत्पिपासापरिश्रान्तौ सभां कांचिदुपेयतुः ॥ ४
तां सभामुपसंप्राप्य तदा स निषधाधिपः ।
वैदर्भ्या सहितो राजा निषसाद महीतले ॥ ५
स वै विवस्त्रो मलिनो विवर्णः पांसुगुण्ठितः ।
दमयन्त्या सह श्रान्तः सुष्वाप धरणीतले ॥ ६
'ततः स्ववसनस्यान्तं दमयन्ती विशांपते ।
भूमावास्तीर्य सुष्वाप पतिमालिङ्ग्य शोभना ॥' ७
दमयन्त्यपि कल्याणी निद्रयाऽपहृता ततः ।
सहसा दुःखमासाद्य सुकुमारी तपस्विनी ॥ ८
सुप्तायां दमयन्त्यां तु नलो राजा विशांपते ।
शोकोन्मथितचित्तः सन्न स शेते यथा पुरा ॥ ९
स तद्राज्यापहरणं सुहृत्त्यागं च सर्वशः ।
वने च तं परिध्वंसं प्रेक्ष्य चिन्तामुपेयिवान् ॥ १०
किंनु मे स्यादिदं कृत्वा किंनु मे स्यादकुर्वतः ।
किंनु मे मरणं श्रेयः परित्यागो जनस्य वा ॥ ११
मामियं ह्यनुरक्तैवं दुःखमाप्नोति मत्कृते ।
मद्विहीना त्वियं गच्छेत्कदाचित्स्वजनं प्रति ॥ १२
मया निःसंशयं दुःखमियं प्राप्स्यत्यनुव्रता ।
उत्सर्गे संशयः स्यात्तु विन्देतापि सुखं कचित् ॥ १३
बृहदश्व उवाच ।
स विनिश्चित्य बहुधा विचार्य च पुनःपुनः ।
उत्सर्गेऽमन्यत श्रेयो दमयन्त्या नराधिप ॥ १४
न चैषा तेजसा शक्या कैश्चिद्धर्षयितुं पथि ।
यशस्विनी महाभागा मद्भक्तेयं पतिव्रता ॥ १५
एवं तस्य तदा बुद्धिर्दमयन्त्यां न्यवर्तत ।
कलिना दुष्टभावेन दमयन्त्या विसर्जने ॥ १६
सोऽवस्त्रतामात्मनश्च तस्याश्चाप्येकवस्त्रताम् ।
चिन्तयित्वाऽध्यगाद्राजा वस्त्रार्धस्यावकर्तनम् १७
कथं वासो विकर्तेयं न च बुद्ध्येत मे प्रिया ।
विचिन्त्यैवं नलो राजा सभां पर्यचरत्तदा ॥ १८
परिधावन्नथ नल इतश्चेतश्च भारत ।
आससाद सभोद्देशे विकोशं खड्गमुत्तमम् ॥ १९
तेनार्धं वाससश्छित्त्वा निवस्य च परंतपः ।
सुप्तामुत्सृज्य वैदर्भीं प्राद्रवद्गतचेतनाम् ॥ २०
ततो निबद्धहृदयः पुनरागम्य तां सभाम् ।
दमयन्तीं तदा दृष्ट्वा रुरोद निषधाधिपः ॥ २१
यां न वायुर्न चादित्यः पुरा पश्यति मे प्रियाम् ।
सेयमद्य सभामध्ये शेते भूमावनाथवत् ॥ २२
इयं वस्त्रावकर्तेन संवीता चारुहासिनी ।
उन्मत्तेव मया हीना कथं बुद्ध्वा भविष्यति ॥ २३
कथमेका सती भैमी मया विरहिता शुभा ।
चरिष्यति वने घोरे मृगव्यालनिषेविते ॥ २४
आदित्या वसवो रुद्रा अश्विनौ समरुद्गणौ ।
रक्षन्तु त्वां महाभागे धर्मेणासि समावृता ॥ २५

परिध्वंसं कलिना वस्त्रापहरणादिक्लेशम् ॥ १० ॥ जनस्य भार्यायाः ॥ ११ ॥ दमयन्त्यां विषये न्यवर्तत निवृत्तासती विसर्जनेऽभूदिति शेषः ॥ १६ ॥ निवस्य परिधाय ॥ २० ॥ एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

एवमुक्त्वा प्रियां भार्यां रूपेणाप्रतिमां भुवि ।
कलिनाऽपहृतज्ञानो नलः प्रातिष्ठदुद्यतः ॥ २६
गत्वागत्वा नलो राजा पुनरेति सभां मुहुः ।
आकृष्यमाणः कलिना सौहृदेनावकृष्यते ॥ २७
द्विधेव हृदयं तस्य दुःखितस्याभवत्तदा ।
दोलेव मुहुरायाति याति चैव मुहुर्मुहुः ॥ २८
अवकृष्टस्तु कलिना मोहितः प्राद्रवन्नलः ।
सुप्तामुत्सृज्य तां भार्यां विलप्य करुणं बहु ॥ २९
नष्टात्मा कलिनाऽऽविष्टस्तत्तद्विगणयन्मुहुः ।
जगामैकां वने शून्ये भार्यामुत्सृज्य मोहितः ३०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

## षष्टितमोऽध्यायः ॥ ६० ॥

वने चरन्त्या दमयन्त्या अजगरेण ग्रहणम् ॥ १ ॥ वनचरेण व्याधेन तां ग्रसतोऽजगरस्य वधः ॥ २ ॥ दमयन्त्या आत्मकामुकस्य तद्व्याधस्य स्वपातिव्रत्यमहिम्ना हननम् ॥ ३ ॥

बृहदश्व उवाच ।
अपक्रान्ते नले राजन्दमयन्ती गतक्लमा ।
अबुध्यत वरारोहा संत्रस्ता विजने वने ॥ १
अपश्यमाना भर्तारं शोकदुःखसमन्विता ।
प्राक्रोशदुच्चैः संत्रस्ता महाराजेति नैषधम् ॥ २
हा नाथ हा महाराज हा स्वामिन्किं जहासि माम् ।
हा हताऽस्मि विनष्टाऽस्मि भीताऽस्मि विजने वने ३
ननु नाम महाराज धर्मज्ञः सत्यवागसि ।
कथंविधस्त्वं हि तथा सुप्तामुत्सृज्य मां गतः ॥ ४
कथमुत्सृज्य गन्ताऽसि वश्यां भार्यामनुव्रताम् ।
विशेषतो नापकृतः परेणापकृतो ह्यसि ॥ ५
शक्यसे न गिरः सत्याः कर्तुं मयि नरेश्वर ।
यास्त्वया लोकपालानां सन्निधौ कथिताः पुरा ॥ ६
नाकाले विहितो मृत्युर्मर्त्यानां पुरुषर्षभ ।
यत्र कान्ता त्वयोत्सृष्टा मुहूर्तमपि जीवति ॥ ७
पर्याप्तः परिहासोऽयमेतावान्पुरुषर्षभ ।
भृशं भीतास्मि दुर्धर्ष दर्शयात्मानमीश्वर ॥ ८
दृश्यसे दृश्यसे राजन्नेष तिष्ठसि नैषध ।
आवार्य गुल्मैरात्मानं किं मां न प्रतिभाषसे ॥ ९
नृशंसां बत राजेन्द्र यन्मामेवंगतामिह ।
विलपन्तीं समालिङ्ग्य नाश्वासयसि पार्थिव ॥ १०
न शोचाम्यहमात्मानं न चान्यदपि किंचन ।
कथं नु भवितास्येक इति त्वां नृप शोचये ॥ ११
कथं नु राजंस्तृषितः क्षुधितः श्रमकर्शितः ।
सायाह्ने वृक्षमूलेषु मामपश्यन्भविष्यसि ॥ १२
ततः सा तीव्रशोकार्ता प्रदीप्तेव च मन्युना ।
इतश्चेतश्च रुदती पर्यधावत दुःखिता ॥ १३
मुहुरुत्पतते बाला मुहुः पतति विह्वला ।
मुहुरालीयते भीता मुहुः क्रोशति रोदिति ॥ १४
अतीव शोकसंतप्ता मुहुर्निःश्वस्य विह्वला ।
उवाच भैमी निःश्वस्य रोदमाना पतिव्रता ॥ १५
यस्याभिशापाद्दुःखार्तो नैष नन्दति नैषधः ।
तस्य भूतस्य तद्दुःखाद्दुःखमभ्यधिकं भवेत् ॥ १६
अपापचेतसं पापो य एवं कृतवान्नलम् ।
तस्माद्दुःखतरं प्राप्य जीवत्वसुखजीविकाम् ॥ १७
एवं तु विलपन्ती सा राज्ञो भार्या महात्मनः ।
अन्वेषति स भर्तारं वने श्वापदसेविते ॥ १८
उन्मत्तवद्भीमसुता विलपन्ती ततस्ततः ।
हाहा राजन्निति मुहुरितश्चेतश्च धावति ॥ १९
तां शुष्यमाणामत्यर्थं कुररीमिव वाशतीम् ।
करुणं बहु शोचन्तीं विलपन्तीं सुमध्यमाम् २०
सहसाऽभ्यागतां भैमीमभ्याशपरिवर्तिनीम् ।
जग्राहाजगरो ग्राहो महाकायः क्षुधान्वितः ॥ २१
सा ग्रस्यमाना ग्राहेण शोकेन च पराजिता ।

मन्युना शोकेन ॥ १३ ॥ कलिं शपति यस्येति । अभिशापात् वृथाद्वेषात् ॥ १६ ॥ वाशतीं क्रोशन्तीम् ॥ २० ॥

ग्राहः सर्पः ॥ २१ ॥

नात्मानं शोचति तथा यथा शोचति नैषधम् २२
हा नाथ मामिह वने ग्रस्यमानामनागसम् ।
ग्राहेणानेन विजने किमर्थं नानुधावसि ॥ २३
कथं भविष्यसि पुनर्मामनुस्मृत्य नैषध ।
[कथं भवाञ्जगामाद्य मामुत्सृज्य वने प्रभो ।]
पापान्मुक्तः पुनर्लब्ध्वा बुद्धिं चेतो धनानि च २४
श्रान्तस्य ते क्षुधार्तस्य परिग्लानस्य नैषध ।
कः श्रमं राजशार्दूल नाशयिष्यति तेऽनघ ॥ २५
बृहदश्व उवाच ।
तां तु कश्चिन्मृगव्याधो विचरन्गहने वने ।
आक्रन्दमानां संश्रुत्य जवेनाभिससार ह ॥ २६
तां तु दृष्ट्वा तथा ग्रस्तामुरगेणायतेक्षणाम् ।
त्वरमाणो मृगव्याधः संचरन्गहने वने ।
समभिक्रम्य वेगेन सत्वरः स वनेचरः ॥ २७
मुखे तं पाटयामास शस्त्रेण निशितेन च ।
निर्विचेष्टं भुजङ्गं तं विशस्य मृगजीवनः ॥ २८
मोक्षयित्वा स तां व्याधः प्रक्षाल्य सलिलेन ह ।
समाश्वास्य कृताहारामथ पप्रच्छ भारत ॥ २९
कस्य त्वं मृगशावाक्षि कथं चास्यागता वनम् ।
कथं चेदं महत्कृच्छ्रं प्राप्तवत्यसि भामिनि ॥३०
दमयन्ती तथा तेन पृच्छ्यमाना विशांपते ।
सर्वमेतद्यथावृत्तमाचचक्षेऽस्य भारत ॥ ३१
तामर्धवस्त्रसंवीतां पीनश्रोणिपयोधराम् ।
सुकुमारानवद्याङ्गीं पूर्णचन्द्रनिभाननाम् ॥ ३२
अरालपक्ष्मनयनां तथा मधुरभाषिणीम् ।
लक्षयित्वा मृगव्याधः कामस्य वशमीयिवान् ॥
तामथ श्लक्ष्णया वाचा लुब्धको मृदुपूर्वया ।
सान्त्वयामास कामार्तस्तदबुध्यत भामिनी ॥३४
दमयन्त्यपि तं दुष्टमुपलभ्य पतिव्रता ।
तीव्ररोषसमाविष्टा प्रजज्वालेव मन्युना ॥ ३५
स तु पापमतिः क्षुद्रः प्रधर्षयितुमातुरः ।
दुर्धर्षां तर्कयामास दीप्तामग्निशिखामिव ॥ ३६
दमयन्ती तु दुःखार्ता पतिराज्यविनाकृता ।
अतीतवाक्पथे काले शशापैनं रुषा किल ॥ ३७
यथाऽहं नैषधादन्यं मनसाऽपि न चिन्तये ।
तथाऽयं पततां क्षुद्रः परासुर्मृगजीवनः ॥ ३८
उक्तमात्रे तु वचने तया स मृगजीवनः ।
व्यसुः पपात मेदिन्यामग्निदग्ध इव द्रुमः ॥ ३९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

## एकषष्टितमोऽध्यायः ॥ ६१ ॥

नलमन्वेषयन्त्या दमयन्त्या वनमध्ये हस्त्यश्वरथसंकुलजनसार्थदर्शनम् ॥ १ ॥ तथा सार्थनाथेन संभाषणम् ॥ २ ॥

बृहदश्व उवाच ।
सा निहत्य मृगव्याधं प्रतस्थे कमलेक्षणा ।
वनं प्रतिभयं शून्यं झिल्लिकागणनादितम् ॥ १
सिंहद्वीपिरुरुव्याघ्रवराहर्क्षगणैर्युतम् ।
नानापक्षिगणाकीर्णं म्लेच्छतस्करसेवितम् ॥ २
सालवेणुधवाश्वत्थतिन्दुकेङ्गुदिकिंशुकैः ।
अर्जुनारिष्टसंछन्नं स्यन्दनैश्च सशाल्मलैः ॥ ३
जम्ब्वाम्रलोध्रखदिरशाकवेत्रसमाकुलम् ।
पद्मकामलकप्लक्षकदम्बोदुम्बरावृतम् ॥ ४
बदरीबिल्वसंछन्नं न्यग्रोधैश्च समाकुलम् ।
प्रियालतालखर्जूरहरीतकिबिभीतकैः ॥ ५
नानाधातुशतैर्नद्धान्विविधानपि चाचलान् ।
निकुञ्जान्पक्षिसंघुष्टान्दरीश्चाद्भुतदर्शनाः ॥ ६
नदीः सरांसि वापीश्च विविधांश्चरतो द्विजान् ।

बुद्धिलाभादूर्ध्वं मां विना कथं भविष्यसि कथं जीविष्यसि । शापान्मुक्तः इति क. पाठः ॥ २४ ॥ विशस्य विदार्य ॥ २८ ॥ अरालानि शोभमानानि पक्ष्माणि नयनप्रान्तरोमाणि ययोस्तादृशे नयने यस्या इति तथा ॥३३॥ मन्युना क्रोधेन ॥ ३५ ॥ पतिराज्यविनाकृता पत्या राज्येन च रहिता । अतीतवाक्पथे वाचाप्यनिवार्ये सति । काले धूम्रवर्णे व्याधे ॥ ३७ ॥ परासुः गतप्राणः॥३८॥ व्यसुर्विगतप्राणः॥३९॥ षष्टितमोऽध्यायः॥६०॥
प्रतिभयं भीषणम् । झिल्लिका तीक्ष्णशब्दः पतङ्गविशेषः ॥१॥

सा बहून्भीमरूपांश्च पिशाचोरगराक्षसान् ॥ ७
पल्वलानि तटाकानि गिरिकूटानि सर्वशः ।
सरित्सरांसि च तदा ददर्शाद्भुतदर्शनाम् ॥ ८
यूथशो ददृशे चात्र विदर्भाधिपनन्दिनी ।
महिषान्वराहान्गोमायूनृक्षवानरपन्नगान् ॥ ९
तेजसा यशसा लक्ष्म्या स्थित्या च परया युता ।
वैदर्भी विचचारैका नलमन्वेषती तदा ॥ १०
नाबिभ्यत्सा नृपसुता भैमी तत्राथ कस्यचित् ।
दारुणामटवीं प्राप्य भर्तृव्यसनकर्शिता ॥ ११
विदर्भतनया राजन्विललाप सुदुःखिता ।
भर्तृशोकपरीताङ्गी शिलातलमथाश्रिता ॥ १२
दमयन्त्युवाच ।
सिंहोरस्क महाबाहो निषधानां जनाधिप ।
क्व नु राजन्गतोसि त्वं त्यक्त्वा मां विजने वने १३
अश्वमेधादिभिर्वीर क्रतुभिश्चाप्तदक्षिणैः ।
कथमिष्ट्वा नरव्याघ्र मयि मिथ्या प्रवर्तसे ॥ १४
यत्त्वयोक्तं नरश्रेष्ठ मत्समक्षं महाद्युते ।
कर्तुमर्हसि कल्याण तदृतं पार्थिवर्षभ ॥ १५
यच्चोक्तं विहगैर्हंसैः समीपे तव भूमिप ।
मत्सकाशे च तैरुक्तं तदवेक्षितुमर्हसि ॥ १६
चत्वार एकतो वेदाः साङ्गोपाङ्गाः सविस्तराः ।
स्वधीता मनुजव्याघ्र सत्यमेकं किलैकतः ॥ १७
तस्मादर्हसि शत्रुघ्न सत्यं कर्तुं नरेश्वर ।
उक्तवानसि यद्वीर मत्सकाशे पुरा वचः ॥ १८
हा वीर ननुनामाहमिष्टा किल तवानघ ।
अस्यामटव्यां घोरायां किं मां न प्रतिभाषसे १९
भर्त्सयत्येष मां रौद्रो व्यात्तास्यो दारुणाकृतिः ।
अरण्यराट् क्षुधाविष्टः किं मां न त्रातुमर्हसि २०
न मे त्वदन्या काचिद्धि प्रियाऽस्तीत्यब्रवीस्तदा ।
तामृतां कुरु कल्याण पुरोक्तां भारतीं नृप ॥ २१
उन्मत्तां विलपन्तीं मां भार्यामिष्टां नराधिप ।
ईप्सितामीप्सितोसि त्वं किं मां न प्रतिभाषसे ॥
कृशां दीनां विवर्णां च मलिनां वसुधाधिप ।
वस्त्रार्धप्रावृतामेकां विलपन्तीमनाथवत् ॥ २३
यूथभ्रष्टामिवैकां मां हरिणीं पृथुलोचन ।
न मानयसि मामार्य रुदन्तीमरिकर्शन ॥ २४
महाराज महारण्ये मामिहैकाकिनीं सतीम् ।
आभाषमाणां स्वां पत्नीं किं मां न प्रतिभाषसे २५
कुलशीलोपसंपन्नां चारुसर्वाङ्गशोभनाम् ।
'अनुव्रतां महाराज किं मां न प्रतिभाषसे ॥' २६
नाद्य त्वां प्रतिपश्यामि गिरावस्मिन्नरोत्तम ।
वने चास्मिन्महाघोरे सिंहव्याघ्रनिषेविते ॥ २७
शयानमुपविष्टं वा स्थितं वा निषधाधिप ।
प्रस्थितं वा नरश्रेष्ठ मम शोकनिबर्हण ॥ २८
कं नु पृच्छामि दुःखार्ता त्वदर्थे शोककर्शिता ।
कच्चिद्दृष्टस्त्वयाऽरण्ये संगत्येति नलो नृपः ॥ २९
कोनु मे कथयेदद्य वनेऽस्मिन्विष्ठितं नृपम् ।
अभिरूपं महात्मानं परव्यूहविनाशनम् ॥ ३०
यमन्वेषसि राजानं नलं पद्मनिभेक्षणम् ।
अयं स इति कस्याद्य श्रोष्यामि मधुरां गिरम् ॥ ३१
अरण्यराडयं श्रीमांश्चतुर्दंष्ट्रो महाहनुः ।
शार्दूलोऽभिमुखोऽभ्येति पृच्छाम्येनमशङ्किता ३२
भवान्मृगाणामधिपस्त्वमस्मिन्कानने प्रभुः ।
विदर्भराजतनयां दमयन्तीति विद्धि माम् ॥ ३३
निषधाधिपतेर्भार्यां नलस्यामित्रघातिनः ।
पतिमन्वेषतीमेकां कृपणां शोककर्शिताम् ॥ ३४
आश्वासय मृगेन्द्रेह यदि दृष्टस्त्वया नलः ।
'सिंहस्कन्धो महाबाहुः पद्मपत्रनिभेक्षणः ॥' ३५
अथवाऽरण्यनृपते नलं यदि न शंससि ।
मां खादय मृगश्रेष्ठ दुःखादस्माद्विमोचय ॥ ३६
श्रुत्वाऽरण्ये विलपितं ममैष मृगराट् स्वयम् ।
यात्येष मृष्टसलिलामापगां सागरोपमाम् ॥ ३७
इमं शिलोच्चयं पृच्छे शृङ्गैर्बहुभिरुच्छ्रितैः ।
विराजितं दिवस्पृग्भिर्नैकवर्णैर्मनोरमैः ॥ ३८
नानाधातुसमाकीर्णं विविधोपलभूषितम् ।
अस्यारण्यस्य महतः केतुभूतमिवोच्छ्रितम् ॥ ३९
सिंहशार्दूलमातङ्गवराहर्क्षमृगायुतम् ।
पतत्रिभिर्बहुविधैः समन्तादनुनादितम् ॥ ४०

किंशुकाशोकबकुलपुन्नागैरुपशोभितम् ।
[कर्णिकारधवप्लक्षैः सुपुष्पैरुपशोभितम् ।।] ४१
सरिद्भिः सविहङ्गाभिः शिखरैश्च समाकुलम् ।
'पृथिव्या रुचिराकारं चूडामणिमिव स्थितम् ।'
गिरिराजमिमं तावत्पृच्छामि नृपतिं प्रति ।। ४२
भगवन्नचलश्रेष्ठ दिव्यदर्शन विश्रुत ।
शरण्य बहुकल्याण नमस्तेऽस्तु महीधर ।। ४३
प्रणमे त्वाऽभिगम्याहं राजपुत्रीं निबोध माम् ।
राजस्नुषां राजभार्यां दमयन्तीति विश्रुताम् ।।४४
राजा विदर्भाधिपतिः पिता मम महारथः ।
भीमो नाम क्षितिपतिश्चातुर्वर्ण्यस्य रक्षिता ।। ४५
राजसूयाश्वमेधानां क्रतूनां दक्षिणावताम् ।
आहर्ता पार्थिवश्रेष्ठः पृथुचार्वञ्चितेक्षणः ।। ४६
ब्रह्मण्यः साधुवृत्तश्च सत्यवागनसूयकः ।
शीलवान्वीर्यसंपन्नः पृथुश्रीर्धर्मविच्छुचिः ।। ४७
सम्यग्गोप्ता विदर्भाणां निर्जितारिगणः प्रभुः ।
तस्य मां विद्धि तनयां भगवंस्त्वामुपस्थिताम् ।।४८
निषधेषु महाराजः श्वशुरो मे नरोत्तमः ।
गृहीतनामा विख्यातो वीरसेन इति स्म ह ।।४९
तस्य राज्ञः सुतो वीरः श्रीमान्सत्यपराक्रमः ।
क्रमप्राप्तं पितुः स्वं यो राज्यं समनुशास्ति ह ।।५०
नलो नामारिहा श्यामः पुण्यश्लोक इति श्रुतः ।
ब्रह्मण्यो वेदविद्वाग्मी पुण्यकृत्सोमपोऽग्निचित् ।।
यष्टा दाता च योद्धा च सम्यक्चैव प्रशासिता ।
तस्य मामचलश्रेष्ठ विद्धि भार्यामिहागताम् ।। ५२
त्यक्तश्रियं भर्तृहीनामनाथां व्यसनान्विताम् ।
अन्वेषमाणां भर्तारं नलं नरवरोत्तमम् ।। ५३
खमुल्लिखद्भिरेतैर्हि त्वया शृङ्गशतैर्नृपः ।
कच्चिद्दृष्टोऽचलश्रेष्ठ वनेऽस्मिन्दारुणे नलः ।। ५४
गजेन्द्रविक्रमो धीमान्दीर्घबाहुरमर्षणः ।
विक्रान्तः सत्त्ववान्वीरो भर्ता मम महायशाः ।
निषधानामधिपतिः कच्चिद्दृष्टस्त्वया नलः ।।५५
किं मां विलपतीमेकां पर्वतश्रेष्ठ विह्वलाम् ।
गिरा नाश्वासयस्यद्य स्वां सुतामिव दुःखिताम् ५६
वीर विक्रान्त धर्मज्ञ सत्यसंध महीपते ।
यद्यस्यस्मिन्वने राजन्दर्शयात्मानमात्मना ।। ५७
कदा सुस्निग्धगम्भीरां जीमूतस्वनसन्निभाम् ।
श्रोष्यामि नैषधस्याहं वाचंताममृतोपमाम् ।। ५८
वैदर्भ्येहीति विस्पष्टां शुभां राज्ञो महात्मनः ।
आत्माभिधायिनीमृद्धां मम शोकविनाशिनीम् ५९
इति सा तं गिरिश्रेष्ठमुक्त्वा पार्थिवनन्दिनी ।
दमयन्ती ततो भूयो जगाम दिशमुत्तराम् ।। ६०
सा गत्वा त्रीनहोरात्रान्ददर्श परमाङ्गना ।
तापसारण्यमतुलं दिव्यकाननशोभितम् ।। ६१
वसिष्ठभृग्वत्रिसमैस्तापसैरुपशोभितम् ।
नियतैः संयताहारैर्दमशौचसमन्वितैः ।। ६२
अब्भक्षैर्वायुभक्षैश्च पत्राहारैस्तथैव च ।
जितेन्द्रियैर्महाभागैः स्वर्गमार्गदिदृक्षुभिः ।। ६३
वल्कलाजिनसंवीतैर्मुनिभिः संयतेन्द्रियैः ।
तापसाध्युषितं रम्यं ददर्शाश्रममण्डलम् ।। ६४
नानामृगगणैर्जुष्टं शाखामृगगणायुतम् ।
तापसैः समुपेतं च सा दृष्ट्वैव समाश्वसत् ।। ६५
सुभ्रूः सुकेशी सुश्रोणी सुकुचा सुद्विजानना ।
वर्चस्विनी सुप्रतिष्ठा स्वसितायतलोचना ।। ६६
सा विवेशाश्रमपदं वीरसेनसुतप्रिया ।
योषिद्रत्नं महाभागा दमयन्ती तपस्विनी ।। ६७
साऽभिवाद्य तपोवृद्धान्विनयावनता स्थिता ।
स्वागतं त इति प्रोक्ता तैः सर्वैस्तापसोत्तमैः ।।६८
पूजां चास्या यथान्यायं कृत्वा तत्र तपोधनाः ।
आस्यतामित्यथोचुस्ते ब्रूहि किं करवामहे ।। ६९
तानुवाच वरारोहा कच्चिद्भगवतामिह ।
तपःस्वग्निषु धर्मेषु मृगपक्षिषु चानघाः ।। ७०
कुशलं वो महाभागाः स्वधर्माचरणेषु च ।
तैरुक्ता कुशलं भद्रे सर्वत्रेति यशस्विनी ।। ७१
ब्रूहि सर्वानवद्याङ्गि का त्वं किंच चिकीर्षसि ।

ब्रह्मण्यः ब्रह्मणि ब्राह्मणजातौ वेदे वैदिककर्मणि परमात्मनि वा साधुः ।। ४७ ।। सुद्विजानना शोभनदन्तयुक्तमुखी । सुप्रतिष्ठा सुजघना ।। ६६ ।। वीरसेनसुतस्य नलस्य प्रिया ।। ६७ ।।

दृष्ट्वैव ते परं रूपं द्युतिं च परमामिह ॥ ७२
विस्मयो नः समुत्पन्नः समाश्वसिहि मा शुचः ।
अस्यारण्यस्य देवी त्वमुताहोऽस्य महीभृतः ।
अस्याश्च नद्याः कल्याणि वद सत्यमनिन्दिते ७३
साऽब्रवीत्तानृषीन्नाहमरण्यस्यास्य देवता ।
न चाप्यस्य गिरेर्विप्रा नैव नद्याश्च देवता ॥ ७४
मानुषीं मां विजानीत यूयं सर्वे तपोधनाः ।
विस्तरेणाभिधास्यामि तन्मे शृणुत सर्वशः ॥ ७५
विदर्भेषु महीपालो भीमो नाम महीपतिः ।
तस्य मां तनयां सर्वे जानीत द्विजसत्तमाः ॥७६
निषधाधिपतिर्धीमान्नलो नाम महायशाः ।
वीरः संग्रामजिद्विद्वान्मम भर्ता विशांपतिः ॥७७
देवताभ्यर्चनपरो द्विजातिजनवत्सलः ।
गोप्ता निषधवंशस्य महातेजा महाबलः ॥ ७८
सत्यवान्धर्मवित्प्राज्ञः सत्यसंधोऽरिमर्दनः ।
ब्रह्मण्यो दैवतपरः श्रीमान्परपुरंजयः ॥ ७९
नलो नाम नृपश्रेष्ठो देवराजसमद्युतिः ।
मम भर्ता विशालाक्षः पूर्णेन्दुवदनोऽरिहा ॥ ८०
आहर्ता क्रतुमुख्यानां वेदवेदाङ्गपारगः ।
सपत्नानां मृधे हन्ता रविसोमसमप्रभः ॥ ८१
स कैश्चिन्निकृतिप्रज्ञैरनार्यैरकृतात्मभिः ।
आहूय पृथिवीपालः सत्यधर्मपरायणः ।
देवने कुशलैर्जिह्मैर्जितो राज्यं वसूनि च ॥ ८२
तस्य मामवगच्छध्वं भार्यां राजर्षभस्य वै ।
दमयन्तीति विख्यातां भर्तुर्दर्शनलालसाम् ॥८३
सा वनानि गिरींश्चैव सरांसि सरितस्तथा ।
पल्वलानि च सर्वाणि तथाऽरण्यानि सर्वशः ८४
अन्वेषमाणा भर्तारं नलं रणविशारदम् ।
महात्मानं कृतास्त्रं च विचरामीह दुःखिता ॥८५
कच्चिद्भगवतां रम्यं तपोवनमिदं नृपः ।
भवेत्प्राप्तो नलो नाम निषधानां जनाधिपः ८६
यत्कृतेऽहमिदं दुःखं प्रपन्ना भृशदारुणम् ।
वनं प्रतिभयं घोरं शार्दूलमृगसेवितम् ॥ ८७
यदि कैश्चिदहोरात्रैर्न द्रक्ष्यामि नलं नृपम् ।
आत्मानं श्रेयसा योक्ष्ये देहस्यास्य विमोक्षणात् ॥
कोनु मे जीवितेनार्थस्तमृते पुरुषर्षभम् ।
कथं भविष्याम्यद्याहं भर्तृशोकाभिपीडिता ॥८९
तथा विलपतीमेकामरण्ये भीमनन्दिनीम् ।
दमयन्तीमथोचुस्ते तापसाः सत्यवादिनः ॥ ९०
उदर्कस्तव कल्याणि कल्याणो भविता शुभे ।
वयं पश्याम तपसा क्षिप्रं द्रक्ष्यसि नैषधम् ॥९१
निषधानामधिपतिं नलं रिपुनिपातिनम् ।
भैमि धर्मभृतां श्रेष्ठं द्रक्ष्यसे विगतज्वरम् ॥ ९२
विमुक्तं सर्वपापेभ्यः सर्वरत्नसमन्वितम् ।
तदेव नगरं श्रेष्ठं प्रशासतमरिन्दमम् ॥ ९३
द्विषतां भयकर्तारं सुहृदां शोकनाशनम् ।
पतिमेष्यसि कल्याणि कल्याणाभिजनं नृपम् ९४
एवमुक्त्वा नलस्येष्टां महिषीं पार्थिवात्मजाम् ।
अन्तर्हितास्तापसास्ते साग्निहोत्राश्रमास्तथा ॥९५
सा दृष्ट्वा महदाश्चर्यं विस्मिता ह्यभवत्तदा ।
दमयन्त्यनवद्याङ्गी वीरसेननृपस्नुषा ॥ ९६
'चिन्तयामास वैदर्भी किमेतद्दृष्टवत्यहम् ॥' ९७
किंनु स्वप्नो मया दृष्टः कोऽयं विधिरिहाभवत् ।
क्वनु ते तापसाः सर्वे क्व तदाश्रममण्डलम् ॥९८
क्व सा पुण्यजला रम्या नदी द्विजनिषेविता ।
क्वनु ते ह नगा हृद्याः फलपुष्पोपशोभिताः ॥९९
'इत्येवं नरशार्दूल विस्मिता कमलेक्षणा ।'
ध्यात्वा चिरं भीमसुता दमयन्ती शुचिस्मिता ।
भर्तृशोकपरा दीना विवर्णवदनाऽभवत् ॥ १००
सा गत्वाऽथापरां भूमिं बाष्पसंदिग्धया गिरा ।
विललापाश्रुपूर्णाक्षी दृष्ट्वाऽशोकतरुं ततः ॥१०१
उपगम्य तरुश्रेष्ठमशोकं पुष्पितं वने ।
पल्लवापीडितं हृद्यं विहङ्गैरनुनादितम् ॥ १०२
अहो बतायमगमः श्रीमानस्मिन्वनान्तरे ।

सधूर्तैर्निकृतिप्रज्ञैरकल्याणैरनार्यैरिति क. पाठः ॥ ८२ ॥ श्रेयसा मोक्षेण योक्ष्ये योजयिष्ये । योगबलेन देहं त्यक्त्वा मोक्षं प्राप्स्ये इत्यर्थः ॥ ८८ ॥ उदर्कः उत्तरकालः ॥ ९१ ॥ पल्लवैः आपीडितं भूषितम् ॥ १०२ ॥ अगमः वृक्षः । आपीडैः

आपीडैर्बहुभिर्भाति श्रीमान्पर्वतराडिव ॥ १०३
विशोकां कुरु मां क्षिप्रमशोक प्रियदर्शन ।
वीतशोकभयाबाधं कच्चित्त्वं दृष्टवान्नृपम् ॥ १०४
नलं नामारिदमनं नमयन्त्याः प्रियं पतिम् ।
निषधानामधिपतिं दृष्टवानसि मे प्रियम् ॥१०५
एकवस्त्रार्धसंवीतं सुकुमारतनुत्वचम् ।
व्यसनेनार्दितं वीरमरण्यमिदमागतम् ॥ १०६
यथा विशोका गच्छेयमशोकनग तत्कुरु ।
सत्यनामा भवाशोक मम शोकविनाशनात् ॥१०७
एवं साऽशोकवृक्षं तमार्ता वै परिगम्य ह ।
जगाम दारुणतरं देशं भैमी वराङ्गना ॥ १०८
सा ददर्श नगान्नैकान्नैकाश्च सरितस्तथा ।
नैकांश्च पर्वतान्रम्यान्नैकांश्च मृगपक्षिणः ॥ १०९
कन्दरांश्च नितम्बांश्च नदीश्चाद्भुतदर्शनाः ।
ददर्श तान्भीमसुता पतिमन्वेषती तदा ॥ ११०
गत्वा प्रकृष्टमध्वानं दमयन्ती शुचिस्मिता ।
ददर्शाथ महासार्थं हस्त्यश्वरथसंकुलम् ॥ १११
उत्तरन्तं नदीं रम्यां प्रसन्नसलिलां शुभाम् ।
सुशीततोयां विस्तीर्णां ह्रदिनीं वेतसैर्वृताम् ११२
प्रोद्घुष्टां क्रौञ्चकुररैश्चक्रवाकोपकूजिताम् ।
कूर्मग्राहझषाकीर्णां विपुलद्वीपशोभिताम् ॥११३
सा दृष्ट्वैव महासार्थं नलपत्नी यशस्विनी ।
उपसर्प्य वरारोहा जनमध्यं विवेश ह ॥ ११४
उन्मत्तरूपा शोकार्ता तथा वस्त्रार्धसंवृता ।
कृशा विवर्णा मलिना पांसुध्वस्तशिरोरुहा ॥११५
तां दृष्ट्वा तत्र मनुजाः केचिद्भीताः प्रदुद्रुवुः ।
केचिच्चिन्तापरास्तस्थुः केचित्तत्र विचुक्रुशुः ११६
प्रहसन्ति स्म तां केचिदभ्यसूयन्ति चापरे ।
कुर्वन्त्यस्यां दयां केचित्पप्रच्छुश्चापि भारत ॥११७
काऽसि कस्यासि कल्याणि किं वा मृगयसे वने ।
त्वां दृष्ट्वा व्यथिताः स्मेह कच्चित्त्वमसि मानुषी ॥
वद सत्यं वनस्यास्य पर्वतस्याथवा दिशः ।
देवता त्वं हि कल्याणि त्वां वयं शरणं गताः ॥११९
यक्षी वा राक्षसी वा त्वमुताहोसि सुराङ्गना ।
सर्वथा कुरु नः स्वस्ति रक्ष चास्माननिन्दिते ॥१२०
यथाऽयं सर्वथा सार्थः क्षेमी शीघ्रमितो व्रजेत् ।
तथा विधत्स्व कल्याणि यथा श्रेयो हि नो भवेत् ॥
तथोक्ता तेन सार्थेन दमयन्ती नृपात्मजा ।
प्रत्युवाच ततः साध्वी भर्तृव्यसनपीडिता ॥१२२
सार्थवाहं च सार्थं च जना ये चात्र केचन ।
युवस्थविरबालाश्च सार्थस्य च पुरोगमाः ॥ १२३
मानुषीं मां विजानीत मनुजाधिपतेः सुताम् ।
नृपस्नुषां राजभार्यां भर्तृदर्शनलालसाम् ॥ १२४
विदर्भराण्मम पिता भर्ता राजा च नैषधः ।
नलो नाम महाभागस्तं मार्गाम्यपराजितम् ॥१२५
यदि जानीत नृपतिं क्षिप्रं शंसत मे प्रियम् ।
नलं पुरुषशार्दूलममित्रगणसूदनम् ॥ १२६
तामुवाचानवद्याङ्गीं सार्थस्य महतः प्रभुः ।
सार्थवाहः शुचिर्नाम शृणु कल्याणि मद्वचः ॥१२७
अहं सार्थस्य नेता वै सार्थवाहः शुचिस्मिते ।
मनुष्यं नलनामानं न पश्यामि यशस्विनि ॥१२८
कुञ्जरद्वीपिमहिषशार्दूलर्क्षमृगानपि ।
पश्याम्यस्मिन्वने कृत्स्ने ह्यमनुष्यनिषेविते ॥१२९
ऋते त्वां मानुषीं मर्त्यं न पश्यामि महावने ।
तथा नो यक्षराडद्य मणिभद्रः प्रसीदतु ॥ १३०
साऽब्रवीद्वणिजः सर्वान्सार्थवाहं च तं ततः ।
क्व नु यास्यति सार्थोऽयमेतदाख्यातुमर्हसि ॥१३१
सार्थवाह उवाच ।
सार्थोऽयं चेदिराजस्य सुबाहोः सत्यदर्शिनः ।
क्षिप्रं जनपदं गन्ता लाभाय मनुजात्मजे ॥ १३२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

---

पुष्पफलादिरूपैरलंकारैः ॥ १०३ ॥ महासार्थं महान्तं जनसमूहम् ॥ १११ ॥ वरारोहा विस्तीर्णजघना ॥ ११४ ॥ पांसुयुक्ताः ध्वस्ताः मुक्तबन्धाश्च शिरोरुहाः केशा यस्याः ॥ ११५ ॥ मार्गामि अन्वेषयामि ॥ १२५ ॥ एकषष्टितमोऽध्यायः ॥६१॥

## द्विषष्टितमोऽध्यायः ॥ ६२ ॥

दमयन्त्या सार्थेन सह चेदिराजपुरंप्रति प्रस्थानम् ॥ १ ॥ वनमध्ये सरस्तीरशायिनि सार्थे निशीथे पानीयपानायागतगजयूथनिहतभूयिष्ठे दिष्ट्या दमयन्त्या अपि शेषीकारः ॥ २ ॥ हतावशिष्टेन जनेन सह चेदिराजपुरं गताया दमयन्त्या राजमात्रा स्वान्तःपुराधिवासनम् ॥ ३ ॥

बृहदश्व उवाच ।

सा तच्छ्रुत्वाऽनवद्याङ्गी सार्थवाहवचस्तदा ।
जगाम सह तेनैव सार्थेन पतिलालसा ॥ १
अथ काले बहुतिथे वने महति दारुणे ।
तटाकं सर्वतोभद्रं पद्मसौगन्धिकायुतम् ॥ २
ददृशुर्वणिजो रम्यं प्रभूतयवसेन्धनम् ।
बहुमूलफलोपेतं नानापक्षिनिषेवितम् ॥ ३
तं दृष्ट्वा मृष्टसलिलं मनोहारि सुशीतलम् ।
सुपरिश्रान्तवाहास्ते निवेशाय मनो दधुः ॥ ४
संमते सार्थवाहस्य विविशुर्वनमुत्तमम् ।
उवास सार्थः सुमहान्निशामासाद्य पद्मिनीम् ॥ ५
अथार्धरात्रसमये निःशब्दे तिमिरे तदा ।
सुप्ते सार्थे परिश्रान्ते हस्तियूथमुपागमत् ।
पानीयार्थं गिरितटान्मदप्रस्रवणाविलम् ॥ ६
[अथापश्यत सार्थं तं सार्थजान्सुबहून्गजान् ॥ ७
ते तान्ग्राम्यगजान्दृष्ट्वा सर्वे वनगजास्तदा ।
समाद्रवन्त वेगेन जिघांसन्तो मदोत्कटाः ॥ ८
तेषामापततां वेगः करिणां दुःसहोऽभवत् ।
नगाग्रादिव शीर्णानां शृङ्गाणां पततां क्षितौ ।
स्पन्दतामपि नागानां मार्गा नष्टा वनोद्भवाः ॥]९
मार्गं संरुद्ध्य संसुप्तं पद्मिन्याः सार्थमुत्तमम् ।
ते तं ममर्दुः सहसा वेष्टमानं महीतले ॥ १०
महारवं प्रमुञ्चतो वद्ध्यन्ते शरणार्थिनः ।
वनगुल्मांश्च धावन्तो निद्रया महतो भयात् ॥ ११
केचिद्दन्तैः करैः केचित्केचित्पद्भ्यां हता गजैः ॥ १२
निहतोष्ट्राश्वबहुलाः पदातिजनसंकुलाः ।
भयादाधावमानाश्च परस्परहतास्तदा ॥ १३
घोरान्नादान्विमुञ्चन्तो निपेतुर्धरणीतले ।
वृक्षेष्वासज्यसंभग्नाः पतिता विषमेषु च ॥ १४
एवंप्रकारैर्बहुभिर्दैवेनाक्रम्य हस्तिभिः ।
राजन्विनिहतं सर्वं समृद्धं सार्थमण्डलम् ॥ १५
आरावः सुमहांश्चासीत्त्रैलोक्यभयकारकः ।
एषोऽग्निरुत्थितः कष्टस्त्रायध्वं धावताऽधुना ॥ १६
रत्नराशिर्विशीर्णोऽयं गृह्णीध्वं किं प्रधावत ।
सामान्यमेतद्द्रविणं न मिथ्या वचनं मम ॥ १७
पुनरेवाभिधास्यामि चिन्तयध्वं सुकातराः ।
एवमेवाभिभाषन्तो विद्रवन्ति भयात्तदा ॥ १८
तस्मिंस्तथा वर्तमाने दारुणे जनसंक्षये ।
दमयन्ती च बुबुधे भयसंत्रस्तमानसा ।
अपश्यद्वैशसं तत्र सर्वलोकभयंकरम् ॥ १९
अदृष्टपूर्वं तद्दृष्ट्वा बाला पद्मनिभेक्षणा ।
संसक्तवदनाश्वासा उत्तस्थौ भयविह्वला ॥ २०
ये तु तत्र विनिर्मुक्ताः सार्थात्केचिदविक्षताः ।
तेऽब्रुवन्सहिताः सर्वे कस्येदं कर्मणः फलम् ॥ २१
नूनं न पूजितोऽस्माभिर्मणिभद्रो महायशाः ।
तथा यक्षाधिपः श्रीमान्न वै वैश्रवणः प्रभुः ॥ २२
न पूजा विघ्नकर्तॄणामथवा प्रथमं कृता ॥ २३
शकुनानां फलं वाऽथ विपरीतमिदं ध्रुवम् ।
ग्रहा न विपरीतास्तु किमन्यदिदमागतम् ॥ २४
अपरे त्वब्रुवन्दीना ज्ञातिद्रव्यविनाकृता ।
याऽसावद्य महासार्थे नारी ह्युन्मत्तदर्शना ॥ २५
प्रविष्टा विकृताकारा कृत्वा रूपममानुषम् ।
तयैवं विहिता पूर्वं माया परमदारुणा ॥ २६
राक्षसी वा ध्रुवं यक्षी पिशाची वा भयंकरी ।
तस्याः सर्वमिदं पापं नात्र कार्या विचारणा ॥ २७
यदि पश्याम तां पापां सार्थघ्नीं नैकदुःखदाम् ।
लोष्टभिः पांसुभिश्चैव तृणैः काष्ठैश्च मुष्टिभिः ।

यवसं घासः ॥ ३ ॥ श्रान्तवाहाः श्रान्तवाहनाः । निवेशाय वासाय ॥ ४ ॥ पद्मिन्याः सरस्याः ॥ १० ॥

अवश्यमेव हन्यामः सार्थस्य किल कृत्यकाम् २८
दमयन्ती तु तच्छ्रुत्वा वाक्यं तेषां सुदारुणम् ।
ह्रीता भीता च संविग्ना प्राद्रवद्यत्र काननम् २९
आशङ्कमाना तत्पापमात्मानं पर्यदेवयत् ॥ ३०
अहो ममोपरि विधेः संरम्भो दारुणो महान् ।
नानुबध्नाति कुशलं कस्येदं कर्मणः फलम् ॥ ३१
न स्मराम्यशुभं किंचित्कृतं कस्यचिदण्वपि ।
कर्मणा मनसा वाचा कस्येदं कर्मणः फलम् ॥ ३२
नूनं जन्मान्तरकृतं पापं माऽऽपतितं महत् ।
अपश्चिमामिमां कष्टामापदं प्राप्तवत्यहम् ॥ ३३
भर्तृराज्यापहरणं स्वजनाच्च पराजयः ।
भर्त्रा सह वियोगश्च तनयाभ्यां च विच्युतिः ।
निर्नाथता वने वासो बहुव्यालनिषेविते ॥ ३४
अथापरेद्युः संप्राप्ते हतशिष्टा जनास्तदा ।
वनगुल्माद्विनिष्क्रम्य शोचन्ते वैशसं कृतम् ।
भ्रातरं पितरं पुत्रं सखायं च नराधिप ॥ ३५
'हन्यमाने तदा सार्थे दमयन्ती शुचिस्मिता ।
ब्राह्मणैः सहिता तत्र वने तु न विनाशिता ॥' ३६
अशोचत्तत्र वैदर्भी किंनु मे दुष्कृतं कृतम् ।
योपि मे निर्जनेऽरण्ये संप्राप्तोऽयं जनार्णवः ॥ ३७
स हतो हस्तियूथेन मन्दभाग्यान्ममैव तत् ।
प्राप्तव्यं सुचिरं दुःखं नूनमद्यापि वै मया ॥ ३८
नाप्राप्तकालो म्रियते श्रुतं वृद्धानुशासनम् ।
या नाहमद्य मृदिता हस्तियूथेन दुःखिता ॥ ३९
न ह्यदैवकृतं किंचिन्नराणामिह विद्यते ।
न च मे बालभावेऽपि किंचित्पापकृतं कृतम् ४०
कर्मणा मनसा वाचा यदिदं दुःखमागतम् ।
मन्ये स्वयंवरकृते लोकपालाः समागताः ॥ ४१
प्रत्याख्याता मया तत्र नलस्यार्थाय देवताः ।
नूनं तेषां प्रभावेन वियोगं प्राप्तवत्यहम् ॥ ४२
एवमादीनि दुःखार्ता सा विलप्य वराङ्गना ।
प्रलापानि तदा तानि दमयन्ती पतिव्रता ॥ ४३
हतशेषैः सह तदा ब्राह्मणैर्वेदपारगैः ।
अगच्छद्राजशार्दूल दुःखशोकपरायणा ॥ ४४
गच्छन्ती सा चिराद्बाला पुरमासादयन्महत् ।
सायाह्ने चेदिराजस्य सुबाहोः सत्यवादिनः ॥ ४५
'सा तु तच्चारुसर्वाङ्गी सुबाहोस्तुङ्गगोपुरम् ।'
वस्त्रार्धेन च संवीता प्रविवेश पुरोत्तमम् ॥ ४६
तां विह्वलां कृशां दीनां मुक्तकेशीममार्जिताम् ।
उन्मत्तामिव गच्छन्तीं ददृशुः पुरवासिनः ॥ ४७
प्रविशन्तीं तु तां दृष्ट्वा चेदिराजपुरीं तदा ।
अनुजग्मुस्तत्र बाला ग्रामिपुत्राः कुतूहलात् ॥ ४८
सा तैः परिवृताऽगच्छत्समीपं राजवेश्मनः ।
तां प्रासादगताऽपश्यद्राजमाता जनैर्वृताम् ॥ ४९
धात्रीमुवाच गच्छैनामानयेह समान्तिकम् ।
जनेन क्लिश्यते बाला दुःखिता शरणार्थिनी ५०
तादृग्रूपं च पश्यामि विद्योतयति मे गृहम् ।
उन्मत्तवेषा कल्याणी श्रीरिवायतलोचना ॥ ५१
सा जनं वारयित्वा तं प्रासादतलमुत्तमम् ।
आरोप्य विस्मिता राजन्दमयन्तीमपृच्छत ॥ ५२
एवमप्यसुखाविष्टा बिभर्षि परमं वपुः ।
भासि विद्युदिवाभ्रेषु शंस मे काऽसि कस्य वा ॥
न हि ते मानुषं रूपं भूषणैरपि वर्जितम् ।
असहाया नरेभ्यश्च नोद्विजस्यमरप्रभे ॥ ५४
तच्छ्रुत्वा वचनं तस्या भैमी वचनमब्रवीत् ।
मानुषीं मां विजानीहि भर्तारं समनुव्रताम् ॥ ५५
सैरन्ध्रीं जातिसंपन्नां भुजिष्यां कामवासिनीम् ।
फलमूलाशनामेकां यत्रसायंप्रतिश्रयाम् ॥ ५६
असङ्ख्येयगुणो भर्ता मां च नित्यमनुव्रतः ।
भक्ताऽहमपि तं वीरं छायेवानुगता पथि ॥ ५७
तस्य दैवात्प्रसङ्गोऽभूदतिमात्रं सुदेवने ।
द्यूते स निर्जितश्चैव वनमेक उपेयिवान् ॥ ५८
तमेकवसनच्छन्नमुन्मत्तमिव विह्वलम् ।
आश्वासयन्ती भर्तारमहमप्यगमं वनम् ॥ ५९

कृत्यैव कृत्यका । कुत्सिता कृत्या कृत्यकेति वा ताम् ॥ २८ ॥ अपश्चिमां अपरावर्तिनीम् ॥ ३३ ॥ पापकृतं पापं कर्म ॥ ४० ॥ अमार्जितां धूसरवेणीम् ॥ ४७ ॥ भुजिष्यां दासीं । कामवासिनीं यत्र काम इच्छा तत्रैव वसन्तीम् । यत्र सायंकालस्तत्रैव प्रतिश्रयो गृहं यस्यास्ताम् ॥ ५६ ॥ भर्तारमपि तं वीरं सीतेवानुगता सदेति क. पाठः । अहं चानुगता वीरं छायेवानपगा सदेति ध. पाठः ॥ ५७ ॥

स कदाचिद्वने वीरः कस्मिंश्चित्कारणान्तरे ।
क्षुत्परीतस्तु विमना वासश्चैकं व्यसर्जयत् ॥ ६०
तमेकवसना नग्नमुन्मत्तवदचेतसम् ।
अनुव्रजन्ती बहुला न स्वपामि निशाः सदा॥६१
ततो बहुतिथे काले सुप्तामुत्सृज्य मां क्वचित् ।
वाससोऽर्धं परिच्छिद्य त्यक्तवान्मामनागसम्॥६२
तं मार्गमाणा भर्तारं दह्यमाना दिवानिशम् ।
साऽहं कमलगर्भाभमपश्यन्ती हृदिप्रियम् ।
न विन्दाम्यमरप्रख्यं प्रियं प्राणेश्वरं प्रभुम् ॥ ६३
'इत्युक्त्वा साऽनवद्याङ्गी राजमातरमप्युत ।
स्थिताऽश्रुपरिपूर्णाक्षी वेपमाना सुदुःखिता ॥'६४
तामश्रुपरिपूर्णाक्षीं विलपन्तीं तथा बहु ।
राजमाताऽब्रवीदार्ता भैमीमार्तस्वरां स्वयम्॥ ६५
वस त्वमिह कल्याणि प्रीतिर्मे परमा त्वयि ।
मृगयिष्यन्ति ते भद्रे भर्तारं पुरुषा मम ॥ ६६
अपि वा स्वयमागच्छेत्परिधावन्नितस्ततः ।
इहैव वसती भद्रे भर्तारमुपलप्स्यसे ॥ ६७
राजमातुर्वचः श्रुत्वा दमयन्ती वचोऽब्रवीत् ।
समयेनोत्सहे वस्तुं त्वयि वीरप्रजायिनि ॥ ६८
उच्छिष्टं नैव भुञ्जीयां न कुर्यां पादधावनम् ।
न चाहं पुरुषानन्यान्प्रभाषेयं कथंचन ॥ ६९
प्रार्थयेद्यदि मां कश्चिद्दण्ड्यस्ते स पुमान्भवेत् ।
वध्यश्च ते सकृन्मन्द इति मे व्रतमाहितम् ॥७०
भर्तुरन्वेषणार्थं तु पश्येयं ब्राह्मणानहम् ।
यद्येवमिह वत्स्यामि त्वत्सकाशे न संशयः ।
अतोऽन्यथा न मे वासो वर्तते हृदये क्वचित्॥७१
इत्युक्ता दमयन्त्या तु राजमातेदमब्रवीत् ।
सर्वमेतत्करिष्यामि दिष्ट्या ते व्रतमीदृशम्॥७२
एवमुक्त्वा ततो भैमीं राजमाता विशांपते ।
उवाचेदं दुहितरं सुनन्दां नाम भारत ॥ ७३
सैरन्ध्रीमभिजानीष्व सुनन्दे देवरूपिणीम् ।
वयसा तुल्यतां प्राप्ता सखी तव भवत्वियम् ।
एतया सह मोदस्व निरुद्विग्नमनाः सदा ॥ ७४
ततः परमसंहृष्टा सुनन्दा गृहमागमत् ।
दमयन्तीमुपादाय सखीभिः परिवारिता ॥ ७५
सहसा न्यवसद्राजन्राजपुत्र्या सुनन्दया ।
चिन्तयन्ती नलं वीरमनिशं वामलोचना ॥ ७६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

## त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

दमयन्तीं परित्यज्याटव्यामटन्तं नलंप्रति वनवह्निवेष्टितेन कर्कोटकेनात्मपरिरक्षणप्रार्थना ॥ १ ॥ नलेन दावाग्नितो मोचितेन कर्कोटकेन नलगात्रे दंशनेन वैरूप्यापादनम् ॥ २ ॥ तथा निजरूपाविष्करणेच्छायां स्वस्मरणेन वासोवसनविधानपूर्वकं वस्त्रप्रदानम् ॥ ३ ॥

बृहदश्व उवाच ।
उत्सृज्य दमयन्तीं तु नलो राजा विशांपते ।
ददर्श दावं दह्यन्तं महान्तं गहने वने ॥ १
तत्र शुश्राव शब्दं वै मध्ये भूतस्य कस्यचित् ।
अभिधाव नलेत्युच्चैः पुण्यश्लोकेति चासकृत् ॥२
मा भैरिति नलश्चोक्त्वा मध्यमग्नेः प्रविश्य तम् ।
ददर्श नागराजानं शयानं कुण्डलीकृतम् ॥ ३
स नागः प्राञ्जलिर्भूत्वा वेपमानो नलं तदा ।
उवाच मां विद्धि राजन्नागं कर्कोटकं नृप ॥ ४
मया प्रलब्धो ब्रह्मर्षिरनागाः सुमहातपाः ।
तेन मन्युपरीतेन शप्तोसि मनुजाधिप ॥ ५
तिष्ठ त्वं स्थावर इव यावदेति नलः क्वचित् ।
इतो नेतासि तत्र त्वं शापान्मोक्ष्यसि मत्कृतात् ६
तस्य शापान्न शक्नोमि पदाद्विचलितुं पदम् ।

हे वीरप्रजायिनि वीरानेव प्रजायते सूते सा वीरप्रजायिनी ॥ ६८ ॥ यद्येवमिह वस्तव्यं वसाम्यहमसंशयमिति ध. पाठः ॥ ७१ ॥ द्विषष्टितमोऽध्यायः ॥ ६२ ॥

उपदेक्ष्यामि ते श्रेयस्त्रातुमर्हति मां भवान् ॥ ७
सखा च ते भविष्यामि मत्समो नास्ति पन्नगः।
लघुश्च ते भविष्यामि शीघ्रमादाय गच्छ माम् ८
एवमुक्त्वा स नागेन्द्रो बभूवाङ्गुष्ठमात्रकः।
तं गृहीत्वा नलः प्रायाद्देशं दावविवर्जितम् ॥ ९
आकाशदेशमासाद्य विमुक्तं कृष्णवर्त्मना।
उत्स्रष्टुकामं तं नागः पुनः कर्कोटकोऽब्रवीत्१०
पदानि गणयन्गच्छ स्वानि नैषध कानिचित्।
तत्र तेऽहं महाबाहो श्रेयो धास्यामि यत्परम् ११
ततः संख्यातुमारब्धमदशद्दशमे पदे।
तस्य दष्टस्य तद्रूपं क्षिप्रमन्तरधीयत ॥ १२
स दृष्ट्वा विस्मितस्तस्थावात्मानं विकृतं नलः।
स्वरूपधारिणं नागं ददर्श स महीपतिः॥ १३
ततः कर्कोटको नागः सान्त्वयन्नलमब्रवीत्।
मया तेऽन्तर्हितं रूपं न त्वां विद्युर्जना इति १४
यत्कृते चासि निकृतो दुःखेन महता नल।
विषेण स मदीयेन त्वयि दुःखं निवत्स्यति ॥१५
विषेण संवृतैर्गात्रैर्यावत्त्वां न विमोक्ष्यति।
तावत्तु त्वां महाराज क्लेशेऽस्मिन्स नियोक्ष्यति १६
अनागा येन निकृतस्त्वमनर्हो जनाधिप।
क्रोधादसूययित्वा तं रक्षा मे भवतः कृता॥ १७
न ते भयं नरव्याघ्र दंष्ट्रिभ्यः शत्रुतोपि वा।
ब्रह्मवित्त्वं च भविता मत्प्रसादान्नराधिप॥ १८
राजन्विषनिमित्ता च न ते पीडा भविष्यति।
संग्रामेषु न राजेन्द्र शश्वज्जयमवाप्स्यसि॥ १९
गच्छ राजन्नितः सूतो बाहुकोऽहमिति ब्रुवन्।
समीपमृतुपर्णस्य स हि वेदाक्षनैपुणम्॥ २०
अयोध्यां नगरीं रम्यामद्य वै निषधेश्वर।
स तेऽक्षहृदयं दाता राजाऽश्वहृदयेन वै॥ २१
इक्ष्वाकुकुलजः श्रीमान्मित्रं चैव भविष्यति।
भविष्यसि यदाऽक्षज्ञः श्रेयसा योक्ष्यसे तदा २२
संयोक्ष्यसे स्वदारैस्त्वं मा स्म शोके मनः कृथाः।
राज्येन तनयाभ्यां च सत्यमेतद्ब्रवीमि ते॥ २३
स्वं रूपं च यदा द्रष्टुमिच्छेथास्त्वं नराधिप।
संस्मर्तव्यस्तदा तेऽहं वासश्चेदं विवासयेः॥ २४
अनेन वाससाच्छन्नः स्वं रूपं प्रतिपत्स्यसे।
इत्युक्त्वा प्रददौ तस्मै दिव्यं वासोयुगं तदा॥ २५
एवं नलं च संदिश्य वासो दत्त्वा च कौरव।
नागराजस्ततो राजंस्तत्रैवान्तरधीयत॥ २६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि त्रिषष्टितमोऽध्यायः॥ ६३॥

## चतुःषष्टितमोऽध्यायः॥ ६४॥

कर्कोटकवचनान्नलेनायोध्यायां बाहुकइति स्वनामनिर्देशपूर्वकमृतुपर्णनृपसमीपोपसर्पणम्॥ १॥ ऋतुपर्णेन तस्य सारथ्ये नियोजनम्॥ २॥

बृहदश्व उवाच।
तस्मिन्नन्तर्हिते नागे प्रययौ नैषधो नलः।
ऋतुपर्णस्य नगरं प्राविशद्दशमेऽहनि॥ १
स राजानमुपातिष्ठद्बाहुकोऽहमिति ब्रुवन्।
अश्वानां वाहने युक्तः पृथिव्यां नास्ति मत्समः॥२
अर्थकृच्छ्रेषु चैवाहं प्रष्टव्यो नैपुणेषु च।
अन्नसंस्कारमपि च जानाम्यन्यैर्विशेषतः॥ ३
यानि शिल्पानि लोकेऽस्मिन्यच्चैवान्यत्सुदुष्करम्।
सर्वं यतिष्ये तत्कर्तुमृतुपर्ण भरस्व माम्॥ ४
'इत्युक्तः स नलेनाथ ऋतुपर्णो नराधिपः।

लघुर्गुरुत्वरहितः॥ ८॥ दावविवर्जितं वह्निहीनम्॥ ९॥ दशेत्युक्तेऽदशत्। आज्ञां विना नागो न दशतीति भावः॥ १२॥ स कलिः। इदं दमयन्त्या दत्तस्य शापस्य फलं कलिर्भुङ्क्ते इति भावः॥ १५॥ अनागाः निरपराधः। निकृतो वञ्चितः। मे मया॥ १७॥ ब्रह्मविच्चश्च भवितेति झ. पाठः॥ १८॥ अक्षहृदयं द्यूते जयावहम्। अश्वहृदयेन विद्यया विद्यां परिवर्तयेदित्यर्थः॥ २१॥ निवासयेः परिधेहि॥ २४॥ त्रिषष्टितमोऽध्यायः॥ ६३॥

उवाच सुप्रीतमनास्तं प्रेक्ष्य च महीपते ॥' ५
वस बाहुक भद्रं ते सर्वमेतत्करिष्यसि ।
शीघ्रयाने सदा बुद्धिर्ध्रियते मे विशेषतः ॥ ६
स त्वमातिष्ठ योगं तं येन शीघ्रा हया मम ।
भवेयुरश्वाध्यक्षोसि वेतनं ते शतंशतम् ॥ ७
त्वामुपस्थास्यतश्चैव नित्यं वार्ष्णेयजीवलौ ।
एताभ्यां रंस्यसे सार्धं वस वै मयि बाहुक ॥ ८
बृहदश्व उवाच ।
एवमुक्तो नलस्तेन न्यवसत्तत्र पूजितः ।
ऋतुपर्णस्य नगरे सहवार्ष्णेयजीवलः ॥ ९
स वै तत्रावसद्राजा वैदर्भीमनुचिन्तयन् ।
सायंसायं सदा चेमं श्लोकमेकं जगाद ह ॥ १०
क्वनु सा क्षुत्पिपासार्ता श्रान्ता शेते तपस्विनी ।
स्मरन्ती तस्य मन्दस्य कं वाऽऽसाद्योपतिष्ठति ११
एवं ब्रुवन्तं राजानं निशायां जीवलोऽब्रवीत् ।
कामेनां शोचसे नित्यं श्रोतुमिच्छामि बाहुक ।
आयुष्मन्कस्य वा नारी यामेवमनुशोचसि ॥ १२
तमुवाच नलो राजा मन्दप्रज्ञस्य कस्यचित् ।
आसीद्बहुमता नारी तस्या दृढतरश्च सः ॥ १३
स वै केनचिदर्थेन तया मन्दो व्ययुज्यत ।
विप्रयुक्तः स मन्दात्मा भ्रमत्यसुखपीडितः ॥ १४
दह्यमानः स शोकेन दिवारात्रमतन्द्रितः ।
निशाकाले स्मरंस्तस्याः श्लोकमेकं स्म गायति १५
स विभ्रमन्महीं सर्वां क्वचिदासाद्य किंचन ।
वसत्यनर्हस्तद्दुःखं भूय एवानुसंस्मरन् ॥ १६
सा तु तं पुरुषं नारी कृच्छ्रेऽप्यनुगता वने ।
त्यक्ता तेनाल्पभाग्येन दुष्करं यदि जीवति ॥ १७
एका बालाऽनभिज्ञा च मार्गमाणाऽतथोचिता ।
क्षुत्पिपासापरीताङ्गी दुष्करं यदि जीवति ॥ १८
श्वापदाचरिते नित्यं वने महति दारुणे ।
त्यक्ता तेनाल्पभाग्येन मन्दप्रज्ञेन मारिष ॥ १९
इत्येवं नैषधो राजा दमयन्तीमनुस्मरन् ।
अज्ञातवासं न्यवसद्राज्ञस्तस्य निवेशने ॥ २०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

## पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

भीमराजेन नलदमयन्त्यन्वेषणाय नानादेशेषु ब्राह्मणानां प्रस्थापनम् ॥ १ ॥ सुदेवनाम्ना विप्रेण चेदिराजगृहे दमयन्तीदर्शनम् ॥ २ ॥ विप्रेण सह सबाष्पं भाषमाणां दमयन्तीं दृष्ट्वा राजमात्रा विप्रंप्रति दमयन्तीकुलशीलादिप्रश्नः ॥३॥

बृहदश्व उवाच ।
हृतराज्ये नले भीमः सभार्येऽदर्शनं गते ।
'चिन्तयामास बहुशः सहामात्यैर्नराधिपः ॥ १
समाहूय द्विजान्सर्वानिदं वचनमब्रवीत् ।
अग्रहारं च दास्यामि ग्रामं नगरसंमितम् ॥ २
दमयन्तीं नलं चैव पर्यन्वेषति यो द्विजः ।
गवां शतसहस्राणि दाता तस्मै द्विजातये ॥ ३
इत्युक्त्वा ब्राह्मणान्सर्वान्समाहूय द्विजोत्तमान् ।
प्रस्थापयामास तदा तयोर्दर्शनकाङ्क्षया ॥' ४
संदिदेश च तान्भीमो वसु दत्त्वा च पुष्कलम् ।
मृगयध्वं नलं चैव दमयन्तीं च मे सुताम् ॥ ५
अस्मिन्कर्मणि निष्पन्ने विज्ञाते निषधाधिपे ।
गवां सहस्रं दास्यामि यो वस्तावानयिष्यति ॥ ६
अग्रहारांश्च दास्यामि ग्रामं नगरसंमितम् ।
हिरण्यं च सुवर्णं च दासीदासं तथैव ॥ ७
न चेच्छक्याविहानेतुं दमयन्ती नलोऽपि वा ।
ज्ञातमात्रेऽपि दास्यामि गवां दशशतं धनम् ॥ ८
इत्युक्तास्ते ययुर्हृष्टा ब्राह्मणाः सर्वतो दिशम् ।
पुरराष्ट्राणि चिन्वन्तो नैषधं सह भार्यया ।
नैव क्वापि प्रपश्यन्ति नलं वा भीमपुत्रिकाम् ॥ ९

---

मारिष आर्य ॥ १९ ॥ चतुःषष्टितमोऽध्यायः ॥ ६४ ॥
अग्रं ब्राह्मणभोजनं तदर्थं ह्रियन्ते राजधनात्पृथक्क्रियन्ते तेऽग्रहाराः क्षेत्रादयः ॥ ७ ॥

ततश्चेदिपुरीं रम्यां सुदेवो नाम वै द्विजः ।
विचिन्वानोऽथ वैदर्भीमपश्यद्राजवेश्मनि ॥ १०
तयैव राजमाता च ब्राह्मणान्पर्यवेषयत् ।
भोजनार्थे सुदेवोऽपि तत्रैव प्रविवेश ह ॥ ११
कृशां विवर्णां मलिनां भर्तृशोकपरायणाम् ।
पुण्याहवाचने राज्ञः सुनन्दासहितां स्थिताम् १२
मन्दं प्रख्यायमानेन रूपेणाप्रतिमेन ताम् ।
निबद्धां धूमजालेन प्रभामिव विभावसोः ॥ १३
तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशाम् ।
तर्कयामास भैमीति कारणैरुपपादयन् ॥ १४
सुदेव उवाच ।
यथेयं मे पुरा दृष्टा तथारूपेयमङ्गना ।
कृतार्थोस्म्यद्य दृष्ट्वेमां लोककान्तामिव श्रियं १५
पूर्णचन्द्राननां श्यामां चारुवृत्तपयोधराम् ।
कुर्वन्तीं प्रभया देवीं सर्वा वितिमिरा दिशः १६
चारुपद्मविशालाक्षीं मन्मथस्य रतीमिव ।
इष्टां समस्तलोकस्य पूर्णचन्द्रप्रभामिव ॥ १७
विदर्भसरसस्तस्माद्दैवदोषादिवोद्धृताम् ।
मलपङ्कानुलिप्ताङ्गीं प्रम्लानां नलिनीमिव ॥ १८
पौर्णमासीमिव निशां राहुग्रस्तनिशाकराम् ।
पतिशोकाकुलां दीनां कृशस्रोतां नदीमिव ॥१९
विध्वस्तपर्णकमलां वित्रासितविहंगमाम् ।
हस्तिहस्तपरिक्लिष्टां व्याकुलामिव पद्मिनीम् ॥२०
सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम् ।
दह्यमानामिवार्केण मृणालीमिव चोद्धृताम् ॥२१
रूपौदार्यगुणोपेतां मण्डनार्हाममण्डिताम् ।
चन्द्रलेखामिव नवां व्योम्नि नीलाभ्रसंवृताम् २२
कामभोगैः प्रियैर्हीनां हीनां बन्धुजनेन च ।
देहं धारयतीं दीनं भर्तृदर्शनकाङ्क्षया ॥ २३
भर्ता नाम परं नार्या भूषणं भूषणैर्विना ।
एषा हि रहिता तेन शोभमाना न शोभते ॥२४
दुष्करं कुरुतेऽत्यन्तं हीनो यदनया नलः ।
धारयत्यात्मनो देहं न शोकेनापि सीदति ॥२५
इमामसितकेशान्तां शतपत्रायतेक्षणाम् ।
सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथते मनः २६
कदा नु खलु दुःखस्य पारं यास्यति वै शुभा ।
भर्तुः समागमात्साध्वी रोहिणी शशिनो यथा २७
अस्या नूनं पुनर्लाभान्नैषधः प्रीतिमेष्यति ।
राजा राज्यपरिभ्रष्टः पुनर्लब्ध्वेव मेदिनीम् ॥२८
तुल्यशीलवयोयुक्तां तुल्याभिजनसंवृताम् ।
नैषधोऽर्हति वैदर्भी तं चेयमसितेक्षणा ॥ २९
युक्तं तस्याप्रमेयस्य वीर्यसत्ववतो मया ।
समाश्वासयितुं भार्यां पतिदर्शनलालसाम् ॥ ३०
अहमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम् ।
अदृष्टदुःखां दुःखार्तां ध्यानरोदनतत्पराम् ॥ ३१
बृहदश्व उवाच ।
एवं विमृश्य विविधैः कारणैर्लक्षणैश्च ताम् ।
उपगम्य ततो भैमीं सुदेवो ब्राह्मणोऽब्रवीत् ॥३२
अहं सुदेवो वैदर्भि भ्रातुस्ते दयितः सखा ।
भीमस्य वचनाद्राज्ञस्त्वामन्वेष्टुमिहागतः ॥ ३३
कुशली ते पिता राज्ञि जननी भ्रातरश्च ते ।
आयुष्मन्तौ कुशलिनौ तत्रस्थौ दारकौ च ते ॥३४
त्वत्कृते बन्धुवर्गाश्च गतसत्वा इवासते ।
अन्वेष्टारो ब्राह्मणाश्च भ्रमन्ति शतशो महीम् ॥३५
बृहदश्व उवाच ।
अभिज्ञाय सुदेवं तं दमयन्ती युधिष्ठिर ।
पर्यपृच्छत तान्सर्वान्क्रमेण सुहृदः स्वकान् ॥ ३६
रुरोद च भृशं राजन्वैदर्भी शोककर्शिता ।
दृष्ट्वा सुदेवं सहसा भ्रातुरिष्टं द्विजोत्तमम् ॥ ३७
ततो रुदन्तीं तां दृष्ट्वा सुनन्दा शोककर्शिता ।
सुदेवेन सहैकान्ते कथयन्तीं च भारत ॥ ३८
जनित्र्याः प्रेषयामास सैरन्ध्री रुदते भृशम् ।
ब्राह्मणेन सहागम्य तां विद्धि यदि मन्यसे ॥३९
अथ चेदिपतेर्माता राज्ञश्चान्तःपुरात्तदा ।
जगाम यत्र सा बाला ब्राह्मणेन सहाभवत् ॥४०

कारणैर्लिङ्गैः उपपादयन् इयमेव दमयन्तीति निश्चिन्वन् ॥ १४ ॥ श्यामां सदा षोडशवार्षिकीम् ॥ १६ ॥ पद्मिनीं सरसीम् ॥ २० ॥ पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

ततः सुदेवमानाय्य राजमाता विशांपते ।
पप्रच्छ भार्या कस्येयं सुता वा कस्य भामिनी४१
कथं च नष्टा ज्ञातिभ्यो भर्तुर्वा वामलोचना ।
त्वया च विदिता विप्र कथमेवंगता सती ॥ ४२
एतदिच्छाम्यहं श्रोतुं त्वत्तः सर्वमशेषतः ।
तत्त्वेन हि ममाचक्ष्व पृच्छन्त्या देवरूपिणीम् ४३
एवमुक्तस्तया राजन्सुदेवो द्विजसत्तमः ।
सुखोपविष्ट आचष्ट दमयन्त्या यथातथम् ॥ ४४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

## षट्षष्टितमोऽध्यायः ॥ ६६ ॥

सुदेवेन दमयन्तीतत्वं निवेदितया राजमात्रा पिप्लुरूपलाञ्छनेन तत्वनिर्धारणपूर्वकं तस्याः पितृपुरंप्रति प्रापणम् ॥ १ ॥

सुदेव उवाच ।
विदर्भराजो धर्मात्मा भीमो भीमपराक्रमः ।
सुतेयं तस्य कल्याणी दमयन्तीति विश्रुता ॥ १
राजा तु नैषधो नाम वीरसेनसुतो नलः ।
भार्येयं तस्य कल्याणी पुण्यश्लोकस्य धीमतः ॥२
स द्यूतेन जितो भ्रात्रा हृतराज्यो महामनाः ।
दमयन्त्या गतः सार्धं न प्राज्ञायत कस्यचित् ॥३
ते वयं दमयन्त्यर्थे चरामः पृथिवीमिमाम् ।
सेयमासादिता बाला तव देवि निवेशने ॥ ४
अस्या रूपेण सदृशी मानुषी न हि विद्यते ।
अस्या ह्येष भ्रुवोर्मध्ये सहजः पिप्लुरुत्तमः ॥ ५
श्यामायाः पद्मसंकाशो लक्षितोऽन्तर्हितो मया ।
मलेन संवृतो ह्यस्याश्छन्नोऽभ्रेणेव चन्द्रमाः ॥ ६
चिह्नभूतो विभूत्यर्थमयं धात्रा विनिर्मितः ।
प्रतिपत्कलुषेवेन्दोर्लेखा नातिविराजते ॥ ७
न चास्या नश्यते रूपं वपुर्मलसमाचितम् ।
असंस्कृतमपि व्यक्तं भाति काञ्चनसन्निभम् ॥८
अनेन वपुषा बाला पिप्लुनाऽनेन सूचिता ।
लक्षितेयं मया देवी पिहितोऽग्निरिवोष्मणा ॥ ९
बृहदश्व उवाच ।
तच्छ्रुत्वा वचनं तस्य सुदेवस्य विशांपते ।
सुनन्दा शोधयामास पिप्लुप्रच्छादनं मलम् ॥ १०
स मलेनापकृष्टेन पिप्लुस्तस्या व्यरोचत ।
दमयन्त्या यथा व्यभ्रे नभसीव निशाकरः ॥११
पिप्लुं दृष्ट्वा सुनन्दा च राजमाता च भारत ।
रुदन्त्यौ तां परिष्वज्य मुहूर्तमिव तस्थतुः ॥ १२
उत्सृज्य बाष्पं शनकै राजमातेदमब्रवीत् ।
भगिन्या दुहिता मेऽसि पिप्लुनानेन सूचिता॥१३
अहं च तव माता च राजन्यस्य महात्मनः ।
सुते दशार्णाधिपतेः सुदाम्नश्चारुदर्शने ॥ १४
भीमस्य राज्ञः सा दत्ता वीरबाहोरहं पुनः ।
त्वं तु जाता मया दृष्टा दशार्णेषु पितुर्गृहे ॥ १५
यथैव ते पितुर्गेहं तथेदमपि भामिनि ।
यथैव च ममैश्वर्यं दमयन्ति तथा तव ॥ १६
तां प्रहृष्टेन मनसा दमयन्ती विशांपते ।
प्रणम्य मातुर्भगिनीमिदं वचनमब्रवीत् ॥ १७
अज्ञायमानाऽपि सती सुखमस्म्युषिता त्वयि ।
सर्वकामैः सुविहिता रक्ष्यमाणा सदा त्वया ॥१८
सुखात्सुखतरो वासो भविष्यति न संशयः ।
चिरविप्रोषितां मातर्मामनुज्ञातुमर्हसि ॥ १९
दारकौ च हि मे नीतौ वसतस्तत्र बालकौ ।
पित्रा विहीनौ शोकार्तौ मया चैव कथं नु तौ २०
यदि चापि प्रियं किंचिन्मयि कर्तुमिहेच्छसि ।
विदर्भान्यातुमिच्छामि शीघ्रं मे यानमादिश २१
बाढमित्येव तामुक्त्वा हृष्टा मातृष्वसा नृप ।
गुप्तां बलेन महता पुत्रस्यानुमते ततः ॥ २२

पिप्लुः रक्ततिलकाकृति लाञ्छनम् ॥ ५ ॥ स दृष्टो बहुशो नाद्य लक्ष्यतेऽन्तर्हितो मयेति क. पाठः ॥ ६ ॥ चिह्नभूतः सचात्यर्थ-मिति ध. पाठः ॥७॥ अस्यास्तु दृश्यते रूपमिति ध. पाठः॥८॥ अपकृष्टेन दूरीकृतेन ॥ ११ ॥ दारकौ सुतः सुता च ॥ २० ॥

प्रास्थापयद्राजमाता श्रीमतीं नरवाहिना ।
यानेन भरतश्रेष्ठ स्वन्नपानपरिच्छदाम् ॥ २३
ततः सा नचिरादेव विदर्भानगमच्छुभा ।
तां तु बन्धुजनः सर्वः प्रहृष्टः समपूजयत् ॥ २४
सर्वान्कुशलिनो दृष्ट्वा बान्धवान्दारकौ च तौ ।
मातरं पितरं चोभौ सर्वं चैव सखीजनम् ॥ २५
देवताः पूजयामास ब्राह्मणांश्च यशस्विनी ।
परेण विधिना देवी दमयन्ती विशांपते ॥ २६
अतर्पयत्सुदेवं च गोसहस्रेण पार्थिवः ।
प्रीतो दृष्ट्वैव तनयां ग्रामेण द्रविणेन च ॥ २७
सा व्युष्टा रजनीं तत्र पितुर्वेश्मनि भामिनी ।
विश्रान्ता मातरं राजन्निदं वचनमब्रवीत् ॥ २८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

दमयन्तीप्रेषितैर्विप्रैस्तत्रतत्र नलान्वेषणम् ॥ १ ॥

दमयन्त्युवाच ।
मां चेदिच्छसि जीवन्तीं मातः सत्यं ब्रवीमि ते ।
नलस्य नरवीरस्य यतस्वानयने पुनः ॥ १
दमयन्त्या तथोक्ता तु सा देवी भृशदुःखिता ।
बाष्पेणापिहिता राज्ञी नोत्तरं किंचिदब्रवीत् ॥ २
तदवस्थां तु तां दृष्ट्वा सर्वमन्तःपुरं तदा ।
हाहाभूतमतीवासीद्भृशं च प्ररुरोद ह ॥ ३
ततो भीमं महाराजं भार्या वचनमब्रवीत् ।
दमयन्ती नृप भृशं भर्तारमनुशोचति ॥ ४
अपकृष्य च लज्जां सा स्वयमुक्तवती विभो ।
प्रयतन्तु तव प्रेष्याः पुण्यश्लोकस्य दर्शने ॥ ५
बृहदश्व उवाच ।
तया प्रचोदितो राजा ब्राह्मणान्वशवर्तिनः ।
प्रास्थापयद्दिशः सर्वा यतध्वं नलदर्शने ॥ ६
ततो विदर्भाधिपतेर्नियोगाद्ब्राह्मणास्तदा ।
दमयन्तीमथापृच्छय प्रस्थितास्ते तथाऽब्रुवन् ॥ ७
अथ तानब्रवीद्भैमी सर्वराष्ट्रेष्विदं वचः ।
ब्रूत वै जनसंसत्सु तत्रतत्र पुनः पुनः ॥ ८
क्वनु त्वं कितव च्छित्त्वा वस्त्रार्धं प्रस्थितो मम ।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ॥ ९
सा वै यथा त्वया दृष्टा तथाऽऽस्ते त्वत्प्रतीक्षिणी ।
दह्यमाना भृशं बाला वस्त्रार्धेनाभिसंवृता ॥ १०
तस्या रुदन्त्याः सततं तेन शोकेन पार्थिव ।
प्रसादं कुरु वै देव प्रतिवाक्यं वदस्व च ॥ ११
एवमन्यच्च वक्तव्यं कृपां कुर्याद्यथा मयि ।
वायुना धूयमानो हि वनं दहति पावकः ॥ १२
भर्तव्या रक्षणीया च पत्नी पत्या हि नित्यदा ।
तन्नष्टमुभयं कस्माद्धर्मज्ञस्य सतस्तव ॥ १३
ख्यातः प्राज्ञः कुलीनश्च सानुक्रोशो भवान्सदा ।
संवृत्तो निरनुक्रोशः शङ्के मद्भाग्यसंक्षयात् ॥ १४
तत्कुरुष्व नरव्याघ्र दयां मयि नरर्षभ ।
आनृशंस्यं परो धर्मस्त्वत्त एव हि मे श्रुतः ॥ १५
एवं ब्रुवाणान्यदि वः प्रतिब्रूयाद्धि कश्चन ।
स नरः सर्वथा ज्ञेयः कश्चासौ क्वनु वर्तते ॥ १६
यश्चैवं वचनं श्रुत्वा ब्रूयात्प्रतिवचो नरः ।
तदादाय वचस्तस्य ममावेद्यं द्विजोत्तमाः ॥ १७
यथा च वो न जानीयाच्चरतो भीमशासनात् ।
पुनरागमनं चेह तथा कार्यमतन्द्रितैः ॥ १८
यदि वाऽसौ समृद्धः स्याद्यदि वाऽप्यधनो भवेत् ।
यदिऽवाप्यसमर्थः स्याज्ज्ञेयमस्य चिकीर्षितम् ॥ १९
एवमुक्तास्त्वगच्छंस्ते ब्राह्मणाः सर्वतो दिशम् ।
नलं मृगयितुं राजंस्तदा व्यसनिनं तथा ॥ २०

व्युष्टा वासंकृतवती ॥ २८ ॥ षट्षष्टितमोऽध्यायः ॥ ६६ ॥
तथा अब्रुवन्नलान्वेषणाय प्रस्थिताःस्मेति ॥ ७ ॥ वायुनेति शोकाग्निः कालवायुना दिनेदिने वर्धमानो दमयन्तीशरीरवनं दहतीति रूपकेणोक्तम् ॥ १२ ॥ भर्तव्याऽन्नादिना । रक्षणीया दस्युप्रभृतिभ्यः । उभयं रक्षणभरणात्मकम् ॥ १३ ॥ सानुक्रोशः सदयः ॥ १४ ॥ सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

ते पुराणि सराष्ट्राणि ग्रामान्घोषांस्तथाऽऽश्रमान् ।
अन्वेषन्तो नलं राजन्नाधिजग्मुर्द्विजातयः ॥ २१
तच्च वाक्यं तथा सर्वे तत्रतत्र विशांपते ।
श्रावयांचक्रिरे विप्रा दमयन्त्या यथेरितम् ॥ २२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

## अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

नलान्वेषिणा पर्णादनाम्ना विप्रेण ऋतुपर्णनृपगृहे बाहुकनामनिगूढे नले शृण्वति दमयन्तीवचनानुवादः ॥ १ ॥ बाहुकेन विजने पर्णादंप्रति दमयन्तीवचनस्योत्तरदानम् ॥ २ ॥ पर्णादेन विदर्भान्पुनरभ्येत्य दमयन्त्या बाहुकवचननिवेदनम् ॥ ३ ॥ बाहुके नलशङ्किन्या दमयन्त्या प्रेषितेन सुदेवेन अयोध्यांगत्वा ऋतुपर्णे श्वोभूते दमयन्त्याः पुनः स्वयंवरो भवितेति कीर्तनम् ॥ ४ ॥

---

बृहदश्व उवाच ।
अथ दीर्घस्य कालस्य पर्णादो नाम वै द्विजः ।
प्रत्येत्य नगरं भैमीमिदं वचनमब्रवीत् ॥ १
नैषधं मृगयाणेन दमयन्ति दिवानिशम् ।
अयोध्यां नगरीं गत्वा भागस्वरिरुपस्थितः ॥ २
श्रावितश्च मया वाक्यं त्वदीयं स महाजने ।
ऋतुपर्णो महाभागो यथोक्तं वरवर्णिनि ॥ ३
तच्छ्रुत्वा नाब्रवीत्किंचिदृतुपर्णो नराधिपः ।
न च पारिषदः कश्चिद्भाष्यमाणो मयाऽसकृत् ॥४
अनुज्ञातं तु मां राज्ञा विजने कश्चिदब्रवीत् ।
ऋतुपर्णस्य पुरुषो बाहुको नाम नामतः ॥ ५
सूतस्तस्य नरेन्द्रस्य विरूपो ह्रस्वबाहुकः ।
शीघ्रयानेषु कुशलो मृष्टकर्ता च भोजने ॥ ६
स विनिःश्वस्य बहुशो रुदित्वा च पुनःपुनः ।
कुशलं चैव मां पृष्ट्वा पश्चादिदमभाषत ॥ ७
वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्यो जितः स्वर्गो न संशयः ॥८
रहिता भर्तृभिश्चैव न कुप्यन्ति कदाचन ।
प्राणांश्चारित्रकवचान्धारयन्ति वरस्त्रियः ॥ ९
विषमस्थेन मूढेन परिभ्रष्टसुखेन च ।
यत्सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ॥१०
प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः ।
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति ॥११
सत्कृताऽसत्कृता वाऽपि पतिं दृष्ट्वा तथागतम् ।
भ्रष्टराज्यं श्रिया हीनं श्यामा न क्रोद्धुमर्हति॥१२
तस्य तद्वचनं श्रुत्वा त्वरितोऽहमिहागतः ।
श्रुत्वा प्रमाणं भवती राज्ञश्चैव निवेदय ॥ १३
एतच्छ्रुत्वाऽश्रुपूर्णाक्षी पर्णादस्य विशांपते ।
दमयन्ती रहोऽभ्येत्य मातरं प्रत्यभाषत ॥ १४
अयमर्थो न संवेद्यो भीमे मातः कदाचन ।
त्वत्सन्निधौ नियोक्ष्येऽहं सुदेवं द्विजसत्तमम् ॥१५
यथा न नृपतिर्भीमः प्रतिपद्येत मे मतम् ।
यथा त्वया प्रकर्तव्यं मम चेत्प्रियमिच्छसि ॥ १६
यथा चाहं समानीता सुदेवेनाशु बान्धवान् ।
तेनैव मङ्गलेनाद्य सुदेवो यातु मा चिरम् ॥ १७
समानेतुं नलं मातरयोध्यां नगरीमितः ।
'ऋतुपर्णस्य नगरे निवसन्तमरिन्दमम् ॥' १८
विश्रान्तं तु ततः पश्चात्पर्णादं द्विजसत्तमम् ।
अर्चयामास वैदर्भी धनेनातीव भामिनी ॥ १९
'उवाच चैनं महता संपूज्य द्रविणेन वै ।'
नले चेहागते विप्र भूयो दास्यामि ते वसु ॥२०
त्वया हि मे बहुकृतं यदन्यो न करिष्यति ।
यद्भर्त्राऽहं समेष्यामि शीघ्रमेव द्विजोत्तम ॥ २१
स एवमुक्तोऽथाश्वास्य आशीर्वादैः सुमङ्गलैः ।
गृहानुपययौ चापि कृतार्थः सुमहामनाः ॥ २२
ततः सुदेवमानाय्य दमयन्ती युधिष्ठिर ।
अब्रवीत्सन्निधौ मातुर्दुःखशोकसमन्विता ॥ २३
गत्वा सुदेव नगरीमयोध्यावासिनं नृपम् ।
ऋतुपर्णं वचो ब्रूहि पतिमन्यं चिकीर्षती ॥ २४

---

गोपायन्ति पालयन्ति । जितः स्वर्गस्ताभिरिति शेषः ॥ ८ ॥

आस्थास्यति पुनर्भैमी दमयन्ती स्वयंवरम् ।
तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः ॥ २५
तथा च गणितः कालः श्वोभूते स भविष्यति ।
यदि संभावनीयं ते गच्छ शीघ्रमरिंदम ॥ २६
सूर्योदये द्वितीयं सा भर्तारं वरयिष्यति ।
न हि स ज्ञायते वीरो नलो जीवन्मृतोपि वा २७
एवं तया यथोक्तो वै गत्वा राजानमब्रवीत् ।
ऋतुपर्णं महाराज सुदेवो ब्राह्मणस्तदा ॥ २८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

## एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

ऋतुपर्णेन दमयन्तीस्वयंवराय बाहुकं सारथ्ये नियोज्य वार्ष्णेयेन सह विदर्भान्प्रति प्रस्थानम् ॥ १ ॥ वार्ष्णेयेन बाहुके सारथ्यकौशलेन नलत्वसंभावना ॥ २ ॥

बृहदश्व उवाच ।
श्रुत्वा वचः सुदेवस्य ऋतुपर्णो नराधिपः ।
'सारथीन्स समानीय वार्ष्णेयप्रभृतीन्नृपः ।
कथयामास यद्वृत्तं ब्राह्मणेन श्रुतं तथा ॥ १
बाहुकं च समाहूय दमयन्त्याः स्वयंवरम् ।'
सान्त्वयञ्श्लक्ष्णया वाचा बाहुकं प्रत्यभाषत ॥ २
विदर्भान्यातुमिच्छामि दमयन्त्याः स्वयंवरम् ।
एकाह्ना हयतत्त्वज्ञ मन्यसे यदि बाहुक ॥ ३
एवमुक्तस्य कौन्तेय तेन राज्ञा नलस्य ह ।
व्यदीर्यत मनो दुःखात्प्रदध्यौ च महामनाः ॥४
दमयन्ती भवेदेवं किंतु दुःखेन मोहिता ।
असदर्थे भवेद्वाऽयमुपायश्चिन्तितो महान् ॥ ५
नृशंसं बत वैदर्भी कर्तुकामा तपस्विनी ।
मया क्षुद्रेण निकृता कृपणा पापबुद्धिना ।
स्त्रीस्वभावश्चलो लोके मम दोषश्च दारुणः ॥ ६
स्यादेवमपि कुर्यात्सा विवासाद्गतसौहृदा ।
मम शोकेन संविग्ना नैराश्यात्तनुमध्यमा ।
नैवं सा कर्हिचित्कुर्यात्सापत्या च विशेषतः ॥७
यदत्र सत्यं वाऽसत्यं गत्वा वेत्स्यामि निश्चयम् ।
ऋतुपर्णस्य वै काममात्मार्थं च करोम्यहम् ॥ ८
इति निश्चित्य मनसा बाहुको दीनमानसः ।
कृताञ्जलिरुवाचेदमृतुपर्णं जनाधिपम् ॥ ९
प्रतिजानामि ते वाक्यं गमिष्यामि नराधिप ।
एकाह्ना पुरुषव्याघ्र विदर्भनगरीं नृप ।
'तत्रादित्योदये काले श्वो विदर्भान्गमिष्यसि॥१०
एवमुक्तोऽब्रवीद्राजा बाहुकं प्रहसन्निव ।
किं ते कामं करोम्यद्य तुष्टोऽसि तव बाहुक ॥११
बाहुक उवाच ।
यावद्यानमिदं सज्जमृतुपर्ण करोम्यहम् ॥' १२
ततः परीक्षामश्वानां चक्रे राजन्स बाहुकः ।
अश्वशालामुपागम्य भागस्वरिनृपाज्ञया ॥ १३
स त्वर्यमाणो बहुश ऋतुपर्णेन बाहुकः ।
अश्वाञ्जिज्ञासमानो वै विचार्य च पुनःपुनः ।
अध्यगच्छत्कृशानश्वान्समर्थानध्वनि क्षमान् ॥१४
तेजोबलसमायुक्तान्कुलशीलसमन्वितान् ।
वर्जिताँल्लक्षणैर्हीनैः पृथुप्रोथान्महाहनून् ॥ १५
शुद्धान्दशभिरावर्तैः सिन्धुजान्वातरंहसः ।
'दृश्यमानान्कृशानङ्गैर्जवेनाप्रतिमान्पथि ॥' १६
तान्दृष्ट्वा दुर्बलान्राजा प्राह कोपसमन्वितः ।
किमिदं प्रार्थितं कर्तुं प्रलब्धव्या न ते वयम् ॥१७
कथमल्पबलप्राणा वक्ष्यन्तीमे हया रथम् ।
महानध्वा स चैकाह्ना गन्तव्यः कथमीदृशैः १८
बाहुक उवाच ।
[एको ललाटे द्वे मूर्ध्नि द्वौद्वौ पार्श्वोपपार्श्वयोः ।

संभाविनी संभाविता इयम् । गतिरिति शेषः ॥ २६ ॥ अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

सापत्या अपत्यसहिता ॥७॥ प्रोथं नासिका । हनुः अधरं मुख- फलकम् ॥ १५ ॥ सिन्धुजान् सिन्धुदेशजान् ॥ १६ ॥ बलं भारसहिष्णुता । प्राणो वेगवत्ता । वक्ष्यन्ति वहनं करिष्यन्ति ॥ १८ ॥

द्वौद्वौ वक्षसि विज्ञेयौ प्रयाणे चैक एव तु ॥]१९
एते हया गमिष्यन्ति विदर्भान्नात्र संशयः ।
यानन्यान्मन्यसे राजन्ब्रूहि तान्योजयामि ते ॥२०
ऋतुपर्ण उवाच ।
त्वमेव हयतत्त्वज्ञः कुशलो ह्यसि बाहुक ।
यान्मन्यसे समर्थांस्त्वं क्षिप्रं तानेव योजय ॥२१
ततः सदश्वांश्चतुरः कुलशीलसमन्वितान् ।
योजयामास कुशलो जवयुक्तान्रथे नलः ॥ २२
ततो युक्तं रथं राजा समारोहत्त्वरान्वितः ।
अथ पर्यपतन्भूमौ जानुभिस्ते हयोत्तमाः ॥ २३
ततो नरवरः श्रीमान्नलो राजा विशांपते ।
सान्त्वयामास तानश्वांस्तेजोबलसमन्वितान् ॥२४
रश्मिभिश्च समुद्यम्य नलो यातुमियेष सः ।
सूतमारोप्य वार्ष्णेयं जवमास्थाय वै परम् ॥ २५
ते चोद्यमाना विधिवद्बाहुकेन हयोत्तमाः ।
समुत्पेतुरिवाकाशं रथिनं मोहयन्ति च ॥ २६
तथा तु दृष्ट्वा तानश्वान्वहतो वातरंहसः ।
अयोध्याधिपतिः श्रीमान्विस्मयं परमं ययौ ॥२७
रथघोषं तु तं श्रुत्वा हयसंग्रहणं च तत् ।
वार्ष्णेयश्चिन्तयामास बाहुकस्य हयज्ञताम् ॥ २८
किंनु स्यान्मातलिरयं देवराजस्य सारथिः ।
तथा तल्लक्षणं वीरे बाहुके दृश्यते महत् ॥ २९
शालिहोत्रोऽथ किंनु स्याद्धयानां कुलतत्त्ववित् ।
मानुषं समनुप्राप्तो वपुः परमशोभनम् ॥ ३०
उताहोस्विद्भवेद्राजा नलः परपुरंजयः ।
सोयं नृपतिरायात इत्येवं समचिन्तयत् ॥ ३१
अथवाऽयं नलात्प्राप्तो विद्यां तामेव बाहुकः ।
तुल्यं हि लक्षये ज्ञानं बाहुकस्य नलस्य च ॥३२
अपिचेदं वयस्तुल्यं बाहुकस्य नलस्य च ।
नायं नलो महावीर्यस्तद्विद्यश्च भविष्यति ॥ ३३
प्रच्छन्ना हि महात्मानश्चरन्ति पृथिवीमिमाम् ।
दैवेन विधिना युक्ताः शास्त्रोक्तैश्च निरूपणैः ३४
भवेन्न मतिभेदो मे गात्रवैरूप्यतां प्रति ।
प्रमाणात्परिहीनस्तु भवेदिति मतिर्मम ॥ ३५
वयःप्रमाणं तत्तुल्यं रूपेण तु विपर्ययः ।
नलं सर्वगुणैर्युक्तं मन्ये बाहुकमन्ततः ॥ ३६
एवं विचार्य बहुशो वार्ष्णेयः पर्यचिन्तयत् ।
हृदयेन महाराज पुण्यश्लोकस्य सारथिः ॥ ३७
ऋतुपर्णश्च राजेन्द्रो बाहुकस्य हयज्ञताम् ।
चिन्तयन्मुमुदे राजा सहवार्ष्णेयसारथिः ॥ ३८
ऐकाग्र्यं च तथोत्साहं हयसंग्रहणं च तत् ।
कौशलं चापि संप्रेक्ष्य परां मुदमवाप ह ॥ ३९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

## सप्ततितमोऽध्यायः ॥ ७० ॥

बाहुकस्य सारथ्यसामर्थ्यविस्मितेन ऋतुपर्णेन तंप्रति पुञ्जीभूतवस्तुपरिसंख्याने स्वीयसामर्थ्यनिवेदनम् ॥ १ ॥ वृक्षशाखास्थपर्णेषु तत्परीक्षया विस्मितेन नलेनाश्वहृदयविद्यादानप्रतिज्ञानेन तदीयाक्षहृदयादिविद्यास्वीकरणम् ॥ २ ॥ ततो नलदेहाद्बहिर्निःसृतेन कलिना नलशापभयात्तस्मै वरदानपूर्वकं विभीतकवृक्षप्रवेशः ॥ ३ ॥

बृहदश्व उवाच ।
स नदीः पर्वतांश्चैव वनानि च सरांसि च ।
अचिरेणातिचक्राम खेचरः खे चरन्निव ॥ १
तथा प्रयाते तु रथे तदा भागस्वरिर्नृपः ।
उत्तरीयमधोपश्यद्भ्रष्टं परपुरंजयः ॥ २
ततः स त्वरमाणस्तु पटे निपतिते तदा ।
ग्रहीष्यामीति तं राजा नलमाह महामनाः ॥ ३
निगृह्णीष्व महाबुद्धे हयानेतान्महाजवान् ।
वार्ष्णेयो यावदेनं मे पटमानयतामिह ॥ ४
नलस्तं प्रत्युवाचाथ दूरे भ्रष्टः पटस्तव ।

प्रयाणे पृष्ठभागे ॥ १९ ॥ शालिहोत्रः अश्वशास्त्रप्रणेता आचार्यः ॥ ३० ॥ विधिना युक्ताः संयुक्ताश्च विरूपणैरिति क. पाठः ॥ ३४ ॥ भवेत्तु मतिभेदो मे इति क. पाठः ॥ ३५ ॥ अन्ततः निर्णयेन ॥ ३६ ॥ एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

योजनं समतिक्रान्तो नाहर्तुं शक्यते पुनः ॥ ५
एवमुक्ते नलेनाथ नातिप्रीतमना नृपः ।
आससाद वने राजन्फलवन्तं बिभीतकम् ॥ ६
तं दृष्ट्वा बाहुकं राजा त्वरमाणोऽभ्यभाषत ।
ममापि सूत पश्य त्वं संख्याने परमं बलम् ॥ ७
सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन ।
नैकत्र परिनिष्ठाऽस्ति ज्ञानस्य पुरुषे क्वचित् ॥ ८
वृक्षेऽस्मिन्यानि पर्णानि फलान्यपि च बाहुक ।
पतितान्यपि यान्यत्र तत्रैकमधिकं कृतम् ॥ ९
एकपत्राधिकं चात्र फलमेकं च बाहुक ।
फलकोट्यपि पत्राणां द्वयोरपि च शाखयोः ।
'प्रवक्ष्यामि फलान्यत्र यानि संख्यास्यते भवान् ॥'
प्रचिनुह्यस्य शाखे द्वे याश्चाप्यन्याः प्रशाखिकाः ।
आभ्यां फलसहस्रे द्वे पञ्चोनं शतमेव च ॥ ११
ततो रथादवप्लुत्य राजानं बाहुकोऽब्रवीत् ।
परोक्षमिव मे राजन्कत्थसे शत्रुकर्शन ॥ १२
प्रत्यक्षमेतत्कर्ताऽस्मि शातयित्वा बिभीतकम् ।
अथ ते गणिते राजन्द्विजानाम्यपरोक्षताम् ॥ १३
प्रत्यक्षं ते महाराज गणयिष्ये बिभीतकम् ।
अहं हि नाभिजानामि भवेदेवं नवेति वा ॥ १४
संख्यास्यामि फलान्यस्य पश्यतस्ते जनाधिप ।
मुहूर्तमपि वार्ष्णेयो रश्मीन्यच्छतु वाजिनाम् ॥ १५
तमब्रवीन्नृपः सूतं नायं कालो विलम्बितुम् ।
बाहुकस्त्वब्रवीदेनं परं यत्नं समास्थितः ॥ १६
प्रतीक्षस्व मुहूर्तं त्वमथवा त्वरते भवान् ।
एष याति शिवः पन्था याहि वार्ष्णेयसारथिः ॥
अब्रवीदृतुपर्णस्तं सान्त्वयन्कुरुनन्दन ।
त्वमेव यन्ता नान्योस्ति पृथिव्यामपि बाहुक १८
त्वत्कृते यातुमिच्छामि विदर्भान्हयकोविद ।
शरणं त्वां प्रपन्नोसि न विघ्नं कर्तुमर्हसि ॥ १९
कामं च ते करिष्यामि यन्मां वक्ष्यसि बाहुक ।
विदर्भान्यदि यात्वाऽद्य सूर्यं दर्शयितासि मे २०
अथाब्रवीद्बाहुकस्तं संख्याय च बिभीतकम् ।
ततो विदर्भान्यास्यामि कुरुष्वैवं वचो मम ॥ २१
अकाम इव तं राजा गणयस्वेत्युवाच ह ।
एकदेशं च शाखायाः समादिष्टं मयाऽनघ ॥ २२
गणयस्वाश्वतत्त्वज्ञ ततस्त्वं प्रीतिमावह ।
सोऽवतीर्य रथात्तूर्णं शातयामास तं द्रुमम् ॥ २३
ततः स विस्मयाविष्टो राजानमिदमब्रवीत् ।
गणयित्वा यथोक्तानि तावन्त्येव फलानि तु २४
अत्यद्भुतमिदं राजन्दृष्टवानस्मि ते बलम् ।
श्रोतुमिच्छामि तां विद्यां ययैतज्ज्ञायते नृप ॥ २५
तमुवाच ततो राजा त्वरितो गमने नृप ।
विद्ध्यक्षहृदयज्ञं मां संख्याने च विशारदम् ॥ २६
बाहुकस्तमुवाचाथ देहि विद्याद्वयं च मे ।
मत्तोऽपि चाश्वहृदयं गृहाण पुरुषर्षभ ॥ २७
ऋतुपर्णस्ततो राजा बाहुकं कार्यगौरवात् ।
हयज्ञानस्य लोभाच्च तं तथेत्यब्रवीद्वचः ॥ २८
यथोक्तं त्वं गृहाणेदमक्षाणां हृदयं परम् ।
निक्षेपो मेऽश्वहृदयं त्वयि तिष्ठतु बाहुक ।
एवमुक्त्वा ददौ विद्यामृतुपर्णो नलाय वै ॥ २९
तस्याक्षहृदयज्ञस्य शरीरान्निःसृतः कलिः ।
कर्कोटकविषं तीक्ष्णं मुखात्सततमुद्वमन् ।
कलेस्तस्य तदार्तस्य शापाग्निः स विनिःसृतः ३०
स तेन कर्शितो राजा दीर्घकालमनात्मवान् ३१
'तं भ्रान्तरूपं निःशोभं संक्लिष्टमकरोत्कलिः ।'
ततो विषविमुक्तात्मा स्वंरूपमकरोत्कलिः ।
तं शप्तुमैच्छत्कुपितो निषधाधिपतिर्नलः ॥ ३२
तमुवाच कलिर्भीतो वेपमानः कृताञ्जलिः ।
कोपं संयच्छ नृपते कीर्तिं दास्यामि ते पराम् ३३
इन्द्रसेनस्य जननी कुपिता माऽशपत्पुरा ।
यदा त्वया परित्यक्ता ततोऽहं भृशपीडितः ३४

तत्रैकमधिकं शतमिति झ. पाठः ॥ ९ ॥ पञ्चकोट्योऽथ पत्राणामिति झ. पाठः ॥ १० ॥ अक्षहृदयज्ञं अक्षाणां अक्षाभिमानिदेवताया हृदयवद्वशीकरणार्थो मन्त्रः अक्षहृदयम् । येन ज्ञातेन द्यूतेऽक्षा अनुकूला भवन्ति । संख्याने राशीकृतानां पत्रपुष्पफलधान्यादीनां राश्यायामविस्तारोच्छ्रायाद्यालोचनेन पाटीगणितरीत्या झटिति तत्संख्याकथने ॥ २६ ॥ शापाग्निर्दमयन्तीनिसृष्टः स विषरूपः ॥ ३० ॥

अवसं त्वयि राजेन्द्र सुदुःखमपराजित ।
विषेण नागराजस्य दह्यमानो दिवानिशम् ॥ ३५
शरणं त्वां प्रपन्नोस्मि शृणु चेदं वचो मम ।
ये च त्वां मनुजा लोके कीर्तयिष्यन्त्यतन्द्रिताः ।
मत्प्रसूतं भयं तेषां न कदाचिद्भविष्यति ॥ ३६
'न तेषां मानसं किंचिच्छारीरं वाचिकं तथा ।
भविष्यति महाराज कीर्तयिष्यन्ति ये नलम् ।'
भयार्तं शरणं यातं यदि मां त्वं न शप्स्यसे ॥ ३७
एवमुक्तो नलो राजा न्ययच्छत्कोपमात्मनः ।
ततो भीतः कलिः क्षिप्रं प्रविवेश बिभीतकम् ।
कलिस्त्वन्येन नो दृष्टः कथयन्नैषधेन वै ॥ ३८
ततो गतत्वरो राजा नैषधः परवीरहा ।
संप्रनष्टे कलौ राजा संख्यायास्य फलान्युत ॥ ३९
मुदा परमया युक्तस्तेजसाऽथ परेण वै ।
रथमारुह्य तेजस्वी प्रययौ जवनैर्हयैः ॥ ४०
बिभीतकश्चाप्रशस्तः संवृत्तः कलिसंश्रयात् ।
'ततः प्रभृति राजेन्द्र लोकेऽस्मिन्पाण्डुनन्दन'४१
हयोत्तमानुत्पततो द्विजानिव पुनः पुनः ।
नलः संचोदयामास प्रहृष्टेनान्तरात्मना ॥ ४२
विदर्भाभिमुखो राजा प्रययौ स महायशाः ।
नले तु समतिक्रान्ते कलिरप्यगमद्गृहम् ॥ ४३
ततो गतज्वरो राजा नलोऽभूत्पृथिवीपतिः ।
विमुक्तः कलिना राजन्रूपमात्रवियोजितः ॥ ४४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥

## एकसप्ततितमोऽध्यायः ॥ ७१ ॥

ऋतुपर्णे कुण्डिनपुरं प्रविष्टे तद्रथघोषश्रवणेन दमयन्त्या तत्सारथौ नलसंभावना ॥ १ ॥ ततस्तत्त्वजिज्ञासया नलंप्रति दूत्याः प्रस्थापनम् ॥ २ ॥

बृहदश्व उवाच ।
ततो विदर्भान्संप्राप्तं सायाह्ने सत्यविक्रमम् ।
ऋतुपर्णं जना राज्ञे भीमाय प्रत्यवेदयन् ॥ १
स भीमवचनाद्राजा कुण्डिनं प्राविशत्पुरम् ।
नादयन्रथघोषेण सर्वाः स विदिशो दिशः ॥ २
ततस्तं रथनिर्घोषं नलाश्वास्तत्र शुश्रुवुः ।
श्रुत्वा तु समहृष्यन्त पुरेव नलसन्निधौ ॥ ३
दमयन्ती तु शुश्राव रथघोषं नलस्य तम् ।
यथा मेघस्य नदतो गम्भीरं जलदागमे ॥ ४
परं विस्मयमापन्ना श्रुत्वा नादं महास्वनम् ।
नलेन संगृहीतेषु पुरेव नलवाजिषु ।
सदृशं रथनिर्घोषं मेने भैमी तथा हयाः ॥ ५
प्रासादस्थाश्च शिखिनः शालास्थाश्चैव वारणाः ।
हयाश्च शुश्रुवुस्तस्य रथघोषं महीपतेः ॥ ६
तच्छ्रुत्वा रथनिर्घोषं वारणाः शिखिनस्तथा ।
प्रणेदुरुन्मुखा राजन्दृष्ट्वेव जलदोदयम् ॥ ७
दमयन्त्युवाच ।
यथाऽसौ रथनिर्घोषः पूरयन्निव मेदिनीम् ।
ममाह्लादयते चेतो नल एव महीपतिः ॥ ८
अद्य चन्द्राभवक्त्रं तं न पश्यामि नलं यदि ।
असंख्येयगुणं वीरं विनङ्क्ष्यामि न संशयः ॥ ९
यदि वै तस्य वीरस्य बाह्वोर्नाद्याहमन्तरम् ।
प्रविशामि सुखस्पर्शं नभविष्याम्यसंशयम् ॥ १०
यदि मां मेघनिर्घोषो नोपगच्छति नैषधः ।
अद्य चामीकरप्रख्यं प्रवेक्ष्यामि हुताशनम् ॥ ११
यदि मां सिंहविक्रान्तो मत्तवारणविक्रमः ।
नाभिगच्छति राजेन्द्रो विनङ्क्ष्यामि न संशयः १२
न स्मराम्यनृतं किंचिन्न स्मराम्यपकारताम् ।
न च पर्युषितं वाक्यं स्वैरेष्वपि महात्मनः ॥ १३

फलानि संख्याय । अक्षविद्यासामर्थ्यात् राशेरायामादिकमनालोच्यैवेति भावः ॥ ३९ ॥ द्विजानिव पक्षिणइव ॥ ४२ ॥ सप्ततितमोऽध्यायः ॥ ७० ॥

नलाश्वाः विदर्भनगरे ये दमयन्त्याऽपत्याभ्यां सह प्रेषिताः ॥ ३ ॥ शिखिनो मयूराः ॥ ७ ॥ पर्युषितं प्रतिज्ञातकालातिलङ्घि ॥ १३ ॥

प्रभुः क्षमावान्वीरश्च दाता चाप्यधिको नृपैः ।
अहो नीचानुवर्ती च क्लीबवन्मम नैषधः ॥ १४
गुणांस्तस्य स्मरन्त्या मे तत्पराया दिवानिशम् ।
हृदयं दीर्यत इदं शोकात्प्रियविनाकृतम् ॥ १५
एवं विलपमाना सा नष्टसंज्ञेव भारत ।
आरुरोह महद्वेश्म पुण्यश्लोकदिदृक्षया ॥ १६
'आलोकयन्ती ददृशे भैमी राजन्मनस्विनी ।'
ततो मध्यमकक्षायां ददर्श रथमास्थितम् ।
ऋतुपर्णं महीपालं सहवार्ष्णेयबाहुकम् ॥ १७
ततोऽवतीर्य वार्ष्णेयो बाहुकश्च रथोत्तमात् ।
हयांस्तानवमुच्याथ स्थापयामासतू रथम् ॥ १८
सोऽवतीर्य रथोपस्थादृतुपर्णो नराधिपः ।
उपतस्थे महाराजं भीमं भीमपराक्रमम् ॥ १९
तं भीमः प्रतिजग्राह पूजया परया मुदा ।
स तेन पूजितो राज्ञा ऋतुपर्णो नराधिपः ॥ २०
स तत्र कुण्डिने रम्ये वसमानो महीपतिः ।
न च किंचित्तदाऽपश्यत्प्रेक्षमाणो मुहुर्मुहुः ।
स तु राज्ञा समागम्य विदर्भपतिना तदा ॥ २१
अकस्मात्सहसा प्राप्तं स्त्रीमन्त्रं न स्म विन्दति ।
किं कार्यं स्वागतं तेऽस्तु राज्ञा पृष्टः स भारत ।
नाभिजज्ञे स नृपतिर्दुहित्रर्थे समागतम् ॥ २२
ऋतुपर्णोपि राजा स धीमान्सत्यपराक्रमः ।
राजानं राजपुत्रं वा न स्म पश्यति कंचन ॥ २३
नैव स्वयंवरकथां न च विप्रसमागमम् ।
'न चान्यं कंचिदारम्भं स्वयंवरविधिं प्रति ॥' २४
ततो विगणयद्राजा मनसा कोसलाधिपः ।
आगतोसीत्युवाचैनं भवन्तमभिवादुकः ॥ २५
राजापि च स्मयन्भीमो मनसा समचिन्तयत् ।
अधिकं योजनशतं तस्यागमनकारणम् ।
ग्रामान्बहूनतिक्रम्य नाध्यगच्छद्यथातथम् ॥ २६
अल्पकार्यं विनिर्दिष्टं तस्यागमनकारणम् ।
पश्चादुदर्के ज्ञास्यामि कारणं यद्भविष्यति ॥ २७
नैतदेवं स नृपतिस्तं सत्कृत्य व्यसर्जयत् ।
विश्राम्यतामित्युवाच क्लान्तोसीति पुनःपुनः ॥ २८
स सत्कृतः प्रहृष्टात्मा प्रीतः प्रीतेन पार्थिवः ।
राजप्रेष्यैरनुगतो दिष्टं वेश्म समाविशत् ॥ २९
ऋतुपर्णे गते राजन्वार्ष्णेयसहिते नृपे ।
बाहुको रथमादाय रथशालामुपागमत् ॥ ३०
स मोचयित्वा तानश्वानुपचर्य च शास्त्रतः ।
स्वयं चैतान्समाश्वास्य रथोपस्थ उपाविशत् ॥ ३१
दमयन्त्यपि शोकार्ता दृष्ट्वा भागस्वरिं नृपम् ।
सूतपुत्रं च वार्ष्णेयं बाहुकं च तथाविधम् ॥ ३२
चिन्तयामास वैदर्भी कस्यैष रथनिःस्वनः ।
नलस्येव महानासीन्न च पश्यामि नैषधम् ॥ ३३
वार्ष्णेयेन भवेन्नूनं विद्या सैवोपशिक्षिता ।
तेनाद्य रथनिर्घोषो नलस्येव महानभूत् ॥ ३४
आहोस्विदृतुपर्णोऽपि यथा राजा नलस्तथा ।
यथाऽयं रथनिर्घोषो नैषधस्येव लक्ष्यते ॥ ३५
एवं सा तर्कयित्वा तु दमयन्ती विशांपते ।
दूतीं प्रस्थापयामास नैषधान्वेषणे शुभा ॥ ३६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

## द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

दमयन्तीप्रेषितया केशिन्या बाहुकेन संभाष्य दमयन्त्यै संभाषणकालिकबाहुकविकारादिनिवेदनम् ॥ १ ॥

दमयन्त्युवाच ।
गच्छ केशिनि जानीहि क एष रथवाहकः ।
उपविष्टो रथोपस्थे विकृतो ह्रस्वबाहुकः ॥ १
अभ्येत्य कुशलं भद्रे मृदुपूर्वं समाहिता ।
पृच्छेथाः पुरुषं ह्येनं यथातत्त्वमनिन्दिते ॥ २
अत्र मे महती शङ्का भवेदेष नलो नृपः ।

दिष्टं निर्दिष्टम् ॥ २९ ॥

यथाच मनसस्तुष्टिर्हृदयस्य च निर्वृतिः ॥ ३
ब्रूयाश्चैनं कथान्ते त्वं पर्णादवचनं यथा ।
प्रतिवाक्यं च सुश्रोणि बुद्ध्येथास्त्वमनिन्दिते ४
एवं समाहिता गत्वा दूती बाहुकमब्रवीत् ।
दमयन्त्यपि कल्याणी प्रासादस्थाऽन्ववैक्षत ॥ ५
केशिन्युवाच ।
स्वागतं ते मनुष्येन्द्र कुशलं ते ब्रवीम्यहम् ।
दमयन्त्या वचः साधु निबोध पुरुषर्षभ ॥ ६
कदा वै प्रस्थिता यूयं किमर्थमिह चागताः ।
तत्त्वं ब्रूहि यथान्यायं वैदर्भी श्रोतुमिच्छति ॥ ७
बाहुक उवाच ।
श्रुतः स्वयंवरो राज्ञा कोसलेन महात्मना ।
द्वितीयो दमयन्त्या वै भविता श्व इति द्विजात् ८
श्रुत्वैतत्प्रस्थितो राजा शतयोजनयायिभिः ।
हयैर्वातजवैर्मुख्यैरहमस्य च सारथिः ॥ ९
केशिन्युवाच ।
अथ योसौ तृतीयो वः स कुतः कस्य वा पुनः ।
त्वं च कस्य कथं चेदं त्वयि कर्म समाहितम् ॥१०
बाहुक उवाच ।
पुण्यश्लोकस्य वै सूतो वार्ष्णेय इति विश्रुतः ।
स नले विद्रुते भद्रे भागस्वरिमुपस्थितः ॥ ११
अहमप्यश्वकुशलः सूतत्वे च प्रतिष्ठितः ।
ऋतुपर्णेन सारथ्ये भोजने च वृतः स्वयम् ॥ १२
केशिन्युवाच ।
अथ जानाति वार्ष्णेयः क्वनु राजा नलो गतः ।
कथं च त्वयि वा तेन कथितं स्यात्तु बाहुक ॥ १३
बाहुक उवाच ।
इहैव पुत्रौ निक्षिप्य नलस्य प्रियदर्शनौ ।
गतस्ततो यथाकामं नैष जानाति नैषधम् ॥ १४
न चान्यः पुरुषः कश्चिन्नलं वेत्ति यशस्विनि ।
गूढश्चरति लोकेऽस्मिन्नष्टरूपो महीपतिः ॥ १५
आत्मैव तु नलं वेद या चास्य तदनन्तरा ।
न हि वै स्वानि लिङ्गानि नलं शंसन्ति कर्हिचित् १६
केशिन्युवाच ।
योसावयोध्यां प्रथमं गतोसौ ब्राह्मणस्तदा ।
इमानि नारीवाक्यानि कथयानः पुनःपुनः ॥ १७
क्वनु त्वं कितव च्छित्त्वा वस्त्रार्धं प्रस्थितो मम ।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ॥१८
सा वै यथा समादिष्टा तथाऽऽस्ते त्वत्प्रतीक्षिणी ।
दह्यमाना दिवारात्रौ वस्त्रार्धेनाभिसंवृता ॥ १९
तस्या रुदन्त्याः सततं तेन दुःखेन पार्थिव ।
प्रसादं कुरु मे वीर प्रतिवाक्यं वदस्व च ॥ २०
तस्यास्तत्प्रियमाख्यानं प्रवदस्व महामते ।
तदेव वाक्यं वैदर्भी श्रोतुमिच्छन्त्यनिन्दिता ॥ २१
एतच्छ्रुत्वा प्रतिवचस्तस्य दत्तं त्वया किल ।
यत्पुरा तत्पुनस्त्वत्तो वैदर्भी श्रोतुमिच्छति ॥ २२
बृहदश्व उवाच ।
एवमुक्तस्य केशिन्या नलस्य कुरुनन्दन ।
हृदयं व्यथितं चासीदश्रुपूर्णे च लोचने ॥ २३
स निगृह्यात्मनो दुःखं दह्यमानो महीपतिः ।
बाष्पसंदिग्धया वाचा पुनरेवेदमब्रवीत् ॥ २४
वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्यो जितः स्वर्गो न संशयः२५
रहिता भर्तृभिश्चापि न क्रुध्यन्ति कदाचन ।
प्राणांश्चारित्रकवचान्धारयन्ति वरस्त्रियः ॥ २६
विषमस्थेन मूढेन परिभ्रष्टसुखेन च ।
यत्सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ॥ २७
प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः ।
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति ॥२८
सत्कृताऽसत्कृता वाऽपि पतिं दृष्ट्वा तथाविधम् ।
राज्यभ्रष्टं श्रिया हीनं क्षुधितं व्यसनाप्लुतम् ॥२९
एवं ब्रुवाणस्तद्वाक्यं नलः परमदुर्मनाः ।
न बाष्पमशकत्सोढुं प्ररुरोद च भारत ॥ ३०
ततः सा केशिनी गत्वा दमयन्त्यै न्यवेदयत् ।
तत्सर्वं कथितं चैव विकारं तस्य चैव तम् ॥ ३१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

## त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

केशिन्या बाहुकस्य जलाद्युत्पादनाद्यद्भुतकर्मनिवेदितया दमयन्त्या पुनःपरीक्षणाय तंप्रति कन्यापुत्रयोः प्रेषणम् ॥ १ ॥ बाहुकेन सबाष्पं पुत्रयोः परिरम्भणम् । केशिनींप्रति स्वकर्मणः कारणान्तरकथनेनापह्नवश्च ॥ २ ॥

बृहदश्व उवाच ।
केशिन्यास्तद्वचः श्रुत्वा दमयन्ती विशांपते ।
शङ्कमाना नलं तं वै केशिनीमिदमब्रवीत् ॥ १
गच्छ केशिनि भूयस्त्वं परीक्षां कुरु बाहुके ।
अब्रुवाणा समीपस्था चरितान्यस्य लक्षय ॥ २
यदा च किंचित्कुर्यात्स कारणं तत्र भामिनि ।
तत्र संचेष्टमानस्य संलक्षेथा विचेष्टितम् ॥ ३
न चास्य प्रतिबन्धेन देयोऽग्निरपि केशिनि ।
याचते न जलं देयं सम्यक्त्वरमाणया ।
एतत्सर्वं समीक्ष्य त्वं चरितं मे निवेदय ॥ ४
निमित्तं यत्त्वया दृष्टं बाहुके दैवमानुषम् ।
यच्चान्यदपि पश्येथास्तच्चाख्येयं त्वया मम ॥ ५
दमयन्त्यैवमुक्ता सा जगामाथ च केशिनी ।
निशाम्याथ हयज्ञस्य लिङ्गानि पुनरागमत् ॥ ६
सा तत्सर्वं यथावृत्तं दमयन्त्यै न्यवेदयत् ।
निमित्तं यत्तया दृष्टं बाहुके दिव्यमानुषम् ॥ ७
केशिन्युवाच ।
दृढं शुच्यपदानोसौ न मया मानुषः क्वचित् ।
दृष्टपूर्वः श्रुतो वाऽपि दमयन्ति तथाविधः ॥ ८
ह्रस्वमासाद्य तु द्वारं नासौ विनमते क्वचित् ।
तं तु दृष्ट्वा यथासङ्गमुत्सर्पति यथासुखम् ।
संकटेऽप्यस्य सुमहद्विवरं जायतेऽधिकम् ॥ ९
ऋतुपर्णस्य चार्थाय भोजनीयमनेकशः ।
प्रेषितं तत्र राज्ञा तु मांसं बहु च पाशवम् ॥ १०
तस्य प्रक्षालनार्थाय कुम्भास्तत्रोपकल्पिताः ।
ते तेनावेक्षिताः कुम्भाः पूर्णा एवाभवंस्ततः ॥ ११
ततः प्रक्षालनं कृत्वा समधिश्रित्य बाहुकः ।
तृणमुष्टिं समादाय सवितुस्तं समादधत् ॥ १२
अथ प्रज्वलितस्तत्र सहसा हव्यवाहनः ।
तदद्भुततमं दृष्ट्वा विस्मिताऽहमिहागता ॥ १३
अन्यच्च तस्मिन्सुमहदाश्चर्यं लक्षितं मया ।
यदग्निमपि संस्पृश्य नैवासौ दह्यते शुभे ॥ १४
छन्देन चोदकं तस्य वहत्यावर्जितं द्रुतम् ।
अतीव चान्यत्सुमहदाश्चर्यं दृष्टवत्यहम् ॥ १५
यत्स पुष्पाण्युपादाय हस्ताभ्यां ममृदे शनैः ।
मृद्यमानानि पाणिभ्यां तेन पुष्पाणि नान्यथा ।
भूय एव सुगन्धीनि हृषितानि भवन्ति हि ॥ १६
एतान्यद्भुतकल्पानि दृष्ट्वाऽहं भृशविस्मिता ।
चेष्टितानि विशालाक्षि बाहुकस्य समीपतः ॥ १७
बृहदश्व उवाच ।
दमयन्ती तु तच्छ्रुत्वा पुण्यश्लोकस्य चेष्टितम् ।
अमन्यत नलं प्राप्तं कर्मचेष्टाभिसूचितम् ॥ १८
सा शङ्कमाना भर्तारं नलं बाहुकरूपिणम् ।
केशिनीं श्लक्ष्णया वाचा रुदन्ती पुनरब्रवीत् ॥ १९
पुनर्गच्छ प्रमत्तस्य बाहुकस्योपसंस्कृतम् ।
महानसाच्छ्रितं मांसमानयस्वेह भामिनि ॥ २०
सा दृष्ट्वा बाहुके व्यग्रे तन्मांसमपकृष्य च ।
अत्युष्णमेव त्वरिता तत्क्षणात्प्रियकारिणी ।
दमयन्त्यै ततः प्रादात्केशिनी कुरुनन्दन ॥ २१
साऽशिता नलसिद्धस्य मांसस्य बहुशः पुरा ।
प्राश्य मत्वा नलं सूतं प्राक्रोशद्भृशदुःखिता ॥ २२
वैक्लव्यं परमं गत्वा प्रक्षाल्य च मुखं ततः ।
मिथुनं प्रेषयामास केशिन्या सह भारत ॥ २३
इन्द्रसेनां सह भ्रात्रा समभिज्ञाय बाहुकः ।
अभिद्रुत्य तदा राजा परिष्वज्याङ्कमानयत् ॥ २४
बाहुकस्तु समासाद्य सुतौ सुरसुतोपमौ ।
भृशं दुःखपरीतात्मा सुस्वरं प्ररुरोद ह ॥ २५

द्वारं ह्रस्वमपि उत्सर्पति दीर्घं भवति । संकटे संकुचिते ॥ ९ ॥ पाशवं पशुसंबन्धि ॥ १० ॥ सवितुः सकाशात् । समादधत् उद्दीपितवान् । समादाय ह्याविध्यैनमिति झ. पाठः ॥ १२ ॥ कर्म पाकादि । चेष्टा भूतजयादि ॥ १८ ॥ बहुशः बहुवारम् ॥ २२ ॥

नैषधो दर्शयित्वा तु विकारमसकृत्तदा ।
उत्सृज्य सहसा पुत्रौ केशिनीमिदमब्रवीत् ॥ २६
इदं च सदृशं भद्रे मिथुनं मम पुत्रयोः ।
अतो दृष्ट्वैव सहसा बाष्पमुत्सृष्टवानहम् ॥ २७
बहुशः संपतन्तीं त्वां जनः शङ्केत दोषतः ।
वयं च देशातिथयो गच्छ भद्रे यथासुखम् ॥ २८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

## चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

दमयन्त्या बाहुकस्य केशिन्या स्वगृहानयनम् ॥ १ ॥ बाहुकदमयन्त्योः संवादः ॥ २ ॥ बाहुकेन स्वस्य नलत्वोत्कीर्तनपूर्वकं कर्कोटकानुस्मरणेन तद्दत्तवस्त्रद्वयपरिधाने तस्य निजरूपप्रादुर्भावः ॥ ३ ॥ ततो नलंप्रत्यभिजानन्त्या दमयन्त्या तत्परिरम्भणम् ॥ ४ ॥

बृहदश्व उवाच ।
सर्वं विकारं दृष्ट्वा तु पुण्यश्लोकस्य धीमतः ।
आगत्य केशिनी क्षिप्रं दमयन्त्यै न्यवेदयत् ॥ १
दमयन्ती ततो भूयः प्रेषयामास केशिनीम् ।
मातुः सकाशं दुःखार्ता नलशङ्कासमुत्सुका ॥ २
परीक्षितो मे बहुशो बाहुको नलशङ्कया ।
रूपे मे संशयस्त्वेकः स्वयमिच्छामि वेदितुम् ॥ ३
स वा प्रवेश्यतां मातर्मां वाऽनुज्ञातुमर्हसि ।
विदितं वाऽथवाऽज्ञातं पितुर्मे संविधीयताम् ॥ ४
एवमुक्ता तु वैदर्भ्या सा देवी भीममब्रवीत् ।
दुहितुस्तमभिप्रायमन्वजानात्स पार्थिवः ॥ ५
सा वै पित्राऽभ्यनुज्ञाता मात्रा च भरतर्षभ ।
'तयोर्नियोगात्कौरव्य केशिनीमिदमब्रवीत् ॥ ६
गच्छ केशिनि शीघ्रं त्वं बाहुकं पितृशासनात् ।
आनयस्व यथा माता त्वं तथा कुरु मे प्रियम् ॥ ७
गत्वा तु केशिनी शीघ्रं बाहुकं वाक्यमब्रवीत् ।
भीमस्य शासनात्सूतागताहं विद्धि बाहुक ॥ ८
प्रविश्यतां राजवेश्म इत्युक्तो भरतर्षभ ।
बाहुकस्तु चिरं ध्यात्वा केशिन्या सह भारत ।
प्रविवेश महाबाहुर्दमयन्तीनिवेशनम् ॥' ९
नलं प्रवेशयामास यत्र तस्याः प्रतिश्रयः ॥ १०
तां स दृष्ट्वैव सहसा दमयन्तीं नलो नृपः ।
आविष्टः शोकदुःखाभ्यां बभूवाश्रुपरिप्लुतः ॥ ११
तं तु दृष्ट्वा तथायुक्तं दमयन्ती नलं तदा ।
तीव्रशोकसमाविष्टा बभूव वरवर्णिनी ॥ १२
ततः काषायवसना जटिला मलपङ्किनी ।
दमयन्ती महाराज बाहुकं वाक्यमब्रवीत् ॥ १३
पूर्वं दृष्टस्त्वया कश्चिद्धर्मज्ञो नाम बाहुक ।
सुप्तामुत्सृज्य विपिने गतो यः पुरुषः स्त्रियम् ॥ १४
अनागसं प्रियां भार्यां विजने श्रममोहिताम् ।
अपहाय तु को गच्छेत्पुण्यश्लोकमृते नलम् ॥ १५
किमु तस्य मया बाल्यादपराद्धं महीपतेः ।
यो मामुत्सृज्य विपिने गतवान्निद्रयाऽर्दिताम् १६
साक्षाद्देवानपाहाय वृतो यः स पुरा मया ।
अनुव्रतामभिमतां पुत्रिणीं त्यक्तवान्कथम् ॥ १७
अग्नौ पाणिगृहीतां च हंसानां वचने स्थिताम् ।
भरिष्यामीति सत्यं तु प्रतिश्रुत्य क्व तद्गतम् ॥ १८
बृहदश्व उवाच ।
दमयन्त्या ब्रुवन्त्यास्तु सर्वमेतदरिंदम ।
शोकजं वारि नेत्राभ्यामसुखं प्रास्रवद्बहु ॥ १९
अतीव कृष्णताराभ्यां रक्तान्ताभ्यां जलं तु तत् ।
परिस्रवन्नलो राजा शोकार्त इदमब्रवीत् ॥ २०
'नलोऽहं विपुलश्रोणि त्वामुत्सृज्य यतो गतः ।
आविष्टः कलिना भद्रे तेन मोहवशं गतः ॥' २१
मम राज्यं प्रनष्टं यन्नाहं तत्कृतवान्स्वयम् ।
कलिना तत्कृतं भीरु यच्च त्वामहमत्यजम् ॥ २२

संपतन्तीं आयान्तीम् ॥ २८ ॥ त्रिसप्ततितमोऽध्यायः ॥७३॥
प्रतिश्रयः गृहम् ॥ १० ॥ किंतु तस्य मया चीर्णमपराधमिति ध. पाठः ॥ १६ ॥ अग्नौ पाणिं गृहीत्वा तु देवानामग्रतस्तथेति झ. पाठः ॥ १८ ॥

यत्त्वया धर्मकृच्छ्रे तु शापेनाभिहतः पुरा ।
वनस्थया दुःखितया शोचन्त्या मां दिवानिशम् २३
स मच्छरीरे त्वच्छापाद्दह्यमानोऽवसत्कलिः ।
त्वच्छापदग्धः सततं सोऽग्नावग्निरिवाहितः ॥ २४
मम च व्यवसायेन तपसा चैव निर्जितः ।
दुःखस्यान्तेन चानेन भवितव्यं हि नौ शुभे ॥२५
विमुच्य मां गतः पापस्ततोऽहमिह चागतः ।
त्वदर्थं विपुलश्रोणि न हि मेऽन्यत्प्रयोजनम् ॥२६
कथं नु नारी भर्तारमनुरक्तमनुव्रतम् ।
उत्सृज्य वरयेदन्यं यथा त्वं भीरु कर्हिचित् ॥२७
दूताश्चरन्ति पृथिवीं कृत्स्नां नृपतिशासनात् ।
भैमी किल स्म भर्तारं द्वितीयं वरयिष्यति ॥२८
स्वैरवृत्ता यथाकाममनुरूपमिवात्मनः ।
श्रुत्वैव चैवं त्वरितो भागस्वरिरुपस्थितः ॥ २९
दमयन्ती तु तच्छ्रुत्वा नलस्य परिदेवितम् ।
प्राञ्जलिर्वेपमाना च भीता वचनमब्रवीत् ॥ ३०
न मामर्हसि कल्याण पापेन परिशङ्कितुम् ।
मया हि देवानुत्सृज्य वृतस्त्वं निषधाधिप ॥३१
तवाभिगमनार्थं तु सर्वतो ब्राह्मणा गताः ।
वाक्यानि मम गाथाभिर्गायमाना दिशो दश ॥३२
ततस्त्वां ब्राह्मणो विद्वान्पर्णादो नाम पार्थिव ।
अभ्यगच्छत्कोसलायामृतुपर्णनिवेशने ॥ ३३
तेन वाक्ये कृते सम्यक्प्रतिवाक्ये तथा हृते ।
उपायोऽयं मया दृष्टो नैषधानयने तव ॥ ३४
त्वामृते नहि लोकेऽन्य एकाह्ना पृथिवीपते ।
समर्थो योजनशतं गन्तुमश्वैर्नराधिप ॥ ३५
'तथापि मां महीपाल भजेतां चरणौ तव ।'
स्पृशेयं तेन सत्येन पादावेतौ महीपते ।
यथा नासत्कृतं किंचिन्मनसाऽपि चराम्यहम् ॥३६
अयं चरति लोकेऽस्मिन्भूतसाक्षी सदागतिः ।
एष मे मुञ्चतु प्राणान्यदि पापं चराम्यहम् ॥३७
यथा चरति तिग्मांशुः परितो भुवनं सदा ।
स मुञ्चतु मम प्राणान्यदि पापं चराम्यहम् ॥ ३८
चन्द्रमाः सर्वभूतानामन्तश्चरति साक्षिवत् ।
स मुञ्चतु मम प्राणान्यदि पापं चराम्यहम् ॥३९
एते देवास्त्रयः कृत्स्नं त्रैलोक्यं धारयन्ति वै ।
विब्रुवन्तु यथा सत्यमेतद्देवास्त्यजन्तु माम् ॥४०
एवमुक्ते ततो वायुरन्तरिक्षादभाषत ।
नैषा कृतवती पापं नल सत्यं ब्रवीमि ते ॥ ४१
राजञ्शीलनिधिः स्फीतो दमयन्त्या सुरक्षितः ।
साक्षिणो रक्षिणश्चास्या वयं त्रीन्परिवत्सरान् ४२
उपायो विहितश्चायं त्वदर्थमतुलोऽनया ।
न ह्येकाह्ना शतं गन्ता त्वामृतेऽन्यः पुमानिह ४३
उपपन्ना त्वया भैमी त्वं च भैम्या महीपते ।
नात्र शङ्का त्वया कार्या संगच्छ सह भार्यया ४४
तथा ब्रुवति वायौ तु पुष्पवृष्टिः पपात ह ।
देवदुन्दुभयो नेदुर्ववौ च पवनः शिवः ॥ ४५
तदद्भुतमयं दृष्ट्वा नलो राजाऽथ भारत ।
दमयन्त्यां विशङ्कां तामुपाकर्षदरिंदमः ॥ ४६
ततस्तद्वस्त्रमरजः प्रावृणोद्वसुधाधिपः ।
संस्मृत्य नागराजं तं ततो लेभे स्वकं वपुः ॥४७
स्वरूपिणं तु भर्तारं दृष्ट्वा भीमसुता तदा ।
प्राक्रोशदुच्चैरालिङ्ग्य पुण्यश्लोकमनिन्दिता ॥४८
भैमीमपि नलो राजा भ्राजमानो यथा पुरा ।
सस्वजे स्वसुतौ चापि यथावत्प्रत्यनन्दत ॥ ४९
ततः स्वोरसि विन्यस्य वक्त्रं तस्य शुभानना ।
परीता तेन दुःखेन निशश्वासायतेक्षणा ॥ ५०
तथैव मलदिग्धाङ्गीं परिष्वज्य शुचिस्मिताम् ।
सुचिरं पुरुषव्याघ्रस्तस्थौ शोकपरिप्लुतः ॥ ५१
ततः सर्वं यथावृत्तं दमयन्त्या नलस्य च ।
भीमायाकथयत्प्रीत्या वैदर्भ्या जननी नृप ॥५२
ततोऽब्रवीन्महाराजः कृतशौचमहं नलम् ।
दमयन्त्या सहोपेतं कल्ये द्रष्टा सुखोषितम् ॥५३
ततस्तौ सहितौ रात्रिं कथयन्तौ पुरातनम् ।
वने विचरितं सर्वमूषतुर्मुदितौ नृप ॥ ५४

त्वां दृष्टवान्कोसलेष्विति ध. पाठः ॥ ३३ ॥ सदागतिर्वायुः ॥ ३७ ॥ चन्द्रमाश्चित्ताभिमानिनी देवता ॥ ३९ ॥ कल्ये प्रभाते । कृतार्थं तमहं नलमिति क. ध. पाठः ॥ ५३ ॥

चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

गृहे भीमस्य नृपतेः परस्परसुखैषिणौ ।
वसेतां हृष्टसंकल्पौ वैदर्भी च नलश्च ह ॥ ५५
स चतुर्थे ततो वर्षे संगम्य सह भार्यया ।
सर्वकामैः सुसिद्धार्थो लब्धवान्परमां मुदम् ॥ ५६
दमयन्त्यपि भर्तारमासाद्याप्यायिता भृशम् ।
अर्धसंजातसस्येव तोयं प्राप्य वसुंधरा ॥ ५७
सैवं समेत्य व्यपनीय तन्द्रां
शान्तज्वरा हर्षविवृद्धसत्त्वा ।
रराज भैमी समवाप्तकामा
शीतांशुना रात्रिरिवोदितेन ॥ ५८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

## पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

परेद्युः प्रभाते भीमराजेन स्नातालंकृतयोर्नलदमयन्त्योर्दर्शनम् ॥ १ ॥ ऋतुपर्णेन नलं क्षमापयित्वा ततोऽश्वविद्यापरिग्रहणपूर्वकं स्वपुरंप्रति गमनम् ॥ २ ॥

बृहदश्व उवाच ।
अथ तां व्युषितो रात्रिं नलो राजा स्वलंकृतः ।
वैदर्भ्या सहितः काल्यं ददर्श वसुधाधिपम् ॥ १
ततोऽभिवादयामास प्रयतः श्वशुरं नलः ।
ततो नु दमयन्ती च ववन्दे पितरं शुभा ॥ २
तं भीमः प्रतिजग्राह पुत्रवत्परया मुदा ।
यथार्हं पूजयित्वा च समाश्वासयत प्रभुः ॥ ३
नलेन सहितां तत्र दमयन्तीं पतिव्रताम् ।
'अनुजग्राह महता सत्कारेण क्षितीश्वरः ॥' ४
तामर्हणां नलो राजा प्रतिगृह्य यथाविधि ।
परिचर्यां स्वकां तस्मै यथावत्प्रत्यवेदयत् ॥ ५
ततो बभूव नगरे सुमहान्हर्षजः स्वनः ।
जनस्य संप्रहृष्टस्य नलं दृष्ट्वा तथाऽऽगतम् ॥ ६
अशोभयच्च नगरीं पताकाध्वजमालिनीम् ।
सिक्ताः सुमृष्टपुष्पाढ्या राजमार्गाः स्वलंकृताः ७
द्वारिद्वारि च पौराणां पुष्पभङ्गः प्रकल्पितः ।
अर्चितानि च सर्वाणि देवतायतनानि च ॥ ८
ऋतुपर्णोऽपि शुश्राव बाहुकच्छन्निनं नलम् ।
दमयन्त्या समायुक्तं जहृषे च नराधिपः ॥ ९
तमानाय्य नलं राजा क्षमयामास पार्थिवः ।
स च तं क्षमयामास हेतुभिर्बुद्धिसंमितः ॥ १०
स सत्कृतो महीपालो नैषधं विस्मिताननः ।
दिष्ट्या समेतो दारैः स्वैर्भवानित्यभ्यनन्दत ॥ ११
कच्चित्तु नापराधं ते कृतवानस्मि नैषध ।
अज्ञातवासे वसतो मद्गृहे वसुधाधिप ॥ १२
यदि वाऽबुद्धिपूर्वाणि यदि बुद्ध्याऽपि कानिचित् ।
मया कृतान्यकार्याणि तानि त्वं क्षन्तुमर्हसि ॥ १३
नल उवाच ।
न मेऽपराधं कृतवांस्त्वं स्वल्पमपि पार्थिव ।
कृतेऽपि च न मे कोपः क्षन्तव्यं हि मया तव ॥ १४
पूर्वं ह्यपि सखा मेऽसि संबन्धी च जनाधिप ।
अत ऊर्ध्वं तु भूयस्त्वं प्रीतिमाहर्तुमर्हसि ॥ १५
सर्वकामैः सुविहितैः सुखमस्म्युषितस्त्वयि ।
न तथा स्वगृहे राजन्यथा तव गृहे सदा ॥ १६
इदं चैव हयज्ञानं त्वदीयं मयि तिष्ठति ।
तदुपाकर्तुमिच्छामि मन्यसे यदि पार्थिव ॥ १७
एवमुक्त्वा ददौ विद्यामृतुपर्णाय नैषधः ।
स च तां प्रतिजग्राह विधिदृष्टेन कर्मणा ॥ १८
गृहीत्वा चाश्वहृदयं प्रीतो भागस्वरिर्नृप ।
निषधाधिपतेश्चापि दत्त्वाऽक्षहृदयं नृपः ।
सूतमन्यमुपादाय ययौ स्वपुरमेव ह ॥ १९

जनाश्च सर्वे संहृष्टा राजा चोत्सवमाचरदिति ध. पाठः ॥ ६ ॥ पुष्पभङ्गः पुष्पसंमर्दः ॥ ८ ॥ उपाकर्तुं दातुम् ॥ १७ ॥

पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

ऋतुपर्णे गते राजन्नलो राजा विशांपते । नगरे कुण्डिने कालं नातिदीर्घमिवावसत् ॥ २०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

## षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

नलेन पुनः स्वपुरंप्रत्यागमनम् ॥ १ ॥ तथा पुनर्द्यूतेन पुष्करं पराजित्य तस्य तत्पुरं प्रतियापनम् ॥ २ ॥

बृहदश्व उवाच ।
स मासमुष्य कौन्तेय भीममामन्त्र्य नैषधः ।
पुरादल्पपरीवारो जगाम निषधान्प्रति ॥ १
रथेनैकेन शुभ्रेण दन्तिभिः परिषोडशैः ।
पञ्चाशद्भिर्हयैश्चैव षट्शतैश्च पदातिभिः ॥ २
स कम्पयन्निव महीं त्वरमाणो महापुरीम् ।
प्रविवेशाथ संरब्धस्तरसैव महामनाः ॥ ३
ततः पुष्करमासाद्य वीरसेनसुतो नलः ।
उवाच दीव्याव पुनर्बहुवित्तं मयाऽर्जितम् ॥ ४
दमयन्ती च यच्चान्यन्मम किंचन विद्यते ।
एष वै मम संन्यासस्तव राज्यं तु पुष्कर ॥ ५
पुनः प्रवर्ततां द्यूतमिति मे निश्चिता मतिः ।
एकपाणेन भद्रं ते प्राणयोश्च पणावहे ॥ ६
जित्वा परस्वमाहृत्य राज्यं वा यदि वा वसु ।
प्रतिपाणः प्रदातव्यः प्राणो हि पणमुच्यते ॥ ७
न चेद्वाञ्छसि तद्द्यूतं युद्धद्यूतं प्रवर्तताम् ।
द्वैरथेनास्तु वै शान्तिस्तव वा मम वा नृप ॥ ८
वंशभोज्यमिदं राज्यमर्थितव्यं यथा तथा ।
येनकेनाप्युपायेन वृद्धानामिति शासनम् ॥ ९
द्वयोरेकतरे बुद्धिः क्रियतामद्य पुष्कर ।
कैतवेनाक्षवत्यां वा युद्धे वा नाम्यतां धनुः ॥ १०
नैषधेनैवमुक्तस्तु पुष्करः प्रहसन्निव ।
ध्रुवमात्मजयं मत्वा प्रत्याह निषधाधिपम् ॥ ११
दिष्ट्या त्वयाऽर्जितं वित्तं प्रतिपाणाय नैषध ।
दिष्ट्या च दुष्कृतं कर्म दमयन्त्याः क्षयं गतम् १२
दिष्ट्या वै प्रीयसे राजन्मम लाभाय नैषध ।
पुनर्द्यूते च ते बुद्धिर्दिष्ट्या पुरुषसत्तम ॥ १३
धनेनानेन वै भैमी जितेन समलंकृता ।
मामुपस्थास्यति व्यक्तं दिवि शक्रमिवाप्सराः १४
नित्यशो हि स्मरामि त्वां प्रतीक्षेऽपि च नैषध ।
देवने च मम प्रीतिर्भवत्येवासुहृद्गणैः ॥ १५
जित्वा त्वद्य वरारोहां दमयन्तीमनिन्दिताम् ।
कृतकृत्यो भविष्यामि सा हि मे नित्यशो हृदि १६
श्रुत्वा तु तस्य ता वाचो बह्वबद्धप्रलापिनः ।
इयेष स शिरश्छेत्तुं खड्गेन कुपितो नलः ॥ १७
स्मयंस्तु रोषताम्राक्षस्तमुवाच नलो नृपः ।
पणावः किं व्याहरसे जितो न व्याहरिष्यसि १८
ततः प्रावर्तत द्यूतं पुष्करस्य नलस्य च ।
एकपाणेन भद्रं ते नलेन स पराजितः ॥ १९
स रत्नकोशनिचयैः प्राणेन पणितोपि च ।
जित्वा च पुष्करं राजा प्रहसन्निदमब्रवीत् ॥ २०
मम सर्वमिदं राज्यमव्यग्रं हतकण्टकम् ।
वैदर्भी न त्वया शक्या राजापशद वीक्षितम् ।
तस्यास्त्वं सपरीवारो मूढ दासत्वमागतः ॥ २१
न त्वया तत्कृतं कर्म येनाहं विजितः पुरा ।
कलिना तत्कृतं कर्म त्वं च मूढ न बुध्यसे ॥ २२
नाहं परकृतं दोषं त्वय्याधास्ये कथंचन ।
यथासुखं वै जीव त्वं प्राणानवसृजामि ते ॥ २३
तथैव सर्वसंभारं स्वमंशं वितरामि ते ।
तथैव च मम प्रीतिस्त्वयि वीर न संशयः ॥ २४

उष्य वासं कृत्वा ॥ १ ॥ दमयन्त्या च यच्चान्यज्जय त्वं सुसमार्जितमिति ध. पाठः ॥ ५ ॥ राज्यं एकपाणेनैव मम तु-दमयन्त्यादि च प्राणयोश्च पणावहे युद्धमपि वर्ततामित्यर्थः ॥ ६ ॥ प्राणो हि धनमुच्यते इति ध. पाठः ॥ ७ ॥ प स्त-गतं राज्यं इति ध. पाठः ॥ ९ ॥ दिष्ट्या च ध्रियसे राजन्सदारोऽद्य महाभुजेति झ. पाठः ॥ १३ ॥ पणाय किं व्याहरसे शीघ्रं द्यूतं प्रवर्ततामिति क. पाठः ॥ १८ ॥ षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

सौहार्दं चापि मे त्वत्तो न कदाचित्प्रहास्यति ।
पुष्कर त्वं हि मे भ्राता संजीव शरदः शतम् ॥२५
एवं नलः सान्त्वयित्वा भ्रातरं सत्यविक्रमः ।
वचनैस्तोषयामास परिष्वज्य पुनः पुनः ॥ २६
सान्त्वितो नैषधेनैवं पुष्करः प्रत्युवाच तम् ।
पुण्यश्लोकं तदा राजन्नभिवाद्य कृताञ्जलिः ॥ २७
कीर्तिरस्तु तवाक्षय्या जीव वर्षायुतं सुखी ।
यो मे वितरसि प्राणानधिष्ठानं च पार्थिव ॥ २८
स तथा सत्कृतो राज्ञा मासमुष्य तदा नृपः ।
प्रययौ पुष्करो हृष्टः स्वपुरं स्वजनावृतः ॥ २९
महत्या सेनया सार्धं विनीतैः परिचारकैः ।
भ्राजमान इवादित्यो वपुषा पुरुषर्षभ ॥ ३०
प्रस्थाप्य पुष्करं राजा वित्तवन्तमनामयम् ।
प्रविवेश पुरं श्रीमानत्यर्थमुपशोभिताम् ॥ ३१
प्रविश्य सान्त्वयामास पौरांश्च निषधाधिपः ।
'हितेषु चैषां सततं पितेवावहितोऽभवत् ॥' ३२
पौरा जानपदाश्चापि संप्रहृष्टतनूरुहाः ।
ऊचुः प्राञ्जलयः सर्वे सामात्यप्रमुखा जनाः ॥३३
अद्य स्म निर्वृता राजन्पुरे जनपदेऽपि च ।
उपासितुं पुनः प्राप्ता देवा इव शतक्रतुम् ॥ ३४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

---

## सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

पुष्करं निष्कासितवता नलेन कुण्डिनपुरात्सपुत्राया दमयन्त्या आनयनपूर्वकं प्रजापालनेन सुखवासः ॥ १ ॥ बृहदश्वेन युधिष्ठिरायाक्षहृदयविद्योपदेशपूर्वकं संक्षेपेण हरिश्चन्द्रोपाख्यानकथनम् ॥ २ ॥

बृहदश्व उवाच ।
प्रशान्ते तु पुरे हृष्टे संप्रवृत्ते महोत्सवे ।
महत्या सेनया राजा दमयन्तीमुपानयत् ॥ १
'पुण्यश्लोकं तु राज्यस्थं श्रुत्वा भीमो महीपतिः ।
मुदा परमया युक्तो बभूव भरतर्षभ ॥ २
अथ हृष्टमना राजा महत्या सेनया सह ।
सुतां प्रस्थापयामास पुण्यश्लोकाय धीमते ॥' ३
दमयन्तीमपि पिता सत्कृत्य परवीरहा ।
प्रास्थापयदमेयात्मा भीमो भीमपराक्रमः ॥ ४
आगतायां तु वैदर्भ्यां सपुत्रायां नलो नृपः ।
वर्तयामास मुदितो देवराडिव नन्दने ॥ ५
तथा प्रकाशतां यातो जम्बूद्वीपे स राजसु ।
पुनः स्वे चावसद्राज्ये प्रत्याहृत्य महायशाः ॥ ६
ईजे च विविधैर्यज्ञैर्विधिवच्चाप्तदक्षिणैः ।
तथा त्वमपि राजेन्द्र ससुहृद्वक्ष्यसे चिरात् ॥ ७
दुःखमेतादृशं प्राप्तो नलः परपुरंजयः ।
देवनेन नरश्रेष्ठ सभार्यो भरतर्षभ ॥ ८
एकाकिनैव सुमहन्नलेन पृथिवीपते ।
दुःखमासादितं घोरं प्राप्तश्चाभ्युदयः पुनः ॥ ९
त्वं पुनर्भ्रातृसहितः कृष्णया चैव पाण्डव ।
कथाश्चापि समाकर्ण्य धर्ममेवानुचिन्तयन् ॥ १०
ब्राह्मणैश्च महाभागैर्वेदवेदाङ्गपारगैः ।
नित्यमन्वास्यसे राजंस्तत्र का परिदेवना ॥ ११
कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।
ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ॥ १२
इतिहासमिमं चापि कलिनाशनमच्युत ।
शक्यमाश्वसितुं श्रुत्वा त्वद्विधेन विशांपते ॥१३
अस्थिरत्वं च संचिन्त्य पुरुषार्थस्य नित्यदा ।
तस्योदये व्यये चापि न चिन्तयितुमर्हसि ॥१४
श्रुत्वेतिहासं नृपते समाश्वसिहि मा शुचः ।
व्यसने त्वं महाराज न विषीदितुमर्हसि ॥ १५
विषमावस्थिते दैवे पौरुषेऽफलतां गते ।
विषादयन्ति नात्मानं सत्त्वापाश्रयिणो नराः १६
ये चेदं कथयिष्यन्ति नलस्य चरितं महत् ।

---

प्रशान्ते वीतशोके । प्रशान्ते पुष्करे हृष्टे इति क. पाठः ॥ १ ॥ वक्ष्यसे दीव्यसे । वश कान्ताविलस्य रूपम् । ससुहृत्त्यक्ष्यसे ह्यघमिति क. पाठः ॥ ७ ॥

श्रोष्यन्ति चाप्यभीक्ष्णं वै नालक्ष्मीस्तान्भजिष्यति
अर्थास्तस्योपपत्स्यन्ते धन्यतां च गमिष्यति ।
इतिहासमिमं श्रुत्वा पुराणं शश्वदुत्तमम् ॥ १८
पुत्रान्पौत्रान्पशूंश्चापि लभते नृषु चाग्र्यताम् ।
आरोग्यप्रीतिमांश्चैव भविष्यति न संशयः ॥ १९
भयात्त्रस्यसि यच्च त्वमाह्वयिष्यति मां पुनः ।
अक्षज्ञ इति तत्तेऽहं नाशयिष्यामि पार्थिव ॥ २०
वेदाक्षहृदयं कृत्स्नमहं सत्यपराक्रम ।
उपपद्यस्व कौन्तेय प्रसन्नोऽहं ब्रवीमि ते ॥ २१
वैशंपायन उवाच ।
ततो हृष्टमना राजा बृहदश्वमुवाच ह ।
भगवन्नक्षहृदयं ज्ञातुमिच्छामि तत्त्वतः ॥ २२
'कौन्तेयेनैवमुक्तस्तु बृहदश्वो महामुनिः ।'
ततोऽक्षहृदयं प्रादात्पाण्डवाय महात्मने ।
'लब्ध्वा च पाण्डवो राजा विशोकः समपद्यत २३
बृहदश्व उवाच ।
पुनरेव तु वक्ष्यामि यस्त्वत्तो दुःखितो नृपः ।
तं शृणुष्व महाराज सर्वदुःखापनुत्तये ॥ २४
इक्ष्वाकूणां कुले जातो महात्मा पृथिवीपतिः ।
त्रिशङ्कुरिति विख्यातो राजराजो महाद्युतिः ॥ २५
हरिश्चन्द्रस्ततो जज्ञे गुणरत्नाकरो नृपात् ।
ततो विशेषैर्विविधैर्यज्ञैर्विपुलदक्षिणैः ॥ २६
स तु लोके वरः पुंसां पुण्यश्लोको महायशाः ।
सत्यवादी मधुरवाक्सत्येन बहुभाषिता ॥ २७
तस्य भार्याऽभवद्भूमौ सौशील्यसमलंकृता ।
उशीनरस्य राजर्षेर्दुहिता पुण्यलक्षणा ॥ २८
स्वयंवरे महाभागं वरयामास भामिनी ।
हरिश्चन्द्रं समेतानां राज्ञां मध्ये पतिं विभुम् ॥२९
तया सह महीपालः सत्यवत्या मनोज्ञया ।
रेमे च सुचिरं कालं राजा राज्यमवाप्य च ॥३०
तस्यां देव्यां हरिश्चन्द्राज्जज्ञे राजीवलोचनः ।
पुत्रः पुण्यवतां श्रेष्ठो लोहिताश्व इति श्रुतः॥३१
देव्या पुत्रेण सहितः पुण्यश्लोको महायशाः ।
वसिष्ठयाज्यो नृपतिरीजे शुण्यैर्महाध्वरैः ॥ ३२
एतस्मिन्नेव काले तु विश्वामित्रो दिवं गतः ।
पुरुहूतपुरीं रम्यामाजगामेन्द्रसेवया ॥ ३३
उपस्थाने च संवृत्ते देवेन्द्रस्य महात्मनः ।
आजगाम वसिष्ठोऽपि वामदेवसहायवान् ॥ ३४
उपस्थाने च संवृत्ते सुखासीने पुरंदरे ।
वर्ण्यमानेषु च तदा सत्यवादिषु राजसु ॥ ३५
तस्यां संसदि सर्वस्माद्धरिश्चन्द्रोऽपि पप्रथे ।
यज्ञदानतपःशीलसत्यवाक्यदृढव्रतैः ॥ ३६
वसिष्ठः परमप्रीतः स्वयाज्यपरिकीर्तनात् ।
तथापि विश्वामित्रस्तं न सेहे सत्यभूषितम् ॥३७
हरिश्चन्द्रं प्रति तदा विश्वामित्रवसिष्ठयोः ।
पणः कृतस्तदा पश्चाद्विश्वामित्रेण पार्थिवः ॥ ३८
राज्याच्चापि सुखाच्चापि सहसा चावरोपितः ।
अवाप परमं दुःखं मरणादमनोहरम् ॥ ३९
वैशंपायन उवाच ।
तच्छ्रुत्वा परमप्रीतो धर्मराजो युधिष्ठिरः ।
भ्रातृभिर्ब्राह्मणैश्चैव द्रौपद्या च समन्वितः ।
विस्मयं परमं गत्वा साधुसाध्वित्यभाषत ॥ ४०
ततो हरिश्चन्द्रकथां च सर्वे
श्रुत्वा तु राजा मनुजेन्द्रकेतुः ।
विहाय शोकं विजहार भूयः
स्मरन्हरिश्चन्द्रमनन्तकीर्तिम् ॥ ४१
कथामेवं तथा कृत्वा हरिश्चन्द्रनलाश्रयाम् ।
आमन्त्र्य पाण्डवान्सर्वान्बृहदश्वो जगाम ह ।'
उक्त्वा चाशु सरोऽगच्छदुपस्प्रष्टुं महातपाः ॥ ४२
बृहदश्वे गते पार्थमश्रौषीत्सव्यसाचिनम् ।
वर्तमानं तपस्युग्रे वायुभक्षं मनीषिणम् ॥ ४३
ब्राह्मणेभ्यस्तपस्विभ्यः संपतद्भ्यस्ततस्ततः ।
तीर्थशैलवनेभ्यश्च समेतेभ्यो दृढव्रतः ॥ ४४
इति पार्थो महाबाहुर्दुरापं तप आस्थितः ।
न तथा दृष्टपूर्वोऽन्यः कश्चिदुग्रतपा इति ॥ ४५
यथा धनंजयः पार्थस्तपस्वी नियतव्रतः ।
मुनिरेकचरः श्रीमान्धर्मो विग्रहवानिव ॥ ४६

वेद वेद्मि । उपपद्यस्व गृहाण ॥ २१ ॥

सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

तं श्रुत्वा पाण्डवो राजंस्तप्यमानं महावने ।
अन्वशोचत कौन्तेयः प्रियं वै भ्रातरं जयम् ॥४७
दह्यमानेन तु हृदा शरणार्थी महावने ।
ब्राह्मणान्विविधज्ञानान्पर्यपृच्छद्युधिष्ठिरः ॥ ४८
'प्रतिगृह्याक्षहृदयं कुन्तीपुत्रो युधिष्ठिरः ।
आसीद्धृष्टमना राजन्भीमसेनादिभिर्युतः ॥ ४९
स्वभ्रातॄन्सहितान्पश्यन्कुन्तीपुत्रो युधिष्ठिरः ।
अपश्यन्नर्जुनं तत्र बभूवाश्रुपरिप्लुतः ॥ ५०
संतप्यमानः कौन्तेयो भीमसेनमुवाच ह ।
कदा द्रक्ष्यामि वै भीम पार्थमत्र तवानुजम् ॥५१
मत्कृते हि कुरुश्रेष्ठ तप्यते परमं तपः ।
तस्याक्षहृदयज्ञानमाख्यास्यामि कदा न्वहम् ॥ ५२
स हि श्रुत्वाऽक्षहृदयं समुपात्तं मया विभो ।
प्रहृष्टः पुरुषव्याघ्रो भविष्यति न संशयः ॥' ५३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

समाप्तं च नलोपाख्यानपर्व ॥ ५ ॥

---

# ( अथ तीर्थयात्रापर्व ॥ ६ ॥ )

## अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

अर्जुनविनाभावेन काम्यकवने निवासमरोचयानैः पाण्डवैस्तस्मान्निर्गमननिर्धारणम् ॥ १ ॥

---

जनमेजय उवाच ।
भगवान्काम्यकात्पार्थे गते मे प्रपितामहे ।
पाण्डवाः किमकुर्वंस्ते तमृते सव्यसाचिनम् ॥ १
स हि तेषां महेष्वासो गतिरासीदनीकजित् ।
आदित्यानां यथा विष्णुस्तथैव प्रतिभाति मे ॥२
तेनेन्द्रसमवीर्येण संग्रामेष्वनिवर्तिना ।
विनाभूता वने वीराः कथमासन्पितामहाः ॥ ३
वैशंपायन उवाच ।
गते तु पाण्डवे तात काम्यकात्सव्यसाचिनि ।
बभूवुः कौरवेयास्ते दुःखशोकपरायणाः ॥ ४
आक्षिप्तसूत्रा मणयश्छिन्नपक्षा इवाण्डजाः ।
अप्रीतमनसः सर्वे बभूवुरथ पाण्डवाः ॥ ५
वनं तु तदभूत्तेन हीनमक्लिष्टकर्मणा ।
कुबेरेण यथा हीनं वनं चैत्ररथं तथा ॥ ६
तमृते ते नरव्याघ्राः पाण्डवा जनमेजय ।
मुदमप्राप्नुवन्तो वै काम्यके न्यवसंस्तदा ॥ ७
ब्राह्मणार्थे पराक्रान्ताः शुद्धैर्बाणैर्महारथाः ।
निघ्नन्तो भरतश्रेष्ठ मेध्यान्बहुविधान्मृगान् ॥ ८
नित्यं हि पुरुषव्याघ्रा वन्याहारमरिंदमाः ।
प्रविसृत्य समाहृत्य ब्राह्मणेभ्यो न्यवेदयन् ॥ ९
एवं ते न्यवसंस्तत्र सोत्कण्ठाः पुरुषर्षभाः ।
अहृष्टमनसः सर्वे गते राजन्धनंजये ॥ १०
अथ विप्रोषितं राजन्पाञ्चाली मध्यमं पतिम् ।
स्मरन्ती पाण्डवश्रेष्ठमिदं वचनमब्रवीत् ॥ ११
योऽर्जुनेनार्जुनस्तुल्यो द्विबाहुर्बहुबाहुना ।
तमृते पाण्डवश्रेष्ठं वनं न प्रतिभाति मे ॥ १२
शून्यामिव प्रपश्यामि तत्रतत्र महीमिमाम् ।
बह्वाश्चर्यमिदं चापि वनं कुसुमितद्रुमम् ॥ १३
न तथा रमणीयं वै तमृते सव्यसाचिनम् ।
नीलाम्बुदसमप्रख्यं मत्तमातङ्गगामिनम् ॥ १४
तमृते पुण्डरीकाक्षं काम्यकं नातिभाति मे ।
यस्य वा धनुषो घोषः श्रूयते चाशनिस्वनः ।
न लभे शर्म वै राजन्स्मरन्ती सव्यसाचिनम् ॥१५
तथा लालप्यमानां तां निशाम्य परवीरहा ।
भीमसेनो महाराज द्रौपदीमिदमब्रवीत् ॥ १६
मनःप्रीतिकरं भद्रे यद्ब्रवीषि सुमध्यमे ।

---

आक्षिप्तसूत्राश्छिन्नसूत्राः । अण्डजाः पक्षिणः ॥ ५ ॥

मेध्यान् यज्ञार्हान् ॥ ८ ॥

तन्मे प्रीणाति हृदयममृतप्राशनोपमम् ॥ १७
यस्य दीर्घौ समौ पीनौ भुजौ परिघसन्निभौ ।
मौर्वीकृतकिणौ वृत्तौ खड्गायुधधनुर्धरौ ॥ १८
निष्काङ्गदकृतापीडौ पञ्चशीर्षाविवोरगौ ।
तमृते पुरुषव्याघ्रं नष्टसूर्यमिवाम्बरम् ॥ १९
यमाश्रित्य महाबाहुं पाञ्चालाः कुरवस्तथा ।
सुराणामपि यत्तानां पृतनासु न बिभ्यति ॥ २०
यस्य बाहू समाश्रित्य वयं सर्वे महात्मनः ।
मन्यामहे जितानाजौ परान्प्राप्तां च मेदिनीम् २१
तमृते फल्गुनं वीरं न लभे काम्यके धृतिम् ।
पश्यामि च दिशः सर्वास्तिमिरेणावृता इव ॥२२
ततोऽब्रवीत्साश्रुकण्ठो नकुलः पाण्डुनन्दनः ।
यस्मिन्दिव्यानि कर्माणि कथयन्ति रणाजिरे ।
देवा अपि युधांश्रेष्ठं तमृते का रतिर्वने ॥ २३
उदीचीं यो दिशं गत्वा जित्वा युधि महाबलान् ।
गन्धर्वमुख्याञ्शतशो हयाँल्लेभे महाद्युतिः ॥२४
राज्ञे तित्तिरिकल्माषाञ्श्रीमतोऽनिलरंहसः ।
प्रादाद्भ्रात्रे प्रियः प्रेम्णा राजसूये महाक्रतौ ॥२५
तमृते भीमधन्वानं भीमादवरजं वने ।
कामये काम्यके वासं नेदानीममरोपमम् ॥ २६
सहदेव उवाच ।
यो धनानि न कन्याश्च युधि हित्वा महाबलान् ।
'शतशो घातयित्वाऽरीन्पृतनामध्यगस्तदा ।'
आजहार पुरा राज्ञे राजसूये महाक्रतौ ॥ २७
यः समेतान्मृधे जित्वा यादवानमितद्युतिः ।
सुभद्रामाजहारैको वासुदेवस्य संमते ॥ २८
'येनार्धराज्यमाच्छिद्य द्रुपदस्य महात्मनः ।
आचार्यदक्षिणा दत्ता रणे द्रोणस्य भारत ॥' २९
तस्य जिष्णोर्बृसीं दृष्ट्वा शून्यामिव निवेशने ।
हृदयं मे महाराज न शाम्यति कदाचन ॥ ३०
वनादस्माद्विवासं तु रोचयेऽहमरिंदम ।
न हि नस्तमृते वीरं रमणीयमिदं वनम् ॥ ३१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

## एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

युधिष्ठिरेण काम्यकवनमुपागतं नारदंप्रति भूप्रादक्षिण्येन तीर्थयात्राफलप्रश्नः ॥ १ ॥ नारदेन तत्कथनाय पुलस्त्यभीष्मसंवादानुवादारम्भः ॥ २ ॥

वैशंपायन उवाच ।
'धनञ्जयोत्सुकास्ते तु वने तस्मिन्महारथाः ।
न्यवसन्त महाभागा द्रौपद्या सह कृष्णया ॥' १
धनंजयोत्सुकानां तु भ्रातॄणां कृष्णया सह ।
श्रुत्वा वाक्यानि विमना धर्मराजोऽप्यजायत ॥ २
अथापश्यन्महात्मानं देवर्षिं तत्र नारदम् ।
दीप्यमानं श्रिया ब्राह्म्या दीप्ताग्निसमतेजसम् ॥३
तमागतमभिप्रेक्ष्य भ्रातृभिः सह धर्मराट् ।
प्रत्युत्थाय यथान्यायं पूजां चक्रे महात्मने ॥ ४
स तैः परिवृतः श्रीमान्भ्रातृभिः कुरुसत्तमः ।
विबभावतिदीप्तौजा देवैरिव शतक्रतुः ॥ ५
यथा च वेदान्सावित्री याज्ञसेनी तथा पतीन् ।
न जहौ धर्मतः पार्थान्मेरुमर्कप्रभा यथा ॥ ६
'अर्घ्यं पाद्यमथानीय त्वभ्यवादयदच्युतः ।
नारदस्तु महातेजाः स्वस्त्यस्त्वित्यभ्यभाषत ॥७
ततो युधिष्ठिरो राजा दृष्ट्वा देवर्षिसत्तमम् ।
यथार्हं पूजयामास विधिवत्कुरुनन्दनः ॥' ८
प्रतिगृह्य च तां पूजां नारदो भगवानृषिः ।
आश्वासयद्धर्मसुतं युक्तरूपमिवानघ ॥ ९
उवाच च महात्मानं धर्मराजं युधिष्ठिरम् ।

---

किणं आघातचिह्नम् ॥ १८ ॥ निष्काङ्गदकृतापीडौ साष्टशतं सुवर्णाः निष्कः तत्कृतेनाङ्गदेन कृतभूषणौ ॥ १९ ॥ बृसीं आसनम् ॥ ३० ॥ अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

ब्रूहि धर्मभृतां श्रेष्ठ केनार्थः किं ददानि ते ॥ १०
अथ धर्मसुतो राजा प्रणम्य भ्रातृभिः सह ।
उवाच प्राञ्जलिर्भूत्वा नारदं देवसंमितम् ॥ ११
त्वयि तुष्टे महाभाग सर्वलोकाभिपूजिते ।
कृतमित्येव मन्येऽहं प्रसादात्तव सुव्रत ॥ १२
यदि त्वहमनुग्राह्यो भ्रातृभिः सहितोऽनघ ।
संदेहं मे मुनिश्रेष्ठ तत्वतश्छेत्तुमर्हसि ॥ १३
प्रदक्षिणां यः कुरुते पृथिवीं तीर्थतत्परः ।
किं फलं तस्य कात्स्न्र्येन तद्भवान्वक्तुमर्हति ॥ १४
नारद उवाच ।
शृणु राजन्नवहितो यथा भीष्मेण धीमता ।
पुलस्त्यस्य सकाशाद्वै सर्वमेतदुपश्रुतम् ॥ १५
पुरा भागीरथीतीरे भीष्मो धर्मभृतांवरः ।
पित्र्यं व्रतं समास्थाय न्यवसन्मुनिभिः सह ॥ १६
शुभे देशे तथा राजन्पुण्ये देवर्षिसेविते ।
गङ्गाद्वारे महाभाग देवगन्धर्वसेविते ॥ १७
स पितॄंस्तर्पयामास देवांश्च परमद्युतिः ।
ऋषींश्च तर्पयामास विधिदृष्टेन कर्मणा ॥ १८
कस्य चित्त्वथ कालस्य जपन्नेव महायशाः ।
ददर्शाद्भुतसंकाशं पुलस्त्यमृषिसत्तमम् ॥ १९
स तं दृष्ट्वोग्रतपसं दीप्यमानमिव श्रिया ।
प्रहर्षमतुलं लेभे विस्मयं परमं ययौ ॥ २०
उपस्थितं महाभागं पूजयामास भारत ।
भीष्मो धर्मभृतां श्रेष्ठो विधिदृष्टेन कर्मणा ॥ २१
शिरसा चार्घमादाय शुचिः प्रयतमानसः ।
नाम संकीर्तयामास तस्मिन्ब्रह्मर्षिसत्तमे ॥ २२
भीष्मोऽहमस्मि भद्रं ते दासोऽस्मि तव सुव्रत ।
तव संदर्शनादेव मुक्तोऽहं सर्वकिल्बिषैः ॥ २३
एवमुक्त्वा महाराज भीष्मो धर्मभृतांवरः ।
वाग्यतः प्राञ्जलिर्भूत्वा तूष्णीमासीद्युधिष्ठिर ॥ २४
तं दृष्ट्वा नियमेनाथ स्वाध्यायाम्नायकर्शितम् ।
भीष्मं कुरुकुलश्रेष्ठं मुनिः प्रीतमनाऽभवत् ॥ २५
'ततः स मधुरेणाथ स्वरेण सुमहातपाः ।
उवाच वाक्यं धर्मज्ञः पुलस्त्यः प्रीतमानसः ॥' २६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

## अशीतितमोऽध्यायः ॥ ८० ॥

पुलस्त्येन भीष्मंप्रति पुष्करादितीर्थमहिमानुवर्णनम् ॥ १ ॥

पुलस्त्य उवाच ।
अनेन तव धर्मज्ञ प्रश्रयेण दमेन च ।
सत्येन च महाभाग तुष्टोस्मि तव सुव्रत ॥ १
यस्येदृशस्ते धर्मोऽयं पितृवाक्याश्रितोऽनघ ।
तेन पश्यसि मां पुत्र प्रीतिश्च परमा त्वयि ॥ २
अमोघदर्शी भीष्माहं ब्रूहि किं करवाणि ते ।
यद्वक्ष्यसि कुरुश्रेष्ठ तस्य दाताऽस्मि तेऽनघ ॥ ३
भीष्म उवाच ।
प्रीते त्वयि महाभाग सर्वलोकाभिपूजिते ।
कृतमित्येव मन्येऽहं यदहं दृष्टवान्प्रभुम् ॥ ४
यदि त्वहमनुग्राह्यस्तव धर्मभृतांवर ।
संदेहं ते प्रवक्ष्यामि तन्मे त्वं छेत्तुमर्हसि ॥ ५
अस्ति मे भगवन्कश्चित्तीर्थानि प्रति संशयः ।
तमहं श्रोतुमिच्छामि तद्भवान्वक्तुमर्हति ॥ ६
प्रदक्षिणां यः पृथिवीं करोत्यमरसन्निभ ।
किं फलं तस्य विप्रर्षे तन्मे ब्रूहि तपोधन ॥ ७
पुलस्त्य उवाच ।
हन्त तेऽहं प्रवक्ष्यामि यदृषीणां परायणम् ।
तदेकाग्रमनास्तात शृणु तीर्थेषु यत्फलम् ॥ ८
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ ९
प्रतिग्रहादपावृत्तः संतुष्टो येन केनचित् ।

---

अपावृत्तो निवृत्तः । संतुष्टो नियतः शुचिरिति क. ध. | पाठः ॥ १० ॥

अहंकारनिवृत्तश्च स तीर्थफलमश्नुते ॥ १०
अकल्कको निरारम्भो लघ्वाहारो जितेन्द्रियः ।
विमुक्तः सर्वपापेभ्यः स तीर्थफलमश्नुते ॥ ११
अक्रोधनश्च राजेन्द्र सत्यशीलो दृढव्रतः ।
आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते ॥ १२
ऋषिभिः क्रतवः प्रोक्ता देवेष्विह यथाक्रमम् ।
फलं चैव यथातत्त्वं प्रेत्य चेह च सर्वशः ॥ १३
न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं महीपते ।
बहूपकरणा यज्ञा नानासंभारविस्तराः ॥ १४
प्राप्यन्ते पार्थिवैरेतैः समृद्धैर्वा नरैः क्वचित् ।
नार्थन्यूनोपकरणैरेकात्मभिरसंहतैः ॥ १५
यो दरिद्रैरपि विधिः शक्यः प्राप्तुं नरेश्वर ।
तुल्यो यज्ञफलैः पुण्यैस्तं निबोध युधांवर ॥ १६
ऋषीणां परमं गुह्यमिदं भरतसत्तम ।
तीर्थाभिगमनं पुण्यं यज्ञैरपि विशिष्यते ॥ १७
अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।
अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते ॥ १८
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः ।
न तत्फलमवाप्नोति तीर्थाभिगमनेन यत् ॥ १९
सर्वतीर्थेषु राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् ।
पुष्करं नाम विख्यातं महाभागः समाविशेत् ॥ २०
दशकोटिसहस्राणि तीर्थानां वै महामते ।
सान्निध्यं पुष्करे येषां त्रिसन्ध्यं कुरुनन्दन ॥ २१
आदित्या वसवो रुद्राः साध्याश्च समरुद्गणाः ।
गन्धर्वाप्सरसश्चैव नित्यं सन्निहिता विभो ॥ २२
यत्र देवास्तपस्तप्त्वा दैत्या ब्रह्मर्षयस्तथा ।
'तपोविशेषैर्बहुभिः स्थानान्यापुर्महौजसः ।'
दिव्ययोगा महाराज पुण्येन महताऽन्विताः ॥ २३
मनसाभ्येतुकामस्य पुष्कराणि मनस्विनः ।
पूयन्ते सर्वपापानि नाकपृष्ठे च पूज्यते ॥ २४
तास्मिंस्तीर्थे महाभागो नित्यमेव पितामहः ।
उवास परमप्रीतो देवदानवसत्तमः ॥ २५
पुष्करेषु महाभाग देवाः सर्षिगणाः पुरा ।
सिद्धिं समभिसंप्राप्ताः पुण्येन महताऽन्विताः २६
तत्राभिषेकं यः कुर्यात्पितृदेवांश्च तर्पयेत् ।
सर्वपापविनिर्मुक्तो ब्रह्मलोके च पूज्यते ॥ २७
अप्येकं भोजयेद्विप्रं पुष्करारण्यमाश्रितः ।
तेनासौ कर्मणा भीष्म प्रेत्य चेह च मोदते ॥ २८
शाकैर्मूलैः फलैर्वाऽपि येन वर्तयते स्वयम् ।
तद्वै दद्याद्ब्राह्मणाय श्रद्धावाननसूयकः ।
तेनैव प्राप्नुयात्प्राज्ञो हयमेधफलं नरः ॥ २९
'अपि वाऽप्युदपात्रेण ब्राह्मणान्स्वस्ति वाचयेत् ।
तेनापि पूजनेनाशु प्रेत्यानन्त्याय कल्पते ॥' ३०
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वा राजसत्तम ।
न वै योनौ प्रजायन्ते स्नातास्तीर्थे महात्मनः ॥ ३१
कार्तिक्यां तु विशेषेण योऽभिगच्छति पुष्करम् ।
'फलं तत्राक्षयं तेन लभते भरतर्षभ ॥' ३२
सायंप्रातः स्मरेद्यस्तु पुष्कराणि कृताञ्जलिः ।
उपस्पृष्टं भवेत्तेन सर्वतीर्थेषु भारत ।
प्राप्नुयाच्च नरो लोकान्ब्रह्मणः सदनेऽक्षयान् ॥ ३३
जन्मप्रभृति यत्पापं स्त्रिया वा पुरुषस्य वा ।
पुष्करे स्नातमात्रस्य सर्वमेव प्रणश्यति ॥ ३४
यथा सुराणां सर्वेषामादिस्तु मधुसूदनः ।
तथैव पुष्करं राजंस्तीर्थानामादिरुच्यते ॥ ३५
उष्य द्वादशवर्षाणि पुष्करे नियतः शुचिः ।
क्रतून्सर्वानवाप्नोति ब्रह्मलोकं स गच्छति ॥ ३६
यस्तु वर्षशतं पूर्णमग्निहोत्रमुपासते ।
कार्तिकीं वा वसेदेकां पुष्करे सममेव तत् ॥ ३७
[त्रीणि शृङ्गाणि शुभ्राणि त्रीणि प्रस्रवणानि च ।
पुष्कराण्यादिसिद्धानि न विद्मस्तत्र कारणम् ॥] ३८
दुष्करं पुष्करं गन्तुं दुष्करं पुष्करे तपः ।
दुष्करं पुष्करे दानं वस्तुं चैव सुदुष्करम् ॥ ३९
उष्य द्वादशरात्रं तु नियतो नियताशनः ।
प्रदक्षिणमुपावृत्य जम्बूमार्गं समाविशेत् ॥ ४०

अकल्ककः दम्भादिहीनः ॥ ११ ॥ नृलोके देवदेवस्य तीर्थमिति झ. पाठः ॥ २० ॥ पितृदेवार्चने रतः इति झ. पाठः ॥ २७ ॥ उपस्पृष्टं स्नातं भवेत् ॥ ३३ ॥ उष्य वासं कृत्वा ॥ ३६ ॥

जम्बूमार्गं समाविश्य देवर्षिपितृसेवितम् ।
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥ ४१
तत्रोष्य रजनीः पञ्च षष्ठकालक्षमी नरः ।
न दुर्गतिमवाप्नोति सिद्धिं प्राप्नोति चोत्तमां ४२
'तत्र गत्वा महाप्राज्ञः कुर्याच्छ्राद्धं दृढव्रतः ।
वाजपेयमवाप्नोति दुष्कृतं चास्य नश्यति ॥' ४३
जम्बूमार्गादुपावृत्य गच्छेत्स्थण्डिलकाश्रमम् ।
न दुर्गतिमवाप्नोति ब्रह्मलोकं च गच्छति ॥ ४४
आगस्त्यं सर आसाद्य पितृदेवार्चने रतः ।
त्रिरात्रोपोषितो राजन्नग्निष्टोमफलं लभेत् ॥ ४५
शाकवृत्तिः फलैर्वाऽपि कौमारं विन्दते पदम् ।
कण्वाश्रमं ततो गच्छेच्छ्रीजुष्टं लोकपूजितम् ४६
धर्मारण्यं हि तत्पुण्यमाद्यं च भरतर्षभ ।
यत्र प्रविष्टमात्रो वै सर्वपापैः प्रमुच्यते ॥ ४७
अर्चयित्वा पितॄन्देवान्नियतो नियताशनः ।
सर्वकामसमृद्धः स्याद्यज्ञस्य फलमश्नुते ॥ ४८
प्रदक्षिणं ततः कृत्वा ययातिपतनं व्रजेत् ।
हयमेधस्य यज्ञस्य फलं प्राप्नोति तत्र वै ॥ ४९
महाकालं ततो गच्छेन्नियतो नियताशनः ।
कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत् ॥ ५०
ततो गच्छेत धर्मज्ञः स्थाणोस्तीर्थमुमापतेः ।
नाम्ना भद्रवटं नाम त्रिषु लोकेषु विश्रुतम् ॥ ५१
तत्राभिगम्य चेशानं गोसहस्रफलं लभेत् ।
महादेवप्रसादाच्च गाणपत्यं च विन्दति ॥ ५२
समृद्धमसपत्नं च श्रिया युक्तं नरोत्तमः ।
'राज्ञां चैवाधिपत्यं हि तत्र गत्वा समाप्नुयात् ॥'
नर्मदां स समासाद्य नदीं त्रैलोक्यविश्रुताम् ।
तर्पयित्वा पितॄन्देवानग्निष्टोमफलं लभेत् ॥ ५४
दक्षिणं सिन्धुमासाद्य ब्रह्मचारी जितेन्द्रियः ।
अग्निष्टोममवाप्नोति विमानं चाधिरोहति ॥ ५५
चर्मण्वतीं समासाद्य नियतो नियताशनः ।
रन्तिदेवाभ्यनुज्ञातमग्निष्टोमफलं लभेत् ॥ ५६
ततो गच्छेत धर्मज्ञ हिमवत्सुतमर्बुदम् ।
पृथिव्यां यत्र वै छिद्रं पूर्वमासीद्युधिष्ठिर ॥ ५७
तत्राश्रमो वसिष्ठस्य त्रिषु लोकेषु विश्रुतः ।
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ ५८
पिङ्गतीर्थमुपस्पृश्य ब्रह्मचारी जितेन्द्रियः ।
कपिलानां नरश्रेष्ठ शतस्य फलमश्नुते ॥ ५९
ततो गच्छेत राजेन्द्र प्रभासं लोकविश्रुतम् ।
'तीर्थं देवगणैः पूज्यमृषिभिश्च निषेवितम् ॥' ६०
तत्र संनिहितो नित्यं स्वयमेव हुताशनः ।
देवतानां मुखं वीर ज्वलनोऽनिलसारथिः ॥ ६१
तस्मिंस्तीर्थे नरः स्नात्वा शुचिः प्रयतमानसः ।
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति मानवः ॥ ६२
ततो गत्वा सरस्वत्याः सागरस्य च संगमे ।
गोसहस्रफलं तस्य स्वर्गलोकं च विन्दति ।
प्रभया दीप्यते नित्यमग्निवद्भरतर्षभ ॥ ६३
तत्र स्नात्वा च राजेन्द्र विमलार्कसमद्युतिः ।
त्रिरात्रमुषितः स्नातस्तर्पयेत्पितृदेवताः ।
प्रभासते यथा सोमः सोश्वमेधं च विन्दति ॥ ६४
वरदानं ततो गच्छेत्तीर्थं भरतसत्तम ।
विष्णोर्दुर्वाससा यत्र वरो दत्तो युधिष्ठिर ।
वरदाने नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ६५
ततो द्वारवतीं गच्छेन्नियतो नियताशनः ।
पिण्डारके नरः स्नात्वा लभेद्बहुसुवर्णकम् ॥ ६६
तस्मिंस्तीर्थे महाभाग पद्मलक्षणलक्षिताः ।
अद्यापि मुद्रा दृश्यन्ते तदद्भुतमरिंदम ॥ ६७
त्रिशूलाङ्कानि पद्मानि दृश्यन्ते कुरुनन्दन ।
महादेवस्य सांनिध्यं तत्र वै पुरुषर्षभ ॥ ६८
सागरस्य च सिन्धोश्च संगमं प्राप्य दुर्लभम् ।
तीर्थे सलिलराजस्य स्नात्वा प्रयतमानसः ॥ ६९
तर्पयित्वा पितॄन्देवानृषींश्च भरतर्षभ ।
प्राप्नोति वारुणं लोकं दीप्यमानं स्वतेजसा ॥ ७०
शङ्कुकर्णेश्वरं देवमर्चयित्वा युधिष्ठिर ।

---

पुण्यं स्थानमुमापतेरिति ध. पाठः ॥ ५१ ॥ पिकतीर्थमिति ध. पाठः ॥ ५९ ॥ तस्मिंस्तीर्थे नरः स्नात्वा पुण्यलक्षणलक्षितः इति ध. पाठः ॥ ६७ ॥

अश्वमेधाद्दशगुणं प्रवदन्ति मनीषिणः ॥ ७१
प्रदक्षिणमुपावृत्य गच्छेत भरतर्षभ ।
तीर्थं कुरुवरश्रेष्ठ त्रिषु लोकेषु विश्रुतम् ॥ ७२
शमीति नाम्ना विख्यातं सर्वपापप्रणाशनम् ।
तत्र ब्रह्मादयो देवा उपासन्ते महेश्वरम् ॥ ७३
तत्र स्नात्वाऽर्चयित्वा च रुद्रं देवगणैर्वृतम् ।
जन्मप्रभृति यत्पापं तत्स्नातस्य प्रणश्यति ॥ ७४
शमी चात्र नरश्रेष्ठ सर्वदेवैरभिष्टुता ।
तत्र स्नात्वा नरव्याघ्र हयमेधमवाप्नुयात् ॥ ७५
गत्वा यत्र महाप्राज्ञ विष्णुना प्रभविष्णुना ।
पुरा शौचं कृतं राजन्हत्वा दैवतकण्टकान् ॥७६
ततो गच्छेत धर्मज्ञ वसोर्धारामभिष्टुताम् ।
गमनादेव तस्यां हि हयमेधफलं लभेत् ॥ ७७
स्नात्वा कुरुवरश्रेष्ठ प्रयतात्मा समाहितः ।
तर्प्य देवान्पितॄंश्चैव विष्णुलोके महीयते ॥ ७८
तीर्थं चात्र सरः पुण्यं वसूनां भरतर्षभ ।
तत्र स्नात्वा च पीत्वा च वसूनां संमतो भवेत् ॥७९
सिन्धूत्तममिति ख्यातं सर्वपापप्रणाशनम् ।
तत्र स्नात्वा नरश्रेष्ठ लभेद्बहुसुवर्णकम् ॥ ८०
ब्रह्मतीर्थं समासाद्य शुचिः शीलसमन्वितः ।
ब्रह्मलोकमवाप्नोति गतिं च परमां व्रजेत् ॥ ८१
कुमारिकाणां शक्रस्य तीर्थं सिद्धनिषेवितम् ।
तत्र स्नात्वा नरः क्षिप्रं स्वर्गलोकमवाप्नुयात् ॥८२
रेणुकायाश्च तत्रैव तीर्थं सिद्धनिषेवितम् ।
तत्र स्नात्वा भवेद्विप्रो निर्मलश्चन्द्रमा यथा ॥८३
अथ पञ्चनदं गत्वा नियतो नियताशनः ।
पञ्चयज्ञानवाप्नोति क्रमशो येऽनुकीर्तिताः ॥८४
ततो गच्छेत राजेन्द्र भीमायाः स्थानमुत्तमम् ।
तत्र स्नात्वा न योन्यां वै भवेद्भरतसत्तम ॥ ८५
देव्याः पुत्रो भवेद्राजंस्तप्तकुण्डलभूषणः ।
गवां शतसहस्रस्य फलं प्राप्नोति मानवः ॥ ८६
गिरिकुञ्जं समासाद्य त्रिषु लोकेषु विश्रुतम् ।
पितामहं नमस्कृत्य गोसहस्रफलं लभेत् ॥ ८७
ततो गच्छेत धर्मज्ञ विमलं तीर्थमुत्तमम् ।
अद्यापि यत्र दृश्यन्ते मत्स्याः सौवर्णराजताः ॥८८
तत्र स्नात्वा नरः क्षिप्रं वासवं लोकमाप्नुयात् ।
सर्वपापविशुद्धात्मा गच्छेत परमां गतिम् ॥ ८९
वितस्तां च समासाद्य संतर्प्य पितृदेवताः ।
नरः फलमवाप्नोति वाजपेयस्य भारत ॥ ९०
काश्मीरेष्वेव नागस्य भवनं तक्षकस्य च ।
वितस्ताख्यमिति ख्यातं सर्वपापप्रमोचनम् ॥९१
तत्र स्नात्वा नरो नूनं वाजपेयमवाप्नुयात् ।
सर्वपापविशुद्धात्मा गच्छेच्च परमां गतिम् ॥ ९२
ततो गच्छेत मलदां त्रिषु लोकेषु विश्रुताम् ।
पश्चिमायां तु संध्यायामुपस्पृश्य यथाविधि ॥९३
चरुं सप्तार्चिषे राजन्यथाशक्ति निवेदयेत् ।
पितॄणामक्षयं दानं प्रवदन्ति मनीषिणः ॥ ९४
ऋषयः पितरो देवा गन्धर्वाप्सरसां गणाः ।
गुह्यकाः किन्नरा यक्षाः सिद्धा विद्याधरा नराः ९५
राक्षसा दितिजा रुद्रा ब्रह्मा च मनुजाधिप ।
नियतः परमां दीक्षामास्थायाब्दसहस्रिकीम् ९६
विष्णोः प्रसादनं कुर्वंश्चरुं च श्रपयंस्तथा ।
सप्तभिः सप्तभिश्चैव ऋग्भिस्तुष्टाव केशवम् ॥ ९७
ददावष्टगुणैश्वर्यं तेषां तुष्टस्तु केशवः ।
यथाभिलषितानन्यान्कामान्दत्वा महीपते ॥ ९८
तत्रैवान्तर्दधे देवो विद्युदभ्रेषु वै यथा ।
नाम्ना सप्तचरुं तेन ख्यातं लोकेषु भारत ॥ ९९
गवां शतसहस्रेण राजसूयशतेन च ।
अश्वमेधसहस्रेण श्रेयान्सप्तार्चिषे चरुः ॥ १००
ततो निवृत्तो राजेन्द्र रुद्रं पदमथाविशेत् ।
अर्चयित्वा महादेवमश्वमेधफलं लभेत् ॥ १०१
मणिमन्तं समासाद्य ब्रह्मचारी समाहितः ।
एकरात्रोषितो राजन्नग्निष्टोमफलं लभेत् ॥ १०२
अथ गच्छेत राजेन्द्र देविकां लोकविश्रुताम् ।

---

दमीतीति प्रमीतीति क्रमेण क. ध. पाठः ॥ ७३ ॥ भद्रतुङ्गं समासाद्येति झ. पाठः । अवाप्नोति सुकृती विरजानर इति ध. पाठः ॥ ८१ ॥ श्रीकुण्डं तु समासाद्येति झ. पाठः ॥ ८७ ॥ ततो गच्छेत बडबामिति झ. पाठः ॥ ९३ ॥ भद्रपादमुपाविशेदिति ध. पाठः ॥ १०१ ॥

प्रसूतिर्यत्र विप्राणां श्रूयते भरतर्षभ ॥ १०३
त्रिशूलपाणेः स्थानं च त्रिषु लोकेषु विश्रुतम् ।
देविकायां नरः स्नात्वा समभ्यर्च्य महेश्वरम् १०४
यथाशक्ति चरुं तत्र निवेद्य भरतर्षभ ।
सर्वकामसमृद्धस्य यज्ञस्य लभते फलम् ॥ १०५
कामाख्यं तत्र रुद्रस्य तीर्थं देवनिषेवितम् ।
तत्र स्नात्वा नरः क्षिप्रं सिद्धिं प्राप्नोति भारत १०६
यजनं याजनं चैव तथैव ब्रह्मवालुकम् ।
पुष्पाम्भश्च उपस्पृश्य न शोचेन्मरणं गतः ॥१०७
अर्धयोजनविस्तारां पञ्चयोजनमायताम् ।
एतां हि देविकामाहुः पुण्यां देवर्षिसेविताम् १०८
ततो गच्छेत धर्मज्ञ दीर्घसत्रं यथाक्रमम् ।
तत्र ब्रह्मादयो देवाः सिद्धाश्च परमर्षयः ।
दीर्घसत्रमुपासन्ते दीक्षिता नियतव्रताः ॥ १०९
गमनादेव राजेन्द्र दीर्घसत्रमरिंदम ।
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति भारत ॥११०
ततो विनशनं गच्छेन्नियतो नियताशनः ।
गच्छत्यन्तर्हिता यत्र मेरुपृष्ठे सरस्वती ॥ १११
चमसेऽथ शिवोद्भेदे नागोद्भेदे च दृश्यते ।
'तत्र स्नात्वा नरव्याघ्र द्योतते शशिवत्सदा ।'
स्नात्वा तु चमसोद्भेदे अग्निष्टोमफलं लभेत् ११२
शिवोद्भेदे नरः स्नात्वा गोसहस्रफलं लभेत् ।
नागोद्भेदे नरः स्नात्वा नागलोकमवाप्नुयात् ११३
शशयानं च राजेन्द्र तीर्थमासाद्य दुर्लभम् ।
शतरूपप्रतिच्छन्नाः पुष्करा यत्र भारत ॥ ११४
सरस्वत्यां महाराज शतं संवत्सरं च ते ।
दृश्यन्ते भरतश्रेष्ठ वृत्तां वै कार्तिकीं सदा ॥११५
तत्र स्नात्वा नरव्याघ्र द्योतते शशिवत्सदा ।
गोसहस्रफलं चैव प्राप्नुयाद्भरतर्षभ ॥ ११६
कुमारकोटीमासाद्य नियतः कुरुनन्दन ।
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ॥ ११७
गवामयुतमाप्नोति कुलं चैव समुद्धरेत् ।
ततो गच्छेत धर्मज्ञ रुद्रकोटिं समाहितः ॥ ११८
पुरा यत्र महाराज मुनिकोटिः समागता ।
हर्षेण महताऽऽविष्टा रुद्रदर्शनकाङ्क्षया ॥ ११९
अहंपूर्वमहंपूर्वं द्रक्ष्यामि वृषभध्वजम् ।
एवं संप्रस्थिता राजन्नृषयः किल भारत ॥ १२०
ततो योगीश्वरेणापि योगमास्थाय भूपते ।
तेषां मन्युप्रणाशार्थमृषीणां भावितात्मनाम् ॥१२१
स्रष्टा कोटीस्तु रुद्राणामृषीणामग्रतः स्थिता ।
मया पूर्वतरं दृष्ट इति ते मेनिरे पृथक् ॥ १२२
तेषां तुष्टो महादेवो मुनीनां भावितात्मनाम् ।
भक्त्या परमया राजन्वरं तेषां प्रदिष्टवान् ॥ १२३
अद्यप्रभृति युष्माकं धर्मवृद्धिर्भविष्यति ।
तत्र स्नात्वा नरव्याघ्र रुद्रकोट्यां नरः शुचिः ॥१२४
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ।
ततो गच्छेत राजेन्द्र संगमं लोकविश्रुतम् ॥१२५
सरस्वत्या महापुण्यं केशवं समुपासते ।
यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ॥ १२६
अभिगच्छन्ति राजेन्द्र चैत्रशुक्लचतुर्दशीम् ।
तत्र स्नात्वा नरव्याघ्र विन्देद्बहुसुवर्णकम् ।
सर्वपापविशुद्धात्मा ब्रह्मलोकं च गच्छति ॥१२७
ऋषीणां यत्र सत्राणि समाप्तानि नराधिप ।
तत्रावसानमासाद्य गोसहस्रफलं लभेत् ॥ १२८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि अशीतितमोऽध्यायः ॥ ८० ॥

## एकाशीतितमोऽध्यायः ॥ ८१ ॥

पुलस्त्येन भीष्मंप्रति नानातीर्थमहिमानुवर्णनम् ॥ १ ॥

पुलस्त्य उवाच ।
ततो गच्छेत राजेन्द्र कुरुक्षेत्रमभिष्टुतम् ।

पुष्पजायामुपस्पृश्येति ध. पाठः ॥ १०७ ॥ दक्षिणाभिर्यतव्रता इति क. ध. पाठः ॥ १०९ ॥ चमसे चमसोद्भेदे इति ध. पाठः ॥ ११२ ॥ शतह्रदं च राजेन्द्रेति क. ध. पाठः ॥ ११४ ॥ गवां मेधमवाप्नोतीति क. ध. पाठः ॥ ११८ ॥ अशीतितमोऽध्यायः ॥ ८० ॥

पापेभ्यो विप्रमुच्यन्ते तद्गताः सर्वजन्तवः ॥ १
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
य एवं सततं ब्रूयात्सोऽपि पापैः प्रमुच्यते ॥ २
पांसवोऽपि कुरुक्षेत्रे वायुना समुदीरिताः ।
अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् ॥ ३
दक्षिणेन सरस्वत्या दृषद्वत्युत्तरेण च ।
ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिविष्टपे ॥ ४
तत्र मासं वसेद्धीरः सरस्वत्यां युधांवर ।
यत्र ब्रह्मादयो देवा ऋषयः सिद्धचारणाः ॥ ५
गन्धर्वाप्सरसो यक्षाः पन्नगाश्च महीपते ।
ब्रह्मक्षेत्रं महापुण्यमभिगच्छन्ति भारत ॥ ६
मनसाऽप्यभिकामस्य कुरुक्षेत्रं युधांवर ।
पापानि विप्रणश्यन्ति ब्रह्मलोकं च गच्छति ॥ ७
गत्वा हि श्रद्धया युक्तः कुरुक्षेत्रं कुरूद्वह ।
राजसूयाश्वमेधाभ्यां फलमाप्नोति मानवः ॥ ८
ततश्च मन्तुकं राजन्द्वारपालं महाबलम् ।
यक्षं समभिवाद्यैव गोसहस्रफलं लभेत् ॥ ९
ततो गच्छेत धर्मज्ञ विष्णोः स्थानमनुत्तमम् ।
सततं नाम राजेन्द्र यत्र सन्निहितो हरिः ॥ १०
तत्र स्नात्वाऽर्चयित्वा च त्रिलोकप्रभवं हरिम् ।
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥ ११
ततः परिप्लवं गच्छेत्तीर्थं त्रैलोक्यविश्रुतम् ।
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति भारत ॥ १२
पृथिवीतीर्थमासाद्य गोसहस्रफलं लभेत् ।
ततः शालूकिनीं गत्वा तीर्थसेवी नराधिप ॥ १३
दशाश्वमेधे स्नात्वा च तदेव फलमाप्नुयात् ।
सर्पदर्वीं समासाद्य नागानां तीर्थमुत्तमम् ॥ १४
अग्निष्टोममवाप्नोति नागलोकं च विन्दति ।
ततो गच्छेत धर्मज्ञ द्वारपालमरुन्तुकम् ॥ १५
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ।
ततः पञ्चनदं गत्वा नियतो नियताशनः ॥ १६
कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत् ।
अश्विनोस्तीर्थमासाद्य रूपवानभिजायते ॥ १७
ततो गच्छेत धर्मज्ञ वाराहं तीर्थमुत्तमम् ।
विष्णुर्वाराहरूपेण पूर्वं यत्र स्थितो विभुः ॥ १८
तत्र स्नात्वा नरश्रेष्ठ अग्निष्टोमफलं लभेत् ।
ततो जयन्त्यां राजेन्द्र सोमतीर्थं समाविशेत् ॥ १९
स्नात्वा फलमवाप्नोति राजसूयस्य मानवः ।
एकहंसे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ २०
शतशौचं समासाद्य तीर्थसेवी नराधिप ।
पौण्डरीकमवाप्नोति कृतशौचो भवेच्च सः ॥ २१
ततो मुञ्जवटं नाम स्थाणोः स्थानं महात्मनः ।
उपोष्य रजनीमेकां गाणपत्यमवाप्नुयात् ॥ २२
तत्रैव च महाराज यक्षिणी लोकविश्रुता ।
तां चाभिगम्य राजेन्द्र सर्वान्कामानवाप्नुयात् ॥ २३
कुरुक्षेत्रस्य तद्द्वारं विश्रुतं भरतर्षभ ।
प्रदक्षिणमुपावृत्य तीर्थसेवी समाहितः ॥ २४
संमिते पुष्कराणां च स्नात्वाऽर्च्य पितृदेवताः ।
जामदग्न्येन रामेण कृतं तत्सुमहात्मना ॥ २५
कृतकृत्यो भवेद्राजन्नश्वमेधं च विन्दति ।
ततो रामह्रदानार्च्छेत्तीर्थसेवी समाहितः ॥ २६
तत्र रामेण राजेन्द्र तरसा दीप्ततेजसा ।
क्षत्रमुत्साद्य वीरेण ह्रदाः पञ्च निवेशिताः ॥ २७
पूरयित्वा नरव्याघ्र रुधिरेणेति नः श्रुतम् ।
पितरस्तर्पिताः सर्वे तथैव प्रपितामहाः ॥ २८
ततस्ते पितरः प्रीता राममूचुर्नराधिप ।
रामराम महाभाग प्रीताः स्म तव भार्गव ॥ २९
अनया पितृभक्त्या च विक्रमेण च ते विभो ।
वरं वृणीष्व भद्रं ते किमिच्छसि महाद्युते ॥ ३०
एवमुक्तः स राजेन्द्र रामः प्रहरतांवरः ।
अब्रवीत्प्राञ्जलिर्वाक्यं पितॄन्स गगने स्थितान् ॥ ३१
भवन्तो यदि मे प्रीता यद्यनुग्राह्यता मयि ।
पितृप्रसादादिच्छेयं तपःस्वाध्ययनं पुनः ॥ ३२
यच्च रोषाभिभूतेन क्षत्रमुत्सादितं मया ।

कुत्सितं रौतीति कुरु पापं तस्य क्षेपणात्त्रायत इति कुरुक्षेत्रं पापनिवर्तकम् ॥७॥ ततश्च मन्दुकं राजन्निति भ. पाठः । ततो मचक्रुकं नामेति झ. पाठः ॥ ९ ॥

ततश्च पापान्मुच्येयं युष्माकं तेजसाऽप्यहम् ॥३३
ह्रदाश्च तीर्थभूता मे भवेयुर्भुवि विश्रुताः ।
एतच्छ्रुत्वा शुभं वाक्यं रामस्य पितरस्तदा ॥ ३४
प्रत्यूचुः परमप्रीता रामं हर्षसमन्विताः ।
तपस्ते वर्धतां भूयः पितृभक्त्या विशेषतः ॥ ३५
यच्च रोषाभिभूतेन क्षत्रमुत्सादितं त्वया ।
ततश्च पापान्मुक्तस्त्वं पातितास्ते स्वकर्मभिः ॥३६
ह्रदाश्च तव तीर्थत्वं गमिष्यन्ति न संशयः ।
ह्रदेषु तेषु यः स्नात्वा पितॄन्संतर्पयिष्यति ॥ ३७
पितरस्तस्य वै प्रीता दास्यन्ति भुवि दुर्लभम् ।
ईप्सितं च मनःकामं स्वर्गलोकं च शाश्वतम् ॥ ३८
एवं दत्त्वा वरान्राजन्रामस्य पितरस्तदा ।
आमन्त्र्य भार्गवं प्रीत्या तत्रैवान्तर्हितास्ततः ॥३९
एवं रामह्रदाः पुण्या भार्गवस्य महात्मनः ।
स्नात्वा ह्रदेषु रामस्य ब्रह्मचारी शुचिव्रतः ॥ ४०
राममभ्यर्च्य राजेन्द्र लभेद्बहु सुवर्णकम् ।
वंशमूलकमासाद्य तीर्थसेवी कुरूद्वह ॥ ४१
स्ववंशमुद्धरेद्राजन्स्नात्वा वै वंशमूलके ।
कायशोधनमासाद्य तीर्थं भरतसत्तम ॥ ४२
शरीरशुद्धिः स्नातस्य तस्मिंस्तीर्थे न संशयः ।
शुद्धदेहश्च संयाति शुभाँल्लोकाननुत्तमान् ॥ ४३
ततो गच्छेत धर्मज्ञ तीर्थं त्रैलोक्यविश्रुतम् ।
लोका यत्रोद्धृताः पूर्वं विष्णुना प्रभविष्णुना ॥ ४४
लोकोद्धारं समासाद्य तीर्थं त्रैलोक्यपूजितम् ।
स्नात्वा तीर्थवरे राजँल्लोकानुद्धरते स्वकान् ॥ ४५
श्रीतीर्थं च समासाद्य स्नात्वा नियतमानसः ।
अर्चयित्वा पितॄन्देवान्विन्दते श्रियमुत्तमाम् ॥४६
कपिलातीर्थमासाद्य ब्रह्मचारी समाहितः ।
तत्र स्नात्वाऽर्चयित्वा च पितॄन्स्वान्दैवतान्यपि ४७
कपिलानां सहस्रस्य फलं विन्दति मानवः ।
सूर्यतीर्थं समासाद्य स्नात्वा नियतमानसः ॥ ४८
अर्चयित्वा पितॄन्देवानुपवासपरायणः ।
अग्निष्टोममवाप्नोति सूर्यलोकं च गच्छति ॥ ४९
गवां भवनमासाद्य तीर्थसेवी यथाक्रमम् ।
तत्राभिषेकं कुर्वाणो गोसहस्रफलं लभेत् ॥ ५०
शङ्खिनीतीर्थमासाद्य तीर्थसेवी कुरूद्वह ।
देव्यास्तीर्थे नरः स्नात्वा लभते रूपमुत्तमम् ॥ ५१
ततो गच्छेत राजेन्द्र द्वारपालमरुन्तुकम् ।
तच्च तीर्थं सरस्वत्यां यक्षेन्द्रस्य महात्मनः ॥ ५२
तत्र स्नात्वा नरो राजन्नग्निष्टोमफलं लभेत् ।
ततो गच्छेत राजेन्द्र ब्रह्मावर्तं नरोत्तमः ॥ ५३
ब्रह्मावर्ते नरः स्नात्वा ब्रह्मलोकमवाप्नुयात् ।
ततो गच्छेत राजेन्द्र सुतीर्थकमनुत्तमम् ॥ ५४
तत्र सन्निहिता नित्यं पितरो दैवतैः सह ।
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ॥ ५५
अश्वमेधमवाप्नोति पितृलोकं च गच्छति ।
ततोम्बुमत्यां धर्मज्ञ सुतीर्थकमनुत्तमम् ॥ ५६
कोशेश्वरस्य तीर्थेषु स्नात्वा भरतसत्तम ।
सर्वव्याधिविनिर्मुक्तो ब्रह्मलोके महीयते ॥ ५७
मातृतीर्थं च तत्रैव यत्र स्नातस्य भारत ।
प्रजा विवर्धते राजन्न तन्वीं श्रियमश्नुते ॥ ५८
ततः शीतवनं गच्छेन्नियतो नियताशनः ।
तीर्थं तत्र महाराज महदन्यत्र दुर्लभम् ॥ ५९
पुनाति गमनादेव कुलमेकं नराधिप ।
केशानभ्युक्ष्य वै तस्मिन्पूतो भवति भारत ॥६०
तीर्थं तत्र महाराज श्वानलोमापहं स्मृतम् ।
यत्र विप्रा नरव्याघ्र विद्वांसस्तीर्थतत्पराः ॥ ६१
गतिं गच्छन्ति परमां स्नात्वा भरतसत्तम ।
श्वानलोमापनयने तीर्थे भरतसत्तम ॥ ६२
प्राणायामैर्निर्हरन्ति स्वलोमानि द्विजोत्तमाः ।
पूतात्मानश्च राजेन्द्र प्रयान्ति परमां गतिम् ॥६३
दशाश्वमेधिकं चैव तस्मिंस्तीर्थे महीपते ।
तत्र स्नात्वा नरव्याघ्र गच्छेत परमां गतिम् ॥६४
ततो गच्छेत राजेन्द्र मानुषं लोकविश्रुतम् ।
यत्र कृष्णमृगा राजन्व्याधेन परिपीडिताः ॥६५
विगाह्य तस्मिन्सरसि मानुषत्वमुपागताः ।
तस्मिंस्तीर्थे नरः स्नात्वा ब्रह्मचारी समाहितः ६६
सर्वपापविशुद्धात्मा स्वर्गलोके महीयते ।
मानुषस्य तु पूर्वेण क्रोशमात्रे महीपते ॥ ६७

प्राणायामैर्हरन्तीह श्वानलोमा द्विजोत्तमा इति ध. पाठः ॥६३॥

आपगा नाम विख्याता नदी सिद्धनिषेविता ।
श्यामाकभोजनं तत्र यः प्रयच्छति मानवः ॥ ६८
देवान्पितॄन्समुद्दिश्य तस्य धर्मफलं महत् ।
एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ६९
तत्र स्नात्वाऽर्चयित्वा च पितॄन्वै दैवतानि च ।
उषित्वा रजनीमेकामग्निष्टोमफलं लभेत् ॥ ७०
ततो गच्छेत राजेन्द्र ब्रह्मणः स्थानमुत्तमम् ।
ब्रह्मोदुम्बरमित्येव प्रकाशं भुवि भारत ॥ ७१
तत्र सप्तर्षिकुण्डेषु स्नातस्य नरपुङ्गव ।
केदारे चैव राजेन्द्र कपिञ्जलमहामुनेः ॥ ७२
ब्रह्माणमधिगत्वा च शुचिः प्रयतमानसः ।
सर्वपापविशुद्धात्मा ब्रह्मलोकं प्रपद्यते ॥ ७३
कपिञ्जलस्य केदारं समासाद्य सुदुर्लभम् ।
अन्तर्धानमवाप्नोति तपसा दग्धकिल्बिषः ॥ ७४
ततो गच्छेत राजेन्द्र शङ्करं लोकविश्रुतम् ।
कृष्णपक्षे चतुर्दश्यामभिगम्य वृषध्वजम् ॥ ७५
लभेत सर्वकामान्हि स्वर्गलोकं च गच्छति ।
तिस्रः कोट्यस्तु तीर्थानां शङ्करे कुरुनन्दन ॥ ७६
रुद्रकोट्यां तथा कूपे ह्रदेषु च महीपते ।
शुद्धास्पदं च तत्रैव तीर्थं भरतसत्तम ॥ ७७
तत्र स्नात्वाऽर्चयित्वा च दैवतानि पितॄनथ ।
न दुर्गतिमवाप्नोति वाजपेयं च विन्दति ॥ ७८
किंदाने च नरः स्नात्वा किंजप्ये च महीपते ।
अप्रमेयमवाप्नोति दानं जप्यं च भारत ॥ ७९
कलश्यां वार्युपस्पृश्य श्रद्दधानो जितेन्द्रियः ।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ८०
शंकरस्य तु पूर्वेण नारदस्य महात्मनः ।
तीर्थं कुरुकुलश्रेष्ठ अजानन्तेति विश्रुतम् ॥ ८१
तत्र तीर्थे नरः स्नात्वा प्राणानुत्सृज्य भारत ।
नारदेनाभ्यनुज्ञातो लोकान्प्राप्नोत्यनुत्तमान् ८२
शुक्लपक्षे दशम्यां च पुण्डरीकं समाविशेत् ।
तत्र स्नात्वा नरो राजन्पौण्डरीकफलं लभेत् ॥ ८३
ततस्त्रिविष्टपं गच्छेत्त्रिषु लोकेषु विश्रुतम् ।
तत्र वैतरणी पुण्या नदी पापप्रणाशिनी ॥ ८४
तत्र स्नात्वाऽर्चयित्वा च शूलपाणिं वृषध्वजम् ।
सर्वपापविशुद्धात्मा गच्छेत परमां गतिम् ॥ ८५
ततो गच्छेत राजेन्द्र फलकीवनमुत्तमम् ।
तत्र देवाः सदा राजन्फलकीवनमाश्रिताः ॥ ८६
तपश्चरन्ति विपुलं बहुवर्षसहस्रकम् ।
दृषद्वत्यां नरः स्नात्वा तर्पयित्वा च देवताः ॥ ८७
अग्निष्टोमातिरात्राभ्यां फलं विन्दति भारत ।
तीर्थे च सर्वदेवानां स्नात्वा भरतसत्तम ॥ ८८
गोसहस्रस्य राजेन्द्र फलं विन्दति मानवः ।
पाणिखाते नरः स्नात्वा तर्पयित्वा च देवताः ॥ ८९
अग्निष्टोमातिरात्राभ्यां फलं विन्दति भारत ।
राजसूयमवाप्नोति ऋषिलोकं च विन्दति ॥ ९०
ततो गच्छेत राजेन्द्र मिश्रकं तीर्थमुत्तमम् ।
तत्र तीर्थानि राजेन्द्र मिश्रितानि महात्मना ॥ ९१
व्यासेन नृपशार्दूल द्विजार्थमिति नः श्रुतम् ।
सर्वतीर्थेषु स स्नाति मिश्रके स्नाति यो नरः ॥ ९२
ततो व्यासवनं गच्छेन्नियतो नियताशनः ।
मनोजवे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ९३
गत्वा मधुवटीं चैव देव्याः स्थानं नरः शुचिः ।
तत्र स्नात्वाऽर्चयित्वा च पितॄन्देवांश्च पूरुषः ॥ ९४
स देव्या समनुज्ञातो गोसहस्रफलं लभेत् ।
कौशिक्याः संगमे यस्तु दृषद्वत्याश्च भारत ॥ ९५
स्नाति वै नियताहारः सर्वपापैः प्रमुच्यते ।
ततो व्यासस्थली नाम यत्र व्यासेन धीमता ॥ ९६
पुत्रशोकाभितप्तेन देहत्यागे कृता मतिः ।
ततो देवैस्तु राजेन्द्र पुनरुत्थापितस्तदा ॥ ९७
अभिगत्वा स्थलीं तस्य गोसहस्रफलं लभेत् ।
किंदत्तं कूपमासाद्य तिलप्रस्थं प्रदाय च ॥ ९८
गच्छेत परमां सिद्धिमृणैर्मुक्तः कुरूद्वह ।
वेदीतीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ९९
अहश्च सुदिनं चैव द्वे तीर्थे लोकविश्रुते ।
तयोः स्नात्वा नरव्याघ्र सूर्यलोकमवाप्नुयात् ॥ १००
मृगधूमं ततो गच्छेत्त्रिषु लोकेषु विश्रुतम् ।
तत्राभिषेकं कुर्वीत गङ्गायां नृपसत्तम ॥ १०१
अर्चयित्वा महादेवमश्वमेधफलं लभेत् ।
देव्यास्तीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ १०२

ततो वामनकं गच्छेत्रिषु लोकेषु विश्रुतम् ।
तत्र विष्णुपदे स्नात्वा अर्चयित्वा च वामनम् १०३
सर्वपापविशुद्धात्मा विष्णुलोकं स गच्छति ।
कुलंपुने नरः स्नात्वा पुनाति स्वकुलं ततः ॥१०४
पवनस्य ह्रदे स्नात्वा मरुतां तीर्थमुत्तमम् ।
तत्र स्नात्वा नरव्याघ्र विष्णुलोके महीयते॥१०५
अमराणां ह्रदे स्नात्वा समभ्यर्च्यामराधिपम् ।
अमराणां प्रभावेन स्वर्गलोके महीयते ॥ १०६
शालिहोत्रस्य तीर्थे च शालिशूर्पे यथाविधि ।
स्नात्वा नरवरश्रेष्ठ गोसहस्रफलं लभेत् ॥ १०७
श्रीकुञ्जं च सरस्वत्यास्तीर्थं भरतसत्तम ।
तत्र स्नात्वा नरश्रेष्ठ अग्निष्टोमफलं लभेत् ॥१०८
ततो नैमिषकुञ्जं च समासाद्य कुरूद्वह ।
ऋषयः किल राजेन्द्र नैमिषेयास्तपस्विनः ॥१०९
तीर्थयात्रां पुरस्कृत्य कुरुक्षेत्रं गताः पुरा ।
'तत्र तीर्थे नरः स्नात्वा वाजिमेधफलं लभेत् ।'
ततः कुञ्जः सरस्वत्याः कृतो भरतसत्तम ॥ ११०
ऋषीणामवकाशः स्याद्यथा तुष्टिकरो महान् ।
तस्मिन्कुञ्जे नरः स्नात्वा अग्निष्टोमफलं लभेत् १११
ततो गच्छेत धर्मज्ञ कन्यातीर्थमनुत्तमम् ।
कन्यातीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ११२
ततो गच्छेत राजेन्द्र ब्रह्मणस्तीर्थमुत्तमम् ।
तत्र वर्णावरः स्नात्वा ब्राह्मण्यं लभते नरः ॥११३
ब्राह्मणश्च विशुद्धात्मा गच्छेत परमां गतिम् ।
ततो गच्छेन्नरश्रेष्ठ सोमतीर्थमनुत्तमम् ॥ ११४
तत्र स्नात्वा नरो राजन्सोमलोकमवाप्नुयात् ।
सप्तसारस्वतं तीर्थं ततो गच्छेन्नराधिप ॥ ११५
यत्र मङ्कणकः सिद्धो महर्षिर्लोकविश्रुतः ।
पुरा मङ्कणको राजन्कुशाग्रेणेति नः श्रुतम् ॥११६
क्षतः किल करे राजंस्तस्य शाकरसोऽस्रवत् ।
स वै शाकरसं दृष्ट्वा हर्षाविष्टः प्रनृत्तवान् ॥११७
ततस्तस्मिन्प्रनृत्ते तु स्थावरं जङ्गमं च यत् ।
प्रनृत्तमुभयं वीर तेजसा तस्य मोहितम् ॥ ११८
ब्रह्मादिभिः सुरै राजनृषिभिश्च तपोधनैः ।

विज्ञप्तो वै महादेव ऋषेरर्थे नराधिप ॥ ११९
नायं नृत्येद्यथा देव तथा त्वं कर्तुमर्हसि ।
तं प्रनृत्तं समासाद्य हर्षाविष्टेन चेतसा ।
सुराणां हितकामार्थमृषिं देवोऽभ्यभाषत ॥१२०
भोभो महर्षे धर्मज्ञ किमर्थं नृत्यते भवान् ।
हर्षस्थानं किमर्थं वा तवाद्य मुनिपुङ्गव ॥ १२१
ऋषिरुवाच ।
तपस्विनो धर्मपथे स्थितस्य द्विजसत्तम ।
किं न पश्यसि मे ब्रह्मन्कराच्छाकरसं स्रुतम् ॥१२२
यं दृष्ट्वाऽहं प्रनृत्तोऽहं हर्षेण महताऽन्वितः ।
तं प्रहस्याब्रवीद्देव ऋषिं रागेण मोहितम् ॥१२३
अहं तु विस्मयं विप्र न गच्छामीति पश्य माम् ।
एवमुक्त्वा नरश्रेष्ठ महादेवेन धीमता ॥ १२४
अङ्गुल्यग्रेण राजेन्द्र स्वाङ्गुष्ठस्ताडितोऽनघ ।
ततो भस्म क्षताद्राजन्निर्गतं हिमसन्निभम् ॥१२५
तद्दृष्ट्वा व्रीडितो राजन्स मुनिः पादयोर्गतः ।
नान्यद्देवात्परं मेने रुद्रात्परतरं महत् ॥ १२६
सुरासुरस्य जगतो गतिस्त्वमसि शूलधृत् ।
त्वया सर्वमिदं सृष्टं त्रैलोक्यं सचराचरम् ॥१२७
त्वमेव सर्वान्ग्रससि पुनरेव युगक्षये ।
देवैरपि न शक्यस्त्वं परिज्ञातुं कुतो मया ॥१२८
त्वयि सर्वे प्रदृश्यन्ते सुरा ब्रह्मादयोऽनघ ।
सर्वस्त्वमसि लोकानां कर्ता कारयिता च ह॥१२९
त्वत्प्रसादात्सुराः सर्वे निवसन्त्यकुतोभयाः ।
एवं स्तुत्वा महादेवमृषिर्वचनमब्रवीत् ॥ १३०
त्वत्प्रसादान्महादेव तपो मे न क्षरेत वै ।
ततो देवः प्रहृष्टात्मा ब्रह्मर्षिमिदमब्रवीत् ॥१३१
तपस्ते वर्धतां विप्र मत्प्रसादात्सहस्रशः ।
आश्रमे चेह वत्स्यामि त्वया सह महामुने ॥१३२
सप्तसारस्वते स्नात्वा अर्चयिष्यन्ति ये तु माम् ।
न तेषां दुर्लभं किंचिदिह लोके परत्र च ॥१३३
सारस्वतं च ते लोकं गमिष्यन्ति न संशयः ।
एवमुक्त्वा महादेवस्तत्रैवान्तरधीयत ॥ १३४

हिमसन्निभं अतिश्वेतमिक्षुविकारं खण्डशर्कराख्यम् ॥ १२५ ॥

पुलस्त्य उवाच ।
ततस्त्वौशनसं गच्छेत्रिषु लोकेषु विश्रुतम् ।
यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ॥ १३५
कार्तिकेयश्च भगवांस्त्रिसंध्यं किल भारत ।
सान्निध्यमकरोन्नित्यं भार्गवप्रियकाम्यया ॥१३६
कपालमोचनं तीर्थं सर्वपापप्रमोचनम् ।
तत्र स्नात्वा नरव्याघ्र सर्वपापैः प्रमुच्यते ॥१३७
अग्नितीर्थं ततो गच्छेत्तत्र स्नात्वा नरर्षभ ।
अग्निलोकमवाप्नोति कुलं चैव समुद्धरेत् ॥ १३८
विश्वामित्रस्य तत्रैव तीर्थं भरतसत्तम ।
तत्र स्नात्वा नरश्रेष्ठ ब्राह्मण्यमधिगच्छति ॥१३९
ब्रह्मयोनिं समासाद्य शुचिः प्रयतमानसः ।
तत्र स्नात्वा नरव्याघ्र ब्रह्मलोकं प्रपद्यते ॥ १४०
पुनात्यासप्तमं चैव कुलं नास्त्यत्र संशयः ।
ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् १४१
पृथूदकमिति ख्यातं कार्तिकेयस्य वै नृप ।
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ॥ १४२
अज्ञानाज्ज्ञानतो वाऽपि स्त्रिया वा पुरुषेण वा ।
यत्किंचिदशुभं कर्म कृतं मानुषबुद्धिना ॥ १४३
तत्सर्वं नश्यते तत्र स्नातमात्रस्य भारत ।
अश्वमेधफलं चास्य स्वर्गलोकं च गच्छति ॥१४४
पुण्यमाहुः कुरुक्षेत्रं कुरुक्षेत्रात्सरस्वती ।
सरस्वत्याश्च तीर्थानि तीर्थेभ्यश्च पृथूदकम् ॥१४५
उत्तमे सर्वतीर्थानां यस्त्यजेदात्मनस्तनुम् ।
पृथूदके जप्यपरो नैव श्वो मरणं तपेत् ॥ १४६
गीतं सनत्कुमारेण व्यासेन च महात्मना ।
वेदे च नियतं राजन्नभिगच्छेत्पृथूदकम् ॥ १४७
पृथूदकात्तीर्थतमं नान्यत्तीर्थं कुरूद्वह ।
तन्मेध्यं तत्पवित्रं च पावनं च न संशयः ॥१४८
तत्र स्नात्वा दिवं यान्ति येऽपि पापकृतो नराः ।
पृथूदके नरश्रेष्ठ एवमाहुर्मनीषिणः ॥ १४९
मधुस्रवं च तत्रैव तीर्थं भरतसत्तम ।
तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् ॥१५०
ततो गच्छेत राजेन्द्र तीर्थं देव्या यथाक्रमम् ।
सरस्वत्यारुणायाश्च संगमे लोकविश्रुते ॥ १५१
त्रिरात्रोपोषितः स्नात्वा मुच्यते ब्रह्महत्यया ।
अग्निष्टोमातिरात्राभ्यां फलं विन्दति मानवः १५२
आसप्तमं कुलं चैव पुनाति भरतर्षभ ।
अवतीर्णं च तत्रैव तीर्थं कुरुकुलोद्वह ॥ १५३
विप्राणामनुकम्पार्थं शार्ङ्गिणा निर्मितं पुरा ।
व्रतोपनयनाभ्यां चाप्युपवासेन वाऽप्युत ॥१५४
क्रियामन्त्रैश्च संयुक्तो ब्राह्मणः स्यान्न संशयः ।
क्रियामन्त्रविहीनोऽपि तत्र स्नात्वा नरर्षभ ।
चीर्णव्रतो भवेद्विद्वान्दृष्टमेतत्पुरातनैः ॥ १५५
समुद्राश्चापि चत्वारः समानीताश्च दर्भिणा ।
तेषु स्नातो नरश्रेष्ठ न दुर्गतिमवाप्नुयात् ॥ १५६
फलानि गोसहस्राणां चतुर्णां विन्दते च सः ।
ततो गच्छेत धर्मज्ञ तीर्थं शतसहस्रकम् ॥ १५७
साहस्रकं च तत्रैव द्वे तीर्थे लोकविश्रुते ।
उभयोर्हि नरः स्नात्वा गोसहस्रफलं लभेत् ॥१५८
दानं वाऽप्युपवासो वा सहस्रगुणितं भवेत् ।
ततो गच्छेत राजेन्द्र रेणुकातीर्थमुत्तमम् ॥ १५९
तीर्थाभिषेकं कुर्वीत पितृदेवार्चने रतः ।
सर्वपापविशुद्धात्मा अग्निष्टोमफलं लभेत् ॥ १६०
विमोचनमुपस्पृश्य जितमन्युर्जितेन्द्रियः ।
प्रतिग्रहकृतैर्दोषैः सर्वैः स परिमुच्यते ॥ १६१
ततः पञ्चवटीं गत्वा ब्रह्मचारी जितेन्द्रियः ।
पुण्येन महता युक्तः सतां लोके महीयते ॥ १६२
यत्र योगेश्वरः स्थाणुः स्वयमेव वृषध्वजः ।
तमर्चयित्वा देवेशं गमनादेव सिद्ध्यति ॥ १६३
तैजसं वारुणं तीर्थं दीप्यमानं स्वतेजसा ।
यत्र ब्रह्मादिभिर्देवैर्ऋषिभिश्च तपोधनैः ॥ १६४
सैनापत्येन देवानामभिषिक्तो गुहस्तदा ।
तैजसस्य तु पूर्वेण कुरुतीर्थं कुरूद्वह ॥ १६५
कुरुतीर्थे नरः स्नात्वा ब्रह्मचारी जितेन्द्रियः ।
सर्वपापविशुद्धात्मा ब्रह्मलोकं प्रपद्यते ॥ १६६
स्वर्गद्वारं ततो गच्छेन्नियतो नियताशनः ।
स्वर्गलोकमवाप्नोति ब्रह्मलोकं च गच्छति ॥ १६७

ततो गच्छेदनरकं तीर्थसेवी नराधिप ।
तत्र स्नात्वा नरो राजन्न दुर्गतिमवाप्नुयात् ॥१६८
तत्र ब्रह्मा स्वयं नित्यं देवैः सह महीपते ।
अन्वास्ते पुरुषव्याघ्र नारायणपुरोगमैः ॥ १६९
सान्निध्यं तत्र राजेन्द्र रुद्रपत्न्याः कुरूद्वह ।
अभिगम्य च तां देवीं न दुर्गतिमवाप्नुयात् ॥१७०
तत्रैव च महाराज विश्वेश्वरमुमापतिम् ।
अभिगम्य महादेवं मुच्यते सर्वकिल्बिषैः ॥१७१
नारायणं चाभिगम्य पद्मनाभमरिंदम ।
राजमानो महाराज विष्णुलोकं च गच्छति ॥१७२
तीर्थेषु सर्वदेवानां स्नातः स पुरुषर्षभ ।
सर्वदुःखैः परित्यक्तो द्योतते शशिवन्नरः ॥ १७३
ततः स्वस्तिपुरं गच्छेत्तीर्थसेवी नराधिप ।
प्रदक्षिणमुपावृत्य गोसहस्रफलं लभेत् ॥ १७४
पावनं तीर्थमासाद्य तर्पयेत्पितृदेवताः ।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति भारत ॥ १७५
गङ्गाह्रदश्च तत्रैव कूपश्च भरतर्षभ ।
तिस्रः कोट्यस्तु तीर्थानां तस्मिन्कूपे महीपते १७६
तत्र स्नात्वा नरो राजन्स्वर्गलोकं प्रपद्यते ।
आपगायां नरः स्नात्वा अर्चयित्वा महेश्वरम् १७७
गाणपत्यमवाप्नोति कुलं चैव समुद्धरेत् ।
ततः स्थाणुवटं गच्छेत्त्रिषु लोकेषु विश्रुतम् ॥ १७८
तत्र स्नात्वा स्थितो रात्रिं रुद्रलोकमवाप्नुयात् ।
बदरीकाननं गच्छेद्वसिष्ठस्याश्रमं गतः ॥ १७९
बदरीं भक्षयेत्तत्र त्रिरात्रोपोषितो नरः ।
सम्यग्द्वादशवर्षाणि बदरीं भक्षयेत्तु यः ॥ १८०
त्रिरात्रोपोषितस्तेन भवेत्तुल्यो नराधिप ।
इन्द्रमार्गं समासाद्य तीर्थसेवी नराधिप ॥ १८१
अहोरात्रोपवासेन शक्रलोके महीयते ।
एकरात्रं समासाद्य एकरात्रोषितो नरः ॥ १८२
नियतः सत्यवादी च ब्रह्मलोके महीयते ।
ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् १८३
आदित्यस्याश्रमो यत्र तेजोराशेर्महात्मनः ।
तस्मिंस्तीर्थे नरः स्नात्वा पूजयित्वा विभावसुं १८४
आदित्यलोकं व्रजति कुलं चैव समुद्धरेत् ।
सोमतीर्थे नरः स्नात्वा तीर्थसेवी नराधिप १८५
सोमलोकमवाप्नोति नरो नास्त्यत्र संशयः ।
ततो गच्छेत धर्मज्ञ दधीचस्य महात्मनः ॥ १८६
तीर्थं पुण्यतमं राजन्पावनं लोकविश्रुतम् ।
यत्र सारस्वतो यातः सोऽङ्गिरास्तपसो निधिः १८७
तस्मिंस्तीर्थे नरः स्नात्वा वाजिमेधफलं लभेत् ।
सारस्वतीं गतिं चैव लभते नात्र संशयः ॥१८८
ततः कन्याश्रमं गच्छेन्नियतो ब्रह्मचर्यवान् ।
त्रिरात्रोपोषितो राजन्नियतो नियताशनः ॥१८९
लभेत्कन्याशतं दिव्यं स्वर्गलोकं च गच्छति ।
ततो गच्छेत धर्मज्ञ तीर्थं सन्निहतीमपि ॥ १९०
तत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ।
मासिमासि समायान्ति पुण्येन महताऽन्विताः॥
सन्निहत्यामुपस्पृश्य राहुग्रस्ते दिवाकरे ।
अश्वमेधशतं तेन तत्रेष्टं शाश्वतं भवेत् ॥ १९२
पृथिव्यां यानि तीर्थानि अन्तरिक्षचराणि च ।
नद्यो ह्रदास्तडागाश्च सर्वप्रस्रवणानि च ॥ १९३
उदपानानि वाप्यश्च तीर्थान्यायतनानि च ।
निःसंशयममावास्यां समेष्यन्ति नराधिप ॥१९४
मासिमासि नरव्याघ्र सन्निहत्यां न संशयः ।
तीर्थसन्निहनादेव सन्निहत्येति विश्रुता ॥ १९५
तत्र स्नात्वा च पीत्वा च स्वर्गलोके महीयते ।
अमावास्यां तु तत्रैव राहुग्रस्ते दिवाकरे ॥ १९६
यः श्राद्धं कुरुते मर्त्यस्तस्य पुण्यफलं शृणु ।
अश्वमेधसहस्रस्य सम्यगिष्टस्य यत्फलम् ॥ १९७
स्नात एव समाप्नोति कृत्वा श्राद्धं च मानवः ।
यत्किंचिद्दुष्कृतं कर्म स्त्रिया वा पुरुषेण वा १९८
स्नातमात्रस्य तत्सर्वं नश्यते नात्र संशयः ।
पद्मवर्णेन यानेन ब्रह्मलोकं प्रपद्यते ॥ १९९
अभिवाद्य ततो यक्षं द्वारपालं मचक्रुकम् ।
कोटितीर्थमुपस्पृश्य लभेद्बहुसुवर्णकम् ॥ २००
गङ्गाह्रदश्च तत्रैव तीर्थं भरतसत्तम ।

सन्निहत्यां कुरुक्षेत्रे ॥ १९२ ॥ एकाशीतितमोऽध्यायः ॥८१॥

तत्र स्नायीत धर्मज्ञ ब्रह्मचारी समाहितः ॥ २०१
राजसूयाश्वमेधाभ्यां फलं विन्दति मानवः ।
पृथिव्यां नैमिषं तीर्थमन्तरिक्षे च पुष्करम् ॥ २०२
त्रयाणामपि लोकानां कुरुक्षेत्रं विशिष्यते ।
पांसवोपि कुरुक्षेत्राद्वायुना समुदीरिताः ॥ २०३
अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् ।
दक्षिणेन सरस्वत्या उत्तरेण दृषद्वतीम् ॥ २०४
ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिविष्टपे ।
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
अप्येकां वाचमुत्सृज्य सर्वपापैः प्रमुच्यते ॥ २०५
ब्रह्मवेदी कुरुक्षेत्रं पुण्यं ब्रह्मर्षिसेवितम् ।
तस्मिन्वसन्ति ये मर्त्या न ते शोच्याः कथंचन २०६
तरन्तुकारन्तुकयोर्यदन्तरं
रामह्रदानां च मचक्रुकस्य च ।
एतत्कुरुक्षेत्रसमन्तपञ्चकं
पितामहस्योत्तरवेदिरुच्यते ॥ २०७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥

## द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

पुलस्त्येन भीष्मंप्रति नानातीर्थमाहात्म्यकथनम् ॥ १ ॥

पुलस्त्य उवाच ।
ततो गच्छेन्महाराज धर्मतीर्थमनुत्तमम् ।
[यत्र धर्मो महाभागस्तप्तवानुत्तमं तपः ॥ १
तेन तीर्थं कृतं पुण्यं स्वेन नाम्ना च विश्रुतम् ।]
तत्र स्नात्वा नरो राजन्धर्मशीलः समाहितः ।
आसप्तमं कुलं चैव पुनीते नात्र संशयः ॥ २
ततो गच्छेत राजेन्द्र ज्ञानपावनमुत्तमम् ।
अग्निष्टोममवाप्नोति मुनिलोकं च गच्छति ॥ ३
सौगन्धिकवनं राजंस्ततो गच्छेत मानवः ।
तत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ॥ ४
सिद्धचारणगन्धर्वाः किन्नराश्च महोरगाः ।
तद्वनं प्रविशन्नेव सर्वपापैः प्रमुच्यते ॥ ५
ततश्चापि सरिच्छ्रेष्ठा नदीनामुत्तमा नदी ।
प्लक्षा देवी स्मृता राजन्पुण्या देवी सरस्वती ॥ ६
तत्राभिषेकं कुर्वीत वल्मीकान्निःसृते जले ।
अर्चयित्वा पितॄन्देवानश्वमेधफलं लभेत् ॥ ७
कवेराध्युषितं नाम तत्र तीर्थं सुदुर्लभम् ।
षट्सु शम्यानिपातेषु वल्मीकादिति निश्चयः ॥ ८
कपिलानां सहस्रं च वाजिमेधं च विन्दति ।
तत्र स्नात्वा नरव्याघ्र दृष्टमेतत्पुरातने ॥ ९
सुगन्धां शतकुम्भां च पञ्चयक्षां च भारत ।
अभिगम्य नरश्रेष्ठ स्वर्गलोके महीयते ॥ १०
त्रिशूलखातं तत्रैव तीर्थमासाद्य भारत ।
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ।
गाणपत्यं च लभते देहं त्यक्त्वा न संशयः ॥ ११
ततो गच्छेत राजेन्द्र देव्याः स्थानं सुदुर्लभम् ।
शाकम्भरीति विख्याता त्रिषु लोकेषु विश्रुता १२
दिव्यं वर्षसहस्रं हि शाकेन किल सुव्रता ।
आहारं सा कृतवती मासिमासि नराधिप ॥ १३
ऋषयोऽभ्यागतास्तत्र देव्या भक्त्या तपोधनाः ।
आतिथ्यं च कृतं तेषां शाकेन किल भारत ।
ततः शाकम्भरीत्येव नाम तस्याः प्रतिष्ठितम् १४
शाकम्भरीं समासाद्य ब्रह्मचारी समाहितः ।
त्रिरात्रमुषितः शाकं भक्षयित्वा नरः शुचिः ॥ १५
शाकाहारस्य यत्किंचिद्वर्षैर्द्वादशभिः कृतम् ।
तत्फलं तस्य भवति देव्याश्छन्देन भारत ॥ १६
ततो गच्छेत्सुवर्णाख्यं त्रिषु लोकेषु विश्रुतम् ।
तत्र विष्णुः प्रसादार्थं रुद्रमाराधयत्पुरा ॥ १७
वरांश्च सुबहूँल्लेभे दैवतेषु सुदुर्लभान् ।
उक्तश्च त्रिपुरघ्नेन परितुष्टेन भारत ॥ १८

शम्या मुद्गराकृतिर्यज्ञोपकरणविशेषः स बलवताक्षिप्तो यावद्दूरं पतेत् तावान्देशः शम्यानिपातः तेषु षट्सु ॥ ८ ॥ पुरातने भविष्यपुराणादौ ॥ ९ ॥ छन्देन इच्छया ॥ १६ ॥

अपिच त्वं प्रियतरो लोके कृष्ण भविष्यसि ।
त्वन्मुखं च जगत्सर्वं भविष्यति न संशयः ॥ १९
तत्राभिगम्य राजेन्द्र पूजयित्वा वृषध्वजम् ।
अश्वमेधमवाप्नोति गाणपत्यं च विन्दति ॥ २०
धूमावतीं ततो गच्छेत्त्रिरात्रोपोषितो नरः ।
मनसा प्रार्थितान्कामाँल्लभते नात्र संशयः ॥ २१
देव्यास्तु दक्षिणार्धेन रथावर्तो नराधिप ।
तत्रारोहेत धर्मज्ञ श्रद्दधानो जितेन्द्रियः ।
महादेवप्रसादाद्धि गच्छेत परमां गतिम् ॥ २२
प्रदक्षिणमुपावृत्य गच्छेत भरतर्षभ ।
धारां नाम महाप्राज्ञ सर्वपापप्रमोचनीम् ॥ २३
तत्र स्नात्वा नरव्याघ्र न शोचति नराधिप ।
ततो गच्छेत धर्मज्ञ नमस्कृत्य महागिरिम् ॥ २४
'अशीतियोजनशतं पुष्करं स्वर्गमुच्यते ।
अशीतिं धर्मपृष्ठात्तु प्रवदन्ति मनीषिणः ॥ २५
षष्टिं प्रयागाद्राजेन्द्र कुरुक्षेत्रात्तु द्वादश ।
संयुक्तमेव राजेन्द्र गङ्गाद्वारं त्रिविष्टपम् ॥' २६
स्वर्गद्वारेण यत्तुल्यं गङ्गाद्वारं न संशयः ।
तत्राभिषेकं कुर्वीत कोटितीर्थे समाहितः ॥ २७
पौण्डरीकमवाप्नोति कुलं चैव समुद्धरेत् ।
उष्यैकां रजनीं तत्र गोसहस्रफलं लभेत् ॥ २८
सप्तगङ्गे त्रिगङ्गे च शक्रावर्ते च तर्पयन् ।
देवान्पितॄंश्च विधिवत्पुण्ये लोके महीयते ॥ २९
ततः कनखले स्नात्वा त्रिरात्रोपोषितो नरः ।
अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति ॥ ३०
कपिलावटं ततो गच्छेत्तीर्थसेवी नराधिप ।
उपोष्य रजनीं तत्र गोसहस्रफलं लभेत् ॥ ३१
नागराजस्य राजेन्द्र कपिलस्य महात्मनः ।
तीर्थं कुरुवरश्रेष्ठ सर्वलोकेषु विश्रुतम् ॥ ३२
तत्राभिषेकं कुर्वीत नागतीर्थे नराधिप ।
कपिलानां सहस्रस्य फलं विन्दति मानवः ॥ ३३
ततो ललितकं गच्छेच्छन्तनोस्तीर्थमुत्तमम् ।
तत्र स्नात्वा नरो राजन्न दुर्गतिमवाप्नुयात् ॥ ३४
गङ्गायमुनयोर्मध्ये स्नाति यः संगमे नरः ।
दशाश्वमेधानाप्नोति कुलं चैव समुद्धरेत् ॥ ३५
ततो गच्छेत राजेन्द्र सुगन्धं लोकविश्रुतम् ।
सर्वपापविशुद्धात्मा ब्रह्मलोके महीयते ॥ ३६
रुद्रावर्तं ततो गच्छेत्तीर्थसेवी नराधिप ।
तत्र स्नात्वा नरो राजन्स्वर्गलोके च गच्छति ॥ ३७
गङ्गायाश्च नरश्रेष्ठ सरस्वत्याश्च संगमे ।
स्नात्वाऽश्वमेधं प्राप्नोति स्वर्गलोकं च गच्छति ॥ ३८
भद्रकर्णेश्वरं गत्वा देवमर्च्य यथाविधि ।
न दुर्गतिमवाप्नोति नाकपृष्ठे च पूज्यते ॥ ३९
ततः कुब्जावतीं गच्छेत्तीर्थसेवी नराधिप ।
गोसहस्रमवाप्नोति स्वर्गलोकं च गच्छति ॥ ४०
अरुन्धतीवटं गच्छेत्तीर्थसेवी नराधिप ।
सामुद्रकमुपस्पृश्य ब्रह्मचारी समाहितः ॥ ४१
अश्वमेधमवाप्नोति त्रिरात्रोपोषितो नरः ।
गोसहस्रफलं विद्यात्कुलं चैव समुद्धरेत् ॥ ४२
ब्रह्मावर्तं ततो गच्छेद्ब्रह्मचारी समाहितः ।
अश्वमेधमवाप्नोति सोमलोकं च गच्छति ॥ ४३
यमुनाप्रभवं गत्वा समुपस्पृश्य यामुनम् ।
अश्वमेधफलं लब्ध्वा स्वर्गलोके महीयते ॥ ४४
दर्वीसंक्रमणं प्राप्य तीर्थं त्रैलोक्यपूजितम् ।
अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति ॥ ४५
सिन्धोश्च प्रभवं गत्वा सिद्धगन्धर्वसेवितम् ।
तत्रोष्य रजनीः पञ्च विन्देद्बहु सुवर्णकम् ॥ ४६
अथ वेदीं समासाद्य नरः परमदुर्गमाम् ।
अश्वमेधमवाप्नोति गच्छेदौशनसीं गतिम् ॥ ४७
ऋषिकुल्यां समासाद्य वासिष्ठं चैव भारत ।
वासिष्ठीं समतिक्रम्य सर्वे वर्णा द्विजातयः ॥ ४८
ऋषिकुल्यां समासाद्य नरः स्नात्वा विकल्मषः ।
देवान्पितॄंश्चार्चयित्वा ऋषिलोकं प्रपद्यते ॥ ४९
यदि तत्र वसेन्मासं शाकाहारो नराधिप ।
'द्वादशाहस्य यज्ञस्य फलं स लभते नरः ॥' ५०
भृगुतुङ्गं समासाद्य वाजिमेधफलं लभेत् ।
गत्वा वीरप्रमोक्षं च सर्वपापैः प्रमुच्यते ॥ ५१

त्वन्मुखं त्वत्प्रधानम् ॥ १९ ॥

कृत्तिकामघयोश्चैव तीर्थमासाद्य भारत ।
अग्निष्टोमातिरात्राभ्यां फलमाप्नोति मानवः॥ ५२
तत्र संध्यां समासाद्य विद्यातीर्थमनुत्तमम् ।
उपस्पृश्य च वै विद्यां यत्र तत्रोपपद्यते ॥ ५३
महाश्रमे वसेद्रात्रिं सर्वपापप्रमोचने ।
एककालं निराहारो लोकानावसते शुभान् ॥ ५४
षष्ठकालोपवासेन मासमुष्य महालये ।
सर्वपापविशुद्धात्मा विन्देद्बहु सुवर्णकम् ।
दशापरान्दशपूर्वान्नरानुद्धरते कुलम् ॥ ५५
अथ वेतसिकां गत्वा पितामहनिषेविताम् ।
अश्वमेधमवाप्नोति गच्छेदौशनसीं गतिम् ॥ ५६
अथ सुन्दरिकातीर्थं प्राप्य सिद्धनिषेवितम् ।
रूपस्य भागी भवति दृष्टमेतत्पुरातनैः ॥ ५७
ततो वै ब्राह्मणं गत्वा ब्रह्मचारी जितेन्द्रियः ।
पद्मवर्णेन यानेन ब्रह्मलोकं प्रपद्यते ॥ ५८
ततस्तु नैमिषं गच्छेत्पुण्यं सिद्धनिषेवितम् ।
तत्र नित्यं निवसति ब्रह्मा देवगणैः सह ॥ ५९
नैमिषं मृगयाणस्य पापस्यार्धं प्रणश्यति ।
प्रविष्टमात्रस्तु नरः सर्वपापैः प्रमुच्यते ॥ ६०
तत्र मासं वसेद्धीरो नैमिषे तीर्थतत्परः ।
पृथिव्यां यानि तीर्थानि तानि तीर्थानि नैमिषे ६१
कृताभिषेकस्तत्रैव नियतो नियताशनः ।
गवां मेधस्य यज्ञस्य फलं प्राप्नोति भारत ।
पुनात्यासप्तमं चैव कुलं भरतसत्तम ॥ ६२
यस्त्यजेन्नैमिषे प्राणानुपवासपरायणः ।
स मोदेत्सर्वलोकेषु एवमाहुर्मनीषिणः ॥ ६३
नित्यं मेध्यं च पुण्यं च नैमिषं नृपसत्तम ॥ ६४
गङ्गोद्भेदं समासाद्य त्रिरात्रोपोषितो नरः ।
वाजपेयमवाप्नोति ब्रह्मभूतो भवेत्सदा ॥ ६५
सरस्वतीं समासाद्य तर्पयेत्पितृदेवताः ।
सारस्वतेषु लोकेषु मोदते नात्र संशयः ॥ ६६
ततश्च बाहुदां गच्छेद्ब्रह्मचारी समाहितः ।
तत्रोष्य रजनीमेकां स्वर्गलोके महीयते ।

देवसत्रस्य यज्ञस्य फलं प्राप्नोति कौरव ॥ ६७
ततः क्षीरवतीं गच्छेत्पुण्यां पुण्यतरैर्वृताम् ।
पितृदेवार्चनपरो वाजपेयमवाप्नुयात् ॥ ६८
विमलाशोकमासाद्य ब्रह्मचारी समाहितः ।
तत्रोष्य रजनीमेकां स्वर्गलोके महीयते ॥ ६९
गोप्रतारं ततो गच्छेत्सरय्वास्तीर्थमुत्तमम् ।
यत्र रामो गतः स्वर्गं सभृत्यबलवाहनः ।
देहं त्यक्त्वा महाराज तस्य तीर्थस्य तेजसा ॥ ७०
रामस्य च प्रसादेन व्यवसायाच्च भारत ।
तस्मिंस्तीर्थे नरः स्नात्वा गोप्रतारे नराधिप ।
सर्वपापविशुद्धात्मा स्वर्गलोके महीयते ॥ ७१
रामतीर्थे नरः स्नात्वा गोमत्यां कुरुनन्दन ।
अश्वमेधमवाप्नोति पुनाति च कुलं नरः ॥ ७२
शतसाहस्रकं तीर्थं तत्रैव भरतर्षभ ॥ ७३
तत्रोपस्पर्शनं कृत्वा नियतो नियताशनः ।
गोसहस्रफलं पुण्यं प्राप्नोति भरतर्षभ ॥ ७४
ततो गच्छेत राजेन्द्र भर्तृस्थानमनुत्तमम् ।
अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ७५
कोटितीर्थे नरः स्नात्वा अर्चयित्वा गुहं नृप ।
गोसहस्रफलं विद्यात्तेजस्वी च भवेन्नरः ॥ ७६
ततो वाराणसीं गत्वा अर्चयित्वा वृषध्वजम् ।
कपिलाह्रदे नरः स्नात्वा राजसूयमवाप्नुयात् ॥ ७७
अविमुक्तं समासाद्य तीर्थसेवी कुरूद्वह ।
दर्शनाद्देवदेवस्य मुच्यते ब्रह्महत्यया ॥ ७८
प्राणानुत्सृज्य तत्रैव मोक्षं प्राप्नोति मानवः ।
मार्कण्डेयस्य राजेन्द्र तीर्थमासाद्य दुर्लभम् ॥ ७९
गोमतीगङ्गयोश्चैव संगमे लोकविश्रुते ।
अग्निष्टोममवाप्नोति कुलं चैव समुद्धरेत् ॥ ८०
ततो गयां समासाद्य ब्रह्मचारी समाहितः ।
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ ८१
तत्राक्षयवटो नाम त्रिषु लोकेषु विश्रुतः ।
तत्र दत्तं पितृभ्यस्तु भवत्यक्षयमुच्यते ॥ ८२
महानद्यामुपस्पृश्य तर्पयेत्पितृदेवताः ।

औशनसीं गतिं शुक्रत्वम् ॥ ५६ ॥

व्यवसायान्निश्चयात् ॥ ७१ ॥

अक्षयान्प्राप्नुयाल्लोकान्कुलं चैव समुद्धरेत् ॥ ८३
ततो ब्रह्मसरो गत्वा धर्मारण्योपशोभितम् ।
ब्रह्मलोकमवाप्नोति प्रभातामेव शर्वरीम् ॥ ८४
ब्रह्मणा तत्र सरसि यूपश्रेष्ठः समुच्छ्रितः ।
यूपं प्रदक्षिणीकृत्य वाजपेयफलं लभेत् ॥ ८५
ततो गच्छेत राजेन्द्र धेनुकं लोकविश्रुतम् ।
एकरात्रोषितो राजन्प्रयच्छेत्तिलधेनुकाम् ॥ ८६
सर्वपापविशुद्धात्मा सोमलोकं व्रजेद्ध्रुवम् ।
तत्र चिह्नं महद्राजन्नद्यापि सुमहद्भृशम् ॥ ८७
कपिलायाः सवत्सायाश्चरन्त्याः पर्वते कृतम् ।
सवत्सायाः पदानि स्म दृश्यन्तेऽद्यापि भारत ॥८८
तेषूपस्पृश्य राजेन्द्र पदेषु नृपसत्तम ।
यत्किंचिदशुभं कर्म तत्प्रणश्यति भारत ॥ ८९
ततो गृध्रवटं गच्छेत्स्थानं देवस्य धीमतः ।
स्नायीत भस्मना तत्र अभिगम्य वृषध्वजम् ॥९०
ब्राह्मणेन भवेच्चीर्णं व्रतं द्वादशवार्षिकम् ।
इतरेषां तु वर्णानां सर्वपापं प्रणश्यति ॥ ९१
उद्यन्तं च ततो गच्छेत्पर्वतं गीतनादितम् ।
सावित्र्यास्तु पदं तत्र दृश्यते भरतर्षभ ॥ ९२
तत्र संध्यामुपासीत ब्राह्मणः संशितव्रतः ।
उपासिता भवेत्संध्या तेन द्वादशवार्षिकी ॥ ९३
योनिद्वारं च तत्रैव विश्रुतं भरतर्षभ ।
तत्राभिगम्य मुच्येत पुरुषो योनिसंकरात् ॥ ९४
कृष्णशुक्लावुभौ पक्षौ गयायां यो वसेन्नरः ।
पुनात्यासप्तमं राजन्कुलं नास्त्यत्र संशयः ॥ ९५
एष्टव्या बहवः पुत्रा यद्येकोपि गयां व्रजेत् ।
गौरीं वा वरयेत्कन्यां नीलं वा वृषमुत्सृजेत् ॥९६
ततः फल्गुं व्रजेद्राजंस्तीर्थसेवी नराधिप ।
अश्वमेधमवाप्नोति सिद्धिं च महतीं व्रजेत् ॥ ९७
ततो गच्छेत राजेन्द्र धर्मप्रस्थं समाहितः ।
तत्र धर्मो महाराज नित्यमास्ते युधिष्ठिर ॥ ९८
तत्र कूपोदकं कृत्वा तेन स्नातः शुचिस्तथा ।
पितॄन्देवांस्तु संतर्प्य मुक्तपापो दिवं व्रजेत् ॥९९
मतङ्गस्याश्रमस्तत्र महर्षेर्भावितात्मनः ॥ १००
तं प्रविश्याश्रमं श्रीमच्छ्रमशोकविनाशनम् ।
गवामयनयज्ञस्य फलं प्राप्नोति मानवः ॥ १०१
धर्मं तत्राभिसंस्पृश्य वाजिमेधमवाप्नुयात् ॥ १०२
ततो गच्छेत राजेन्द्र ब्रह्मस्थानमनुत्तमम् ।
तत्राभिगम्य राजेन्द्र ब्रह्माणं पुरुषर्षभ ।
राजसूयाश्वमेधाभ्यां फलं विन्दति मानवः ॥१०३
ततो राजगृहं गच्छेत्तीर्थसेवी नराधिप ।
उपस्पृश्य ततस्तत्र कक्षीवानिव मोदते ॥ १०४
यक्षिण्या नैत्यकं तत्र प्राश्नीत पुरुषः शुचिः ।
यक्षिण्यास्तु प्रसादेन मुच्यते ब्रह्महत्यया ॥ १०५
मणिनागं ततो गत्वा गोसहस्रफलं लभेत् ॥१०६
तैर्थिकं भुञ्जते यस्तु मणिनागस्य भारत ।
दष्टस्याशीविषेणापि न तस्य क्रमते विषम् ॥ १०७
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ।
ततो गच्छेत ब्रह्मर्षेर्गौतमस्य वनं प्रियम् ॥ १०८
अहल्याया ह्रदे स्नात्वा व्रजेत परमां गतिम् ।
अभिगम्याश्रमं राजन्विन्दते श्रियमात्मनः १०९
तत्रोदपानं धर्मज्ञ त्रिषु लोकेषु विश्रुतम् ।
तत्राभिषेकं कृत्वा तु वाजिमेधमवाप्नुयात् ॥११०
जनकस्य तु राजर्षेः कूपस्त्रिदशपूजितः ।
तत्राभिषेकं कृत्वा तु विष्णुलोकमवाप्नुयात् ॥१११
ततो विनशनं गच्छेत्सर्वपापप्रमोचनम् ।
वाजपेयमवाप्नोति सोमलोकं च गच्छति ॥ ११२
गण्डकीं तु समासाद्य सर्वतीर्थजलोद्भवाम् ।
वाजपेयमवाप्नोति सूर्यलोकं च गच्छति ॥ ११३
ततो विशल्यामासाद्य नदीं त्रैलोक्यविश्रुताम् ।
अग्निष्टोममवाप्नोति स्वर्गलोकं च गच्छति ॥ ११४
ततोऽधिवङ्गं धर्मज्ञ समाविश्य ततो वनम् ।
गुह्यकेषु महाराज मोदते नात्र संशयः ॥ ११५
कम्पनां तु समासद्य नदीं सिद्धनिवेषिताम् ।
पुण्डरीकमवाप्नोति स्वर्गलोकं च गच्छति ॥११६
अथ माहेश्वरीं धारां समासाद्य धराधिप ।
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ ११७

नैत्यकं नैवेद्यम् ॥ १०५ ॥ द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

दिवौकसां पुष्करिणीं समासाद्य नराधिप ।
न दुर्गतिमवाप्नोति वाजिमेधं च विन्दति ॥ ११८
अथ सोमपदं गच्छेद्ब्रह्मचारी समाहितः ।
माहेश्वरपदे स्नात्वा वाजिमेधफलं लभेत् ॥ ११९
तत्र कोटी तु तीर्थानां विश्रुता भरतर्षभ ।
कूर्मरूपेण राजेन्द्र ह्यसुरेण दुरात्मना ॥ १२०
ह्रियमाणा हृता राजन्विष्णुना प्रभविष्णुना ।
तत्राभिषेकं कुर्वीत तीर्थकोट्यां युधिष्ठिर ॥ १२१
पुण्डरीकमवाप्नोति विष्णुलोकं च गच्छति ।
ततो गच्छेत राजेन्द्र स्थानं नारायणस्य च ॥१२२
सदा सन्निहितो यत्र विष्णुर्वसति भारत ।
यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ॥ १२३
आदित्या वसवो रुद्रा जनार्दनमुपासते ।
शालग्राम इति ख्यातो विष्णुरद्भुतकर्मकः ॥१२४
अभिगम्य त्रिलोकेशं वरदं विष्णुमव्ययम् ।
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥१२५
तत्रोपदानं धर्मज्ञ सर्वपापप्रमोचनम् ।
समुद्रास्तत्र चत्वारः कूपे संनिहिताः सदा ।
तत्रोपस्पृश्य राजेन्द्र न दुर्गतिमवाप्नुयात् ॥१२६
अभिगम्य त्रिलोकेशं वरदं विष्णुमव्ययम् ।
विराजति यथा सोमो मेघैर्मुक्तो नराधिप ॥१२७
जातिस्मरमुपस्पृश्य शुचिः प्रयतमानसः ।
जातिस्मरत्वमाप्नोति स्नात्वा तत्र न संशयः॥१२८
वटेश्वरपुरं गत्वा अर्चयित्वा तु केशवम् ।
ईप्सिताँल्लभते कामानुपवासान्न संशयः ॥ १२९
ततस्तु वामनं गत्वा सर्वपापप्रमोचनम् ।
अभिगम्य हरिं देवं न दुर्गतिमवाप्नुयात् ॥१३०
भरतस्याश्रमं गच्छेत्सर्वपापप्रमोचनम् ॥ १३१
कौशिकीं तत्र गच्छेत महापापप्रणाशिनीम् ।
राजसूयस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ १३२
ततो गच्छेत राजेन्द्र चम्पकारण्यमुत्तमम् ।
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ १३३
अथ जेष्ठिलमासाद्य तीर्थं परमदुर्लभम् ।
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ १३४
तत्र विश्वेश्वरं दृष्ट्वा देव्या सह महाद्युतिम् ।
मित्रावरुणयोर्लोकानाप्नोति पुरुषर्षभ ।
त्रिरात्रोपोषितस्तत्र अग्निष्टोमफलं लभेत् ॥ १३५
कन्यासंवेद्यमासाद्य नियतो नियताशनः ।
मनोः प्रजापतेर्लोकानाप्नोति पुरुषर्षभ ॥ १३६
कन्यायां ये प्रयच्छन्ति दानमण्वपि भारत ।
तदक्षय्यमिति प्राहुर्ऋषयः संशितव्रताः ॥ १३७
ततो निर्वीरमासाद्य त्रिषु लोकेषु विश्रुतम् ।
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥१३८
ये त्विन्धनं प्रयच्छन्ति निर्वीरासंगमे नराः ।
ते यान्ति नरशार्दूल शक्रलोकमनामयम् ॥१३९
तत्राश्रमो वसिष्ठस्य त्रिषु लोकेषु विश्रुतः ।
तत्राभिषेकं कुर्वाणो वाजपेयमवाप्नुयात् ॥ १४०
देवकूटं समासाद्य ब्रह्मर्षिगणसेवितम् ।
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ १४१
ततो गच्छेत राजेन्द्र कौशिकस्य मुनेर्ह्रदम् ।
यत्र सिद्धिं परां प्राप्तो विश्वामित्रोथ कौशिकः ॥
तत्र मासं वसेद्वीर कौशिक्यां भरतर्षभ ।
अश्वमेधस्य यत्पुण्यं तन्मासेनाधिगच्छति॥१४३
सर्वतीर्थवरे चैव यो वसेत महाह्रदे ।
न दुर्गतिमवाप्नोति विन्द्याद्बहु सुवर्णकम् ॥१४४
कुमारमभिगम्याथ वीराश्रमनिवासिनम् ।
अश्वमेधमवाप्नोति नरो नास्त्यत्र संशयः ॥१४५
अग्निधारां समासाद्य त्रिषु लोकेषु विश्रुताम् ।
तत्राभिषेकं कुर्वाणो ह्यग्निष्टोममवाप्नुयात् ॥ १४६
अभिगम्य महादेवं वरदं विष्णुमव्ययम् ।
पितामहसरो गत्वा शैलराजसमीपतः ।
तत्राभिषेकं कुर्वाणो ह्यग्निष्टोममवाप्नुयात् ॥ १४७
पितामहस्य सरसः प्रस्रुता लोकपावनी ।
कुमारधारा तत्रैव त्रिषु लोकेषु विश्रुता ॥ १४८
यत्र स्नात्वा कृतार्थोसीत्यात्मानमवगच्छति ।
षष्ठकालोपवासेन मुच्यते ब्रह्महत्यया ॥ १४९
ततो गच्छेत धर्मज्ञ तीर्थसेवनतत्परः ।
शिखरं वै महादेव्या गौर्यास्त्रैलोक्यविश्रुतम्॥१५०

समारुह्य नरश्रेष्ठ स्तनकुण्डेषु संविशेत् ।
स्तनकुण्डमुपस्पृश्य वाजपेयफलं लभेत् ॥ १५१
तत्राभिषेकं कुर्वाणः पितृदेवार्चने रतः ।
हयमेधमवाप्नोति शक्रलोकं च गच्छति ॥ १५२
ताम्रारुणं समासाद्य ब्रह्मचारी समाहितः ।
अश्वमेधमवाप्नोति ब्रह्मलोकं च गच्छति ॥ १५३
नन्दिन्यां च समासाद्य कूपं देवनिषेवितम् ।
नरमेधस्य यत्पुण्यं तदाप्नोति नराधिप ॥ १५४
कालिकासंगमे स्नात्वा कौशिक्यरुणयोर्गतः ।
त्रिरात्रोपोषितो राजन्सर्वपापैः प्रमुच्यते ॥ १५५
उर्वशीतीर्थमासाद्य ततः सोमाश्रमं बुधः ।
कुम्भकर्णाश्रमं गत्वा पूज्यते भुवि मानवः ॥१५६
कोकामुखमुपस्पृश्य ब्रह्मचारी यतव्रतः ।
जातिस्मरत्वमाप्नोति दृष्टमेतत्पुरातनैः ॥ १५७
प्राङ्गदीं च समासाद्य कृतात्मा भवति द्विजः ।
सर्वपापविशुद्धात्मा शक्रलोकं च गच्छति ॥१५८
ऋषभद्वीपमासाद्य मेध्यं क्रौञ्चनिषूदनम् ।
सरस्वत्यामुपस्पृश्य विमानस्थो विराजते ॥ १५९
औद्दालकं महाराज तीर्थं मुनिनिषेवितम् ।
तत्राभिषेकं कृत्वा वै सर्वपापैः प्रमुच्यते ॥ १६०
धर्मतीर्थं समासाद्य पुण्यं ब्रह्मर्षिसेवितम् ।
वाजपेयमवाप्नोति विमानस्थश्च पूज्यते ॥ १६१
अथ पम्पां समासाद्य भागीरथ्यां कृतोदकः ।
दण्डार्तमभिगत्वा तु गोसहस्रफलं लभेत् ॥ १६२
'ततो लेवलिकां गच्छेत्पुण्यां पुण्योपसेविताम् ।
वाजपेयमवाप्नोति विमानस्थश्च पूज्यते ॥' १६३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

---

## त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

नारदेन युधिष्ठिरंप्रति भीष्माय पुलस्त्योदिततीर्थमहिमानुवादपूर्वकमिष्टदेशगमनम् ॥ १ ॥

पुलस्त्य उवाच ।
अथ सन्ध्यां समासाद्य संवेद्ये तीर्थ उत्तमे ।
उपस्पृश्य नरो विद्यां लभते नात्र संशयः ॥ १
रामस्य च प्रसादेन तीर्थं राजन्कृतं पुरा ।
तल्लौहित्यं समासाद्य विन्द्याद्बहु सुवर्णकम् ॥ २
करतोयां समासाद्य त्रिरात्रोपोषितो नरः ।
अश्वमेधमवाप्नोति प्रजापतिकृतो विधिः ॥ ३
गङ्गायास्तत्र राजेन्द्र सागरस्य च सङ्गमे ।
अश्वमेधं दशगुणं प्रवदन्ति मनीषिणः ॥ ४
गङ्गायास्त्वपरं पारं प्राप्य यः स्नाति मानवः ।
त्रिरात्रमुषितो राजन्सर्वान्कामानवाप्नुयात् ॥ ५
ततो वैतरणीं गत्वा सर्वपापप्रमोचनीम् ।
विरजातीर्थमासाद्य विराजति यथा शशी ॥ ६
प्रभवेच्च कुले पुण्ये सर्वपापं व्यपोहति ।
गोसहस्रफलं लब्ध्वा पुनाति स्वकुलं नरः ॥ ७
शोणस्य ज्योतिरथ्यायाः संगमे नियतः शुचिः ।
तर्पयित्वा पितॄन्देवानग्निष्टोमफलं लभेत् ॥ ८
शोणस्य नर्मदायाश्च प्रभेदे कुरुनन्दन ।
वंशगुल्म उपस्पृश्य वाजिमेधफलं लभेत् ॥ ९
ऋषभं तीर्थमासाद्य कोसलायां नराधिप ।
वाजपेयमवाप्नोति त्रिरात्रोपोषितो नरः ।
गोसहस्रफलं विन्द्यात्कुलं चैव समुद्धरेत् ॥ १०
कोसलां तु समासाद्य कालतीर्थमुपस्पृशेत् ।
वृषभैकादशफलं लभते नात्र संशयः ॥ ११
पुष्पवत्यामुपस्पृश्य त्रिरात्रोपोषितो नरः ।
गोसहस्रफलं लब्ध्वा पुनाति स्वकुलं नृप ॥ १२
ततो बदरिकातीर्थे स्नात्वा भरतसत्तम ।
दीर्घमायुरवाप्नोति स्वर्गलोकं च गच्छति ॥ १३
तथा चम्पां समासाद्य भागीरथ्यां कृतोदकः ।
दण्डाख्यमभिगम्यैव गोसहस्रफलं लभेत् ॥ १४
लपेटिकां ततो गच्छेत्पुण्यां पुण्योपशोभिताम् ।

अश्वमेधाद्दशगुणमिति क. पाठः ॥ ४ ॥

वाजपेयमवाप्नोति देवैः सर्वैश्च पूज्यते ॥ १५
ततो महेन्द्रमासाद्य जामदग्न्यनिषेवितम् ।
रामतीर्थे नरः स्नात्वा वाजिमेधफलं लभेत् ॥१६
मतङ्गस्य तु केदारस्तत्रैव कुरुनन्दन ।
तत्र स्नात्वा कुरुश्रेष्ठ गोसहस्रफलं लभेत् ॥ १७
श्रीपर्वतं समासाद्य नदीतीरमुपस्पृशेत् ।
अश्वमेधमवाप्नोति पूजयित्वा वृषध्वजम् ॥ १८
श्रीपर्वते महादेवो देव्या सह महाद्युतिः ।
न्यवसत्परमप्रीतो ब्रह्मा च त्रिदशैः सह ॥ १९
तत्र देवह्रदे स्नात्वा शुचिः प्रयतमानसः ।
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ २०
ऋषभं पर्वतं गत्वा पाण्ड्येषु नृपपूजितम् ।
वाजपेयमवाप्नोति नाकपृष्ठे च मोदते ॥ २१
ततो गच्छेत कावेरीं वृतामप्सरसां गणैः ।
तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् ॥ २२
ततस्तीरे समुद्रस्य कन्यातीर्थमुपस्पृशेत् ।
तत्तोयं स्पृश्य राजेन्द्र सर्वपापैः प्रमुच्यते ॥ २३
अथ गोकर्णमासाद्य त्रिषु लोकेषु विश्रुतम् ।
समुद्रमध्ये राजेन्द्र सर्वलोकनमस्कृतम् ॥ २४
यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ।
भूतयक्षपिशाचाश्च किन्नराः समहोरगाः ॥ २५
सिद्धचारणगन्धर्वमानुषाः पन्नगास्तथा ।
सरितः सागराः शैला उपासन्त उमापतिम् २६
तत्रेशानं समभ्यर्च्य त्रिरात्रोपोषितो नरः ।
अश्वमेधमवाप्नोति गाणपत्यं च विन्दति ॥ २७
उष्य द्वादशरात्रं तु पूतात्मा च भवेन्नरः ॥ २८
तत एव च गायत्र्याः स्थानं त्रैलोक्यपूजितम् ।
त्रिरात्रमुषितस्तत्र गोसहस्रफलं लभेत् ।
निदर्शनं च प्रत्यक्षं ब्राह्मणानां नराधिप ॥ २९
गायत्रीं पठते यस्तु योनिसंकरजस्तथा ।
गाथा च गाथिका चापि तस्य संपद्यते नृप ॥३०
अब्राह्मणस्य सावित्रीं पठतस्तु प्रणश्यति ॥ ३१

संवर्तस्य तु विप्रर्षेर्वापीमासाद्य दुर्लभाम् ।
रूपस्य भागी भवति सुभगश्च प्रजायते ॥ ३२
ततो वेणां समासाद्य त्रिरात्रोपोषितो नरः ।
मयूरहंससंयुक्तं विमानं लभते नरः ॥ ३३
ततो गोदावरीं प्राप्य नित्यं सिद्धनिषेविताम् ।
गवां मेधमवाप्नोति वासुकेर्लोकमुत्तमम् ॥ ३४
वेणायाः संगमे स्नात्वा वाजिमेधफलं लभेत् ।
वरदासंगमे स्नात्वा गोसहस्रफलं लभेत् ॥ ३५
ब्रह्मस्थानं समासाद्य त्रिरात्रोपोषितो नरः ।
गोसहस्रफलं विन्द्यात्स्वर्गलोकं च गच्छति ॥३६
कुशप्लवनमासाद्य ब्रह्मचारी समाहितः ।
त्रिरात्रमुषितः स्नात्वा अश्वमेधफलं लभेत् ॥ ३७
ततो देवह्रदेऽरण्ये कृष्णवेणाजलोद्भवे ।
जातिस्मरह्रदे स्नात्वा भवेज्जातिस्मरो नरः ।
यत्र ऋतुशतैरिष्ट्वा देवराजो दिवं गतः ॥ ३८
अग्निष्टोमफलं विन्द्याद्गमनादेव भारत ।
ततः सर्वह्रदे स्नात्वा गोसहस्रफलं लभेत् ॥ ३९
ततो वापीं महापुण्यां पयोष्णीं सरितां वराम् ।
पितृदेवार्चनरतो गोसहस्रफलं लभेत् ॥ ४०
दण्डकारण्यमासाद्य पुण्यं राजन्नुपस्पृशेत् ।
गोसहस्रफलं तस्य स्नातमात्रस्य भारत ॥ ४१
शरभङ्गाश्रमं गत्वा शुकस्य च महात्मनः ।
न दुर्गतिमवाप्नोति पुनाति च कुलं नरः ॥ ४२
ततः शूर्पारकं गच्छेज्जामदग्न्यनिषेवितम् ।
रामतीर्थे नरः स्नात्वा विन्द्याद्बहु सुवर्णकम् ॥४३
सप्तगोदावरे स्नात्वा नियतो नियताशनः ।
महत्पुण्यमवाप्नोति देवलोकं च गच्छति ॥ ४४
ततो देवपथं गत्वा नियतो नियताशनः ।
देवसत्रस्य यत्पुण्यं तदेवाप्नोति मानवः ॥ ४५
तुङ्गकारण्यमासाद्य ब्रह्मचारी जितेन्द्रियः ।
वेदानध्यापयत्तत्र ऋषिः सारस्वतः पुरा ॥ ४६
तत्र वेदेषु नष्टेषु मुनेरङ्गिरसः सुतः ।

निदर्शनमुदाहरणम् ॥ २९ ॥ यो योनिसंकरजः स चेत्तत्र गायत्रीं पठति तस्य सम्यक् पठतोपि तीर्थमाहात्म्यात्सा गायत्री गाथा स्वरनियमहीना गद्यवन्मुखान्निःसरति । गाथिका ग्राम्यगीतवत् स्वरवर्णविकृता ॥ ३० ॥ अब्राह्मणस्य तु प्राक्सिद्धापि तत्र न स्फुरतीति भावः ॥ ३१ ॥ ततो वेणां समासाद्येति क. ध. पाठः ॥ ३३ ॥

ऋषीणामुत्तरीयेषु सूपविष्टो यथासुखम् ॥ ४७
ओंकारेण यथान्यायं सम्यगुच्चारितेन ह ।
येन यत्पूर्वमभ्यस्तं तत्सर्वं समुपस्थितम् ॥ ४८
ऋषयस्तत्र देवाश्च वरुणोऽग्निः प्रजापतिः ।
हरिर्नारायणस्तत्र महादेवस्तथैव च ॥ ४९
पितामहश्च भगवान्देवैः सह महाद्युतिः ।
भृगुं नियोजयामास याजनार्थे महाद्युतिम् ॥ ५०
ततः स चक्रे भगवानृषीणां विधिवत्तदा ।
सर्वेषां पुनराधानं विधिदृष्टेन कर्मणा ॥ ५१
आज्यभागेन तत्राग्निं तर्पयित्वा यथाविधि ।
देवाः स्वभवनं याता ऋषयश्च यथाक्रमम् ॥ ५२
तदरण्यं प्रविष्टस्य तुङ्गकं राजसत्तम ।
पापं प्रणश्यत्यखिलं स्त्रिया वा पुरुषस्य वा ॥ ५३
तत्र मासं वसेद्धीरो नियतो नियताशनः ।
ब्रह्मलोकं व्रजेद्राजन्कुलं चैव समुद्धरेत् ॥ ५४
मेधाविकं समासाद्य पितॄन्देवांश्च तर्पयेत् ।
अग्निष्टोममवाप्नोति स्मृतिं मेधां च विन्दति ॥ ५५
अत्र कालञ्जरं गत्वा पर्वतं लोकविश्रुतम् ।
तत्र देवह्रदे स्नात्वा गोसहस्रफलं लभेत् ॥ ५६
आत्मानं स्नापयेत्तत्र गिरौ कालञ्जरे नृप ।
स्वर्गलोके महीयेत नरो नास्त्यत्र संशयः ॥ ५७
ततो गिरिवरश्रेष्ठे चित्रकूटे विशांपते ।
मन्दाकिनीं समासाद्य सर्वपापप्रणाशिनीम् ॥ ५८
तत्राभिषेकं कुर्वाणः पितृदेवार्चने रतः ।
अश्वमेधमवाप्नोति गतिं च परमां व्रजेत् ॥ ५९
ततो गच्छेत धर्मज्ञ भर्तृस्थानमनुत्तमम् ।
यत्र नित्यं महासेनो गुहः सन्निहितो नृप ॥ ६०
तत्र गत्वा नृपश्रेष्ठ गमनादेव सिध्यति ।
कोटितीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ६१
प्रदक्षिणमुपावृत्य ज्येष्ठस्थानं व्रजेन्नरः ।
अभिगम्य महादेवं विराजति यथा शशी ॥ ६२
तत्र कूपे महाराज विश्रुता भरतर्षभ ।
समुद्रास्तत्र चत्वारो निवसन्ति युधिष्ठिर ॥ ६३
तत्रोपस्पृश्य राजेन्द्र पितृदेवार्चने रतः ।
नियतात्मा नरः पूतो गच्छेत परमां गतिम् ॥ ६४
ततो गच्छेत राजेन्द्र शृङ्गबेरपुरं महत् ।
यत्र तीर्णो महाराज रामो दाशरथिः पुरा ॥ ६५
तस्मिंस्तीर्थे महाबाहो स्नात्वा पापैः प्रमुच्यते ।
गङ्गायां तु नरः स्नात्वा ब्रह्मचारी समाहितः ॥ ६६
विधूतपाप्मा भवति वाजपेयं च विन्दति ।
ततो मुञ्जवटं गच्छेत्स्थानं देवस्य धीमतः ॥ ६७
अभिगम्य महादेवमभिवाद्य च भारत ।
प्रदक्षिणमुपावृत्य गाणपत्यमवाप्नुयात् ॥ ६८
तस्मिंस्तीर्थे तु जाह्नव्यां स्नात्वा पापैः प्रमुच्यते ।
ततो गच्छेत राजेन्द्र प्रयागमृषिसंस्तुतम् ॥ ६९
यत्र ब्रह्मादयो देवा दिशश्च सदिगीश्वराः ।
लोकपालाश्च साध्याश्च पितरो लोकसंमताः ॥ ७०
सनत्कुमारप्रमुखास्तथैव परमर्षयः ।
अङ्गिरःप्रमुखाश्चैव तथा ब्रह्मर्षयोऽमलाः ॥ ७१
तथा नागाः सुपर्णाश्च सिद्धाश्चक्रचरास्तथा ।
सरितः सागराश्चैव गन्धर्वाप्सरसोऽपि च ॥ ७२
हरिश्च भगवानास्ते प्रजापतिपुरस्कृतः ।
तत्र त्रीण्यग्निकुण्डानि येषां मध्येन जाह्नवी ॥ ७३
प्रयागादभिनिष्क्रान्ता सर्वतीर्थपुरस्कृता ।
तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता ॥ ७४
यमुना गङ्गया सार्धं संगता लोकपावनी ।
गङ्गायमुनयोर्मध्यं पृथिव्या जघनं स्मृतम् ॥ ७५
प्रयागं जघनस्थानमुपस्थमृषयो विदुः ।
प्रयागं सप्रतिष्ठानं कम्बलाश्वतरौ तथा ॥ ७६
तीर्थं भोगवती चैव वेदिरेषा प्रजापतेः ।
तत्र वेदाश्च यज्ञाश्च मूर्तिमन्तो युधिष्ठिर ॥ ७७
प्रजापतिमुपासन्ते ऋषयश्च तपोधनाः ।
यजन्ते क्रतुभिर्देवास्तथा चक्रधरा नृपाः ॥ ७८
ततः पुण्यतमं नाम त्रिषु लोकेषु भारत ।
प्रयागं सर्वतीर्थेभ्यः प्रवदन्त्यधिकं विभो ॥ ७९
श्रवणात्तस्य तीर्थस्य नामसंकीर्तनादपि ।

चक्रचराः सूर्यादयः ॥ ७२ ॥ स्त्रीरूपायाः पृथिव्याः मेरुपृष्ठशीर्षाया हरिद्वारादारभ्य जघनं नाभेरधोभागः ॥ ७५ ॥ नदी

प्रोक्ता प्रजापतेरिति ध. पाठः ॥ ७७ ॥

मृत्युकालभयाच्चापि नरः पापात्प्रमुच्यते ॥ ८०
तत्राभिषेकं यः कुर्यात्संगमे लोकविश्रुते ।
पुण्यं स फलमाप्नोति राजसूयाश्वमेधयोः ॥ ८१
एषा यजनभूमिर्हि देवानामभिसंस्कृता ।
तत्र दत्तं सूक्ष्ममपि महद्भवति भारत ॥ ८२
न वेदवचनात्तात न लोकवचनादपि ।
मतिरुत्क्रमणीया ते प्रयागमरणं प्रति ॥ ८३
दशतीर्थसहस्राणि षष्टिः कोट्यस्तथाऽपराः ।
येषां सान्निध्यमत्रैव कीर्तितं कुरुनन्दन ॥ ८४
चतुर्विद्ये च यत्पुण्यं सत्यवादिषु चैव यत् ।
स्नात एव तदाप्नोति गङ्गायमुनसंगमे ॥ ८५
तत्र भोगवती नाम वासुकेस्तीर्थमुत्तमम् ।
तत्राभिषेकं यः कुर्यात्सोऽश्वमेधफलं लभेत् ॥ ८६
तत्र हंसप्रपतनं तीर्थं त्रैलोक्यविश्रुतम् ।
दशाश्वमेधिकं चैव गङ्गायां कुरुनन्दन ॥ ८७
कुरुक्षेत्रसमा गङ्गा यत्र तत्रावगाहिता ।
विशेषो वै कनखले प्रयागे परमं महत् ॥ ८८
यद्यकार्यशतं कृत्वा कृतं गङ्गावसेचनम् ।
सर्वं तत्तस्य गङ्गापो दहत्यग्निरिवेन्धनम् ॥ ८९
सर्वं कृतयुगे पुण्यं त्रेतायां पुष्करं स्मृतम् ।
द्वापरेऽपि कुरुक्षेत्रं गङ्गा कलियुगे स्मृता ॥ ९०
पुष्करे तु तपस्तप्येद्दानं दद्यान्महालये ।
मलये त्वग्निमारोहेद्भृगुतुन्दे त्वनाशनम् ॥ ९१
पुष्करे तु कुरुक्षेत्रे गङ्गायां मगधेषु च ।
स्नात्वा तारयते जन्तुः सप्तसप्तावरांस्तथा ॥ ९२
पुनाति कीर्तिता पापं दृष्टा भद्रं प्रयच्छति ।
अवगाढा च पीता च पुनात्यासप्तमं कुलम् ॥ ९३
यावदस्थि मनुष्यस्य गङ्गायाः स्पृशते जलम् ।
तावत्स पुरुषो राजन्स्वर्गलोके महीपते ॥ ९४
यथा पुण्यानि तीर्थानि पुण्यान्यायतनानि च ।
उपास्य पुण्यं लब्ध्वा च भवत्यमरलोकभाक् ॥ ९५
न गङ्गासदृशं तीर्थं न देवः केशवात्परः ।
ब्राह्मणेभ्यः परं नास्ति एवमाह पितामहः ॥ ९६
यत्र गङ्गा महाराज स देशस्तत्तपोवनम् ।
सिद्धिक्षेत्रं च तज्ज्ञेयं गङ्गातीरसमाश्रितम् ॥ ९७
इदं सत्यं द्विजातीनां साधूनामात्मनोपि च ।
सुहृदां च जपेत्कर्णे शिष्यस्यानुगतस्य च ॥ ९८
इदं धन्यमिदं मेध्यमिदं स्वर्ग्यमिदं सुखम् ।
इदं पुण्यमिदं रम्यं पावनं धर्म्यमुत्तमम् ॥ ९९
महर्षीणामिदं गुह्यं सर्वपापप्रमोचनम् ।
अधीत्य द्विजमध्ये च निर्मलः स्वर्गमाप्नुयात् ॥ १००
श्रीमत्स्वर्ग्यं तथा पुण्यं सपत्नशमनं शिवम् ।
मेधाजननमग्र्यं वै तीर्थवंशानुकीर्तनम् ॥ १०१
अपुत्रो लभते पुत्रमधनो धनमाप्नुयात् ।
महीं विजयते राजा वैश्यो धनमवाप्नुयात् ॥ १०२
शूद्रो यथेप्सितान्कामान्ब्राह्मणः पारगः पठन् ।
यश्चेदं शृणुयान्नित्यं तीर्थपुण्यं नरः शुचिः ।
जातीः स स्मरते बह्वीर्नाकपृष्ठे च मोदते ॥ १०३
गम्यान्यपि च तीर्थानि कीर्तितान्यगमानि च ।
मनसा तानि गच्छेत सर्वतीर्थसमीक्षया ॥ १०४
एतानि वसुभिः साध्यैरादित्यैर्मरुदश्विभिः ।
ऋषिभिर्देवकल्पैश्च स्नातानि सुकृतैषिभिः ॥ १०५
एवं त्वमपि कौरव्य विधिनाऽनेन सुव्रत ।
व्रज तीर्थानि नियतः पुण्यं पुण्येन वर्धयन् ॥ १०६
भावितैः करणैः पूर्वमास्तिक्याच्छ्रुतिदर्शनात् ।
प्राप्यन्ते तानि तीर्थानि सद्भिः शास्त्रार्थदर्शिभिः ।
सद्भिः शास्त्रार्थतत्वज्ञैर्ब्राह्मणैः सह गम्यताम् १०७
नाव्रती नाकृतात्मा च नाशुचिर्न च तस्करः ।
स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः ॥ १०८
त्वया तु सम्यग्वृत्तेन नित्यं धर्मार्थदर्शिना ।
'पितरस्तात सर्वे च तारिताः प्रपितामहाः ॥' १०९
पिता पितामहश्चैव सर्वे च प्रपितामहाः ।
पितामहपुरोगाश्च देवाः सर्षिगणा नृप ।
तव धर्मेण धर्मज्ञ नित्यमेवाभितोषिताः ॥ ११०

प्रयागगमनं प्रतीति क. पाठः ॥ ८३ ॥ चातुर्वेद्ये च यत्पुण्यमिति क. पाठः ॥ ८५ ॥ कैलासे सत्यलोके च नाकपृष्ठे च मोदत इति क. पाठः ॥ १०३ ॥ अगमानि अगम्यानि । समीक्षया दर्शनेच्छया ॥ १०४ ॥ करणैः इन्द्रियैः ॥ १०७ ॥ अकृतात्मा अवशीकृतचित्तः ॥ १०८ ॥

अवाप्स्यसि त्वं लोकान्वै वसूनां वासवोपम ।
कीर्तिं च महतीं भीष्म प्राप्स्यसे भुवि शाश्वतीं १११
नारद उवाच ।
एवमुक्त्वाऽभ्यनुज्ञाय पुलस्त्यो भगवानृषिः ।
प्रीतः प्रीतेन मनसा तत्रैवान्तरधीयत ॥ ११२
भीष्मश्च कुरुशार्दूल शास्त्रतत्त्वार्थदर्शिवान् ।
पुलस्त्यवचनाच्चैव पृथिवीं परिचक्रमे ॥ ११३
एवमेषा महाभागा प्रतिष्ठाने प्रतिष्ठिता ।
तीर्थयात्रा महापुण्या सर्वपापप्रमोचनी ॥ ११४
अनेन विधिना यस्तु पृथिवीं संचरिष्यति ।
अश्वमेधशतं साग्रं फलं प्रेत्य स भोक्ष्यति॥११५
ततश्चाष्टगुणं पार्थ प्राप्स्यसे धर्ममुत्तमम् ।
भीष्मः कुरूणां प्रवरो यथा पूर्वमवाप्तवान्॥११६
नेता च त्वमृषीन्यस्मात्तेन तेऽष्टगुणं फलम् ।
रक्षोगणविकीर्णानि तीर्थान्येतानि भारत ।
अगम्यानि मनुष्येन्द्रैस्त्वामृते कुरुनन्दन ॥११७
इदं देवर्षिचरितं सर्वतीर्थाभिसंवृतम् ।
यः पठेच्छृणुयाद्वाऽपि सर्वपापैः प्रमुच्यते ॥११८
ऋषिमुख्याः सदा यत्र वाल्मीकिस्त्वथ कश्यपः।
आत्रेयः कुण्डजठरो विश्वामित्रोऽथ गौतमः११९
असितो देवलश्चैव मार्कण्डेयोऽथ गालवः ।
भरद्वाजो वसिष्ठश्च मुनिरुद्दालकस्तथा ॥ १२०
शौनकः सह पुत्रेण व्यासश्च तपतांवरः ।
दुर्वासाश्च मुनिश्रेष्ठो जाबालिश्च महातपाः॥१२१
एते ऋषिवराः सर्वे त्वत्प्रतीक्षास्तपोधनाः ।
एभिः सह महाराज तीर्थान्येतान्यनुव्रज ॥१२२
एष ते लोमशो नाम महर्षिरमितद्युतिः ।
समेष्यति महाराज तेन सार्धमनुव्रज ॥ १२३
मयाऽपि सह धर्मज्ञ तीर्थान्येतान्यनुक्रमात् ।
प्राप्स्यसे महतीं कीर्तिं यथा राजा महाभिषक् ॥
यथा ययातिर्धर्मात्मा यथा राजा पुरूरवाः ।
तथा त्वं कुरुशार्दूल स्वेन धर्मेण शोभसे ॥ १२५
यथा भगीरथो राजा यथा रामश्च विश्रुतः ।
तथा त्वं सर्वराजभ्यो भ्राजसे रश्मिवानिव १२६
यथा मनुर्यथेक्ष्वाकुर्यथा पूरुर्महायशाः ।
यथा वैन्यो महाराज तथा त्वमपि विश्रुतः१२७
यथा च वृत्रहा सर्वान्सपत्नान्निर्दहन्पुरा ।
त्रैलोक्यं पालयामास देवराड्विगतज्वरः ॥ १२८
तथा शत्रुक्षयं कृत्वा त्वं प्रजाः पालयिष्यसि ।
स्वधर्मविजितामुर्वीं प्राप्य राजीवलोचन ।
ख्यातिं यास्यसि धर्मेण कार्तवीर्यार्जुनो यथा ॥
वैशंपायन उवाच ।
एवमाश्वास्य राजानं नारदो भगवानृषिः ।
अनुज्ञाप्य महाराज तत्रैवान्तरधीयत ॥ १३०
युधिष्ठिरोपि धर्मात्मा तमेवार्थं विचिन्तयन् ।
तीर्थयात्राश्रितं पुण्यमृषीणां प्रत्यवेदयत् ॥ १३१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

## चतुरशीतितमोऽध्यायः ॥ ८४ ॥

युधिष्ठिरेण धौम्यंप्रति अर्जुनेन विना स्वस्य काम्यकवनेऽनभिरुचिकथनपूर्वकं निवासाय स्थानान्तरकथनप्रार्थना ॥ १ ॥

वैशंपायन उवाच ।
भ्रातॄणां मतमाज्ञाय नारदस्य च धीमतः ।
पितामहसमं धौम्यं प्राह राजा युधिष्ठिरः ॥ १
मया स पुरुषव्याघ्रो जिष्णुः सत्यपराक्रमः ।
अस्त्रहेतोर्महाबाहुरमितात्मा विवासितः ॥ २
स हि वीरोऽनुरक्तश्च समर्थश्च तपोधनः ।
कृती च भृशमप्यस्त्रे वासुदेव इव प्रभुः ॥ ३
अहं ह्येतावुभौ ब्रह्मन्कृष्णावरिविघातिनौ ।

प्रतिष्ठाने प्रयागे । प्रतिष्ठिता समाप्ता ॥ ११४ ॥ महाभिषक् शन्तनुरूपेणावतीर्णः ॥ १२४ ॥ रश्मिवान् सूर्यः ॥ १२६ ॥

अभिजानामि विक्रान्तौ तथा व्यासः परन्तपौ ॥
त्रियुगौ पुण्डरीकाक्षौ वासुदेवधनंजयौ ।
नारदोऽपि तथा वेद योऽप्यशंसत्सदा मम ॥ ५
तथाऽहमपि जानामि नरनारायणावृषी ।
शक्तोऽयमित्यतो मत्वा मया स प्रेषितोऽर्जुनः ॥ ६
इन्द्रादनवरः शक्रं सुरसूनुः सुराधिपम् ।
द्रष्टुमस्त्राणि चादातुमिन्द्रादिति विवासितः ॥ ७
भीष्मद्रोणावतिरथौ कृपो द्रौणिश्च दुर्जयः ।
धृतराष्ट्रस्य पुत्रेण सुधृताः सुमहाबलाः ॥ ८
सर्वे वेदविदः शूराः सर्वेऽस्त्रकुशलास्तथा ।
'सर्वे महारथा मुख्याः सर्वे जितपरिश्रमाः ।'
योद्धुकामाश्च पार्थेन सततं ये महाबलाः ॥ ९
स च दिव्यास्त्रवित्कर्णः सूतपुत्रो महारथः ।
योऽस्त्रवेगानिलबलः शरार्चिस्तलनिःस्वनः ।
रजोधूमोऽस्त्रसंपातो धार्तराष्ट्रानिलोद्धतः ॥ १०
निसृष्ट इव कालेन युगान्तज्वलनो यथा ।
मम सैन्यमयं कक्षं प्रधक्ष्यति न संशयः ॥ ११
तं स कृष्णानिलोद्धूतो दिव्यास्त्रज्वलनो महान् ।
श्वेतवाजिबलाकाभृद्गाण्डीवेन्द्रायुधोल्बणः ॥ १२
संरब्धः शरधाराभिः सुदीप्तं कर्णपावकम् ।
उदीर्णोऽर्जुनमेघोऽयं शमयिष्यति संयुगे ॥ १३
स साक्षादेव सर्वाणि शक्रात्परपुरंजयः ।
दिव्यान्यस्त्राणि बीभत्सुर्यथावत्प्रतिपत्स्यते ॥ १४
अलं स तेषां सर्वेषामिति मे धीयते मतिः ।
नास्ति त्वतिक्रिया तस्य रणेऽरीणां प्रतिक्रिया १५
ते वयं पाण्डवं सर्वे गृहीतास्त्रमरिंदमम् ।
द्रष्टारो न हि बीभत्सुर्भारमुद्यम्य सीदति ॥ १६
वयं तु तमृते वीरं वनेऽस्मिन्द्विपदांवर ।
अवधानं न गच्छामः काम्यके सह कृष्णया ॥ १७
भवानन्यद्वनं साधु बह्वन्नं फलवच्छुचि ।
आख्यातु रमणीयं च सेवितं पुण्यकर्मभिः ॥ १८
यत्र कंचिद्वयं कालं वसन्तः सत्यविक्रमम् ।
प्रतीक्षामोऽर्जुनं वीरं वृष्टिकामा इवाम्बुदम् ॥ १९
विविधानाश्रमान्कांश्चिद्द्विजातिभ्यः प्रतिश्रुतान् ।
सरांसि सरितश्चैव रमणीयांश्च पर्वतान् ॥ २०
आचक्ष्व न हि मे ब्रह्मन्रोचते तमृतेऽर्जुनम् ।
वनेऽस्मिन्काम्यके वासो गच्छामोऽन्यां दिशं प्रति ॥

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥

## पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

धौम्येन युधिष्ठिराय प्राचीस्थनानातीर्थकथनम् ॥ १ ॥

वैशंपायन उवाच ।
तान्सर्वानुत्सुकान्दृष्ट्वा पाण्डवान्दीनचेतसः ।
आश्वासयंस्तथा धौम्यो बृहस्पतिसमोऽब्रवीत् ॥ १
ब्राह्मणानुमतान्पुण्यानाश्रमान्भरतर्षभ ।
दिशस्तीर्थानि शैलांश्च शृणु मे वदतोऽनघ ॥ २
यान्श्रुत्वा गदतो राजन्विशोको भवितासि ह ।
द्रौपद्या चानया सार्धं भ्रातृभिश्च नरेश्वर ॥ ३
श्रवणाच्चैव तेषां त्वं पुण्यमाप्स्यसि पाण्डव ।
गत्वा शतगुणं चैव तेभ्य एव नरोत्तम ॥ ४
शृणु पूर्वां दिशं राजन्देवर्षिगणसेविताम् ।
रम्यां ते कथयिष्यामि युधिष्ठिर यथास्मृति ॥ ५
तस्यां देवर्षिजुष्टायां नैमिषं नाम भारत ।
यत्र तीर्थानि देवानां पुण्यानि च पृथक्पृथक् ६
यत्र सा गोमती पुण्या रम्या देवर्षिसेविता ।

अनवरोऽन्यूनः ॥ ७ ॥ रजःकार्यं क्रोधः सएव धूमो यस्य । धार्तराष्ट्रैरनिलैरिव उद्धत उद्दीपितः ॥ १० ॥ कक्षं तृणवनम् ॥ ११ ॥ उल्बणो दुःसहः ॥ १२ ॥ अलं जेतुं पर्याप्तः ॥ १५ ॥ द्रष्टारो द्रक्ष्यामः ॥ १६ ॥ अवधानं स्वास्थ्यम् ॥ १७ ॥ ब्रह्माढ्यं जलवच्छुचीति क. घ. पाठः ॥ १८ ॥ चतुरशीतितमोऽध्यायः ॥ ८४ ॥

यज्ञभूमिश्च देवानां शामित्रं च विवस्वतः ॥ ७
तस्यां गिरिवरः पुण्यो गयो राजर्षिसत्कृतः ।
शिवं ब्रह्मसरो यत्र सेवितं त्रिदशर्षिभिः ॥ ८
यदर्थे पुरुषव्याघ्र कीर्तयन्ति पुरातनाः ।
एष्टव्या बहवः पुत्रा यद्येकोपि गयां व्रजेत् ॥ ९
गौरीं वा वरयेत्कन्यां नीलं वा वृषमुत्सृजेत् ।
उत्तारयति संतत्या दश पूर्वान्दशावरान् ॥ १०
महानदी च तत्रैव तथा गयशिरो नृप ।
यत्रासौ कीर्त्यते विप्रैरक्षय्यकरणो वटः ॥ ११
यत्र दत्तं पितृभ्योऽन्नमक्षय्यं भवति प्रभो ।
सा च पुण्यजला तत्र फल्गुनामा महानदी ॥१२
बहुमूलफला चापि कौशिकी भरतर्षभ ।
विश्वामित्रोऽध्यगाद्यत्र ब्राह्मणत्वं तपोधनः ॥१३
गङ्गा यत्र नदी पुण्या यस्यास्तीरे भगीरथः ।
अयजत्तत्र बहुभिः क्रतुभिर्भूरिदक्षिणैः ॥ १४
पाञ्चालेषु च कौरव्य कथयन्त्युत्पलावतम् ।
विश्वामित्रोऽयजद्यत्र शक्रेण सह कौशिकः ॥१५
यत्रानुवंशं भगवाञ्जामदग्न्यस्तथा जगौ ।
विश्वामित्रस्य तां दृष्ट्वा विभूतिमतिमानुषीम् ॥१६
कान्यकुब्जेऽपिबत्सोममिन्द्रेण सह कौशिकः ।
ततः क्षत्रादपाक्रामद्ब्राह्मणोस्मीति चाब्रवीत् ॥१७
पवित्रमृषिभिर्जुष्टं पुण्यं पावनमुत्तमम् ।
गङ्गायमुनयोर्वीर संगमं लोकविश्रुतम् ॥ १८
यत्रायजत भूतात्मा पूर्वमेव पितामहः ।
प्रयागमिति विख्यातं तस्माद्भरतसत्तम ॥ १९
अगस्त्यस्य तु राजेन्द्र तत्राश्रमवरो नृप ।
तत्तथा तापसारण्यं तापसैरुपशोभितम् ॥ २०
हिरण्यबिन्दुः कथितो गिरौ कालञ्जरे महान् ।
आगस्त्यपर्वतो रम्यः पुण्यो गिरिवरः शिवः ॥२१
महेन्द्रो नाम कौरव्य भार्गवस्य महात्मनः ।
अयजत्तत्र कौन्तेय पूर्वमेव पितामहः ॥ २२
यत्र भागीरथी पुण्या सरस्यासीद्युधिष्ठिर ।
यत्र सा ब्रह्मशालेति पुण्या ख्याता विशांपते ।
धूतपाप्मभिराकीर्णा पुण्यं तस्याश्च दर्शनम् ॥२३
पवित्रो मङ्गलीयश्च ख्यातो लोके सनातनः ।
केदारश्च मतङ्गस्य महानाश्रम उत्तमः ॥ २४
कुण्डोदः पर्वतो रम्यो बहुमूलफलोदकः ।
नैषधस्तृषितो यत्र जलं शर्म च लब्धवान् ॥ २५
यत्र देववनं पुण्यं तापसैरुपशोभितम् ।
बाहुदा च नदी यत्र नन्दा च गिरिमूर्धनि २६
तीर्थानि सरितः शैलाः पुण्यान्यायतनानि च ।
प्राच्यां दिशि महाराज कीर्तितानि मया तव२७
तिसृष्वन्यासु पुण्यानि दिक्षु तीर्थानि मे शृणु ।
सरितः पर्वतांश्चैव पुण्यान्यायतनानि च ॥ २८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

## षडशीतितमोऽध्यायः ॥ ८६ ॥

धौम्येन युधिष्ठिरंप्रति दक्षिणदिक्स्थनानातीर्थानुकीर्तनम् ॥ १ ॥

धौम्य उवाच ।
दक्षिणस्यां तु पुण्यानि शृणु तीर्थानि भारत ।
विस्तरेण यथाबुद्धि कीर्त्यमानानि तानि वै ॥ १
यस्यामाख्यायते पुण्या दिशि गोदावरी नदी ।
बह्वारामा बहुजला तापसाचरिता शिवा ॥ २
वेणा भीमरथी चैव नद्यौ पापभयापहे ।

शामित्रं शमितुः कर्म यज्ञे पशुमारणम् । विवस्वतः पुत्रस्य यमस्येति शेषः ॥ ७ ॥ तस्यां प्राच्यां दिशि । राजर्षिरपि गयसंज्ञः ॥ ८ ॥ पवित्रं तत्तुल्यं जन्ममरणादिदुःखं तस्मात्त्रायत इति पवित्रम् । अतएव ऋषिभिर्जुष्टं सेवितम् । पुण्यं धर्मवृद्धिहेतुः । पावनं पापनाशनम् ॥ १८ ॥ अत्रन्यान्पर्वे- तात्राजन्पुण्यो गिरिवरः शिवः इति क. ध. पाठः ॥ २१ ॥ सरसि मणिकर्णिकाख्ये प्रविष्टा आसीत् । आकीर्णा व्याप्ता ॥२३॥ मङ्गलीयः मङ्गलावहः ॥ २४ ॥ नैषधो नलः ॥ २५ ॥ बहुला च नदी यत्रेति क. ध. पाठः ॥ २६ ॥ पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

मृगद्विजसमाकीर्णे तापसालयभूषिते ॥ ३
राजर्षेस्तस्य च सरिन्नृगस्य भरतर्षभ ।
रम्यतीर्था बहुजला पयोष्णी द्विजसेविता ॥ ४
अपि चात्र महायोगी मार्कण्डेयो महायशाः ।
अनुवंश्यां जगौ गाथां नृगस्य धरणीपतेः ॥ ५
नृगस्य यजमानस्य प्रत्यक्षमिति नः श्रुतम् ।
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ।
'मरुतः परिवेष्टारः सदस्याश्च दिवौकसः ॥' ६
पयोष्ण्यां यजमानस्य वाराहे तीर्थ उत्तमे ।
उद्धृतं भूतलस्थं वा वायुना समुदीरितम् ।
पयोष्ण्या हरते तोयं पापमामरणान्तिकम् ॥ ७
स्वर्गादुत्तुङ्गममलं विषाणं यत्र शूलिनः ।
स्वमात्मविहितं दृष्ट्वा मर्त्यः शिवपुरं व्रजेत् ॥ ८
एकतः सरितः सर्वा गङ्गाद्याः सलिलोच्चयाः ।
पयोष्णी चैकतः पुण्या तीर्थेभ्यो हि मता मम ९
माठरस्य वनं पुण्यं बहुमूलफलं शिवम् ।
यूपश्च भरतश्रेष्ठ वरुणस्रोतसे गिरौ ॥ १०
प्रवेण्युत्तरपार्श्वे तु पुण्ये कण्वाश्रमे तथा ।
तापसानामरण्यानि कीर्तितानि यथाश्रुति ॥ ११
वेदी शूर्पारके तात जमदग्नेर्महात्मनः ।
रम्या पाषाणतीर्था च पुरश्चन्द्रा च भारत ॥ १२
अशोकतीर्थं तत्रैव कौन्तेय बहुलाश्रमम् ।
अगस्त्यतीर्थं पाण्ड्येषु वारुणं च युधिष्ठिर ॥ १३
कुमार्यः कथिताः पुण्याः पाण्ड्येष्वेव नरर्षभ ।
ताम्रपर्णीं तु कौन्तेय कीर्तयिष्यामि तां शृणु ॥ १४
यत्र देवैस्तपस्तप्तं महदिच्छद्भिराश्रमे ।
गोकर्णमिति विख्यातं त्रिषु लोकेषु भारत ॥ १५
शीततोयो बहुजलः पुण्यस्तात शिवश्च सः ।
ह्रदः परमदुष्प्रापो मानुषैरकृतात्मभिः ॥ १६
तत्र वृक्षतृणाद्यैश्च संपन्नः फलमूलवान् ।
आश्रमोऽगस्त्यशिष्यस्य पुण्यो देवसहे गिरौ ॥ १७
वैडूर्यपर्वतस्तत्र श्रीमान्मणिमयः शिवः ।
अगस्त्यस्याश्रमश्चैव बहुमूलफलोदकः ॥ १८
सुराष्ट्रेष्वपि वक्ष्यामि पुण्यान्यायतनानि च ।
आश्रमान्सरितश्चैव सरांसि च नराधिप ॥ १९
चमसोद्भेदनं विप्रास्तत्रापि कथयन्त्युत ।
प्रभासं चोदधौ तीर्थं त्रिषु लोकेषु विश्रुतम् ॥ २०
तत्र पिण्डारकं नाम तापसाचरितं शिवम् ।
उज्जयन्तश्च शिखरी क्षिप्रं सिद्धिकरो महान् ॥ २१
तत्र देवर्षिवीरेण नारदेनानुकीर्तितः ।
पुराणः श्रूयते श्लोकस्तं निबोध युधिष्ठिर ॥ २२
पुण्ये गिरौ सुराष्ट्रेषु मृगपक्षिनिषेविते ।
उज्जयन्ते स तप्ताङ्गो नाकपृष्ठे महीयते ॥ २३
'एष नारायणः श्रीमान्क्षीरार्णवनिकेतनः ।
नागपर्यङ्कमुत्सृज्य ह्यागतो मधुरां पुरीम् ॥' २४
पुण्या द्वारवती तत्र यत्रासौ मधुसूदनः ।
साक्षाद्देवः पुराणोसौ स हि धर्मः सनातनः ॥ २५
ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥ २६
पवित्राणां हि गोविन्दः पवित्रं परमुच्यते ।
पुण्यानामपि पुण्योसौ मङ्गलानां च मङ्गलम् ।
त्रैलोक्ये पुण्डरीकाक्षो देवदेवः सनातनः ॥ २७
अव्ययात्मा व्ययात्मा च क्षेत्रज्ञः परमेश्वरः ।
आस्ते हरिरचिन्त्यात्मा तत्रैव मधुसूदनः ॥ २८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥

---

## सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

धौम्येन युधिष्ठिरंप्रति प्रतीचीस्थतीर्थकथनम् ॥ १ ॥

**धौम्य उवाच ।**

अवन्तीषु प्रतीच्यां वै कीर्तयिष्यामि ते दिशि ।

---

अनुवंश्यां वंशानुरूपां तु नृगमात्रानुरूपाम् ॥ ५ ॥ अशोकतीर्थं मत्स्येष्विति ध. पाठः ॥ १३ ॥ महत् मोक्षफलम् ॥ १५ ॥ तप्ताङ्ग कृततपस्कः ॥ २३ ॥ षडशीतितमोऽध्यायः ॥ ८६ ॥

यानि तत्र पवित्राणि पुण्यान्यायतनानि च ॥ १
प्रियङ्ग्वाम्रवणोपेता वानीरफलमालिनी ।
प्रत्यक्स्रोता नदी पुण्या नर्मदा तत्र भारत ॥ २
त्रैलोक्ये यानि तीर्थानि पुण्यान्यायतनानि च ।
सरिद्वनानि शैलेन्द्रा देवाश्च सपितामहाः ॥ ३
नर्मदायां कुरुश्रेष्ठ सहसिद्धर्षिचारणैः ।
स्नातुमायान्ति पुण्यौघैः सदा वारिषु भारत ॥ ४
निकेतः श्रूयते पुण्यो यत्र विश्रवसो मुनेः ।
जज्ञे धनपतिर्यत्र कुबेरो नरवाहनः ॥ ५
वैदूर्यशिखरो नाम पुण्यो गिरिवरः शिवः ।
नित्यपुष्पफलास्तत्र पादपा हरितच्छदाः ॥ ६
तस्य शैलस्य शिखरे सरः पुण्यं महीपते ।
फुल्लपद्मं महाराज देवगन्धर्वसेवितम् ॥ ७
बह्वाश्चर्यं महाराज दृश्यते तत्र पर्वते ।
पुण्ये स्वर्गोपमे चैव देवर्षिगणसेविते ॥ ८
ह्रदिनी पुण्यतीर्था च राजर्षेस्तत्र वै सरित् ।
विश्वामित्रेण तपसा निर्मिता सर्वपावनी ॥ ९
यस्यास्तीरे सतां मध्ये ययातिर्नहुषात्मजः ।
पपात स पुनर्लोकाँल्लेभे धर्मान्सनातनान् ॥ १०
तत्र पुण्यो ह्रदः ख्यातो मैनाकश्चैव पर्वतः ।
बहुमूलफलोपेतस्त्वसितो नाम पर्वतः ॥ ११
आश्रमः कक्षसेनस्य पुण्यस्तत्र युधिष्ठिर ।
च्यवनस्याश्रमश्चैव विख्यातस्तत्र पाण्डव ।
तत्राल्पेनैव सिद्ध्यन्ति मानवास्तपसा विभो १२
जम्बूमार्गो महाराज ऋषीणां भावितात्मनाम् ।
आश्रमः शाम्यतां श्रेष्ठ मृगद्विजनिषेवितः ॥१३
ततः पुण्यतमा राजन्सततं तापसैर्युता ।
केतुमाला च मेध्या च गङ्गाद्वारं च भूमिप ।
ख्यातं च सैन्धवारण्यं पुण्यं द्विजनिषेवितम् ॥१४
पितामहसरः पुण्यं पुष्करं नाम नामतः ।
वैखानसानां सिद्धानामृषीणामाश्रमः प्रियः ॥१५
अप्यत्र संश्रयार्थाय प्रजापतिरथो जगौ ।
पुष्करेषु कुरुश्रेष्ठ गाथां सुकृतिनांवर ॥ १६
मनसाऽप्यभिकामस्य पुष्कराणि मनस्विनः ।
विप्रणश्यन्ति पापानि नाकपृष्ठे च मोदते ॥ १७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

## अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

धौम्येन युधिष्ठिरंप्रत्युदीचीस्थतीर्थकथनम् ॥ १ ॥

धौम्य उवाच ।
उदीच्यां राजशार्दूल दिशि पुण्यानि यानि वै ।
तानि ते कीर्तयिष्यामि पुण्यान्यायतनानि च ॥ १
शृणुष्वावहितो भूत्वा मम मन्त्रयतः प्रभो ।
कथाप्रतिग्रहो वीर श्रद्धां जनयते शुभाम् ॥ २
सरस्वती महापुण्या ह्रदिनी तीर्थमालिनी ।
समुद्रगा महावेगा यमुना यत्र पाण्डव ॥ ३
यत्र पुण्यतरं तीर्थं प्लक्षावतरणं शुभम् ।
यत्र सारस्वतैरिष्ट्वा गच्छन्त्यवभृथं द्विजाः ॥ ४
पुण्यं चाख्यायते दिव्यं शिवमग्निशिरोऽनघ ।
सहदेवोऽयजद्यत्र शम्याक्षेपेण भारत ॥ ५
एतस्मिन्नेव चार्थेऽसौ इन्द्रगीता युधिष्ठिर ।
गाथा चरति लोकेऽस्मिन्गीयमाना द्विजातिभिः ॥
अग्नयः सहदेवेन ये चिता यमुनामनु ।

प्रत्यक्स्रोताः पश्चिमवाहिनी ॥ २ ॥ शाम्यतां शमवताम् ॥ १३ ॥ गङ्गारण्यं च भूमिपेति ध. पाठः ॥ १४ ॥ संश्रयार्थाय वासार्थम् ॥१६॥ अभिकामस्य गन्तुमिच्छोः ॥ १७ ॥ सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

मन्त्रयतः कथयतः । कथाप्रतिग्रहः कथाया मनसि धारणम्

॥ २ ॥ ह्रदिनी वनमालिनीति झ. पाठः ॥ ३ ॥ सारस्वतैः सरस्वत्यां प्राप्तैः ॥ ४ ॥ सहदेवः सृञ्जयपुत्रः । शम्याक्षेपेण बलवता क्षिप्ता शम्या लगुडविशेषो यावद्दूरं पतेत्तावान् यज्ञमण्डपो यस्मिन्यज्ञे स शम्याक्षेपस्तेन ॥ ५ ॥

ते तस्य कुरुशार्दूल सहस्रशतदक्षिणाः ॥ ७
तत्रैव भरतो राजा चक्रवर्ती महायशाः ।
विंशतिं सप्त चाष्टौ च हयमेधानुपाहरत् ॥ ८
कामकृद्यो द्विजातीनां श्रुतस्तात यथा पुरा ।
अत्यन्तमाश्रमः पुण्यः शरभङ्गस्य विश्रुतः ॥ ९
सरस्वती नदी सद्भिः सततं पार्थ पूजिता ।
वालखिल्यैर्महाराज यत्रेष्टमृषिभिः पुरा ॥ १०
दृषद्वती महापुण्या यत्र ख्याता युधिष्ठिर ।
न्यग्रोधाख्यस्तु पाञ्चाल्यः पाञ्चाल्यो द्विपदांवर ।
दाल्भ्यघोषश्च दाल्भ्यश्च धरणीस्थो महात्मनः ११
कौन्तेयानन्तयशसः सुव्रतस्यामितौजसः ।
आश्रमः ख्यायते पुण्यस्त्रिषु लोकेषु विश्रुतः १२
एतावर्णाववर्णौ च विश्रुतौ मनुजाधिप ।
वेदज्ञौ वेदविद्वांसौ वेदविद्याविदावुभौ ।
ईजाते क्रतुभिर्मुख्यैः पुण्यैर्भरतसत्तम ॥ १३
समेत्य बहुशो देवाः सेन्द्राः सवरुणाः पुरा ।
विशाखयूपेऽतप्यन्त तेन पुण्यतमश्च सः ॥ १४
ऋषिर्महान्महाभागो जमदग्निर्महायशाः ।
पलाशकेषु पुण्येषु रम्येष्वयजत प्रभुः ॥ १५
यत्र सर्वाः सरिच्छ्रेष्ठाः साक्षात्तमृषिसत्तमम् ।
स्वं स्वं तोयमुपादाय परिवार्योपतस्थिरे ॥ १६
अपि चात्र महाराज स्वयं विश्वावसुर्जगौ ।
इमं श्लोकं तदा वीर प्रेक्ष्य दीक्षां महात्मनः १७
यजमानस्य वै देवाञ्जमदग्नेर्महात्मनः ।
आगम्य सरितो विप्रान्मधुना समतर्पयन् ॥ १८
गन्धर्वयक्षरक्षोभिरप्सरोभिश्च सेवितम् ।
किरातकिन्नरावासं शैलं शिखरिणांवरम् ॥ १९
बिभेद तरसा गङ्गा गङ्गाद्वारं युधिष्ठिर ।
पुण्यं तत्ख्यायते राजन्ब्रह्मर्षिगणसेवितम् ॥ २०
सनत्कुमारः कौरव्य पुण्यं कनखलं तथा ।
पर्वतश्च पुरुर्नाम यत्र यातः पुरूरवाः ॥ २१
भृगुर्यत्र तपस्तेपे महर्षिगणसेविते ।
राजन्स आश्रमः ख्यातो भृगुतुन्दो महागिरिः २२
यः स भूतं भविष्यच्च भवच्च भरतर्षभ ।
नारायणः प्रभुर्विष्णुः शाश्वतः पुरुषोत्तमः ॥२३
तस्यातियशसः पुण्यां विशालां बदरीमनु ।
आश्रमः ख्यायते पुण्यस्त्रिषु लोकेषु विश्रुतः २४
उष्णतोयवहा गङ्गा शीततोयवहा पुरा ।
सुवर्णसिकता राजन्विशालां बदरीमनु ॥ २५
ऋषयो यत्र देवाश्च महाभागा महौजसः ।
प्राप्य नित्यं नमस्यन्ति देवं नारायणं प्रभुम् २६
यत्र नारायणो देवः परमात्मा सनातनः ।
तत्र कृत्स्नं जगत्सर्वं तीर्थान्यायतनानि च ॥२७
तत्पुण्यं परमं ब्रह्म तत्तीर्थं तत्तपोवनम् ।
तत्परं परमं देवं भूतानां परमेश्वरम् ॥ २८
शाश्वतं परमं चैव धातारं परमं पदम् ।
यं विदित्वा न शोचन्ति विद्वांसः शास्त्रदृष्टयः ॥
तत्र देवर्षयः सिद्धाः सर्वे चैव तपोधनाः ।
आदिदेवो महायोगी यत्रास्ते मधुसूदनः ॥ ३०
पुण्यानामपि तत्पुण्यमत्र ते संशयोऽस्तु मा ।
एतानि राजन्पुण्यानि पृथिव्यां पृथिवीपते ।
कीर्तितानि नरश्रेष्ठ तीर्थान्यायतनानि च ॥ ३१
एतानि वसुभिः साध्यैरादित्यैर्मरुदश्विभिः ।
ऋषिभिर्देवकल्पैश्च सेवितानि महात्मभिः ॥ ३२
चरन्नेतानि कौन्तेय सहितो ब्राह्मणर्षभैः ।
भ्रातृभिश्च महाभागैरुत्कण्ठां विजयिष्यसि ॥३३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

शतं शतसहस्राणि सहस्रशतदक्षिणाः इति क. ध. पाठः ॥ ७ ॥ शंकरस्तत्र विश्रुत इति क. ध. पाठः ॥ ९ ॥ एता कृष्णंमृगी तद्वर्णौ कृष्णौ नरनारायणावित्यर्थः । वस्तुतस्त्ववर्णौ वर्णाः लोहितशुक्लकृष्णाः रजःसत्वतमांसि तद्रहितौ । तत्र वैवर्ण्यवर्ण्यौ चेति क. ध. पाठः ॥ १३ ॥ प्रभुर्जिष्णुरिति क. पाठः ॥२३॥ विशालां नामतः । बदरीमनु बदरीसमीपे ॥२४॥ अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

## एकोननवतितमोऽध्यायः ॥ ८९ ॥

लोमशेनेन्द्रवचनाद्युधिष्ठिरंप्रति पार्थस्य पाशुपतादिप्राप्तिकथनपूर्वकमिन्द्रसंदेशनिवेदनम् ॥ १ ॥

वैशंपायन उवाच ।
एवं संभाषमाणे तु धौम्ये कौरवनन्दन ।
लोमशः स महातेजा ऋषिस्तत्राजगाम ह ॥ १
तं पाण्डवाग्रजो राजा सगणो ब्राह्मणाश्च ते ।
उपातिष्ठन्महाभागं दिवि शक्रमिवामराः ॥ २
समभ्यर्च्य यथान्यायं धर्मपुत्रो युधिष्ठिरः ।
पप्रच्छागमने हेतुमटने च प्रयोजनम् ॥ ३
स पृष्टः पाण्डुपुत्रेण प्रीयमाणो महामनाः ।
उवाच श्लक्ष्णया वाचा हर्षयन्निव पाण्डवान् ॥४
संचरन्नस्मि कौन्तेय सर्वाँल्लोकान्यदृच्छया ।
गतः शक्रस्य भवनं तत्रापश्यं सुरेश्वरम् ॥ ५
तव च भ्रातरं वीरमपश्यं सव्यसाचिनम् ।
शक्रस्यार्धासनगतं तत्र मे विस्मयो महान् ॥ ६
आसीत्पुरुषशार्दूल दृष्ट्वा पार्थं तथागतम् ।
आह मां तत्र देवेशो गच्छ पाण्डुसुतान्प्रति ॥ ७
सोऽहमभ्यागतः क्षिप्रं दिदृक्षुस्त्वां सहानुजम् ।
वचनात्पुरुहूतस्य पार्थस्य च महात्मनः ॥ ८
आख्यास्ये ते प्रियं तात महत्पाण्डवनन्दन ।
भ्रातृभिः सहितो राजन्कृष्णया चैव तच्छृणु ॥९
यत्त्वयोक्तो महाबाहुरस्त्रार्थं भरतर्षभ ।
तदस्त्रमाप्तं पार्थेन रुद्रादप्रतिमं विभो ॥ १०
यत्तद्ब्रह्मशिरो नाम तपसा रुद्रमागमत् ।
अमृतादुत्थितं रौद्रं तल्लब्धं सव्यसाचिना ॥ ११
तत्समन्त्रं ससंहारं सप्रायश्चित्तमङ्गलम् ।
वज्रमस्त्राणि चान्यानि दण्डादीनि युधिष्ठिर ॥१२
यमात्कुबेराद्वरुणादिन्द्राच्च कुरुनन्दन ।
अस्त्राण्यधीतवान्पार्थो दिव्यान्यमितविक्रमः ॥१३
विश्वावसोस्तु तनयाद्गीतं नृत्यं च साम च ।
वादित्रं च यथान्यायं प्रत्यविन्दद्यथाविधि ॥१४
एवं कृतास्त्रः कौन्तेयो गान्धर्वं वेदमात्मवान् ।
सुखं वसति बीभत्सुरनुजस्यानुजस्तव ॥ १५
यदर्थं मां सुरश्रेष्ठ इदं वचनमब्रवीत् ।
तच्च ते कथयिष्यामि युधिष्ठिर निबोध मे ॥ १६
भवान्मनुष्यलोकेऽपि गमिष्यति न संशयः ।
ब्रूयाद्युधिष्ठिरं तत्र वचनान्मे द्विजोत्तम ॥ १७
आगमिष्यति ते भ्राता कृतास्त्रः क्षिप्रमर्जुनः ।
सुरकार्यं महत्कृत्वा यदशक्यं दिवौकसैः ॥ १८
तपसाऽपि त्वमात्मानं योजय भ्रातृभिः सह ।
तपसो हि परं नास्ति तपसा विन्दते महत् ॥१९
अहं च कर्णं जानामि यथावद्भरतर्षभ ।
सत्यसन्धं महोत्साहं महावीर्यं महाबलम् ॥ २०
महाहवेष्वप्रतिमं महायुद्धविशारदम् ।
महाधनुर्धरं वीरं महास्त्रं वरवर्णिनम् ॥ २१
महेश्वरसुतप्रख्यमादित्यतनयं प्रभुम् ।
तथाऽर्जुनमतिस्कन्धं सहजोल्बणपौरुषम् ॥ २२
न स पार्थस्य संग्रामे कलामर्हति षोडशीम् २३
यच्चापि ते भयं कर्णान्मनसिस्थमरिंदम ।
तच्चाप्यपहरिष्यामि सव्यसाचिन्युपागते ॥ २४
यच्च ते मानसं वीर तीर्थयात्रामिमां प्रति ।
स महर्षिर्लोमशस्ते कथयिष्यत्यसंशयम् ॥ २५
यच्च किंचित्तपोयुक्तं फलं तीर्थेषु भारत ।
ब्रह्मर्षिरेष ब्रूयात्ते न तच्छ्रद्धेयमन्यथा ॥ २६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥

---

प्रायश्चित्तं अस्त्राग्निना निरपराधानां दाहे यो दोषस्तस्य शोधनम् । मङ्गलं दग्धानामेवारामादीनां पुनर्विकसनम् । वज्रं वज्रवदप्रतीकार्यं रौद्रमेव ॥ १२ ॥ गीतं लौकिकं गानम् । साम ऋक्षु गानम् ॥ १४ ॥ सुरकार्यं निवातकवचादीनां वधः । कृतार्थः क्षिप्रमर्जुन इति क. ध. पाठः ॥ १८ ॥ सत्यसन्धं सत्यप्रतिज्ञम् ॥ २० ॥ वरवर्णिनं अतिसुन्दरम् ॥ २१ ॥ महेश्वरसुतप्रख्यं स्कन्दतुल्यम् । अतिस्कन्धं उन्नतांसम् ॥२२॥ अपहरिष्यामि कवचकुण्डलापहरणेन ॥ २४ ॥ तत् श्रद्धेयं नान्यथा ग्रहीतव्यमित्यर्थः ॥ २६ ॥ एकोननवतितमोऽध्यायः ॥ ८९ ॥

## नवतितमोऽध्यायः ॥ ९० ॥

लोमशेन युधिष्ठिरंप्रति स्वसाहित्येन तीर्थयात्राविधायकपार्थवचननिवेदनम् ॥ १ ॥ युधिष्ठिरेण लोमशाज्ञयाऽधिकपरिजनविसर्जनम् ॥ २ ॥

लोमश उवाच ।
धनंजयेन चाप्युक्तं यत्तच्छृणु युधिष्ठिर ।
युधिष्ठिरं भ्रातरं मे योजयेर्धर्म्यया धिया ॥ १
त्वं हि धर्मान्परान्वेत्थ तपांसि च तपोधन ।
श्रीमतां चापि जानासि धर्मं राज्ञां सनातनम् २
स भवान्परमं वेद पावनं पुरुषं प्रति ।
तेन संयोजयेथास्त्वं तीर्थपुण्येन पाण्डवान् ॥ ३
यथा तीर्थानि गच्छेत गाश्च दद्यात्स पार्थिवः ।
तथा सर्वात्मना कार्यमिति मामर्जुनोऽब्रवीत् ॥४
भवता चानुगुप्तोऽसौ चरेत्तीर्थानि सर्वशः ।
रक्षोभ्यो रक्षितव्यश्च दुर्गेषु विषमेषु च ॥ ५
दधीच इव देवेन्द्रं यथा चाप्यङ्गिरा रविम् ।
तथा रक्षस्व कौन्तेयान्राक्षसेभ्यो द्विजोत्तम ॥ ६
यातुधाना हि बहवो राक्षसाः पर्वतोपमाः ।
त्वयाऽभिगुप्तान्कौन्तेयान्न विवर्तेयुरन्तिकम् ॥ ७
सोऽहमिन्द्रस्य वचनान्नियोगादर्जुनस्य च ।
रक्षमाणो भयेभ्यस्त्वां चरिष्यामि त्वया सह ॥ ८
द्विस्तीर्थानि मया पूर्वं दृष्टानि कुरुनन्दन ।
इदं तृतीयं द्रक्ष्यामि तान्येव भवता सह ॥ ९
इयं राजर्षिभिर्याता पुण्यकृद्भिर्युधिष्ठिर ।
मन्वादिभिर्महाराज तीर्थयात्रा भयापहा ॥ १०
नानृजुर्नाकृतात्मा च नाविद्यो न च पापकृत् ।
स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः ॥ ११
त्वं तु धर्ममतिर्नित्यं धर्मज्ञः सत्यसंगरः ।
विमुक्तः सर्वपापेभ्यो भूय एव भविष्यसि ॥१२
यथा भगीरथो राजा राजानश्च गयादयः ।
यथा ययातिः कौन्तेय तथा त्वमपि पाण्डव॥१३

युधिष्ठिर उवाच ।
न हर्षात्संप्रपश्यामि वाक्यस्यास्योत्तरं क्वचित् ।
यन्मां स्मरति देवेशः किं नामाभ्यधिकं ततः॥१४
भवता संगमो यस्य भ्राता चैव धनंजयः ।
वासवः स्मरते यस्य को नामाभ्यधिकस्ततः ॥१५
यच्च मां भगवानाह तीर्थानां गमनं प्रति ।
धौम्यस्य वचनादेषा बुद्धिः पूर्वं कृतैव मे ॥ १६
तद्यदा मन्यसे ब्रह्मन्गमनं तीर्थदर्शने ।
तदैव गन्तास्मि तीर्थान्येष मे निश्चयः परः ॥१७
वैशंपायन उवाच ।
गमने कृतबुद्धिं तं पाण्डवं लोमशोऽब्रवीत् ।
लघुर्भव महाराज लघुः स्वैरं गमिष्यसि ॥ १८
युधिष्ठिर उवाच ।
भिक्षाभुजो निवर्तन्तां ब्राह्मणा यतयश्च ये ॥१९
क्षुत्तृडध्वश्रमायासशीतार्तिमसहिष्णवः ।
ते सर्वे विनिवर्तन्तां ये च मृष्टभुजो द्विजाः ॥२०
पक्वान्नलेह्यपानानां मांसानां च विकल्पकाः ।
तेऽपि सर्वे निवर्तन्तां ये च सूदानुयायिनः ।
मया यथोचिताऽऽजीव्यैः संविभक्ताश्च वृत्तिभिः॥
ये चाप्यनुगताः पौरा राजभक्तिपुरःसराः ।
धृतराष्ट्रं महाराजमभिगच्छन्तु ते च वै ।
स दास्यति यथाकालमुचिता यस्य या भृतिः २२
स चेद्यथोचितां वृत्तिं न दद्यान्मनुजेश्वरः ।
असत्प्रियहितार्थाय पाञ्चाल्यो वः प्रदास्यति॥२३
वैशंपायन उवाच ।
ततो भूयिष्ठशः पौरा गुरौ भारे समाहिते ।
विप्राश्च यतयो मुख्या जग्मुर्नागपुरं प्रति ॥ २४

पुरुषंप्रति पुरुषस्येत्यर्थः ॥ ३ ॥ द्विः द्विवारम् । तृतीयं तृतीयवारम् ॥ ९ ॥ तीर्थयात्रा शुभावहेति क ध. पाठः ॥ १० ॥ नानृती नाकृतात्मा चेति क. ध. पाठः ॥ ११ ॥

लघुरल्पपरिवारः ॥ १८ ॥ विकल्पकाः मृष्टामृष्टविभाजकाः । आजीव्यैर्भृत्यादिभिः । वृत्तिभिर्जीवनहेतुभिरन्नादिभिः ॥ २१ ॥ पाञ्चाल्यो द्रुपदः ॥ २३ ॥ नवतितमोऽध्यायः ॥ ९० ॥

तान्सर्वान्धर्मराजस्य प्रेम्णा राजाऽम्बिकासुतः ।
प्रतिजग्राह विधिवद्धनैश्च समतर्पयत् ॥ २५

ततः कुन्तीसुतो राजा लघुभिर्ब्राह्मणैः सह ।
लोमशेन च सुप्रीतस्त्रिरात्रं काम्यकेऽवसत् ॥ २६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि नवतितमोऽध्यायः ॥ ९० ॥

## एकनवतितमोऽध्यायः ॥ ९१ ॥

युधिष्ठिरेण लोमशादिभिः सह तीर्थसेवनाय प्रस्थानम् ॥ १ ॥

वैशंपायन उवाच ।
ततः प्रयान्तं कौन्तेयं ब्राह्मणा वनवासिनः ।
अभिगम्य तदा राजन्निदं वचनमब्रुवन् ॥ १
राजंस्तीर्थानि गन्तासि पुण्यानि भ्रातृभिः सह ।
देवर्षिणा च सहितो लोमशेन महात्मना ॥ २
अस्मानपि महाराज नेतुमर्हसि पाण्डव ।
अस्माभिर्हि न शक्यानि त्वदृते तानि कौरव ॥ ३
श्वापदैरुपसृष्टानि दुर्गाणि विषमाणि च ।
अगम्यानि नरैरल्पैस्तीर्थानि मनुजेश्वर ॥ ४
भवतो भ्रातरः शूरा धनुर्धरवराः सदा ।
भवद्भिः पालिताः शूरैर्गच्छामो वयमप्युत ॥ ५
भवत्प्रसादाद्धि वयं प्राप्नुयामः सुखं फलम् ।
तीर्थानां पृथिवीपाल वनानां च विशांपते ॥ ६
तव वीर्यपरित्राताः शुद्धास्तीर्थपरिप्लुताः ।
भवेम धूतपाप्मानस्तीर्थसंदर्शनान्नृप ॥ ७
भवानपि नरेन्द्रस्य कार्तवीर्यस्य भारत ।
अष्टकस्य च राजर्षेर्लोमपादस्य चैव ह ॥ ८
भरतस्य च वीरस्य सार्वभौमस्य पार्थिव ।
ध्रुवं प्राप्स्यति दुष्प्रापाँल्लोकांस्तीर्थपरिप्लुतः ॥ ९
प्रभासादीनि तीर्थानि महेन्द्रादींश्च पर्वतान् ।
गङ्गाद्याः सरितश्चैव प्लक्षादींश्च वनस्पतीन् ॥ १०
त्वया सह महीपाल द्रष्टुमिच्छामहे वयम् ।
'भवद्भिः पालिताः शूरैस्तीर्थान्यायतनानि च' ११
यदि ते ब्राह्मणेष्वस्ति काचित्प्रीतिर्जनाधिप ।
कुरु क्षिप्रं वचोऽस्माकं ततः श्रेयोऽभिपत्स्यसे ॥ १२
तीर्थानि हि महाबाहो तपोविघ्नकरैः सदा ।
अनुकीर्णानि रक्षोभिस्तेभ्यो नस्त्रातुमर्हसि ॥ १३
तीर्थान्युक्तानि धौम्येन नारदेन च धीमता ।
यान्युवाच च देवर्षिर्लोमशः सुमहातपाः ॥ १४
विधिवत्तानि सर्वाणि पर्यटस्व नराधिप ।
धूतपाप्मा सहास्माभिर्लोमशेनाभिपालितः ॥ १५
स राजा पूज्यमानस्तैर्हर्षादश्रुपरिप्लुतः ।
भीमसेनादिभिर्वीरैर्भ्रातृभिः परिवारितः ॥ १६
बाढमित्यब्रवीत्सर्वांस्तानृषीन्पाण्डवर्षभः ।
लोमशं समनुज्ञाप्य धौम्यं चैव पुरोहितम् ॥ १७
ततः स पाण्डवश्रेष्ठो भ्रातृभिः सहितो वशी ।
द्रौपद्या चानवद्याङ्ग्या गमनाय मनो दधे ॥ १८
अथ व्यासो महाभागस्तथा पर्वतनारदौ ।
काम्यके पाण्डवं द्रष्टुं समाजग्मुर्मनीषिणः ॥ १९
तेषां युधिष्ठिरो राजा पूजां चक्रे यथाविधि ।
सत्कृतास्ते महाभागा युधिष्ठिरमथाब्रुवन् ॥ २०
युधिष्ठिरयमौ भीम मनसा कुरुतार्जवम् ।
मनसा कृतशौचा वै शुद्धास्तीर्थानि यास्यथ ॥ २१
शरीरनियमं प्राहुर्ब्राह्मणा मानुषं व्रतम् ।
मनोविशुद्धां बुद्धिं च दैवमाहुर्व्रतं द्विजाः ॥ २२
मनो ह्यदुष्टं शौचाय पर्याप्तं वै नराधिप ।
मैत्रीं बुद्धिं समास्थाय शुद्धास्तीर्थानि गच्छत ॥ २३
ते यूयं मानसैः शुद्धाः शरीरनियमव्रतैः ।
दैवं व्रतं समास्थाय यथोक्तं फलमाप्स्यथ ॥ २४

तीर्थसंस्पर्शनान्नृपेति क. पाठः ॥ ७ ॥ अनुकीर्णानि व्याप्तानि । नोऽस्मान् ॥ १३ ॥ आर्जवमृजुबुद्धिं श्रद्धामित्यर्थः ॥ २१ ॥ मनो ह्यदुष्टं शूराणामिति क. पाठः ॥ २३ ॥ फलमाप्नुतेति क. पाठः ॥ २४ ॥

ते तथेति प्रतिज्ञाय कृष्णया सह पाण्डवाः ।
कृतस्वस्त्ययनाः सर्वे मुनिभिर्दैवमानुषैः ॥ २५
लोमशस्योपसंगृह्य पादौ द्वैपायनस्य च ।
नारदस्य च राजेन्द्र देवर्षेः पर्वतस्य च ॥ २६
धौम्येन सहिता वीरास्तथा तैर्वनवासिभिः ।
मार्गशीर्ष्यामतीतायां पुष्येण प्रययुस्ततः ॥ २७
कठिनानि समादाय चीराजिनजटाधराः ।
अभेद्यैः कवचैर्युक्तास्तीर्थान्यन्वचरंस्तत ॥ २८
इन्द्रसेनादिभिर्भृत्यै रथैः परिचतुर्दशैः ।
महानसव्यापृतैश्च तथाऽन्यैः परिचारकैः ॥ २९
सायुधा बद्धनिस्त्रिंशास्तूणवन्तः समार्गणाः ।
प्राङ्मुखाः प्रययुर्वीराः पाण्डवा जनमेजय ॥ ३०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥

---

## द्विनवतितमोऽध्यायः ॥ ९२ ॥

लोमशेन युधिष्ठिरंप्रति धर्माधर्मयोः समृद्ध्यसमृद्धिलक्षणोदर्ककारणत्वाभिधानम् ॥ १ ॥

युधिष्ठिर उवाच ।
न वै निर्गुणमात्मानं मन्ये देवर्षिसत्तम ।
तथाऽसि दुःखसंतप्तो यथा नान्यो महीपतिः ॥१
परांश्च निर्गुणान्मन्ये न च धर्मगतानपि ।
ते च लोमश लोकेऽस्मिन्नृध्यन्ते केन हेतुना ॥२
लोमश उवाच ।
नात्र दुःखं त्वया राजन्कार्यं पार्थ कथंचन ।
यदधर्मेण वर्धेयुरधर्मरुचयो जनाः ॥ ३
वर्धत्यधर्मेण नरस्ततो भद्राणि पश्यति ।
ततः सपत्नाञ्जयति समूलस्तु विनश्यति ॥ ४
'यत्र धर्मेण वर्धन्ते राजानो राजसत्तम ।
सर्वान्सपत्नान्बाधन्ते राज्यं चैषां विवर्धते ॥' ५
मया हि दृष्टा दैतेया दानवाश्च महीपते ।
वर्धमाना ह्यधर्मेण क्षयं चोपगताः पुनः ॥ ६
पुरा देवयुगे चैव दृष्टं सर्वं मया विभो ।
अरोचयन्सुरा धर्मं धर्मं तत्यजिरेऽसुराः ॥ ७
तीर्थानि देवा विविशुर्नाविशन्भारतासुराः ।
तानधर्मकृतो दर्पः पूर्वमेव समाविशत् ॥ ८
दर्पान्मानः समभवन्मानात्क्रोधो व्यजायत ।
क्रोधादह्रीस्ततोऽलज्जा वृत्तं तेषां ततोऽनशत् ॥ ९
तानलज्जान्गतश्रीकान्हीनवृत्तान्वृथाव्रतान् ।
क्षमा लक्ष्मीः स्वधर्मश्च नचिरात्प्रजहुस्ततः ॥ १०
लक्ष्मीस्तु देवानगमदलक्ष्मीरसुरान्नृप ॥ ११
तानलक्ष्मीसमाविष्टान्दर्पोपहतचेतसः ।
दैतेयान्दानवांश्चैव कलिरप्याविशत्ततः ॥ १२
तानलक्ष्मीसमाविष्टान्दानवान्कलिनाहतान् ।
दर्पाभिभूतान्कौन्तेय क्रियाहीनानचेतसः ।
मानाभिभूतानचिराद्विनाशः समपद्यत ॥ १३
निर्यशस्कास्तथा दैत्याः कृत्स्नशो विलयं गताः ।
'अधर्मरुचयो राजन्नलक्ष्म्या समधिष्ठिताः ॥'१४
देवास्तु सागरांश्चैव सरितश्च सरांसि च ।
अभ्यगच्छन्धर्मशीलाः पुण्यान्यायतनानि च १५
तपोभिः क्रतुभिर्दानैराशीर्वादैश्च पाण्डव ।
प्रजहुः सर्वपापानि श्रेयश्च प्रतिपेदिरे ॥ १६
एवमादानवन्तश्च निरादानाश्च सर्वशः ।
तीर्थान्यगच्छन्विबुधास्तेनापुर्भूतिमुत्तमाम् ॥ १७
तथा त्वमपि राजेन्द्र स्नात्वा तीर्थेषु सानुजः ।

---

कठिनानि करण्डानि ॥ २८ ॥ परिचतुर्दशैः पञ्चदशभिः । चतुर्दशभ्यः परि उपरीति व्युत्पत्तेः । संख्ययाव्ययासन्नेति समासः । बहुव्रीहौ संख्येये डजिति डच् ॥ २९ ॥ एकनवतितमोऽध्यायः ॥ ९१ ॥

परान् शत्रून् ॥ २ ॥ विविशुः स्नानार्थमिति शेषः ॥ ८ ॥

अह्रीः अकार्ये प्रवृत्तिः । ततः अलज्जा लज्जा निन्द्यतादोषाद्भयं तस्य नाशः ॥ ९ ॥ नचिरात् शीघ्रमेव ॥ १० ॥ आदानवन्तः आर्जवादिनियमग्रहणवन्तः । निरादानाः अप्रतिबद्धाः । सर्वशः देवादिभिरपि । एवं हि दानवन्तश्च क्रियावन्तश्च सर्वशः इति ध. पाठः ॥ १७ ॥

पुनर्वेत्स्यसि तां लक्ष्मीमेष पन्थाः सनातनः १८
यथैव हि नृगो राजा शिबिरौशीनरो यथा ।
भगीरथो वसुमना गयः पूरुः पुरूरवाः ॥ १९
चरमाणास्तपो नित्यं स्पर्शनादम्भसश्च ते ।
तीर्थाभिगमनात्पूता दर्शनाच्च महात्मनाम् ॥२०
अलभन्त यशः पुण्यं धनानि च विशांपते ।
तथा त्वमपि राजेन्द्र लब्ध्वा सुविपुलां श्रियम् २१
यथा चेक्ष्वाकुरभवत्सपुत्रजनबान्धवः ।
मुचुकुन्दोऽथ मांधाता मरुत्तश्च महीपतिः ॥ २२
कीर्तिं पुण्यामविन्दन्त यथा देवास्तपोबलात् ।
देवर्षयश्च कार्त्स्न्येन तथा त्वमपि वेत्स्यसि ॥ २३
धार्तराष्ट्रास्त्वधर्मेण मोहेन च वशीकृताः ।
नचिराद्वै विनङ्क्ष्यन्ति दैत्या इव न संशयः ॥ २४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥

## त्रिनवतितमोऽध्यायः ॥ ९३ ॥

युधिष्ठिरादिभिः क्रमेण ब्रह्मसरस्तीर्थगमनम् ॥ १ ॥ तत्र शमठेन युधिष्ठिरादीन्प्रति गययज्ञवर्णनम् ॥ २ ॥

वैशंपायन उवाच ।
ते तथा सहिता वीरा वसन्तस्तत्रतत्र ह ।
क्रमेण पृथिवीपाल नैमिषारण्यमागताः ॥ १
ततस्तीर्थेषु पुण्येषु गोमत्याः पाण्डवा नृप ।
कृताभिषेकाः प्रददुर्गाश्च वित्तं च भारत ॥ २
तत्र देवान्पितॄन्विप्रांस्तर्पयित्वा पुनःपुनः ।
कन्यातीर्थेऽश्वतीर्थे च गवां तीर्थे च भारत ॥ ३
कालकोट्यां विषप्रस्थे गिरावुष्य च कौरवाः ।
बाहुदायां महीपाल चक्रुः सर्वेऽभिषेचनम् ॥ ४
प्रयागे देवयजने देवानां पृथिवीपते ।
ऊषुराप्लुत्य गात्राणि तपश्चातस्थुरुत्तमम् ॥ ५
गङ्गायमुनयोश्चैव संगमे सत्यसंगराः ।
विपाप्मानो महात्मानो विप्रेभ्यः प्रददुर्वसु ॥ ६
तपस्विजनजुष्टां च ततो वेदीं प्रजापतेः ।
जग्मुः पाण्डुसुता राजन्ब्राह्मणैः सह भारत ॥ ७
तत्र ते न्यवसन्वीरास्तपश्चातस्थुरुत्तमम् ।
संतर्पयन्तः सततं वन्येन हविषा द्विजान् ॥ ८
ततो महीधरं जग्मुर्धर्मज्ञेनाभिसत्कृतम् ।
राजर्षिणा पुण्यकृता गयेनानुपमद्युते ॥ ९
नगो गयशिरो यत्र पुण्या चैव महानदी ।
वानीरमालिनी रम्या नदी पुलिनशोभिता ॥१०
दिव्यं पवित्रकूटं च पवित्रधरणीधरम् ।
ऋषिजुष्टं सुपुण्यं तत्तीर्थं ब्रह्मसरोतुलम् ॥ ११
अगस्त्यो भगवान्यत्र गतो वैवस्वतं प्रति ।
उवास च स्वयं तत्र धर्मराजः सनातनः ॥ १२
सर्वासां सरितां चैव समुद्भेदो विशांपते ।
यत्र संनिहितो नित्यं महादेवः पिनाकधृक् ॥१३
'परिपूर्णः परंज्योतिः परमात्मा सनातनः ।
ब्रह्मादिभिरुपास्योऽयं भगवान्परमेश्वरः ॥ १४
तं प्रणम्य महादेवं चतुर्वर्गफलप्रदम् ।
सिद्धिक्षेत्रमिदं मत्वा सर्वेषां मोक्षकाङ्क्षिणाम् ॥' १५
तत्र ते पाण्डवा वीराश्चातुर्मास्यैस्तदेजिरे ।
ऋषियज्ञेन महता यत्राक्षयवटो महान् ।
अक्षये देवयजने अक्षयं यत्र वै फलम् ॥ १६
ये तु तत्रोपवासांस्तु चक्रुर्निश्चितमानसाः ।
ब्राह्मणास्तत्र शतशः समाजग्मुस्तपोधनाः ॥ १७
चातुर्मास्येनायजन्त आर्षेण विधिना तदा ।
तत्र विद्यातपोवृद्धा ब्राह्मणा वेदपारगाः ।
कथां प्रचक्रिरे पुण्यां सदसिस्था महात्मनाम् ॥१८
तत्र विद्याव्रतस्नातः कौमारं व्रतमास्थितः ।

वेत्स्यसि लप्स्यसे ॥ १८ ॥ धार्तराष्ट्रस्तु दर्पेण इति क. ध. पाठः ॥ २४ ॥ द्विनवतितमोऽध्यायः ॥ ९२ ॥

वानीरमालिनी वेत्रपङ्क्तियुक्ता। सरो गयशिरो यत्रेति क. ध. पाठः ॥ १० ॥

शमठोऽकथयद्राजन्नाधूर्तरजसं गयम् ॥ १९
शमठ उवाच ।
आधूर्तरजसः पुत्रो गयो राजर्षिसत्तमः ।
पुण्यानि तस्य कर्माणि तानि मे शृणु भारत ॥२०
यस्य यज्ञो बभूवेह बह्वन्नो बहुदक्षिणः ।
यत्रान्नपर्वता राजञ्शतशोऽथ सहस्रशः ॥ २१
घृतकुल्याश्च दध्नश्च नद्यो बहुशतास्तथा ।
व्यञ्जनानां प्रवाहाश्च महार्हाणां सहस्रशः ॥२२
अहन्यहनि चाप्येवं याचतां संप्रदीयते ।
अन्ये च ब्राह्मणा राजन्भुञ्जतेऽन्नं सुसंस्कृतम् २३
तत्र वै दक्षिणाकाले ब्रह्मघोषो दिवं गतः ।
न च प्रज्ञायते किंचिद्ब्रह्मशब्देन भारत ॥ २४
पुण्येन चरता राजन्भूर्दिशः खं नभस्तथा ।
आपूर्णमासीच्छब्देन तदप्यासीन्महाद्भुतम् ॥ २५
यत्र स्म गाथा गायन्ति मनुष्या भरतर्षभ ।
अन्नपानैः शुभैस्तृप्ता देशे देशे सुवर्चसः ॥ २६
गयस्य यज्ञे के त्वद्य प्राणिनो भोक्तुमीप्सवः ।
तत्र भोजनशिष्टस्य पर्वताः पञ्चविंशतिः ॥ २७
न तत्पूर्वे जनाश्चक्रुर्न करिष्यन्ति चापरे ।
गयो यदकरोद्यज्ञे राजर्षिरमितद्युतिः ॥ २८
कथं तु देवा हविषा गयेन परितर्पिताः ।
पुनः शक्ष्यन्त्युपादातुमन्यैर्दत्तानि कानिचित् २९
सिकता वा यथा लोके यथा वा दिवि तारकाः ।
यथा वा वर्षतोधारा असंख्येयाः स्म केनचित् ।
तथा गणयितुं शक्या गययज्ञे न दक्षिणाः ॥३०
एवंविधाः सुबहवस्तस्य यज्ञा महीपतेः ।
बभूवुरस्य सरसः समीपे कुरुनन्दन ॥ ३१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥

## चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

लोमशेन युधिष्ठिरंप्रत्यगस्त्यचरितकथनारम्भः ॥ १ ॥ वातापील्वलवृत्तकथनम् ॥ २ ॥ तथा लोपामुद्रोत्पत्तिप्रकार-कथनम् ॥ ३ ॥

वैशंपायन उवाच ।
ततः संप्रस्थितो राजा कौन्तेयो भूरिदक्षिणः ।
अगस्त्याश्रममासाद्य दुर्जयायामुवास ह ॥ १
तत्रैव लोमशं राजा पप्रच्छ वदतांवरः ।
अगस्त्येनेह वातापिः किमर्थमुपशामितः ॥ २
आसीद्वा किंप्रभावश्च स दैत्यो मानवान्तकः ।
किमर्थं चोदितो मन्युरगस्त्यस्य महात्मनः ॥ ३
लोमश उवाच ।
इल्वलो नाम दैतेय आसीत्कौरवनन्दन ।
मणिमत्यां पुरि पुरा वातापिस्तस्य चानुजः ॥ ४
स ब्राह्मणं तपोयुक्तमुवाच दितिनन्दनः ।
पुत्रं मे भगवानेकमिन्द्रतुल्यं प्रयच्छतु ॥ ५
तस्मै स ब्राह्मणो नादात्पुत्रं वासवसंमितम् ।
चुक्रोध सोऽसुरस्तस्य ब्राह्मणस्य ततो भृशम् ॥ ६
तदाप्रभृति राजेन्द्र इल्वलो ब्रह्महाऽसुरः ।
मन्युमान्भ्रातरं छागं मायावी ह्यकरोत्ततः ॥ ७
मेषरूपी च वातापिः कामरूप्यभवत्क्षणात् ।
संस्कृत्य तं भोजयति ततो विप्रं जिघांसति ॥८
स चाह्वयति यं वाचा गतं वैवस्वतक्षयम् ।
स पुनर्देहमास्थाय जीवन्स्म प्रत्यदृश्यत ॥ ९
ततो वातापिमसुरं छागं कृत्वा सुसंस्कृतम् ।
तं ब्राह्मणं भोजयित्वा पुनरेव समाह्वयत् ॥ १०
तामिल्वलेन महता स्वरेण गिरमीरिताम् ।
श्रुत्वाऽतिमायो बलवान्क्षिप्रं ब्राह्मणकण्टकः ॥११
तस्य पार्श्वं विनिर्भिद्य ब्राह्मणस्य महासुरः ।
वातापिः प्रहसन्राजन्निश्चक्राम विशांपते ॥ १२

ब्रह्मशब्देन वेदध्वनिना ॥ २४ ॥ त्रिनवतितमोऽध्यायः ॥ ९३ ॥
दुर्जयायां वातापिपुर्यां मणिमतीसंज्ञायाम् ॥ १ ॥ नादात् न दत्तवान् ॥ ६ ॥ कामरूपी यथाकामं रूपाणि कर्तुं समर्थः । संस्कृत्य पक्त्वा ॥ ८ ॥ स च इल्वलश्च ॥ ९ ॥

एवं स ब्राह्मणान्राजन्भोजयित्वा पुनःपुनः ।
हिंसयामास दैतेय इल्वलो दुष्टचेतनः ॥ १३
अगस्त्यश्चापि भगवानेतस्मिन्काल एव तु ।
पितॄन्ददर्श गर्ते वै लम्बमानानधोमुखान् ॥ १४
सोऽपृच्छल्लम्बमानांस्तान्भगवन्तश्च किंपराः ।
'किमर्थं चेह लम्बध्वे गर्ते यूयमधोमुखाः ।'
संतानहेतोरिति ते प्रत्यूचुर्ब्रह्मवादिनः ॥ १५
ते तस्मै कथयामासुर्वयं ते पितरः स्वकाः ।
गर्तमेतमनुप्राप्ता लम्बामः प्रसवार्थिनः ॥ १६
यदि नो जनयेथास्त्वमगस्त्यापत्यमुत्तमम् ।
स्यान्नोऽस्मान्निरयान्मोक्षस्त्वं च पुत्राप्नुया गतिम् १७
स तानुवाच तेजस्वी सत्यधर्मपरायणः ।
करिष्ये पितरः कामं व्येतु वो मानसो ज्वरः॥१८
ततः प्रसवसन्तानं चिन्तयन्भगवानृषिः ।
आत्मनः प्रसवस्यार्थे नापश्यत्सदृशीं स्त्रियम्॥१९
स तस्य तस्य सत्वस्य तत्तदङ्गमनुत्तमम् ।
संगृह्य तत्समैरङ्गैर्निर्ममे स्त्रियमुत्तमाम् ॥ २०
स तां विदर्भराजाय पुत्रकामाय ताम्यते ।
निर्मितामात्मनोऽर्थाय मुनिः प्रादान्महातपाः२१
सा तत्र जज्ञे सुभगा विद्युत्सौदामनी यथा ।
विभ्राजमाना वपुषा व्यवर्धत शुभानना ॥ २२
जातमात्रां च तां दृष्ट्वा वैदर्भः पृथिवीपतिः ।
महर्षेण द्विजातिभ्यो न्यवेदयत भारत ॥ २३
अभ्यनन्दन्त तां सर्वे ब्राह्मणा वसुधाधिप ।
लोपामुद्रेति तस्याश्च चक्रिरे नाम ते द्विजाः ॥२४
ववृधे सा महाराज बिभ्रती रूपमुत्तमम् ।
अप्स्विवोत्पलिनी शीघ्रमग्नेरिव शिखा शुभा ॥२५
तां यौवनस्थां राजेन्द्र शतं कन्याः स्वलंकृताः ।
दास्यः शतं च कल्याणीमुपातस्थुर्वशानुगाः॥२६
सा स्म दासीशतवृता मध्ये कन्याशतस्य च ।
आस्ते तेजस्विनी कन्या रोहिणीव दिविप्रभा ॥२७
यौवनस्थामपि च तां शीलाचारसमन्विताम् ।
न वव्रे पुरुषः कश्चिद्भयात्तस्य महात्मनः ॥ २८
सा तु सत्यवती कन्या रूपेणाप्सरसोऽप्यति ।
तोषयामास पितरं शीलेन स्वजनं तथा ॥ २९
वैदर्भीं तु तथायुक्तां युवतीं प्रेक्ष्य वै पिता ।
मनसा चिन्तयामास कस्मै दद्यामिमां सुताम् ॥३०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

---

## पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

विदर्भराजेन सन्तानार्थं कन्यां कामयमानायागस्त्याय लोपामुद्राया यथाविधि प्रदानम् ॥ १ ॥ अगस्त्येन लोपामुद्राया महार्हवसनाभरणत्याजनेन वल्कलादिग्राहणपूर्वकं स्वाश्रमंप्रत्यानयनम् ॥ २ ॥ ऋतुकाले समाहूतया तया महार्हवसनाभरणानि याचितेनागस्त्येन तत्संपादनाय प्रस्थानम् ॥ ३ ॥

---

लोमश उवाच ।
यदा त्वमन्यतागस्त्यो गार्हस्थ्ये तां क्षमामिति ।
तदाऽभिगम्य प्रोवाच वैदर्भं पृथिवीपतिम् ॥ १
राजन्निवेशे बुद्धिर्मे वर्तते पुत्रकारणात् ।
वरये त्वां महीपाल लोपामुद्रां प्रयच्छ मे ॥ २
एवमुक्तः स मुनिना महीपालो विचेतनः ।
प्रत्याख्यानाय चाशक्तः प्रदातुं चैव नैच्छत ॥३
ततः स भार्यामभ्येत्य प्रोवाच पृथिवीपतिः ।
महर्षिर्वीर्यवानेष क्रुद्धः शापाग्निना दहेत् ॥ ४
तं तथा दुःखितं दृष्ट्वा सभार्यं पृथिवीपतिम् ।

---

प्रसवसन्तानं संततेरविच्छेदम् ॥ १९ ॥ तस्य तस्य सिंहमृगादेः अङ्गं कटिदृष्ट्यादि । सर्वगुणवतीमित्यर्थः ॥ २० ॥ जज्ञे जाता । विद्युदिति विशेषणं द्युतिविशेषोपपादनार्थम् ॥ २२ ॥ मुद्राणां तत्तन्मृगादिजातिगतानामसाधारणानां चिह्नानां कमनीयचक्षुष्ट्वानां लोपइव लोपस्तिरस्कारो यया सा लोपामुद्रा । आहिताग्न्यादिवत्पूर्वनिपातः । अन्येष्वपि दृश्यत इति दीर्घः ॥ २४ ॥ वशानुगाः इच्छानुरूपाः ॥ २६ ॥ चतुर्नवतितमोऽध्यायः॥९४॥

निवेशे विवाहे ॥ २ ॥

लोपामुद्राऽभिगम्येदं काले वचनमब्रवीत् ॥ ५
न मत्कृते महीपाल पीडामभ्येतुमर्हसि ।
प्रयच्छ मामगस्त्याय त्राह्यात्मानं मया पितः॥ ६
दुहितुर्वचनाद्राजा सोऽगस्त्याय महात्मने ।
लोपामुद्रां ततः प्रादाद्विधिपूर्वं विशांपते ॥ ७
प्राप्य भार्यामगस्त्यस्तु लोपामुद्रामभाषत ।
महार्हाण्युत्सृजैतानि वासांस्याभरणानि च ॥ ८
ततः सा दर्शनीयानि महार्हाणि तनूनि च ।
समुत्ससर्ज रम्भोरूर्वसनान्यायतेक्षणा ॥ ९
ततश्चीराणि जग्राह वल्कलान्यजिनानि च ।
समानव्रतचर्या च बभूवायतलोचना ॥ १०
गङ्गाद्वारमथागम्य भगवानृषिसत्तमः ।
उग्रमातिष्ठत तपः सह पत्न्याऽनुकूलया ॥ ११
सा प्रीत्या बहुमानाच्च पतिं पर्यचरत्तदा ।
अगस्त्यश्च परां प्रीतिं भार्यायामगमत्प्रभुः ॥ १२
ततो बहुतिथे काले लोपामुद्रां विशांपते ।
तपसा द्योतितां स्नातां ददर्श भगवानृषिः ॥ १३
स तस्याः परिचारेण शौचेन च दमेन च ।
श्रिया रूपेण च प्रीतो मैथुनायाजुहाव ताम् ॥ १४
ततः सा प्राञ्जलिर्भूत्वा लज्जमानेव भामिनी ।
तदा सप्रणयं वाक्यं भगवन्तमथाब्रवीत् ॥ १५
असंशयं प्रजाहेतोर्भार्यां पतिरविन्दत ।
या तु त्वयि मम प्रीतिस्तामृषे कर्तुमर्हसि ॥ १६
यथा पितुर्गृहे विप्र प्रासादे शयनं मम ।
तथाविधे त्वं शयने मामुपैतुमिहार्हसि ॥ १७
इच्छामि त्वां स्रग्विणं च भूषणैश्च विभूषितम् ।
उपसर्तुं यथाकामं दिव्याभरणभूषिता ॥ १८
अन्यथा नोपतिष्ठेयं चीरकाषायवासिनी ।
नैवापवित्रो विप्रर्षे भूषणोयं कथंचन ॥ १९
अगस्त्य उवाच ।
न ते धनानि विद्यन्ते लोपामुद्रे तथा मम ।
यथाविधानि कल्याणि पितुस्तव सुमध्यमे ॥ २०
लोपामुद्रोवाच ।
ईशोसि तपसा सर्वं समाहर्तुं तपोधन ।
क्षणेन जीवलोके यद्वसु किंचन विद्यते ॥ २१
अगस्त्य उवाच ।
एवमेतद्यथाऽऽत्थ त्वं तपोव्ययकरं तु तत् ।
यथा तु मे न नश्येत तपस्तन्मां प्रचोदय ॥ २२
लोपामुद्रोवाच ।
अल्पावशिष्टः कालोऽयमृतोर्मम तपोधन ।
न चान्यथाऽहमिच्छामि त्वामुपैतुं कथंचन ॥२३
न चापि धर्ममिच्छामि विलोप्तुं ते कथंचन ।
एवं तु मे यथाकामं संपादयितुमर्हसि ॥ २४
अगस्त्य उवाच ।
यद्येष कामः सुभगे तव बुद्ध्या विनिश्चितः ।
हर्तुं गच्छाम्यहं भद्रे चर काममिह स्थिता ॥ २५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

---

## षण्णवतितमोऽध्यायः ॥ ९६ ॥

धनयाचनाय श्रुतर्वादिनृपत्रयमुपगतेनागस्त्येन तद्धनानां समायव्ययतापरिज्ञानेन तैःसह इल्वलं प्रति गमनम् ॥ १ ॥

लोमश उवाच ।
ततो जगाम कौरव्य सोऽगस्त्यो भिक्षितुं वसु ।
श्रुतर्वाणं महीपालं यं वेदाभ्यधिकं नृपैः ॥ १
स विदित्वा तु नृपतिः कुम्भयोनिमुपागतम् ।
विषयान्ते सहामात्यः प्रत्यगृह्णात्सुसत्कृतम् ॥ २
तस्मै चार्घ्यं यथान्यायमानीय पृथिवीपतिः ।
प्राञ्जलिः प्रयतो भूत्वा पप्रच्छागमनेऽर्थिताम् ॥ ३
अगस्त्य उवाच ।

---

स्नातां ऋताविति शेषः ॥ १३ ॥ परिचारेण सेवया ॥ १४ ॥ भूषणोयं चीरकाषायादिस्तपस्विनां श्लाघ्योयं सामग्रीकलापो भोगसंपर्केणापवित्रो नैव भवत्विति शेषः ॥ १९ ॥ समाहर्तुं ममेप्सितमिति क. ध. पाठः ॥ २१ ॥ ऋतोः कालः षोडशदिनानि तेषु अल्पोऽवशिष्टः ॥ २३ ॥ पञ्चनवतितमोऽध्यायः ॥ ९५ ॥
विषयान्ते देशसीमान्ते ॥ २ ॥ आगमने निमित्तभूतां

वित्तार्थिनमनुप्राप्तं विद्धि मां पृथिवीपते ।
यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ मे ॥ ४
लोमश उवाच ।
तत आयव्ययौ पूर्णौ तस्मै राजा न्यवेदयत् ।
अतो विद्वन्नुपादत्स्व यदत्र व्यतिरिच्यते ॥ ५
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः ।
सर्वथा प्राणिनां पीडामुपादानादमन्यत ॥ ६
स श्रुतर्वाणमादाय ब्रध्नश्वमगमत्ततः ।
स च तौ विषयस्यान्ते प्रत्यगृह्णाद्यथाविधि ॥ ७
तयोरर्घ्यं च पाद्यं च ब्रध्नश्वः प्रत्यवेदयत् ।
अनुज्ञाप्य च पप्रच्छ प्रयोजनमुपक्रमे ।
'वद कामं मुनिश्रेष्ठ धन्योस्म्यागमनेन ते ॥' ८
अगस्त्य उवाच ।
वित्तकामाविह प्राप्तौ विद्ध्यावां पृथिवीपते ।
यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ नौ ॥ ९
लोमश उवाच ।
तत आयव्ययौ पूर्णौ ताभ्यां राजा न्यवेदयत् ।
अतो ज्ञात्वा तु गृह्णीतं यदत्र व्यतिरिच्यते ॥ १०
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः ।
सर्वथा प्राणिनां पीडामुपादानादमन्यत ॥ ११

पौरुकुत्सं ततो जग्मुस्त्रसदस्युं महाधनम् ।
अगस्त्यश्च श्रुतर्वा च ब्रध्नश्वश्च महीपतिः ॥ १२
त्रसदस्युस्तु तान्दृष्ट्वा प्रत्यगृह्णाद्यथाविधि ।
अभिगम्य महाराज विषयान्ते महामनाः ॥ १३
अर्चयित्वा यथान्यायमैक्ष्वाको राजसत्तमः ।
समस्तांश्च ततोऽपृच्छत्प्रयोजनमुपक्रमे ॥ १४
अगस्त्य उवाच ।
वित्तकामानिह प्राप्तान्विद्धि नः पृथिवीपते ।
यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ नः ॥ १५
लोमश उवाच ।
तत आयव्ययौ पूर्णौ तेषां राजा न्यवेदयत् ।
एतज्ज्ञात्वा ह्युपादद्ध्वं यदत्र व्यतिरिच्यते ॥ १६
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः ।
सर्वथा प्राणिनां पीडामुपादानादमन्यत ॥ १७
ततः सर्वे समेत्याथ ते नृपास्तं महामुनिम् ।
इदमूचुर्महाराज समवेक्ष्य परस्परम् ॥ १८
अयं वै दानवो ब्रह्मन्निल्वलो वसुमान्भुवि ।
तमतिक्रम्य सर्वेऽद्य वयं चार्थामहे वसु ॥ १९
लोमश उवाच ।
तेषां तदासीदुचितमिल्वलस्यैव भिक्षणम् ।
ततस्ते सहिता राजन्निल्वलं समुपाद्रवन् ॥ २०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥

## सप्तनवतितमोऽध्यायः ॥ ९७ ॥

इल्वलेनागस्त्याय मेषीकृतवातापिमांसपरिवेषणम् ॥ १ ॥ इल्वलेन वातापेराह्वानेऽगस्त्येन स्वेन तस्य जीर्णीकरणोक्तिः ॥ २ ॥ भीतेनेल्वलेनागस्त्याय धनदानपूर्वकं तज्जिघांसया तदनुगमनम् ॥ ३ ॥ अगस्त्येन हुङ्कारेणेल्वलस्य भस्मीकरणपूर्वकं लोपामुद्रायै बहुधनदानेन तस्यां गुणवदेकापत्योत्पादनम् ॥ ४ ॥

लोमश उवाच ।
इल्वलस्तान्विदित्वा तु महर्षिसहितान्नृपान् ।
उपस्थितान्सहामात्यो विषयान्ते ह्यपूजयत् ॥ १
तेषां ततोऽसुरश्रेष्ठस्त्वातिथ्यमकरोत्तदा ।
सुसंस्कृतेन कौरव्य भ्रात्रा वातापिना तदा ॥ २

ततो राजर्षयः सर्वे विषण्णा गतचेतसः ।
वातापिं संस्कृतं दृष्ट्वा मेषभूतं महासुरम् ॥ ३
अथाब्रवीदगस्त्यस्तान्राजर्षीन्नृपसत्तमः ।
विषादो वो न कर्तव्यो ह्यहं भोक्ष्ये महासुरम् ४
धुर्यासनमथासाद्य निषसाद महानृपिः ।

अर्थिताम् । किमिच्छन्नागतोसीति पप्रच्छेत्यर्थः ॥ ३ ॥ उपादानात् धनग्रहणात् ॥ ६ ॥ वाध्र्यश्वमगमत्तत इति क. ध. पाठः ॥ ७ ॥ उपक्रमे आगमने ॥ ८ ॥ नौ आवाभ्याम् ॥ ९ ॥ वसुमान् धनवान् ॥ १९ ॥ षण्णवतितमोऽध्यायः ॥ ९६ ॥

तं पर्यवेषद्दैत्येन्द्र इल्वलः प्रहसन्निव ॥ ५
अगस्त्य एव कृत्स्नं तु वातापिं बुभुजे ततः ।
'बह्वन्नाशापि ते मेऽस्तीत्यवदद्भक्षयन्स्वयम् ॥' ६
भुक्तवत्यसुरोऽह्वानमकरोत्तस्य चेल्वलः ।
'वातापे प्रतिबुध्यस्व दर्शयन्बलतेजसी ।
तपसा दुर्जयो यावदेष त्वां नातिवर्तते ॥ ७
ततस्तस्योदरं भेत्तुं वातापिर्वेगमाहरत् ।
तमबुध्यत तेजस्वी कुम्भयोनिर्महातपाः ॥ ८
स वीर्यात्तपसोग्रस्तु ननर्द भगवानृषिः ।
एष जीर्णोसि वातापे मया लोकस्य शान्तये ॥९
इत्युक्त्वा स्वकराग्रेण उदरं समताडयत् ।
त्रिरेवं प्रतिसंरब्धस्तेजसा प्रज्वलन्निव ॥' १०
ततो वायुः प्रादुरभूदधस्तस्य महात्मनः ।
शब्देन महता तात गर्जन्निव यथा घनः ॥ ११
वातापे निष्क्रमस्वेति पुनः पुनरुवाच ह ।
तं प्रहस्याब्रवीद्राजन्नगस्त्यो मुनिसत्तमः ।
कुतो निष्क्रमितुं शक्तो मया जीर्णस्तु सोसुरः॥१२
इल्वलस्तु विषण्णोऽभूद्दृष्ट्वा जीर्णं महासुरम् ।
प्राञ्जलिश्च सहामात्यैरिदं वचनमब्रवीत् ।
किमर्थमुपयाताः स्थ ब्रूत किं करवाणि वः ॥१३
प्रत्युवाच ततोऽगस्त्यः प्रहसन्निल्वलं तदा ।
ईशोस्यसुर विद्मस्त्वां वयं सर्वे धनेश्वरम् ॥ १४
एते च नातिधनिनो धनाशा महती मम ।
यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ नः ॥१५
ततोऽवमत्य तमृषिमिल्वलो वाक्यमब्रवीत् ।
दित्सितं यदि वेत्सि त्वं ततो दास्यामि ते वसु १६
अगस्त्य उवाच ।
गवां दशसहस्राणि राज्ञामेकैकशोऽसुर ।
तावदेव सुवर्णस्य दित्सितं ते महासुर ॥ १७
मह्यं ततो वै द्विगुणं रथश्चैव हिरण्मयः ।
मनोजवौ वाजिनौ च दित्सितं ते महासुर॥१८
'लोमश उवाच ।
इल्वलस्तु मुनिं प्राह सर्वमस्ति यथाऽऽत्थ माम् ।

ईप्सितं यदिह ब्रूहि तद्धि दास्यामि ते वसु इति क. पाठः
दित्सितं मया युष्मभ्यं दातुमिष्टम् ॥ १६ ॥

सर्वमेतत्प्रदास्यामि हिरण्यं गाश्च यद्धनम् ।
रथं तु यदवोचो मां नैतं विद्म हिरण्मयम् ॥ १९
आगस्त्य उवाच ।
न मे वागनृता काचिदुक्तपूर्वा महाऽसुर ।
विज्ञायतां रथः साधु व्यक्तमस्ति हिरण्मयः ॥ २०
लोमश उवाच ।
विज्ञायमानः स रथः कौन्तेयासीद्धिरण्मयः ।'
ततः प्रव्यथितो दैत्यो ददावभ्यधिकं वसु ॥२१
विवाजी च सुवाजी च तस्मिन्युक्तौ रथे हयौ ।
ऊहतुः स वसून्याशु तावगस्त्याश्रमं प्रति ।
सर्वान्राज्ञः सहागस्त्यान्निमेषादिव भारत ॥ २२
'इल्वलस्त्वनुगम्यैनमगस्त्यं हन्तुमैच्छत ।
भस्म चक्रे महातेजा हुङ्कारेण महाऽसुरम् ॥'२३
अगस्त्येनाभ्यनुज्ञाता जग्मू राजर्षयस्तदा ।
कृतवांश्च मुनिः सर्वं लोपामुद्राचिकीर्षितम् ॥२४
लोपामुद्रोवाच ।
कृतवानसि तत्सर्वं भगवन्मम काङ्क्षितम् ।
उत्पादय सकृन्मह्यमपत्यं वीर्यवत्तरम् ॥ २५
अगस्त्य उवाच ।
तुष्टोऽहमस्मि कल्याणि तव वृत्तेन शोभने ।
विचारणामपत्ये तु तव वक्ष्यामि तां शृणु ॥२६
सहस्रं तेऽस्तु पुत्राणां शतं वा तत्समं तव ।
दश वा शततुल्याः स्युरेको वाऽपि सहस्रजित् ॥
लोपामुद्रोवाच ।
सहस्रसंमितः पुत्र एकोप्यस्तु तपोधन ।
एको हि बहुभिः श्रेयान्विद्वान्साधुरसाधुभिः २८
स तथेति प्रतिज्ञाय तया समगमन्मुनिः ।
समये समशीलिन्या श्रद्धावान्श्रद्दधानया ॥ २९
तत आधाय गर्भं तमगमद्वनमेव सः ।
तस्मिन्वनगते गर्भो ववृधे सप्त शारदान् ॥ ३०
सप्तमेऽब्दे गते चापि प्राच्यवत्स महाकविः ।
ज्वलन्निव प्रभावेन दृढस्युर्नाम भारत ॥ ३१
साङ्गोपनिषदान्वेदाञ्जपन्नेव महातपाः ।

प्राच्यवदुदरान्निर्गतोऽभवदित्यर्थः ॥ ३१ ॥

तस्य पुत्रोऽभवद्दपेः स तेजस्वी महानृपिः ॥ ३२
स बाल एव तेजस्वी पितुस्तस्य निवेशने ।
इध्मानां भारमाजह्रे इध्मवाहस्ततोऽभवत् ॥ ३३
तथायुक्तं तु तं दृष्ट्वा मुमुदे स मुनिस्तदा ।
एवं स जनयामास भारतापत्यमुत्तमम् ।
लेभिरे पितरश्चास्य लोकान्राजन्यथेप्सितान् ॥३४
अगस्त्यस्याश्रमश्चायमत ऊर्ध्वं विशांपते ।
ख्यातो भुवि महाराज तेजसा तस्य धीमतः ३५
प्राह्लादिरेवं वातापिर्ब्रह्मघ्नो दुष्टचेतनः ।
एवं विनाशितो राजन्नगस्त्येन महात्मना ।
तस्यायमाश्रमो राजन्रमणीयैर्गुणैर्युतः ॥ ३६
एषा भागीरथी पुण्या देवगन्धर्वसेविता ।
वातेरिता पताकेव विराजति नभस्तले ॥ ३७
प्रतार्यमाणा कूटेषु यथा निम्नेषु नित्यशः ।
शिलातलेषु संत्रस्ता पन्नगेन्द्रवधूरिव ॥ ३८
दक्षिणां वै दिशं सर्वां प्लावयन्ती च मातृवत् ।
पूर्वं शंभोर्जटाभ्रष्टा समुद्रमहिषी प्रिया ।
अस्यां नद्यां सुपुण्यायां यथेष्टमवगाह्यताम् ॥ ३९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥

---

## अष्टनवतितमोऽध्यायः ॥ ९८ ॥

युधिष्ठिरेण भृगुतीर्थगमनम् ॥ १ ॥ लोमशेन युधिष्ठिरंप्रति परशुरामस्य दाशरथिरामेण तेजोहरणप्रकारकथनम् ॥ २ ॥ तथा परशुरामस्य पितृनिदेशाद्भृगुतीर्थनिमज्जनेन पुनस्तेजोलाभकथनम् ॥ ३ ॥

[लोमश उवाच ।
युधिष्ठिर निबोधेदं त्रिषु लोकेषु विश्रुतम् ।
भृगोस्तीर्थं महाराज महर्षिगणसेवितम् ॥ १
यत्रोपस्पृष्टवान्रामो हृतं तेजस्तदाप्तवान् ।
अत्र त्वं भ्रातृभिः सार्धं कृष्णया चैव पाण्डव २
दुर्योधनहृतं तेजः पुनरादातुमर्हसि ।
कृतवैरेण रामेण यथा चोपहृतं पुनः ॥ ३
वैशंपायन उवाच ।
स तत्र भ्रातृभिश्चैव कृष्णया चैव पाण्डवः ।
स्नात्वा देवान्पितॄंश्चैव तर्पयामास भारत ॥ ४
तस्य तीर्थस्य रूपं वै दीप्ताद्दीप्ततरं बभौ ।
अप्रधृष्यतरश्चासीच्छात्रवाणां नरर्षभ ॥ ५
अपृच्छच्चैव राजेन्द्र लोमशं पाण्डुनन्दनः ।
भगवन्किमर्थं रामस्य हृतमासीद्वपुः प्रभो ।
कथं प्रत्याहृतं चैव एतदाचक्ष्व पृच्छतः ॥ ६
लोमश उवाच ।
शृणु रामस्य राजेन्द्र भार्गवस्य च धीमतः ।
जातो दशरथस्यासीत्पुत्रो रामो महात्मनः ॥ ७
विष्णुः स्वेन शरीरेण रावणस्य वधाय वै ।
पश्यामस्तमयोध्यायां जातं दाशरथिं ततः ॥ ८
ऋचीकनन्दनो रामो भार्गवो रेणुकासुतः ।
तस्य दाशरथेः श्रुत्वा रामस्याक्लिष्टकर्मणः ॥ ९
कौतूहलान्वितो रामस्त्वयोध्यामगमत्पुनः ।
धनुरादाय तद्दिव्यं क्षत्रियाणां निबर्हणम् ।
जिज्ञासमानो रामस्य वीर्यं दाशरथेस्तदा ॥ १०
तं वै दशरथः श्रुत्वा विषयान्तमुपागतम् ।
प्रेषयामास रामस्य रामं पुत्रं पुरस्कृतम् ॥ ११
स तमभ्यागतं दृष्ट्वा उद्यतास्त्रमवस्थितम् ।
प्रहसन्निव कौन्तेय रामो वचनमब्रवीत् ॥ १२
कृतकालं हि राजेन्द्र धनुरेतन्मया विभो ।
समारोपय यत्नेन यदि शक्नोषि पार्थिव ॥ १३
इत्युक्तस्त्वाह भगवंस्त्वं नाधिक्षेप्तुमर्हसि ।
नाहमप्यधमो धर्मे क्षत्रियाणां द्विजातिषु ।
इक्ष्वाकूणां विशेषेण बाहुवीर्ये न कत्थनम् ॥१४
तमेवं वादिनं तत्र रामो वचनमब्रवीत् ।
अलं वै व्यपदेशेन धनुरायच्छ राघव ॥ १५

---

युक्तमध्ययनेध्मवाहनादौ ॥ ३४ ॥ प्राह्लादिः प्रह्लादगोत्रोद्भवः ॥ ३६ ॥ सप्तनवतितमोऽध्यायः ॥ ९७ ॥

रामो जामदग्न्यः । हृतं दाशरथिरामेण ॥ २ ॥ तस्य युधिष्ठिरस्य । तीर्थस्य तीर्थे स्नातस्य ॥ ५ ॥ वपुः तेजः ॥ ६ ॥ दाशरथेः । कर्मणि षष्ठी ॥ ९ ॥ व्यपदेशेन उक्त्या ॥ १५ ॥

ततो जग्राह रोषेण क्षत्रियर्षभसूदनम् ।
रामो दाशरथिर्दिव्यं हस्ताद्रामस्य कार्मुकम् ॥१६
धनुरारोपयामास सलील इव भारत ।
ज्याशब्दमकरोच्चैव स्मयमानः स वीर्यवान् ।
तस्य शब्दस्य भूतानि वित्रसन्त्यशनेरिव ॥ १७
अथाब्रवीत्तदा रामो रामं दाशरथिस्तदा ।
इदमारोपितं ब्रह्मन्किमन्यत्करवाणि ते ॥ १८
तस्य रामो ददौ दिव्यं जामदग्न्यो महात्मनः ।
शरमाकर्णदेशान्तमयमाकृष्यतामिति ॥ १९
लोमश उवाच ।
एतच्छ्रुत्वाऽब्रवीद्रामः प्रदीप्त इव मन्युना ।
श्रूयते क्षम्यते चैव दर्पपूर्णोसि भार्गव ॥ २०
त्वया ह्यधिगतं तेजः क्षत्रियेभ्यो विशेषतः ।
पितामहप्रसादेन तेन मां क्षिपसि ध्रुवम् ।
पश्य मां स्वेन रूपेण चक्षुस्ते वितराम्यहम् ॥ २१
ततो रामशरीरे वै रामः पश्यति भार्गवः ।
आदित्यान्सवसून्रुद्रान्साध्यांश्च समरुद्गणान् २२
पितरो हुताशनश्चैव नक्षत्राणि ग्रहास्तथा ।
गन्धर्वा राक्षसा यक्षा नद्यस्तीर्थानि यानि च ॥२३
ऋषयो वालखिल्याश्च ब्रह्मभूताः सनातनाः ।
देवर्षयश्च कात्स्र्न्येन समुद्राः पर्वतास्तथा ॥ २४
वेदाश्च सोपनिषदो वषट्कारैः सहाध्वरैः ।
चेतोमन्ति च सामानि धनुर्वेदश्च भारत ।
मेघवृन्दानि वर्षाणि विद्युतश्च युधिष्ठिर ॥ २५
ततः स भगवान्विष्णुस्तं वै बाणं मुमोच ह ।
शुष्काशनिसमाकीर्णं महोल्काभिश्च भारत ॥ २६
पांसुवर्षेण महता मेघवर्षैश्च भूतलम् ।
भूमिकम्पैश्च निर्घातैर्नादैश्च विपुलैरपि ॥ २७
स रामं विह्वलं कृत्वा तेजश्चाक्षिप्य केवलम् ।
आगच्छज्ज्वलितो बाणो रामबाहुप्रचोदितः ॥२८
स तु विह्वलतां गत्वा प्रतिलभ्य च चेतनाम् ।
रामः प्रत्यागतप्राणः प्राणमद्विष्णुतेजसम् ॥ २९
विष्णुना सोभ्यनुज्ञातो महेन्द्रमगमत्पुनः ।
भीतस्तु तत्र न्यवसद्व्रीडितस्तु महातपाः ॥ ३०
ततः संवत्सरेऽतीते हृतौजसमवस्थितम् ।
निर्मदं दुःखितं दृष्ट्वा पितरो राममब्रुवन् ॥ ३१
न वै सम्यगिदं पुत्र विष्णुमासाद्य वै कृतम् ।
स हि पूज्यश्च मान्यश्च त्रिषु लोकेषु सर्वदा ॥३२
गच्छ पुत्र नदीं पुण्यां वधूसरकृताह्वयाम् ।
तत्रोपस्पृश्य तीर्थेषु पुनर्वपुरवाप्स्यसि ॥ ३३
दीप्तोदं नाम तत्तीर्थं यत्र ते प्रपितामहः ।
भृगुर्देवयुगे राम तप्तवानुत्तमं तपः ॥ ३४
तत्तथा कृतवान्रामः कौन्तेय वचनात्पितुः ।
प्राप्तवांश्च पुनस्तेजस्तीर्थेऽस्मिन्पाण्डुनन्दन ॥ ३५
एतदीदृशकं तात रामेणाक्लिष्टकर्मणा ।
प्राप्तमासीन्महाराज विष्णुमासाद्य वै पुरा ॥ ३६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥

## एकोनशततमोऽध्यायः ॥ ९९ ॥

वृत्रासुरनिपीडितशक्रादिभिर्ब्रह्मवचनाद्वज्रनिर्माणाय दधीचंप्रति तच्छरीरास्थिप्रार्थनम् ॥ १ ॥ त्वष्ट्रा दधीचास्थिभिर्वज्रायुधनिर्माणम् ॥ २ ॥

युधिष्ठिर उवाच ।
भूय एवाहमिच्छामि महर्षेस्तस्य धीमतः ।
कर्मणां विस्तरं श्रोतुमगस्त्यस्य द्विजोत्तम ॥ १
लोमश उवाच ।
शृणु राजन्कथां दिव्यामद्भुतामतिमानुषीम् ।
अगस्त्यस्य महाराज प्रभावममितौजसः ॥ २
आसन्कृतयुगे घोरा दानवा युद्धदुर्मदाः ।
कालकेया इति ख्याता गणाः परमदारुणाः ॥ ३

चेतोमन्ति चेतनावन्ति । आर्षं पदत्वप्रयुक्तं रुत्वम् । चेतस्वन्तीत्यपेक्षितम् ॥ २५ ॥ अष्टनवतितमोऽध्यायः ॥ ९८ ॥

कालेया इति विख्याता इति क. पाठः ॥ ३ ॥

ते तु वृत्रं समाश्रित्य नानाप्रहरणोद्यताः ।
समन्तात्पर्यधावन्त महेन्द्रप्रमुखान्सुरान् ॥ ४
ततो वृत्रवधे यत्नमकुर्वंस्त्रिदशाः पुरा ।
पुरंदरं पुरस्कृत्य ब्रह्माणमुपतस्थिरे ॥ ५
कृताञ्जलींस्तु तान्सर्वान्परमेष्ठीत्युवाच ह ।
विदितं मे सुराः सर्वं यद्वः कार्यं चिकीर्षितम् ॥६
तमुपायं प्रवक्ष्यामि यथा वृत्रं वधिष्यथ ।
दधीच इति विख्यातो महानृषिरुदारधीः ॥ ७
तं गत्वा सहिताः सर्वे वरं वै संप्रयाचत ।
स वो दास्यति धर्मात्मा सुप्रीतेनान्तरात्मना ॥८
स वाच्यः सहितैः सर्वैर्भवद्भिर्जयकाङ्क्षिभिः ।
स्वान्यस्थीनि प्रयच्छेति त्रैलोक्यस्य हिताय वै ॥९
स शरीरं समुत्सृज्य स्वान्यस्थीनि प्रदास्यति ।
तस्यास्थिभिर्महाघोरं वज्रं संस्क्रियतां दृढम् ॥१०
महच्छत्रुहणं घोरं षडश्रं भीमनिःस्वनम् ।
तेन वज्रेण वै वृत्रं वधिष्यति शतक्रतुः ॥ ११
एतद्वः सर्वमाख्यातं तस्माच्छीघ्रं विधीयताम् ।
एवमुक्तास्ततो देवा अनुज्ञाप्य पितामहम् ॥ १२
नारायणं पुरस्कृत्य दधीचस्याश्रमं ययुः ।
सरस्वत्याः परे पारे नानाद्रुमलतावृतम् ॥ १३
षट्पदोद्गीतनिनदैर्विघुष्टं सामगैरिव ।
पुंस्कोकिलरवोन्मिश्रं जीवंजीवकनादितम् ॥ १४
महिषैश्च वराहैश्च सृमरैश्चमरैरपि ।
तत्र तत्रानुचरितं शार्दूलभयवर्जितैः ॥ १५
करेणुभिर्वारणैश्च प्रभिन्नकरटामुखैः ।
सरोवगाढैः क्रीडद्भिः समन्तादनुनादितम् ॥१६
सिंहव्याघ्रैर्महानादान्नदद्भिरनुनादितम् ।
अपरैश्चापि संलीनैर्गुहाकन्दरशायिभिः ॥ १७
तेषु तेष्ववकाशेषु शोभितं सुमनोरमम् ।
त्रिविष्टपसमप्रख्यं दधीचाश्रममागमन् ॥ १८
तत्रापश्यन्दधीचं ते दिवाकरसमद्युतिम् ।
जाज्वल्यमानं वपुषा यथा साक्षात्पितामहम् ॥१९
तस्य पादौ सुरा राजन्नभिवाद्य प्रणम्य च ।
अयाचन्त वरं सर्वे यथोक्तं परमेष्ठिना ॥ २०

ततो दधीचः परमप्रतीतः
सुरोत्तमांस्तानिदमभ्युवाच ।
करोमि यद्वो हितमद्य देवाः
स्वं चापि देहं स्वयमुत्सृजामि ॥ २१
स एवमुक्त्वा द्विपदांवरिष्ठः
प्राणान्वशी स्वान्सहसोत्ससर्ज ।
ततः सुरास्ते जगृहुः परासो-
रस्थीनि तस्याथ यथोपदेशम् ॥ २२
प्रहृष्टरूपाश्च जयाय देवा-
स्त्वष्टारमागम्य तमर्थमूचुः ।
त्वष्टा तु तेषां वचनं निशम्य
प्रहृष्टरूपः प्रयतः प्रयत्नात् ॥ २३
चकार वज्रं भृशमुग्ररूपं
कृत्वा च शक्रं स उवाच हृष्टः ।
अनेन वज्रप्रवरेण देव
भस्मीकुरुष्वाद्य सुरारिमुग्रम् ॥ २४
ततो हतारिः सगणः सुखं वै
प्रशाधि कृत्स्नं त्रिदिवं दिविष्ठः ।
त्वष्ट्रा तथोक्तस्तु पुरंदरस्त-
द्वज्रं प्रहृष्टः प्रयतो ह्यगृह्णात् ॥ २५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥

## शततमोऽध्यायः ॥ १०० ॥

इन्द्रेण वृत्रहननम् ॥ १ ॥ ततो देवगणाभिपीडनात्समुद्रं प्रविष्टैर्दैत्यैर्जगद्विनाशनाध्यवसायः ॥ २ ॥

लोमश उवाच ।
ततः स वज्री बलभिर्दैवतैरभिरक्षितः ।

स वो दास्यति ईप्सितमिति शेषः ॥८॥ षडश्रं षट्कोणम् ॥११॥ करेणुभिर्हस्तिनीभिः प्रभिन्नं मदस्रावि करटामदोद्भेदस्थानं गण्डस्थलैकदेशस्तस्य मुखमुपरिभागो तेषां तैः ॥ १६ ॥ त्रिविष्टपसमप्रख्यं स्वर्गतुल्यप्रकाशम् ॥ १८ ॥ परासोः गतप्राणस्य ॥ २२ ॥ एकोनशततमोऽध्यायः ॥ ९९ ॥

आससाद ततो वृत्रं स्थितमावृत्य रोदसी ॥ १
कालकेयैर्महाकायैः समन्तादभिरक्षितम् ।
समुद्यतप्रहरणैः सशृङ्गैरिव पर्वतैः ॥ २
ततो युद्धं समभवद्देवानां दानवैः सह ।
मुहूर्तं भरतश्रेष्ठ लोकत्रासकरं महत् ॥ ३
उद्यतप्रतिविद्धानां खड्गानां वीरबाहुभिः ।
आसीत्सुतुमुलः शब्दः शरीरेष्वभिपात्यताम् ॥४
शिरोभिः प्रपतद्भिश्चाप्यन्तरिक्षान्महीतलम् ।
तालैरिव महाराज वृन्ताद्भ्रष्टैरदृश्यत ॥ ५
ते हेमकवचा भूत्वा कालेयाः परिघायुधाः ।
त्रिदशानभ्यवर्तन्त दावदग्धा इवाद्रयः ॥ ६
तेषां वेगवतां वेगं सहितानां प्रधावताम् ।
न शेकुस्त्रिदशाः सोढुं ते भग्नाः प्राद्रवन्भयात् ७
तान्दृष्ट्वा द्रवतो भीतान्सहस्राक्षः पुरंदरः ।
वृत्रे विवर्धमाने च कश्मलं महदाविशत् ॥ ८
कालेयभयसंत्रस्तो देवः साक्षात्पुरंदरः ।
जगाम शरणं शीघ्रं तं तु नारायणं प्रभुम् ॥ ९
तं शक्रं कश्मलाविष्टं दृष्ट्वा विष्णुः सनातनः ।
स्वतेजो व्यदधच्छक्रे बलमस्य विवर्धयन् ॥ १०
विष्णुना गोपितं शक्रं दृष्ट्वा देवगणास्ततः ।
स्वं स्वं तेजः समादध्युस्तथा ब्रह्मर्षयोऽमलाः॥ ११
स समाप्यायितः शक्रो विष्णुना दैवतैः सह ।
ऋषिभिश्च महाभागैर्बलवान्समपद्यत ॥ १२

ज्ञात्वा बलस्थं त्रिदशाधिपं तु
ननाद वृत्रो महतो निनादान् ।
तस्य प्रणादेन धरा दिशश्च
खं द्यौर्नगाश्चापि चचाल सर्वम् ॥ १३
ततो महेन्द्रः परमाभितप्तः
श्रुत्वा रवं घोररूपं महान्तम् ।
भये निमग्नस्त्वरितो मुमोच
वज्रं महत्तस्य वधाय राजन् ॥ १४
स चक्रवज्राभिहतः पपात
महासुरः काञ्चनमाल्यधारी ।
यथा महाशैलवरः पुरस्ता-
त्स मन्दरो विष्णुकराद्विमुक्तः ॥ १५
तस्मिन्हते दैत्यवरे भयार्तः
शक्रः प्रदुद्राव सरः प्रवेष्टुम् ।
वज्रं न मेने स्वकराद्विमुक्तं
वृत्रं भयाच्चापि हतं न मेने ॥ १६
सर्वे च देवा मुदिताः प्रहृष्टा
महर्षयश्चेन्द्रमभिष्टुवन्तः ।
'वृत्रं हतं संददृशुः पृथिव्यां
वज्राहतं शैलमिवावदीर्णम् ॥ १७
सर्वांश्च दैत्यांस्त्वरिताः समेत्य
जघ्नुः सुरा वृत्रवधाभितप्तान् ।
ते वध्यमानास्त्रिदशैः समेतैः
समुद्रमेवाविविशुर्भयार्ताः ॥ १८
प्रविश्य चैवोदधिमप्रमेयं
झषाकुलं नक्रसमाकुलं च ।
तदा स्म मन्त्रं सहिताः प्रचक्रु-
स्त्रैलोक्यनाशार्थमभिप्रयत्नात् ॥ १९
तत्र स्म केचिन्मतिनिश्चयज्ञा-
स्तांस्तानुपायाननुवर्णयन्ति ।
तेषां तु तत्र क्रमकालयोगा-
द्घोरा मतिश्चिन्तयतां बभूव ॥ २०
ये सन्ति विद्यातपसोपपन्ना-
स्तेषां विनाशः प्रथमं तु कार्यः ।
लोका हि सर्वे तपसा ध्रियन्ते
तस्मात्त्वरध्वं तपसः क्षयाय ॥ २१
ये सन्ति केचिच्च वसुंधरायां
तपस्विनो धर्मविदश्च तज्ज्ञाः ।
तेषां वधः क्रियतां क्षिप्रमेव
तेषु प्रनष्टेषु जगत्प्रनष्टम् ॥ २२

---

रोदसी द्यावापृथिव्यौ ॥ १ ॥ तालैस्तालफलैः ॥ ५ ॥ व्यदधत् निहितवान् ॥ १० ॥ बलस्थं बलवन्तम् ॥ १३ ॥ हतमपि वृत्रं भयात् न हतमिव मेने ॥ १६ ॥ ध्रियन्ते जीवन्ति ॥ २१ ॥

एवं हि सर्वे गतबुद्धिभावा
जगद्विनाशे परमप्रहृष्टाः ।
दुर्गं समाश्रित्य महोर्मिमन्तं
रत्नाकरं वरुणस्यालयं स्म ॥ २३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि शततमोऽध्यायः ॥ १०० ॥

## एकाधिकशततमोऽध्यायः ॥ १०१ ॥

समुद्रान्तर्हितैर्दैत्यै रात्रौरात्रौ बहिर्निर्गत्याश्रमेषु ऋषिगणेषु निहतेषु देवगणैर्नारायणस्य शरणीकरणम् ॥ १ ॥

लोमश उवाच ।
समुद्रं ते समाश्रित्य वरुणं निधिमम्भसः ।
कालेयाः संप्रवर्तन्त त्रैलोक्यस्य विनाशने ॥ १
ते रात्रौ समभिक्रुद्धा भक्षयन्ति सदा मुनीन् ।
आश्रमेषु च ये सन्ति पुण्येष्वायतनेषु च ॥ २
वसिष्ठस्याश्रमे विप्रा भक्षितास्तैर्दुरात्मभिः ।
अशीतिः शतमष्टौ च नव चान्ये तपस्विनः ॥ ३
च्यवनस्याश्रमं गत्वा पुण्यं द्विजनिषेवितम् ।
फलमूलाशनानां हि मुनीनां भक्षितं शतम् ॥ ४
एवं रात्रौ स्म कुर्वन्ति विविशुश्चार्णवं दिवा ।
'कालेयास्ते दुरात्मानो भक्षयन्तस्तपोधनान् ॥'५
भरद्वाजाश्रमे चैव नियता ब्रह्मचारिणः ।
वाय्वाहाराम्बुभक्षाश्च विंशतिः संनिषूदिताः ॥६
एवं क्रमेण सर्वांस्तानाश्रमान्दानवास्तदा ।
निशायां परिबाधन्ते समुद्राम्बुबलाश्रयात् ।
कालोपसृष्टाः कालेया घ्नन्तो द्विजगणान्बहून् ॥७
न चैनानन्वबुध्यन्त मनुजा मनुजोत्तम ।
एवं प्रवृत्तान्दैत्यांस्तांस्तापसेषु तपस्विषु ॥ ८
'क्षयाय जगतः क्रूराः पर्यटन्ति स्म मेदिनीम् ॥९
प्रभाते समदृश्यन्त नियताहारकर्शिताः ।
महीतलस्था मुनयः शरीरैर्गतजीवितैः ॥ १०
क्षीणमांसैर्विरुधिरैर्विमज्जान्त्रैर्विसन्धिभिः ।
आकीर्णैराचिता भूमिः शङ्खानामिव राशिभिः ११
कलशैर्विप्रविद्धैश्च स्रुवैर्भग्नैस्तथैव च ।
विकीर्णैरग्निहोत्रैश्च भूर्बभूव समावृता ॥ १२
निःस्वाध्यायवषट्कारं नष्टयज्ञोत्सवक्रियम् ।
जगदासीन्निरुत्साहं कालेयभयपीडितम् ॥ १३
एवं संक्षीयमाणाश्च मानवा मनुजेश्वर ।
आत्मत्राणपरा भीताः प्राद्रवन्त दिशो भयात् ॥१४
केचिद्गुहाः प्रविविशुर्निर्भरांश्चापरे श्रिताः ।
अपरे मरणोद्विग्ना भयात्प्राणान्समुत्सृजन् ॥ १५
केचिदत्र महेष्वासाः शूराः परमहर्षिताः ।
मार्गमाणाः परं यत्नं दानवानां प्रचक्रिरे ॥ १६
न चैतानधिजग्मुस्ते समुद्रं समुपाश्रितान् ।
श्रमं जग्मुश्च परममाजग्मुः क्षयमेव च ॥ १७
जगत्युपशमं याते नष्टयज्ञोत्सवक्रिये ।
आजग्मुः परमामार्तिं त्रिदशा मनुजेश्वर ॥ १८
समेत्य समहेन्द्राश्च भयान्मन्त्रं प्रचक्रिरे ॥ १९
शरण्यं शरणं देवं नारायणमजं विभुम् ।
तेऽभिगम्य नमस्कृत्य वैकुण्ठमपराजितम् ।
ततो देवाः समस्तास्ते तदोचुर्मधुसूदनम् ॥ २०
त्वं नः स्रष्टा च भर्ता च हर्ता च जगतः प्रभो ।
त्वया सृष्टमिदं विश्वं यच्चेङ्गं यच्च नेङ्गति ।
'त्वय्येव पुण्डरीकाक्ष पुनस्तत्प्रविलीयते ॥' २१
त्वया भूमिः पुरा नष्टा समुद्रात्पुष्करेक्षण ।
वाराहं वपुराश्रित्य जगदर्थे समुद्धृता ॥ २२
आदिदैत्यो महावीर्यो हिरण्यकशिपुः पुरा ।
नारसिंहं वपुः कृत्वा सूदितः पुरुषोत्तम ॥ २३

---

गतबुद्धिभावाः प्राप्तधीनिश्चयाः । वरुणस्यालयं समुद्रम् ॥ २३ ॥ शततमोऽध्यायः ॥ १०० ॥

विनिश्चित्यैवमसुरा वज्रसंहारदुःखिता इति क. पाठः । कालेयाः कालायाः कश्यपभार्यायाः पुत्राः ॥ १ ॥ कालोपसृष्टाः मृत्युना ग्रस्ताः ॥ ७ ॥ दानवानां वधायेति शेषः ॥१६॥ इङ्गति चलतीति इङ्गं पचाद्यच् जङ्गमम् । नेङ्गति स्थावरम् ॥ २१ ॥ एकाधिकशततमोऽध्यायः ॥ १०१ ॥

अवध्यः सर्वभूतानां बलिश्चापि महासुरः ।
वामनं वपुराश्रित्य त्रैलोक्याद्भ्रंशितस्त्वया ॥ २४
असुरश्च महेष्वासो जम्भ इत्यभिविश्रुतः ।
यज्ञक्षोभकरः क्रूरस्त्वयैव विनिपातितः ॥ २५
एवमादीनि कर्माणि येषां संख्या न विद्यते ।
अस्माकं भयभीतानां त्वं गतिर्मधुसूदन ॥ २६
तस्मात्त्वां देवदेवेश लोकार्थं ज्ञापयामहे ।
रक्ष लोकांश्च देवांश्च शक्रं च महतो भयात् ।
'शरणागतसंत्राणे त्वमेकोऽसि दृढव्रतः ॥' २७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि एकाधिकशततमोऽध्यायः ॥ १०१ ॥

## द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

विष्णुना समुद्रान्तर्हितदैत्यनिधने समुद्रशोपणस्योपायत्वं ज्ञापितैर्देवैर्ब्रह्मलोकगमनम् ॥ १ ॥ ब्रह्मचोदनया देवैरगस्त्यमेत्य सागरशोषणप्रार्थनम् ॥ २ ॥

देवा ऊचुः ।
तव प्रसादाद्वर्धन्ते प्रजाः सर्वाश्चतुर्विधाः ।
ता भाविता भावयन्ति हव्यकव्यैर्दिवौकसः ॥ १
लोका ह्येवं विवर्धन्ते ह्यन्योन्यं समुपाश्रिताः ।
त्वत्प्रसादान्निरुद्विग्नास्त्वयैव परिरक्षिताः ॥ २
इदं च समनुप्राप्तं लोकानां भयमुत्तमम् ।
न च जानीम केनेति रात्रौ वध्यन्ति ब्राह्मणाः ॥ ३
क्षीणेषु च ब्राह्मणेषु पृथिवी क्षयमेष्यति ।
ततः पृथिव्यां क्षीणायां त्रिदिवं क्षयमेष्यति ॥ ४
त्वत्प्रसादान्महाबाहो लोकाः सर्वे जगत्पते ।
विनाशं नाधिगच्छेयुस्त्वया वै परिरक्षिताः ॥ ५
विष्णुरुवाच ।
विदितं मे सुराः सर्वं प्रजानां क्षयकारणम् ।
भवतां चापि वक्ष्यामि शृणुध्वं विगतज्वराः ॥ ६
कालेया इति विख्याता गणाः परमदारुणाः ।
तैश्च वृत्रं समाश्रित्य जगत्सर्वं प्रमाथितम् ॥ ७
ते वृत्रं निहतं दृष्ट्वा सहस्राक्षेण धीमता ।
जीवितं परिरक्षन्तः प्रविष्टा वरुणालयम् ॥ ८
ते प्रविश्योदधिं घोरं नक्रग्राहसमाकुलम् ।
उत्सादनार्थं लोकानां रात्रौ घ्नन्ति ऋषीनिह ॥ ९
न तु शक्याः क्षयं नेतुं समुद्राश्रयिणो हि ते ।
समुद्रस्य क्षये बुद्धिर्भवद्भिः संप्रधार्यताम् ॥ १०
'एतच्छ्रुत्वा वचो देवा विष्णुना समुदीरितम् ।
विष्णुमेव पुरस्कृत्य ब्रह्माणं समुपस्थिताः ॥ ११
ततस्ते प्रणता भूत्वा तमेवार्थं न्यवेदयन् ।
सर्वलोकविनाशार्थं कालेयाः कृतनिश्चयाः ॥ १२
एषां तद्वचनं श्रुत्वा पद्मयोनिः सनातनः ।
उवाच परमप्रीतस्त्रिदशानर्थवद्वचः ॥ १३
विदितं मे सुराः सर्वे दानवानां विचेष्टितम् ।
मनुष्यादेश्च निधनं कालेयैः कालचोदितैः ॥ १४
क्षयस्तेषामनुप्राप्तः कालेनोपहताश्च ये ।
उपायं संप्रवक्ष्यामि समुद्रस्य विशोषणे ॥ १५
अगस्त्य इति विख्यातो वारुणिः सुसमाहितः ।
तमुपागम्य सहिता इममर्थं प्रयाचत ॥ १६
स हि शक्तो महातेजाः क्षणात्पातुं महोदधिम्'
अगस्त्येन विना को हि शक्तोऽन्योऽर्णवशोषणे १७
अन्यथा हि न शक्यास्ते विना सागरशोषणम् ।
समुद्रे च क्षयं नीते कालेयान्निहनिष्यथ ॥ १८
एवं श्रुत्वा वचो देवा ब्रह्मणः परमेष्ठिनः ।
परमेष्ठिनमाज्ञाप्य अगस्त्यस्याश्रमं ययुः ॥ १९
तत्रापश्यन्महात्मानं वारुणिं दीप्ततेजसम् ।
उपास्यमानमृषिभिर्देवैरिव पितामहम् ॥ २०
तेऽभिगम्य महात्मानं मैत्रावरुणिमच्युतम् ।
आश्रमस्थं तपोराशिं कर्मभिः स्वैस्तु तुष्टुवुः ॥ २१
देवा ऊचुः ।
नहुषेणाभितप्तानां त्वं लोकानां गतिः पुरा ।

चतुर्विधाः सुरनरतिर्यक्स्थावराः । दिवौकसः देवान् ॥ १ ॥ वारुणिं मैत्रावरुणपुत्रम् ॥ २० ॥

भ्रंशितश्च सुरैश्वर्याल्लोकार्थं लोककण्टकः ॥ २२
क्रोधात्प्रवृद्धस्तरणं भास्करस्य नभोगतः ।
वचस्त्वानतिक्रामन्विन्ध्यः शैलो न वर्धते ॥२३
तमसा चावृते लोके मृत्युनाऽभ्यर्दिताः प्रजाः ।
त्वामेव नाथमासाद्य निर्वृतिं परमां गताः ॥२४
अस्माकं भयभीतानां नित्यशो भगवान्गतिः ।
ततस्त्वार्ताः प्रयाचामो वरं त्वां वरदो ह्यसि ॥२५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

## त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

लोमशेन युधिष्ठिरंप्रति विन्ध्यगिरेरभिवृद्धेरगस्त्येन तन्निरोधस्य च हेतुकथनम् ॥ १ ॥ देवैः समुद्रशोषणं प्रार्थितेनागस्त्येन तैःसह समुद्रंप्रति गमनम् ॥ २ ॥

युधिष्ठिर उवाच ।
किमर्थं सहसा विन्ध्यः प्रवृद्धः क्रोधमूर्च्छितः ।
एतदिच्छाम्यहं श्रोतुं विस्तरेण महामुने ॥ १
लोमश उवाच ।
अद्रिराजं महाघोरं मेरुं कनकपर्वतम् ।
उदयास्तमने भानुः प्रदक्षिणमवर्तत ॥ २
तं तु दृष्ट्वा तथा विन्ध्यः शैलः सूर्यमथाब्रवीत् ।
यथा हि मेरुर्भवता नित्यशः परिगम्यते ॥ ३
प्रदक्षिणश्च क्रियते मामेवं कुरु भास्कर ।
एवमुक्तस्ततः सूर्यः शैलेन्द्रं प्रत्यभाषत ॥ ४
नाहमात्मेच्छया शैल करोम्येनं प्रदक्षिणम् ।
एष मार्गः प्रदिष्टो मे येनेदं निर्मितं जगत् ॥ ५
एवमुक्तस्ततः क्रोधात्प्रवृद्धः सहसाऽचलः ।
सूर्याचन्द्रमसोर्मार्गं रोद्धुमिच्छन्परंतप ॥ ६
ततो देवाः सहिताः सर्व एव
सेन्द्राः समागम्य महाद्रिराजम् ।
निवारयामासुरुपायतस्तं
न च स्म तेषां वचनं चकार ॥ ७
अथाभिजग्मुर्मुनिमाश्रमस्थं
तपस्विनं धर्मभृतां वरिष्ठम् ।
अगस्त्यमत्यद्भुतवीर्यदीप्तं
तं चार्थमूचुः सहिताः सुरास्ते ॥ ८
सूर्याचन्द्रमसोर्मार्गं नक्षत्राणां गतिं तथा ।
शैलराजो वृणोत्येष विन्ध्यः क्रोधवशानुगः ॥ ९
तं निवारयितुं शक्तो नान्यः कश्चिद्द्विजोत्तम ।
ऋते त्वां हि महाभाग तस्मादेनं निवारय ॥ १०
तच्छ्रुत्वा वचनं विप्रः सुराणां शैलमभ्यगात् ।
सोऽभिगम्याब्रवीद्विन्ध्यं सदारः समुपस्थितः ॥ ११
मार्गमिच्छाम्यहं दत्तं भवता पर्वतोत्तम ।
दक्षिणामभिगन्तास्मि दिशं कार्येण केनचित् ॥ १२
यावदागमनं मह्यं तावत्त्वं प्रतिपालय ।
निवृत्ते मयि शैलेन्द्र ततो वर्धस्व कामतः ॥ १३
एवं स समयं कृत्वा विन्ध्येनामित्रकर्शन ।
अद्यापि दक्षिणादेशाद्वारुणिर्न निवर्तते ॥ १४
विन्ध्योऽपि तद्भयाद्राजन्कुब्जिताङ्गो न वर्धते ।
एतत्ते सर्वमाख्यातं यथा विन्ध्यो न वर्धते ।
अगस्त्यस्य प्रभावेण यन्मां त्वं परिपृच्छसि ॥ १५
कालेयास्तु यथा राजन्सुरैः सर्वैर्निषूदिताः ।
अगस्त्याद्वरमासाद्य तन्मे निगदतः शृणु ॥ १६
त्रिदशानां वचः श्रुत्वा मैत्रावरुणिरब्रवीत् ।
किमर्थमभियाताः स्थ वरं मत्तः कमिच्छथ ॥ १७
एवमुक्तास्ततस्तेन देवता मुनिमब्रुवन् ।
'सर्वे प्राञ्जलयो भूत्वा पुरन्दरपुरोगमाः ॥' १८
एवं त्वयेच्छाम कृतं हि कार्यं
महार्णवं पीयमानं महात्मन् ।

क्रोधात्प्रवृद्धस्तरसा भास्करस्य नगोत्तम इति झ. पाठः ॥२३॥

द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

ततो वधिष्याम सहानुबन्धा-
न्कालोपसृष्टान्सुरविद्विषस्तान् ॥ १९
त्रिदशानां वचः श्रुत्वा तथेति मुनिरब्रवीत् ।
करिष्ये भवतां कामं लोकानां च महत्सुखम् २०
एवमुक्त्वा ततोऽगच्छत्समुद्रं सरितांपतिम् ।
ऋषिभिश्च तपःसिद्धैः सार्धं देवैश्च सुव्रत ॥ २१
मनुष्योरगगन्धर्वयक्षकिंपुरुषास्तथा ।
अनुजग्मुर्महात्मानं द्रष्टुकामास्तदद्भुतम् ॥ २२
ततोऽभ्यगच्छन्सहिताः समुद्रं भीमनिःस्वनम् ।
नृत्यन्तमिव चोर्मीभिर्वल्गन्तमिव वायुना ॥ २३
हसन्तमिव फेनौघैः स्खलन्तं कन्दरेषु च ।
तानाग्राहसमाकीर्णं नानाद्विजगणान्वितम् ॥ २४
अगस्त्यसहिता देवाः सगन्धर्वमहोरगाः ।
ऋषयश्च महाभागाः समासेदुर्महोदधिम् ॥ २५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

## चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

अगस्त्येन समुद्रसलिले निपीते देवैर्दैत्यहननम् ॥ १ ॥ देवैः पुनरर्णवपूरणाय पीतोदकोत्सर्जनं प्रार्थितेनागस्त्येन तस्य स्वेन जीर्णीकरणोक्तौ तदर्थं ब्रह्माणंप्रति प्रार्थनम् ॥ २ ॥

लोमश उवाच ।
समुद्रं स समासाद्य वारुणिर्भगवानृषिः ।
उवाच सहितान्देवानृषींश्चैव समागतान् ॥ १
एष लोकहितार्थं वै पिबामि वरुणालयम् ।
भवद्भिर्यदनुष्ठेयं तच्छीघ्रं संविधीयताम् ॥ २
एतावदुक्त्वा वचनं मैत्रावरुणिरच्युतः ।
समुद्रमपिबत्क्रुद्धः सर्वलोकस्य पश्यतः ॥ ३
पीयमानं समुद्रं तं दृष्ट्वा सेन्द्रास्तदाऽमराः ।
विस्मयं परमं जग्मुः स्तुतिभिश्चाप्यपूजयन् ॥ ४
त्वं नस्त्राता विधाता च लोकानां लोकभावन ।
त्वत्प्रसादात्समुच्छेदं न गच्छेत्सामरं जगत् ॥ ५
स पूज्यमानस्त्रिदशैर्महात्मा
गन्धर्वतूर्येषु नदत्सु सर्वशः ।
दिव्यैश्च पुष्पैरवकीर्यमाणो
महार्णवं निःसलिलं चकार ॥ ६
दृष्ट्वा कृतं निःसलिलं महार्णवं
सुराः समस्ताः परमप्रहृष्टाः ।
प्रगृह्य दिव्यानि वरायुधानि
तान्दानवाञ्जघ्नुरदीनसत्वाः ॥ ७
ते वध्यमानास्त्रिदशैर्महात्मभि-
र्महाबलैर्वेगिभिरुन्नदद्भिः ।
न सेहिरे वेगवतां महात्मनां
वेगं तदा धारयितुं दिवौकसाम् ॥ ८
ते वध्यमानास्त्रिदशैर्दानवा भीमनिःस्वनाः ।
चक्रुः सुतुमुलं युद्धं मुहूर्तमिव भारत ॥ ९
ते पूर्वं तपसा दग्धा मुनिभिर्भावितात्मभिः ।
यतमानाः परं शक्त्या त्रिदशैर्विनिषूदिताः ॥ १०
ते हेमनिष्काभरणाः कुण्डलाङ्गदधारिणः ।
निहता बह्वशोभन्त पुष्पिता इव किंशुकाः ॥ ११
हतशेषास्ततः केचित्कालेया मनुजोत्तम ।
विदार्य वसुधां देवीं पातालतलमाश्रिताः ॥ १२
निहतान्दानवान्दृष्ट्वा त्रिदशा मुनिपुङ्गवम् ।
तुष्टुवुर्विविधैर्वाक्यैरिदं वचनमब्रुवन् ॥ १३
त्वत्प्रसादान्महाबाहो लोकैः प्राप्तं महत्सुखम् ।
त्वत्तेजसा च निहताः कालेयाः क्रूरविक्रमाः १४
पूरयस्व महाबाहो समुद्रं लोकभावन ।
यत्त्वया सलिलं पीतं तदस्मिन्पुनरुत्सृज ॥ १५
एवमुक्तः प्रत्युवाच भगवान्मुनिपुङ्गवः ।
'तांस्तदा सहितान्देवानगस्त्यःसपुरन्दरान् ॥' १६
जीर्णं तद्धि मया तोयमुपायोऽन्यः प्रचिन्त्यताम् ।
पूरणार्थं समुद्रस्य भवद्भिर्यत्नमास्थितैः ॥ १७
एतच्छ्रुत्वा तु वचनं महर्षेर्भावितात्मनः ।
विस्मिताश्च विषण्णाश्च बभूवुः सहिताः सुराः १८

परस्परमनुज्ञाप्य प्रणम्य मुनिपुङ्गवम् ।
प्रजाः सर्वा महाराज विप्रजग्मुर्यथागतम् ॥ १९
त्रिदशा विष्णुना सार्धमुपजग्मुः पितामहम् ।
पूरणार्थं समुद्रस्य मन्त्रयित्वा पुनः पुनः ॥ २०
ते धातारमुपागम्य त्रिदशाः सह विष्णुना ।
ऊचुः प्राञ्जलयः सर्वे सागरस्याभिपूरणम् ॥ २१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

## पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

ब्रह्मणा देवान्प्रति भगीरथेन समुद्रपूरणकथनम् ॥ १ ॥ युधिष्ठिरेण तत्प्रकारं पृष्टेन लोमशेन तदुपोद्घाततया सगरस्य भार्याद्वये पुत्रलाभप्रकारकथनम् ॥ २ ॥

लोमश उवाच ।
तानुवाच समेतांस्तु ब्रह्मा लोकपितामहः ।
'निर्ह्लादिन्या गिरा राजन्देवानाश्वासयंस्तदा ॥' १
गच्छध्वं विबुधाः सर्वे यथाकामं यथेप्सितम् ।
महता कालयोगेन प्रकृतिं यास्यतेऽर्णवः ॥ २
ज्ञातींश्च कारणं कृत्वा महाराजो भगीरथः ।
'पूरयिष्यति तोयौघैः समुद्रं निधिमम्भसाम् ॥' ३
पितामहवचः श्रुत्वा सर्वे विबुधसत्तमाः ।
कालयोगं प्रतीक्षन्तो जग्मुश्चापि यथागतम् ॥ ४
युधिष्ठिर उवाच ।
कथं वै ज्ञातयो ब्रह्मन्कारणं चात्र किं मुने ।
कथं समुद्रः पूर्णश्च भगीरथपरिश्रमात् ॥ ५
एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
कथ्यमानं त्वया विप्र राज्ञां चरितमुत्तमम् ॥ ६
वैशंपायन उवाच ।
एवमुक्तस्तु विप्रेन्द्रो धर्मराज्ञा महात्मना ।
कथयामास माहात्म्यं सगरस्य महात्मनः ॥ ७
लोमश उवाच ।
इक्ष्वाकूणां कुले जातः सगरो नाम पार्थिवः ।
रूपसत्त्वबलोपेतः स चापुत्रः प्रतापवान् ॥ ८
स हैहयान्समुत्साद्य तालजङ्घांश्च भारत ।
वशे च कृत्वा राजन्यान्स्वराज्यमनुशिष्टवान् ॥ ९
तस्य भार्ये त्वभवतां रूपयौवनदर्पिते ।
वैदर्भी भरतश्रेष्ठ शैब्या च भरतर्षभ ॥ १०
स पुत्रकामो नृपतिस्तप्यते स्म महत्तपः ।
पत्नीभ्यां सह राजेन्द्र कैलासं गिरिमाश्रितः ॥ ११
स तप्यमानः सुमहत्तपोयोगसमन्वितः ।
आससाद महात्मानं त्र्यक्षं त्रिपुरमर्दनम् ॥ १२
शंकरं भवमीशानं पिनाकिं शूलपाणिनम् ।
त्र्यम्बकं शिवमुग्रेशं बहुरूपमुमापतिम् ॥ १३
स तं दृष्ट्वैव वरदं पत्नीभ्यां सहितो नृपः ।
प्रणिपत्य महाबाहुः पुत्रार्थे समयाचत ॥ १४
तं प्रीतिमान्हरः प्राह सभार्यं नृपसत्तमम् ।
यस्मिन्वृतो मुहूर्तेऽहं त्वयेह नृपते वरम् ॥ १५
षष्टिः पुत्रसहस्राणि शूराः परमदर्पिताः ।
एकस्यां संभविष्यन्ति पत्न्यां नरवरोत्तम ॥ १६
ते चैव सर्वे सहिताः क्षयं यास्यन्ति पार्थिव ।
एको वंशधरः शूर एकस्यां संभविष्यति ॥ १७
एवमुक्त्वा तु तं रुद्रस्तत्रैवान्तरधीयत ।
स चापि सगरो राजा जगाम स्वं निवेशनम् ॥ १८
पत्नीभ्यां सहितस्तत्र सोऽतिहृष्टमनास्तदा ।
'कालं शंभुवरप्राप्तं प्रतीक्षन्सगरोऽनयत् ॥' १९
तस्य ते मनुजश्रेष्ठ भार्ये कमललोचने ।
वैदर्भी चैव शैब्या च गर्भिण्यौ संबभूवतुः ॥ २०
ततः कालेन वैदर्भी गर्भालाबुं व्यजायत ।
शैब्या च सुषुवे पुत्रं कुमारं देवरूपिणम् ॥ २१
तदाऽलाबुं समुत्स्रष्टुं मनश्चक्रे स पार्थिवः ।
अथान्तरिक्षाच्छुश्राव वाचं गंभीरनिःस्वनाम् ॥ २२
राजन्मा साहसं कार्षीः पुत्रान्न त्यक्तुमर्हसि ।
अलाबुमध्यान्निष्कृष्य बीजं यत्नेन गोप्यताम् ॥ २३
सोपस्वेदेषु पात्रेषु घृतपूर्णेषु भागशः ।
ततः पुत्रसहस्राणि षष्टिं प्राप्स्यसि पार्थिव ॥ २४

महादेवेन दिष्टं ते पुत्रजन्म नराधिप । अनेन क्रमयोगेन मा ते बुद्धिरतोऽन्यथा ॥ २५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

---

## षडधिकशततमोऽध्यायः ॥ १०६ ॥

अश्वमेधे दीक्षितसगराज्ञया षष्टिसहस्रैस्तत्पुत्रैर्भुवं संचारितस्याश्वस्य समुद्रतीरेऽन्तर्धानम् ॥ १ ॥ पित्राज्ञया हयान्वेषणाय समुद्रतीरं खनद्भिः सागरैः पातालतले तपस्यतो भगवतः कपिलस्य तत्समीपचारिणो हयस्य च दर्शनम् ॥ २ ॥

---

लोमश उवाच ।

एतच्छ्रुत्वान्तरिक्षाच्च स राजा राजसत्तमः ।
यथोक्तं तच्चकाराथ श्रद्दधद्भरतर्षभ ॥ १
[एकैकशस्ततः कृत्वा बीजं बीजं नराधिपः ।
घृतपूर्णेषु कुम्भेषु तान्भागान्विदधे ततः ॥ २
धात्रीश्चैकैकशः प्रादात्पुत्ररक्षणतत्परः ।
ततः कालेन महता समुत्तस्थुर्महाबलाः ॥] ३
षष्टिः पुत्रसहस्राणि तस्याप्रतिमतेजसः ।
रुद्रप्रसादाद्राजर्षेः समजायन्त पार्थिव ॥ ४
ते घोराः क्रूरकर्माण आकाशपरिसर्पिणः ।
बहुत्वाच्चावजानन्तः सर्वाँल्लोकान्सहामरान् ॥ ५
त्रिदशांश्चाप्यबाधन्त तथा गन्धर्वराक्षसान् ।
सर्वाणि चैव भूतानि शूराः समरशालिनः ॥ ६
वध्यमानास्तदा लोकाः सागरैर्मन्दबुद्धिभिः ।
ब्रह्माणं शरणं जग्मुः सहिताः सर्वदैवतैः ॥ ७
तानुवाच महाभागः सर्वलोकपितामहः ।
गच्छध्वं त्रिदशाः सर्वे लोकैः सार्धं यथागतम् ॥ ८
नातिदीर्घेण कालेन सागराणां क्षयो महान् ।
भविष्यति महाघोरः स्वकृतैः कर्मभिः सुराः ॥ ९
एवमुक्तास्तु ते देवा लोकाश्च मनुजेश्वर ।
पितामहमनुज्ञाप्य विप्रजग्मुर्यथागतम् ॥ १०
ततः काले बहुतिथे व्यतीते भरतर्षभ ।
दीक्षितः सगरो राजा हयमेधेन वीर्यवान् ॥ ११
तस्याश्वो व्यचरद्भूमिं पुत्रैः सुपरिरक्षितः ।
'सर्वैरेव महोत्साहैः स्वच्छन्दप्रचरो नृप ॥' १२
समुद्रं स समासाद्य निस्तोयं भीमदर्शनम् ।
रक्ष्यमाणः प्रयत्नेन तत्रैवान्तरधीयत ॥ १३
ततस्ते सागरास्तात हृतं मत्वा हयोत्तमम् ।
आगम्य पितुराचख्युरदृश्यं तुरगं हृतम् ।
तेनोक्ता दिक्षु सर्वासु पुत्रा मार्गत वाजिनम् ॥ १४
ततस्ते पितुराज्ञाय दिक्षु सर्वासु तं हयम् ।
अमार्गन्त महाराज सर्वं च पृथिवीतलम् ॥ १५
ततस्ते सागराः सर्वे समुपेत्य परस्परम् ।
नाध्यगच्छन्त तुरगमश्वहर्तारमेव च ॥ १६
आगम्य पितरं चोचुस्ततः प्राञ्जलयोऽग्रतः ॥ १७
ससमुद्रवनद्वीपा सनदीनदकन्दरा ।
सपर्वतवनोद्देशा निखिलेन मही नृप ॥ १८
अस्माभिर्विचिता राजञ्शासनात्तव पार्थिव ।
न चाश्वमधिगच्छामो नाश्वहर्तारमेव च ॥ १९
श्रुत्वा तु वचनं तेषां स राजा क्रोधमूर्छितः ।
उवाच वचनं सर्वांस्तदा दैववशान्नृप ॥ २०
अनागमाय गच्छध्वं भूयो मार्गत वाजिनम् ।
यज्ञियं तं विना ह्यश्वं नागन्तव्यं हि पुत्रकाः ॥ २१
प्रतिगृह्य तु संदेशं पितुस्ते सगरात्मजाः ।
भूय एव महीं कृत्स्नां विचेतुमुपचक्रमुः ॥ २२
अथापश्यन्त ते वीराः पृथिवीमवदारिताम् ।
'समुद्रे पृथिवीपाल पदं मार्गं च वाजिनः ॥' २३
समासाद्य बिलं तच्चाप्यखनन्सगरात्मजाः ।
कुद्दालैर्मुसलैश्चैव समुद्रं यत्नमास्थिताः ॥ २४
स खन्यमानः सहितैः सागरैर्वरुणालयः ।
अगच्छत्परमामार्तिं दीर्यमाणः समन्ततः ॥ २५
असुरोरगरक्षांसि सत्वानि विविधानि च ।
आर्तनादमकुर्वन्त वध्यमानानि सागरैः ॥ २६
छिन्नशीर्षा विदेहाश्च भिन्नजान्वस्थिमस्तकाः ।
प्राणिनः समदृश्यन्त शतशोऽथ सहस्रशः ॥ २७

एवं हि खनतां तेषां समुद्रं वरुणालयम् ।
व्यतीतः सुमहान्कालो न चाश्वः समदृश्यत २८
ततः पूर्वोत्तरे देशे समुद्रस्य महीपते ।
विदार्य पातालमथ संक्रुद्धाः सगरात्मजाः ॥२९
अपश्यन्त हयं यत्र विचरन्तं महीतले ।
कपिलं च महात्मानं तेजोराशिमनुत्तमम् ॥ ३०
तेजसा दीप्यमानं तु ज्वालाभिरिव पावकम् ।
'दृष्ट्वा हि विस्मिताः सर्वे बभूवुः सगरात्मजाः ॥'

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥

## सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

कपिलेन हयचोरत्वभ्रमेण स्वजिघांसूनां सर्वसागराणां नयनानलेन भस्मीकरणम् ॥ १ ॥ सगरनिदेशान्निर्गतेनांशुमता कपिलप्रसादनेन हयानयनपूर्वकं पितामहयज्ञसमापनम् ॥ २ ॥ सगरइवांशुमत्यपि स्वर्गते तत्सुतेन दिलीपेन गङ्गावतरणाय यतमानेनापि तदपारयतैव त्रिदिवगमनम् ॥ ३ ॥

लोमश उवाच ।
पूर्वोत्तरे ऐशान्याम् ॥ २९ ॥

*ते तं दृष्ट्वा हयं राजन्संप्रहृष्टतनूरुहाः ।
षडधिकशततमोऽध्यायः ॥ १०६ ॥

* १०७ तमाध्यायस्थाने थ. पुस्तके तद्भिन्नपाठत्वेनायमध्यायः परिदृश्यते ।

लोमश उवाच ।
ते तं दृष्ट्वा हयं राजन्संप्रहृष्टतनूरुहाः ।
अनादृत्य महात्मानं कपिलं कालचोदिताः ।
संक्रुद्धाः समधावन्त कपिलं हन्तुमुद्यताः ॥ १
तान्दृष्ट्वा हन्तुमुद्युक्तान्कपिलो रोषमूर्च्छितः ।
सगरस्यात्मजान्सर्वान्ददाह क्षणतो नृप ॥ २
तान्दृष्ट्वा भस्मसाद्भूतान्नारदः सुमहातपाः ।
सगरान्तिकमागत्य तच्च तस्मै न्यवेदयत् ॥ ३
एतच्छ्रुत्वा वचो राजा घोरं मुनिमुखोद्गतम् ।
मुहूर्तं विमना भूत्वा स्थाणोर्वाक्यमचिन्तयत् ॥४
अंशुमन्तं प्रेषयित्वा हयमानाय्य यत्नतः ।
यज्ञं समाप्य विधिवत्सगरो भृशदुःखितः ।
कृत्वांऽशुमति तद्राज्यं वनमेवान्वपद्यत ॥ ५
अंशुमानकरोद्राज्यं प्रजा धर्मेण रञ्जयन् ।
दिलीपे राज्यमाधाय वनमेवान्वपद्यत ॥ ६
दिलीपोपि महाराज चिरं राज्यमकारयत् ॥ ७
तस्य पुत्रो महीपाल भगीरथ इति श्रुतः ।
धर्मज्ञश्च कृतज्ञश्च प्रजानामनुरञ्जकः ॥ ८
पितरि स्वर्गते राजन्दिलीपे पुण्यशालिनि ।
भगीरथो महानासीद्राजा परमधार्मिकः ॥ ९
स चिरं तप आतिष्ठन्महादेवप्रसादतः ।
ऊर्ध्वबाहुर्निरालम्बः पादाङ्गुष्ठाश्रितावनिः ॥ १०
वायुभक्षो निराहारो भक्तियुक्तेन चेतसा ।
तत आविरभूद्देवः पिनाकी वृषभध्वजः ॥ ११
परं ब्रह्म परं धाम परमात्मा सनातनः ।
आनादिमध्यनिधनः शङ्करः सर्वपूजितः ॥ १२
भगीरथोपि तं दृष्ट्वा भगवन्तमुमापतिम् ।
प्रणिपत्य महादेवमस्तौषीद्विविधैः स्तवैः ॥ १३
स्तुत्वा च विविधैः स्तोत्रैः कृताञ्जलिपुटो नृपः ।
अयाचत वरं देवं गङ्गाया धारणं प्रति ॥ १४
भगवंस्तपसा तुष्टो ब्रह्मा मे स्वर्गवासिनीम् ।
गङ्गां संप्रेषयामीति ददौ वरमनुत्तमम् ॥ १५
तां वै धारयितुं शक्तं नान्यं पश्यामि शूलिनः ।
तं तोषय महाराजेत्येवमुक्त्वा दिवं गतः ॥ १६
भवत्प्रसादसिद्ध्यर्थं तपस्तप्तं मया विभो ।
पितॄणां तारणार्थाय गङ्गां धारय वै विभो ॥ १७
भवता धृतया देव गङ्गया पूतया मम ।
पितामहाश्च लोकाश्च सर्वे सद्गतिमाप्नुयुः ॥ १८
एवं संप्रार्थितो देवस्तथा चक्रे महेश्वरः ॥ १९
ब्रह्मणा समनुज्ञाता गङ्गाऽपि क्रोधमूर्च्छिता ।
विशाम्यहं तु पातालं स्रोतसा गृह्य शङ्करम्॥२०
इत्याग्रहान्महाराज शिवे शिवशिरस्युत ।
पतित्वा तत्र बभ्राम बह्वन्वर्षान्विमोहिता ।
तृणेऽवश्यायकणिका यथा तद्वत्स्थिता क्वचित्२१
तामदृष्ट्वाऽथ भूपालस्तोषयामास शङ्करम् ।
पुनश्च व्यसृजद्देवो गङ्गां वै गूहितां नृप ॥ २२
प्रणिपत्य महादेवं पुरा राजा भगीरथः ।
पितॄनाप्लावयामास सागरं चाप्यपूरयत् ॥ २३
तेऽपि स्वर्गं गता राजन्सगरस्यात्मजाः क्षणात् ।
पितृभ्यश्चोदकं तत्र ददौ पूर्णमनोरथः ॥ २४
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
एवं स सागरो राजन्पूरितोऽगस्त्यदूषितः ॥ २५

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

अनादृत्य महात्मानं कपिलं कालचोदिताः ॥ १
संक्रुद्धाः संप्रधावन्त वाजिग्रहणकाङ्क्षिणः ।
ततः क्रुद्धो महाराज कपिलो मुनिसत्तमः ॥ २
वासुदेवेति यं प्राहुः कपिलं मुनिपुङ्गवम् ।
स चक्षुर्विकृतं कृत्वा तेजस्तेषु समुत्सृजन् ॥ ३
ददाह सुमहातेजा मन्दबुद्धीन्स सागरान् ।
षष्टिं तानि सहस्राणि युगपन्मुनिसत्तमः ॥ ४
तान्दृष्ट्वा भस्मसाद्भूतान्नारदः सुमहातपाः ।
सगरान्तिकमागत्य तच्च तस्मै न्यवेदयत् ॥ ५
स तच्छ्रुत्वा वचो घोरं राजा मुनिमुखोद्गतम् ।
महूर्तं विमना भूत्वा स्थाणोर्वाक्यमचिन्तयत् ॥६
'स पुत्रनिधनोत्थेन दुःखेन समभिप्लुतः ।
आत्मानमात्मनाऽऽश्वास्य हयमेवान्वचिन्तयत्' ७
अंशुमन्तं समाहूय असमञ्जसुतं तदा ।
पौत्रं भरतशार्दूल इदं वचनमब्रवीत् ॥ ८
षष्टिस्तात सहस्राणि पुत्राणाममितौजसाम् ।
कापिलं तेज आसाद्य मत्कृते निधनं गताः ॥ ९
तव चापि पिता तात परित्यक्तो मयाऽनघ ।
धर्मं संरक्षमाणेन पौराणां हितमिच्छता ॥ १०

युधिष्ठिर उवाच ।

किमर्थं राजशार्दूलः सगरः पुत्रमात्मजम् ।
त्यक्तवान्दुस्त्यजं वीरं तन्मे ब्रूहि तपोधन ॥ ११

लोमश उवाच ।

असमञ्ज इति ख्यातः सगरस्य सुतो ह्यभूत् ।
यं शैब्या जनयामास पौराणां स हि दारकान् ॥
'क्रीडतः सहसाऽऽसाद्य तत्रतत्र महीपते ।'
चूडासु क्रोशतो गृह्य नद्यां चिक्षेप दुर्बलान् ॥ १३
ततः पौराः समाजग्मुर्भयशोकपरिप्लुताः ।
सगरं चाभ्यभाषन्त सर्वे प्राञ्जलयः स्थिताः १४
त्वं नस्त्राता महाराज परचक्रादिभिर्भयात् ।
असमञ्जभयाद्घोराचतो नस्त्रातुमर्हसि ॥ १५
पौराणां वचनं श्रुत्वा घोरं नृपतिसत्तमः ।
मुहूर्तं विमना भूत्वा सचिवानिदमब्रवीत् ॥ १६
असमञ्जः पुरादद्य सुतो मे विप्रवास्यताम् ।
यदि वो मत्प्रियं कार्यमेतच्छीघ्रं विधीयताम् १७
एवमुक्ता नरेन्द्रेण सचिवास्ते नराधिप ।
यथोक्तं त्वरिताश्चक्रुर्यथाऽऽज्ञापितवान्नृपः ॥ १८
एतत्ते सर्वमाख्यातं यथा पुत्रो महात्मना ।
पौराणां हितकामेन सगरेण विवासितः ॥ १९
अंशुमांस्तु महेष्वासो यदुक्तः सगरेण हि ।
तत्ते सर्वं प्रवक्ष्यामि कीर्त्यमानं निबोध मे ॥ २०

सगर उवाच ।

पितुश्च तेऽहं त्यागेन पुत्राणां निधनेन च ।
अलाभेन तथाऽश्वस्य परितप्यामि पुत्रक ॥ २१
तस्माद्दुःखाभिसंतप्तं यज्ञविघ्नाच्च मोहितम् ।
हयस्यानयनात्पौत्र नरकान्मां समुद्धर ॥ २२

लोमश उवाच ।

अंशुमानेवमुक्तस्तु सगरेण महात्मना ।
जगाम दुःखात्तं देशं यत्र वै दारिता मही ॥ २३
स तु तेनैव मार्गेण समुद्रं प्रविवेश ह ।
अपश्यच्च महात्मानं कपिलं तुरगं च तम् ॥ २४
स दृष्ट्वा तेजसो राशिं पुराणमृषिसत्तमम् ।
प्रणम्य शिरसा भूमौ कार्यमस्मै न्यवेदयत् ॥ २५
ततः प्रीतो महाराज कपिलोंऽशुमतोऽभवत् ।
उवाच चैनं धर्मात्मा वरदोऽस्मीति भारत ॥ २६
स वव्रे तुरगं तत्र प्रथमं यज्ञकारणात् ।
द्वितीयमुदकं वव्रे पितॄणां पावनेच्छया ॥ २७
तमुवाच महातेजाः कपिलो मुनिपुङ्गवः ।
ददानि तव भद्रं ते यद्यत्प्रार्थयसेऽनघ ॥ २८
त्वयि क्षमा च धर्मश्च सत्यं चापि प्रतिष्ठितम् ।
त्वया कृतार्थः सगरः पुत्रवांश्च त्वया पिता ॥ २९
तव चैव प्रभावेन स्वर्गं यास्यन्ति सागराः ।
'शलभत्वं गता ये ते मम क्रोधहुताशने ॥' ३०
पौत्रश्च ते त्रिपथगां त्रिदिवादानयिष्यति ।
पावनार्थं सागराणां तोषयित्वा महेश्वरम् ॥ ३१
हयं नयस्व भद्रं ते याज्ञियं नरपुङ्गव ।
यज्ञः समाप्यतां तात सगरस्य महात्मनः ॥ ३२
अंशुमानेवमुक्तस्तु कपिलेन महात्मना ।

आजगाम हयं गृह्य यज्ञवाटं महात्मनः ॥ ३३
सोऽभिवाद्य ततः पादौ सगरस्य महात्मनः ।
मूर्ध्नि तेनाप्युपाघ्रातस्तस्मै सर्वं न्यवेदयत् ॥ ३४
यथा दृष्टं श्रुतं चापि सागराणां क्षयं तथा ।
तं चास्मै हयमाचष्ट यज्ञवाटमुपागतम् ॥ ३५
तच्छ्रुत्वा सगरो राजा पुत्रजं दुःखमत्यजत् ।
अंशुमन्तं च संपूज्य समापयत तं क्रतुम् ॥ ३६
समाप्तयज्ञः सगरो देवैः सर्वैः सभाजितः ।
पुत्रत्वे कल्पयामास समुद्रं वरुणालयम् ॥ ३७
प्रशास्य सुचिरं कालं राज्यं राजीवलोचनः ।
पौत्रे भारं समावेश्य जगाम त्रिदिवं तदा ॥ ३८
अंशुमानपि धर्मात्मा महीं सागरमेखलाम् ।
प्रशशास महाराज यथैवास्य पितामहः ॥ ३९
तस्य पुत्रः समभवद्दिलीपो नाम धर्मवित् ।
तस्मिन्राज्यं समाधाय अंशुमानपि संस्थितः ॥ ४०
दिलीपस्तु ततः श्रुत्वा पितॄणां निधनं महत् ।
पर्यतप्यत दुःखेन तेषां गतिमचिन्तयत् ॥ ४१
गङ्गावतरणे यत्नं सुमहच्चाकरोन्नृपः ।
न चावतारयामास चेष्टमानो यथाबलम् ॥ ४२
तस्य पुत्रः समभवच्छ्रीमान्धर्मपरायणः ।
भगीरथ इति ख्यातः सत्यवागनसूयकः ॥ ४३
अभिषिच्य तु तं राज्ये दिलीपो वनमाश्रितः ॥ ४४
तपःसिद्धिसमायोगात्स राजा भरतर्षभ ।
वनाज्जगाम त्रिदिवं कालयोगेन भारत ॥ ४५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

---

## अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

दिलीपसुतेन भगीरथेन धरणीतलावतरणाय गङ्गांप्रति तपश्चरणम् ॥ १ ॥ तथा धरणीतलमवतरन्त्या गङ्गाया वेगधारणाय तदाज्ञया तपसा शंकरतोषणम् ॥ २ ॥

लोमश उवाच ।
स तु राजा महेष्वासश्चक्रवर्ती महारथः ।
बभूव सर्वलोकस्य मनोनयननन्दनः ॥ १
स शुश्राव महाबाहुः कपिलेन महात्मना ।
पितॄणां निधनं घोरमप्राप्तिं त्रिदिवस्य च ॥ २
स राज्यं सचिवे न्यस्य हृदयेन विदूयता ।
जगाम हिमवत्पार्श्वं तपस्तप्तुं नरेश्वरः ॥ ३
आरिराधयिषुर्गङ्गां तपसा दग्धकिल्बिषः ।
सोऽपश्यत नरश्रेष्ठ हिमवन्तं नगोत्तमम् ॥ ४
शृङ्गैर्बहुविधाकारैर्धातुमद्भिरलंकृतम् ।
पवनालम्बिभिर्मेघैः परिषिक्तं समन्ततः ॥ ५
नदीकुञ्जनितम्बैश्च सोदकैरुपशोभितम् ।
गुहाकन्दरसंलीनसिंहव्याघ्रनिषेवितम् ॥ ६
शकुनैश्च विचित्राङ्गैः कूजद्भिर्विविधा गिरः ।
भृङ्गराजैस्तथा हंसैर्दात्यूहैर्जलकुक्कुटैः ॥ ७
मयूरैः शतपत्रैश्च जीवंजीवककोकिलैः ।
चकोरैरसितापाङ्गैस्तथा पुत्रप्रियैरपि ॥ ८
जलस्थानेषु रम्येषु पद्मिनीभिश्च संकुलम् ।
सारसानां च मधुरैर्व्याहृतैः समलंकृतम् ॥ ९
किन्नरैरप्सरोभिश्च निषेवितशिलातलम् ।
दिग्वारणविषाणाग्रैः समन्ताद्घृष्टपादपम् ॥ १०
विद्याधरानुचरितं नानारत्नसमाकुलम् ।
विषोल्बणैर्भुजङ्गैश्च दीप्तजिह्वैर्निषेवितम् ॥ ११
क्वचित्कनकसंकाशं क्वचिद्रजतसंनिभम् ।
क्वचिदञ्जनपुञ्जाभं हिमवन्तमुपागमत् ॥ १२
स तु तत्र नरश्रेष्ठस्तपो घोरं समाश्रितः ।
फलमूलाम्बुसंभक्षः सहस्रपरिवत्सरान् ॥ १३
संवत्सरसहस्रे तु गते दिव्ये महानदी ।
दर्शयामास तं गङ्गा तदा मूर्तिमती स्वयम् ॥ १४
गङ्गोवाच ।
किमिच्छसि महाराज मत्तः किंच ददानि ते ।
तद्ब्रवीहि नरश्रेष्ठ करिष्यामि वचस्तव ॥ १५
एवमुक्तः प्रत्युवाच राजा हैमवतीं नदीम् ।
'तदा भगीरथो राजन्प्रणिपत्य कृताञ्जलिः ।'

पितामहा मे वरदे कपिलेन महानदि ॥ १६
अन्वेषमाणास्तुरगं नीता वैवस्वतक्षयम् ।
षष्टिस्तानि सहस्राणि सागराणां महात्मनाम् १७
कपिलं देवमासाद्य क्षणेन निधनं गताः ।
तेषामेवं विनष्टानां स्वर्गे वासो न विद्यते ॥ १८
यावत्तानि शरीराणि त्वं जलैर्नाभिषिञ्चसि ।
तावत्तेषां गतिर्नास्ति सागराणां महानदि ॥ १९
स्वर्गं नय महाभागे मत्पितॄन्सगरात्मजान् ।
तेषामर्थेऽभियाचामि त्वामहं वै महानदि ॥ २०
लोमश उवाच ।
एतच्छ्रुत्वा वचो राज्ञो गङ्गा लोकनमस्कृता ।
भगीरथमिदं वाक्यं सुप्रीता समभाषत ॥ २१
करिष्यामि महाराज वचस्ते नात्र संशयः ।
वेगं तु मम दुर्धार्यं पतन्त्या गगनाच्च्युतम् ॥ २२
न शक्तस्त्रिषु लोकेषु कश्चिद्धारयितुं नृप ।
अन्यत्र विबुधश्रेष्ठान्नीलकण्ठान्महेश्वरात् ॥ २३
तं तोषय महाबाहो तपसा वरदं हरम् ।
स तु मां प्रच्युतां देवः शिरसा धारयिष्यति ॥ २४
स करिष्यति ते कामं पितॄणां हितकाम्यया ।
'तपसाऽऽराधितः शंभुर्भगवाँल्लोकभावनः ॥' २५
एतच्छ्रुत्वा ततो राजन्महाराजो भगीरथः ।
कैलासं पर्वतं गत्वा तोषयामास शंकरम् ॥ २६
ततस्तेन समागम्य कालयोगेन केनचित् ।
'गङ्गावतरणं राजन्नयाचत महीपतिः ॥ २७
अगृह्णाच्च वरं तस्माद्गङ्गाया धारणे नृप ।
स्वर्गे वासं समुद्दिश्य पितॄणां स नरोत्तमः ॥ २८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

## नवाधिकशततमोऽध्यायः ॥ १०९ ॥

शङ्करेण भगीरथप्रार्थनया क्षितितलमभिपतन्त्या गङ्गाया धारणम् ॥ १ ॥ भगीरथेन स्वपश्चादनुगतया गङ्गया पितृभ्य उदकदानपूर्वकं सागरपूरणम् ॥ २ ॥

लोमश उवाच ।
भगीरथवचः श्रुत्वा प्रियार्थं च दिवौकसाम् ।
एवमस्त्विति राजानं भगवान्प्रत्यभाषत ॥ १
धारयिष्ये महाभाग गगनात्प्रच्युतां शिवाम् ।
दिव्यां देवनदीं पुण्यां त्वत्कृते नृपसत्तम ॥ २
एवमुक्त्वा महाबाहो हिमवन्तमुपागमत् ।
संवृतः पार्षदैर्घोरैर्नानाप्रहरणोद्यतैः ॥ ३
तत्र स्थित्वा नरश्रेष्ठं भगीरथमुवाच ह ।
प्रयाचस्व महाबाहो शैलराजसुतां नदीम् ॥ ४
'पितॄणां पावनार्थं ते तामहं मनुजाधिप ।'
पतमानां सरिच्छ्रेष्ठां धारयिष्ये त्रिविष्टपात् ॥ ५
एतच्छ्रुत्वा वचो राजा शर्वेण समुदाहृतम् ।
प्रयतः प्रणतो भूत्वा गङ्गां हि समचिन्तयत् ॥ ६
ततः पुण्यजला रम्या राज्ञा समनुचिन्तिता ।
ईशानं च स्थितं दृष्ट्वा गगनात्सहसा च्युता ॥ ७
तां प्रच्युतामथो दृष्ट्वा देवाः सार्धं महर्षिभिः ।
गन्धर्वोरगयक्षाश्च समाजग्मुर्दिदृक्षवः ॥ ८
ततः पपात गगनाद्गङ्गा हिमवतः सुता ।
समुद्भ्रान्तमहावर्ता मीनग्राहसमाकुला ॥ ९
तां दधार हरो राजन्गङ्गां गगनमेखलाम् ।
ललाटदेशे पतितां मालां मुक्तामयीमिव ॥ १०
सा बभूव विसर्पन्ती त्रिधा राजन्समुद्रगा ।
फेनपुञ्जाकुलजला हंसानामिव पङ्क्तयः ॥ ११
क्वचिदाभोगकुटिला प्रस्खलन्ती क्वचित्क्वचित् ।
सा फेनपटसंवीता मत्तेव प्रमदाऽव्रजत् ॥ १२
क्वचित्सा तोयनिनदैर्नदन्ती नादमुत्तमम् ।
'क्वचिदाकाशमावर्तैः संक्षिपन्तीव सर्वशः ॥'१३
एवंप्रकारान्सुबहून्कुर्वती गगनाच्च्युता ।
पृथिवीतलमासाद्य भगीरथमथाब्रवीत् ॥ १४
दर्शयस्व महाराज मार्गं केन व्रजाम्यहम् ।

गगनाच्च्युतं यथा भवति तथा पतन्त्याः । गगनाद्भवमिति झ. पाठः ॥ २२ ॥ अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

त्वदर्थमवतीर्णास्मि पृथिवीं पृथिवीपते ॥ १५
एतच्छ्रुत्वा वचो राजा प्रातिष्ठत भगीरथः ।
यत्र तानि शरीराणि सागराणां महात्मनाम् ।
प्लावनार्थं नरश्रेष्ठ पुण्येन सलिलेन च ॥ १६
गङ्गाया धारणं कृत्वा हरो लोकनमस्कृतः ।
कैलासं पर्वतश्रेष्ठं जगाम त्रिदशैः सह ॥ १७
समासाद्य समुद्रं च गङ्गया सहितो नृपः ।
पूरयामास वेगेन समुद्रं वरुणालयम् ॥ १८
दुहितृत्वे च नृपतिर्गङ्गां समनुकल्पयत् ।
पितॄणां चोदकं तत्र ददौ पूर्णमनोरथः ॥ १९
एतत्ते सर्वमाख्यातं गङ्गा त्रिपथगा यथा ।
पूरणार्थं समुद्रस्य पृथिवीमवतारिता ॥ २०
'कालेयाश्च महाराज त्रिदशैर्विनिपातिताः ।'
समुद्रश्च यथा पीतः कारणार्थं महात्मना ॥ २१
वातापिश्च यथा नीतः क्षयं स ब्रह्महा प्रभो ।
अगस्त्येन महाराज यन्मां त्वं परिपृच्छसि ॥ २२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥

## दशाधिकशततमोऽध्यायः ॥ ११० ॥

युधिष्ठिरेण ऋषभकूटगिरौ नन्दाऽपरनन्दानदीगमनम् ॥ १ ॥ लोमशेन युधिष्ठिरं प्रति ऋषभमुनेर्नन्दायाश्च महिमकथनम् ॥ २ ॥

वैशंपायन उवाच ।
ततः प्रयातः कौन्तेयः क्रमेण भरतर्षभ ।
नन्दामपरनन्दां च नद्यौ पापभयापहे ॥ १
पर्वतं स समासाद्य हेमकूटमनामयम् ।
अचिन्त्यानद्भुतान्भावान्ददर्श सुबहून्नृपः ॥ २
वर्षो यत्राभवद्घोर उपलाश्च सहस्रशः ।
नाशक्नुवंस्तमारोढुं विषण्णमनसो जनाः ॥ ३
वायुर्नित्यं ववौ तत्र नित्यं देवश्च वर्षति ।
स्वाध्यायघोषश्च तथा श्रूयते न च दृश्यते ॥ ४
सायं प्रातश्च भगवान्दृश्यते हव्यवाहनः ।
मक्षिकाश्चादशंस्तत्र तपसः प्रतिघातिकाः ॥ ५
निर्वेदो जायते तत्र गृहाणि स्मरते जनः ।
एवं बहुविधान्भावानद्भुतान्वीक्ष्य पाण्डवः ।
लोमशं पुनरेवाथ पर्यपृच्छत्तदद्भुतम् ॥ ६
'यदेतद्भगवंश्चित्रं पर्वतेऽस्मिन्महौजसि ।
एतन्मे सर्वमाचक्ष्व विस्तरेण महाद्युते ॥' ७
लोमश उवाच ।
यथाश्रुतमिदं पूर्वमस्माभिररिकर्शन ।
तदेकाग्रमना राजन्निबोध गदतो मम ॥ ८
अस्मिन्नृषभकूटेऽभूदृषभो नाम तापसः ।
अनेकशतवर्षायुस्तपस्वी कोपनो भृशम् ॥ ९
स वै संभाष्यमाणोऽन्यैः कोपाद्गिरिमुवाच ह ।
य इह व्याहरेत्कश्चिदुपलानुत्सृजेत वा ॥ १०
वातं चाहूय मा शब्दमित्युवाच स तापसः ।
व्याहरंश्चेह पुरुषो मेघशब्देन वार्यते ॥ ११
एवमेतानि कर्माणि राजंस्तेन महर्षिणा ।
कृतानि कानिचित्क्रोधात्प्रतिषिद्धानि कानिचित्
नन्दां त्वभिगता देवाः पुरा राजन्निति श्रुतिः ।
अन्वपद्यन्त सहसा पुरुषा देवदर्शिनः ॥ १३
तेनादर्शनमिच्छन्तो देवाः शक्रपुरोगमाः ।
दुर्गं चक्रुरिमं देशं गिरिं प्रत्यूहरूपकम् ॥ १४
तदाप्रभृति कौन्तेय नरा गिरिमिमं सदा ।
नाशक्नुवन्नभिद्रष्टुं कुत एवाधिरोहितुम् ॥ १५
नातप्ततपसा शक्यो द्रष्टुमेष महागिरिः ।
आरोढुं वाऽपि कौन्तेय तस्मान्नियतवाग्भव ॥१६
इह देवास्तदा सर्वे यज्ञानाजह्रुरुत्तमान् ।

भावान्पदार्थान् ॥ २ ॥ वाचालाश्चाभवन्मेघा इति ध. पाठः ॥ ३ ॥ नच दृश्यतेऽध्येता ॥ ४ ॥ निर्वेदो गिरिदर्शने वैराग्यम् ॥ ६ ॥ मा शब्दं कुर्विति शेषः ॥ ११ ॥ अन्वपद्यन्त अनुगतवन्तः । देवदर्शिनो देवदर्शनार्थिनः ॥ १३ ॥ प्रत्यूहरूपकं दर्शने विघ्नरूपम् ॥ १४ ॥

तेषामेतानि लिङ्गानि दृश्यन्तेऽद्यापि भारत ॥ १७
कुशाकारेव दूर्वेयं संस्तीर्णेव च भूरियम् ।
यूपप्रकारा बहवो वृक्षाश्चेमे विशांपते ॥ १८
देवाश्च ऋषयश्चैव वसन्त्यद्यापि भारत ।
तेषां सायं तथा प्रातर्दृश्यते हव्यवाहनः ॥ १९
इहाप्लुतानां कौन्तेय सद्यः पाप्माऽभिहन्यते ।
कुरुश्रेष्ठाभिषेकं वै तस्मात्कुरु सहानुजः ॥ २०
ततो नन्दाप्लुताङ्गस्त्वं कौशिकीमभियास्यसि ।
विश्वामित्रेण यत्रोग्रं तपस्तप्तमनुत्तमम् ॥ २१
वैशंपायन उवाच ।
ततस्तत्र समाप्लुत्य गात्राणि सगणो नृपः ।
जगाम कौशिकीं पुण्यां रम्यां शीतजलां शुभाम् ॥ २२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥

## एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

युधिष्ठिरेण कौशिकीतीरे ऋश्यशृङ्गाश्रमगमनम् ॥ १ ॥ लोमशेन युधिष्ठिरंप्रति विभाण्डकान्मृग्यामृश्यशृङ्गोत्पत्तिकथनम् ॥ २ ॥ लोमपादेनानावृष्टिनिवृत्तये ऋश्यशृङ्गानयनं चोदिताभिर्वेश्याभिस्तद्वनगमनम् ॥ ३ ॥

लोमश उवाच ।
एषा देवनदी पुण्या कौशिकी भरतर्षभ ।
विश्वामित्राश्रमो रम्य एष चात्र प्रकाशते ॥ १
आश्रमश्चैव पुण्याख्यः काश्यपस्य महात्मनः ।
ऋश्यशृङ्गः सुतो यस्य तपस्वी संयतेन्द्रियः ॥ २
तपसो यः प्रभावेन वर्षयामास वासवम् ।
अनावृष्ट्यां भयाद्यस्य ववर्ष बलवृत्रहा ॥ ३
मृग्यां जातः स तेजस्वी काश्यपस्य सुतः प्रभुः ।
विषये लोमपादस्य यश्चकाराद्भुतं महत् ॥ ४
निर्वर्तितेषु सस्येषु यस्मै शान्तां ददौ नृपः ।
लोमपादो दुहितरं सावित्रीं सविता यथा ॥ ५
युधिष्ठिर उवाच ।
ऋश्यशृङ्गः कथं मृग्यामुत्पन्नः काश्यपात्मजः ।
विरुद्धयोनिसंसर्गः कथं च तपसा युतः ॥ ६
किमर्थं च भयाच्छक्रस्तस्य बालस्य धीमतः ।
अनावृष्ट्यां प्रवृत्तायां ववर्ष बलवृत्रहा ॥ ७
कथंरूपा च सा शान्ता राजपुत्री पतिव्रता ।
लोभयामास या चेतो मृगभूतस्य तस्य वै ॥ ८
लोमपादश्च राजर्षिर्यदाऽश्रूयत धार्मिकः ।
कथं वै विषये तस्य नावर्षत्पाकशासनः ॥ ९
एतन्मे भगवन्सर्वं विस्तरेण यथातथम् ।
वक्तुमर्हसि शुश्रूषोर्ऋश्यशृङ्गस्य चेष्टितम् ॥ १०
लोमश उवाच ।
विभाण्डकस्य ब्रह्मर्षेस्तपसा भावितात्मनः ।
अमोघवीर्यस्य सतः प्रजापतिसमद्युतेः ॥ ११
शृणु पुत्रो यथा जात ऋश्यशृङ्गः प्रतापवान् ।
महाह्रदे महातेजा बालः स्थविरसंमतः ॥ १२
महाह्रदं समासाद्य काश्यपस्तपसि स्थितः ।
दीर्घकालं परिश्रान्त ऋषिर्देवर्षिसंमितः ॥ १३
तस्य रेतः प्रचस्कन्द दृष्ट्वाऽप्सरसमुर्वशीम् ।
अप्सूपस्पृशतो राजन्मृगी तच्चापिबत्तदा ।
सह तोयेन तृषिता गर्भिणी चाभवत्ततः ॥ १४
सा पुरोक्ता भगवता ब्रह्मणा लोककर्तृणा ।
देवकन्या मृगी भूत्वा मुनिं सूय विमोक्ष्यसे ॥ १५
अमोघत्वाद्विधेश्चैव भावित्वाद्दैवनिर्मितात् ।
तस्यां मृग्यां समभवत्तस्य पुत्रो महानृषिः ।
ऋश्यशृङ्गस्तपोनित्यो वन एवाभ्यवर्धत ॥ १६
तस्य शृङ्गं शिरसि वै राजन्नासीन्महात्मनः ।
तेनर्श्यशृङ्ग इत्येवं तदा स प्रथितोऽभवत् ॥ १७
न तेन दृष्टपूर्वोऽन्यः पितुरन्यत्र मानुषः ।
तस्मात्तस्य मनो नित्यं ब्रह्मचर्येऽभवन्नृप ॥ १८
एतस्मिन्नेव काले तु सखा दशरथस्य वै ।

हे कुरुश्रेष्ठ ॥ २० ॥ दशाधिकशततमोऽध्यायः ॥ ११० ॥
काश्यपस्य विभाण्डकस्य ॥ २ ॥ हर्षयामास वासवमिति ध.
पाठः ॥ ३ ॥ शुश्रूषोर्मे इति संबन्धः ॥ १० ॥ सूय प्रसूय ॥ १५ ॥
विधेः विधिवाक्यस्य दैवनिर्मितात् हेतोः भावित्वात् अपरिहार्यत्वाच्च

लोमपाद इति ख्यातो ह्यङ्गानामीश्वरोऽभवत्॥१९
तेन कामः कृतो मिथ्या ब्राह्मणेभ्य इति श्रुतिः ।
'दैवोपहतसत्त्वेन धर्मज्ञेनापि भारत ।'
स ब्राह्मणैः परित्यक्तस्तदा भरतसत्तम ॥ २०
पुरोहितापचाराच्च तस्य राज्ञो यदृच्छया ।
न ववर्ष सहस्राक्षस्ततोऽपीड्यन्त वै प्रजाः ॥ २१
स ब्राह्मणान्पर्यपृच्छत्तपोयुक्तान्मनीषिणः ।
प्रवर्षणे सुरेन्द्रस्य समर्थान्पृथिवीपते ॥ २२
कथं प्रवर्षेत्पर्जन्य उपायः परिमृश्यताम् ।
तमूचुश्चोदितास्ते तु स्वमतानि मनीषिणः ॥ २३
तत्र त्वेको मुनिवरस्तं राजानमुवाच ह ।
कुपितास्तव राजेन्द्र ब्राह्मणा निष्कृतिं चर ॥२४
ऋश्यशृङ्गं मुनिसुतमानयस्व च पार्थिव ।
ऐणेयमनभिज्ञं च नारीणामार्जवे रतम् ॥ २५
स चेदवतरेद्राजन्विषयं ते महातपाः ।
सद्यः प्रवर्षेत्पर्जन्य इति मे नास्ति संशयः ॥ २६
एतच्छ्रुत्वा वचो राजन्कृत्वा निष्कृतिमात्मनः ।
स गत्वा पुनरागच्छत्प्रसन्नेषु द्विजातिषु ॥ २७
राजानमागतं ज्ञात्वा प्रतिसंजगृहुः प्रजाः ।
'स च ताः प्रतिजग्राह पितेव हितकृत्सदा ॥'२८
ततोऽङ्गपतिराहूय सचिवान्मन्त्रकोविदान् ।
ऋश्यशृङ्गागमे यत्नमकरोन्मन्त्रनिश्चये ॥ २९
सोऽध्यगच्छदुपायं तु तैरमात्यैः सहाच्युतः ।
शास्त्रज्ञैरलमर्थज्ञैर्नीत्यां च परिनिष्ठितैः ॥ ३०
ततश्चानाययामास वारमुख्या महीपतिः ।
वेश्याः सर्वत्र निष्णातास्ता उवाच स पार्थिवः॥३१
ऋश्यशृङ्गमृषेः पुत्रमानयध्वमुपायतः ।
लोभयित्वाऽभिविश्वास्य विषयं मम शोभनाः॥३२
ता राजभयभीताश्च शापभीताश्च योषितः ।
अशक्यमूचुस्तत्कार्यं विषण्णा गतचेतसः ॥ ३३
तत्र त्वेका जरद्योषा राजानमिदमब्रवीत् ।
प्रयतिष्ये महाराज तमानेतुं तपोधनम् ॥ ३४
अभिप्रेतांस्तु मे कामांस्त्वमनुज्ञातुमर्हसि ।
ततः शक्ष्याम्यानयितुमृश्यशृङ्गमृषेः सुतम् ॥ ३५
तस्याः सर्वमभिप्रेतमन्वजानात्स पार्थिवः ।
धनं च प्रददौ भूरि रत्नानि विविधानि च ॥ ३६
ततो रूपेण संपन्ना वयसा च महीपते ।
स्त्रिय आदाय काश्चित्सा जगाम वनमञ्जसा ३७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

## द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

विभाण्डकस्यासन्निधाने तदाश्रमं प्रविष्टया वेश्यायुवत्या विलासैः ऋश्यशृङ्गं प्रलोभ्य पुनः स्वावासगमनम् ॥ १ ॥ तत आगतेन विभाण्डकेन वेश्याविलासमुग्धचेतसं सुतंप्रति मोहकारणप्रश्नः ॥ २ ॥

लोमश उवाच ।
सा तु नाव्याश्रमं चक्रे राजकार्यार्थसिद्धये ।
संदेशाच्चैव नृपतेः स्वबुद्ध्या चैव भारत ॥ १
नानापुष्पफलैर्वृक्षैः कृत्रिमैरुपशोभितैः ।
नानागुल्मलतोपेतैः स्वादुकामफलप्रदैः ॥ २
अतीव रमणीयं तदतीव च मनोहरम् ।
चक्रे नाव्याश्रमं रम्यमद्भुतोपमदर्शनम् ॥ ३
ततो निबध्य सा नावमदूरे काश्यपाश्रमात् ।
चारयामास पुरुषैर्विहारं तस्य वै मुनेः ॥ ४
ततो दुहितरं वेश्या समाधायेतिकार्यताम् ।
दृष्ट्वाऽन्तरं काश्यपस्य प्राहिणोद्बुद्धिसंमताम् ॥ ५
सा तत्र गत्वा कुशला तपोनित्यस्य संनिधौ ।

॥ १६ ॥ अङ्गानां देशानाम् ॥ १९ ॥ मिथ्या कृतः मया तुभ्यं दातुं किमपि न प्रतिश्रुतमित्यपलापं कृतवानित्यर्थः ॥ २० ॥ निष्कृतिं प्रायश्चित्तम् ॥ २४ ॥ मुनिसुतमाह्वयस्व चेति क. पाठः ॥ २५ ॥ सर्वत्र परवञ्चनादौ निष्णाताः कुशलाः ॥ ३१ ॥ जरद्योषा वृद्धास्त्री ॥ ३४ ॥ अन्वजानात् अनुज्ञातवान् ॥ ३६ ॥ एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

सा तु नार्याश्रमं चक्रे इति क. ध. पाठः । नाव्याश्रमं नावा तार्यमाश्रमम् ॥ १ ॥ मुनेर्विभाण्डकस्य विहारं बहिर्गमनं चारयामास चारैरधिगतवती ॥ ४ ॥ समाधाय बोधयित्वा । इतिकार्यतां इतिकर्तव्यताम् । अन्तरं असान्निध्यम् ॥ ५ ॥

आश्रमं तं समासाद्य ददर्श तमृषेः सुतम् ॥ ६

वेश्योवाच ।

कच्चिन्मुने कुशलं तापसानां
कच्चिच्च वो मूलफलं प्रभूतम् ।
कच्चिद्भवान्रमते चाश्रमेऽस्मिं-
स्त्वां वै द्रष्टुं सांप्रतमागतास्मि ॥ ७

कच्चित्तपो वर्धते तापसानां
पिता च ते कच्चिदहीनतेजाः ।
कच्चित्त्वया प्रीयते चैव विप्र
कच्चित्स्वाध्यायः क्रियते चर्श्यशृङ्ग ॥ ८

ऋश्यशृङ्ग उवाच ।

ऋद्ध्या भवाञ्ज्योतिरिव प्रकाशते
मन्ये चाहं त्वामभिवादनीयम् ।
पाद्यं वै ते संप्रदास्यामि कामा-
द्यथाधर्मं फलमूलानि चैव ॥ ९

कौश्यां बृस्यामास्स्व यथोपजोषं
कृष्णाजिनेनावृतायां सुखाय ।
क्व चाश्रमस्तव किं नाम चेदं
व्रतं ब्रह्मंश्चरसि हि देववच्चम् ॥ १०

वेश्योवाच ।

ममाश्रमः काश्यपपुत्र रम्य-
स्त्रियोजनं शैलमिमं परेण ।
तत्र स्वधर्मोऽनभिवादनं नो
न चोदकं पाद्यमुपस्पृशामः ॥ ११

भवता नाभिवाद्योऽहमभिवाद्यो भवान्मया ।
व्रतमेतादृशं ब्रह्मन्परिष्वज्यो भवान्मया ॥ १२

ऋश्यशृङ्ग उवाच ।

फलानि पक्वानि ददानि तेऽहं
भल्लातकान्यामलकानि चैव ।
करूषकानीङ्गुदधन्वनानि
प्रियालानां काङ्क्षितं वै कुरुष्व ॥ १३

लोमश उवाच ।

सा तानि सर्वाणि विसर्जयित्वा
भक्ष्याण्यनर्हाणि ददौ ततोऽस्मै ।
तान्यृश्यशृङ्गाय महारसानि
भृशं सुरूपाणि च मोदकानि ॥ १४

ददौ च माल्यानि सुगन्धवन्ति
चित्राणि वासांसि च भानुमन्ति ।
पेयानि चाग्र्याणि ततो मुमोद
चिक्रीड चैव प्रजहास चैव ॥ १५

सा कन्दुकेनारमतास्य मूले
विभज्यमाना फलिता लतेव ।
गात्रैश्च गात्राणि निषेवमाणा
समाश्लिषच्चासकृदृश्यशृङ्गम् ॥ १६

सर्जानशोकांस्तिलकांश्च वृक्षा-
न्सुपुष्पितानवनाम्यावभज्य ।
विलज्जमानेव मदाभिभूता
प्रलोभयामास सुतं महर्षेः ॥ १७

अथर्श्यशृङ्गं विकृतं समीक्ष्य
पुनः पुनः पीड्य च कायमस्य ।
अवेक्ष्यमाणा शनकैर्जगाम
कृत्वाऽग्निहोत्रस्य तदाऽपदेशम् ॥ १८

तस्यां गतायां मदनेन मत्तो
विचेतनश्चाभवदृश्यशृङ्गः ।
तामेव भावेन गतेन शून्ये
विनिःश्वसन्नार्तरूपो बभूव ॥ १९

ततो मुहूर्ताद्धरिपिङ्गलाक्षः
प्रवेष्टितो रोमभिरानखाग्रात् ।
स्वाध्यायवान्वृत्तसमाधियुक्तो
विभाण्डकः काश्यपः प्रादुरासीत् ॥ २०

सोऽपश्यदासीनमुपेत्य पुत्रं
ध्यायन्तमेकं विपरीतचित्तम् ।
विनिःश्वसन्तं मुहुरूर्ध्वदृष्टिं
विभाण्डकः पुत्रमुवाच दीनम् ॥ २१

---

कौश्यां बृस्यामास्स्व कुशासने उपविश । यथोपजोषं यथासुखम् ॥ १० ॥ अनर्हाणि अमूल्यानि ॥ १४ ॥ मूले समीपे । विभज्यमाना अङ्गमोटनादीनि कुर्वाणा ॥ १६ ॥ कायं देहं पीड्य आलिङ्ग्येत्यर्थः । अपदेशं छलम् ॥ १८ ॥ भावेनाभिप्रायेण ॥ १९ ॥ प्रवेष्टितो व्याप्तः ॥ २० ॥

न कल्पिताः समिधः किंनु तात
कच्चिद्धुतं चाग्निहोत्रं त्वयाऽद्य ।
'न संसृष्टं क्रियते द्वारभागे
सुवृक्षाणां खण्डने कः प्रवृत्तः ॥' २२
सुनिर्णिक्तं स्रुक्स्रुवं होमधेनुः
कच्चित्सवत्साद्य कृता त्वया च ।
'कोप्यागतः शुश्रूषणायेह पुत्र
कुतश्चित्रं माल्यमिदं प्रवृद्धम् ॥' २३
न वै यथापूर्वमिवासि पुत्र
चिन्तापरश्चासि विचेतनश्च ।
दीनोतिमात्रं किमिवाद्य खिन्नः
पृच्छामि त्वां क इहाद्यागतोऽभूत् ॥ २४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

## त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

ऋश्यशृङ्गेण विभाण्डकंप्रति आमाद्वेश्याकुमार्यां मुनिकुमारत्वव्यपदेशेन तदागमनोक्तिपूर्वकं तदङ्गचेष्टाविलासैस्तस्यामेव स्वचित्तासक्त्युक्तिः ॥ १ ॥

ऋश्यशृङ्ग उवाच ।
इहागतो जटिलो ब्रह्मचारी
न वै ह्रस्वो नातिदीर्घो मनस्वी ।
सुवर्णवर्णः कमलायताक्षः
सुतः सुराणामिव शोभमानः ॥ १
समृद्धरूपः सवितेव दीप्तः
सुश्लक्ष्णवाक्कृष्णतारश्चकोरात् ।
नीलाः प्रसन्नाश्च जटाः सुगन्धा
हिरण्यरज्जुग्रथिताः सुदीर्घाः ॥ २
आधारभूतः पुनरस्य कण्ठे
विभ्राजते विद्युदिवान्तरिक्षे ।
द्वौ चास्य पिण्डावधरेण कण्ठा-
दजातरोमौ सुमनोहरौ च ॥ ३
विलग्नमध्यश्च स नाभिदेशे
कटिश्च तस्यातिकृतप्रमाणा ।
तथाऽस्य चीरान्तरतः प्रभाति
हिरण्मयी मेखला मे यथेयम् ॥ ४
अन्यच्च तस्याद्भुतदर्शनीयं
विकूजितं पादयोः संप्रभाति ।
पाण्योश्च तद्वत्स्वनवन्निबद्धौ
कलापकावक्षमाला यथेयम् ॥ ५
विचेष्टमानस्य च तस्य तानि
कूजन्ति हंसाः सरसीव मत्ताः ।
चीराणि तस्याद्भुतदर्शनानि
नेमानि तद्वन्मम रूपवन्ति ॥ ६
वक्त्रं च तस्याद्भुतदर्शनीयं
प्रव्याहृतं ह्लादयतीव चेतः ।
पुंस्कोकिलस्येव च तस्य वाणी
तां शृण्वतो मे व्यथितोऽन्तरात्मा ॥ ७
यथा वनं माधवमासिमध्ये
समीरितं श्वसनेनेव भाति ।
तथा स भात्युत्तमपुण्यगन्धी
निषेव्यमाणः पवनेन तात ॥ ८
सुसंयताश्चापि जटा विभक्ता
द्वैधीकृता भाति ललाटदेशे ।
कर्णौ च चित्रैरिव चक्रवाकैः
समावृतौ तस्य सुरूपवद्भिः ॥ ९
तथा फलं वृत्तमथो विचित्रं
समाहतं पाणिना दक्षिणेन ।
तद्भूमिमासाद्य पुनःपुनश्च
समुत्पतत्यद्भुतरूपमुच्चैः ॥ १०

निर्णिक्तं प्रक्षालितम् । सवत्सा कृता । दोहनायेति शेषः ॥ २३ ॥ द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥
आधाररूपा पुनरिति झ. ध. पाठः ॥ ३ ॥ कलापकौ भूषणविशेषौ । स्वार्थे कः । कङ्कणावित्यर्थः । विकुञ्चितं पादयोः संप्रभाति इति ध. पाठः ॥ ५ ॥ तथा फलं फलसदृशं कन्दुकम् ॥ १० ॥

तच्चाभिहत्वा परिवर्ततेऽसौ
वातेरितो वृक्ष इवावघूर्णन् ।
तं प्रेक्षतः पुत्रमिवामराणां
प्रीतिः परा तात रतिश्च जाता ॥ ११

स मे समाश्लिष्य पुनः शरीरं
जटासु गृह्याभ्यवनाम्य वक्त्रम् ।
वक्त्रेण वक्त्रं प्रणिधाय शब्दं
चकार तन्मेऽजनयत्प्रहर्षम् ॥ १२

न चापि पाद्यं बहुमन्यतेऽसौ
फलानि चेमानि मया हृतानि ।
एवंव्रतोस्मीति च मामवोच-
त्फलानि चान्यानि नवान्यदान्मे ॥ १३

मयोपयुक्तानि फलानि यानि
नेमानि तुल्यानि रसेन तेषाम् ।
न चापि तेषां त्वगियं यथैषां
साराणि नैषामिव सन्ति तेषाम् ॥ १४

तोयानि चैवातिरसानि मह्यं
प्रादात्स वै पातुमुदाररूपः ।
पीत्वैव यान्यभ्यधिकः प्रहर्षो
ममाभवद्भूश्चलितेव चासीत् ॥ १५

इमानि चित्राणि च गन्धवन्ति
माल्यानि तस्योद्ग्रथितानि पट्टैः ।
यानि प्रकीर्येह गतः स्वमेव
स आश्रमं तपसा द्योतमानः ॥ १६

गतेन तेनास्मि कृतो विचेता
गात्रं च मे संपरिदह्यतीव ।
इच्छामि तस्यान्तिकमाशु गन्तुं
तं चेह नित्यं परिवर्तमानम् ॥ १७

गच्छामि तस्यान्तिकमेव तात
का नाम सा ब्रह्मचर्या च तस्य ।
इच्छाम्यहं चरितुं तेन सार्धं
यथा तपः स चरत्यार्यधर्मा ॥ १८

चर्तुं तथेच्छा हृदये ममास्ति
दुनोति चित्तं यदि तं न पश्ये ॥ १९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

## चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

पुनर्विभाण्डकासन्निधाने तदाश्रमं गतया गणिकातरुण्या नौकारोपणेन ऋश्यशृङ्गेऽङ्गदेशमानीते महावृष्टेराविर्भावः ॥ १ ॥ ऋश्यशृङ्गेण लोमपादप्रार्थनया शान्ताभिधायास्तत्सुतायाः परिणयनम् ॥ २ ॥ लोमपादेन क्रुद्धस्य विभाण्डकस्य प्रसादनम् ॥ ३ ॥ ऋश्यशृङ्गेण पितृशासनादङ्गदेशे तनयोदयावधिनिवासपूर्वकं ततः सहभार्यया निजाश्रमाभिगमनम् ॥ ४ ॥

विभाण्डक उवाच ।

रक्षांसि चैतानि चरन्ति पुत्र
रूपेण तेनाद्भुतदर्शनेन ।
अतुल्यवीर्याण्यभिरूपवन्ति
विघ्नं सदा तपसश्चिन्तयन्ति ॥ १

सुरूपरूपाणि च तानि तात
प्रलोभयन्ते विविधैरुपायैः ।
सुखाच्च लोकाच्च निपातयन्ति
तान्युग्ररूपाणि मुनीन्वनेषु ॥ २

न तानि सेवेत मुनिर्यतात्मा
सतां लोकान्प्रार्थयानः कथंचित् ।
कृत्वा विघ्नं तापसानां रमन्ते
पापाचारास्तापसस्तान्न पश्येत् ॥ ३

असज्जनेनाचरितानि पुत्र
पानान्यपेयानि मधूनि तानि ।
माल्यानि चैतानि न वै मुनीनां
स्मृतानि चित्रोज्ज्वलगन्धवन्ति ॥ ४

प्रीतिराह्लादः । रतिरासक्तिः ॥ ११ ॥

त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

रक्षांसि तानीति निवार्य पुत्रं
विभाण्डकस्तां मृगयांबभूव ।
नासादयामास यदा त्र्यहेण
तदा स पर्यावद्यते श्रमाय ॥ ५

यदा पुनः काश्यपो वै जगाम
फलान्याहर्तुं विधिनाश्रमेऽसौ ।
तदा पुनर्लोभयितुं जगाम
सा वेशयोषा मुनिमृश्यशृङ्गम् ॥ ६

दृष्ट्वैव तामृश्यशृङ्गः प्रहृष्टः
संभ्रान्तरूपोऽभ्यपतत्तदानीम् ।
प्रोवाच चैनां भवतः श्रमाय
गच्छाव यावन्न पिता ममैति ॥ ७

लोमश उवाच ।

ततो राजन्काश्यपस्यैकपुत्रं
प्रवेश्य वेगेन विमुच्य नावम् ।
प्रलोभयन्त्यो विविधैरुपायै-
राजग्मुरङ्गाधिपतेः समीपम् ॥ ८

संस्थाप्य तामाश्रमदर्शने तु
संतारितां नावमथातिशुभ्राम् ।
तीरादुपादाय तथैव चक्रे
राजाश्रमं नाम वनं विचित्रम् ॥ ९

अन्तःपुरे तं तु निवेश्य राजा
विभाण्डकस्यात्मजमेकपुत्रम् ।
ददर्श मेघैः सहसा प्रवृष्ट-
मापूर्यमाणं च जगज्जलेन ॥ १०

स रोमपादः परिपूर्णकामः
सुतां ददावृश्यशृङ्गाय शान्ताम् ।
क्रोधप्रतीकारकरं च चक्रे
गोभिश्च मार्गेष्वभिकर्षणं च ॥ ११

विभाण्डकस्यात्रजतः स राजा
पशून्प्रभूतान्पशुपांश्च वीरान् ।
समादिशत्पुत्रगृद्धी महर्षि-
र्विभाण्डकः परिपृच्छेद्यदा वः ॥ १२

स वक्तव्यः प्राञ्जलिभिर्भवद्भिः
पुत्रस्य ते पशवः कर्षणं च ।
किं ते प्रियं वै क्रियतां महर्षे
दासाः स्म सर्वे तव वाचि बद्धाः ॥ १३

अथोपायात्स मुनिश्चण्डकोपः
स्वमाश्रमं मूलफलं गृहीत्वा ।
अन्वेषमाणश्च न तत्र पुत्रं
ददर्श चुक्रोध ततो भृशं सः ॥ १४

ततः स कोपेन विदीर्यमाण
आशङ्कमानो नृपतेर्विधानम् ।
जगाम चम्पां प्रतिधक्ष्यमाण-
स्तमङ्गराजं सपुरं सराष्ट्रम् ॥ १५

स वै श्रान्तः क्षुधितः काश्यपस्ता-
न्घोषान्समासादितवान्समृद्धान् ।
गोपैश्च तैर्विधिवत्पूज्यमानो
राजेव तां रात्रिमुवास तत्र ॥ १६

अवाप्य सत्कारमतीव हृष्टः
प्रोवाच कस्य प्रथिताः स्थ गोपाः ।
ऊचुस्ततस्तेऽभ्युपगम्य सर्वे
धनं तवेदं विहितं सुतस्य ॥ १७

देशेषु देशेषु स पूज्यमान-
स्तांश्चैव शृण्वन्मधुरान्प्रलापान् ।
प्रशान्तभूयिष्ठरजाः प्रहृष्टः
समाससादाङ्गपतिं पुरस्थम् ॥ १८

स पूजितस्तेन नरर्षभेण
ददर्श पुत्रं दिवि देवं यथेन्द्रम् ।
शान्तां स्नुषां चैव ददर्श तत्र
सौदामनीमुच्चरन्तीं यथैव ॥ १९

ग्रामांश्च घोषांश्च सुतस्य दृष्ट्वा
शान्तां च शान्तोऽस्य परः स कोपः ।

---

श्रमाय आश्रमाय ॥ ५ ॥ विधिना श्रावणेनेति झ. पाठः । वेशयोषा वेश्या ॥ ६ ॥ आश्रमो यत्रस्थैर्दृश्यते तावतिदेशे आश्रमदर्शने । नाव्याश्रमं नामेति झ. पाठः ॥ ९ ॥ गाश्चैव मार्गेषु च कर्षणानीति झ. पाठः ॥ ११ ॥ त्रयोदशाधिकशततमोऽध्यायः ॥ ११४ ॥

चकार तस्यैव परं प्रसादं
विभाण्डको भूमिपतेर्नरेन्द्र ॥ २०
स तत्र निक्षिप्य सुतं महर्षि-
रुवाच सूर्याग्निसमप्रभावः ।
जाते च पुत्रे वनमेवाव्रजेथा
राज्ञः प्रियाण्यस्य सर्वाणि कृत्वा ॥ २१
स तद्वचः कृतवानृश्यशृङ्गो
ययौ च यत्रास्य पिता बभूव ।
शान्ता चैनं पर्यचरन्नरेन्द्र
खे रोहिणी सोममिवानुकूला ॥ २२
अरुन्धती वा सुभगा वसिष्ठं
लोपामुद्रा वा यथा ह्यगस्त्यम् ।
नलस्य वै दमयन्ती यथा भू-
द्यथा शची वज्रधरस्य चैव ॥ २३
नालायनी चेन्द्रसेना बभूव
वश्या नित्यं मुद्गलस्याजमीढ ।
'यथा सीता दाशरथेर्महात्मनो
यथा तव द्रौपदी पाण्डुपुत्र ।'
तथा शान्ता ऋश्यशृङ्गं वनस्थं
प्रीत्या युक्ता पर्यचरन्नरेन्द्र ॥ २४
तस्याश्रमः पुण्य एषोऽवभाति
महाह्रदं शोभयन्पुण्यकीर्तिः ।
अत्र स्नातः कृतकृत्यो विशुद्ध-
स्तीर्थान्यन्यान्यनुसंयाहि राजन् ॥ २५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

## पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

युधिष्ठिरेण गङ्गासागरसङ्गमादितीर्थगमनम् ॥ १ ॥ लोमशेन युधिष्ठिरंप्रति तत्तत्तीर्थाश्रममहिमानुवर्णनम् ॥ २ ॥

वैशंपायन उवाच ।
ततः प्रयातः कौशिक्याः पाण्डवो जनमेजय ।
आनुपूर्व्येण सर्वाणि जगामायतनान्यथ ॥ १
स सागरं समासाद्य गङ्गायाः संगमे नृप ।
नदीशतानां पञ्चानां मध्ये चक्रे समाप्लवम् ॥ २
ततः समुद्रतीरेण जगाम वसुधाधिपः ।
भ्रातृभिः सहितो वीरः कलिङ्गान्प्रति भारत ॥३
लोमश उवाच ।
एते कलिङ्गाः कौन्तेय यत्र वैतरणी नदी ।
यत्रायजत धर्मोपि देवाञ्शरणमेत्य वै ॥ ४
ऋषिभिः समुपायुक्तं यज्ञियं गिरिशोभितम् ।
उत्तरं तीरमेतद्धि सततं द्विजसेवितम् ॥ ५
समेन देवयानेन पथा स्वर्गमुपेयुषः ।
अत्र वै ऋषयोऽन्येऽपि पुरा क्रतुभिरीजिरे ॥ ६
अत्रैव रुद्रो राजेन्द्र पशुमादत्तवान्मखे ।
पशुमादाय राजेन्द्र भागोयमिति चाब्रवीत् ॥ ७
हृते पशौ तदा देवास्तमूचुर्भरतर्षभ ।
मा परस्वमभिद्रोग्धा माधर्म्यान्नीनशः पथः ॥ ८
'स्वयं यज्ञेश्वरो भूत्वा कर्मणां फलदायकः ।
यज्ञं विहन्तुं भगवान्नार्हसे जगदीश्वर ॥' ९
इति कल्याणरूपाभिर्वाग्भिस्ते रुद्रमस्तुवन् ।
इष्ट्या चैनं तर्पयित्वा मानयांचक्रिरे तदा ॥ १०
ततः स पशुमुत्सृज्य देवयानेन जग्मिवान् ।
तत्रानुवंशो रुद्रस्य तं निबोध युधिष्ठिर ॥ ११
अयातयामं सर्वेभ्यो भागेभ्यो भागमुत्तमम् ।
देवाः संकल्पयामासुर्भयाद्रुद्रस्य शाश्वतम् ॥ १२
इमां गाथामत्र गायन्नपः स्पृशति यो नरः ।
देवयानोऽस्य पन्थाश्च चक्षुषाऽभिप्रकाशते ॥ १३
वैशंपायन उवाच ।
ततो वैतरणीं सर्वे पाण्डवा द्रौपदी तथा ।
अवतीर्य महाभागास्तर्पयांचक्रिरे पितॄन् ॥ १४

उत्तरंतीरं वैतरण्याः ॥ ५ ॥ मा परस्वमभिद्रोग्धा परभागस्य नाशं माकुर्वित्यर्थः ॥ ८ ॥ अयातयामं तात्कालिकम् ॥ १२ ॥

युधिष्ठिर उवाच ।
उपस्पृश्येह विधिवदस्यां नद्यां तपोबलात् ।
मानुषादस्मि विषयादपेतः पश्य लोमश ॥ १५
सर्वाँल्लोकान्प्रपश्यामि प्रसादात्तव सुव्रत ।
वैखानसानां जपतामेष शब्दो महात्मनाम् ॥ १६
लोमश उवाच ।
त्रिशतं वै सहस्राणि योजनानां युधिष्ठिर ।
यत्र ध्वनिं शृणोष्येनं तूष्णीमास्स्व विशांपते ॥ १७
एतत्स्वयंभुवो राजन्वनं दिव्यं प्रकाशते ।
यत्रायजत राजेन्द्र विश्वकर्मा प्रतापवान् ॥ १८
यस्मिन्यज्ञे हि भूर्दत्ता कश्यपाय महात्मने ।
सपर्वतवनोद्देशा दक्षिणार्थे स्वयंभुवा ॥ १९
अवासीदच्च कौन्तेय दत्तमात्रा मही तदा ।
उवाच चापि कुपिता लोकेश्वरमिदं प्रभुम् ॥ २०
न मां मर्त्याय भगवन्कस्मैचिद्दातुमर्हसि ।
प्रदानं मोघमेतत्ते यास्याम्येषा रसातलम् ॥ २१
विषीदन्तीं तु तां दृष्ट्वा कश्यपो भगवानृषिः ।
प्रसादयांबभूवाथ ततो भूमिं विशांपते ॥ २२
ततः प्रसन्ना पृथिवी तपसा तस्य पाण्डव ।
पुनरुन्मज्य सलिलाद्वेदीरूपास्थिता बभौ ॥ २३
सैषा प्रकाशते राजन्वेदीसंस्थानलक्षणा ।
आरुह्यात्र महाराज वीर्यवान्वै भविष्यसि ॥ २४
सैषा सागरमासाद्य राजन्वेदी समाश्रिता ।
एतामारुह्य भद्रं ते त्वमेकस्तर सागरम् ॥ २५
अहं च ते स्वस्त्ययनं मयोक्ष्ये
यथा त्वमेनामधिरोहसेऽद्य ।
स्पृष्टा हि मर्त्येन ततः समुद्र-
मेषा वेदी प्रविशत्याजमीढ ॥ २६
ओंनमो विश्वगुप्ताय नमो विश्वपराय ते ।
सान्निध्यं कुरु देवेश सागरे लवणाम्भसि ॥ २७
अग्निर्मित्रो योनिरापोऽथ देव्यो
विष्णो रेतस्त्वममृतस्य नाभिः ।
एवं ब्रुवन्पाण्डव सत्यवाक्यं
वेदीमिमां त्वं तरसाऽधिरोह ॥ २८
अग्निश्च ते योनिरिडा च देहो
रेतोधा विष्णोरमृतस्य नाभिः ।
एवं जपन्पाण्डव सत्यवाक्यं
ततोऽवगाहेत पतिं नदीनाम् ॥ २९
अन्यथा हि कुरुश्रेष्ठ देवयोनिरपांपतिः ।
कुशाग्रेणापि कौन्तेय न स्प्रष्टव्यो महोदधिः ३०
वैशंपायन उवाच ।
ततः कृतस्वस्त्ययनो महात्मा
युधिष्ठिरः सागरमभ्यगच्छत् ।
कृत्वा च तच्छासनमस्य सर्वं
महेन्द्रमासाद्य निशामुवास ॥ ३१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

## षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

अकृतव्रणेन मुनिना युधिष्ठिरंप्रति परशुरामचरित्रकीर्तनारम्भः ॥ १ ॥ ऋचीकेन भृगुसुतेन दिव्याश्वसहस्रशुल्कदानेन गाधिकन्यापरिणयनम् ॥ २ ॥ गाधिसुतया सत्यवत्या भृगुप्रसादाज्जमदग्निनामकतनयोत्पादनम् ॥ ३ ॥

वैशंपायन उवाच ।
स तत्र तामुषित्वैकां रजनीं पृथिवीपतिः ।
तापसानां परं चक्रे सत्कारं भ्रातृभिः सह ॥ १
लोमशस्तस्य तान्सर्वानाचख्यौ तत्र तापसान् ।
भृगूनङ्गिरसश्चैव वसिष्ठानथ काश्यपान् ॥ २
तान्समेत्य स राजर्षिरभिवाद्य कृताञ्जलिः ।

समुद्रप्रार्थनामन्त्रमाह ओंनम इति । विश्वं गुप्तं लीनमस्मिन् प्रलये इति विश्वगुप्तः । विश्वस्मात्पराय श्रेष्ठाय विष्णवे इत्यर्थः । लवणाम्भसि क्षारोदके ॥ २७ ॥ देवयोनिः देवस्थानम् ॥ ३० ॥

युधिष्ठिरः सागरगामगच्छदिति क. ध. पाठः ॥ ३१ ॥ पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

रामस्यानुचरं वीरमपृच्छदकृतव्रणम् ॥ ३
कदा नु रामो भगवांस्तापसो दर्शयिष्यति ।
तमहं तपसा युक्तं द्रष्टुमिच्छामि भार्गवम् ॥ ४
अकृतव्रण उवाच ।
आयानेवासि विदितो रामस्य विदितात्मनः ।
प्रीतिस्त्वयि च रामस्य क्षिप्रं त्वां दर्शयिष्यति ५
चतुर्दशीमष्टमीं च रामं पश्यन्ति तापसाः ।
अस्यां रात्र्यां व्यतीतायां भवित्री श्वश्चतुर्दशी ॥ ६
'ततो द्रक्ष्यसि रामं त्वं कृष्णाजिनजटाधरम्' ।
युधिष्ठिर उवाच ।
भवाननुगतो रामं जामदग्न्यं महाबलम् ।
प्रत्यक्षदर्शी सर्वस्य पूर्ववृत्तस्य कर्मणः ॥ ७
स भवान्कथयत्वद्य यथा रामेण निर्जिताः ।
आहवे क्षत्रियाः सर्वे कथं केन च हेतुना ॥ ८
अकृतव्रण उवाच ।
[हन्त ते कथयिष्यामि महदाख्यानमुत्तमम् ।
भृगूणां राजशार्दूल वंशे जातस्य भारत ॥ ९
रामस्य जामदग्न्यस्य चरितं देवसंमितम् ।
हैहयाधिपतेश्चैव कार्तवीर्यस्य भारत ॥ १०
रामेण चार्जुनो नाम हैहयाधिपतिर्हतः ।
तस्य बाहुशतान्यासंस्त्रीणि सप्त च पाण्डव ॥ ११
दत्तात्रेयप्रसादेन विमानं काञ्चनं तथा ।
ऐश्वर्यं सर्वभूतेषु पृथिव्यां पृथिवीपते ॥ १२
अव्याहतगतिश्चैव रथस्तस्य महात्मनः ।
रथेन तेन तु सदा वरदानेन वीर्यवान् ॥ १३
ममर्द देवान्यक्षांश्च ऋषींश्चैव समन्ततः ।
भूतांश्चैव स सर्वांस्तु पीडयामास सर्वतः ॥ १४
ततो देवाः समेत्याहुर्ऋषयश्च महाव्रताः ।
देवदेवं सुरारिघ्नं विष्णुं सत्यपराक्रमम् ।
भगवन्भूतरक्षार्थमर्जुनं जहि वै प्रभो ॥ १५
विमानेन च दिव्येन हैहयाधिपतिः प्रभुः ।
शचीसहायं क्रीडन्तं धर्षयामास वासवम् ॥ १६
ततस्तु भगवान्देवः शक्रेण सहितस्तदा ।
कार्तवीर्यविनाशार्थं मन्त्रयामास भारत ॥ १७
यत्तद्भूतहितं कार्यं सुरेन्द्रेण निवेदितम् ।
संप्रतिश्रुत्य तत्सर्वं भगवाँल्लोकपूजितः ।
जगाम बदरीं रम्यां स्वमेवाश्रममण्डलम् ॥ १८
एतस्मिन्नेव काले तु पृथिव्यां पृथिवीपतिः ।]
कान्यकुब्जे महानासीत्पार्थिवः सुमहाबलः ।
गाधीति विश्रुतो लोके वनवासं जगाम ह ॥ १९
वने तु तस्य वसतः कन्या जज्ञेऽप्सरःसमा ।
ऋचीको भार्गवस्तां च वरयामास भारत ॥ २०
तमुवाच ततो गाधिर्ब्राह्मणं संशितव्रतम् ।
उचितं नः कुले किंचित्पूर्वैर्यत्संप्रवर्तितम् ॥ २१
एकतः श्यामकर्णानां पाण्डुराणां तरस्विनाम् ।
सहस्रं वाजिनां शुल्कमिति विद्धि द्विजोत्तम ॥ २२
न चापि भगवान्वाच्यो दीयतामिति भार्गव ।
देया मे दुहिता चैव त्वद्विधाय महात्मने ॥ २३
ऋचीक उवाच ।
एकतः श्यामकर्णानां पाण्डुराणां तरस्विनाम् ।
दास्याम्यश्वसहस्रं ते मम भार्या सुताऽस्तु ते ॥ २४
'गाधिरुवाच ।
ददास्यश्वसहस्रं मे तव भार्या सुताऽस्तु मे ॥' २५
अकृतव्रण उवाच ।
स तथेति प्रतिज्ञाय राजन्वरुणमब्रवीत् ।
एकतः श्यामकर्णानां पाण्डुराणां तरस्विनाम् ।
सहस्रं वाजिनामेकं शुल्कार्थं प्रतिदीयताम् ॥ २६
तस्मै प्रादात्सहस्रं वै वाजिनां वरुणस्तदा ।
तदश्वतीर्थं विख्यातमुत्थिता यत्र ते हयाः ॥ २७
गङ्गायां कान्यकुब्जे वै ददौ सत्यवतीं तदा ।
ततो गाधिः सुतां चास्मै जन्याश्चासन्सुरास्तदा ॥
लब्धं हयसहस्रं तु तां च दृष्ट्वा दिवौकसः ।
'विस्मयं परमं जग्मुस्तमेव दिवि संस्तुवन् ॥' २९
धर्मेण लब्ध्वा तां भार्यामृचीको द्विजसत्तमः ।

---

तापसान्दर्शयिष्यति । तेनैवाहं प्रसङ्गेनेति झ. पाठः ॥ ४ ॥ आयान् आगच्छन् ॥ ५ ॥ जन्याः वरपक्षीयाः । ततो गाधिः सुतां तस्मै ददौ कन्यां नृपोत्तमेति क. पाठः ॥ २८ ॥ लब्ध्वा हयसहस्रं तद्देवानां सन्निधौ तदेति क. पाठः ॥ २९ ॥

यथाकामं यथाजोषं तया रेमे सुमध्यया ॥ ३०
तं विवाहे कृते राजन्सभार्यमवलोककः ।
आजगाम भृगुश्रेष्ठः पुत्रं दृष्ट्वा ननन्द च ॥ ३१
भार्यापती तमासीनं भृगुं सुरगणार्चितम् ।
अर्चित्वा पर्युपासीनौ प्राञ्जली तस्थतुस्तदा ॥३२
ततः स्नुषां स भगवान्प्रहृष्टो भृगुरब्रवीत् ।
वरं वृणीष्व सुभगे दाता ह्यस्मि तवेप्सितम् ॥३३
सा वै प्रसादयामास तं गुरुं पुत्रकारणात् ।
आत्मनश्चैव मातुश्च प्रसादं च चकार सः ॥ ३४
भृगुरुवाच ।
ऋतौ त्वं चैव माता च स्नाते पुंसवनाय वै ।
आलिङ्गेतां पृथग्वृक्षौ साऽश्वत्थं त्वमुदुम्बरम् ॥३५
चरुद्वयमिदं भद्रे जनन्याश्च तवैव च ।
विश्वमावर्तयित्वा तु मया यत्नेन साधितम् ॥३६
प्राशितव्यं प्रयत्नेन तेत्युक्त्वाऽदर्शनं गतः ।
आलिङ्गने चरौ चैव चक्रतुस्ते विपर्ययम् ॥ ३७
ततः पुनः स भगवान्काले बहुतिथे गते ।
दिव्यज्ञानाद्विदित्वा तु भगवानागतः पुनः ॥३८
अथोवाच महातेजा भृगुः सत्यवतीं स्नुषाम् ॥३९
उपयुक्तश्चरुर्भद्रे वृक्षे चालिङ्गनं कृतम् ।
विपरीतेन ते सुभ्रूर्मात्रा चैवासि वञ्चिता ॥ ४०
ब्राह्मणः क्षत्रवृत्तिर्वै तव पुत्रो भविष्यति ।
क्षत्रियो ब्राह्मणाचारो मातुस्तव सुतो महान् ।
भविष्यति महावीर्यः साधूनां मार्गमास्थितः ४१
ततः प्रसादयामास श्वशुरं सा पुनःपुनः ।
न मे पुत्रो भवेदीदृक्कामं पौत्रो भवेदिति ॥ ४२
एवमस्त्विति सा तेन पाण्डव प्रतिनन्दिता ।
कालं प्रतीक्षती गर्भं धारयामास यत्नतः ॥ ४३
जमदग्निं ततः पुत्रं जज्ञे सा काल आगते ।
तेजसा वर्चसा चैव युक्तं भार्गवनन्दनम् ॥ ४४
स वर्धमानस्तेजस्वी वेदस्याध्ययनेन च ।
बहूनृषीन्महातेजाः पाण्डवेयात्यवर्तत ॥ ४५
तं तु कृत्स्नो धनुर्वेदः प्रत्यभाद्भरतर्षभ ।
चतुर्विधानि चास्त्राणि भास्करोपमवर्चसम् ॥४६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

## सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

रामेण रेणुकायां मानसिकव्यभिचारदर्शिनः पितुर्जमदग्नेर्नियोगात्कुठारेण तस्याः कण्ठच्छेदनम् ॥ १ ॥ जमदग्निना पुत्रप्रार्थनया रेणुकायाः पुनरुज्जीवनम् ॥ २ ॥ रामासंनिधाने जमदग्न्याश्रममुपागतेन कार्तवीर्यार्जुनेन तदीयहोमधेनुवत्साहरणपूर्वकं तदाश्रमपीडनम् ॥३॥ तत आगतेन रामेण कार्तवीर्ये युधि निहते तदीयै रामासंनिधाने जमदग्नेर्वधः ॥४॥

अकृतव्रण उवाच ।
स वेदाध्ययने युक्तो जमदग्निर्महातपाः ।
तपस्तेपे ततो देवान्नियमाद्वशमानयत् ॥ १
स प्रसेनजितं राजन्नधिगम्य नराधिपम् ।
रेणुकां वरयामास स च तस्मै ददौ नृपः ॥ २
रेणुकां त्वथ संप्राप्य भार्यां भार्गवनन्दनः ।
आश्रमस्थस्तया सार्धं तपस्तेपेऽनुकूलया ॥ ३
तस्याः कुमाराश्चत्वारो जज्ञिरे रामपञ्चमाः ।
सर्वेषामजघन्यस्तु राम आसीज्जघन्यजः ॥ ४
फलाहारेषु सर्वेषु गतेष्वथ सुतेषु वै ।
रेणुका स्नातुमगमत्कदाचिन्नियतव्रता ॥ ५
सा तु चित्ररथं नाम मार्तिकावतकं नृपम् ।
ददर्श रेणुका राजन्नागच्छन्ती यदृच्छया ॥ ६
क्रीडन्तं सलिले दृष्ट्वा सभार्यं पद्ममालिनम् ।
ऋद्धिमन्तं ततस्तस्य स्पृहयामास रेणुका ॥ ७
व्यभिचाराच्च तस्मात्सा क्लिन्नाम्भसि विचेतना ।

---

अवलोककः अवलोकनार्थी ॥ ३१ ॥ विश्वं विराट्पुरुषं आवर्तयित्वा मुहुर्मुहुरनुसंधाय एतयोश्चर्वोर्भक्षणेन विश्वस्रष्टृतुल्यौ पुत्रौ भविष्यत इति भावः ॥ ३६ ॥ ते उभे प्रति इत्युक्त्वेतीकारलोपः संधिर्वा आर्षः । आलिङ्गने अश्वत्थोदुम्बरयोः ॥ ३७ ॥ षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

ततस्तस्य स्पृहयामास तमैच्छत् । सभार्यं हेममालिनमिति क. ध. पाठः ॥ ७ ॥

'अन्तरिक्षान्निपतिता नर्मदायां महाह्रदे ॥ ८
उत्तीर्य चापि सा यत्नाज्जगाम भरतर्षभ ।'
प्रविवेशाश्रमं त्रस्ता तां वै भर्तान्वबुध्यत ॥ ९
स तां दृष्ट्वा च्युतां धैर्याद्ब्राह्म्या लक्ष्म्या विवर्जिताम्
धिक्शब्देन महातेजा गर्हयामास वीर्यवान् ॥ १०
ततो ज्येष्ठो जामदग्न्यो रुमण्वान्नाम नामतः ।
आजगाम सुषेणश्च वसुर्विश्वावसुस्तथा ॥ ११
तानानुपूर्व्याद्भगवान्वधे मातुरचोदयत् ।
न च ते जातसंमोहाः किंचिदूचुर्विचेतसः ॥ १२
ततः शशाप तान्क्रोधात्ते शप्ताश्चेतनां जहुः ।
मृगपक्षिसधर्माणः क्षिप्रमासञ्जडोपमाः ॥ १३
ततो रामोऽभ्ययात्पश्चादाश्रमं परवीरहा ।
तमुवाच महामन्युर्जमदग्निर्महातपाः ॥ १४
जहीमां मातरं पापां मा च पुत्र व्यथां कृथाः ।
तत आदाय परशुं रामो मातुः शिरोऽहरत् ॥ १५
ततस्तस्य महाराज जमदग्नेर्महात्मनः ।
कोपोऽभ्यगच्छत्सहसा प्रसन्नश्चाब्रवीदिदम् ॥ १६
ममेदं वचनात्तात कृतं ते कर्म दुष्करम् ।
वृणीष्व कामान्धर्मज्ञ यावतो वाञ्छसे हृदा ॥ १७
स वव्रे मातुरुत्थानमस्मृतिं च वधस्य वै ।
पापेन तेन चास्पर्शं भ्रातॄणां प्रकृतिं तथा ॥ १८
अप्रतिद्वन्द्वतां युद्धे दीर्घमायुश्च भारत ।
ददौ च सर्वान्कामांस्ताञ्जमदग्निर्महातपाः ॥ १९
कदाचित्तु तथैवास्य विनिष्क्रान्ताः सुताः प्रभो ।
अथानूपपतिर्वीरः कार्तवीर्योऽभ्यवर्तत ॥ २०
तमाश्रमपदं प्राप्तमृषिरर्घ्यात्समार्चयत् ।
स युद्धमदसंमत्तो नाभ्यनन्दत्तथाऽर्चनम् ॥ २१
प्रमथ्य चाश्रमात्तस्माद्धोमधेनोस्ततोबलात् ।
जहार वत्सं क्रोशन्त्या बभञ्ज च महाद्रुमान् ॥ २२
आगताय च रामाय तदाचष्ट पिता स्वयम् ।
गां च रोरुदतीं दृष्ट्वा कोपो रामं समाविशत् ।
स मन्युवशमापन्नः कार्तवीर्यमुपाद्रवत् ॥ २३
तस्याथ युधि विक्रम्य भार्गवः परवीरहा ।
चिच्छेद निशितैर्भल्लैर्बाहून्परिघसंनिभान् ॥ २४
सहस्रसंमितान्राजन्प्रगृह्य रुचिरं धनुः ।
अभिभूतः स रामेण संयुक्तः कालधर्मणा ॥ २५
अर्जुनस्याथ दायादा रामेण कृतमन्यवः ।
आश्रमस्थं विना रामं जमदग्निमुपाद्रवन् ॥ २६
ते तं जघ्नुर्महावीर्यमयुध्यन्तं तपस्विनम् ।
असकृद्रामरामेति विक्रोशन्तमनाथवत् ॥ २७
कार्तवीर्यस्य पुत्रास्तु जमदग्निं युधिष्ठिर ।
घातयित्वा शरैर्जग्मुर्यथागतमरिंदमाः ॥ २८
अपक्रान्तेषु वै तेषु जमदग्नौ तथा गते ।
समित्पाणिरुपागच्छदाश्रमं भृगुनन्दनः ॥ २९
स दृष्ट्वा पितरं वीरस्तदा मृत्युवशं गतम् ।
अनर्हं तं तथाभूतं विललाप सुदुःखितः ॥ ३०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

---

## अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

अकृतव्रणेन युधिष्ठिरंप्रति पितृवधामर्षात् त्रिःसप्तकृत्वः पृथिव्या निःक्षत्रियीकरणादिरामचरित्रकथनम् ॥ १ ॥ युधिष्ठिरेण परेद्युश्चतुर्दश्यां संनिहितपरशुरामपूजनादिपूर्वकं महेन्द्रशैलात्पुरः प्रस्थानम् ॥ २ ॥

राम उवाच ।
ममापराधात्तैः क्षुद्रैर्हतस्त्वं तात बालिशैः ।
कार्तवीर्यस्य दायादैर्वने मृग इवेषुभिः ॥ १
धर्मज्ञस्य कथं तात वर्तमानस्य सत्पथे ।
मृत्युरेवंविधो युक्तः सर्वभूतेष्वनागसः ॥ २
किंतु तैर्न कृतं पापं यैर्भवांस्तपसि स्थितः ।
अयुध्यमानो वृद्धः सन्हतः शरशतैः शितैः ॥ ३
किंतु ते तत्र वक्ष्यन्ति सचिवेषु सुहृत्सु च ।
अयुध्यमानं धर्मज्ञमेकं हत्वाऽनपत्रपाः ॥ ४
अकृतव्रण उवाच ।

कालधर्मणा मृत्युना ॥ २५ ॥

सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

लालप्यैवं सकुरुणं बहु नानाविधं नृप ।
प्रेतकार्याणि सर्वाणि पितुश्चक्रे महातपाः ॥ ५
ददाह पितरं चाग्नौ रामः परपुरंजयः ।
प्रतिजज्ञे वधं चापि सर्वक्षत्रस्य भारत ॥ ६
संक्रुद्धोऽतिबलः सङ्ख्ये शस्त्रमादाय वीर्यवान् ।
जघ्निवान्कार्तवीर्यस्य सुतानेकोऽन्तकोपमः ॥ ७
तेषां चानुगता ये च क्षत्रियाः क्षत्रियर्षभ ।
तांश्च सर्वानवामृद्नाद्रामः प्रहरतांवरः ॥ ८
त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः ।
समन्तपञ्चके पञ्च चकार रुधिरह्रदान् ॥ ९
स तेषु तर्पयामास पितॄन्भृगुकुलोद्वहः ।
साक्षाद्ददर्श चर्चीकं स च रामं न्यवारयत् ॥ १०
ततो यज्ञेन महता जामदग्न्यः प्रतापवान् ।
तर्पयामास देवेन्द्रमृत्विग्भ्यः प्रददौ महीम् ११
वेदीं चाप्यददद्धैमीं कश्यपाय महात्मने ।
दशव्यामायतां कृत्वा नवोत्सेधां विशांपते ॥१२
तां कश्यपस्यानुमते ब्राह्मणाः खण्डशस्तदा ।
व्यभजंस्ते तदा राजन्प्रख्याताः खाण्डवायनाः ॥
स प्रदाय महीं तस्मै कश्यपाय महात्मने ।
'तपः सुमहदास्थाय महाबलपराक्रमः ।'
अस्मिन्महेन्द्रे शैलेन्द्रे वसत्यमितविक्रमः ॥ १४
एवं वैरमभूत्तस्य क्षत्रियैर्लोकवासिभिः ।
पृथिवी चापि विजिता रामेणामिततेजसा ॥१५
वैशंपायन उवाच ।
ततश्चतुर्दशीं रामः समयेन महामनाः ।
दर्शयामास तान्विप्रान्धर्मराजं ज सानुजम् ॥१६
स तमानर्च राजेन्द्र भ्रातृभिः सहितः प्रभुः ।
द्विजानां च परां पूजां चक्रे नृपतिसत्तमः ॥ १७
अर्चित्वा जामदग्न्यं स पूजितस्तेन चोदितः ।
महेन्द्र उष्य तां रात्रिं प्रययौ दक्षिणामुखः ॥१८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

## एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

युधिष्ठिरेण यात्राक्रमेण प्रभासतीर्थंप्रति गमनम् ॥ १ ॥ तत्र तद्दिदृक्षया कृष्णबलभद्रादीनामागमनम् ॥ २ ॥

वैशंपायन उवाच ।
गच्छन्स तीर्थानि महानुभावः
पुण्यानि रम्याणि ददर्श राजा ।
सर्वाणि विप्रैरुपशोभितानि
क्वचित्क्वचिद्भारत सागरस्य ॥ १
स वृत्तवांस्तेषु कृताभिषेकः
सहानुजः पार्थिवपुत्रपौत्रः ।
समुद्रगां पुण्यतमां प्रशस्तां
जगाम पारिक्षित पाण्डुपुत्रः ॥ २
तत्रापि चाप्लुत्य महानुभावः
संतर्पयामास पितॄन्सुरांश्च ।
द्विजातिमुख्येषु धनं विसृज्य
गोदावरीं सागरगामगच्छत् ॥ ३
ततो विपाप्मा द्रविडेषु राज-
न्समुद्रमासाद्य च लोकपुण्यम् ।
अगस्त्यतीर्थं च महापवित्रं
नारीतीर्थान्यथ वीरो ददर्श ॥ ४
तत्रार्जुनस्याग्र्यधनुर्धरस्य
निशम्य तत्कर्म परैरशक्यम् ।
संपूज्यमानः परमर्षिसङ्घैः
परां मुदं पाण्डुसुतः स लेभे ॥ ५

दशव्यामायतां व्यामो हस्तचतुष्टयम् । चत्वारिंशद्धस्तायामविस्ताराम् । नवोत्सेधां षट्त्रिंशद्धस्तोच्छ्रायां चेत्यर्थः ॥ १२ ॥ आनर्च अर्चितवान् ॥ १७ ॥ उष्य उषित्वा ॥ १८ ॥ अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

वृत्तवान् सद्वृत्तः । पार्थिवः पृथ्वीपतिः कश्यपस्तस्य पुत्रः सूर्यस्तस्य पौत्रो युधिष्ठिरः तत्पितुर्धर्मस्य सूर्यपुत्रत्वात् । प्रशस्तां नाम नदीम् ॥ २ ॥ नारीतीर्थानि ग्राहरूपाः पञ्चाप्सरसो मुनिशापवशाद्यत्र स्थिता अर्जुनेन च शापान्मोचितास्तानि नारीतीर्थानि ॥ ४ ॥

स तेषु तीर्थेष्वभिषिक्तगात्रः
कृष्णासहायः सहितोऽनुजैश्च ।
संपूजयन्विक्रममर्जुनस्य
रेमे महीपालपतिः पृथिव्याम् ॥ ६

ततः सहस्राणि गवां प्रदाय
तीर्थेषु तेष्वम्बुधरोत्तमस्य ।
हृष्टः सह भ्रातृभिरर्जुनस्य
संकीर्तयामास गवां प्रदानम् ॥ ७

स तानि तीर्थानि च सागरस्य
पुण्यानि चान्यानि बहूनि राजन् ।
क्रमेण गच्छन्परिपूर्णकामः
शूर्पारकं पुण्यतमं ददर्श ॥ ८

तत्रोदधेः कंचिदतीत्य देशं
ख्यातं पृथिव्यां वनमाससाद ।
तप्तं सुरैरत्र तपः पुरस्ता-
दिष्टं तथा पुण्यपरैर्नरेन्द्रैः ॥ ९

स तत्र तामग्र्यधनुर्धरस्य
वेदीं ददर्शायतपीनबाहुः ।
ऋचीकपुत्रस्य तपस्विसङ्घैः
समावृतां पुण्यकृदर्चनीयाम् ॥ १०

ततो वसूनां वसुधाधिपः स
मरुद्गणानां च तथाश्विनोश्च ।
वैवस्वतादित्यधनेश्वराणा-
मिन्द्रस्य विष्णोः सवितुर्विभोश्च ॥ ११

भगस्य चन्द्रस्य दिवाकरस्य
पतेरपां साध्यगणस्य चैव ।
धातुः पितॄणां च तथा महात्मा
रुद्रस्य राजन्सगणस्य चैव ॥ १२

सरस्वत्याः सिद्धगणस्य चैव
पूष्णश्च ये चाप्यमरास्तथाऽन्ये ।
पुण्यानि चाप्यायतनानि तेषां
ददर्श राजा सुमनोहराणि ॥ १३

तेषूपवासान्विबुधानुपोष्य
दत्त्वा च रत्नानि महान्ति राजा ।
तीर्थेषु सर्वेषु परिप्लुताङ्गः
पुनः स शूर्पारकमाजगाम ॥ १४

स तेन तीरेण तु सागरस्य
पुनः प्रयातः सह सोदरीयैः ।
द्विजैः पृथिव्यां प्रथितं महद्भि-
स्तीर्थं प्रभासं समुपाजगाम ॥ १५

तत्राभिषिक्तः पृथुलोहिताक्षः
सहानुजैर्देवगणान्पितॄंश्च ।
संतर्पयामास तथैव कृष्णा
ते चापि विप्राः सह लोमशेन ॥ १६

स द्वादशाहं जलवायुभक्षः
कुर्वन्क्षपाहःसु तदाऽभिषेकम् ।
समन्ततोऽग्नीनुपदीपयित्वा
तेपे तपो धर्मभृतांवरिष्ठः ॥ १७

तमुग्रमास्थाय तपश्चरन्तं
शुश्राव रामश्च जनार्दनश्च ।
तौ सर्ववृष्णिप्रवरौ ससैन्यौ
युधिष्ठिरं जग्मतुराजमीढम् ॥ १८

ते वृष्णयः पाण्डुसुतान्समीक्ष्य
भूमौ शयानान्मलदिग्धगात्रान् ।
अनर्हतीं द्रौपदीं चापि दृष्ट्वा
सुदुःखिताश्चुक्रुशुरार्तनादान् ॥ १९

ततः स रामं च जनार्दनं च
कार्ष्णिं च साम्बं च शिनेश्च पौत्रम् ।
अन्यांश्च वृष्णीनुपगम्य पूजां
चक्रे यथाधर्ममहीनसत्वः ॥ २०

ते चापि सर्वान्प्रतिपूज्य पार्था-
स्तैः सत्कृताः पाण्डुसुतैस्तथैव ।
युधिष्ठिरं संपरिवार्य राज-
न्नुपाविशन्देवगणा यथेन्द्रम् ॥ २१

---

अम्बुधरोत्तमस्य समुद्रस्य ॥ ७ ॥ तेषु तीर्थेषु । उपवासान् समीपवासिनो विबुधान्पण्डितानुपोष्य वस्त्रैरावास्य रत्नानि च तेभ्य एव दत्त्वा ॥ १४ ॥ कार्ष्णिं प्रद्युम्नम् । पौत्रं सात्यकिम् ॥ २० ॥ एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

तेषां स सर्वं चरितं परेषां
वने च वासं परमप्रतीतः ।
अस्त्रार्थमिन्द्रस्य गतं च पार्थं
कृष्णे शशंसामरराजसूनुम् ॥ २२

श्रुत्वा तु ते तस्य वचः प्रतीता-
स्तांश्चापि दृष्ट्वा सुकृशानतीव ।
नेत्रोद्भवं संमुमुचुर्महार्हा
दुःखार्तिजं वारि महानुभावाः ॥ २३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

---

## विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

बलभद्रेण वृष्णिपाण्डवसभायां भीष्मधृतराष्ट्रादिगर्हणपूर्वकं पाण्डवान्प्रति शोचनम् ॥ १ ॥

जनमेजय उवाच ।
प्रभासतीर्थमासाद्य पाण्डवा वृष्णयस्तथा ।
किमकुर्वन्कथाश्चैषां कास्तत्रासंस्तपोधन ॥ १
ते हि सर्वे महात्मानः सर्वशास्त्रविशारदाः ।
वृष्णयः पाण्डवाश्चैव सुहृदश्च परस्परम् ॥ २
वैशंपायन उवाच ।
प्रभासतीर्थं संप्राप्य पुण्यं तीर्थं महोदधेः ।
वृष्णयः पाण्डवान्वीराः परिवार्योपतस्थिरे ॥ ३
ततो गोक्षीरकुन्देन्दुमृणालरजतप्रभः ।
वनमाली हली रामो बभाषे पुष्करेक्षणम् ॥ ४
न कृष्ण धर्मश्चरितो भवाय
जन्तोरधर्मश्च पराभवाय ।
युधिष्ठिरो यत्र जटी महात्मा
वनाश्रयः क्लिश्यति चीरवासाः ॥ ५
दुर्योधनश्चापि महीं प्रशास्ति
न चास्य भूमिर्विवरं ददाति ।
धर्मादधर्मश्चरितो वरीया-
निनतीव मन्येत नरोऽल्पबुद्धिः ॥ ६
दुर्योधने चापि विवर्धमाने
युधिष्ठिरे चासुखमात्तराज्ये ।
'हृतस्वराज्यायतनार्थभार्ये
दुर्योधनेनाल्पधिया च पार्थे ।'
किंन्वत्र कर्तव्यमिति प्रजाभिः
शङ्का मिथः संजनिता नराणाम् ॥ ७
अयं स धर्मप्रभवो नरेन्द्रो
धर्मे धृतः सत्यधृतिः प्रदाता ।
चलेद्धि राज्याच्च सुखाच्च पार्थो
धर्मादपेतस्तु कथं विवर्धेत् ॥ ८
कथं नु भीष्मश्च कृपश्च विप्रो
द्रोणश्च राजा च कुलस्य वृद्धः ।
प्रव्राज्य पार्थान्सुखमाप्नुवन्ति
धिक्पापबुद्धीन्भरतप्रधानान् ॥ ९
किंनाम वक्ष्यत्यवनिप्रधानः
पितॄन्समागम्य परत्र पापः ।
पुत्रेषु सम्यक्चरितं मयेति
पुत्रानपापान्व्यपरोप्य राज्यात् ॥ १०
नासौ धिया संप्रति पश्यति स्म
किंनाम कृत्वाऽहमचक्षुरेवम् ।
जातः पृथिव्यामिति पार्थिवेषु
प्रव्राज्य कौन्तेयमिति स राज्यात् ॥ ११
नूनं समृद्धान्पितृलोकभूमौ
चामीकराभान्क्षितिजान्प्रफुल्लान् ।
विचित्रवीर्यस्य सुतः सपुत्रः
कृत्वा नृशंसं बत पश्यति स्म ॥ १२

---

भवाय अभ्युदयाय ॥५॥ विवरं शरीरगूहनाय न ददातीत्यर्थः ॥ ६ ॥ मिथः शङ्काधर्माधर्मयोः किं बलीय इति शास्त्रानुभवयोर्विरोधात्संशयः ॥ ७ ॥ राज्याच्च सुखाच्च चलेत् नतु धर्मादिति शेषः । तत्र हेतुः धर्मादिति ॥ ८ ॥ अवनिप्रधानो धृतराष्ट्रः ॥ १० ॥ किंनाम पापं कृत्वाऽहमचक्षुर्जातः कौन्तेयं प्रव्राज्य कीदृशो भविष्यामीति धिया नासौ पश्यतीत्यध्याहृत्य योज्यम् ॥ ११ ॥ चामीकराभान् कनकप्रभान् । एतन्मरणचिह्नम् । नृशंसं निन्द्यं कर्म ॥ १२ ॥

व्यूढोत्तरांसान्पृथुलोहिताक्षा-
निमान्स पृच्छन्स शृणोति नूनम् ।
आस्थापयद्यत्स वनं सशङ्को
युधिष्ठिरं सानुजमात्तशस्त्रम् ॥ १३

योऽयं परेषां पृतनां समृद्धां
निरायुधो दीर्घभुजो निहन्यात् ।
श्रुत्वैव शब्दं हि वृकोदरस्य
मुञ्चन्ति सैन्यानि शकृत्समूत्रम् ॥ १४

स क्षुत्पिपासाध्वकृशस्तरस्वी
समेत्य नानायुधबाणपाणिः ।
वने स्मरन्वासमिमं सुघोरं
शेषं न कुर्यादिति निश्चितं मे ॥ १५

न ह्यस्य वीर्येण बलेन कश्चि-
त्समः पृथिव्यामपि विद्यतेऽन्यः ।
स शीतवातातपकर्शिताङ्गो
न शेषमाजावसुहृत्सु कुर्यात् ॥ १६

प्राच्यां नृपानेकरथेन जित्वा
वृकोदरः सानुचरान्रणेषु ।
स्वस्त्यागमद्योऽतिरथस्तरस्वी
सोयं वने क्लिश्यति चीरवासाः ॥ १७

यः सिन्धुकूले व्यजयन्नृदेवा-
न्समागतान्दाक्षिणात्यान्महीपान् ।
तं पश्यतेमं सहदेवमद्य
तरस्विनं तापसवेषरूपम् ॥ १८

यः पार्थिवानेकरथेन वीरो
दिशं प्रतीचीं प्रतियुद्धशौण्डः ।
जिग्ये रणे तं नकुलं वनेऽस्मि-
न्संपश्यतैनं मलदिग्धगात्रम् ॥ १९

सत्रे समृद्धेऽतिरथस्य राज्ञो
वेदीतलादुत्पतिता सुता या ।
सेयं वने वासमिमं सुदुःखं
कथं सहत्यद्य सती सुखार्हा ॥ २०

त्रिवर्गमुख्यस्य समीरणस्य
देवेश्वरस्याप्यथवाऽश्विनोश्च ।
एषां सुराणां तनयाः कथंनु
वने चरन्त्यस्तसुखाः सुखार्हाः ॥ २१

जिते हि धर्मस्य सुते सभार्ये
सभ्रातृके सानुचरे निरस्ते ।
दुर्योधने चापि विवर्धमाने
कथं न सीदत्यवनिः सशैला ॥ २२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

---

## एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

सात्यकिना पाण्डवानपेक्षणेन स्वैरेव धार्तराष्ट्रादिहननपूर्वकं पाण्डवानामावनवाससमापनमभिमन्यो राज्येऽभिषेचनोक्तिः ॥ १ ॥ कृष्णेन सात्यकिंप्रति पाण्डवानां परबाहुबलैकानुपजीवित्वादिगुणकथनपूर्वकं तन्निषेधनम् ॥ २ ॥

सात्यकिरुवाच ।

न राम कालः परिदेवनाय
यदुत्तरं त्वत्र तदेव सर्वे ।
समाचरामो ह्यनतीतकालं
युधिष्ठिरो यद्यपि नाह किंचित् ॥ १

ये नाथवन्तोऽद्य भवन्ति लोके
ते नात्मना कर्म समारभन्ते ।
तेषां तु कार्येषु भवन्ति नाथाः
शैब्यादयो राम यथा ययातेः ॥ २

येषां तथा राम समारभन्ते
कार्याणि नाथाः स्वमतेन लोके ।
ते नाथवन्तः पुरुषप्रवीरा
नानाथवत्कृच्छ्रमवाप्नुवन्ति ॥ ३

---

शेषं न कुर्यात् निःशेषमेव नाशयेदित्यर्थः ॥ १५ ॥ स्वस्ति क्षेमेण आगमत् आगतः ॥ १७ ॥ यो दन्तकूटे व्यजयत्समेतानिति ध. पाठः ॥ १८ ॥ राज्ञः द्रुपदस्य ॥ २० ॥ त्रिवर्गमुख्यस्य धर्मस्य ॥ २१ ॥ विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

शैब्यादय इति स्वार्थे ष्यञ् ॥ २ ॥

कस्मादिमौ रामजनार्दनौ च
प्रद्युम्नसाम्बौ च मया समेतौ ।
वसन्त्यरण्ये सह सोदरीयै-
स्त्रैलोक्यनाथानभिगम्य पार्थाः ॥ ४
निर्यातु साध्वद्य दशार्हसेना
प्रभूतनानायुधचित्रवर्मा ।
यमक्षयं गच्छतु धार्तराष्ट्रः
सबान्धवो वृष्णिबलाभिभूतः ॥ ५
त्वं ह्येव कोपात्पृथिवीमपीमां
संवेष्टयेस्तिष्ठतु शार्ङ्गधन्वा ।
स धार्तराष्ट्रं जहि सानुबन्धं
वृत्रं यथा देवपतिर्महेन्द्रः ॥ ६
भ्राता च मे यः स सखा गुरुश्च
जनार्दनस्यात्मसमश्च पार्थः ।
तदर्थमेको हि य उद्यमन्वै
करोति कर्णोऽस्त्रमवारणीयम् ॥ ७
[यदर्थमैच्छन्मनुजाः सुपुत्रं
शिष्यं गुरुं चाप्रतिकूलवादम् ।
यदर्थमभ्युद्यतमुत्तमं त-
त्करोति कर्माग्र्यमपारणीयम् ॥] ८
तस्यास्त्रवर्षाण्यहमुत्तमास्त्रै-
र्विहत्य सर्वाणि रणेऽभिभूय ।
कायाच्छिरः सर्पविषाग्निकल्पैः
शरोत्तमैरुन्मथितास्मि राम ॥ ९
खड्गेन चाहं निशितेन सङ्ख्ये
कायाच्छिरस्तस्य बलात्प्रमथ्य ।
ततोऽस्य सर्वाननुगान्हनिष्ये
दुर्योधनं चापि कुरूंश्च सर्वान् ॥ १०
आत्तायुधं मामिह रौहिणेय
पश्यन्तु भौमा युधि जातहर्षाः ।
निघ्नन्तमेकं कुरुयोधमुख्या-
नग्निं महाकक्षमिवान्तकाले ॥ ११

प्रद्युम्नमुक्तान्निशितान्न शक्ताः
सोढुं कृपद्रोणविकर्णकर्णाः ।
जानासि वीर्यं च तवात्मजस्य
कार्ष्णिर्भवत्येव यथा रणस्थः ॥ १२
साम्बः ससूतं सरथं भुजाभ्यां
दुःशासनं शास्तु बलात्प्रमथ्य ।
न विद्यते जाम्बवतीसुतस्य
रणेऽविषह्यं हि रणोत्कटस्य ॥ १३
एतेन बालेन हि शम्बरस्य
दैत्यस्य सैन्यं सहसा प्रणुन्नम् ।
'हतः स पापो युधि केवलेन
युद्धेऽद्वितीयो हरितुल्यवीर्यः ॥' १४
वृत्तोरुरत्यायतपीनबाहु-
रेतेन सङ्ख्ये निहतोऽश्वचक्रः ।
को नाम साम्बस्य महारथस्य
रणे समक्षं रथमभ्युदीयात् ॥ १५
यथा प्रविश्यान्तरमन्तकस्य
काले मनुष्यो न विनिष्क्रमेत ।
तथा प्रविश्यान्तरमस्य सङ्ख्ये
को नाम जीवन्पुनराव्रजेच्च ॥ १६
द्रोणं च भीष्मं च महारथौ तौ
सुतैर्वृतं चाप्यथ सोमदत्तम् ।
सर्वाणि सैन्यानि च वासुदेवः
प्रधक्ष्यते सायकवह्निजालैः ॥ १७
किंनाम लोकेषु विषह्यमस्ति
कृष्णस्य सर्वेषु सदेवकेषु ।
आत्तायुधस्योत्तमबाणपाणे-
श्चक्रायुधस्याप्रतिमस्य युद्धे ॥ १८
ततो निरुद्धोऽप्यसिचर्मपाणि-
र्महीमिमां धार्तराष्ट्रैर्विसंज्ञैः ।
हृतोत्तमाङ्गैर्निहतैः करोतु
कीर्णाङ्कुशैर्वेदिमिवाध्वरेषु ॥ १९

स पार्थोऽपि तिष्ठत्विति पूर्वेणान्वयः ॥ ७ ॥ यदर्थं शत्रुवधार्थम्। तत् सुपुत्रादिकम् । अस्माकमस्तीति शेषः ॥ ८ ॥ भौमा भीम-कर्मकर्तारो भीमवंशजा वा ॥ ११ ॥ एतेन प्रद्युम्नेन ॥ १४ ॥

गदोल्मुकौ बाहुकभानुनीथाः
शूरश्च सङ्ख्ये निशठः कुमारः ।
रणोत्कटौ सारणचारुदेष्णौ
कुलोचितं विप्रथयन्तु कर्म ॥ २०

सवृष्णिभोजान्धकयोधमुख्या
समागता सात्वतशूरसेना ।
हत्वा रणे तान्धृतराष्ट्रपुत्रा-
न्लोके यशः स्फीतमुपाकरोतु ॥ २१

ततोऽभिमन्युः पृथिवीं प्रशास्तु
यावद्व्रतं धर्मभृतांवरिष्ठः ।
युधिष्ठिरः पारयते महात्मा
द्यूते यथोक्तं कुरुसत्तमेन ॥ २२

अस्मत्प्रमुक्तैर्विशिखैर्जितारि-
स्ततो महीं भोक्ष्यति धर्मराजः ।
निर्धार्तराष्ट्रां हतसूतपुत्रा-
मेतद्धि नः कृत्यतमं यशस्यम् ॥ २३

वासुदेव उवाच ।
असंशयं माधव सत्यमेत-
द्गृह्णीम ते वाक्यमदीनसत्व ।
स्वाभ्यां भुजाभ्यामजितां तु भूमिं
नेच्छेत्कुरूणामृषभः कथंचित् ॥ २४

न ह्येष कामान्न भयान्न लोभा-
द्युधिष्ठिरो जातु जह्यात्स्वधर्मम् ।
भीमार्जुनौ चातिरथौ यमौ च
तथैव कृष्णा द्रुपदात्मजेयम् ॥ २५

उभौ हि युद्धेऽप्रतिमौ पृथिव्यां
वृकोदरश्चैव धनंजयश्च ।
कस्मान्न कृत्स्नां पृथिवीं प्रशासे-
न्माद्रीसुताभ्यां च पुरस्कृतोऽयम् ॥ २६

यदा तु पाञ्चालपतिर्महात्मा
सकेकयश्चेदिपतिर्वयं च ।
युध्येम विक्रम्य रणे समेता-
स्तदैव सर्वे रिपवो हि न स्युः ॥ २७

युधिष्ठिर उवाच ।
नेदं चित्रं माधव यद्ब्रवीषि
सत्यं तु मे रक्ष्यतमं न राज्यम् ।
कृष्णस्तु मां वेद यथावदेकः
कृष्णं च वेदाहमथो यथावत् ॥ २८

यदैव कालं पुरुषप्रवीरो
वेत्स्यत्ययं माधव विक्रमस्य ।
तदा रणे त्वं च शिनिप्रवीर
सुयोधनं जेष्यसि केशवश्च ॥ २९

प्रतिप्रयान्त्वद्य दशार्हवीरा
दृष्टोसि नाथैर्नरलोकनाथैः ।
धर्मेऽप्रमादं कुरुताप्रमेया
द्रष्टाऽसि भूयः सुखिनः समेतान् ॥ ३०

वैशंपायन उवाच ।
तेऽन्योन्यमामन्त्र्य तथाऽभिवाद्य
वृद्धान्परिष्वज्य शिशूंश्च सर्वान् ।
यदुप्रवीराः स्वगृहाणि जग्मु-
स्ते चापि तीर्थान्यनुसंविचेरुः ॥ ३१

विसृज्य वृष्णीननु धर्मराजो
विदर्भराजोपचितां सुतीर्थाम् ।
जगाम पुण्यां सरितं पयोष्णीं
सभ्रातृभृत्यः सह लोमशेन ॥ ३२

सुतेन सोमेन विमिश्रतोयां
पयः पयोष्णीं प्रति सोऽध्युवास ।
द्विजातिमुख्यैर्मुदितैर्महात्मा
संस्तूयमानः स्तुतिभिर्वराभिः ॥ ३३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

---

सुतेन अभिषुतेन । यज्ञे सोमपानतुल्यं तज्जलपानमित्यर्थः । पयोष्णीं प्रति पयोष्ण्यां पयोमात्रमध्युवास भक्षितवान् ॥ ३३ ॥

एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

## द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

लोमशेन युधिष्ठिरंप्रति पयोष्णीतटे गयकृतयागवर्णनम् ॥ १ ॥ तथा च्यवनेन शर्यातियाजनादिकथनम् ॥ २ ॥ युधिष्ठिरेण लोमशंप्रति सविस्तरं च्यवनचरित्रकीर्तनप्रार्थना ॥ ३ ॥

लोमश उवाच ।
गयेन यजमानेन सोमेनेह पुरंदरः ।
तर्पितः श्रूयते राजन्स तृप्तो मुदमभ्यगात् ॥ १
इह देवैः सहेन्द्रैश्च प्रजापतिभिरेव च ।
इष्टं बहुविधैर्यज्ञैर्महद्भिर्भूरिदक्षिणैः ॥ २
आधूर्तरजसश्चेह राजा वज्रधरं प्रभुः ।
तर्पयामास सोमेन हयमेधेषु सप्तसु ॥ ३
तस्य सप्तसु यज्ञेषु सर्वमासीद्धिरण्मयम् ।
वानप्रस्थं च भौमं च यद्द्रव्यं नियतं मखे ॥ ४
चषालयूपचमसाः स्थाल्यः पात्र्यः स्रुचः स्रुवाः ।
तेष्वेव चास्य यज्ञेषु प्रयोगाः सप्त विश्रुताः ॥ ५
सप्तैकैकस्य यूपस्य चषालाश्चोपरिस्थिताः ।
तस्य स यूपान्यज्ञेषु भ्राजमानान्हिरण्मयान् ।
स्वयमुत्थापयामासुर्देवाः सेन्द्रा युधिष्ठिर ॥ ६
तेषु तस्य मखाग्र्येषु गयस्य पृथिवीपतेः ।
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ॥ ७
प्रसङ्ख्यानानसङ्ख्येयान्प्रत्यगृह्णन्द्विजातयः ॥ ८
सिकता वा यथा लोके यथा वा दिवि तारकाः ।
यथा वा वर्षतो धारा असङ्ख्येयाः स केनचित् ९
तथैव तदसङ्ख्येयं धनं यत्प्रददौ गयः ।
सदस्येभ्यो महाराज तेषु यज्ञेषु सप्तसु ॥ १०
भवेत्सङ्ख्येयमेतद्धि यदेतत्परिकीर्तितम् ।
न तस्य शक्याः सङ्ख्यातुं दक्षिणा दक्षिणावतः ११
हिरण्मयीभिर्गोभिश्च कृताभिर्विश्वकर्मणा ।
ब्राह्मणांस्तर्पयामास नानादिग्भ्यः समागतान् ॥
अल्पावशेषा पृथिवी चैत्यैरासीत्समाचिता ।
गयस्य यजमानस्य तत्रतत्र विशांपते ॥ १३

स लोकान्प्राप्तवानैन्द्रान्कर्मणा तेन भारत ।
सलोकतां तस्य गच्छेत्पयोष्ण्यां य उपस्पृशेत् १४
तस्मात्त्वमत्र राजेन्द्र भ्रातृभिः सहितोच्युत ।
उपस्पृश्य महीपाल धूतपाप्मा भविष्यसि ॥ १५
वैशंपायन उवाच ।
स पयोष्ण्यां नरश्रेष्ठः स्नात्वा वै भ्रातृभिः सह ।
वैदूर्यपर्वतं चैव नर्मदां च महानदीम् ॥ १६
'उद्दिश्य पाण्डवश्रेष्ठः स प्रतस्थे महीपतिः ।'
समागमत तेजस्वी भ्रातृभिः सहितो नघ ॥ १७
तत्रास्य सर्वाण्याचख्यौ लोमशो भगवानृषिः ।
तीर्थानि रमणीयानि पुण्यान्यायतनानि च ॥ १८
यथायोगं यथाप्रीति प्रययौ भ्रातृभिः सह ।
तत्रतत्राददद्वित्तं ब्राह्मणेभ्यः सहस्रशः ॥ १९
लोमश उवाच ।
देवानामेति कौन्तेय तथा राज्ञां सलोकताम् ।
वैदूर्यपर्वतं दृष्ट्वा नर्मदामवतीर्य च ॥ २०
सन्धिरेष नरश्रेष्ठ त्रेताया द्वापरस्य च ।
एनमासाद्य कौन्तेय सर्वपापैः प्रमुच्यते ॥ २१
एष शर्यातियज्ञस्य देशस्तात प्रकाशते ।
साक्षाद्यत्रापिबत्सोममश्विभ्यां सह वासवः ॥ २२
चुकोप भार्गवश्चापि महेन्द्रस्य महातपाः ।
संस्तम्भयामास च तं वासवं च्यवनः प्रभुः ॥ २३
सुकन्यां चापि भार्यां स राजपुत्रीमवाप्तवान् ।
'नासत्यौ च महाभाग कृतवान्सोमपीथिनौ' २४
युधिष्ठिर उवाच ।
कथं विष्टम्भितस्तेन भगवान्पाकशासनः ।
किमर्थं भार्गवश्चापि कोपं चक्रे महातपाः ॥ २५

---

आधूर्तरजसो गयनामा ॥ ३ ॥ वानस्पत्यं वृक्षजं चषालादि । भौमं मृन्मयं स्थाल्यादि ॥ ४ ॥ चषालो यूपकटकः । यूपः यज्ञस्तम्भः । चमसाः सोमपानपात्राणि । पात्र्यः हविःस्थापनार्थानि मृन्मयानि । स्रुचः हविःप्रदानार्थाः । स्रुवाः हविरवदानार्थाः ॥ ५ ॥ प्रसङ्ख्यानान् एकयत्नेन भूयःस्वर्णमुद्रादेर्मापकान् खारीद्रोणादीन् ॥ ८ ॥

नासत्यौ च कथं ब्रह्मन्कृतवान्सोमपीथिनौ । एतत्सर्वं यथावृत्तमाख्यातु भगवान्मम ॥ २६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

## त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

लोमशेन युधिष्ठिरंप्रति सुकन्योपाख्यानकथनारम्भः ॥ १ ॥ कदाचन शर्यातनिना नृपेण सैन्यादिभिःसह च्यवनाश्रमाभिगमनम् ॥ २ ॥ तत्र शर्यातिकन्यया सुकन्यया चिरतरतपश्चर्यानिरतस्य च्यवनस्य शरीरं पर्यावृत्य विवर्धमानमहावल्मीकावलोकनम् ॥ ३ ॥ तया कुतूहलाद्वल्मीकोपरि दृश्यमानच्यवननयनयुगलस्याज्ञानात्कण्टकेन विभेदनम् ॥ ४ ॥ ततः क्रुद्धस्य च्यवनस्य प्रसादनाय शर्यातिना भार्यात्वाय तस्मै सुकन्यायाः प्रदानम् ॥ ५ ॥

लोमश उवाच ।

भृगोर्महर्षेः पुत्रोऽभूच्च्यवनो नाम भारत ।
समीपे सरसस्तस्य तपस्तेपे महाद्युतिः । १
स्थाणुभूतो महातेजा वीरस्थानेन पाण्डव ।
अतिष्ठत चिरं कालमेकदेशे विशांपते ॥ २
सवल्मीकोऽभवदृषिर्लताभिरिव संवृतः ।
कालेन महता राजन्समाकीर्णः पिपीलिकैः ॥ ३
तथा स संवृतो धीमान्मृत्पिण्ड इव सर्वशः ।
तप्यते स्म तपो घोरं वल्मीकेन समावृतः ॥ ४
अथ दीर्घस्य कालस्य शर्यातिर्नाम पार्थिवः ।
आजगाम सरो रम्यं विहर्तुमिदमुत्तमम् ॥ ५
तस्य स्त्रीणां सहस्राणि चत्वार्यासन्परिग्रहः ।
एकैव च सुता सुभ्रूः सुकन्या नाम भारत ॥ ६
सा सखीभिः परिवृता दिव्याभरणभूषिता ।
चङ्क्रम्यमाणा वल्मीकं भार्गवस्य समासदत् ॥ ७
सा वै वसुमतीं तत्र पश्यन्ती सुमनोरमाम् ।
वनस्पतीन्प्रचिन्वन्ती विजहार सखीवृता ॥ ८
रूपेण वयसा चैव मदनेन मदेन च ।
बभञ्ज वनवृक्षाणां शाखाः परमपुष्पिताः ॥ ९
तां सखीरहितामेकामेकवस्त्रामलंकृताम् ।
ददर्श भार्गवो धीमांश्चरन्तीमिव विद्युतम् ॥ १०
तां पश्यमानो विजने स रेमे परमद्युतिः ।
क्षामकण्ठश्च विप्रर्षिस्तपोबलसमन्वितः ।
तामाबभाषे कल्याणीं सा चास्य न शृणोति वै ११
ततः सुकन्या वल्मीके दृष्ट्वा भार्गवचक्षुषी ।
कौतूहलात्कण्टकेन बुद्धिमोहबलात्कृता ।
किंनु खल्विदमित्युक्त्वा निर्बिभेदास्य लोचने ॥
अक्रुद्ध्यत्स तथा विद्धे नेत्रे परममन्युमान् ।
ततः शर्यातिसैन्यस्य शकृन्मूत्रे समावृणोत् ॥१३
ततो रुद्धे शकृन्मूत्रे सैन्यमासीत्सुदुःखितम् ।
तथागतमभिप्रेक्ष्य पर्यपृच्छत्स पार्थिवः ॥ १४
तपोनित्यस्य वृद्धस्य रोषणस्य विशेषतः ।
केनापकृतमद्येह भार्गवस्य महात्मनः ।
ज्ञातं वा यदि वाऽज्ञातं तद्रुतं ब्रूत माचिरम् १५
तमूचुः सैनिकाः सर्वे न विद्मोऽपकृतं वयम् ।
सर्वोपायैर्यथाकामं भवांस्तदधिगच्छतु ॥ १६
ततः स पृथिवीपालः साम्ना चोग्रेण च स्वयम् ।
पर्यपृच्छत्सुहृद्वर्गं पर्यजानन्न चैव ते ॥ १७
आनाहार्तं ततो दृष्ट्वा तत्सैन्यमसुखार्दितम् ।
पितरं दुःखितं दृष्ट्वा सुकन्येदमथाब्रवीत् ॥ १८
मयाऽटन्त्येह वल्मीके दृष्टं सत्वमभिज्वलत् ।
खद्योतवदभिज्ञातं तन्मया विद्धमन्तिकात् ॥१९
एतच्छ्रुत्वा तु वल्मीकं शर्यातिस्तूर्णमभ्ययात् ।
तत्रापश्यत्तपोवृद्धं चन्द्रादित्यसमप्रभम् ॥ २०
अयाचदथ सैन्यार्थं प्राञ्जलिः पृथिवीपतिः ।
अज्ञानाद्बालया यत्ते कृतं तत्क्षन्तुमर्हसि ॥ २१

---

सोमस्य पीथः पानं तद्वन्तौ सोमपीथिनौ ॥ २६ ॥ द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

वीरस्थानेन वीरासनेन ॥ २ ॥ क्षामकण्ठः क्षीणध्वनिः अतएव सा तद्वचनं न शृणोति ॥ ११ ॥ वयोवृद्धं च भार्गवम् इति झ. ध. पाठः ॥ २० ॥ त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

ततोऽब्रवीन्महीपालं च्यवनो भार्गवस्तदा ।
अपमानादहं विद्धो ह्यनया दर्पपूर्णया ॥ २२
रूपौदार्यसमायुक्तां लोभमोहबलात्कृताम् ।
तामेव प्रतिगृह्याहं राजन्दुहितरं तव ।
क्षंस्यामीति महीपाल सत्यमेतद्ब्रवीमि ते ॥ २३
लोमश उवाच ।
ऋषेर्वचनमाज्ञाय शर्यातिरविचारयन् ।
ददौ दुहितरं तस्मै च्यवनाय महात्मने ॥ २४
प्रतिगृह्य च तां कन्यां भगवान्प्रससाद ह ।
प्राप्तप्रसादो राजा वै ससैन्यः पुरमाव्रजत् ॥ २५
सुकन्याऽपि पतिं लब्ध्वा तपस्विनमनिन्दिता ।
नित्यं पर्यचरत्प्रीत्या तपसा नियमेन च ॥ २६
अग्नीनामतिथीनां च शुश्रूषुरनसूयिका ।
समाराधयत क्षिप्रं च्यवनं सा शुभानना ॥ २७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

## चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

कदाचन च्यवनाश्रममुपागताभ्यामश्विभ्यां भार्यात्वाय सुकन्यांप्रति प्रार्थनम् ॥ १ ॥ तदकामयमानां तां प्रत्यश्विभ्यां स्वप्रसादाच्च्यवने रूपयौवनसंपन्ने सति तुल्यरूपेषु त्रिषु कस्यचिद्वरणचोदना ॥ २ ॥ भर्त्राज्ञया तया तदङ्गीकारे च्यवनेन सहाश्विभ्यां सरसोऽन्तर्जले निमज्जनम् ॥ ३ ॥ सुकन्यया निमज्ज्योत्थितेषु सरूपेषु त्रिषु तेषु स्वपातिव्रत्यमहिम्ना च्यवनस्यैव वरणम् ॥ ४ ॥ ततस्तुष्टेन च्यवनेनाश्विनोः सोमरसदापनप्रतिज्ञानम् ॥ ५ ॥

लोमश उवाच ।
कस्य चित्त्वथ कालस्य त्रिदशावश्विनौ नृप ।
कृताभिषेकां विवृतां सुकन्यां तामपश्यताम् ॥ १
तां दृष्ट्वा दर्शनीयाङ्गीं देवराजसुतामिव ।
ऊचतुः समभिद्रुत्य नासत्यावश्विनाविदम् ॥ २
कस्य त्वमसि वामोरु वनेऽस्मिन्किं करोषि च ।
इच्छाव भद्रे ज्ञातुं त्वां तत्वमाख्याहि शोभने ३
ततः सुकन्या संवीता तावुवाच सुरोत्तमौ ।
शर्यातितनयां वित्तं भार्यां मां च्यवनस्य च ॥४
'नाम्ना चाहं सुकन्येति नृलोकेऽस्मिन्प्रतिष्ठिता ।
साऽहं सर्वात्मना नित्यं भर्तारमनुवर्तिनी ॥' ५
अथाश्विनौ प्रहस्यैतामब्रूतां पुनरेव तु ।
कथं त्वमसि कल्याणि पित्रा दत्ताऽऽगता वने ६
भ्राजसेऽस्मिन्वने भीरु विद्युत्सौदामनी यथा ।
न देवेष्वपि तुल्यां हि त्वया पश्याव भामिनि ७
अनाभरणसंपन्ना परमाम्बरवर्जिता ।
शोभयस्यधिकं भद्रे वनमप्यनलंकृता ॥ ८
सर्वाभरणसंपन्ना परमाम्बरधारिणी ।
शोभेथास्त्वनवद्याङ्गि न त्वेवं मलपङ्किनी ॥ ९
कस्मादेवंविधा भूत्वा जराजर्जरितं पतिम् ।
त्वमुपास्से ह कल्याणि कामभोगबहिष्कृतम् १०
असमर्थं परित्राणे पोषणे तु शुचिस्मिते ।
सा त्वं च्यवनमुत्सृज्य वरयस्वैकमावयोः ॥ ११
पत्यर्थं देवगर्भाभे मा वृथा यौवनं कृथाः ।
एवमुक्ता सुकन्याऽपि सुरौताविदमब्रवीत् ॥१२
रताऽहं च्यवने पत्यौ मैवं मां पर्यशङ्कतम् ।
तावब्रूतां पुनस्त्वेनामावां देवभिषग्वरौ ॥ १३
युवानं रूपसंपन्नं करिष्यावः पतिं तव ।
ततस्तस्यावयोश्चैव वृणीष्वान्यतमं पतिम् ।
एतेन समयेनैनमामन्त्रय पतिं शुभे ॥ १४
सा तयोर्वचनाद्राजन्नुपसंगम्य भार्गवम् ।
उवाच वाक्यं यत्ताभ्यामुक्तं भृगुसुतं प्रति ॥ १५
तच्छ्रुत्वा च्यवनो भार्यामुवाच क्रियतामिति ।
'सा भर्त्रा समनुज्ञाता क्रियतामित्यथाब्रवीत् १६
श्रुत्वा तदश्विनौ वाक्यं तस्यास्तत्क्रियतामिति ।'
ऊचतू राजपुत्रीं तां पतिस्तव विशत्वपः ॥ १७
ततोऽम्भश्च्यवनः शीघ्रं रूपार्थी प्रविवेश ह ।
अश्विनावपि तद्राजन्सरः प्राविशतां तदा ॥ १८

विवृतामनाच्छादिताम् ॥ १ ॥ ततः सुकन्या सव्रीडेति झ. पाठः ॥ ४ ॥ चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

ततो मुहूर्तादुत्तीर्णाः सर्वे ते सरसस्त्रयः ।
दिव्यरूपधराः सर्वे युवानो मृष्टकुण्डलाः ।
तुल्यवेषधराश्चैव मनसः प्रीतिवर्धनाः ॥ १९
तेऽब्रुवन्सहिताः सर्वे वृणीष्वान्यतमं शुभे ।
अस्माकमीप्सितं भद्रे पतित्वे वरवर्णिनि ॥ २०
'त्वमश्विनोरन्यतरं च्यवनं वा यशस्विनि ।'
यत्र वाऽप्यभिकामाऽसि तं वृणीष्व सुशोभने ॥
सा समीक्ष्य तु तान्सर्वांस्तुल्यरूपधरान्स्थितान् ।
निश्चित्य मनसा बुद्ध्या देवी वव्रे स्वकं पतिम् ॥
लब्ध्वा तु च्यवनो भार्यां वयो रूपं च वाञ्छितम् ।
हृष्टोऽब्रवीन्महातेजास्तौ नासत्याविदं वचः ॥२३
यथाऽहं रूपसंपन्नो वयसा च समन्वितः ।
कृतो भवद्भ्यां वृद्धः सन्भार्यां च प्राप्तवानिमाम् ॥
तस्माद्युवां करिष्यामि प्रीत्याऽहं सोमपीथिनौ ।
मिषतो देवराजस्य सत्यमेतद्ब्रवीमि वाम् ॥ २५
तच्छ्रुत्वा हृष्टमनसौ दिवं तौ प्रतिजग्मतुः ।
च्यवनश्च सुकन्या च सुराविव विजह्रतुः ॥ २६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

---

## पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

च्यवनस्य यौवनलाभश्रवणहृष्टेन शर्यातिना तदाश्रमाभिगमनम् ॥ १ ॥ च्यवनेन शर्यातेर्याजनम् ॥ २ ॥ तत्र च्यवनेनाश्विभ्यां स्वप्रतिश्रुतसोमरसदानोद्यमे इन्द्रेण तस्य हननाय बाहुना वज्रोद्यमनम् ॥ ३ ॥ तद्बाहुसंस्तम्भनपूर्वकं च्यवनसृष्टया कृत्यया शक्रंप्रत्यभिसरणम् ॥ ४ ॥

लोमश उवाच ।
ततः श्रुत्वा तु शर्यातिर्वयस्थं च्यवनं कृतम् ।
सुहृष्टः सेनया सार्धमुपायाद्भार्गवाश्रमम् ॥ १
च्यवनं च सुकन्यां च दृष्ट्वा देवसुताविव ।
रेमे सभार्यः शर्यातिः कृत्स्नां प्राप्य महीमिव २
ऋषिणा सत्कृतस्तेन सभार्यः पृथिवीपतिः ।
उपोपविष्टः कल्याणीः कथाश्चक्रे मनोरमाः ॥ ३
अथैनं भार्गवो राजन्नुवाच परिसान्त्वयन् ।
याजयिष्यामि राजंस्त्वां संभारानुपकल्पय ॥ ४
ततः परमसंहृष्टः शर्यातिरवनीपतिः ।
च्यवनस्य महाराज तद्वाक्यं प्रत्यपूजयत् ॥ ५
प्रशस्तेऽहनि यज्ञीये सर्वकामसमृद्धिमत् ।
कारयामास शर्यातिर्यज्ञायतनमुत्तमम् ॥ ६
तत्रैनं च्यवनो राजन्याजयामास भार्गवः ।
अद्भुतानि च तत्रासन्यानि तानि निबोध मे ॥७
अगृह्णाच्च्यवनः सोममश्विनोर्देवयोस्तदा ।
तमिन्द्रो वारयामास गृह्णानं स तयोर्ग्रहम् ॥ ८
इन्द्र उवाच ।
उभावेतौ न सोमार्हौ नासत्याविति मे मतिः ।
भिषजौ दिवि देवानां कर्मणा तेन नार्हतः ॥ ९
च्यवन उवाच ।
मावमंस्था महात्मानौ रूपद्रविणवत्तरौ ।
यौ चक्रतुर्मां मघवन्वृन्दारकमिवाजरम् ॥ १०
ऋते त्वां विबुधांश्चान्यान्कथं वै नार्हतः सवम् ।
अश्विनावपि देवेन्द्र देवौ विद्धि पुरंदर ॥ ११
इन्द्र उवाच ।
चिकित्सकौ कर्मकरौ कामरूपसमन्वितौ ।
लोके चरन्तौ मर्त्यानां कथं सोममिहार्हतः॥ १२
लोमश उवाच ।
एतदेव तदा वाक्यमाम्रेडयति वासवे ।
अनादृत्य ततः शक्रं ग्रहं जग्राह भार्गवः ॥ १३
ग्रहीष्यन्तं तु तं सोममश्विनोरुत्तमं तदा ।
समीक्ष्य बलभिद्देव इदं वचनमब्रवीत् ॥ १४
आभ्यामर्थाय सोमं त्वं ग्रहीष्यसि यदि स्वयम् ।

---

वयस्थं युवानम् ॥ १ ॥ संभारान् यज्ञोपकरणानि ॥ ४ ॥ ग्रहं सोमस्य । गृह्णानं तयोरर्थे ॥ ८ ॥ सवं सोमम् ॥ ११ ॥
भैषज्यात्कर्मणो निन्द्याविति क. पाठः ॥ १२ ॥ आम्रेडयति पुनःपुनरावर्तयति ॥१३॥ पञ्चविंशत्यधिकशततमोऽध्यायः१२५

वज्रं ते प्रहरिष्यामि घोररूपमनुत्तमम् ॥ १५
एवमुक्तः स्मयन्निन्द्रमभिवीक्ष्य स भार्गवः ।
जग्राह विधिवत्सोममश्विभ्यामुत्तमं ग्रहम् ॥ १६
ततोऽस्मै प्राहरद्वज्रं घोररूपं शचीपतिः ।
तस्य प्रहरतो बाहुं स्तम्भयामास भार्गवः ॥ १७
तं स्तम्भयित्वा च्यवनो जुहुवे मन्त्रतोऽनलम् ।
कृत्यार्थी सुमहातेजा देवं हिंसितुमुद्यतः ॥ १८
ततः कृत्याऽथ संजज्ञे मुनेस्तस्य तपोबलात् ।
मदो नाम महावीर्यो बृहत्कायो महासुरः ॥ १९
शरीरं यस्य निर्देष्टुमशक्यं तु सुरासुरैः ।
तस्यास्यमभवद्धोरं तीक्ष्णाग्रदशनं महत् ॥ २०
हनुरेका स्थिता त्वस्य भूमावेका दिवं गता ।
चतस्रश्चायता दंष्ट्रा योजनानां शतंशतम् ॥ २१
इतरे तस्य दशना बभूवुर्दशयोजनाः ।
प्रासादशिखराकाराः शूलाग्रसमदर्शनाः ॥ २२
बाहू परिघसंकाशावायतावयुतं समौ ।
नेत्रे रविशशिप्रख्ये वक्त्रं कालाग्निसंनिभम् ॥२३
लेलिहञ्जिह्वया वक्त्रं विद्युच्चपललोलया ।
व्यात्ताननो घोरदृष्टिर्ग्रसन्निव जगद्बलात् ॥ २४
स भक्षयिष्यन्संक्रुद्धः शतक्रतुमुपाद्रवत् ।
महता घोररूपेण लोकाञ्शब्देन नादयत् ॥ २५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

---

## षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

इन्द्राभिष्टुतेन च्यवनेन तस्मिन्स्वप्रयुक्तकृत्यायास्ततो विनिवर्त्य स्त्र्यादिषु विभजनम् ॥ १ ॥ लोमशेन सुकन्योपाख्यानसमापनपूर्वकं युधिष्ठिराय नानातीर्थमहिमानुवर्णनम् ॥ २ ॥

लोमश उवाच ।
तं दृष्ट्वा घोरवदनं मदं देवः शतक्रतुः ।
आयान्तं भक्षयिष्यन्तं व्यात्ताननमिवान्तकम् १
भयात्संस्तम्भितभुजः सृक्किणी लेलिहन्मुहुः ।
ततोऽब्रवीद्देवराजश्च्यवनं भयपीडितः ॥ २
सोमार्हावश्विनावेतावद्य प्रभृति भार्गव ।
भविष्यतः सत्यमेतद्वचो विप्र प्रसीद मे ॥ ३
न ते मिथ्या समारम्भो भवत्वेष परो विधिः ।
जानामि चाहं विप्रर्षे न मिथ्या त्वं करिष्यसि ४
सोमपावश्विनावेतौ यथा वाद्य कृतौ त्वया ।
'तथैव मामपि ब्रह्मञ्श्रेयसा योक्तुमर्हसि ॥' ५
भूय एव तु ते वीर्यं प्रकाशेदिति भार्गव ।
सुकन्यायाः पितुश्चास्य लोके कीर्तिः प्रथेदिति ६
अतो मयैतद्विहितं तव वीर्यप्रकाशनम् ।
तस्मात्प्रसादं कुरु मे भवत्वेवं यथेच्छसि ॥ ७
एवमुक्तस्य शक्रेण च्यवनस्य महात्मनः ।
स मन्युर्व्यगमच्छीघ्रं मुमोच च पुरंदरम् ॥ ८
मदं च व्यभजद्राजन्पाने स्त्रीषु च वीर्यवान् ।
अक्षेषु मृगयायां च पूर्वसृष्टं पुनः पुनः ॥ ९
तदा मदं विनिक्षिप्य शक्रं संतर्प्य चेन्दुना ।
अश्विभ्यां सहितान्देवान्याजयित्वा च तं नृपम् ॥
विख्याप्य वीर्यं लोकेषु सर्वेषु वदतांवरः ।
सुकन्यया सहारण्ये विजहारानुकूलया ॥ ११
तस्यैतद्द्विजसंघुष्टं सरो राजन्प्रकाशते ।
अत्र त्वं सह सोदर्यैः पितॄन्देवांश्च तर्पय ॥ १२
एतद्दृष्ट्वा महीपाल सिकताक्षं च भारत ।
सैन्धवारण्यमासाद्य कुल्यानां कुरु दर्शनम् ॥१३
पुष्करेषु महाराज सर्वेषु च जलं स्पृश ।
स्थाणोर्मन्त्राणि च जपन्सिद्धिं प्राप्स्यसि भारत १४
संधिर्द्वयोर्नरश्रेष्ठ त्रेताया द्वापरस्य च ।
अयं हि दृश्यते पार्थ सर्वपापप्रणाशनः ।
अत्रोपस्पृश चैव त्वं सर्वपापप्रणाशने ॥ १५

---

सृक्किणी गल्लगर्भौ ॥ २ ॥ वचो ब्रह्मन्ब्रवीमि ते इति क. पाठः ॥ ३ ॥ संप्रति कलिद्वापरसंधावपि अत्र तीर्थे त्रेताद्वापरसंधितुल्यः कालोऽस्ति । अत्र स्नातानां कलिस्पर्शो नास्तीति भावः ॥ १५ ॥

आर्चीकपर्वतश्चैव निवासो वै मनीषिणाम् ।
सदाफलः सदास्रोतो मरुतां स्थानमुत्तमम् ॥ १६
चैत्याश्चैते बहुविधास्त्रिदशानां युधिष्ठिर ।
एतच्चन्द्रमसस्तीर्थमृषयः पर्युपासते ।
वैखानसप्रभृतयो वालखिल्यास्तथैव च ॥ १७
शृङ्गाणि त्रीणि पुण्यानि त्रीणि प्रस्रवणानि च ।
सर्वाण्यनुपरिक्रम्य यथाकाममुपस्पृश ॥ १८
शान्तनुश्चात्र राजेन्द्र शुनकश्च नराधिपः ।
नरनारायणौ चोभौ तपस्तप्त्वा चिरं नृप ।
स्थानं सनातनं प्राप्तावीश्वरध्यानतत्परौ ॥ १९
इह नित्याश्रया देवाः पितरश्च महर्षिभिः ।
आर्चीकपर्वते तेपुस्तान्यजस्व युधिष्ठिर ॥ २०
इह ते वै चरूनप्राश्नन्नृषयश्च विशांपते ।
यमुना चाक्षयस्रोताः कृष्णश्चेह तपोरतः ॥ २१
यमौ च भीमसेनश्च कृष्णा चामित्रकर्शन ।
सर्वे चात्र गमिष्यामस्त्वयैव सह पाण्डव ॥ २२
एतत्प्रस्रवणं पुण्यमिन्द्रस्य मनुजेश्वर ।
यत्र धाता विधाता च वरुणश्चोर्ध्वमागताः ॥ २३
इह तेऽप्यवसन्राजञ्शान्ताः परमधर्मिणः ।
मैत्राणामृजुबुद्धीनामयं गिरिवरः शुभः ॥ २४
एषा सा यमुना राजन्महर्षिगणसेविता ।
नानायज्ञचिता राजन्पुण्या पापभयापहा ॥ २५
अत्र राजा महेष्वासो मांधाताऽयजत स्वयम् ।
साहदेविश्च कौन्तेय सोमको ददतांवरः ॥ २६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

## सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

लोमशेन युधिष्ठिरंप्रति मान्धातृपदप्रवृत्तिनिमित्तकथनपूर्वकं मांधातृचरित्रकीर्तनम् ॥ १ ॥

युधिष्ठिर उवाच ।
मान्धाता राजशार्दूलस्त्रिषु लोकेषु विश्रुतः ।
कथं जातो महाब्रह्मन्यौवनाश्वो नृपोत्तमः ॥ १
कथं चैनां परां ख्यातिं प्राप्तवानमितद्युतिः ।
यस्य लोकास्त्रयो वश्या विष्णोरिव महात्मनः ॥ २
एतदिच्छाम्यहं श्रोतुं चरितं तस्य धीमतः ।
'सत्यकीर्तेर्हि मान्धातुः कथ्यमानं त्वयाऽनघ' ३
यथा मान्धातृशब्दश्च तस्य शक्रसमद्युतेः ।
जन्म चाप्रतिवीर्यस्य कुशलो ह्यसि भाषितुम् ॥ ४
लोमश उवाच ।
शृणुष्वावहितो राजन्राज्ञस्तस्य महात्मनः ।
यथा मान्धातृशब्दो वै लोकेषु परिगीयते ॥ ५
इक्ष्वाकुवंशप्रभवो युवनाश्वो महीपतिः ।
सोऽयजत्पृथिवीपालः क्रतुभिर्भूरिदक्षिणैः ॥ ६
अश्वमेधसहस्रं च प्राप्य धर्मभृतांवरः ।
अन्यैश्च क्रतुभिर्मुख्यैरयजत्स्वाप्तदक्षिणैः ॥ ७
अनपत्यस्तु राजर्षिः स महात्मा महाव्रतः ।
मन्त्रिष्वाधाय तद्राज्यं वननित्यो बभूव ह ।
शास्त्रदृष्टेन विधिना संयोज्यात्मानमात्मवान् ॥ ८
स कदाचिन्नृपो राजन्नुपवासेन दुःखितः ।
पिपासाशुष्कहृदयः प्रविवेशाश्रमं भृगोः ॥ ९
तामेव रात्रिं राजेन्द्र महात्मा भृगुनन्दनः ।
इष्टिं चकार सौद्युम्नेर्महर्षिः पुत्रकारणात् ॥ १०
संभृतो मन्त्रपूतेन वारिणा कलशो महान् ।
तत्रातिष्ठत राजेन्द्र पूर्वमेव समाहितः ॥ ११
यत्प्राश्य प्रसवेत्तस्य पत्नी शक्रसमं सुतम् ।
'तद्वारि विहितं राजन्यस्मिन्नासीत्सुसंस्कृतम् ।'
तं न्यस्य वेद्यां कलशं सुषुपुस्ते महर्षयः ॥ १२

सदास्रोतः सदा प्रवाहयुक्तम् ॥ १६ ॥ त्रीणि शृङ्गाणीति त्रिकोणं वाराणसीक्षेत्रम् । त्रीणि प्रस्रवणानीति च प्रयागम् । एतानि सर्वाणि अनुपरिक्रम्य प्रदक्षिणीकृत्य ॥ १८ ॥ तेपुस्तपश्चक्रुः ॥ २० ॥ साहदेविः सृञ्जयपुत्रस्य पुत्रः ॥ २६ ॥

षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

यौवनाश्वो युवनाश्वपुत्रः । यौवनाश्विर्नृपोत्तम इति क. पाठः ॥ १ ॥ आत्मानं चित्तम् । आत्मवान् जितचित्तः । संयोज्येष्टदेवतया ऐक्यं नीत्वा ॥ ८ ॥ सौद्युम्नेः युवनाश्वस्य ॥ १० ॥

रात्रिजागरणाच्छ्रान्तान्सौद्युम्निः समतीत्य तान् ।
शुष्ककण्ठः पिपासार्तः पानीयार्थी भृशं नृपः ।
तं प्रविश्याश्रमं शान्तः पानीयं सोऽभ्ययाचत॥१३
तस्य श्रान्तस्य शुष्केण कण्ठेन क्रोशतस्तदा ।
नाश्रौषीत्कश्चन तदा शकुनेरिव वाशतः ॥ १४
ततस्तं कलशं दृष्ट्वा जलपूर्णं स पार्थिवः ।
अभ्यद्रवत वेगेन पीत्वा चाम्भो व्यवासृजत्॥१५
स पीत्वा शीतलं तोयं पिपासार्तो महीपतिः ।
निर्वाणमगमद्धीमान्सुसुखी चाभवत्तदा ॥ १६
ततस्ते प्रत्यबुध्यन्त मुनयः सतपोधनाः ।
निस्तोयं तं च कलशं ददृशुः सर्व एव ते ॥ १७
कस्य कर्मेदमिति ते पर्यपृच्छन्समागताः ।
युवनाश्वो ममेत्येवं सत्यं समभिपद्यत ॥ १८
न युक्तमिति तं प्राह भगवान्भार्गवस्तदा ।
सुतार्थं स्थापिता ह्यापस्तपसा चैव संभृताः ॥१९
मया ह्यत्राहितं ब्रह्म तप आस्थाय दारुणम् ।
पुत्रार्थं तव राजर्षे महाबलपराक्रम ॥ २०
महाबलो महावीर्यस्तपोबलसमन्वितः ।
यः शक्रमपि वीर्येण गमयेद्यमसादनम् ॥ २१
अनेन विधिना राजन्मयैतदुपपादितम् ।
अब्भक्षणं त्वया राजन्न युक्तं कृतमद्य वै ॥ २२
न त्वद्य शक्यमस्माभिरेतत्कर्तुमतोऽन्यथा ।
नूनं दैवकृतं ह्येतद्यदेवं कृतवानसि ॥ २३
पिपासितेन याः पीता विधिमन्त्रपुरस्कृताः ।
आपस्त्वया महाराज मत्तपोवीर्यसंभृताः ॥ २४
ताभ्यस्त्वमात्मना पुत्रमीदृशं जनयिष्यसि ।
विधास्यामो वयं तत्र तवेष्टिं परमाद्भुताम् ॥ २५
यथा शक्रसमं पुत्रं जनयिष्यसि वीर्यवान् ।
'न च प्राणैर्महाराज वियोगस्ते भविष्यति ॥२६
मा खिदस्त्वं हि राजेन्द्र दैवं हि बलवत्तरम् ।'
गर्भधारणजं वाऽपि न खेदं समवाप्स्यसि ॥२७

ततो वर्षशते पूर्णे तस्य राज्ञो महात्मनः ।
वामं पार्श्वं विनिर्भिद्य सुतः सूर्य इव स्थितः २८
निश्चक्राम महातेजा न च तं मृत्युराविशत् ।
युवनाश्वं नरपतिं तदद्भुतमिवाभवत् ॥ २९
ततः शक्रो महातेजास्तं दिदृक्षुरुपागमत् ।
ततो देवा महेन्द्रं तमपृच्छन्धास्यतीति किम् ॥३०
प्रदेशिनीं ततोऽस्यास्ये शक्रः समभिसंदधे ।
मामयं धास्यतीत्येवं भाषिते चैव वज्रिणा ।
मांधातेति च नामास्य चक्रुः सेन्द्रा दिवौकसः३१
प्रदेशिनीं शक्रदत्तामास्वाद्य स शिशुस्तदा ।
अवर्धत महातेजाः किष्कून्राजंस्त्रयोदश ॥ ३२
वेदास्तं सधनुर्वेदा दिव्यान्यस्त्राणि चेश्वरम् ।
उपतस्थुर्महाराजं ध्यातमात्राणि सर्वशः ॥ ३३
धनुराजगवं नाम शराः शृङ्गोद्भवाश्च ये ।
अभेद्यं कवचं चैव सद्यस्तमुपशिश्रियुः ॥ ३४
सोऽभिषिक्तो भगवता स्वयं शक्रेण भारत ।
धर्मेण व्यजयल्लोकांस्त्रीन्विष्णुरिव विक्रमैः ॥ ३५
तस्याप्रतिहतं चक्रं प्रावर्तत महात्मनः ।
रत्नानि चैव राजर्षिं स्वयमेवोपतस्थिरे ॥ ३६
तस्येयं वसुसंपूर्णा वसुधा वसुधाधिप ।
तेनेष्टं विविधैर्यज्ञैर्बहुभिः स्वाप्तदक्षिणैः ॥ ३७
चितचैत्यो महातेजा धर्मान्प्राप्य च पुष्कलान् ।
शक्रस्यार्धासनं राजँल्लब्धवानमितद्युतिः ॥ ३८
एकाह्ना पृथिवी तेन धर्मनित्येन धीमता ।
विजिता शासनादेव सरत्नाकरपत्तना ॥ ३९
तस्य चैत्यैर्महाराज क्रतूनां दक्षिणावताम् ।
चतुरन्ता मही व्याप्ता नासीत्किंचिदनावृतम् ४०
तेन पद्मसहस्राणि गवां दश महात्मना ।
ब्राह्मणेभ्यो महाराज दत्तानीति प्रचक्षते ॥ ४१
तेन द्वादशवार्षिक्यामनावृष्ट्यां महात्मना ।
वृष्टं सस्यविवृद्ध्यर्थं मिषतो वज्रपाणिनः ॥ ४२

वाशतः शब्दं कुर्वतः ॥ १४ ॥ निर्वाणं तपःफलम् ॥ १६ ॥ इष्टिमिच्छितम् ॥ २५ ॥ किं धास्यति पास्यति स्तन्याभावात् ॥ ३० ॥ मां धास्यति मां धाता । धातेति लुङन्तस्य व्याख्यानं धास्यतीति । प्रदेशिनीं तर्जनीम् ॥ ३१ ॥ किष्कून् हस्तान् वितस्तीन्वा ॥ ३२ ॥ चक्रमाज्ञा ॥ ३६ ॥ चितचैत्यः कृतचयनक्रतुः ॥ ३८ ॥ पद्मं शतकोटयस्तेषामपि सहस्राणि दश ॥ ४१ ॥

तेन सोमकुलोत्पन्नो गान्धाराधिपतिर्महान् ।
गर्जन्निव महामेघः प्रमथ्य निहतः शरैः ॥ ४३
प्रजाश्चतुर्विधास्तेन त्राता राजन्कृतात्मना ।
तेनात्मतपसा लोकास्तापिताश्चातितेजसा ॥ ४४
तस्यैतद्देवयजनं स्थानमादित्यवर्चसः ।
यस्य पुण्यतमे देशे कुरुक्षेत्रस्य मध्यतः ॥ ४५
'तथा त्वमपि राजेन्द्र मान्धातेव महीपतिः ।
धर्मं कृत्वा महीं रक्ष स्वर्गलोकं गमिष्यसि ॥'४६
एतत्ते सर्वमाख्यातं मान्धातुश्चरितं महत् ।
जन्म चाग्र्यं महीपाल यन्मां त्वं परिपृच्छसि ४७
वैशंपायन उवाच ।
एवमुक्तः स कौन्तेयो लोमशेन महर्षिणा ।
पप्रच्छानन्तरं भूयः सोमकं प्रति भारत ॥ ४८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

---

## अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

सोमकनामकेन राज्ञा भार्याशतोद्वाहेपि ज्येष्ठायामेव जन्तुनामकैकापत्यजननम् ॥ १ ॥ पिपीलिकादष्टसुतदुःखदर्शननिर्विण्णेन तेन राज्ञा ऋत्विजंप्रति बहुपुत्रोत्पादनोपायप्रश्नः ॥ २ ॥ ऋत्विजा राजानंप्रति जन्तोः पशूकरणेन होमे तद्वपाघ्राणनेन भार्याशते पुत्रशतजननोक्तिः ॥ ३ ॥

युधिष्ठिर उवाच ।
कथंवीर्यः स राजाऽभूत्सोमको ददतांवरः ।
कर्माण्यस्य प्रभावं च श्रोतुमिच्छामि तत्त्वतः ॥१
लोमश उवाच ।
युधिष्ठिरासीन्नृपतिः सोमको नाम धार्मिकः ।
तस्य भार्याशतं राजन्सदृशीनामभूत्तदा ॥ २
स वै यत्नेन महता तासु पुत्रं महीपतिः ।
कंचिन्नासादयामास कालेन महता ह्यपि ॥ ३
कदाचित्तस्य वृद्धस्य यतमानस्य धीमतः ।
जन्तुर्नाम सुतस्तस्य ज्येष्ठायां समजायत ॥ ४
तं जातं मातरः सर्वाः परिवार्य समासते ।
सततं पृष्ठतः कृत्वा कामभोगान्विशांपते ॥ ५
ततः पिपीलिका जन्तुं कदाचिददशत्स्फिचि ।
स दष्टो ह्यरुदद्राजंस्तेन दुःखेन बालकः ॥ ६
ततस्ता मातरः सर्वाः प्राक्रोशन्भृशदुःखिताः ।
प्रवार्य जन्तुं सहसा स शब्दस्तुमुलोऽभवत् ॥ ७
तमार्तनादं सहसा शुश्राव स महीपतिः ।
अमात्यपर्षदो मध्ये उपविष्टः सहर्त्विजा ॥ ८
ततः प्रस्थापयामास किमेतदिति पार्थिवः ।
तस्मै क्षत्ता यथावृत्तमाचचक्षे सुतं प्रति ॥ ९
त्वरमाणः स चोत्थाय सोमकः सह मन्त्रिभिः ।
प्रविश्यान्तःपुरं पुत्रमाश्वासयदरिंदमः ॥ १०
सान्त्वयित्वा तु तं पुत्रं निष्क्रम्यान्तःपुरान्नृपः ।
ऋत्विजा सहितो राजन्सहामात्य उपाविशत् ११
सोमक उवाच ।
धिगस्त्विहैकपुत्रत्वमपुत्रत्वं वरं भवेत् ।
नित्यातुरत्वाद्भूतानां शोक एवैकपुत्रता ॥ १२
इदं भार्याशतं ब्रह्मन्परीक्ष्य सदृशं प्रभो ।
पुत्रार्थिना मया वोढं न तासां विद्यते प्रजा॥१३
एकः कथंचिदुत्पन्नः पुत्रो जन्तुरयं मम ।
यतमानासु सर्वासु किंनु दुःखमतः परम् ॥ १४
वयश्च समतीतं मे सभार्यस्य द्विजोत्तम ।
आसां प्राणाः समायत्ता मम चात्रैकपुत्रके ॥१५
स्यात्तु कर्म तथा युक्तं येन पुत्रशतं भवेत् ।
महता लघुना वाऽपि कर्मणा दुष्करेण वा ॥ १६
ऋत्विगुवाच ।
अस्ति चैतादृशं कर्म येन पुत्रशतं भवेत् ।
यदि शक्नोषि तत्कर्तुमथ वक्ष्यामि सोमक ॥१७

---

चतुर्विधाः सुरनरतिर्यक्स्थावराः ॥ ४४ ॥ सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

स्फिचि कट्याम् ॥ ६ ॥ अमात्यपर्षदो मध्ये मन्त्रिसभान्तः ॥ ८ ॥ क्षत्ता दौवारिकः ॥ ९ ॥

सोमक उवाच ।
कार्यं वा यदि वाऽकार्यं येन पुत्रशतं भवेत् ।
कृतमेवेति तद्विद्धि भगवान्प्रब्रवीतु मे ॥ १८
ऋत्विगुवाच ।
यजस्व जन्तुना राजंस्त्वं मया वितते क्रतौ ।
ततः पुत्रशतं श्रीमद्भविष्यत्यचिरेण ते ॥ १९
वपायां हूयमानायां धूममाघ्राय मातरः ।
ततस्ताः सुमहावीर्याञ्जनयिष्यन्ति ते सुतान् २०
तस्यामेव तु ते जन्तुर्भविता पुनरात्मजः ।
उत्तरे चास्य सौवर्णं लक्ष्म पार्श्वे भविष्यति ॥ २१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

## एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

ऋत्विक्चोदनया सोमकेन राज्ञा जन्तुनामकपुत्रवपाया होमे तद्गन्धाघ्राणनेन तद्भार्याशते पुत्रशतोत्पत्तिः ॥ १ ॥ लोकान्तरं गतेन सोमकेन ऋत्विजा सह तद्भोग्यस्वपुत्रहननजनारकीयदुःखानुभवपूर्वकं तेन सहैव स्वीयसुकृतफलोपभोगः ॥ २ ॥

सोमक उवाच ।
ब्रह्मन्यद्यद्यथा कार्यं तत्कुरुष्व तथातथा ।
पुत्रकामतया सर्वं करिष्यामि वचस्तव ॥ १
लोमश उवाच ।
ततः स याजयामास सोमकं तेन जन्तुना ।
मातरस्तु बलात्पुत्रमपाकार्षुः कृपान्विताः ॥ २
हा हताः स्मेति वाशन्त्यस्तीव्रशोकसमाहताः ।
तं मातरः प्रत्यकर्षन्गृहीत्वा दक्षिणे करे ॥ ३
सव्ये पाणौ गृहीत्वा तु याजकोपि स्म कर्षति ।
कुररीणामिवार्तानामपाकृष्य तु तं सुतम् ॥ ४
विशस्य चैनं विधिवद्वपामस्य जुहाव सः ।
वपायां हूयमानायां गन्धमाघ्राय मातरः ॥ ५
आर्ता निपेतुः सहसा पृथिव्यां कुरुनन्दन ।
सर्वाश्च गर्भानलभंस्ततस्ताः पार्थिवाङ्गनाः ॥ ६
ततो दशसु मासेषु सोमकस्य विशांपते ।
जज्ञे पुत्रशतं पूर्णं तासु सर्वासु भारत ॥ ७
जन्तुर्ज्येष्ठः समभवज्जनित्र्यामेव पूर्ववत् ।
स तासामिष्ट एवासीन्न तथाऽन्ये निजाः सुताः ८
तच्च लक्षणमस्यासीत्सौवर्णं पार्श्व उत्तरे ।
तस्मिन्पुत्रशते चाग्र्यः स बभूव गुणैरपि ॥ ९
ततः स लोकमगमत्सोमकस्य गुरुः परम् ।
अन्वक्षमेव पश्चात्तु सोमकोप्यगमत्परम् ॥ १०
अथ तं नरके घोरे पच्यमानं ददर्श सः ।
तमपृच्छत्किमर्थं त्वं नरके पच्यसे द्विज ॥ ११
तमब्रवीद्गुरुः सोऽथ पच्यमानोऽग्निना भृशम् ।
त्वं मया याजितो राजंस्तस्येदं कर्मणः फलम् १२
एतच्छ्रुत्वा स राजर्षिर्धर्मराजमथाब्रवीत् ।
अहमत्र प्रवेक्ष्यामि मुच्यतां मम याजकः ॥ १३
मत्कृते हि महाभागः पच्यते नरकाग्निना ।
'सोहमात्मानमाधास्ये नरके मुच्यतां गुरुः॥' १४
धर्म उवाच ।
नान्यः कर्तुः फलं राजन्नुपभुङ्क्ते कदाचन ।
इमानि तव दृश्यन्ते फलानि वदतांवर ॥ १५
सोमक उवाच ।
पुण्यान्न कामये लोकानृतेऽहं ब्रह्मवादिनम् ।
इच्छाम्यहमनेनैव सह वस्तुं सुरालये ॥ १६
नरके वा धर्मराज कर्मणाऽस्य समो ह्यहम् ।
पुण्यापुण्यफलं देव सममस्त्वावयोरिदम् ॥ १७
धर्मराज उवाच ।
यद्येवमीप्सितं राजन्भुङ्क्ष्वास्य सहितः फलम् ।
तुल्यकालं सहानेन पश्चात्प्राप्स्यसि सद्गतिम् १८
लोमश उवाच ।
स चकार तथा सर्वं राजा राजीवलोचनः ।
क्षीणपापश्च तस्मात्स विमुक्तो गुरुणा सह ॥ १९

जन्तुना पशुभूतेन ॥ १९ ॥ अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

वाशन्त्यः क्रोशन्त्यः ॥ ३ ॥ वपां देहान्तर्गतमपूपाकारं मांसम् ॥ ५ ॥ लक्षणं चिह्नम् ॥ ९ ॥ सोमकस्य ऋत्विगिति शेषः ॥ १० ॥

लेभे कामाञ्शुभान्राजन्कर्मणा निर्जितान्स्वयम् ।
सह तेनैव विप्रेण गुरुणा स गुरुप्रियः ॥ २०
एष तस्याश्रमः पुण्यो य एषोग्रे विराजते ।
क्षान्त उष्यात्र षड्रात्रं प्राप्नोति सुगतिं नरः॥ २१
एतस्मिन्नपि राजेन्द्र वत्स्यामो विगतज्वराः ।
षड्रात्रं नियतात्मानः सज्जीभव कुरूद्वह ॥ २२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

## त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

युधिष्ठिरेण मार्कण्डेयाश्रमगमनम् ॥ १ ॥ लोमशेन युधिष्ठिरंप्रति संग्रहेण मार्कण्डेयचरित्रकथनम् ॥ २ ॥

'वैशंपायन उवाच ।
सोमकस्याश्रमे पुण्ये धर्मराजो युधिष्ठिरः ।
षड्रात्रमुष्य नियतो भ्रात्रादिभिररिंदमः ।
तस्मान्निर्गम्य सहसा दिशं प्रायात्तथोत्तराम् ॥ १
बहुदूरं ततो गत्वा वनं तत्र मनोहरम् ।
बहुपुष्पफलाकीर्णं महानद्युपशोभितम् ॥ २
दृष्ट्वा पप्रच्छ राजाऽसौ लोमशं मुनिसत्तमम् ।
किमिदं दृश्यते रम्यं वनं बहुमृगद्विजम् ॥ ३
बहुपुष्पफलोपेतं मुनिसङ्घैर्निषेवितम् ।
स्रवन्त्या च समायुक्तं महत्या पुण्यतोयया ॥ ४
ऋषीणामाश्रमाः पुण्या दृश्यन्ते विविधा मुने ।
कस्यायमाश्रमः पुण्यः कस्येमे मुनयोऽमलाः ।
एतदिच्छाम्यहं श्रोतुं वद त्वं वदतांवर ॥ ५
लोमश उवाच ।
शृणु राजेन्द्र भद्रं ते वनस्यास्य पुरातनम् ।
वृत्तान्तं निखिलेनाद्य प्रोच्यमानं मयाऽनघ ॥ ६
मृकण्डुपुत्रो मेधावी मार्कण्डेयो महामुनिः ।
बाल एव महाबुद्धिः सर्वविद्याविशारदः ॥ ७
मातापित्रोः प्रियं कुर्वंस्तपोर्थं वनमाविशत् ।
अत्राश्रमपदं कृत्वा तपस्तेपे सुदारुणम् ॥ ८
ग्रीष्मे पञ्चतपा भूत्वा वर्षास्वाकाशसंश्रयः ।
जलस्थः शिशिरे योगी बहुकालमवर्तत ॥ ९
ऊर्ध्वबाहुर्निरालम्बः पादाङ्गुष्ठाग्रविष्ठितः ।
जितेन्द्रियो जितप्राणश्चिन्तयन्दृढमव्ययम् ।
अनाहारो जितक्रोधश्चिरमेवमवर्तत ॥ १०
एतस्मिन्नन्तरे राजन्ननावृष्टिः सुदारुणा ।
संभूता सर्वसंहर्त्री तया दग्धं चराचरम् ॥ ११
अनावृष्ट्यां प्रवृत्तायां सर्वे च निधनं गताः ।
केचिदन्ये महात्मानो मुनयो द्विजपुङ्गवाः ॥ १२
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राः सर्वाश्च योषितः।
पशुपक्षिमृगाः सर्वे क्षुत्पिपासासमाकुलाः ।
कृशाः शुष्कोष्ठकण्ठाश्च श्रान्ता भ्रान्ता विचेतसः॥
केनचित्पुण्यशेषेण मार्कण्डेयस्य धीमतः ।
आश्रमं शनकैः प्राप्ता मूर्च्छिताः सहसाऽपतन् १४
समाधिविरतो योगी मार्कण्डेयो महातपाः ।
तद्वनं निबिडं दृष्ट्वा जनैः क्षुत्तृट्समाकुलैः ॥ १५
दयार्द्रहृदयो योगी शिवं ध्यात्वा हृदम्बुजे ।
तेषां संरक्षणार्थाय वेदगन्धिस्वरेण सः ।
आजुहाव तदा गङ्गां तपोयोगेन भारत ॥ १६
गङ्गा समागता शीघ्रं तेनाहूताऽतिपावना ।
नाम्ना वेदनदीत्येव प्रख्याता लोकपावना॥ १७
पर्जन्यश्च समाहूतः सुखं वर्षति भारत ।
सस्यानि च समृद्धानि फलमूलान्यनेकशः ।
संभूतान्यत्र राजेन्द्र सर्वे ते रक्षिता जनाः॥ १८
मार्कण्डेयं प्रशंसन्तो जनाः सर्वे द्विजातयः ।
चिरं सुखमवर्तन्त तेन संरक्षिता नृप ॥ १९
एवं विधाय रक्षां स सर्वेषां पुण्यकर्मणाम् ।
पुनश्चचार च तपः परमेश्वरतुष्टये ॥ २०
एवं बहुतिथे काले प्रादुरासीन्महेश्वरः॥ २१
दृष्ट्वा च सर्वदेवेशं चन्द्रमौलिमुमापतिम् ।

क्षान्तः क्षमावान् । उष्य उषित्वा ॥ २१ ॥

एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

ब्रह्मविष्ण्वादिभिर्देवैः सिद्धविद्याधरोरगैः ॥ २२
गन्धर्वयक्षप्रवरैः सकिन्नरपतत्रिभिः ।
स्तूयमानं महादेवमव्ययं निष्कलं शिवम् ।
प्रणनाम मुनिर्भक्त्या साष्टाङ्गं च पुनः पुनः ॥२३
प्रणम्योत्थाय सहसा बद्धाञ्जलिपुटो मुनिः ।
तुष्टाव विविधैः स्तोत्रैर्महादेवं जगत्पतिम् ॥ २४
तमुवाच महादेवो मार्कण्डेयं महामुनिम् ।
वरं वरय भद्रं ते वरदोसि मुने तव ॥ २५
एवं संबोधितस्तेन शिवेन परमात्मना ।
सगद्गदमिदं वाक्यमुवाच परमेश्वरम् ॥ २६
नान्यं वरं वृणे शंभो विना त्वत्पादपङ्कजे ।
भक्तिं ह्यनन्यसुलभां स्वामिन्नव्यभिचारिणीम् २७
एवमुक्तोऽथ मुनिना भगवानीश्वरेश्वरः ।
पुनरेवाब्रवीद्वाक्यं मार्कण्डेयं महामुनिम् ॥ २८
सम्यगाराधितः पित्रा तव पुत्रार्थमादरात् ॥ २९
शतायुर्निर्गुणः पुत्रः शुभः षोडशवार्षिकः ।
उभयोरन्यमिच्छ त्वमित्युक्तः सोऽब्रवीच्च माम् ३०
निर्गुणो मास्तु देवेश शतायुः षोडशाब्दकः ।
सुगुणोऽस्तु सुतो मेऽद्य इति पित्रा वृतं पुरा ॥३१
त्वया तप्तेन तपसा तोषितोऽहं भृशं मुने ।
दीर्घमायुर्मया दत्तं मृत्युश्च प्रतिषेधितः ॥ ३२
इत्युक्त्वा भगवानीशस्तत्रैवान्तरधीयत ।
तस्यायमाश्रमः पुण्यस्तस्येमे मुनयोऽमलाः ॥ ३३
अत्रैकरात्रमुषिताः सर्वे मृत्युं तरन्ति वै ।
अत्रैव भरतश्रेष्ठ प्रयतो वस भूमिप ॥' ३४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

## एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

लोमशेन युधिष्ठिरंप्रति नानातीर्थमहिमानुवर्णनम् ॥ १ ॥

लोमश उवाच ।
अस्मिन्किल स्वयं राजन्निष्टवान्वै प्रजापतिः ।
सत्रमिष्टीकृतं नाम पुरा वर्षसहस्रिकम् ॥ १
अम्बरीषश्च नाभाग इष्टवान्यमुनामनु ।
यत्रेष्ट्वा दशपद्मानि सदस्येभ्योऽभिसृष्टवान् ॥ २
यज्ञैश्च तपसा चैव परां सिद्धिमवाप सः ।
देशश्च नाहुषस्यायं यज्वनः पुण्यकर्मणः ॥ ३
सार्वभौमस्य कौन्तेय ययातेरमितौजसः ।
स्पर्धमानस्य शक्रेण तस्येदं यज्ञवास्त्विह ॥ ४
पश्य नानाविधाकारैरग्निभिर्निचितां महीम् ।
मज्जन्तीमिव चाक्रान्तां ययातेर्यज्ञकर्मभिः ॥ ५
एषा शम्येकपत्रा सा शकटं चैतदुत्तमम् ।
पश्य रामह्रदानेतान्पश्य नारायणाश्रमम् ॥ ६
एतच्चर्चीकपुत्रस्य योगैर्विचरतो महीम् ।
प्रसर्पणं महीपाल रौप्यायाममितौजसः ॥ ७
अत्रानुवंशं पठतः शृणु मे कुरुनन्दन ।
उलूखलैराभरणैः पिशाची यदभाषत ॥ ८
युगन्धरे दधि प्राश्य उषित्वा चाच्युतस्थले ।

अभिसृष्टवान् दत्तवान् ॥ २ ॥ यज्ञवास्तु यज्ञभूमिः । इह अस्मिन्वास्तुनि । इदमुत्तरान्वयि ॥ ४ ॥ अग्निभिरग्निस्थापनार्थैरिष्टकारचितैः स्थण्डिलैः ॥ ५ ॥ शमी आमिक्षार्थं दध्युत्पादनार्थमानीता शमीशाखा । एकपत्रा शातितपत्रा ॥ ६ ॥ प्रसर्पणं संचारभूमिः । रौप्यायां रूप्यवत् श्वेतवर्णायां स्थल्यां नद्यां वा । सामीप्ये सप्तमी । प्रसर्पणं तीर्थमित्यन्ये ॥ ७ ॥ अनुवंशं परंपरागतमाख्यानश्लोकम् । उलूखलैरिति । उलूखलसदृशानि स्त्रीणां कर्णाभरणानि भवन्तीति स्वयमुलूखलैरेवाभरणैर्युक्तासतीति शेषः । एतेन विकृतवेषत्वं पिशाच्याः ॥ ८ ॥ युगन्धरे पयः प्राश्येति ध. पाठः । उक्तं भाषणमेवाह द्वाभ्यां युगन्धर इति । अस्मिंस्तीर्थे सपुत्रा ब्राह्मणी स्नातुमागता तां प्रति पिशाची वदति । त्वया युगन्धरे पर्वते देशे वा दधिप्राशनं कृतम् । तत्रोष्ट्रीक्षीरं गर्दभ्यादिक्षीरं च दधि क्रियते । तथा अच्युतस्थलाख्ये संकरजानां ग्रामे वासश्च कृतः । तथा भूतिलयाख्ये दस्युग्रामेऽग्निदग्धानां मृतानां क्षेपणं यस्यां नद्यां क्रियते तस्यां स्नातासि । अतो दोषत्रयवती त्वम् । एतत्करणे हि प्रायश्चित्तं धर्मशास्त्रे प्रसिद्धम् । औष्ट्रमैकशफं क्षीरं सुरातुल्यमिति । संसृज्य संकरैः सार्धं प्राजापत्यं व्रतं चरेदिति । प्रोष्य

तद्भूतलये स्नात्वा सपुत्रा वस्तुमर्हसि ॥ ९
एकरात्रमुषित्वेह द्वितीयं यदि वत्स्यसि ।
एतद्वै ते दिवावृत्तं रात्रौ वृत्तमितोऽन्यथा ॥ १०
अद्य चात्र निवत्स्यामः क्षपां भरतसत्तम ।
द्वारमेतत्तु कौन्तेय कुरुक्षेत्रस्य भारत ॥ ११
अत्रैव नाहुषो राजा राजन्क्रतुभिरिष्टवान् ।
ययातिर्बहुरत्नौघैर्यत्रेन्द्रो मुदमभ्यगात् ॥ १२
एतत्प्लक्षावतरणं यमुनातीर्थमुत्तमम् ।
एतद्वै नाकपृष्ठस्य द्वारमाहुर्मनीषिणः ॥ १३
अत्र सारस्वतैर्यज्ञैरीजानाः परमर्षयः ।
यूपोलूखलिकास्तात गच्छन्त्यवभृथप्लवम् ॥ १४
अत्र वै भरतो राजा राजन्क्रतुभिरिष्टवान् ।
हयमेधेन यज्ञेन मेध्यमश्वमवासृजत् ॥ १५
असकृत्कृष्णसारङ्गं धर्मेणाप्य च मेदिनीम् ।
अत्रैव पुरुषव्याघ्र मरुत्तः सत्रमुत्तमम् ।
प्राप चैवर्षिमुख्येन संवर्तेनाभिपालितः ॥ १६
अत्रोपस्पृश्य राजेन्द्र सर्वाँल्लोकान्प्रपश्यति ।
पूयते दुष्कृताच्चैव अत्रापि समुपस्पृश ॥ १७
वैशंपायन उवाच ।
तत्र सभ्रातृकः स्नात्वा स्तूयमानो महर्षिभिः ।
लोमशं पाण्डवश्रेष्ठ इदं वचनमब्रवीत् ॥ १८
सर्वाँल्लोकान्प्रपश्यामि तपसा सत्यविक्रम ।
इहस्थः पाण्डवश्रेष्ठं पश्यामि श्वेतवाहनम् ॥ १९
लोमश उवाच ।
एवमेतन्महाबाहो पश्यन्ति परमर्षयः ।
इह स्नात्वा तपोयुक्तांस्त्रीँल्लोकान्सचराचरान् ॥
सरस्वतीमिमां पुण्यां पुण्यैकशरणावृताम् ।
यत्र स्नात्वा नरश्रेष्ठ धूतपाप्मा भविष्यसि ॥२१
इह सारस्वतैर्यज्ञैरिष्टवन्तः सुरर्षयः ।
ऋषयश्चैव कौन्तेय तथा राजर्षयोपि च ॥ २२
वेदी प्रजापतेरेषा समन्तात्पञ्चयोजना ।
कुरोर्वै यज्ञशीलस्य क्षेत्रमेतन्महात्मनः ॥ २३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

## द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

लोमशेन युधिष्ठिरंप्रति सरस्वत्यादिमाहात्म्यकथनम् ॥ १ ॥ तथा श्येनकपोतोपाख्यानकथनारम्भः ॥ २ ॥

लोमश उवाच ।
इह मर्त्यास्तनूस्त्यक्त्वा स्वर्गं गच्छन्ति भारत ।
मर्तुकामा नरा राजन्निहायान्ति सहस्रशः ॥ १
एवमाशीः प्रयुक्ता हि दक्षेण यजता पुरा ।
इह ये वै मरिष्यन्ति ते वै स्वर्गजितो नराः ॥ २
एषा सरस्वती रम्या दिव्या चौघवती नदी ।
एतद्विनशनं नाम सरस्वत्या विशांपते ॥ ३
द्वारं निषादराष्ट्रस्य येषां दोषात्सरस्वती ।

भूतिलये विप्रः प्राजापत्यं व्रतं चरेदिति च । तच्च त्वया न कृतमतः कथमत्र वस्तुमिच्छसि । दोषवतामिह तीर्थे वासो दुर्लभ इत्यर्थः । एवं पिशाचीवाक्यं श्रुत्वापि सा ब्राह्मणी तत्र स्नानादिकं कृतवती । ततस्तया राक्षस्या तस्या घटपिठरादिकं नाशितम् । उक्तंच । एतत्तव दिवावृत्तं रात्रौ वृत्तं तु द्रक्ष्यसीति । वृत्तं जातम् । रात्रौ तु तव पुत्रमपि नाशयिष्यामीति भावः । अथापि द्वितीयां रात्रिं वस्तुमिच्छसि चेत्तव भूयांसमपकारं करिष्यामीति युगन्धरादिदेशत्रयनिन्दापरत्वेन व्याख्या ॥ ९ ॥ त्वं तु अब्रह्मवित् एकरात्रमेवात्र वस्तुं योग्या । यदि द्वितीयां वस्तुमिच्छसि तर्हि ते तव एतत् मदीयं वृत्तं भविष्यति मद्वत् पिशाची भूत्वात्र स्नानं न लप्स्यसे । एतदिति स्ववृत्तस्याभिनीय प्रदर्शनम् । द्वितीयदिनवासस्यैवैतत्फलं । द्वितीयरात्रिवासे तु इतोन्यथा अहल्यादिवन्मोहप्राप्त्या शिलाभावो भविष्यति । तेन तीर्थदर्शनमपि न लप्स्यसे इति ॥ १० ॥ एतत्प्लक्षवटं नामेति क. पाठः ॥ १३ ॥ दन्तोलूखलिनस्तत्रेति क. पाठः । सारस्वतैर्ब्राह्मणैः ऋत्विग्भिर्यज्ञैरीजानाः यूपोलूखलिकाः यूपान् उलूखलानि च यज्ञसाधनान्याददते यूपोलूखलिकाः ॥ १४ ॥ कृष्णसारङ्गं कृष्णहरिणसदृशं श्यामकर्णमित्यर्थः ॥ १६ ॥ तीर्थान्तरमाह सरस्वतीति । पश्यैकशरणावृतामिति क. पाठः ॥ २१ ॥ एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥
इह मर्त्यास्तपस्तप्त्वेति क. ध. पाठः ॥ १ ॥

प्रविष्टा पृथिवीं वीर मा निषादा हि मां विदुः ४
एष वै चमसोद्भेदो यत्र दृश्या सरस्वती ।
यत्रैनामभ्यवर्तन्त दिव्याः पुण्याः समुद्रगाः ॥ ५
एतत्सिन्धोर्महत्तीर्थं यत्रागस्त्यमरिंदम ।
लोपामुद्रा समागम्य भर्तारमवृणीत वै ॥ ६
एतत्प्रकाशते तीर्थं प्रभासं भास्करद्युते ।
इन्द्रस्य दयितं पुण्यं पवित्रं पापनाशनम् ॥ ७
एतद्विष्णुपदं नाम दृश्यते तीर्थमुत्तमम् ।
एषा रम्या विपाशा च नदी परमपावनी ॥ ८
अत्र वै पुत्रशोकेन वसिष्ठो भगवानृषिः ।
बद्ध्वाऽऽत्मानं निपतितो विपाशः पुनरुत्थितः॥ ९
काश्मीरमण्डलं चैतत्सर्वपुण्यमरिंदम ।
महर्षिभिश्चाध्युषितं पश्येदं भ्रातृभिः सह ॥ १०
यत्रौत्तराणां सर्वेषामृषीणां नाहुषस्य च ।
अग्नेश्चैवात्र संवादः काश्यपस्य च भारत ॥ ११
एतद्द्वारं महाराज मानसस्य प्रकाशते ।
वर्षमस्य गिरेर्मध्ये रामेण श्रीमता कृतम् ॥ १२
एष वातिकषण्डो वै प्रख्यातः सत्यविक्रमः ।
नात्यवर्तत यद्द्वारं विदेहादुत्तरं च यः ॥ १३
इदमाश्चर्यमपरं देशेऽस्मिन्पुरुषर्षभ ।
क्षीणे युगे तु कौन्तेय शर्वस्य सह पार्षदैः ।
सहोमया च भवति दर्शनं कामरूपिणः ॥ १४
अस्मिन्सरसि सत्रैर्वै चैत्रे मासि पिनाकिनम् ।
यजन्ते याजकाः सम्यक् परिवारं शुभार्थिनः १५
अत्रोपस्पृश्य सरसि श्रद्दधानो जितेन्द्रियः ।
क्षीणपापः शुभाँल्लोकान्प्राप्नुते नात्र संशयः ॥१६
एष उज्जानको नाम पावकिर्यत्र शान्तवान् ।
अरुन्धतीसहायश्च वसिष्ठो भगवानृषिः ॥ १७
ह्रदश्च कुशवानेष यत्र पद्मं कुशेशयम् ।
आश्रमश्चैव रुक्मिण्या यत्राशाम्यदकोपना ॥१८
समाधीनां समासस्तु पाण्डवेय श्रुतस्त्वया ।
तं द्रक्ष्यसि महाराज भृगुतुन्दं महागिरिम् ॥ १९
वितस्तां पश्य राजेन्द्र सर्वपापप्रमोचनीम् ।
महर्षिभिश्चाध्युषितां शीततोयां सुनिर्मलाम् ॥२०
जलां चोपजलां चैव यमुनामभितो नदीम् ।
उशीनरो वै यत्रेष्ट्वा वासवादत्यरिच्यत ॥ २१
तां देवसमितिं तस्य वासवश्च विशांपते ।
अभ्यागच्छन्नृपवरं ज्ञातुमग्निश्च भारत ॥ २२
जिज्ञासमानौ वरदौ महात्मानमुशीनरम् ।
इन्द्रः श्येनः कपोतोऽग्निर्भूत्वा यज्ञेऽभिजग्मतुः २३
ऊरुं राज्ञः समासाद्य कपोतः श्येनजाद्भयात् ।
शरणार्थी तदा राजन्निलिल्ये भयपीडितः ॥ २४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

## त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

शिबिपरीक्षणार्थं श्येनीभूतेनेन्द्रेणानुद्रुतस्य कपोतरूपधारिणोऽग्नेः शिबिंप्रति शरणागतिः ॥ १ ॥ कपोतररिक्षिषया राज्ञा श्येनानुमत्या स्वशरीरोत्कृत्तमांसस्य कपोतेन सह तुलारोपणम् ॥ २ ॥ मांसापेक्षया कपोतस्य गौरवातिरेके राज्ञा स्वयमेव तुलारोहणम् ॥ ३ ॥ ततस्तुष्टाभ्यामिन्द्राग्निभ्यां तत्प्रशंसनपूर्वकं स्वलोकगमनम् ॥ ४ ॥

श्येन उवाच ।
धर्मात्मानं त्वाहुरेकं सर्वे राजन्महीक्षितः ।

बद्ध्वा पाशैरिति शेषः। विपाशः पाशहीनः। अतएव विपाशानाम ॥ ९ ॥ वर्षं वसतिस्थानम् ॥ १२ ॥ यो रामः प्रख्यातः सत्यविक्रमश्च विदेहादुत्तरं च यद्द्वारं यद्वर्षस्य द्वारं एषोऽनुभूयमानो वातिकषण्डो वातानीतः पद्मादिसमूहो नात्यवर्तत । तेन रामेण कृतमिति पूर्वेणान्वयः। पद्मादेर्वातानीतस्यात्राप्रवेशाद्रामसामर्थ्यं प्रत्यक्षमाश्चर्यमित्यर्थः। एष वाति मृकण्डो वै इति क. ध. पाठः ॥ १३ ॥ युगं पञ्चसंवत्सरात्मकं तस्मिन्क्षीणे समाप्ते सति यदा सौरसावनबार्हस्पत्यनाक्षत्रचान्द्राः संवत्सरा एककालं समाप्यन्ते स युगक्षयकालस्तस्मिन्नित्यर्थः ॥ १४ ॥ पावकिः स्कन्दः। शान्तवान् शमं प्राप । वसिष्ठोपि शान्तवान् एष उज्ज्ञीतको नाम यवक्रीर्यत्र शान्तवानिति क. ध. पाठः ॥ १७ ॥ कुशवान् जलवान् । अकोपना जितक्रोधा ॥ १८ ॥ समासः संक्षेपः । यस्मिन्दृष्टे समाधिफलं भवतीत्यर्थः ॥ १९ ॥ देवसमितिं राजसभाम् ॥ २२ ॥ निलिल्ये लीनः ॥ २४ ॥ द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

स वै धर्मविरुद्धं त्वं कस्मात्कर्म चिकीर्षसि ॥ १
विहितं भक्षणं राजन्पीड्यमानस्य मे क्षुधा ।
माहिंसीर्धर्मलोभेन धर्ममुत्सृज्य मा नशः ॥ २
राजोवाच ।
संत्रस्तरूपस्त्राणार्थी त्वत्तो भीतो महाद्विज ।
मत्सकाशमनुप्राप्तः प्राणगृध्नुरयं द्विजः ॥ ३
एवमभ्यागतस्येह कपोतस्याभयार्थिनः ।
अप्रदाने परो धर्मः किं त्वं श्येनेह पश्यसि ॥ ४
प्रस्पन्दमानः संभ्रान्तः कपोतः श्येन लक्ष्यते ।
मत्सकाशं जीवितार्थी तस्य त्यागो विगर्हितः ५
[यो हि कश्चिद्द्विजान्हन्याद्गां वा लोकस्य मातरम् ।
शरणागतं च त्यजते तुल्यं तेषां हि पातकम् ] ६
श्येन उवाच ।
आहारात्सर्वभूतानि संभवन्ति महीपते ।
आहारेण विवर्धन्ते तेन जीवन्ति जन्तवः ॥ ७
शक्यते दुस्त्यजेऽप्यर्थे चिररात्राय जीवितुम् ।
न तु भोजनमुत्सृज्य शक्यं वर्तयितुं चिरम् ॥ ८
भक्ष्याद्विलोपितस्याद्य मम प्राणा विशांपते ।
विसृज्य कायमेष्यन्ति पन्थानमपुनर्भवम् ॥ ९
प्रमृते मयि धर्मात्मन्पुत्रदारादि नङ्क्ष्यति ।
रक्षमाणः कपोतं त्वं बहून्प्राणान्न रक्षसि ॥ १०
बहून्यो बाधते धर्मो न स धर्मः कुवर्त्म तत् ।
अविरोधी तु यो धर्मः स धर्मः सत्यविक्रम ॥ ११
विरोधिषु महीपाल निश्चित्य गुरुलाघवम् ।
न बाधा विद्यते यत्र तं धर्मं समुपाचरेत् ॥ १२
गुरुलाघवमाज्ञाय धर्माधर्मविनिश्चये ।
यतो भूयांस्ततो राजन्कुरु धर्मविनिश्चयम् ॥ १३
राजोवाच ।
बहुकल्याणसंयुक्तं भाषसे विहगोत्तम ।
सुपर्णः पक्षिराट् किं त्वं धर्मं ज्ञात्वाऽभिभाषसे १४
तथाहि धर्मसंयुक्तं बहुचित्रं च भाषसे ।
न तेऽस्त्यविदितं किंचिदिति त्वां लक्षयाम्यहम् ।
शरणैषिपरित्यागं कथं साध्विति मन्यसे ॥ १५
आहारार्थं समारम्भस्तव चायं विहंगम ।
शक्यश्चाप्यन्यथा कर्तुमाहारोऽप्यधिकस्त्वया ॥ १६
गोवृषो वा वराहो वा मृगो वा महिषोऽपि वा ।
त्वदर्थमद्य क्रियतां यच्चान्यदिह काङ्क्षसि ॥ १७
श्येन उवाच ।
न वराहं न चोक्षाणं न मृगान्विविधांस्तथा ।
भक्षयामि महाराज किं ममान्येन केनचित् ॥ १८
यस्तु मे दैवविहितो भक्षः क्षत्रियपुङ्गव ।
तमुत्सृज महीपाल कपोतमिममेव मे ॥ १९
श्येनाः कपोतान्खादन्ति श्रुतिरेषा सनातनी ।
मा राजन्सारमज्ञात्वा कदलीस्कन्धमासज ॥ २०
राजोवाच ।
राष्ट्रं शिबीनामृद्धं वै शाधि पक्षिभिरर्चितः ।
कृत्स्नमेतन्मया दत्तं राजवद्विहगोत्तम ॥ २१
यं वा कामयसे कामं श्येन सर्वं ददानि ते ।
विनेमं पक्षिणं श्येन शरणार्थिनमागतम् ॥ २२
येनेमं स्थापयेथास्त्वं कर्मणा पक्षिसत्तम ।
तदाचक्ष्व करिष्यामि न हि दास्ये कपोतकम् २३
श्येन उवाच ।
उशीनर कपोते ते यदि स्नेहो नराधिप ।
आत्मनो मांसमुत्कृत्य कपोततुलया धृतम् ॥ २४
यदा समं कपोतेन तव मांसं नृपोत्तम ।
त्वया प्रदेयं तन्मह्यं सा मे तुष्टिर्भविष्यति ॥ २५
राजोवाच ।
अनुग्रहमिमं मन्ये श्येन यन्माभियाचसे ।
तस्मात्तेऽद्य प्रदास्यामि स्वमांसं तुलया धृतम् २६
लोमश उवाच ।
अथोत्कृत्य स्वमांसं तु राजा परमधर्मवित् ।
तुलयामास कौन्तेय कपोतेन समं विभो ॥ २७
ध्रियमाणः कपोतस्तु मांसेनात्यतिरिच्यते ।
पुनश्चोत्कृत्य मांसानि राजा प्रादादुशीनरः ॥ २८
न विद्यते यदा मांसं कपोतेन समं धृतम् ।

मा रक्षीर्धर्मलोभेन धर्ममुत्सृष्टवानसि इति झ. पाठः ॥ २ ॥ कदलीस्कन्धमासजेति कदलीस्कन्धतुल्ये निःसारेऽस्मिन् धर्मे मा सक्तो भवेत्यर्थः ॥ २० ॥ त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

तत उत्कृत्तमांसोऽसावारुरोह स्वयं तुलाम् ॥ २९
श्येन उवाच ।
इन्द्रोऽहमस्मि धर्मज्ञ कपोतो हव्यवाडयम् ।
जिज्ञासमानौ धर्मे त्वां यज्ञवाटमुपागतौ ॥ ३०
यत्ते मांसानि गात्रेभ्य उत्कृत्तानि विशांपते ।
एषा ते शाश्वती कीर्तिर्लोकानभिभविष्यति ॥ ३१
यावल्लोके मनुष्यास्त्वां कथयिष्यन्ति पार्थिव ।
तावत्कीर्तिश्च लोकाश्च स्थास्यन्ति तव शाश्वताः ॥
इत्युक्त्वा भूमिपतये तस्मै दत्त्वा यथेप्सितम् ।
प्रशस्य जग्मतू राजन्निन्द्राग्नी तुष्टमानसौ ॥ ३३
उशीनरोऽपि धर्मात्मा धर्मेणावृत्य रोदसी ।
विभ्राजमानो वपुषाऽप्यारुरोह त्रिविष्टपम् ॥ ३४
तदेतत्सदनं राजन्राज्ञस्तस्य महात्मनः ।
पश्यस्वैतन्मया सार्धं पुण्यं पापप्रमोचनम् ॥ ३५
तत्र वै सततं देवा मुनयश्च सनातनाः ।
दृश्यन्ते ब्राह्मणै राजन्पुण्यवद्भिर्महात्मभिः ॥ ३६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

## चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

लोमशेन श्वेतकेतोराश्रमंगतं युधिष्ठिरंप्रति अष्टावक्रोपाख्यानकथनारम्भः ॥ १ ॥ धनार्जनाय जनकपुरं गतस्य कहोळस्य वन्दिना वादे विजित्य जले विनिमज्जनम् ॥ २ ॥ तद्विदितवता तत्पुत्रेणाष्टावक्रेण श्वेतकेतुनासह जनकनगरंप्रति गमनम् ॥ ३ ॥

लोमश उवाच ।
यः कथ्यते मन्त्रविदग्र्यबुद्धि-
रौद्दालकिः श्वेतकेतुः पृथिव्याम् ।
तस्याश्रमं पश्यत पाण्डवेया
सदाफलैरुपपन्नं महीजैः ॥ १
साक्षादत्र श्वेतकेतुर्ददर्श
सरस्वतीं मानुषदेहरूपाम् ।
वेत्स्यामि वाणीमिति संप्रवृत्तां
सरस्वतीं श्वेतकेतुर्बभाषे ॥ २
अस्मिन्युगे ब्रह्मकृतां वरिष्ठा-
वास्तां मुनी मातुलभागिनेयौ ।
अष्टावक्रश्चैव कहोलसूनु-
रौद्दालकिः श्वेतकेतुः पृथिव्याम् ॥ ३
विदेहराजस्य समीपतस्तौ
धीरावुभौ मातुलभागिनेयौ ।
प्रविश्य यज्ञायतनं विवादे
वन्दिं निजग्राहतुरप्रमेयौ ॥ ४
उपास्स्व कौन्तेय सहानुजस्त्वं
तस्याश्रमं पुण्यतमं प्रविश्य ।
अष्टावक्रं यस्य दौहित्रमाहु-
र्योऽसौ वन्दिं जनकस्याथ यज्ञे ।
वादी विप्राग्र्यो बाल एवाभिगम्य
वादे भङ्क्त्वा मज्जयामास नद्याम् ॥ ५
युधिष्ठिर उवाच ।
कथंप्रभावः स बभूव विप्र-
स्तथाभूतं यो निजग्राह वन्दिम् ।
'किंचाधिकृत्याथ तयोर्विवादो
विदेहराजस्य समीप आसीत् ॥' ६
अष्टावक्रः केन चासौ बभूव
तत्सर्वं मे लोमश शंस तत्त्वम् ॥ ७
लोमश उवाच ।
उद्दालकस्य नियतः शिष्य एको
नाम्ना कहोळेति बभूव राजन् ।
शुश्रूषुराचार्यवशानुवर्ती
दीर्घं कालं सोऽध्ययनं चकार ॥ ८
तं वै विप्राः पर्यभवंस्तु शिष्या-
स्तं च ज्ञात्वा विप्रकारं गुरुः सः ।

वन्दिं वन्दिनम् । निजग्राहतुः निजगृहतुः ॥४॥ तं वै विप्राः पर्यचरंस्तच्छिष्यास्तां च ज्ञात्वा परिचर्यां गुरुः सः । इति ज्ञ.

तस्मै प्रादात्सद्य एव श्रुतं च
भार्यां च वै दुहितरं स्वां सुजाताम् ॥ ९
तस्यां गर्भः समभवदग्निकल्पः
सोऽधीयानं पितरमथाभ्युवाच ।
सर्वां रात्रिमध्ययनं करोषि
नेदं पितः सम्यगिवोपवर्तते ॥ १०
उपालब्धः शिष्यमध्ये महर्षिः
स तं कोपादुदरस्थं शशाप ।
यस्माद्वक्रं वर्तमानो ब्रवीषि
तस्माद्वक्रो भवितास्यष्टधैव ॥ ११
स वै तथा वक्र एवाभ्यजाय-
दष्टावक्रः प्रथितो मानवेषु ।
अस्यासीद्वै मातुलः श्वेतकेतुः
स तेन तुल्यो वयसा बभूव ॥ १२
संपीड्यमाना तु तदा सुजाता
विवर्धमानेन सुतेन कुक्षौ ।
उवाच भर्तारमिदं रहोगता
प्रसाद्य हीना वसुना धनार्थिनी ॥ १३
कथं करिष्याम्यधुना महर्षे
मासश्चायं दशमो वर्तते मे ।
नैवास्ति मे वसु किंचित्प्रदाता
येनाहमेतामापदं निस्तरेयम् ॥ १४
उक्तस्त्वेवं भार्यया वै कहोळो
वित्तस्यार्थे जनकमथाभ्यगच्छत् ।
स वै तदा वादविदा निगृह्य
निमज्जितो वन्दिनेहाप्सु विप्रः ॥ १५
उद्दालकस्तं तु तदा निशम्य
सूतेन वादेऽप्सु निमज्जितं तथा ।
उवाच तां तत्र ततः सुजाता-
मष्टावक्रे गूहितव्योऽयमर्थः ॥ १६
ररक्ष सा चापि तमस्य मन्त्रं
जातोऽप्यसौ नैव शुश्राव विप्रः ।
उद्दालकं पितरं सोऽभिमेने
तथाऽष्टावक्रो भ्रातरं श्वेतकेतुम् ॥ १७
ततो वर्षे द्वादशे श्वेतकेतु-
रष्टावक्रं पितुरङ्के निषण्णम् ।
अपाकर्षद्गृह्य पाणौ रुदन्तं
नायं तवाङ्कः पितुरित्युक्तवांश्च ॥ १८
यत्तेनोक्तं दुरुक्तं तत्तदानीं
हृदि स्थितं तस्य सुदुःखमासीत् ।
गृहं गत्वा मातरं सोऽथ विप्रः
पप्रच्छेदं क्व नु तातो ममेति ॥ १९
ततः सुजाता परमार्तरूपा
शापाद्भीता तत्त्वमस्याचचक्षे ।
तद्वै तत्त्वं सर्वमाज्ञाय रात्रा-
वित्यब्रवीच्छ्वेतकेतुं स विप्रः ॥ २०
गच्छाव यज्ञं जनकस्य राज्ञो
बह्वाश्चर्यः श्रूयते तस्य यज्ञः ।
श्रोष्यावोऽत्र ब्राह्मणानां विवाद-
मन्नं चाग्र्यं तत्र भोक्ष्यावहे च ॥ २१
विचक्षणत्वं च भविष्यते नौ
शिवश्च सौम्यश्च हि ब्रह्मघोषः ॥ २२
तौ जग्मतुर्मातुलभागिनेयौ
यज्ञं समृद्धं जनकस्य राज्ञः ।
अष्टावक्रः पथि राज्ञा समेत्य
प्रोत्सार्यमाणो वाक्यमिदं जगाद ॥ २३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

---

पाठः ॥ ९ ॥ यस्मात्कुक्षौ वर्तमान इति झ. पाठः ॥ ११ ॥ वसुकिंचित्प्रजातेति झ. पाठः । प्रजाता प्रसूता ॥ १४ ॥ चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

## पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

श्वेतकेतुना सह जनकयज्ञशालां विविक्षोरष्टावक्रस्य द्वारपालेन निरोधनम् ॥ १ ॥ अष्टावक्रद्वारपालयोः संवादः ॥ २ ॥ स्वप्रश्नस्योत्तरदानतुष्टेन राज्ञा सभाप्रवेशानुमतिः ॥ ३ ॥

अष्टावक्र उवाच ।

अन्धस्य पन्था बधिरस्य पन्थाः
स्त्रियः पन्था भारवाहस्य पन्थाः ।
राज्ञः पन्था ब्राह्मणेनासमेत्य
समेत्य तु ब्राह्मणस्यैव पन्थाः ॥ १

राजोवाच ।

पन्था अयं तेऽद्य मया निसृष्टो
येनेच्छसे तेन कामं व्रजस्व ।
न पावको विद्यते वै लघीया-
निन्द्रोऽपि नित्यं नमते ब्राह्मणानाम् ॥ २

लोमश उवाच ।

'स एवमुक्तो मातुलेनैव सार्धं
यथेष्टमार्गो यज्ञनिवेशनं तत् ।
संप्राप्य धर्मेण निवारितः सन्
द्वारि द्वाःस्थं वाक्यमिदं बभाषे ॥' ३
यज्ञं द्रष्टुं प्राप्तवन्तौ स्म तात
कौतूहलं बलवद्वै विवृद्धम् ।
आवां प्राप्तावतिथी संप्रवेशं
काङ्क्षावहे द्वारपते तवाज्ञाम् ॥ ४
ऐन्द्रद्युम्नेर्यज्ञदृशाविहावां
विवक्षू वै जनकेन्द्रं दिदृक्षू ।
न वै क्रुध्यो वन्दिना चोत्तमेन
संयोजय द्वारपाल क्षणेन ॥ ५

द्वारपाल उवाच ।

वन्देः समादेशकरा वयं स्म
निबोध वाक्यं च मयेर्यमाणम् ।
न वै बालाः प्रविशन्त्यत्र विप्रा
वृद्धा विदग्धाः प्रविशन्ति द्विजाग्र्याः ॥ ६

अष्टावक्र उवाच ।

यद्यत्र वृद्धेषु कृतः प्रवेशो
युक्तं मया द्वारपाल प्रवेष्टुम् ।
वयं हि वृद्धाश्चरितव्रताश्च
वेदप्रभावेन समन्विताश्च ॥ ७
शुश्रूषवश्चापि जितेन्द्रियाश्च
ज्ञानागमे चापि गताः स्म निष्ठाम् ।
न बाल इत्येव मन्तव्यमाहु-
र्बालोऽप्यग्निर्दहति स्पृश्यमानः ॥ ८

द्वारपाल उवाच ।

सरस्वतीमीरय वेद जुष्टा-
मेकाक्षरां बहुरूपां विराजम् ।
अङ्गात्मानं समवेक्षस्व बालं
किं श्लाघसे दुर्लभा वादसिद्धिः ॥ ९

अष्टावक्र उवाच ।

न ज्ञायते कायवृद्ध्या विवृद्धि-
र्यथाऽष्ठीला शाल्मलेः संप्रवृद्धाः ।
ह्रस्वोऽल्पकायः फलितो विवृद्धो
यश्चाफलस्तस्य न वृद्धभावः ॥ १०

द्वारपाल उवाच ।

वृद्धेभ्य एवेह मतिं स्म बाला
गृह्णन्ति कालेन भवन्ति वृद्धाः ।
न हि ज्ञातुमल्पकालेन शक्यं
कस्माद्बालः स्थविर इव प्रभाषसे ॥ ११

---

स्त्रियः पन्था वै पथिकस्य पन्था इति क. पाठः । अन्धादीनामक्षमत्वान्मार्गो देय इत्यर्थः । असमेत्य समीपं अप्राप्य ॥ १ ॥ ऐन्द्रद्युम्नेर्जनकस्य ॥ ५ ॥ चरितव्रताश्च तपःप्रभावेन निवेशनार्हाः इति क. ध. पाठः ॥ ७ ॥ ज्ञानागमे ज्ञानशास्त्रे वेदान्तेष्वित्यर्थः । निष्ठां निश्चयम् ॥ ८ ॥ वेद जानीते यदि तर्हि ईरय । जुष्टां मुनिसेविताम् । एकमेव अक्षरं ब्रह्म प्रतिपाद्यं यस्यां तां एकाक्षराम् । बहुरूपां मन्त्रार्थवादादिरूपाम् । विराजं विशेषेण कर्मकाण्डादाधिक्येन राजमानाम् । अङ्गेति संबोधने ॥ ९ ॥ शाल्मलेरष्ठीला शाल्मलिफलान्तर्गतग्रन्थिः । सहि केवलतूलमयत्वान्निःसारः । अतो देहवृद्धिर्व्यर्था । अल्पकायः कृशः ॥ १० ॥

अष्टावक्र उवाच ।
न तेन स्थविरो भवति येनास्य पलितं शिरः ।
बालोपि यः प्रजानाति तं देवाः स्थविरं विदुः १२
न हायनैर्न पलितैर्न वित्तैर्न च बन्धुभिः ।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् १३
दिदृक्षुरस्मि संप्राप्तो बन्दिनं राजसंसदि ।
निवेदयस्व मां द्वाःस्थ राज्ञे पुष्करमालिने ॥ १४
द्रष्टास्यद्य वदतोऽस्मान्द्वारपाल मनीषिभिः ।
सह वादे विवृद्धे तु वन्दिनं चापि निर्जितम् १५

पश्यन्तु विप्राः परिपूर्णविद्याः
सहैव राज्ञा सपुरोधमुख्याः ।
उताहो वाऽप्युच्चतां नीचतां वा
तूर्ष्णींभूतेष्वेव सर्वेष्वथाद्य ॥ १६

द्वारपाल उवाच ।
कथं यज्ञं दशवर्षो विशेस्त्वं
विनीतानां विदुषां संप्रवेशम् ।
उपायतः प्रयतिष्ये तवाहं
प्रवेशने कुरु यत्नं यथावत् ॥ १७
'एष राजा संश्रवणे स्थितस्ते
स्तुह्येनं त्वं वचसा संस्कृतेन ।
स चानुज्ञां दास्यति प्रीतियुक्तः
प्रवेशने यच्च किंचित्तवेष्टम् ॥' १८

अष्टावक्र उवाच ।
भोभो राजञ्जनकानां वरिष्ठ
त्वं वै सम्राट् त्वयि सर्वं समृद्धम् ।
त्वं वा कर्ता कर्मणां यज्ञियानां
ययातिरेको नृपतिर्वा पुरस्तात् ॥ १९
विद्वान्वन्दी वादविदो निगृह्य
वादे भग्नानप्रतिशङ्कमानः ।
त्वयाऽभिसृष्टैः पुरुषैराप्तकृद्भि-
र्जले सर्वान्मज्जयतीति नः श्रुतम् ॥ २०

सोऽहं श्रुत्वा ब्राह्मणानां सकाशे
ब्रह्माद्यं वै कथयितुमागतोस्मि ।
क्वासौ वन्दी यावदेनं समेत्य
नक्षत्राणीव सविता नाशयामि ॥ २१

राजोवाच ।
आशंससे वन्दिनं वै विजेतु-
मविज्ञाय त्वं वाक्यबलं परस्य ।
विज्ञातवीर्यैः शक्यमेवं प्रवक्तुं
दृष्टश्चासौ ब्राह्मणैर्वादशीलैः ॥ २२
आशंसमाना वन्दिनं वै विजेतु-
मविज्ञात्वा तु बलं वन्दिनोऽस्य ।
समागता ब्राह्मणास्तेन पूर्वं
न शोभन्ते भास्करेणेव ताराः ॥ २३
आशानुबन्धो हि तवात्र यत्नः
स वन्दिमासाद्य तथा विनश्यति ।
विज्ञानवन्तो निकृतास्तु तात
कथं सदस्तर्तुमिदं समर्थः ॥ २४

अष्टावक्र उवाच ।
विवादितोऽसौ न हि मादृशैर्हि
सिंहीकृतस्तेन वदत्यभीतः ।
समेत्य मां निहतः शेष्यतेऽद्य
मार्गे भग्नं शकटमिवाबलाक्षम् ॥ २५

राजोवाच ।
षण्णाभेर्द्वादशाक्षस्य चतुर्विंशतिपर्वणः ।
यस्त्रिषष्टिशतारस्य वेदार्थं स परः कविः ॥ २६

अष्टावक्र उवाच ।
चतुर्विंशतिपर्व त्वां षण्णाभि द्वादशप्रधि ।
तत्त्रिषष्टिशतारं वै चक्रं पातु सदागति ॥ २७

राजोवाच ।
बडवे इव संयुक्ते श्येनपाते दिवौकसाम् ।
कस्तयोर्गर्भमाधत्ते गर्भं सुषुवतुश्च कम् ॥ २८

---

अनूचानः साङ्गवेदाध्यायी ॥ १३ ॥ पुष्करमालिने स्वर्णमालाधारिणे ॥ १४ ॥ सम्राट् सार्वभौमः ॥ १९ ॥ ब्रह्माद्वैतं इति झ. पाठः । ब्रह्माद्यं वै इति ध. पाठः ॥ २१ ॥ प्रधयो मासा राशयो वा । तेषु हि त्रिंशदहोरात्रा अंशा वा प्रत्येकं प्रत्येकं प्रधीयन्ते । चक्रं पात्वस्मिन् काले यथाकालं विहितो धर्मस्त्वां पात्वित्यर्थः । केवलकालज्ञानस्यापुरुषार्थत्वात् । एवमन्यत्रापि विधानं द्रष्टव्यम् ॥ २७ ॥ रथसंयुक्ते अश्वे इव सहचारिण्यौ श्येनपाते श्येनवदकस्मात् पतन-

अष्टावक्र उवाच ।
मा स्म भूः स्वगृहे राजञ्शात्रवाणामपि ध्रुवम् ।
वातसारथिराधत्ते गर्भं सुषुवतुश्च तम् ॥ २९

राजोवाच ।
किंस्वित्सुप्तं न निमिषति किंस्विज्जातं न चोपति ।
कस्यस्विद्धृदयं नास्ति किंस्विद्वेगेन वर्धते ॥ ३०

अष्टावक्र उवाच ।
मत्स्यः सुप्तो न निमिषत्यण्डं जातं न चोपति ।
अश्मनो हृदयं नास्ति नदी वेगेन वर्धते ॥ ३१

राजोवाच ।
न त्वां मन्ये मानुषं देवसत्त्व
न त्वं बालः स्थविरः संमतो मे ।
न ते तुल्यो विद्यते वाक्प्रलापे
तस्माद्द्वारं वितराम्येष विद्वन् ॥ ३२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

---

## षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

अष्टावक्रेण वादे पराजितस्य वन्दिनो जनकेन जले विनिमज्जनम् ॥ १ ॥ जलमज्जितेषु सर्वविप्रेषु समुत्थितेषु अष्टावक्रेण स्वपित्रा कहोळेन मातुलेन च सह स्वाश्रमगमनम् ॥ २ ॥ अष्टावक्रस्य पितृचोदनया समङ्गाप्रवेशाद्देहस्य समीभवनम् ॥ ३ ॥

अष्टावक्र उवाच ।
अत्रोग्रसेनसमितेषु राजन्
समागतेष्वप्रतिमेषु राजसु ।
न मे विवित्सान्तरमस्ति वादिनां
महाजने हंसविवादिनामिव ॥ १
न मोक्ष्यसे वै वदमानो निमज्जन्
जलं प्रपन्नः सरितामिवाधनः ।
हुताशनस्येव समिद्धतेजसः
स्थिरो भवस्वेह ममाद्य वन्दिन् ॥ २

वन्द्युवाच ।
व्याघ्रं शयानं प्रति मा प्रबोध
आशीविषं सृक्किणी संलिहानम् ।
पदा हतस्येह शिरोभिहत्य
नादष्टो वै मोक्ष्यसे तन्निबोध ॥ ३
यो वै दर्पात्संहननोपपन्नः
सुदुर्बलः पर्वतमाविहन्ति ।
तस्यैव पाणिः सनखो विदीर्यते
न चैव शैलस्य हि दृश्यते व्रणः ॥ ४

अष्टावक्र उवाच ।
सर्वे राज्ञो मैथिलस्य मैनाकस्येव पर्वताः ।
निकृष्टभूता राजानो वत्सा ह्यनडुहो यथा ॥ ५
यथा महेन्द्रः प्रवरः सुराणां
नदीषु गङ्गा प्रवरा यथैव ।
तथा नृपाणां प्रवरस्त्वमेको
वन्दिं समभ्यानय मत्सकाशम् ॥ ६

लोमश उवाच ।
एवमष्टावक्रः समितौ हि गर्ज-
ञ्जातक्रोधो वन्दिनमाह राजन् ।
उक्ते वाक्ये चोत्तरं मे ब्रवीहि
वाक्यस्य चाप्युत्तरं ते ब्रवीमि ॥ ७

वन्द्युवाच ।
एक एवाग्निर्बहुधा समिध्यते
एकः सूर्यः सर्वमिदं विभाति ।

---

शीले ये उभे वर्तेते । दिवौकसां देवानां मध्ये तयोः संबन्धिनं गर्भं को धत्ते । कस्य गर्भे ते उत्पद्येते कंच जनयत इत्यर्थः ॥ २८ ॥ वाक्प्रलापे वाचां प्रकृष्टे संलापे । वितराम्येष वन्दीति झ. पाठः । एष वन्दी दृश्यतामिति शेषः ॥३२॥ पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

नावैमि वन्दिं वरमत्र वादिनां महाजले हंसमिवाददामि इति झ. पाठः ॥ १ ॥ न मेऽद्य वक्ष्यस्यतिवादिमानिन् ग्लहं प्रपन्नः सरितामिवागमः । इति झ. पाठः ॥ २ ॥ प्रबोध प्रबोधय ॥ ३ ॥ संहननेन देहेन दृढकायत्वेन उपपन्नः ॥ ४ ॥ वन्दिं वन्दिनम् । विभक्त्यलोपे नकारलोप आर्षः ॥ ६ ॥

एकोऽवीरो देवराजोऽरिहन्ता
यमः पितॄणामीश्वरश्चैक एव ॥ ८

अष्टावक्र उवाच ।
द्वाविन्द्राग्नी चरतो वै सखायौ
द्वौ देवर्षी नारदपर्वतौ च ।
द्वावश्विनौ द्वे रथस्यापि चक्रे
भार्यापती द्वौ विहितौ विधात्रा ॥ ९

वन्द्युवाच ।
त्रिः सूयते कर्मणा वै प्रजेयं
त्रयो युक्ता वाजपेयं वहन्ति ।
अध्वर्यवस्त्रिसवनानि तन्वते
त्रयो लोकास्त्रीणि ज्योतींषि चाहुः ॥१०

अष्टावक्र उवाच ।
चतुष्टयं ब्राह्मणानां निकेतं
चत्वारो वर्णा यज्ञमिमं वहन्ति ।
दिशश्चतस्रो वर्णचतुष्टयं च
चतुष्पदा गौरपि शश्वदुक्ता ॥ ११

वन्द्युवाच ।
पञ्चाग्नयः पञ्चपदा च पङ्क्ति-
र्यज्ञाः पञ्चैवाप्यथ पञ्चेन्द्रियाणि ।
दृष्टा वेदे पञ्चचूडाप्सराश्च
लोके ख्यातं पञ्चनदं च पुण्यम् ॥ १२

अष्टावक्र उवाच ।
षडाधाने दक्षिणामाहुरेके
षट् चैवेमे ऋतवः कालचक्रम् ।
षडिन्द्रियाण्युत षट् कृत्तिकाश्च
षट् साद्यस्काः सर्ववेदेषु दृष्टाः ॥ १३

वन्द्युवाच ।
सप्त ग्राम्याः पशवः सप्त वन्याः
सप्त च्छन्दांसि क्रतुमेकं वहन्ति ।
सप्तर्षयः सप्त चाप्यर्हणानि
सप्ततन्त्री प्रथिता चैव वीणा ॥ १४

अष्टावक्र उवाच ।
अष्टौ शाणाः शतमानं वहन्ति
तथाष्टपादः शरभः सिंहघाती ।
अष्टौ वसूञ्शुश्रुम देवतासु
यूपश्चाष्टास्रिर्विहितः सर्वयज्ञे ॥ १५

वन्द्युवाच ।
नवैवोक्ताः सामिधेन्यः पितॄणां
तथा प्राहुर्नवयोगं विसर्गम् ।
नवाक्षरा बृहती संप्रदिष्टा
नवैव योगो गणनामेति शश्वत् ॥ १६

अष्टावक्र उवाच ।
दिशो दशोक्ताः पुरुषस्य लोके
सहस्रमाहुर्दशपूर्णं शतानि ।
दशैव मासान्बिभ्रति भर्गवत्यो
दशैरका दशदाशा दशार्हाः ॥ १७

वन्द्युवाच ।
एकादशैकादशिनः पशूना-
मेकादशैवात्र भवन्ति यूपाः ।
एकादश प्राणभृतां विकारा
एकादशोक्ता दिवि देवेषु रुद्राः ॥ १८

अष्टावक्र उवाच ।
संवत्सरं द्वादशमासमाहु-
र्जगत्याः पादो द्वादशैवाक्षराणि ।
द्वादशाहः प्राकृतो यज्ञ उक्तो
द्वादशादित्यान्कथयन्तीह धीराः ॥ १९

वन्द्युवाच ।
त्रयोदशी तिथिरुक्ता महोग्रा
त्रयोदशद्वीपवती मही च ।

लोमश उवाच ।
एतावदुक्त्वा विरराम वन्दी
श्लोकस्यार्धं व्याजहाराष्टवक्रः ।

अष्टावक्र उवाच ।
त्रयोदशाहानि ससार केशी
त्रयोदशादीन्यतिच्छन्दांसि चाहुः ॥ २०

---

षडेव यज्ञाः सर्ववेदेष्विति ध. पाठः ॥ १३ ॥ अष्टौ दिगीशान्यतमानान्वदन्ति इति ख. पाठः । अष्टौ योगाः प्रथिमानं वहन्ति इति ध. पाठः ॥ १५ ॥

लोमश उवाच ।
ततो महानुदतिष्ठन्निनाद-
स्तूष्णींभूतं सूतपुत्रं निशम्य ।
अधोमुखं ध्यानपरं तदानी-
मष्टावक्रं चाप्युदीर्यन्तमेव ॥ २१
तस्मिंस्तथा संकुले वर्तमाने
स्फीते यज्ञे जनकस्योत राज्ञः ।
अष्टावक्रं पूजयन्तोऽभ्युपेयु-
र्विप्राः सर्वे प्राञ्जलयः प्रतीताः ॥ २२

अष्टावक्र उवाच ।
अनेनैव ब्राह्मणाः शुश्रुवांसो
वादे जित्वा सलिले मज्जिताः प्राक् ।
तानेव धर्मानयमद्य वन्दी
प्राप्नोतु गृह्याशु निमज्जयैनम् ॥ २३

वन्द्युवाच ।
अहं पुत्रो वरुणस्योत राज्ञ-
स्तत्रास सत्रं द्वादशवार्षिकं वै ।
सत्रेण ते जनक तुल्यकालं
तदर्थं ते प्रहिता मे द्विजाग्र्याः ॥ २४
ते तु सर्वे वरुणस्योत यज्ञं
द्रष्टुं गता इम आयान्ति भूयः ।
अष्टावक्रं पूजये पूजनीयं
यस्य हेतोर्जनितारं समेष्ये ॥ २५

अष्टावक्र उवाच ।
विप्राः समुद्राम्भसि मज्जिता ये
वाचा जिता मेधया वा विदानाः ।
तां मेधया वाचमथोज्जहार
यथा वाचमवचिन्वन्ति सन्तः ॥ २६
अग्निर्दहञ्जातवेदाः सतां गृहान्
विसर्जयंस्तेजसा न स्म धाक्षीत् ।
बालेषु पुत्रेषु कृपणं वदत्सु
तथा वाचमवचिन्वन्ति सन्तः ॥ २७
श्लेष्मांतकी क्षीणवर्चाः शृणोषि
उताहो त्वां स्तुतयो मादयन्ति ।
हस्तीव त्वं जनक वितुद्यमानो
न मामिकां वाचमिमां शृणोषि ॥ २८

जनक उवाच ।
शृणोमि वाचं तव दिव्यरूपा-
ममानुषीं दिव्यरूपोऽसि साक्षात् ।
अजैषीर्यद्वन्दिनं त्वं विवादे
निसृष्ट एष तव कामोऽद्य वन्दी ॥ २९

अष्टावक्र उवाच ।
नानेन जीवता कश्चिदर्थो मे वन्दिना नृप ।
पिता यद्यस्य वरुणो मज्जयैनं जलाशये ॥ ३०

वन्द्युवाच ।
अहं पुत्रो वरुणस्योत राज्ञो
न मे भयं विद्यते मज्जितस्य ।
इमं मुहूर्तं पितरं द्रक्ष्यतेऽय-
मष्टावक्रश्चिरनष्टं कहोळम् ॥ ३१

लोमश उवाच ।
ततस्ते पूजिता विप्रा वरुणेन महात्मना ।
उदतिष्ठंस्ततः सर्वे जनकस्य समीपतः ॥ ३२

---

सूतपुत्रं वरुणपुत्रम् । उदीर्यन्तमुदीर्यमाणम् । स्तूयमानमित्यर्थः ॥ २१ ॥ शुश्रुवांसः पण्डिताः ॥ २३ ॥ जनितारं वरुणम् ॥ २५ ॥ वाचा उच्चैः पाठेनैव । उत मेधया ऊहापोहकौशलेन । विप्राः विदानाः पण्डिता अपि जिताः मज्जिताश्च तां प्रसिद्धां वाचं वेदमयीं मेधया सहितां वन्दिना कुतर्कार्णवे मज्जितां अहं यथा उज्जहार उद्धृतवानस्मि तथा सन्तः सदसद्वचनविवेककुशलाः अवचिन्वन्ति परीक्षयन्ति । लोडर्थे लट् । परीक्षयन्त्वित्यर्थः ॥ २६ ॥ अग्निः दहन् स्वभावेन दाहकोऽपि जातवेदाः जातानि सतामसतां च वृत्तानि वेद जानातीति जातवेदाः । सतां सत्याभिसंधीनां गृहान् शरीराणि विसर्जयन् वर्जयन् तेजसा यथा अधाक्षीत्स अर्थादनृताभिसंधिगृहान् । नशब्द उपमार्थे । यथा तप्तपरशुग्रहणे वह्निः सत्याभिसंधिं न दहति सत्यपक्षपाती नतु जातिवयोविद्यादिपक्षपाती । एवं सन्तोपि बालादिषु । अतो बालवचनमिति मद्वाक्यं नावमन्तव्यमिति भावः ॥ २७ ॥ श्लेष्मातकीशब्दितस्तरुविशेषस्तस्य पत्रेषु भोजनं तत्फलभक्षणं च बुद्धिघ्नं दोषकरं चेति प्रसिद्धम् ॥ २८ ॥ अद्य तव कामो निसृष्टः एष वन्दी दृश्यतामिति शेषः ॥ २९ ॥

कहोळ उवाच ।
इत्यर्थमिच्छन्ति सुताञ्जना जननकर्मणा ।
यदहं नाशकं कर्तुं तत्पुत्रः कृतवान्मम ॥ ३३
उतावलस्य बलवानुत बालस्य पण्डितः ।
उत वाऽविदुषो विद्वान्पुत्रो जनक जायते ॥ ३४
वन्द्युवाच ।
शितेन ते परशुना स्वयमेवान्तको नृप ।
शिरांस्यपाहरन्नाजौ रिपूणां भद्रमस्तु ते ॥ ३५
महदौक्थ्यं गीयते साम चाग्र्यं
सम्यक्सोमः पीयते चात्र सत्रे ।
शुचीन्भागान्प्रतिजगृहुश्च हृष्टाः
साक्षाद्देवा जनकस्येह राज्ञः ॥ ३६
लोमश उवाच ।
समुत्थितेष्वथ सर्वेषु राजन्
विप्रेषु तेष्वधिकं सुप्रभेषु ।
अनुज्ञातो जनकेनाथ राज्ञा
विवेश तोयं सागरस्योत वन्दी ॥ ३७
अष्टावक्रः पितरं पूजयित्वा
संपूजितो ब्राह्मणैस्तैर्यथावत् ।
प्रत्याजगामाश्रममेव चाग्र्यं
जित्वा वन्दिं सहितो मातुलेन ॥ ३८
ततोऽष्टावक्रं मातुरथान्तिके पिता
नदीं समङ्गां शीघ्रमिमां विशस्व ।
प्रोवाच चैनं स तथा विवेश
समैरङ्गैश्चापि बभूव सद्यः ॥ ३९
नदी समङ्गा च बभूव पुण्या
यस्यां स्नातो मुच्यते किल्बिषाद्धि ।
त्वमप्येनां स्नानपानावगाहैः
सभ्रातृकः सहभार्यो विशस्व ॥ ४०
अत्र कौन्तेय सहितो भ्रातृभिस्त्वं
सुखोषितः सह विप्रैः प्रतीतः ।
पुण्यान्यन्यानि शुचिकर्मैकभक्ति-
र्मया सार्धं चरितास्याजमीढ ॥ ४१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

---

## सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

लोमशेन रैभ्याश्रमंगतं युधिष्ठिरंप्रति यवक्रीतोपाख्यानकथनारम्भः ॥ १ ॥ भरद्वाजपुत्रेण यवक्रीतेन स्वपितृमित्रे रैभ्ये तत्पुत्रयोरर्वावसुपरावस्वोश्चासूयया विनैवोपदेशं वेदाधिगमाय इन्द्रंप्रति तपश्चरणम् ॥ २ ॥ इन्द्रनिवारितेनापि यवक्रीतेन बलात्कारेण तस्माद्वरग्रहणम् ॥ ३ ॥ भरद्वाजेन लब्धवरं यवक्रीतंप्रति गर्वेण रैभ्यपीडाप्रतिषेधाय बालध्युपाख्यान-कथनम् ॥ ४ ॥

लोमश उवाच ।
एषा मधुविला नाम समङ्गा संप्रकाशते ।
एतत्कर्दमिलं नाम भरतस्याभिषेचनम् ॥ १
अलक्ष्म्या किल संयुक्तो वृत्रं हत्वा शचीपतिः ।
आप्लुतः सर्वपापेभ्यः समङ्गायां व्यमुच्यत ॥ २
एतद्विनशनं कुक्षौ मैनाकस्य नरर्षभ ।
अदितिर्यत्र पुत्रार्थं तदन्नमपचत्पुरा ॥ ३
एनं पर्वतराजानमारुह्य भरतर्षभाः ।
अयशस्यामसंशब्द्यामलक्ष्मीं व्यपनोत्स्यथ ॥ ४
एते कनखला राजन्नृषीणां दयिता नगाः ।

---

इत्यर्थं एतदर्थम् ॥ ३३ ॥ शितेन तीक्ष्णेन ते तव रिपूणामित्यन्वयः । यमादपि तव शत्रुसंहरणशक्तिरधिकेति भावः ॥ ३५ ॥ औक्थ्यं उक्थ्याख्यक्रतुविशेषे गेयम् ॥ ३६ ॥ सौतिं सूतस्य वरुणस्य पुत्रम् ॥ ३८ ॥ समानि अङ्गानि करोतीति समंगेति योगो दर्शितः । शकन्ध्वादित्वात् पररूपम् ॥ ३९ ॥ प्रतीतो विश्रब्धः ॥ ४१ ॥ षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

मधुविलेति अष्टावक्राङ्गसमीकरणात्पूर्वं समंगाया एव नाम । मधुवहानामेति क. ध. पाठः ॥ १ ॥ अन्नं ब्रह्मौदनम् । अदितिः पुत्रकामा । साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचदिति श्रुतेः ॥ ३ ॥ अयशस्यां अयशस्करीम् । असंशब्द्यां अकीर्तनीयाम् । अयशस्यामसह्यां च अलक्ष्मीं इति ध. पाठः ॥ ४ ॥

एषा प्रकाशते गङ्गा युधिष्ठिर यशस्विनी ॥ ५
सनत्कुमारो भगवानत्र सिद्धिमगात्पुरा ।
आजमीढावगाह्यैनां सर्वपापैः प्रमोक्ष्यसे ॥ ६
अपां ह्रदं च पुण्याख्यं भृगुतुन्दं च पर्वतम् ।
तूष्णीं गङ्गां च कौन्तेय सानुजः समुपस्पृश ॥ ७
आश्रमः स्थूलशिरसो रमणीयः प्रकाशते ।
अत्र मानं च कौन्तेय क्रोधं चैव विवर्जय ॥ ८
एष रैभ्याश्रमः श्रीमान्पाण्डवेय प्रकाशते ।
भारद्वाजो यत्र कविर्यवक्रीतो व्यनश्यत ॥ ९
युधिष्ठिर उवाच ।
कथं युक्तोऽभवदृषिर्भरद्वाजः प्रतापवान् ।
किमर्थं च यवक्रीतः पुत्रोऽनश्यत वै मुनेः ॥ १०
एतत्सर्वं यथावृत्तं श्रोतुमिच्छामि तत्त्वतः ।
कर्मभिर्देवकल्पानां कीर्त्यमानैर्भृशं रमे ॥ ११
लोमश उवाच ।
भरद्वाजश्च रैभ्यश्च सखायौ संबभूवतुः ।
तावूषतुरिहात्यन्तं प्रीयमाणौ वनान्तरे ॥ १२
रैभ्यस्य तु सुतावास्तामर्वावसुपरावसू ।
आसीद्यवक्रीः पुत्रस्तु भरद्वाजस्य भारत ॥ १३
रैभ्यो विद्वान्सहापत्यस्तपस्वी चेतरोऽभवत् ।
तयोश्चाप्यतुला प्रीतिरभवद्भरतर्षभ ॥ १४
यवक्रीः पितरं दृष्ट्वा तपस्विनमसत्कृतम् ।
दृष्ट्वा च सत्कृतं विप्रै रैभ्यं पुत्रैः सहानघ ॥ १५
पर्यतप्यत तेजस्वी मन्युनाऽभिपरिप्लुतः ।
तपस्तेपे ततो घोरं वेदज्ञानाय पाण्डव ॥ १६
सुसमिद्धे महत्यग्नौ शरीरमुपतापयन् ।
जनयामास संतापमिन्द्रस्य सुमहातपाः ॥ १७
तत इन्द्रो यवक्रीतमुपगम्य युधिष्ठिर ।
अब्रवीत्कस्य हेतोस्त्वमास्थितस्तप उत्तमम् ॥ १८
यवक्रीत उवाच ।
द्विजानामनधीता वै वेदाः सुरगणार्चित ।
प्रतिभान्त्विति तप्येहमिदं परमकं तपः ॥ १९
स्वाध्यायार्थं समारम्भो ममायं पाकशासन ।
तपसा ज्ञातुमिच्छामि सर्वज्ञानानि कौशिक ॥ २०
कालेन महता वेदाः शक्या गुरुमुखाद्विभो ।
प्राप्तुं तस्मादयं यत्नः परमो मे समास्थितः ॥ २१
इन्द्र उवाच ।
अमार्ग एष विप्रर्षे येन त्वं यातुमिच्छसि ।
किं विघातेन ते विप्र गच्छाधीहि गुरोर्मुखात् ॥ २२
लोमश उवाच ।
एवमुक्त्वा गतः शक्रो यवक्रीरपि भारत ।
भूय एवाकरोद्यत्नं तपस्यमितविक्रमः ॥ २३
घोरेण तपसा राजंस्तप्यमानो महत्तपः ।
संतापयामास भृशं देवेन्द्रमिति नः श्रुतम् ॥ २४
तं तथा तप्यमानं तु तपस्तीव्रं महामुनिम् ।
उपेत्य बलभिद्देवो वारयामास वै पुनः ॥ २५
अशक्योऽर्थः समारब्धो नैतद्बुद्धिकृतं तव ।
प्रतिभास्यन्ति वै वेदास्तव चैव पितुश्च ते ॥ २६
यवक्रीत उवाच ।
न चैतदेवं क्रियते देवराजसमीप्सितम् ।
महता नियमेनाहं तप्स्ये घोरतरं तपः ॥ २७

समिद्धेऽग्नावुपकृत्याङ्गमङ्गं
होष्यामि वा मघवंस्तन्निबोध ।
यद्येतदेवं न करोषि कामं
ममेप्सितं देवराजेह सर्वम् ॥ २८

लोमश उवाच ।
निश्चयं तमभिज्ञाय मुनेस्तस्य महात्मनः ।
प्रतिवारणहेत्वर्थं बुद्ध्या संचिन्त्य बुद्धिमान् ॥ २९
तत इन्द्रोऽकरोद्रूपं ब्राह्मणस्य तपस्विनः ।
अनेकशतवर्षस्य दुर्बलस्य सयक्ष्मणः ॥ ३०
यवक्रीतस्य यत्तीर्थमुचितं शौचकर्मणि ।
भागीरथ्यां तत्र सेतुं वालुकाभिश्चकार सः ॥ ३१
यदाऽस्य वदतो वाक्यं न स चक्रे द्विजोत्तमः ।
वालुकाभिस्ततः शक्रो गङ्गां समभिपूरयन् ॥ ३२

---

इतरो भरद्वाजस्तपस्व्येव नतु शिष्यादिसंपन्नः । कीर्तिर्बाल्यात्प्रभृति भारत इति झ. पाठः ॥ १४ ॥ सर्वज्ञानानि सर्वशास्त्राणि ॥ २० ॥ विघातेन आत्मनाशनेन ॥ २२ ॥ न प्रतिभास्यन्तीति नकारावृत्त्या योज्यम् ॥ २६ ॥

वालुकामुष्टिमनिशं भागीरथ्यां व्यसर्जयत् ।
स्नातुमभ्यागतं शक्रो यवक्रीतमदर्शयत् ॥ ३३
तं ददर्श यवक्रीतो यत्नवन्तं निबन्धने ।
प्रहसंश्चाब्रवीद्वाक्यमिदं स मुनिपुङ्गवः ॥ ३४
किमिदं वर्तते ब्रह्मन्किंच ते ह चिकीर्षितम् ।
अतीव हि महान्यत्नः क्रियतेऽयं निरर्थकः ॥३५
इन्द्र उवाच ।
बन्धिष्ये सेतुना गङ्गां सुखः पन्था भविष्यति ।
क्लिश्यते हि जनस्तात तरमाणः पुनःपुनः ॥ ३६
यवक्रीत उवाच ।
नायं शक्यस्त्वया बद्धुं महानोघस्तपोधन ।
अशक्याद्विनिवर्तस्व शक्यमर्थं समारभ ॥ ३७
इन्द्र उवाच ।
यथैव भवता चेदं तपो वेदार्थमुद्यतम् ।
अशक्यं तद्वदस्माभिरयं भारः समाहितः ॥ ३८
यवक्रीत उवाच ।
यथा तव निरर्थोऽयमारम्भस्त्रिदशेश्वर ।
तथा यदि ममापीदं मन्यसे पाकशासन ॥ ३९
क्रियतां यद्भवेच्छक्यं त्वया सुरगणेश्वर ।
वरांश्च मे प्रयच्छान्यान्यैर्विद्वान्भवितास्म्यहम् ४०
लोमश उवाच ।
तस्मै प्रादाद्वरानिन्द्र उक्तवान्यान्महातपाः ।
प्रतिभास्यन्ति ते वेदाः पित्रा सह यथेप्सिताः ॥
यच्चान्यत्काङ्क्षसे कामं यवक्रीर्गम्यतामिति ।
स लब्धकामः पितरं समेत्याथेदमब्रवीत् ॥ ४२
यवक्रीत उवाच ।
प्रतिभास्यन्ति वै वेदा मम तातस्य चोभयोः ।
अति चान्यान्भविष्यावो वरा लब्धास्तथा मया ॥
भरद्वाज उवाच ।
दर्पस्ते भविता तात वराँल्लब्ध्वा यथेप्सितान् ।
स दर्पपूर्णः कृपणः क्षिप्रमेव विनङ्क्ष्यसि ॥ ४४
अत्राप्युदाहरन्तीमा गाथा देवैरुदाहृताः ।
मुनिरासीत्पुरा पुत्र बालधिर्नाम विश्रुतः ॥ ४५
स पुत्रशोकादुद्विग्नस्तपस्तेपे सुदुष्करम् ।
भवेन्मम सुतोऽमर्त्य इति तं लब्धवांश्च सः ॥ ४६
तस्य प्रसादो वै देवैः कृतो न त्वमरैः समः ।
नामर्त्यो विद्यते मर्त्यो निमित्तायुर्भविष्यति ४७
बालधिरुवाच ।
यथेमे पर्वताः शश्वत्तिष्ठन्ति सुरसत्तमाः ।
तावज्जीवेन्मम सुतो निर्वाणमुत मे मतः ॥ ४८
भरद्वाज उवाच ।
तस्य पुत्रस्तदा जज्ञे मेधावी क्रोधनस्तदा ।
स तु लब्धवरो दर्पादृषींश्चैवावमन्यत ॥ ४९
विकुर्वाणो मुनीनां च व्यचरत्स महीमिमाम् ।
आससाद महावीर्यं धनुषाक्षं मनीषिणम् ॥ ५०
तस्यापचक्रे मेधावी तं शशाप स वीर्यवान् ।
भव भस्मेति चोक्तः स न भस्म समपद्यत ॥ ५१
धनुषाक्षस्तु तं दृष्ट्वा मेधाविनमनामयम् ।
'मुनिस्तत्कारणं ज्ञात्वा स्वयं महिषरूपधृत् ।
शृङ्गेणाद्रीनचलयत्ततोऽयं भस्मसादभूत् ॥' ५२
निमित्तमस्य महर्षिर्भेदयामास पर्वतान् ।
स निमित्ते विनष्टे तु ममार सहसा शिशुः ॥ ५३
तं मृतं पुत्रमादाय विललाप ततः पिता ॥ ५४
लालप्यमानं तं दृष्ट्वा मुनयः परमार्तवत् ।
ऊचुर्वेदविदः सर्वे गाथां यां तां निबोध मे ॥५५
न दिष्टमर्थमत्येतुमीशोऽमर्त्यः कथंचन ।
महर्षिर्भेदयामास धनुषाक्षो महीधरान् ॥ ५६
एवं लब्ध्वा वरान्बाला दर्पपूर्णास्तपस्विनः ।
क्षिप्रमेव विनश्यन्ति यथा न स्यात्तथा भवान् ५७
एष रैभ्यो महावीर्यः पुत्रौ चास्य तथाविधौ ।
तं यथा पुत्र नाभ्येषि तथा कुर्यास्त्वतन्द्रितः ५८
स हि क्रुद्धः समर्थस्त्वां पुत्र पीडयितुं रुषा ।
रैभ्यश्चापि तपस्वी च कोपनश्च महानृषिः ॥ ५९
यवक्रीत उवाच ।
एवं करिष्ये मा तापं तात कार्षीः कथंचन ।

अमर्त्यः अमर इत्यर्थः ॥ ४६ ॥ अक्षयास्तन्निमित्तं मे सुतस्यायुर्भवेद्ध्रुवम् । इति झ. ध. पाठः ॥ ४८ ॥ निमित्तं पर्वतान्भेदयामासखण्डयामास ॥ ५२ ॥ दिष्टं दैवविहितम् ॥ ५५ ॥

सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

यथा हि मे भवान्मान्यस्तथा रैभ्यः पिता मम ६०
लोमश उवाच ।
उक्त्वा स पितरं श्लक्ष्णं यवक्रीरकुतोभयः ।
विप्रकुर्वन्नृषीनन्यानतुष्यत्परया मुदा ॥ ६१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

## अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

रैभ्याश्रमे तत्स्नुषायाः परावसुभार्याया दर्शनाज्जातकामेन यवक्रीतेन एकान्ते बलात्कारेण तदुपभोगः ॥ १ ॥ रुदत्या तया निवेदितवृत्तान्तेन रैभ्येण यवक्रीतहननाय जटाभ्यां कृत्यारक्षसोः सर्जनम् ॥ २ ॥ कृत्यया रूपसंपदा संमोह्य कमण्डलुहरणे राक्षसाभिद्रावितेन यवक्रीतेन स्वपितुरग्निहोत्रगृहप्रवेशः ॥३॥ तदाऽन्धेन द्वारकशूद्रेण निवारितस्य यवक्रीतस्य राक्षसेन हननम् ॥ ४ ॥

लोमश उवाच ।
चङ्क्रम्यमाणः स तदा यवक्रीरकुतोभयः ।
जगाम माधवे मासि रैभ्याश्रमपदं प्रति ॥ १
स ददर्शाश्रमे रम्ये पुष्पितद्रुमभूषिते ।
विचरन्तीं स्नुषां तस्य किन्नरीमिव भारत ॥ २
यवक्रीस्तामुवाचेदमुपतिष्ठस्व मामिति ।
निर्लज्जो लज्जया युक्तां कामेन हृतचेतनः ॥ ३
सा तस्य शीलमाज्ञाय तस्माच्छापाच्च बिभ्यती ।
तेजस्वितां च रैभ्यस्य तथेत्युक्त्वा जगाम ह ॥४
तत एकान्तमानीय लज्जयामास भारत ।
आजगाम तदा रैभ्यः स्वमाश्रममरिंदम ॥ ५
रुदतीं च स्नुषां दृष्ट्वा भार्यामार्तां परावसोः ।
सान्त्वयञ्श्लक्ष्णया वाचा पर्यपृच्छद्युधिष्ठिर ॥ ६
सा तस्मै सर्वमाचष्ट यवक्रीभाषितं शुभा ।
प्रत्युक्तं च यवक्रीतं प्रेक्षापूर्वं तथाऽऽत्मना ॥ ७
शृण्वानस्यैव रैभ्यस्य यवक्रेस्तद्विचेष्टनम् ।
दहन्निव तदा चेतः क्रोधः समभवन्महान् ॥ ८
स तदा मन्युनाऽऽविष्टस्तपस्वी कोपनो भृशम् ।
अवलुप्य जटामेकां जुहावाग्नौ सुसंस्कृते ॥ ९
ततः समभवन्नारी तस्या रूपेण संमिता ।
अवलुप्यापरां चापि जुहावाग्नौ जटां पुनः ॥ १०
ततः समभवद्रक्षो दीप्ताक्षं घोरदर्शनम् ।
अब्रूतां तौ तदा रैभ्यं किं कार्यं करवामहे ॥११
तावब्रवीदृषिः क्रुद्धो यवक्रीर्वध्यतामिति ।
जग्मतुस्तौ तथेत्युक्त्वा यवक्रीतजिघांसया ॥१२
ततस्तं समुपास्थाय कृत्या सृष्टा महात्मना ।
कमण्डलुं जहारास्य मोहयित्वा तु भारत ॥ १३
उच्छिष्टं तु यवक्रीतमपकृष्टकमण्डलुम् ।
तत उद्यतशूलः स राक्षसः समुपाद्रवत् ॥ १४
तमाद्रवन्तं संप्रेक्ष्य शूलहस्तं जिघांसया ।
यवक्रीः सहसोत्थाय प्राद्रवद्यत्र वै सरः ॥ १५
जलहीनं सरो दृष्ट्वा यवक्रीस्त्वरितः पुनः ।
जगाम सरितः सर्वास्ताश्चाप्यासन्विशोषिताः॥१६
स काल्यमानो घोरेण शूलहस्तेन रक्षसा ।
अग्निहोत्रे पितुर्भीतः सहसा प्रविवेश ह ॥ १७
स वै प्रविशमानस्तु शूद्रेणान्धेन रक्षिणा ।
निगृहीतो बलाद्द्वारि सोऽवातिष्ठत पार्थिव ॥१८
निगृहीतं तु शूद्रेण यवक्रीतं स राक्षसः ।
ताडयामास शूलेन स भिन्नहृदयोऽपतत् ॥ १९
यवक्रीतं स हत्वा तु राक्षसो रैभ्यमागमत् ।
अनुज्ञातस्तु रैभ्येण तया नार्या सहावसत् ॥ २०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

एकान्तमुन्नीय मज्जयामासेति झ. पाठः । तत्र एकान्तं उन्नीय एकान्ते कार्यं रतं समाप्य मज्जयामास समुद्रे इत्यर्थः ॥ ५ ॥ प्रत्युक्तं प्रत्याख्यातम् । मदुपरि बलात्कारं कृतवानित्युक्तवतीत्यर्थः ॥ ७ ॥ नारी कृत्या ॥ १० ॥ काल्यमानः सर्वतो निषिध्यमानः अग्निहोत्रे अग्निहोत्रशालायाम् ॥ १७ ॥ अवातिष्ठत बहिरेव ॥१८॥ अष्टत्रिंशदधिकशततमोऽध्यायः ॥१३८॥

## एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

द्वाररक्षकशूद्रेण निवेदितपुत्रमरणेन भरद्वाजेन रैभ्यस्यापि ज्येष्ठसुतेन हननरूपशापदानम् ॥ १ ॥ पुत्रमरणदुःखितेन भरद्वाजेन तद्देहदहनपूर्वकमग्नौ प्रवेशः ॥ २ ॥

लोमश उवाच ।
भरद्वाजस्तु कौन्तेय कृत्वा स्वाध्यायमाह्निकम् ।
समित्कलापमादाय प्रविवेश स्वमाश्रमम् ॥ १
तं स्म दृष्ट्वा पुरा सर्वे प्रत्युत्तिष्ठन्ति पावकाः ।
न त्वेनमुपतिष्ठन्ति हतपुत्रं तदाऽग्नयः ॥ २
वैकृतं त्वग्निहोत्रे स लक्षयित्वा महातपाः ।
तमन्धं शूद्रमासीनं गृहपालमथाब्रवीत् ॥ ३
किंनु मे नाग्नयः शूद्र प्रतिनन्दन्ति दर्शनम् ।
त्वं चापि न यथापूर्वं कच्चित्क्षेममिहाश्रमे ॥ ४
कच्चिन्न रैभ्यं पुत्रो मे गतवानल्पचेतनः ।
एतदाचक्ष्व मे शीघ्रं न हि शुद्ध्यति मे मनः ॥५
शूद्र उवाच ।
रैभ्यं यातो नूनमयं पुत्रस्ते मन्दचेतनः ।
तथाहि निहतः शेते राक्षसेन महात्मना ॥ ६
प्रकाल्यमानस्तेनायं शूलहस्तेन रक्षसा ।
अग्न्यगारं प्रतिद्वारि मया दोर्भ्यां निवारितः॥ ७
ततः स विहताशोऽत्र जलकामोऽशुचिर्ध्रुवम् ।
निहतः सोऽतिवेगेन शूलहस्तेन रक्षसा ॥ ८
लोमश उवाच ।
भरद्वाजस्तु तच्छ्रुत्वा शूद्रस्य विप्रियं महत् ।
गतासुं पुत्रमादाय विललाप सुदुःखितः ॥ ९

भरद्वाज उवाच ।
ब्राह्मणानां किलार्थाय ननु त्वं तप्तवांस्तपः ।
द्विजानामनधीता वै वेदाः संप्रतिभान्त्विति ॥१०
तथा कल्याणशीलस्त्वं ब्राह्मणेषु महात्मसु ।
अनागाः सर्वभूतेषु कर्कशत्वमुपेयिवान् ॥ ११
प्रतिषिद्धो मया तात रैभ्यावसथदर्शनात् ।
गतवानेव तं क्षुद्रं कालान्तकयमोपमम् ॥ १२
यः स जानन्महातेजा वृद्धस्यैकं ममात्मजम् ।
गतवानेव कोपस्य वशं परमदुर्मतिः ॥ १३
पुत्रशोकमनुप्राप्य एष रैभ्यस्य कर्मणा ।
त्यक्ष्यामि त्वामृते पुत्र प्राणानिष्टतमान्भुवि १४
यथाऽहं पुत्रशोकेन देहं त्यक्ष्यामि किल्बिषी ।
तथा ज्येष्ठः सुतो रैभ्यं हिंस्याच्छीघ्रमनागसम्॥१५
सुखिनो वै नरा येषां जात्या पुत्रो न विद्यते ।
ये पुत्रशोकमप्राप्य विचरन्ति यथासुखम् ॥ १६
ये तु पुत्रकृताच्छोकाद्भृशं व्याकुलचेतसः ।
शपन्तीष्टान्सखीनार्तास्तेभ्यः पापतरो नु कः १७
परासुश्च सुतो दृष्टः शप्तश्चेष्टः सखा मया ।
ईदृशीमापदं कोऽत्र द्वितीयोऽनुभविष्यति ॥ १८
लोमश उवाच ।
विलप्यैवं बहुविधं भरद्वाजोऽदहत्सुतम् ।
सुसमिद्धं ततः पश्चात्प्रविवेश हुताशनम् ॥ १९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

## चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

रैभ्ययाज्येन बृहद्द्युम्नेन सत्रे सहायत्वेन वृतयोरर्वावसुपरावस्वोस्तदर्थं गमनम् ॥ १ ॥ भार्यादिदृक्षया पुनराश्रमं गतेन परावसुना रात्रौ मृगभ्रमेण कृष्णाजिनसंवीतस्य रैभ्यस्य हननम् ॥ २ ॥ परावसुचोदनया बृहद्द्युम्नेन ब्रह्महत्याग्रस्त इति प्रोत्सार्यमाणेनार्वावसुना तपःप्रसादितसूर्यादिदेवेभ्यो रैभ्यभरद्वाजयवक्रीतोत्थानादिवरग्रहणम् ॥ ३ ॥ देवैर्यवक्रीतदुःखस्य विनोपदेशं वेदाभ्यासफलत्वकथनपूर्वकं रैभ्यादीनामुज्जीवनम् ॥ ४ ॥

लोमश उवाच ।

एतस्मिन्नेव काले तु बृहद्द्युम्नो महीपतिः ।

आह्निकं स्वाध्यायं प्रत्यहं कर्तव्यं ब्रह्मयज्ञम् ॥ १ ॥ हतपुत्रत्वेन आशौचयुक्तत्वात् ॥ २ ॥ शुद्ध्यति निःसंदेहं भवति ॥ ५ ॥ अग्न्यगारं प्रविष्टस्य रक्षोभयं न भवेदिति ॥ ७ ॥ शूद्रस्य शूद्रकृतं विप्रियं पुत्रनिरोधेन कृतम् ॥ ९ ॥ किल्बिषी शोकाक्रान्तः ॥ १५ ॥ एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

सत्रं तेने महाभागो रैभ्ययाज्यः प्रतापवान् ॥ १
तेन रैभ्यस्य वै पुत्रावर्वावसुपरावसू ।
वृतौ सहायौ सत्रार्थे बृहद्द्युम्नेन धीमता ॥ २
तत्र तौ समनुज्ञातौ पित्रा कौन्तेय जग्मतुः ।
आश्रमे त्वभवद्रैभ्यो भार्या चैव परावसोः ॥ ३
अथावलोककोऽगच्छद्गृहानेकः परावसुः ।
कृष्णाजिनेन संवीतं ददर्श पितरं वने ॥ ४
जघन्यरात्रे निद्रान्धः सावशेषे तमस्यपि ।
चरन्तं गहनेऽरण्ये मेने स पितरं मृगम् ॥ ५
मृगं तु मन्यमानेन पिता वै तेन हिंसितः ।
अकामयानेन तदा शरीरत्राणमिच्छता ॥ ६
तस्य स प्रेतकार्याणि कृत्वा सर्वाणि भारत ।
पुनरागम्य तत्सत्रमब्रवीद्भ्रातरं वचः ॥ ७
इदं कर्म न शक्तस्त्वं वोढुमेकः कथंचन ।
मया च हिंसितस्तातो मन्यमानेन वै मृगम् ॥ ८
सोऽस्मदर्थे व्रतं तात चर त्वं ब्रह्मघातिनाम् ।
समर्थो ह्यहमेकाकी कर्म कर्तुमिदं मुने ॥ ९
अर्वावसुरुवाच ।
करोतु वै भवान्सत्रं बृहद्द्युम्नस्य धीमतः ।
ब्रह्महत्यां चरिष्येऽहं त्वदर्थे नियतेन्द्रियः ॥ १०
लोमश उवाच ।
स तस्य ब्रह्महत्यायाः पारं गत्वा युधिष्ठिर ।
अर्वावसुस्तदा सत्रमाजगाम पुनर्मुनिः ॥ ११
ततः परावसुर्दृष्ट्वा भ्रातरं समुपस्थितम् ।
बृहद्द्युम्नमुवाचेदं वचनं हर्षगद्गदम् ॥ १२
एष ते ब्रह्महा यज्ञं मा द्रष्टुं प्रविशेदिति ।
ब्रह्महा प्रेक्षितेनापि पीडयेत्त्वामसंशयम् ॥ १३
लोमश उवाच ।
तच्छ्रुत्वैव तदा राजा प्रेष्यानाह स विट्पते ।
प्रेष्यैरुत्सार्यमाणस्तु राजन्नर्वावसुस्तदा ।
न मया ब्रह्महत्येयं कृतेत्याह पुनःपुनः ॥ १४
उच्यमानोऽसकृत्प्रेष्यैर्ब्रह्महा इति भारत ।
नैव स्म प्रतिजानामि ब्रह्महत्यां स्वयंकृताम् ।
मम भ्रात्रा कृतमिदं मया स परिमोक्षितः ॥१५
स तथा प्रवदन्क्रोधात्तैश्च प्रेष्यैः प्रभाषितः ।
तूष्णीं जगाम ब्रह्मर्षिर्वनमेव महातपाः ॥ १६
उग्रं तपः समास्थाय दिवाकरमथाश्रितः ।
रहस्यवेदं कृतवान्सूर्यस्य द्विजसत्तमः ॥ १७
मूर्तिमांस्तं ददर्शाथ स्वयमग्रभुगव्ययः ॥ १८
प्रीतास्तस्याभवन्देवाः कर्मणाऽर्वावसोर्नृप ।
तं ते प्रवरयामासुर्निरासुश्च परावसुम् ॥ १९
ततो देवा वरं तस्मै ददुरग्निपुरोगमाः ॥ २०
स चापि वरयामास पितुरुत्थानमात्मनः ।
अनागस्त्वं ततो भ्रातुः पितुश्चास्मरणं वधे ॥ २१
भरद्वाजस्य चोत्थानं यवक्रीतस्य चोभयोः ।
प्रतिष्ठां चापि वेदस्य सौरस्य द्विजसत्तमः ॥ २२
एवमस्त्विति तं देवाः प्रोचुश्चापि वरान्ददुः ।
ततः प्रादुर्बभूवुस्ते सर्व एव युधिष्ठिर ॥ २३
अथाब्रवीद्यवक्रीतो देवानग्निपुरोगमान् ।
समधीतं मया ब्रह्म व्रतानि चरितानि च ॥२४
कथं च रैभ्यः शक्तो मामधीयानं तपस्विनम् ।
तथायुक्तेन विधिना निहन्तुममरोत्तमाः ॥ २५
देवा ऊचुः ।
मैवं कृथा यवक्रीत यथा वदसि वै मुने ।
ऋते गुरुमधीता हि स्वयं वेदास्त्वया पुरा ॥२६
अनेन तु गुरून्दुःखात्तोषयित्वाऽऽत्मकर्मणा ।
कालेन महता क्लेशाद्ब्रह्माधिगतमुत्तमम् ॥ २७
लोमश उवाच ।
यवक्रीतमथोक्त्वैवं देवाः साग्निपुरोगमाः ।
संजीवयित्वा तान्सर्वान्पुनर्जग्मुस्त्रिविष्टपम् ॥२८
'ततो वै स यवक्रीतो ब्रह्मचर्यं चचार ह ।
अष्टादश च वर्षाणि त्रिंशतं च युधिष्ठिर ॥' २९

---

अवलोककः अवलोकनार्थी । गृहान्भार्याम् ॥ ४ ॥ जघान रात्राविति ध. पाठः ॥५॥ चर त्वं ब्रह्मरक्षणे इति ध. पाठः ॥९॥ विट्पते हे प्रजाधीश ॥१४॥ प्रभाषितो मिथ्यावाद्यसीत्यधिक्षिप्तः ॥ १६ ॥ रहस्यवेदं सूर्यमन्त्रप्रकाशकं वेदम् ॥ १७ ॥ मूर्तिमान्सूर्यस्तं द्विजं ददर्श आत्मानं दर्शयामास ॥ १८ ॥ तं देवाः प्रकर्षेण वरयामासुः । निरासुर्निराचक्रुर्यज्ञादिति शेषः ॥ १९ ॥ प्रतिष्ठां संप्रदायप्रवृत्तिम् । सौरस्य सूर्यप्रकाशकस्य ॥ २२ ॥ समधीतं सम्यक्प्राप्तम् । ब्रह्म वेदः ॥ २४ ॥ चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

आश्रमस्तस्य पुण्योऽयं सदापुष्पफलद्रुमः । अत्रोष्य राजशार्दूल सर्वपापैः प्रमोक्ष्यसे ॥ ३०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

---

## एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

लोमशचोदनया युधिष्ठिरेण कैलासादिगिरिप्रवेशः ॥ १ ॥

लोमश उवाच ।
उशीरबीजं मैनाकं गिरिं श्वेतं च भारत ।
समतीतोऽसि कौन्तेय कालशैलं च पार्थिव ॥ १
एषा गङ्गा सप्तविधा राजते भरतर्षभ ।
स्थानं विरजसं पुण्यं यत्राग्निर्नित्यमिध्यते ॥ २
एतद्वै मानुषेणाद्य न शक्यं द्रष्टुमद्भुतम् ।
समाधिं कुरुताव्यग्रास्तीर्थान्येतानि द्रक्ष्यथ ॥ ३
एतद्द्रक्ष्यसि देवानामाक्रीडं च रणाङ्कितम् ।
अतिक्रान्तोसि कौन्तेय कालशैलं च पर्वतम् ॥ ४
श्वेतं गिरिं प्रवेक्ष्यामो मन्दरं चैव पर्वतम् ।
यत्र माणिवरो यक्षः कुबेरश्चैव यक्षराट् ॥ ५
अष्टाशीतिसहस्राणि गन्धर्वाः शीघ्रगामिनः ।
तथा किंपुरुषा राजन्यक्षाश्चैव चतुर्गुणाः ॥ ६
अनेकरूपसंस्थाना नानाप्रहरणाश्च ते ।
यक्षेन्द्रं मनुजश्रेष्ठ माणिभद्रमुपासते ॥ ७
तेषामृद्धिरतीवात्र गतौ वायुसमाश्च ते ।
स्थानात्प्रच्यावयेयुर्ये देवराजमपि ध्रुवम् ॥ ८
तैस्तात बलिभिर्गुप्ता यातुधानैश्च रक्षिताः ।
दुर्गमाः पर्वताः पार्थ समाधिं परमं कुरु ॥ ९
कुबेरसचिवाश्चान्ये रौद्रा मैत्राश्च राक्षसाः ।
तैः समेष्याम कौन्तेय यत्तो विक्रमणे भव ॥१०
कैलासः पर्वतो राजन्षड्योजनशतोच्छ्रितः ।
यत्र देवाः समायान्ति विशाला यत्र भारत ॥११
असङ्ख्येयास्तु कौन्तेय यक्षराक्षसकिन्नराः ।
नागाः सुपर्णा गन्धर्वाः कुबेरसदनं प्रति ॥ १२
तान्विगाहस्व पार्थाद्य तपसा च दमेन च ।
रक्ष्यमाणो मया राजन्भीमसेनबलेन च ॥ १३
स्वस्ति ते वरुणो राजा यमश्च समितिंजयः ।
गङ्गा च यमुना चैव पर्वताश्च दिशन्तु ते ॥ १४
मरुतश्च सहाश्विभ्यां सरितश्च सरांसि च ।
स्वस्ति देवासुरेभ्यश्च वसुभ्यश्च महाद्युते ॥ १५
इन्द्रस्य जाम्बूनदपर्वताद्वै
शृणोमि घोषं तव देवि गङ्गे ।
गोपाययेमं सुभगे गिरिभ्यः
सर्वाजमीढापचितं नरेन्द्रम् ॥ १६
ददस्व शर्म प्रविविक्षतोऽस्य
शैलानिमाञ्छैलसुते नृपस्य ।
'शिवप्रदा सर्वसरित्प्रधाने
सभ्रातृकस्येह युधिष्ठिरस्य ।'
उक्त्वा तथा सागरगां स विप्रो
यत्तो भवस्वेति शशास पार्थम् ॥ १७
युधिष्ठिर उवाच ।
अपूर्वोऽयं संभ्रमो लोमशस्य
कृष्णां च सर्वे रक्षत मा प्रमादः ।
देशो ह्ययं दुर्गतमो मतोऽस्य
तस्मात्परं शौचमिहाचरध्वम् ॥ १८
वैशंपायन उवाच ।
ततोऽब्रवीद्भीममुदारवीर्यं
कृष्णां यत्तः पालय भीमसेन ।
शून्येऽर्जुनेऽसन्निहिते च तात
त्वामेव कृष्णा भजते भयेषु ॥ १९

---

कैलासं चापि पर्वतम् इति क. ध. पाठः ॥ १ ॥ यत्राग्निर्नित्यमिध्यत इति त्रियोगिनारायणाख्यं हरिद्वारात् परतः स्थानमस्ति ॥ २ ॥ विशाला बदरी ॥ ११ ॥ इन्द्रस्य इन्द्रसंबन्धिनः । जाम्बूनदं सुवर्णं तन्मयात्पर्वतान्मेरोः । आजमीढवंशे अपचितं पूजितं श्रेष्ठमित्यर्थः ॥ १६ ॥ ददस्व देहि ॥ १७ ॥ शौचं वाङ्मनःकायशुद्धिम् ॥ १८ ॥

ततो महात्मा स यमौ समेत्य
मूर्धन्युपाघ्राय विमृज्य गात्रे ।
उवाच तौ बाष्पकलं स राजा
मा भैष्टमागच्छतमप्रमत्तौ ॥ २०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

## द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

भीमेन दुर्गमे गमनाक्षमतया युधिष्ठिरनिवारितानां द्रौपद्यादीनां वहनाङ्गीकारः ॥ १ ॥ पथि कुलिन्दाधिपतिना सुबाहुना पूजितैर्युधिष्ठिरादिभिस्तस्मिन्भृत्यवर्गस्थापनपूर्वकमर्जुनदिदृक्षया गन्धमादनंप्रति प्रस्थानम् ॥ २ ॥

युधिष्ठिर उवाच ।
अन्तर्हितानि भूतानि रक्षांसि बलवन्ति च ।
अग्निना तपसा चैव शक्यं गन्तुं वृकोदर ॥ १
सन्निवर्तय कौन्तेय क्षुत्पिपासे बलाश्रयात् ।
ततो बलं च दाक्ष्यं च संश्रयस्व वृकोदर ॥ २
ऋषेस्त्वया श्रुतं वाक्यं कैलासं पर्वतं प्रति ।
बुद्ध्या प्रपश्य कौन्तेय कथं कृष्णा गमिष्यति॥३
अथवा सहदेवेन धौम्येन च समं विभो ।
सूतैः पौरोगवैश्चैव सर्वैश्च परिचारकैः ॥ ४
रथैरश्वैश्च ये चान्ये विप्राः क्लेशसहाः पथि ।
सर्वैस्त्वं सहितो भीम निवर्तस्वायतेक्षण ॥ ५
त्रयो वयं गमिष्यामो लघ्वाहारा यतव्रताः ।
अहं च नकुलश्चैव लोमशश्च महातपाः ॥ ६
ममागमनमाकाङ्क्षन्गङ्गाद्वारे समाहितः ।
वसेह द्रौपदीं रक्षन्यावदागमनं मम ॥ ७
भीम उवाच ।
राजपुत्री श्रमेणार्ता दुःखार्ता चैव भारत ।
व्रजत्येव हि कल्याणी श्वेतवाहदिदृक्षया ॥ ८
तव चाप्यरतिस्तीव्रा वर्तते तमपश्यतः ।
गुडाकेशं महात्मानं संग्रामेष्वपलायिनम् ।
किं पुनः सहदेवं च मां च कृष्णां च भारत ॥ ९
द्विजाः कामं निवर्तन्तां सर्वे च परिचारकाः ।
सूताः पौरोगवाश्चैव यं च मन्येत नो भवान् ॥ १०
न ह्यहं हातुमिच्छामि भवन्तमिह कर्हिचित् ।
शैलेऽस्मिन्राक्षसाकीर्णे दुर्गेषु विषमेषु च ॥ ११
इयं चापि महाभागा राजपुत्री पतिव्रता ।
त्वामृते पुरुषव्याघ्र नोत्सहेद्विनिवर्तितुम् ॥ १२
तथैव सहदेवोऽयं सततं त्वामनुव्रतः ।
न जातु विनिवर्तेत मतज्ञो ह्यहमस्य वै ॥ १३
अपिचात्र महाराज सव्यसाचिदिदृक्षया ।
सर्वे लालसभूताः स्म तस्माद्यास्यामहे सह ॥ १४
यद्यशक्यो रथैर्गन्तुं शैलोऽयं बहुकन्दरः ।
पद्भिरेव गमिष्यामो मा राजन्विमना भव ॥ १५
अहं वहिष्ये पाञ्चालीं यत्रयत्र न शक्ष्यति ।
इति मे वर्तते बुद्धिर्मा राजन्विमना भव ॥ १६
सुकुमारौ तथा वीरौ माद्रीनन्दिकरावुभौ ।
दुर्गे संतारयिष्यामि यत्राशक्तौ भविष्यतः ॥१७
युधिष्ठिर उवाच ।
एवं ते भाषमाणस्य बलं भीमाभिवर्धताम् ।
यत्त्वमुत्सहसे वोढुं पाञ्चालीं विपुलेऽध्वनि ॥१८
यमजौ चापि भद्रं ते नैतदन्यत्र विद्यते ।
बलं तव यशश्चैव धर्मः कीर्तिश्च वर्धताम् ॥ १९
यत्त्वमुत्सहसे नेतुं भ्रातरौ सह कृष्णया ।
मा ते ग्लानिर्महाबाहो मा च तेऽस्तु पराभवः ॥
वैशंपायन उवाच ।
ततः कृष्णाऽब्रवीद्वाक्यं प्रहसन्ती मनोरमा ।
गमिष्यामि न संतापः कार्यो मां प्रति भारत २१
लोमश उवाच ।
तपसा शक्यते गन्तुं पर्वतो गन्धमादनः ।
तपसा चैव कौन्तेय सर्वे योक्ष्यामहे वयम् ॥२२
नकुलः सहदेवश्च भीमसेनश्च पार्थिव ।

मैष्टमिति च्छेदः ॥ २० ॥

एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

अहं च त्वं च कौन्तेय द्रक्ष्यामः श्वेतवाहनम् २३
वैशंपायन उवाच ।
एवं संभाषमाणास्ते सुबाहुविषयं महत् ।
ददृशुर्मुदिता राजन्प्रभूतगजवाजिमत् ॥ २४
किराततङ्गणाकीर्णं पुलिन्दशतसंकुलम् ।
हिमवत्यमरैर्जुष्टं बह्वाश्चर्यसमाकुलम् ।
सुबाहुश्चापि तान्दृष्ट्वा पूजया प्रत्यगृह्णत ॥ २५
विषयान्ते कुलिन्दानामीश्वरः प्रीतिपूर्वकम् ।
तत्र ते पूजितास्तेन सर्व एव सुखोषिताः ॥ २६
प्रतस्थुर्विमले सूर्ये हिमवन्तं गिरिं प्रति ।
इन्द्रसेनमुखांश्चापि भृत्यान्पौरोगवांस्तथा ॥ २७
सूदांश्च पारिबर्हांश्च द्रौपद्याः सर्वशो नृप ।
राज्ञः कुलिन्दाधिपतेः परिदाय महारथाः ॥ २८
पद्भिरेव महावीर्या ययुः कौरवनन्दनाः ।
ते शनैः प्राद्रवन्सर्वे कृष्णया सह पाण्डवाः ।
तस्माद्देशात्सुसंहृष्टा द्रष्टुकामा धनंजयम् ॥ २९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

## त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

धनंजयादर्शनदुःखितेन युधिष्ठिरेण भीमंप्रति धनंजयप्रशंसनपूर्वकं तद्दर्शनाय गन्धमादनप्रवेशनिश्चयः ॥ १ ॥

युधिष्ठिर उवाच ।
भीमसेनयमौ चोभौ पाञ्चालि च निबोधत ।
नास्ति भूतस्य नाशो वै पश्यतास्मान्वनेचरान् ॥ १
दुर्बलाः क्लेशिताः स्मेति यद्ब्रवामेतरेतरम् ।
अशक्येऽपि व्रजामो यद्धनंजयदिदृक्षया ॥ २
तन्मे दहति गात्राणि तूलराशिमिवानलः ।
यच्च वीरं न पश्यामि धनंजयमुपान्तिके ॥ ३
तस्यादर्शनतप्तं मां सानुजं वनमास्थितम् ।
याज्ञसेन्याः परामर्शः स च वीर दहत्युत ॥ ४
नकुलात्पूर्वजं पार्थं न पश्याम्यमितौजसम् ।
अजेयमुग्रधन्वानं तेन तप्ये वृकोदर ॥ ५
तीर्थानि चैव रम्याणि वनानि च सरांसि च ।
चरामि सह युष्माभिस्तस्य दर्शनकाङ्क्षया ॥ ६
पञ्चवर्षाण्यहं वीरं सत्यसन्धं धनंजयम् ।
यन्न पश्यामि बीभत्सुं तेन तप्ये वृकोदर ॥ ७
तं वै श्यामं गुडाकेशं सिंहविक्रान्तगामिनम् ।
न पश्यामि महाबाहुं तेन तप्ये वृकोदर ॥ ८
कृतास्त्रं निपुणं युद्धेऽप्रतिमानं धनुष्मताम् ।
न पश्यामि कुरुश्रेष्ठ तेन तप्ये वृकोदर ॥ ९
चरन्तमरिसङ्घेषु क्रुद्धं कालमिवानघ ।
प्रभिन्नमिव मातङ्गं सिंहस्कन्धं धनंजयम् ॥ १०
यः स शक्रादनवरो वीर्येण च बलेन च ।
यमयोः पूर्वजः पार्थः श्वेताश्वोऽमितविक्रमः ॥ ११
'नारायणसमो युद्धे सत्यसन्धो दृढव्रतः ।
तं ममापश्यतो भीम न शान्तिर्हृदयस्य वै ॥' १२
दुःखेन महताऽऽविष्टश्चिन्तयामि दिवानिशम् ।
अजेयमुग्रधन्वानं तेन तप्ये वृकोदर ॥ १३
सततं यः क्षमाशीलः क्षिप्यमाणोऽप्यणीयसा ।
ऋजुमार्गप्रपन्नस्य शर्मदाता भयस्य च ॥ १४
स तु जिह्मप्रवृत्तस्य माययाऽभिजिघांसतः ।
अपि वज्रधरस्यापि भवेत्कालविषोपमः ॥ १५
शत्रोरपि प्रपन्नस्य सोऽनृशंसः प्रतापवान् ।
दाताऽभयस्य बीभत्सुरमितात्मा महाबलः ॥ १६
सर्वेषामाश्रयोऽस्माकं रणेऽरीणां प्रमर्दिता ।
आहर्ता सर्वरत्नानां सर्वेषां नः सुखावहः ॥ १७
रत्नानि यस्य वीर्येण दिव्यान्यासन्पुरा मम ।

परिदाय रक्षार्थं समर्प्य ॥ २८ ॥ द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

भूतस्य प्राक्तनकर्मणः ॥ १ ॥ परामर्शः केशेषु ग्रहणम् । तस्य दर्शनतृष्णं मामिति झ. पाठः ॥ ४ ॥ अप्रतिमानं नास्ति प्रतिमानं सादृश्यं यस्य सोऽप्रतिमानस्तम् ॥ ९ ॥ प्रभिन्नं स्रवन्मदम् ॥ १० ॥ अनवरोऽहीनः ॥ ११ ॥ अमितात्मा महामनाः ॥ १६ ॥

बहूनि बहुजातीनि यानि प्राप्तः सुयोधनः ॥१८
यस्य बाहुबलाद्वीर सभा चासीत्पुरा मम ।
सर्वरत्नमयी ख्याता त्रिषु लोकेषु पाण्डव ॥ १९
वासुदेवसमं वीर्ये कार्तवीर्यसमं युधि ।
अजेयममितं युद्धे तं न पश्यामि फल्गुनम् ॥२०
संकर्षणं महावीर्यं त्वां च भीमापराजितम् ।
अनुयातः स्ववीर्येण वासुदेवं च शत्रुहा ॥ २१
यस्य बाहुबले तुल्यः प्रभावे च पुरंदरः ।
जवे वायुर्मुखे सोमः क्रोधे मृत्युः सनातनः ॥२२
ते वयं तं नरव्याघ्रं सर्वे वीर दिदृक्षवः ।
प्रवेक्ष्यामो महाबाहो पर्वतं गन्धमादनम् ॥ २३
विशाला बदरी यत्र नरनारायणाश्रमः ।
तं सदाऽध्युषितं यक्षैर्द्रक्ष्यामो गिरिमुत्तमम् ॥२४
कुबेरनलिनीं रम्यां राक्षसैरभिसेविताम् ।
पद्भिरेव गमिष्यामस्तप्यमाना महत्तपः ॥ २५
नातप्ततपसा शक्यो गन्तुं देशो वृकोदर ।
न नृशंसेन लुब्धेन नाप्रशान्तेन भारत ॥ २६
तत्र सर्वे गमिष्यामो भीमार्जुनपदैषिणः ।
सायुधा बद्धनिस्त्रिंशाः सार्धं विप्रैर्महाव्रतैः ॥२७
मक्षिकादंशमशकान्सिंहान्व्याघ्रान्सरीसृपान् ।
प्राप्नोत्यनियतः पार्थ नियतस्तान्न पश्यति ॥ २८
ते वयं नियतात्मानः पर्वतं गन्धमादनम् ।
प्रवेक्ष्यामो मिताहारा धनंजयदिदृक्षवः ॥ २९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

## चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

पाण्डवैर्मन्दरगिरिगमनम् ॥ १ ॥ तथा आकाशगङ्गासेवनम् ॥ २ ॥ तथा नरकासुरास्थिराशिदर्शनम् ॥ ३ ॥ लोमशेन पाण्डवान्प्रति विष्णुना नरकासुरवधप्रकारकथनम् ॥ ४ ॥ तथा वराहरूपिणा हरिणा भारावमग्नभूम्युद्धरणकथनम् ॥ ५ ॥

[लोमश उवाच ।
द्रष्टारः पर्वताः सर्वे नद्यः सपुरकाननाः ।
तीर्थानि चैव श्रीमन्ति स्पृष्टं च सलिलं करैः ॥१
पर्वतं मन्दरं दिव्यमेष पन्थाः प्रयास्यति ।
समाहिता निरुद्विग्नाः सर्वे भवत पाण्डवाः ॥ २
अयं देवनिवासो वै गन्तव्यो वो भविष्यति ।
ऋषीणां चैव दिव्यानां निवासः पुण्यकर्मणां ॥३
एषा शिवजला पुण्या याति सौम्य महानदी ।
बदरीप्रभवा राजन्देवर्षिगणसेविता ॥ ४
एषा वैहायसैर्नित्यं वालखिल्यैर्महात्मभिः ।
अर्चिता चोपयाता च गन्धर्वैश्च महात्मभिः ॥५
अत्र साम स्म गायन्ति सामगाः पुण्यनिःस्वनाः ।
मरीचिः पुलहश्चैव भृगुश्चैवाङ्गिरास्तथा ॥ ६
अत्राह्निकं सुरश्रेष्ठो जपते समरुद्गणः ।
साध्याश्चैवाश्विनौ चैव परिधावन्ति तं तदा ॥७
चन्द्रमाः सह सूर्येण ज्योतींषि च ग्रहैः सह ।
अहोरात्रविभागेन नदीमेनामनुव्रजन् ॥ ८
एतस्याः सलिलं मूर्ध्नि वृषाङ्कः पर्यधारयत् ।
गङ्गाद्वारे महाभाग येन लोकस्थितिर्भवेत् ॥ ९
एतां भगवतीं देवीं भवन्तः सर्व एव हि ।
प्रयतेनात्मना तात प्रतिगम्याभिवादत ॥ १०
तस्य तद्वचनं श्रुत्वा लोमशस्य महात्मनः ।
आकाशगङ्गां प्रयताः पाण्डवास्तेऽभ्यवादयन् ११
अभिवाद्य च ते सर्वे पाण्डवा धर्मचारिणः ।
पुनः प्रयाताः संहृष्टाः सर्वैर्ऋषिगणैः सह ॥ १२
ततो दूरात्प्रकाशन्तं पाण्डुरं मेरुसंनिभम् ।

अमितमहिंसितं अजितमितियावत् ॥ २० ॥ हे भीम ॥ २१ ॥ अनियतोऽशुचिः ॥ २८ ॥ त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

भोद्रष्टारः सर्वे मन्दरादन्ये पर्वता दृष्टा इति शेषः ॥ १ ॥ महानदी गङ्गा अलकनन्दा वा ॥ ४ ॥ उपयाता इष्टसिद्ध्यर्थं प्रार्थिता ॥ ५ ॥ आह्निकं नैयमिकं जपम् । परिधावन्ति परिचरन्ति । तमिन्द्रम् ॥ ७ ॥ वादत वादयत । अक्षरलोप आर्षः ॥ १० ॥ पाण्डुरं श्वेतम् । अस्थ्नां राशिमिति शेषः ॥१३॥

ददृशुस्ते नरश्रेष्ठा विकीर्णं सर्वतोदिशम् ॥ १४
तान्प्रष्टुकामान्विज्ञाय पाण्डवान्स तु लोमशः ।
उवाच वाक्यं वाक्यज्ञः शृणुध्वं पाण्डुनन्दनाः ॥
एतद्विकीर्णं सुश्रीमत्कैलासशिखरोपमम् ।
यत्पश्यसि नरश्रेष्ठ पर्वतप्रतिमं स्थितम् ॥ १५
एतान्यस्थीनि दैत्यस्य नरकस्य महात्मनः ।
पर्वतप्रतिमं भाति पर्वतप्रस्तराश्रितम् ॥ १६
पुरातनेन देवेन विष्णुना परमात्मना ।
दैत्यो विनिहतस्तेन सुरराजहितैषिणा ॥ १७
दशवर्षसहस्राणि तपस्तप्यन्महामनाः ।
ऐन्द्रं प्रार्थयते स्थानं तपःस्वाध्यायविक्रमात् ॥ १८
तपोबलेन महता बाहुवेगबलेन च ।
नित्यमेव दुराधर्षो धर्षयन्स दितेः सुतः ॥ १९
स तु तस्य बलं ज्ञात्वा धर्मे च चरितव्रतम् ।
भयाभिभूतः संविग्नः शक्र आसीत्तदाऽनघ ॥ २०
तेन संचिन्तितो देवो मनसा विष्णुरव्ययः ।
सर्वत्रगः प्रभुः श्रीमानागतश्च स्थितो बभौ ॥ २१
ऋषयश्चापि तं सर्वे तुष्टुवुश्च दिवौकसः ॥ २२
तं दृष्ट्वा ज्वलमानश्रीर्भगवान्हव्यवाहनः ।
नष्टतेजाः समभवत्तस्य तेजोभिभर्त्सितः ॥ २३
तं दृष्ट्वा वरदं देवं विष्णुं देवगणेश्वरम् ।
प्राञ्जलिः प्रणतो भूत्वा नमस्कृत्य च वज्रभृत् ।
प्राह वाक्यं ततस्तत्त्वं यतस्तस्य भयं भवेत् ॥ २४
विष्णुरुवाच ।
जानामि ते भयं शक्र दैत्येन्द्रान्नरकात्ततः ।
ऐन्द्रं प्रार्थयते स्थानं तपःसिद्धेन कर्मणा ॥ २५
सोहमेनं तव प्रीत्या तपःसिद्धमपि ध्रुवम् ।
वियुनज्मि देहाद्देवेन्द्र मुहूर्तं प्रतिपालय ॥ २६
लोमश उवाच ।
तस्य विष्णुर्महातेजाः पाणिना चेतनां हरत् ।
स पपात ततो भूमौ गिरिराज इवाहतः ।
तस्यैतदस्थिसंघातं मायाविनिहतस्य वै ॥ २७
इदं द्वितीयमपरं विष्णोः कर्म प्रकाशते ॥ २८
नष्टा वसुमती कृत्स्ना पाताले चैव मज्जिता ।
पुनरुद्धरिता तेन वाराहेणैकशृङ्गिणा ॥ २९
युधिष्ठिर उवाच ।
भगवन्विस्तरेणेमां कथां कथय तत्त्वतः ॥ ३०
कथं तेन सुरेशेन नष्टा वसुमती तदा ।
योजनानां शतं ब्रह्मन्पुनरुद्धरिता तदा ॥ ३१
केन चैव प्रकारेण जगतो धरणी ध्रुवा ।
शिवा देवी महाभागा सर्वसस्यप्ररोहिणी ।
कस्य चैव प्रभावाद्धि योजनानां शतं गता ॥ ३२
केन तद्वीर्यसर्वस्वं दर्शितं परमात्मनः ।
एतत्सर्वं यथातत्त्वमिच्छामि द्विजसत्तम ।
श्रोतुं विस्तरशः सर्वं त्वं हि तस्य प्रतिश्रयः ॥ ३३
लोमश उवाच ।
यत्तेऽहं परिपृष्टोऽस्मि कथामेतां युधिष्ठिर ।
तत्सर्वमखिलेनेह श्रूयतां मम भाषतः ॥ ३४
पुरा कृतयुगे तात वर्तमाने भयंकरे ।
यमत्वं कारयामास आदिदेवः पुरातनः ॥ ३५
यमत्वं कुर्वतस्तस्य देवदेवस्य धीमतः ।
न तत्र म्रियते कश्चिज्जायते वा तथाऽच्युत ॥ ३६
वर्धन्ते पक्षिसङ्घाश्च तथा पशुगवेडकम् ।
गवाश्वं च मृगाश्चैव सर्वे ते पिशिताशनाः ॥ ३७
तथा पुरुषशार्दूल मानुषाश्च परंतप ।
सहस्रशो ह्ययुतशो वर्धन्ते सलिलं यथा ॥ ३८
एतस्मिन्संकुले तात वर्तमाने भयंकरे ।
अतिभाराद्वसुमती योजनानां शतं गता ॥ ३९
सा वै व्यथितसर्वाङ्गी भारेणाक्रान्तचेतना ।
नारायणं वरं देवं प्रपन्ना शरणं गता ॥ ४०
पृथिव्युवाच ।
भगवंस्त्वत्प्रसादाद्धि तिष्ठेयं सुचिरं त्विह ।
भारेणास्मि समाक्रान्ता न शक्नोस्मि स्म वर्तितुम् ॥ ४१
ममेमं भगवन्भारं व्यपनेतुं त्वमर्हसि ।

---

पाणिना चपेटाघातेन चेतनां हरत्प्राणान्जहार ॥ २७ ॥ गता अधस्तादिति शेषः ॥ ३२ ॥ पशवश्च गावश्च एडका मेषाश्च पशुगवेडकम् ॥ ३७ ॥

शरणागताऽसि ते देव प्रसादं कुरु मे विभो ॥४२
तस्यास्तद्वचनं श्रुत्वा भगवानक्षरः प्रभुः ।
प्रोवाच वचनं हृष्टः श्राव्याक्षरसमीरितम् ॥ ४३
न ते महि भयं कार्यं भारार्ते वसुधारिणि ।
अयमेवं तथा कुर्मि यथा लघ्वी भविष्यसि ॥४४
लोमश उवाच ।
स तां विसर्जयित्वा तु वसुधां शैलकुण्डलाम् ।
ततो वराहः संवृत्त एकशृङ्गो महाद्युतिः ॥ ४५
रक्ताभ्यां नयनाभ्यां तु भयमुत्पादयन्निव ।
धूमं च ज्वलयँल्लक्ष्म्या तत्र देशे व्यवर्धत ॥ ४६
स गृहीत्वा वसुमतीं शृङ्गेणैकेन भास्वता ।
योजनानां शतं वीर समुद्धरति सोऽक्षरः ॥ ४७
तस्यां चोद्धार्यमाणायां संक्षोभः समजायत ।
देवाः संक्षुभिताः सर्वे ऋषयश्च तपोधनाः ॥ ४८
हाहाभूतमभूत्सर्वं त्रिदिवं व्योम भूस्तथा ।
न पर्यवस्थितः कश्चिद्देवो वा मानुषोपि वा ॥४९
ततो ब्रह्माणमासीनं ज्वलमानमिव श्रिया ।
देवाः सर्षिगणाश्चैव उपतस्थुरनेकशः ॥ ५०
उपसर्प्य च देवेशं ब्रह्माणं लोकसाक्षिकम् ।
भूत्वा प्राञ्जलयः सर्वे वाक्यमुच्चारयंस्तदा ॥ ५१
लोकाः संक्षुभिताः सर्वे व्याकुलं च चराचरम् ।
समुद्राणां च संक्षोभस्त्रिदशेश प्रकाशते ॥ ५२
सैषा वसुमती कृत्स्ना योजनानां शतं गता ।
किमेतत्किंप्रभावेण येनेदं व्याकुलं जगत् ।
आख्यातु नो भवाञ्शीघ्रं विसंज्ञाः स्मेह सर्वशः ॥

ब्रह्मोवाच ।
असुरेभ्यो भयं नास्ति युष्माकं कुत्रचित्कचित् ।
श्रूयतां यत्कृते त्वेष संक्षोभो जायतेऽमराः ॥५४
योसौ सर्वत्रगः श्रीमानक्षरात्मा व्यवस्थितः ।
तस्य प्रभावात्संक्षोभस्त्रिदिवस्य प्रकाशते ॥ ५५
यैषा वसुमती कृत्स्ना योजनानां शतं गता ।
समुद्धृता पुनस्तेन विष्णुना परमात्मना ॥ ५६
तस्यामुद्धार्यमाणायां संक्षोभः समजायत ।
एवं भवन्तो जानन्तु च्छिद्यतां संशयश्च वः ॥५७
देवा ऊचुः ।
क तद्भूतं वसुमतीं समुद्धरति हृष्टवत् ।
तं देशं भगवन्ब्रूहि तत्र यास्यामहे वयम् ॥ ५८
ब्रह्मोवाच ।
हन्त गच्छत भद्रं वो नन्दने पश्यत स्थितम् ।
एषोत्र भगवाञ्श्रीमान्सुपर्णः संप्रकाशते ॥ ५९
वाराहेणैव रूपेण भगवाँल्लोकभावनः ।
कालानल इवाभाति पृथिवीतलमुद्धरन् ॥ ६०
एतस्योरसि सुव्यक्तं श्रीवत्समभिराजते ।
पश्यध्वं विबुधाः सर्वे भूतमेतदनामयम् ॥ ६१
लोमश उवाच ।
ततो दृष्ट्वा महात्मानं श्रुत्वा चामन्त्र्य चामराः ।
पितामहं पुरस्कृत्य जग्मुर्देवा यथागतम् ॥ ६२
वैशंपायन उवाच ।
श्रुत्वा तु तां कथां सर्वे पाण्डवा जनमेजय ।
लोमशादेशितेनाशु यथा जग्मुः प्रहृष्टवत् ॥ ६३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

## पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

गन्धमादनं प्रस्थितेषु पाण्डवेषु मध्येमार्गं महावृष्टेः प्रादुर्भावः ॥ १ ॥ तदा पादपाद्यन्तरितैस्तैर्वृष्ट्युपरमे पुनः प्रस्थानम् ॥ २ ॥

वैशंपायन उवाच ।
ते शूराः सज्जधन्वानस्तूणवन्तः समार्गणाः ।

न ते लया । हे महि । कुर्मि करोमि ॥ ४४ ॥ धूमं धूपम् । ज्वलयन्निति हेतौ शतृप्रत्ययः । यथायथा धूमो ज्वलति तथातथाऽवर्धत इत्यर्थः ॥ ४६ ॥ वाक्यं उच्चारयन् उच्चारितवन्तः ॥ ५१ ॥ नन्दने इन्द्रवने । अत्र एतत्समीपे ॥ ५९ ॥ चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

बद्धगोधाङ्गुलित्राणाः खड्गवन्तोऽमितौजसः ॥ १
परिगृह्य द्विजश्रेष्ठाञ्ज्येष्ठाः सर्वधनुष्मताम् ।
पाञ्चालीसहिता राजन्प्रययुर्गन्धमादनम् ॥ २
सरांसि सरितश्चैव पर्वतांश्च वनानि च ।
वृक्षांश्च बहुलच्छायान्ददृशुर्गिरिमूर्धनि ॥ ३
नित्यपुष्पफलान्देशान्देवर्षिगणसेवितान् ।
आत्मन्यात्मानमाधाय वीरा मूलफलाशिनः ॥४
चेरुरुच्चावचाकारान्देशान्विषमसंकटान् ।
पश्यन्तो मृगजातानि बहूनि विविधानि च ॥ ५
ऋषिसिद्धामरयुतं गन्धर्वाप्सरसां प्रियम् ।
विविशुस्ते महात्मानः किन्नराचरितं गिरिम् ॥ ६
प्रविशत्स्वथ वीरेषु पर्वतं गन्धमादनम् ।
चण्डवातं महद्वर्षं प्रादुरासीद्विशांपते ॥ ७
ततो रेणुः समुद्भूतः सपत्रबहुलो महान् ।
पृथिवीं चान्तरिक्षं च द्यां चैव सहसाऽवृणोत् ॥८
न स प्रज्ञायते किंचिदावृते व्योम्नि रेणुना ।
न चापि शेकुस्तत्कर्तुमन्योन्यस्याभिभाषणम् ॥ ९
न चापश्यंस्ततोऽन्योन्यं तमसाऽऽवृतचक्षुषः ।
आकृष्यमाणा वातेन साश्मचूर्णेन भारत ॥ १०
द्रुमाणां वातरुग्णानां पततां भूतलेऽनिशम् ।
अन्येषां च महीजानां शब्दः समभवन्महान् ॥ ११
द्यौः स्वित्पतति किं भूमिर्दीर्यते पर्वतोनु किम् ।
इति ते मेनिरे सर्वे पवनेन विमोहिताः ॥ १२
ते पथाऽनन्तरान्वृक्षान्वल्मीकान्विषमाणि च ।
पाणिभिः परिमार्गन्तो भीता वायोर्निलिल्यिरे ॥ १३
ततः कार्मुकमादाय भीमसेनो महाबलः ।
कृष्णामादाय संगम्य तस्थावाश्रित्य पादपम् ॥ १४
धर्मराजश्च धौम्यश्च निलिल्याते महावने ।
अग्निहोत्राण्युपादाय सहदेवस्तु पर्वते ॥ १५
नकुलो ब्राह्मणाश्चान्ये लोमशश्च महातपाः ।
वृक्षानासाद्य संत्रस्तास्तत्रतत्र निलिल्यिरे ॥ १६
मन्दीभूते तु पवने तस्मिन्रजसि शाम्यति ।
महद्भिर्जलधारौघैर्वर्षमभ्याजगाम ह ॥ १७
भृशं चटचटाशब्दो वज्राणां क्षिप्यतामिव ।
ततस्ताश्चञ्चलाभासश्चेरुरभ्रेषु विद्युतः ॥ १८
ततोऽश्मसहिता धाराः संवृण्वन्त्यः समन्ततः ।
प्रपेतुरनिशं तत्र शीघ्रवातसमीरिताः ॥ १९
तत्र सागरगा ह्यापः कीर्यमाणाः समन्ततः ।
प्रादुरासन्सकलुषाः फेनवत्यो विशांपते ॥ २०
वहन्त्यो वारि बहुलं फेनोडुपपरिप्लुतम् ।
परिसस्रुर्महाशब्दाः प्रकर्षन्त्यो महीरुहान् ॥ २१
तस्मिन्नुपरते शब्दे वाते च समतां गते ।
गते ह्यम्भसि निम्नानि प्रादुर्भूते दिवाकरे ॥ २२
निर्जग्मुस्ते शनैः सर्वे समाजग्मुश्च भारत ।
प्रतस्थिरे पुनर्वीराः पर्वतं गन्धमादनम् ॥ २३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

---

## षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

गन्धमादनप्रयाणे गमनाक्षमतयाऽधः पतनेन मूर्च्छिताया द्रौपद्याः पाण्डवैः सलिलसेचनादिना श्रमापनोदनम् ॥ १ ॥ पाञ्चाल्या दुश्चराध्वसंचरणे चिन्तयमानं युधिष्ठिरंप्रति भीमेन स्वेन घटोत्कचेन वा तस्या वहनोक्तिः ॥ २ ॥

वैशंपायन उवाच ।
ततः प्रयातमात्रेषु पाण्डवेषु महात्मसु ।
पद्भ्यामनुचिता गन्तुं द्रौपदी समुपाविशत् ॥ १
श्रान्ता दुःखपरीता च वातवर्षेण तेन च ।
सौकुमार्याच्च पाञ्चाली संमुमोह तपस्विनी ॥ २
सा कम्पमाना मोहेन बाहुभ्यामसितेक्षणा ।

---

पथा मार्गेण । अनन्तरान्सन्निहितान् । निलिल्यिरे निलीनाः ॥ १३ ॥ संगम्यादायेत्यन्वयः । गत्वा गृहीत्वेत्यर्थः ॥ १४ ॥ अश्मसहिताः करकासहिताः ॥ १९ ॥ वारि वहन्त्यो नद्यः ॥ २१ ॥ पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

क्रोशमात्रं प्रयातेषु इति झ. पाठः ॥ १ ॥

वृत्ताभ्यामनुरूपाभ्यामूरू समवलम्बत ॥ ३
आलम्बमाना सहितावूरू गजकरोपमौ ।
पपात सहसा भूमौ वेपन्ती कदली यथा ॥ ४
तां पतन्तीं वरारोहां भज्यमानां लतामिव ।
नकुलः समभिद्रुत्य परिजग्राह वीर्यवान् ॥ ५
नकुल उवाच ।
राजन्पाञ्चालराजस्य सुतेयमसितेक्षणा ।
श्रान्ता निपतिता भूमौ तामवेक्षस्व भारत ॥ ६
अदुःखार्हा परं दुःखं प्राप्तेयं मृदुगामिनी ।
आश्वासय महाराज तामिमां श्रमकर्शिताम् ॥ ७
वैशंपायन उवाच ।
राजा तु वचनात्तस्य भृशं दुःखसमन्वितः ।
भीमश्च सहदेवश्च सहसा समुपाद्रवन् ॥ ८
तामवेक्ष्य तु कौन्तेयो विवर्णवदनां कृशाम् ।
अङ्कमानीय धर्मात्मा पर्यदेवयदातुरः ॥ ९
युधिष्ठिर उवाच ।
कथं वेश्मसु गुप्तेषु स्वास्तीर्णशयनोचिता ।
भूमौ निपतिता शेते सुखार्हा वरवर्णिनी ॥ १०
सुकुमारौ कथं पादौ मुखं च कमलप्रभम् ।
मत्कृतेऽद्य वरार्हायाः श्यामतां समुपागतम् ॥ ११
किमिदं द्यूतकामेन मया कृतमबुद्धिना ।
आदाय कृष्णां चरता वने मृगगणाकुले ॥ १२
सुखं प्राप्स्यसि कल्याणि पाण्डवान्प्राप्य वै पतीन् ।
इति द्रुपदराजेन पित्रा दत्ताऽयतेक्षणा ॥ १३
तत्सर्वमनवाप्येयं श्रमशोकाद्धिकर्शिता ।
शेते निपतिता भूमौ पापस्य मम कर्मभिः ॥ १४
वैशंपायन उवाच ।
तथा लालप्यमाने तु धर्मराजे युधिष्ठिरे ।
धौम्यप्रभृतयः सर्वे तत्राजग्मुर्द्विजोत्तमाः ॥ १५
ते समाश्वासयामासुराशीर्भिश्चाप्यपूजयन् ।
रक्षोघ्नांश्च तथा मन्त्राञ्जेपुश्चक्रुश्च ते क्रियाः ॥ १६
पठ्यमानेषु मन्त्रेषु शान्त्यर्थं परमर्षिभिः ।
स्पृश्यमाना करैः शीतैः पाण्डवैश्च मुहुर्मुहुः ॥ १७
सेव्यमाना च शीतेन जलमिश्रेण वायुना ।
पाञ्चाली सुखमासाद्य लेभे चेतः शनैः शनैः ॥ १८
परिगृह्य च तां दीनां कृष्णामजिनसंस्तरे ।
पार्था विश्रामयामासुर्लब्धसंज्ञां तपस्विनीम् ॥ १९
तस्या यमौ रक्ततलौ पादौ पूजितलक्षणौ ।
कराभ्यां किणजाताभ्यां शनकैः संववाहतुः ॥ २०
पर्याश्वासयदप्येनां धर्मराजो युधिष्ठिरः ।
उवाच च कुरुश्रेष्ठो भीमसेनमिदं वचः ॥ २१
बहवः पर्वता भीम विषमा हिमदुर्गमाः ।
तेषु कृष्णा महाबाहो कथं नु विचरिष्यति ॥ २२
भीमसेन उवाच ।
त्वां राजन्राजपुत्रीं च यमौ च पुरुषर्षभ ।
स्वयं नेष्यामि राजेन्द्र मा विषादे मनः कृथाः ॥ २३
अथवा यो मया जातो विहगो मद्बलोपमः ।
वहेदनघ सर्वान्नो वचनात्ते घटोत्कचः ॥ २४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

## सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥

भीमसेनस्मरणमात्रसन्निहितेन घटोत्कचेन दुर्गमे पथि द्रौपद्या वहनम् ॥ १ ॥ तदनुचरै राक्षसैः पाण्डवानां विप्राणां च वहनम् ॥ २ ॥ सर्वैर्नरनारायणाश्रममेत्य तत्र सुखेन निवासः ॥ ३ ॥

युधिष्ठिर उवाच ।
धर्मज्ञो बलवाञ्शूरः सद्यो राक्षसपुङ्गवः ।
भक्तोऽस्मानौरसः पुत्रो नेतुमर्हति मातरम् ॥ १
तव भीम सुतेनाहं नीतो भीमपराक्रम ।
अक्षतः सह पाञ्चाल्या गच्छेयं गन्धमादनम् ॥ २
वैशंपायन उवाच ।
भ्रातुर्वचनमाज्ञाय भीमसेनो घटोत्कचम् ।
'चिन्तयामास बलवान्महाबलपराक्रमम् ॥ ३

विहगइव विहगः खेचरः ॥ २४ ॥

षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

घटोत्कचश्च धर्मात्मा स्मृतमात्रः पितुस्तदा ।
कृताञ्जलिरुपातिष्ठदभिवाद्याथ पाण्डवान् ।
ब्राह्मणांश्च महाबाहुः स च तैरभिनन्दितः ॥ ४
उवाच भीमसेनं स पितरं सत्यविक्रमः ॥ ५
स्मृतोऽस्मि भवता शीघ्रं शुश्रूषुरहमागतः ।
आज्ञापय महाबाहो सर्वं कर्ताऽस्म्यसंशयम् ॥ ६
तच्छ्रुत्वा भीमसेनस्तु राक्षसं परिषस्वजे ।
चिन्तया समनुप्राप्तमित्युवाच वृकोदरः ॥' ७
हैडिम्बेय परिश्रान्ता तव माताऽपराजिता ।
त्वं च कामगमस्तात बलवान्वह तां खग ॥ ८
स्कन्धमारोप्य भद्रं ते मध्येऽस्माकं विहायसा ।
गच्छ नीचिकया गत्या यथा चैनां न पीडयेः ॥ ९
घटोत्कच उवाच ।
धर्मराजं च धौम्यं च कृष्णां च यमजौ तथा ।
एकोप्यहमलं वोढुं किमुताद्य सहायवान् ॥ १०
[अन्ये च शतशः शूरा विहङ्गाः कामरूपिणः ।
सर्वान्वो ब्राह्मणैः सार्धं वक्ष्यन्ति सहिताऽनघ ।
'मन्दंमन्दं गमिष्यामि वहन्द्रुपदनन्दिनीम् ॥'११
वैशंपायन उवाच ।
एवमुक्त्वा ततः कृष्णामुवाह स घटोत्कचः ।
पाण्डूनां मध्यगो वीरः पाण्डवानपि चापरे ॥ १२
लोमशः सिद्धमार्गेण जगामानुपमद्युतिः ।
स्वेनैव स प्रभावेण द्वितीय इव भास्करः ॥ १३
ब्राह्मणांश्चापि तान्सर्वान्समुपादाय राक्षसाः ।
नियोगाद्राक्षसेन्द्रस्य जग्मुर्भीमपराक्रमाः ॥ १४
एवं सुरमणीयानि वनान्युपवनानि च ।
आलोकयन्तस्ते जग्मुर्विशालां बदरीमनु ॥ १५
ते त्वाशुगतिभिर्वीरा राक्षसैस्तैर्महाजवैः ।
उह्यमाना ययुः शीघ्रं महदध्वानमल्पवत् ॥ १६
देशान्म्लेच्छजनाकीर्णान्नानारत्नाकरायुतान् ।
ददृशुर्गिरिपादांश्च नानाधातुसमाचितान् ॥ १७
विद्याधरसमाकीर्णान्युतान्वानरकिन्नरैः ।
तथा किंपुरुषैश्चैव गन्धर्वैश्च समन्ततः ॥ १८
मयूरैश्चमरैश्चैव हरिणै रुरुभिस्तथा ।
वराहैर्गवयैश्चैव महिषैश्च समावृतान् ॥ १९
नदीजालसमाकीर्णान्नानापक्षियुतान्बहून् ।
नानाविधमृगैर्जुष्टांश्चारणैश्चोपशोभितान् ।
समदैश्चापि विहगैः पादपैरन्वितांस्तथा ॥ २०
तेऽवतीर्य बहून्देशानुत्तरांश्च कुरूनपि ।
ददृशुर्विविधाश्चर्यं कैलासं पर्वतोत्तमम् ॥ २१
तस्याभ्याशे तु ददृशुर्नरनारायणाश्रमम् ।
उपेतं पादपैर्दिव्यैः सदापुष्पफलोपगैः ॥ २२
ददृशुस्तां च बदरीं वृत्तस्कन्धां मनोरमाम् ।
स्निग्धामविरलच्छायां श्रिया परमया युताम् ॥ २३
पत्रैः स्निग्धैरविरलैरुपेतां मृदुभिः शुभाम् ।
विशालशाखां विस्तीर्णामतिद्युतिसमन्विताम् २४
फलैरुपचितैर्दिव्यैराचितां स्वादुभिर्भृशम् ।
मधुस्रवैः सदा दिव्यां महर्षिगणसेविताम् ।
मदप्रमुदितैर्नित्यं नानाद्विजगणैर्युताम् ॥ २५
अदंशमशके देशे बहुमूलफलोदके ।
नीलशाद्वलसंछन्ने देवगन्धर्वसेविते ॥ २६
सुभूमिभागविशदे स्वभावविहिते शुभे ।
जातां हिममृदुस्पर्शे देशेऽपहतकण्टके ॥ २७
तामुपेत्य महात्मानः सह तैर्ब्राह्मणर्षभैः ।
अवतेरुस्ततः सर्वे राक्षसस्कन्धतः शनैः ॥ २८
ततस्तमाश्रमं पुण्यं नरनारायणाश्रितम् ।
ददृशुः पाण्डवा राजन्सहिता द्विजपुङ्गवैः ॥ २९
तमसा रहितं पुण्यमनामृष्टं रवेः करैः ।
क्षुत्तृट्शीतोष्णदोषैश्च वर्जितं शोकनाशनम् ॥ ३०
महर्षिगणसंबाधं ब्राह्म्या लक्ष्म्या समन्वितम् ।
दुष्प्रवेशं महाराज नरैर्धर्मबहिष्कृतैः ॥ ३१
बलिहोमार्चितं दिव्यं सुसंमृष्टानुलेपनम् ।
दिव्यपुष्पोपहारैश्च सर्वतोऽभिविराजितम् ॥ ३२
विशालैरग्निशरणैः स्रुग्भाण्डैराचितं शुभैः ।

---

वक्ष्यन्ति वहनं करिष्यन्ति ॥ ११ ॥ रत्नाकरैः आसमन्तात् युतान् ॥ १७ ॥ अभ्याशे समीपे ॥ २२ ॥ स्वभावतएव विशेषेण हिते स्वभावविहिते । जातां बदरीम् ॥ २७ ॥ अग्निशरणैः अग्न्यगारैः । आचितं व्याप्तम् । कठिनैः शिक्यैः कर-

महद्भिस्तोयकलशैः कठिनैश्चोपशोभितम् ॥ ३३
शरण्यं सर्वभूतानां ब्रह्मघोषनिनादितम् ।
दिव्यमाश्रयणीयं तमाश्रमं श्रमनाशनम् ।
श्रिया युतमनिर्देश्यं देववर्योपशोभितम् ॥ ३४
फलमूलाशनैर्दान्तैश्चारुकृष्णाजिनाम्बरैः ।
सूर्यवैश्वानरसमैस्तपसा भावितात्मभिः ॥ ३५
महर्षिभिर्मोक्षपरैर्यतिभिर्नियतेन्द्रियैः ।
ब्रह्मभूतैर्महाभागैरुपेतं ब्रह्मवादिभिः ॥ ३६
सोऽभ्यगच्छन्महातेजास्तानृषीन्नियतः शुचिः ।
भ्रातृभिः सहितो धीमान्धर्मपुत्रो युधिष्ठिरः ॥ ३७
दिव्यज्ञानोपपन्नास्ते दृष्ट्वा प्राप्तं युधिष्ठिरम् ।
अभ्यगच्छन्त सुप्रीता दिव्या देवमहर्षयः ।
आशीर्वादान्प्रयुञ्जानाः स्वाध्यायनिरता भृशं ३८
प्रीतास्ते तस्य सत्कारं विधिना पावकोपमाः ।
उपाजह्रुश्च सलिलं पुष्पमूलफलं शुचि ॥ ३९
स तैः प्रीत्याऽथ सत्कारमुपनीतं महर्षिभिः ।
प्रयतः प्रतिगृह्याथ धर्मराजो युधिष्ठिरः ॥ ४०
तं शक्रसदनप्रख्यं दिव्यगन्धं मनोरमम् ।
प्रीतः स्वर्गोपमं पुण्यं पाण्डवः सह कृष्णया ४१
विवेश शोभया युक्तं भ्रातृभिश्च सहानघ ।
ब्राह्मणैर्वेदवेदाङ्गपारगैश्च सहार्चितः ॥ ४२
तत्रापश्यत्स धर्मात्मा देवदेवर्षिपूजितम् ।
नरनारायणस्थानं भागीरथ्योपशोभितम् ॥ ४३
तस्मिन्मधुस्रवफलां ब्रह्मर्षिगणभाविनीम् ।
बदरीं तामुपाश्रित्य पाण्डवो भ्रातृभिः सह ॥४४
मुदा युक्ता महात्मानो रेमिरे तत्र ते तदा ।
आलोकयन्तो मैनाकं नानाद्विजगणायुतम् ।
हिरण्यशिखरं चैव मध्ये बिन्दुसरः शिवम् ॥४५
भागीरथीं सुतीर्थां च शीतामलजलां शिवाम् ।
मणिप्रवालप्रस्तारां पादपैरुपशोभिताम् ॥ ४६
दिव्यपुष्पसमाकीर्णां मनःप्रीतिविवर्धनीम् ।
वीक्षमाणा महात्मानो विजह्रुस्तत्र पाण्डवाः ४७
तस्मिन्देवर्षिचरिते देशे परमदुर्गमे ।
भागीरथीपुण्यजले तर्पयांचक्रिरे पितॄन् ।
देवानृषींश्च कौन्तेयाः परमं शौचमास्थिताः ॥४८
तत्र ते तर्पयन्तश्च जपन्तश्च कुरूद्वहाः ।
ब्राह्मणैः सहिता वीरा ह्यवसन्पुरुषर्षभाः ॥ ४९
कृष्णायास्तत्र पश्यन्तः क्रीडितान्यमरप्रभाः ।
विचित्राणि नरव्याघ्रा रेमिरे तत्र पाण्डवाः ॥५०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥

## अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

कदाचन पाञ्चाल्या भीमसंनिधाने वाय्वानीताद्भुतसौगन्धिकपुष्पदर्शनम् ॥ १ ॥ तया तादृशबहुपुष्पानयनं प्रार्थितेन भीमेन तदर्थं गमनम् ॥ २ ॥ भीमस्य मध्येमार्गं स्वमार्गनिरोधकेन हनुमता सह संवादः ॥ ३ ॥

वैशंपायन उवाच ।
तत्र ते पुरुषव्याघ्राः परमं शौचमास्थिताः ।
षड्रात्रमवसन्वीरा धनंजयदिदृक्षया ॥ १
तस्मिन्विहरमाणाश्च रममाणाश्च पाण्डवाः ।
मनोज्ञे काननवरे सर्वभूतमनोरमे ॥ २
पादपैः पुष्पविकचैः फलभारावनामितैः ।
शोभितः पर्वतो रम्यः पुंस्कोकिलकुलाकुलैः ।
स्निग्धपत्रैरविरलैः शीतच्छायैर्मनोरमैः ॥ ३
सरांसि च विचित्राणि प्रसन्नसलिलानि च ।
कमलैः सोत्पलैस्तत्र भ्राजमानानि सर्वशः ।
पश्यन्तश्चारुरूपाणि रेमिरे तत्र पाण्डवाः ॥ ४
पुण्यगन्धः सुखस्पर्शो ववौ तत्र समीरणः ।

ण्डैर्वा ॥ ३३ ॥ सत्कारं चक्रुरिति शेषः ॥ ३९ ॥ सीतां विमलपङ्कजाम् इति झ. पाठः । सीतां नामतः । प्रस्तारः सोपानपादगणादिरूपः । घट्ट इत्यर्थः ॥ ४६ ॥ सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥
पुष्पविकचैर्विकसितकुसुमैः ॥ ३ ॥

ह्लादयन्पाण्डवान्सर्वान्सकृष्णान्सद्विजर्षभान् ॥ ५
ततः पूर्वोत्तरे वायुः प्लवमानो यदृच्छया ।
सहस्रपत्रमर्काभं दिव्यं पद्ममुपाहरत् ॥ ६
तदवैक्षत पाञ्चाली दिव्यगन्धं मनोरमम् ।
अनिलेनाहृतं भूमौ पतितं जलजं शुचि ॥ ७
तच्छुभा शुभमासाद्य सौगन्धिकमनुत्तमम् ।
अतीव मुदिता राजन्भीमसेनमथाब्रवीत् ॥ ८
पश्य दिव्यं सुरुचिरं भीम पुष्पमनुत्तमम् ।
गन्धसंस्थानसंपन्नं मनसो मम नन्दनम् ॥ ९
इदं च धर्मराजाय प्रदास्यामि परंतप ।
'गृह्यापराणि पुष्पाणि बहूनि पुरुषर्षभ ।'
हरेरिदं मे कामाय काम्यके पुनराश्रमे ॥ १०
यदि तेऽहं प्रिया पार्थ बहूनीमान्युपाहर ।
तान्यहं नेतुमिच्छामि काम्यकं पुनराश्रमम् ॥ ११
एवमुक्त्वा तु पाञ्चली भीमसेनमनिन्दिता ।
जगाम पुष्पमादाय धर्मराजाय तत्तदा ॥ १२
अभिप्रायं तु विज्ञाय महिष्याः पुरुषर्षभः ।
प्रियायाः प्रियकामः स प्रायाद्भीमो महाबलः ॥ १३
वातं तमेवाभिमुखो यतस्तत्पुष्पमागतम् ।
आजिहीर्षुर्जगामाशु सपुष्पाण्यपराण्यपि ॥ १४
रुक्मपृष्ठं धनुर्गृह्य शरांश्चाशीविषोपमान् ।
मृगराडिव संक्रुद्धः प्रभिन्न इव कुञ्जरः ।
[ददृशुः सर्वभूतानि महाबाणधनुर्धरम् ॥ १५
न ग्लानिर्न च वैक्लब्यं न भयं न च संभ्रमः ।
कदाचिज्जुषते पार्थमात्मजं मातरिश्वनः ॥] १६
द्रौपद्याः प्रियमन्विच्छन्स बाहुबलमाश्रितः ।
व्यपेतभयसंमोहः शैलमभ्यपतद्बली ॥ १७
स तं द्रुमलतागुल्मच्छन्नं नीलशिलातलम् ।
गिरिं चचारारिहरः किंनराचरितं शुभम् ॥ १८
नानावर्णधरैश्चित्रं धातुद्रुममृगाण्डजैः ।
सर्वभूषणसंपूर्णं भूमेर्भुजमिवोच्छ्रितम् ॥ १९
सर्वर्तुरमणीयेषु गन्धमादनसानुषु ।
सक्तचक्षुरभिप्रायान्हृदयेनानुचिन्तयन् ॥ २०
पुंस्कोकिलनिनादेषु षट्पदाचरितेषु च ।
बद्धश्रोत्रमनश्चक्षुर्जगामामितविक्रमः ॥ २१
आजिघ्रन्स महातेजाः सर्वर्तुकुसुमोद्भवम् ।
गन्धमुद्धतमुद्दामो वने मत्त इव द्विपः ॥ २२
वीज्यमानः सुपुण्येन नानाकुसुमगन्धिना ।
पितुः संस्पर्शशीतेन गन्धमादनवायुना ॥ २३
ह्रियमाणश्रमः पित्रा संप्रहृष्टतनूरुहः ॥ २४
स यक्षगन्धर्वसुरब्रह्मर्षिगणसेवितम् ।
विलोकयामास तदा पुष्पहेतोररिंदमः ॥ २५
विषमच्छदैरचितैरनुलिप्त इवाङ्गुलैः ।
विमलैर्धातुविच्छेदैः काञ्चनाञ्जनराजतैः ॥ २६
सपक्षमिव नृत्यन्तं पार्श्वलग्नैः पयोधरैः ।
मुक्ताहारैरिव चितं च्युतैः प्रस्रवणोदकैः ॥ २७
अभिरामदरीकुञ्जनिर्झरोदककन्दरम् ।
अप्सरोनूपुररवैः प्रनृत्तवरबर्हिणम् ॥ २८
दिग्वारणविषाणाग्रैर्घृष्टोपलशिलातलम् ।
स्रस्तांशुकमिवाक्षोभ्यैर्निम्नगानिःसृतैर्जलैः ॥ २९
सशष्पकवलैः स्वस्थैरदूरपरिवर्तिभिः ।
भयानभिज्ञैर्हरिणैः कौतूहलनिरीक्षितः ॥ ३०
चालयानः स्ववेगेन लताजालान्यनेकशः ।
आक्रीडमानः कौन्तेयः श्रीमान्वायुसुतो ययौ ३१
प्रियामनोरथं कर्तुमुद्यतश्चारुलोचनः ।
प्रांशुः कनकवर्णाभः सिंहसंहननो युवा ॥ ३२
मत्तवारणविक्रान्तो मत्तवारणवेगवान् ।
मत्तवारणताम्राक्षो मत्तवारणवारणः ॥ ३३

पूर्वोत्तरे ऐशानकोणे ॥ ६ ॥ सौगन्धिकं पद्मजातिभेदः ॥ ८ ॥ संस्थानमाकारः ॥ ९ ॥ हरेः आहर । इदमेतज्जातीयम् ॥ १० ॥ प्रभिन्नो मत्तः ॥ १५ ॥ मातरिश्वनो वायोः ॥ १६ ॥ पितुर्यथा पुत्रस्पर्शः शीतस्तादृक्स्पर्शवता वायुनेत्यर्थः ॥ २३ ॥ पित्रा वायुना ॥ २४ ॥ धातुविच्छेदैर्धातुभेदैः । अङ्गुलैरिव विषमच्छदैः सप्तपर्णादिभिर्नानाधातुरञ्जितपत्रैः । आञ्जनेति कृष्णधातुग्रहणम् । पीतकृष्णश्वेतधातुभिरित्यर्थः ॥ २६ ॥ पयोधरैर्मेघैः ॥ २७ ॥ दरी बिलगृहम् । कंदरं महाप्रपातः ॥ २८ ॥ विषाणाग्रैर्दन्ताग्रैः । शिलाः समपाषाणाः शयनासनयोग्याः । उपलास्तदन्ये ॥ २९ ॥ शष्पं बालतृणम् । कवलो ग्रासस्तद्युक्तैः ॥ ३० ॥ वारणानामपि वारणः निवारकः संग्रामादौ ॥ ३३ ॥

प्रियपार्श्वोपविष्टाभिर्व्यावृत्ताभिर्विचेष्टितैः ।
यक्षगन्धर्वयोषाभिरदृश्याभिर्निरीक्षितः ॥ ३४
नवावतारं रूपस्य विक्रीडन्निव पाण्डवः ।
चचार रमणीयेषु गन्धमादनसानुषु ॥ ३५
संस्मरन्विविधान्क्लेशान्दुर्योधनकृतान्बहून् ।
द्रौपद्या वनवासिन्याः प्रियं कर्तुं समुद्यतः ॥ ३६
सोऽचिन्तयत्तथा पार्थे मयि त्वतिविलम्बिते ।
पुष्पहेतोः कथं त्वार्यः करिष्यति युधिष्ठिरः ३७
स्नेहान्नरवरो नूनमविश्वासाद्बलस्य च ।
नकुलं सहदेवं च न मोक्ष्यति युधिष्ठिरः ॥ ३८
कथं नु कुसुमावाप्तिः स्याच्छीघ्रमिति चिन्तयन् ।
प्रतस्थे नरशार्दूलः पक्षिराडिव वेगितः ॥ ३९
[सज्जमानमनोदृष्टिः फुल्लेषु गिरिसानुषु ।
द्रौपदीवाक्यपाथेयो भीमः शीघ्रतरं ययौ ॥] ४०
कम्पयन्मेदिनीं पद्भ्यां निर्घात इव पर्वसु ।
त्रासयन्गजयूथानि वातरंहा वृकोदरः ॥ ४१
सिंहव्याघ्रमृगांश्चैव मर्दयानो महाबलः ।
उन्मूलयन्महावृक्षान्पोथयंश्चोरसा बली ॥ ४२
लतावल्लीश्च वेगेन विकर्षन्पाण्डुनन्दनः ।
उपर्युपरि शैलाग्रमारुरुक्षुरिव द्विपः ॥ ४३
जलावलम्बोऽतिभृशं सविद्युदिव तोयदः ।
'व्यनदत्स महानादं भीमसेनो महाबलः ॥ ४४
तेन शब्देन महता भीमस्य प्रतिबोधिताः ।
गुहां संतत्यजुर्व्याघ्रा निलिल्युर्वनवासिनः ॥४५
समुत्पेतुः खगास्त्रस्ता मृगयूथानि दुद्रुवुः ।
ऋक्षाश्चोत्ससृजुर्वृक्षांस्तत्यजुर्हरयो गुहाम् ।
व्यजृम्भन्त महासिंहा महिषाश्च वनेचराः ॥ ४६
तेन वित्रासिता नागाः करेणुपरिवारिताः ।
तद्वनं संपरित्यज्य जग्मुरन्यन्महावनम् ॥ ४७
वराहमृगसङ्घाश्च महिषाश्च वनेचराः ।
व्याघ्रगोमायुसङ्घाश्च प्रणेदुर्गवयैः सह ॥ ४८
रथाङ्गसाह्वदात्यूहा हंसकारण्डवप्लवाः ।
शुकाः पारावताः क्रौञ्चा विसंज्ञा भेजिरे दिशः॥
तथाऽन्ये दर्पिता नागाः करेणुशरपीडिताः ।
सिंहव्याघ्राश्च संक्रुद्धा भीमसेनमथाद्रवन् ॥ ५०
शकृन्मूत्रं च मुञ्चाना भयविभ्रान्तमानसाः ।
व्यादितास्या महारौद्रा व्यनदन्भीषणान्स्वान् ५१
ततो वायुसुतः क्रोधात्स्वबाहुबलमाश्रितः ।
गजेनान्यान्गजाञ्श्रीमान्सिंहं सिंहेन वा विभुः ।
तलप्रहारैरन्यांश्च व्यहनत्पाण्डवो बली ॥ ५२
ते वध्यमाना भीमेन सिंहव्याघ्रतरक्षवः ।
भयाद्विससृजुर्भीमं शकृन्मूत्रं च सुस्रुवुः ॥ ५३
प्रविवेश ततः क्षिप्रं तानपास्य महाबलः ।
वनं पाण्डुसुतः श्रीमाञ्शब्देनापूरयन्दिशः ॥ ५४
अथापश्यन्महाबाहुर्गन्धमादनसानुषु ।
सुरम्यं कदलीषण्डं बहुयोजनविस्तृतम् ॥ ५५
तमभ्यगच्छद्वेगेन क्षोभयिष्यन्महाबलः ।
महागज इवास्रावी प्रभञ्जन्विविधान्द्रुमान् ॥ ५६
उत्पाट्य कदलीस्तम्भान्बहुतालसमुच्छ्रयान् ।
चिक्षेप तरसा भीमः समन्ताद्बलिनां वरः ।
विमर्दन्सुमहातेजा नृसिंह इव दर्पितः ॥ ५७
ततः संन्यपतंस्तत्र सुबहूनि महान्ति च ।
रुरुवारणयूथानि महिषाश्च जलाश्रयाः ॥ ५८
'प्रविवेश ततः क्षिप्रं तानपास्य महाबलः ।
वनं पाण्डुसुतः श्रीमान्नादेनापूरयन्दिशः ॥' ५९
तेन शब्देन चैवाथ भीमसेनरवेण च ।
वनान्तरगताश्चापि वित्रेसुर्मृगपक्षिणः ॥ ६०
तस्मिन्नथ प्रवृत्ते तु संक्षोभे मृगपक्षिणाम् ।
जलार्द्रपक्षा विहगाः समुत्पेतुः सहस्रशः ॥ ६१
तानौदकान्पक्षिगणान्निरीक्ष्य भरतर्षभः ।
तानेवानुसरन्रम्यं ददर्श सुमहत्सरः ॥ ६२
काञ्चनैः कदलीषण्डैर्मन्दमारुतकम्पितैः ।

विचेष्टितैर्व्यावृत्ताभिः निश्चेष्टाभिरेकाग्राभिरित्यर्थः ॥ ३४ ॥ रूपस्य सौन्दर्यस्य ॥ ३५ ॥ निर्घात उत्पातः । पर्वसु उत्सवेषु ॥ ४१ ॥ पोथयन् मर्दयन् ॥ ४२ ॥ लता भूचरा । वल्ली वृक्षचरेति भेदः ॥ ४३ ॥ रथाङ्गसाह्वाः चक्रसमाननामानश्च-क्रवाका इतियावत् । दात्यूहः मयूरश्चातको वा ॥ ४९ ॥ करेणुशरेण हस्तिनीकृतेनोत्तेजनेन पीडिताः । शरस्तूत्तेजने बाणे इति मेदिनी ॥ ५० ॥ आस्रावी मत्तः ॥ ५६ ॥

वीज्यमानमिवाक्षोभ्यं तीरात्तीरविसर्पिभिः ॥ ६३
तत्सरोऽथावतीर्याशु प्रभूतनलिनोत्पलम् ।
महागज इवोद्दामश्चिक्रीड बलवद्वली ॥ ६४
विक्रीड्य तस्मिन्रुचिरमुत्ततारामितद्युतिः ।
'क्षोभयन्सलिलं भीमः प्रभिन्न इव वारणः ॥' ६५
ततो जगाहे वेगेन तद्वनं बहुपादपम् ।
दध्मौ च शङ्खं स्वनवत्सर्वप्राणेन पाण्डवः ।
[आस्फोटयच्च बलवान्भीमः संनादयन्दिशः॥] ६६
तस्य शङ्खस्य शब्देन भीमसेनरवेण च ।
बाहुशब्देन चोग्रेण नदन्तीव गिरेर्गुहाः ॥ ६७
तं वज्रनिष्पेषसममास्फोटितमहारवम् ।
श्रुत्वा शैलगुहासुप्तैः सिंहैर्मुक्तो महास्वनः ॥ ६८
सिंहनादभयत्रस्तैः कुञ्जरैरपि भारत ।
मुक्तो विरावः सुमहान्पर्वतो येन पूरितः ॥ ६९
तं तु नादं ततः श्रुत्वा सुप्तो वानरपुङ्गवः ।
[भ्रातरं भीमसेनं तु विज्ञाय हनुमान्कपिः ॥ ७०
दिवंगमं रुरोधाथ मार्गं भीमस्य कारणात् ।
अनेन हि पथा मा वै गच्छेदिति विचार्य सः॥] ७१
आस्त एकायने मार्गे कदलीषण्डमण्डिते ।
भ्रातुर्भीमस्य रक्षार्थं तं मार्गमवरुध्य वै ॥ ७२
माऽत्र प्राप्स्यति शापं वा धर्षणां वेति पाण्डवः ।
कदलीषण्डमध्यस्थो ह्येवं संचिन्त्य वानरः ॥ ७३
प्राजृम्भत महाकायो हनूमान्नाम वानरः ।
कदलीषण्डमध्यस्थो निद्रावशगतस्तदा ॥ ७४
'तेन शब्देन महता व्यबुध्यत महाकपिः ।'
जृम्भमाणः सुविपुलं शक्रध्वजमिवोच्छ्रितम् ।
आस्फोटयच्च लाङ्गूलमिन्द्राशनिसमस्वनम् ॥ ७५
तस्य लाङ्गूलनिनदं पर्वतः सुगुहामुखैः ।
उद्गारमिव गौर्नर्दन्नुत्ससर्ज समन्ततः ॥ ७६
लाङ्गूलास्फोटशब्दाच्च चलितः स महागिरिः ।
विघूर्णमानशिखरः समन्तात्पर्यशीर्यत ॥ ७७
स लाङ्गूलरवस्तस्य मत्तवारणनिस्वनम् ।
अन्तर्धाय विचित्रेषु चचार गिरिसानुषु ॥ ७८
स भीमसेनस्तच्छ्रुत्वा संप्रहृष्टतनूरुहः ।
शब्दप्रभवमन्विच्छंश्चचार कदलीवनम् ॥ ७९
कदलीवनमध्यस्थमथ पीने शिलातले ।
ददर्श सुमहाबाहुर्वानराधिपतिं तदा ॥ ८०
विद्युत्संपातदुष्प्रेक्षं विद्युत्संपातपिङ्गलम् ।
विद्युत्संपातनिनदं विद्युत्संपातचञ्चलम् ॥ ८१
बाहुस्वस्तिकविन्यस्तपीनवृत्तशिरोधरम् ।
स्कन्धभूयिष्ठकायत्वात्तनुमध्यकटीतटम् ॥ ८२
किंचिच्चाभुग्नशीर्षेण दीर्घरोमाञ्चितेन च ।
लाङ्गूलेनोर्ध्वगतिना ध्वजेनेव विराजितम् ॥ ८३
ह्रस्वौष्ठं ताम्रजिह्वास्यं रक्तकर्णं चलद्भ्रुवम् ।
अपश्यद्वदनं तस्य रश्मिवन्तमिवोडुपम् ॥ ८४
वदनाभ्यन्तरगतैः शुक्लैर्दन्तैरलंकृतम् ।
केसरोत्करसंमिश्रमशोकानामिवोत्करम् ॥ ८५
हिरण्मयीनां मध्यस्थं कदलीनां महाद्युतिम् ।
दीप्यमानेन वपुषा स्वर्चिष्मन्तमिवानलम् ।
निरीक्षन्तमपत्रस्तं लोचनैर्मधुपिङ्गलैः ॥ ८६
तं वानरवरं धीमानतिकायं महाबलम् ।
स्वर्गपन्थानमावृत्य हिमवन्तमिव स्थितम् ॥ ८७
दृष्ट्वा चैनं महाबाहुरेकं तस्मिन्महावने ।
अथोपसृत्य तरसा भीमो भीमपराक्रमः ॥ ८८
सिंहनादं चकारोग्रं वज्राशनिसमं बली ।
तेन शब्देन भीमस्य वित्रेसुर्मृगपक्षिणः ॥ ८९
हनूमांश्च महासत्व ईषदुन्मील्य लोचने ।
दृष्ट्वा तमथ सावज्ञं लोचनैर्मधुपिङ्गलैः ॥ ९०
'ततः पवनजः श्रीमानन्तिकस्थं महौजसम् ।'
स्मितेन चैनमासाद्य हनूमानिदमब्रवीत् ॥ ९१
किमर्थं सरुजस्तेऽहं सुखसुप्तः प्रबोधितः ।
ननु नाम त्वया कार्या दया भूतेषु जानता ९२

नलिनोत्पलं पद्मपुष्पम् ॥ ६४ ॥ आस्फोटितं बाहुघातः ॥ ६८ ॥ दिवंगमं मार्गं स्वर्गमार्गम् ॥ ७१ ॥ एकायने अतिसंकुचिते ॥ ७२ ॥ उद्गारं प्रतिशब्दं गौरिव उत्ससर्ज ॥ ७६ ॥ बाहोः स्वस्तिकं चतुरश्रं मूलं अंस इति यावत् तत्र न्यस्तकंधरमित्यर्थः । तत्र हेतुः स्कन्धेति । विपुलांसत्वादित्यर्थः ॥ ८२ ॥ उडुपं चन्द्रम् ॥ ८४ ॥ अशोकानामशोकपुष्पाणाम् ॥ ८५ ॥ सरुजः सपीडः । ते त्वया॥९२॥

वयं धर्मं न जानीमस्तिर्यग्योनिमुपाश्रिताः ।
नरास्तु बुद्धिसंपन्ना दयां कुर्वन्ति जन्तुषु ॥ ९३
क्रूरेषु कर्मसु कथं देहवाक्चित्तदूषिषु ।
धर्मघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ ९४
न त्वं धर्मं विजानासि वृद्धा नोपासितास्त्वया ।
अल्पबुद्धितया बाल्यादुत्सादयसि यन्मृगान् ९५
ब्रूहि कस्त्वं किमर्थं वा किमिदं वनमागतः ।
वर्जितं मानुषैर्भावैस्तथैव पुरुषैरपि ॥ ९६
क्व च त्वयाऽद्य गन्तव्यं प्रब्रूहि पुरुषर्षभ ।
अतः परमगम्योऽयं पर्वतः सुदुरारुहः ॥ ९७
विना सिद्धगतिं वीर गतिरत्र न विद्यते ।
[देवलोकस्य मार्गोऽयमगम्यो मानुषैः सदा ॥]९८
कारुण्यात्त्वामहं वीर वारयामि निबोध मे ।
नातः परं त्वया शक्यं गन्तुमाश्वसिहि प्रभो ॥ ९९
स्वागतं सर्वथैवेह तवाद्य मनुजर्षभ ।
इमान्यमृतकल्पानि मूलानि च फलानि च ॥ १००
भक्षयित्वा निवर्तस्व मा वृथा प्राप्स्यसे वधम् ।
ग्राह्यं यदि वचो मह्यं हितं मनुजपुङ्गव ॥ १०१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

## एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥

भीमेन स्वमार्गादपसरणं चोदितेन हनुमता तंप्रति अपसरणे स्वस्याशक्तिकथनपूर्वकं स्ववालोद्धरणेन गमनचोदना ॥ १ ॥ प्रयतनेऽपि पुच्छचालनेऽप्यसमर्थेन भीमेन तंप्रति तत्प्रभवादिप्रश्नः ॥ २ ॥ हनुमता स्वप्रभवादिकथनपूर्वकं रामकथाकथनारम्भः ॥ ३ ॥

वैशंपायन उवाच ।
एतच्छ्रुत्वा वचस्तस्य वानरेन्द्रस्य धीमतः ।
भीमसेनस्तदा वीरः प्रोवाचामितविक्रमः ॥ १
भीम उवाच ।
को भवान्किंनिमित्तं वा वानरं वपुराश्रितः ।
ब्राह्मणानन्तरो वर्णः क्षत्रियस्त्वाऽनुपृच्छति ॥ २
कौरवः सोमवंशीयः कुन्त्या गर्भेण धारितः ।
पाण्डवो वायुतनयो भीमसेन इति श्रुतः ॥ ३
स वाक्यं भीमसेनस्य स्मितेन प्रतिगृह्य तत् ।
हनूमान्वायुतनयो वायुपुत्रमभाषत ॥ ४
वानरोऽहं न ते मार्गं प्रदास्यामि यथेप्सितम् ।
साधु गच्छ निवर्तस्व मा त्वं प्राप्स्यसि वैशसम् ॥ ५
भीमसेन उवाच ।
वैशसं वाऽस्तु यद्वान्यन्न त्वां पृच्छामि वानर ।
प्रयच्छ मार्गमुत्तिष्ठ मा मत्तः प्राप्स्यसे व्यथाम् ॥ ६
हनूमानुवाच ।
नास्ति शक्तिर्ममोत्थातुं जरया क्लेशितो ह्यहम् ।
यद्यवश्यं प्रयातव्यं लङ्घयित्वा प्रयाहि माम् ॥ ७
भीम उवाच ।
निर्गुणः परमात्मा तु देहं ते व्याप्य तिष्ठते ।
तमहं ज्ञानविज्ञेयं नावमन्ये न लङ्घये ॥ ८
यद्यागमैर्न विद्यां च तमहं भूतभावनम् ।
क्रमेयं त्वां गिरिं चैव हनूमानिव सागरम् ॥ ९
हनूमानुवाच ।
क एष हनुमान्नाम सागरो येन लङ्घितः ।
पृच्छामि त्वां नरश्रेष्ठ कथ्यतां यदि शक्यते ॥ १०
भीम उवाच ।
भ्राता मम गुणश्लाघ्यो बुद्धिसत्वबलान्वितः ।
रामायणेऽतिविख्यातः श्रीमान्वानरपुङ्गवः ॥ ११
रामपत्नीकृते येन शतयोजनविस्तृतः ।
सागरः प्लवगेन्द्रेण क्रमेणैकेन लङ्घितः ॥ १२

आश्वसिहि विश्वासं कुरु ॥ ९९ ॥ मह्यं मम ॥ १०१ ॥ अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥
वैशसं विरोधम् ॥ ५ ॥ भूतभावनं भूतानां वियदादीनां जरायुजादीनां च भावनं रचनं यस्मात्तम् ॥ ९ ॥ क्रमेण पादविक्षेपेण ॥ १२ ॥

स मे भ्राता महावीर्यस्तुल्योऽहं तस्य तेजसा ।
बले पराक्रमे युद्धे शक्तोऽहं तव निग्रहे ॥ १३
'इमं देशमनुप्राप्तः कारणेनास्मि केनचित् ।'
उत्तिष्ठ देहि मे मार्गं पश्य मे चाद्य पौरुषम् ।
मच्छासनमकुर्वाणं त्वां वा नेष्ये यमक्षयम् ॥ १४
वैशंपायन उवाच ।
विज्ञाय तं बलोन्मत्तं बाहुवीर्येण दर्पितम् ।
हृदयेनावहस्यैनं हनूमान्वाक्यमब्रवीत् ॥ १५
प्रसीद नास्ति मे शक्तिरुत्थातुं जरयाऽनघ ।
ममानुकम्पया त्वेतत्पुच्छमुत्सार्य गम्यताम् ॥ १६
वैशंपायन उवाच ।
[एवमुक्ते हनुमता हीनवीर्यपराक्रमम् ।
मनसाऽचिन्तयद्भीमः स्वबाहुबलदर्पितः ॥ १७
पुच्छे प्रगृह्य तरसा हीनवीर्यपराक्रमम् ।
सालोक्यमन्तकस्यैनं नयाम्यद्येह वानरम् ॥] १८
सावज्ञमथ वामेन स्मयञ्जग्राह पाणिना ।
न चाशकच्चालयितुं भीमः पुच्छं महाकपेः ॥ १९
उच्चिक्षेप पुनर्दोर्भ्यामिन्द्रायुधमिवोच्छ्रितम् ।
नोद्धर्तुमशकद्भीमो दोर्भ्यामपि महाबलः ॥ २०
उत्क्षिप्तभ्रूर्विवृत्ताक्षः संहतभ्रुकुटीमुखः ।
स्विन्नगात्रोऽभवद्भीमो न चोद्धर्तुं शशाक तम् २१
यत्नवानपि तु श्रीमाँल्लाङ्गूलोद्धरणे ततः ।
कपेः पार्श्वगतो भीमस्तस्थौ व्रीडानताननः ॥ २२
प्रणिपत्य च कौन्तेयः प्राञ्जलिर्वाक्यमब्रवीत् ।
प्रसीद कपिशार्दूल दुरुक्तं क्षम्यतां मम ॥ २३
सिद्धो वा यदि वा देवो गन्धर्वो वाऽथ गुह्यकः ।
पृष्टः सन्को मया ब्रूहि कस्त्वं वानररूपधृत् ॥ २४
न चेद्गुह्यं महाबाहो श्रोतव्यं चेद्भवेन्मम ।
शिष्यवत्त्वां तु पृच्छामि उपपन्नोऽस्मि तेऽनघ ॥ २५
हनूमानुवाच ।
यत्ते मम परिज्ञाने कौतूहलमरिंदम ।
तत्सर्वमखिलेन त्वं शृणु पाण्डवनन्दन ॥ २६
अहं केसरिणः क्षेत्रे वायुना जगदायुषा ।
जातः कमलपत्राक्ष हनूमान्नाम वानरः ॥ २७
सूर्यपुत्रं च सुग्रीवं शक्रपुत्रं च वालिनम् ।
सर्ववानरराजानौ सर्ववानरयूथपाः ॥ २८
उपतस्थुर्महावीर्या मम चामित्रकर्शन ।
सुग्रीवेणाभवत्प्रीतिरनिलस्याग्निना यथा ॥ २९
निकृतः स ततो भ्रात्रा कस्मिंश्चित्कारणान्तरे ।
ऋश्यमूके मया सार्धं सुग्रीवो न्यवसच्चिरम् ॥ ३०
अथ दाशरथिर्वीरो रामो नाम महाबलः ।
विष्णुर्मानुषरूपेण चचार वसुधातलम् ॥ ३१
स पितुः प्रियमन्विच्छन्सहभार्यः सहानुजः ।
सधनुर्धन्विनांश्रेष्ठो दण्डकारण्यमाश्रितः ॥ ३२
तस्य भार्या जनस्थानाच्छलेनापहृता बलात् ।
राक्षसेन्द्रेण बलिना रावणेन दुरात्मना ॥ ३३
सुवर्णरत्नचित्रेण मृगरूपेण रक्षसा ।
वञ्चयित्वा नरव्याघ्रं मारीचेन तदाऽनघ ॥ ३४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥

---

## पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

हनुमता भीमंप्रति समग्ररामकथाकथनम् ॥ १ ॥

हनूमानुवाच ।
हृतदारः सह भ्रात्रा पत्नीं मार्गन्स राघवः ।
दृष्टवाञ्शैलशिखरे सुग्रीवं वानरर्षभम् ॥ १
तेन तस्याभवत्सख्यं राघवस्य महात्मनः ।
स हत्वा वालिनं राज्ये सुग्रीवं प्रत्यपादयत् ॥ २
स राज्यं प्राप्य सुग्रीवः सीतायाः परिमार्गणे ।
वानरान्प्रेषयामास शतशोऽथ सहस्रशः ॥ ३
ततो वानरकोटीभिः सहितोऽहं नरर्षभ ।

एवमुक्ते सति । तमित्यध्याहारः । तं हीनवीर्यपराक्रमं मनसाऽचिन्तयन्मेने ॥ १७ ॥ मम च सुग्रीवेण प्रीतिरभवत् ॥ २९ ॥ निकृतः निरस्तः ॥ ३० ॥ एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥

सीतां मार्गन्महाबाहो प्रस्थितो दक्षिणां दिशम् ॥४
ततः प्रवृत्तिः सीताया गृध्रेण सुमहात्मना ।
संपातिना समाख्याता रावणस्य निवेशने ॥ ५
ततोऽहं कार्यसिद्ध्यर्थं रामस्याक्लिष्टकर्मणः ।
शतयोजनविस्तारमर्णवं सहसा प्लुतः ॥ ६
अहं स्ववीर्यादुत्तीर्य सागरं मकरालयम् ।
सुतां जनकराजस्य सीतां सुरसुतोपमाम् ॥ ७
दृष्टवान्भरतश्रेष्ठ रावणस्य निवेशने ।
समेत्य तामहं देवीं वैदेहीं राघवप्रियाम् ॥ ८
दग्ध्वा लङ्कामशेषेण साट्टप्राकारतोरणाम् ।
प्रत्यागतश्चास्य पुनर्नाम तत्र प्रकाश्य वै ॥ ९
मद्वाक्यं चावधार्याशु रामो राजीवलोचनः ।
अबद्धपूर्वमन्यैश्च बद्ध्वा सेतुं महोदधौ ।
वृतो वानरकोटीभिः समुत्तीर्णो महार्णवम् ॥ १०
ततो रामेण वीर्येण हत्वा तान्सर्वराक्षसान् ।
रणे तु राक्षसगणं रावणं लोकरावणम् ॥ ११
निशाचरेन्द्रं हत्वा तु सभ्रातृसुतबान्धवम् ।
राज्येऽभिषिच्य लङ्कायां राक्षसेन्द्रं विभीषणम् १२
धार्मिकं भक्तिमन्तं च भक्तानुगतवत्सलः ।
प्रत्याहृत्य ततः सीतां नष्टां वेदश्रुतिं यथा ॥ १३
तयैव सहितः साध्व्या पत्न्या रामो महायशाः ।
गत्वा ततोऽतित्वरितः स्वां पुरीं रघुनन्दनः ।
अध्यावसत्ततोऽयोध्यामयोध्यां द्विषतां प्रभुः १४
ततः प्रतिष्ठितो राज्ये रामो नृपतिसत्तमः ।
वरं मया याचितोऽसौ रामो राजीवलोचनः ॥१५
यावद्रामकथेयं ते भवेल्लोकेषु शत्रुहन् ।
तावज्जीवेयमित्येवं तथाऽस्त्विति च सोऽब्रवीत् १६
सीताप्रसादाच्च सदा मामिहस्थमरिंदम ।
उपतिष्ठन्ति दिव्या हि भोगा भीम यथेप्सिताः १७
दशवर्षसहस्राणि दशवर्षशतानि च ।
राज्यं कारितवान्रामस्ततः स्वभवनं गतः ॥ १८
तदिहाप्सरसस्तात गन्धर्वाश्च सदाऽनघ ।
तस्य वीरस्य चरितं गायन्त्यो रमयन्ति माम् ॥ १९
अयं च मार्गो मर्त्यानामगम्यः कुरुनन्दन ।
ततोऽहं रुद्धवान्मार्गं तवेमं देवसेवितम् ॥ २०
'त्वामनेन पथा यान्तं यक्षो वा राक्षसोपि वा ।'
धर्षयेद्वा शपेद्वाऽपि मा कश्चिदिति भारत ॥२१
दिव्यो देवपथो ह्येष नात्र गच्छन्ति मानुषाः ।
यदर्थमागतश्चासि अत एव सरश्च तत् ॥ २२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

---

## एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

भीमेन जलधिलङ्घनकालिकपृथुरूपप्रदर्शनं प्रार्थितेन हनुमता तंप्रति एतत्कालिकैस्तात्कालिकरूपस्य दुर्निरीक्षताकथनपूर्वकं कृतादियुगधर्मप्रतिपादनम् ॥ १ ॥

वैशंपायन उवाच ।
एवमुक्तो महाबाहुर्भीमसेनः प्रतापवान् ।
प्रणिपत्य ततः प्रीत्या भ्रातरं हृष्टमानसः ॥ १
उवाच श्लक्ष्णया वाचा हनूमन्तं कपीश्वरम् ।
मत्तो धन्यतरो नास्ति यदार्यं दृष्टवानहम् ॥ २
अनुग्रहो मे सुमहांस्तृप्तिश्च तव दर्शनात् ।
एतत्तु कृतमिच्छामि त्वयाऽऽर्येण प्रियं मम ॥ ३
यत्त्वेतदासीत्प्लवतः सागरं मकरालयम् ।
रूपमप्रतिमं वीर तदिच्छामि निरीक्षितुम् ॥ ४
एवं तुष्टो भविष्यामि श्रद्धास्यामि च ते वचः ।
एवमुक्तः स तेजस्वी प्रहस्य हरिरब्रवीत् ॥ ५
न तच्छक्यं त्वया द्रष्टुं रूपं नान्येन केनचित् ।

---

समेत्य विदित्वा संभाषणादिना निश्चित्येत्यर्थः ॥ ८ ॥ अस्य रामस्य । तत्र लङ्कायाम् ॥ ९ ॥ अवधार्य निश्चित्य ॥ १० ॥ लोकरावणं लोकपीडाकरम् ॥ ११ ॥ अयोध्यां योद्धुमशक्याम् ॥ १४ ॥ कारितवान् कृतवान् । स्वार्थे णिच् । स्वभवनं वैकुण्ठम् ॥१८॥ पञ्चाशदधिकशततमोऽध्यायः ॥१५०॥

एकं तु कृतमिच्छामीति ध. पाठः ॥ ३ ॥ हरिर्वानरः ॥५॥

कालावस्था तदा ह्यन्या वर्तते सा न सांप्रतम् ।
'ततोऽद्य दुष्करं द्रष्टुं मम रूपं नरोत्तम ॥' ६
अन्यः कृतयुगे कालस्त्रेतायां द्वापरे परः ।
अयं प्रध्वंसनः कालो नाद्य तद्रूपमस्ति मे ॥ ७
भूमिर्नद्यो नगाः शैलाः सिद्धा देवा महर्षयः ।
कालं समनुवर्तन्ते यथा भावा युगेयुगे ॥ ८
'कालंकालं समासाद्य नराणां नरपुङ्गव ।'
बलवर्ष्मप्रभावा हि प्रहीयन्त्युद्भवन्ति च ॥ ९
तदलं बत तद्रूपं द्रष्टुं कुरुकुलोद्वह ।
युगं समनुवर्तामि कालो हि दुरतिक्रमः ॥ १०
भीम उवाच ।
युगसङ्ख्यां समाचक्ष्व आचारं च युगेयुगे ।
धर्मकामार्थभावांश्च कर्मवीर्ये भवाभवौ ॥ ११
हनूमानुवाच ।
कृतं नाम युगं श्रेष्ठं यत्र धर्मः सनातनः ।
कृतमेव न कर्तव्यं तस्मिन्काले युगोत्तमे ॥ १२
न तत्र धर्माः सीदन्ति क्षीयन्ते न च वै प्रजाः ।
ततः कृतयुगं नाम कालेन गुणतां गतम् ॥ १३
देवदानवगन्धर्वयक्षराक्षसपन्नगाः ।
नासन्कृतयुगे तात तदा न क्रयविक्रयः ॥ १४
न सामऋग्यजुर्वर्णाः क्रिया नासीच्च मानवी ।
अभिध्याय फलं तत्र धर्मः संन्यास एव च ॥ १५
न तस्मिन्युगसंसर्गे व्याधयो नेन्द्रियक्षयः ।
नासूया नापि रुदितं न दर्पो नापि वैकृतम् ॥ १६
न विग्रहः कुतस्तन्द्री न द्वेषो न च पैशुनम् ।
न भयं नापि संतापो न चेर्ष्या न च मत्सरः ॥ १७
ततः परमकं ब्रह्म सा गतिर्योगिनां परा ।
आत्मा च सर्वभूतानां शुक्लो नारायणस्तदा ॥ १८
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च कृतलक्षणाः ।
कृते युगे समभवन्स्वकर्मनिरताः प्रजाः ॥ १९
समाश्रयं समाचारं समज्ञानं च केवलम् ।
तदा हि समकर्माणो वर्णा धर्मानवाप्नुवन् ॥ २०
एकदेवसदायुक्ता एकमन्त्रविधिक्रियाः ।
पृथग्धर्मास्त्वेकवेदा धर्ममेकमनुव्रताः ॥ २१
चातुराश्रम्ययुक्तेन कर्मणा कालयोगिना ।
अकामफलसंयोगात्प्राप्नुवन्ति परां गतिम् ॥ २२
आत्मयोगसमायुक्तो धर्मोऽयं कृतलक्षणः ।
कृते युगे चतुष्पादश्चातुर्वर्ण्यस्य शाश्वतः ॥ २३
'कामः कामयमानेषु ब्राह्मणेषु तिरोहितः ।'
एतत्कृतयुगं नाम त्रैगुण्यपरिवर्जितम् ॥ २४
त्रेतामपि निबोध त्वं यस्मिन्सत्रं प्रवर्तते ।
पादेन ह्रसते धर्मो रक्ततां याति चाच्युतः ॥ २५
सत्यप्रवृत्ताश्च नराः क्रिया धर्मपरायणाः ।
ततो यज्ञाः प्रवर्तन्ते धर्माश्च विविधाः क्रियाः ॥ २६
त्रेतायां भावसंकल्पाः क्रियादानफलोपगाः ।
प्रचलन्ति न वै धर्मात्तपोदानपरायणाः ।
स्वधर्मस्थाः क्रियावन्तो नरास्त्रेतायुगेऽभवन् ॥ २७
द्वापरे च युगे धर्मो द्विभागो नः प्रवर्तते ।
विष्णुर्वै पीततां याति चतुर्धा वेद एव च ॥ २८
ततोऽन्ये च चतुर्वेदास्त्रिवेदाश्च तथा परे ।
द्विवेदाश्चैकवेदाश्चाप्यनृचश्च तथा परे ॥ २९
एवं शास्त्रेषु भिन्नेषु बहुधा नीयते क्रिया ।
तपोदानप्रवृत्ता च राजसी भवति प्रजा ॥ ३०
एकवेदस्य चाज्ञानाद्वेदास्ते बहवः कृताः ।
सत्यस्य चेह विभ्रंशात्सत्ये कश्चिदवस्थितः ॥ ३१
सत्यात्प्रच्यवमानानां व्याधयो बहवोऽभवन् ।
कामाश्चोपद्रवाश्चैव तदा वै दैवकारिताः ॥ ३२

वर्ष्म शरीरम् ॥ ९ ॥ भावान् तत्त्वानि । कर्म शुभाशुभम् । वीर्यं फलोदयपर्यन्तं शक्तिः । भवाभवावुत्पत्तिविनाशौ ऐश्वर्यानैश्वर्ये वा ॥ ११ ॥ कृतमेव सर्वं कृतकृत्या एवेत्यर्थः । तत एव हेतोः कृतयुगं नाम ॥ १२ ॥ त्रयीधर्मस्य चित्तशुद्ध्यर्थत्वात्तस्याश्च तदानीं स्वभावसिद्धत्वान्न सामादीन्यासन् । मानवी क्रिया कृष्याद्यारम्भरूपा । किंतु अभिध्याय फलं संकल्पादेव सर्वं संपद्यत इत्यर्थः ॥ १५ ॥ वैकृतं कपटम् ॥ १६ ॥ विग्रहो वैरम् । तन्द्री आलस्यम् । ईर्ष्या अक्षमा । मत्सरः परोत्कर्षासहिष्णुत्वम् ॥ १७ ॥ ततोऽसूयादित्यागात् परमकं परमानन्दात्मकं ब्रह्म प्राप्यत इति शेषः । गतिः प्राप्यम् । श्वेतरक्तपीतकृष्णरूपाणि क्रमेण कृतादिषु भवन्तीति कृते नारायणः शुक्ल इत्युक्तम् ॥ १८ ॥

यैरर्द्यमानाः सुभृशं तपस्तप्यन्ति मानवाः।
कामकामाः स्वर्गकामा यज्ञांस्तन्वन्ति चापरे ३३
एवं द्वापरमासाद्य प्रजाः क्षीयन्त्यधर्मतः।
पादेनैकेन कौन्तेय धर्मः कलियुगे स्थितः ॥ ३४
तामसं युगमासाद्य कृष्णो भवति केशवः।
वेदाचाराः प्रशाम्यन्ति धर्मयज्ञक्रियास्तथा ॥ ३५
ईतयो व्याधयस्तन्द्री दोषाः क्रोधादयस्तथा।
उपद्रवाः प्रवर्तन्ते आधयो व्याधयस्तथा ॥ ३६
युगेष्वावर्तमानेषु धर्मो व्यावर्तते पुनः।
धर्मे व्यावर्तमाने तु लोको व्यावर्तते पुनः ॥३७
लोके क्षीणे क्षयं यान्ति भावा लोकप्रवर्तकाः।
युगक्षयकृता धर्माः प्रार्थनानि विकुर्वते ॥ ३८
एतत्कलियुगं नाम अचिराद्यत्प्रवर्तते।
युगानुवर्तनं त्वेतत्कुर्वन्ति चिरजीविनः ॥ ३९
यच्च ते मत्परिज्ञाने कौतूहलमरिंदम।
अनर्थकेषु को भावः पुरुषस्य विजानतः ॥ ४०
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि।
युगसङ्ख्यां महाबाहो स्वस्ति प्राप्नुहि गम्यताम् ४१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

## द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

हनुमता भीमाय समुद्रतरणकालिकपृथुतरनिजरूपप्रदर्शनपूर्वकं चतुर्वर्णधर्मनिरूपणम् ॥ १ ॥

भीमसेन उवाच।
पूर्वरूपमदृष्ट्वा ते न यास्यामि कथंचन।
यदि तेऽहमनुग्राह्यो दर्शयात्मानमात्मना ॥ १
वैशंपायन उवाच।
एवमुक्तस्तु भीमेन स्मितं कृत्वा प्लवंगमः।
तद्रूपं दर्शयामास यद्वै सागरलङ्घने ॥ २
भ्रातुः प्रियमभीप्सन्वै चकार सुमहद्वपुः।
'तद्रूपं यत्पुरा तस्य बभूवोदधिलङ्घने ॥' ३
देहस्तस्य ततोऽतीव वर्धत्यायामविस्तरैः।
सद्रुमं कदलीषण्डं छादयन्नमितद्युतिः ॥ ४
गिरिश्चोच्छ्रयमाक्रम्य तस्थौ तत्र च वानरः।
समुच्छ्रितमहाकायो द्वितीय इव पर्वतः ॥ ५
ताम्रेक्षणस्तीक्ष्णदंष्ट्रो भृकुटीकृतलोचनः।
दीर्घलाङ्गूलमाविध्य दिशो व्याप्य स्थितः कपिः ६
तद्रूपं महदालक्ष्य भ्रातुः कौरवनन्दनः।
विसिष्मिये तदा भीमो जहृषे च पुनः पुनः ॥७
तमर्कमिव तेजोभिः सौवर्णमिव पर्वतम्।
प्रदीप्तमिव चाकाशं दृष्ट्वा भीमो न्यमीलयत् ॥ ८
आबभाषे च हनुमान्भीमसेनं स्मयन्निव।
एतावदिह शक्तस्त्वं द्रष्टुं रूपं ममानघ ॥ ९
वर्धेऽहं चाप्यतो भूयो यावन्मे मनसेप्सितम्।
भीम शत्रुषु चात्यर्थं वर्धते मूर्तिरोजसा ॥ १०
वैशंपायन उवाच।
तदद्भुतं महारौद्रं विन्ध्यपर्वतसन्निभम्।
दृष्ट्वा हनूमतो वर्ष्म संभ्रान्तः पवनात्मजः ॥ ११
प्रत्युवाच ततो भीमः संप्रहृष्टतनूरुहः।
कृताञ्जलिरदीनात्मा हनूमन्तमवस्थितम् ॥ १२
दृष्टं प्रमाणं विपुलं शरीरस्यास्य ते विभो।
संहरस्व महावीर्य स्वयमात्मानमात्मना ॥ १३
न हि शक्नोमि त्वां द्रष्टुं दिवाकरमिवोदितम्।
अप्रमेयमनाधृष्यं मैनाकमिव पर्वतम् ॥ १४
विस्मयश्चैव मे वीर सुमहान्मनसोऽद्य वै।

यैः व्याधिभिः कामैश्च ॥ ३३ ॥ तामसं तमोगुणप्रधानं कलिम् ॥ ३५ ॥ ईतयः अतिवृष्ट्यादयः ॥ ३६ ॥ व्यावर्तते नश्यति ॥ ३७ ॥ भावाः धर्मज्ञानादयः। प्रार्थनानि विकुर्वते। अन्यत्प्रार्थ्यतेऽन्यत् जायते। पौष्टिकमपि कर्म विधिलोपान्नाशकं भवतीति भावः ॥ ३८ ॥ चिरजीविनो मादृशा अपि युगानुवर्तिनः कालानुसारिणो भवन्ति ॥ ३९ ॥ अनर्थकेषु निष्प्रयोजनेषु। भावोऽभिनिवेशः ॥ ४० ॥ स्वस्ति कल्याणम् ॥ ४१ ॥
एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥
गिरिश्च विन्ध्यगिरिरिव। इवार्थे चः ॥ ५ ॥

यद्रामस्त्वयि पार्श्वस्थे स्वयं रावणमभ्यगात् ॥ १५
त्वमेव शक्तस्तां लङ्कां सयोधां सहरावणाम् ।
स्वबाहुबलमाश्रित्य विनाशयितुमञ्जसा ॥ १६
न हि ते किंचिदप्राप्यं मारुतात्मज विद्यते ।
न चैव तव पर्याप्तो रावणः सगणो युधि ॥ १७
एवमुक्तस्तु भीमेन हनूमान्प्लवगोत्तमः ।
प्रत्युवाच ततो वाक्यं स्निग्धगम्भीरया गिरा ॥ १८
एवमेतन्महाबाहो यथा वदसि भारत ।
भीमसेन न पर्याप्तो ममासौ राक्षसाधमः ॥ १९
मया तु निहते तस्मिन्रावणे लोककण्टके ।
कीर्तिर्नश्येद्राघवस्य तत एतदुपेक्षितम् ॥ २०
तेन वीरेण तं हत्वा सगणं राक्षसाधमम् ।
आनीता स्वपुरं सीता कीर्तिश्च स्थापिता नृषु ॥ २१
तद्गच्छ विपुलप्रज्ञ भ्रातुः प्रियहिते रतः ।
अरिष्टं क्षेममध्वानं वायुना परिरक्षितः ॥ २२
एष पन्थाः कुरुश्रेष्ठ सौगन्धिकवनाय ते ।
द्रक्ष्यसे धनदोद्यानं रक्षितं यक्षराक्षसैः ॥ २३
न च ते तरसा कार्यः कुसुमापचयः स्वयम् ।
दैवतानि हि मान्यानि पुरुषेण विशेषतः ॥ २४
बलिहोमनमस्कारैर्मन्त्रैश्च भरतर्षभ ।
दैवतानि प्रसादं हि भक्त्या कुर्वन्ति भारत ॥ २५
मा तात साहसं कार्षीः स्वधर्मं परिपालय ।
स्वधर्मस्थापनं धर्मं बुध्यस्वागमयस्व च ॥ २६
न हि धर्ममविज्ञाय वृद्धाननुपसेव्य च ।
धर्मो वै वेदितुं शक्यो बृहस्पतिसमैरपि ॥ २७
अधर्मो यत्र धर्माख्यो धर्मश्चाधर्मसंज्ञितः ।
स विज्ञेयो विभागेन यत्र मुह्यन्त्यबुद्धयः ॥ २८
आचारसंभवो धर्मो धर्माद्वेदाः समुत्थिताः ।
वेदैर्यज्ञाः समुत्पन्ना यज्ञैर्देवाः प्रतिष्ठिताः ॥ २९
वेदाचारविधानोक्तैर्यज्ञैर्धार्यन्ति देवताः ।
बृहस्पत्युशनःप्रोक्तैर्नयैर्धार्यन्ति मानवाः ॥ ३०
बल्याकरवणिज्याभिः कृष्यर्थैर्योनिपोषणैः ।
वार्तया धार्यते सर्वं धर्मैरेतैर्द्विजातिभिः ॥ ३१
त्रयी वार्ता दण्डनीतिस्तिस्रो विद्या विजानताम् ।
ताभिः सम्यक्प्रवृत्ताभिर्लोकयात्रा विधीयते ॥ ३२
सा चेद्धर्मकृता न स्यात्त्रयीधर्ममृते भुवि ।
दण्डनीतिमृते चापि निर्मर्यादमिदं भवेत् ॥ ३३
वार्ताधर्मे ह्यवर्तिन्यो विनश्येयुरिमाः प्रजाः ।
सुप्रवृत्तैस्त्रिभिर्ह्येतैर्धर्मैः सूयन्ति वै प्रजाः ॥ ३४
द्विजानाममृतं धर्मो ह्येकश्चैवैकवर्णकः ।
यज्ञाध्ययनदानानि त्रयः साधारणाः स्मृताः ॥ ३५
याजनाध्यापने चोभे ब्राह्मणानां परिग्रहः ।
पालनं क्षत्रियाणां वै वैश्यधर्मश्च पोषणम् ॥ ३६
शुश्रूषा च द्विजातीनां शूद्राणां धर्म उच्यते ।
भैक्षहोमव्रतैर्हीनास्तथैव गुरुवासिताः ॥ ३७
क्षत्रधर्मोऽत्र कौन्तेय तव धर्मोऽत्र रक्षणम् ।
स्वधर्मं प्रतिपद्यस्व विनीतो नियतेन्द्रियः ॥ ३८
वृद्धैः संमन्त्र्य सद्भिश्च बुद्धिमद्भिः श्रुतान्वितैः ।
आस्थितः शास्ति दण्डेन व्यसनी परिभूयते ॥ ३९
निग्रहानुग्रहैः सम्यग्यदा नेता प्रवर्तते ।
तदा भवन्ति लोकस्य मर्यादाः सुव्यवस्थिताः ४०
तस्माद्देशे च दुर्गे च शत्रुमित्रबलेषु च ।
नित्यं चारेण बोद्धव्यं स्थानं वृद्धिः क्षयस्तथा ४१
राज्ञामुपायश्चारश्च बुद्धिमन्त्रपराक्रमाः ।
निग्रहप्रग्रहौ चैव दाक्ष्यं वै कार्यसाधकम् ॥ ४२
साम्ना दानेन भेदेन दण्डेनोपेक्षणेन च ।
साधनीयानि कार्याणि समासव्यासयोगतः ॥ ४३
मन्त्रमूला नयाः सर्वे चाराश्च भरतर्षभ ।
सुमन्त्रितनयैः सद्भिस्तद्विधैः सह मन्त्रयेत् ॥ ४४
स्त्रिया मूढेन बालेन लुब्धेन लघुनाऽपि वा ।

पर्याप्तः समर्थः ॥ १७ ॥ अरिष्टं निर्विघ्नम् ॥ २२ ॥ पुरुषेण मर्त्येन ॥ २४ ॥ आगमयस्व मात्वरिष्ठाः ॥ २६ ॥ दुर्जनवधोऽधर्मोपि धर्मएव । परोपघातकं सत्यं धर्मोपि अधर्मएव ॥२८ ॥ यज्ञैर्देवानां नीत्या मनुष्याणां च स्थितिरित्यर्थः॥३०॥ वार्ता जीविकार्थावृत्तिः ॥ ३१ ॥ साच क्रमेण ब्राह्मणस्य त्रयी-याजनाध्यापनादिः । वैश्यस्य वार्तापण्यादिः । क्षत्रियस्य दण्डादिः ॥ ३२ ॥ सा लोकयात्रा ॥ ३३ ॥ गुरौ त्रिवर्णे वासितं वासो येषां ते ॥ ३७ ॥ आस्थितोऽनुगृहीतः ॥ ३९ ॥ स्थानं सिद्धसंरक्षणम् ॥ ४१ ॥

न मन्त्रयीत गुह्यानि येषु चास्पन्दलक्षणम् ॥४५
मन्त्रयेत्सह विद्वद्भिः शक्तैः कर्माणि कारयेत् ।
स्निग्धैश्च नीतिविन्यासैर्मूर्खान्सर्वत्र वर्जयेत् ॥४६
धार्मिकान्धर्मकार्येषु अर्थकार्येषु पण्डितान् ।
स्त्रीषु क्लीबान्नियुञ्जीत क्रूरान्क्रूरेषु कर्मसु ॥ ४७
स्वेभ्यश्चैव परेभ्यश्च कार्याकार्यसमुद्भवा ।
बुद्धिः कर्मसु विज्ञेया रिपूणां च बलाबलम् ॥४८
बुद्ध्या स्वप्रतिपन्नेषु कुर्यात्साधुष्वनुग्रहम् ।
निग्रहं चाप्यशिष्टेषु निर्मर्यादेषु कारयेत् ॥ ४९
निग्रहे प्रग्रहे सम्यग्यदा राजा प्रवर्तते ।
तदा भवति लोकस्य मर्यादा सुव्यवस्थिता ॥५०
एष तेऽभिहितः पार्थ घोरो धर्मो दुरन्वयः ।
तं स्वधर्मविभागेन विनयस्थोऽनुपालय ॥ ५१
तपोधर्मदमेज्याभिर्विप्रा यान्ति यथा दिवम् ।
दानातिथ्यक्रियाधर्मैर्यान्ति वैश्याश्च सद्गतिम् ५२
'द्विजशुश्रूषया शूद्रा लभन्ते गतिमुत्तमाम् ।'
क्षत्रं याति तथा स्वर्गं भुवि निग्रहपालनैः ॥५३
सम्यक्प्रणीतदण्डा हि कामद्वेषविवर्जिताः ।
अलुब्धा विगतक्रोधाः सतां यान्ति सलोकताम् ५४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

## त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

उपसंहृतपृथुरूपेण हनुमता सपरिष्वङ्गवरदानं विसृष्टेन भीमेन गन्धमादने सौगन्धिकसरोदर्शनम् ॥ १ ॥

वैशंपायन उवाच ।
ततः संहृत्य विपुलं तद्वपुः कामवर्धितम् ।
भीमसेनं पुनर्दोर्भ्यां पर्यष्वजत वानरः ॥ १
परिष्वक्तस्य तस्याशु भ्रात्रा भीमस्य भारत ।
श्रमो नाशमुपागच्छत्सर्वं चासीत्प्रदक्षिणम् ॥ २
[बलं चातिबलो मेने न मेऽस्ति सदृशो महान् ।]
ततः पुनरथोवाच पर्यश्रुनयनो हरिः ॥ ३
भीममाभाष्य सौहार्दाद्बाष्पगद्गदया गिरा ।
गच्छ वीर स्वमावासं स्मर्तव्योऽस्मि कथान्तरे ॥४
इहस्थश्च कुरुश्रेष्ठ न निवेद्योस्मि कस्यचित् ।
धनदस्यालयाच्चापि विसृष्टानां महाबल ॥ ५
एष काल इहायातुं देवगन्धर्वयोषिताम् ।
ममापि सफलं चक्षुः स्मारितश्चास्मि राघवम् ॥ ६
[रामाभिधानं विष्णुं हि जगद्धृदयनन्दनम् ।
सीतावक्त्रारविन्दार्कं दशास्यध्वान्तभास्करम् ॥]७
मानुषं गात्रसंस्पर्शं गत्वा भीम त्वया सह ।
तदस्मद्दर्शनं वीर कौन्तेयामोघमस्तु ते ॥ ८
भ्रातृत्वं त्वं पुरस्कृत्य वरं वरय भारत ।
यदि तावन्मया क्षुद्रा गत्वा वारणसाह्वयम् ॥ ९
धार्तराष्ट्रा निहन्तव्या यावदेतत्करोम्यहम् ।
शिलया नगरं वा तन्मर्दितव्यं मया यदि ॥१०
[बद्ध्वा दुर्योधनं चाद्य आनयामि तवान्तिकम् ।]
यावदेतत्करोम्यद्य कामं तव महाबल ॥ ११
भीमसेनस्तु तद्वाक्यं श्रुत्वा तस्य महात्मनः ।
प्रत्युवाच हनूमन्तं प्रहृष्टेनान्तरात्मना ॥ १२
कृतमेव त्वया सर्वं मम वानरपुङ्गव ।
स्वस्ति तेऽस्तु महाबाहो कामये त्वां प्रसीद मे ॥ १३
सनाथाः पाण्डवाः सर्वे त्वया नाथेन वीर्यवन् ।
तवैव तेजसा सर्वान्विजेष्यामो वयं परान् ॥ १४
एवमुक्तस्तु हनुमान्भीमसेनमभाषत ।
भ्रातृत्वात्सौहृदाच्चैव करिष्यामि प्रियं तव ॥ १५
चमूं विगाह्य शत्रूणां परशक्तिसमाकुलाम् ।
यदा सिंहरवं वीर करिष्यसि महाबल ॥ १६
तदाहं बृंहयिष्यामि स्वरवेण रवं तव ।
'यं श्रुत्वैव भविष्यन्ति व्यसवस्तेऽरयो रणे ॥' १७
विजयस्य ध्वजस्थश्च नादान्मोक्ष्यामि दारुणान् ।

स्वेभ्यश्चारेभ्यः परेभ्य उत्कोचादिना लोभितेभ्यः ॥ ४८ ॥ बुद्ध्या जीवनाशया । प्रतिपन्नेषु शरणागतेषु ॥ ४९ ॥ घोरो धर्मो राजधर्मः ॥ ५१ ॥ द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

शत्रूणां ये प्राणहराः सुखं येन हनिष्यथ ॥ १८
एवमाभाष्य हनुमांस्तदा पाण्डवनन्दनम् ।
मार्गमाख्याय भीमाय तत्रैवान्तरधीयत ॥ १९
गते तस्मिन्हरिवरे भीमोपि बलिनांवरः ।
तेन मार्गेण विपुलं व्यचरद्गन्धमादनम् ॥ २०
अनुस्मरन्वपुस्तस्य श्रियं चाप्रतिमां भुवि ।
माहात्म्यमनुभावं च स्मरन्दाशरथेर्ययौ ॥ २१
स तानि रमणीयानि वनान्युपवनानि च ।
विलोलयामास तदा सौगन्धिकवनेप्सया ॥ २२
फुल्लपद्मविचित्राणि सरांसि सरितस्तथा ।
नानाकुसुमचित्राणि पुष्पितानि वनानि च ॥२३
मत्तवारणयूथानि पङ्कक्लिन्नानि भारत ।
वर्षतामिव मेघानां वृन्दानि ददृशे तदा ॥ २४
हरिणैश्चपलापाङ्गैर्हरिणीसहितैर्वनम् ।
सशष्पकवलैः श्रीमान्पथि दृष्ट्वा द्रुतं ययौ ॥२५
महिषैश्च वराहैश्च शार्दूलैश्च निषेवितम् ।
व्यपेतभीर्गिरिं शौर्याद्भीमसेनो व्यगाहत ॥ २६
कुसुमानतशाखैश्च ताम्रपल्लवकोमलैः ।
याच्यमान इवारण्ये द्रुमैर्मारुतकम्पितैः ॥ २७
कृतपद्माञ्जलिपुटा मत्तषट्पदसेविताः ।
प्रियतीर्थवना मार्गे पद्मिनीः समतिक्रमन् ॥ २८
सज्जमानमनोदृष्टिः फुल्लेषु गिरिसानुषु ।
द्रौपदीवाक्यपाथेयो भीमो भीमपराक्रमः ॥ २९
परिवृत्तेऽहनि ततः प्रकीर्णहरिणे वने ।
काञ्चनैर्विमलैः पद्मैर्ददर्श विपुलां नदीम् ॥ ३०
हंसकारण्डवयुतां चक्रवाकोपशोभिताम् ।
रचितामिव तस्याद्रेर्मालां विमलपङ्कजाम् ॥ ३१
तस्यां नद्यां महासत्वः सौगन्धिकवनं महत् ।
अपश्यत्प्रीतिजननं बालार्कसदृशद्युति ॥ ३२
तद्दृष्ट्वा लब्धकामः स मनसा पाण्डुनन्दनः ।
वनवासपरिक्लिष्टां जगाम मनसा प्रियाम् ॥ ३३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

---

## चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

सौगन्धिकसरोविविक्षुं भीमंप्रति तद्रक्षिभिः क्रोधवशनामकै राक्षसैस्तच्चिकीर्षितप्रश्नः ॥ १ ॥

वैशंपायन उवाच ।
स गत्वा नलिनीं रम्यां राक्षसैरभिरक्षिताम् ।
कैलासशिखरे रम्ये ददर्श शुभकानने ॥ १
कुबेरभुवनाभ्याशे जातां पर्वतनिर्झरैः ।
सुरम्यां विपुलच्छायां नानाद्रुमलताकुलाम् ॥ २
हरिताम्बुजसंछन्नां दिव्यां कनकपुष्कराम् ।
नानापक्षिजनाकीर्णां सूपतीर्थामकर्दमाम् ॥ ३
अतीव रम्यां सुजलां जातां पर्वतसानुषु ।
विचित्रभूतां लोकस्य शुभामद्भुतदर्शनाम् ॥ ४
तत्रामृतरसं शीतं लघु कुन्तीसुतः शुभम् ।
ददर्श विमलं तोयं पिबंश्च बहु पाण्डवः ॥ ५
तां तु पुष्करिणीं रम्यां दिव्यसौगन्धिकावृताम् ।
जातरूपमयैः पद्मैश्छन्नां परमगन्धिभिः ॥ ६
वैडूर्यवरनालैश्च बहुचित्रैर्मनोरमैः ।
हंसकारण्डवोद्धूतैः सृजद्भिरमलं रजः ॥ ७
आक्रीडं राजराजस्य कुबेरस्य महात्मनः ।
गन्धर्वैरप्सरोभिश्च देवैश्च परमार्चिताम् ॥ ८
सेवितामृषिभिर्दिव्यैर्यक्षैः किंपुरुषैस्तथा ।
राक्षसैः किंनरैश्चापि गुप्तां वैश्रवणेन च ॥ ९
तां च दृष्ट्वैव कौन्तेयो भीमसेनो महाबलः ।
बभूव परमप्रीतो दिव्यं प्रेक्ष्य सरो महत् ॥ १०
तच्च क्रोधवशा नाम राक्षसा राजशासनात् ।
रक्षन्ति शतसाहस्राश्चित्रायुधपरिच्छदाः ॥ ११

---

सूपतीर्थां शोभनानि उपतीर्थानि तीराणि यस्यां सा ॥ ३ ॥ लघु आरोग्यकरम् ॥ ५ ॥ जातरूपं स्वर्णम् ॥ ६ ॥ आक्रीडं क्रीडास्थानम् ॥ ८ ॥ चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

ते तु दृष्ट्वैव कौन्तेयमजिनैः परिवारितम् ।
रुक्माङ्गदधरं वीरं भीमं भीमपराक्रमम् ॥ १२
सायुधं बद्धनिस्त्रिंशमशङ्कितमरिंदमम् ।
पुष्करेप्सुमुपायान्तमन्योन्यमभिचुक्रुशुः ॥ १३
अयं पुरुषशार्दूलः सायुधोऽजिनसंवृतः ।
यच्चिकीर्षुरिह प्राप्तस्तत्संप्रष्टुमिहार्हथ ॥ १४
ततः सर्वे महाबाहुं समासाद्य वृकोदरम् ।
तेजोयुक्तमपृच्छन्त कस्त्वमाख्यातुमर्हसि ॥ १५
मुनिवेषधरश्चैव सायुधश्चैव लक्ष्यसे ।
यदर्थमभिसंप्राप्तस्तदाचक्ष्व महामते ॥ १६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

## पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

भीमेन सौगन्धिकसरोरक्षकान्प्रति स्वचिकीर्षितकथनपूर्वकं सौगन्धिकाहरणे प्रवर्तनम् ॥ १ ॥ तथा सप्रतिषेधं स्वजिघांसूनां तेषां गदया ताडनम् ॥ २ ॥ भीमगदाप्रहारमशक्नुवद्भिस्तैर्भीमवृत्तं निवेदितेन कुबेरेण तदनुमोदनम् ॥ ३ ॥

भीम उवाच ।
पाण्डवो भीमसेनोऽहं धर्मराजादनन्तरः ।
विशालां बदरीं प्राप्तो भ्रातृभिः सह राक्षसाः ॥ १
अपश्यत्तत्र पाञ्चाली सौगन्धिकमनुत्तमम् ।
अनिलोढमितो नूनं सा बहूनि परीप्सति ॥ २
तस्या मामनवद्याङ्ग्या धर्मपत्न्याः प्रिये स्थितम् ।
पुष्पाहारमिह प्राप्तं निबोधत निशाचराः ॥ ३
राक्षसा ऊचुः ।
आक्रीडोऽयं कुबेरस्य दयितः पुरुषर्षभ ।
नेह शक्यं मनुष्येण विहर्तुं मर्त्यधर्मणा ॥ ४
देवर्षयस्तथा यक्षा देवाश्चात्र वृकोदर ।
आमन्त्र्य यक्षप्रवरं पिबन्ति च हरन्ति च ॥ ५
गन्धर्वाप्सरसश्चैव विहरन्त्यत्र पाण्डव ।
'यक्षाधिपस्यानुमते कुबेरस्य महात्मनः ॥' ६
अन्यायेनेह यः कश्चिदवमत्य धनेश्वरम् ।
विहर्तुमिच्छेद्दुर्वृत्तः स विनश्येन्न संशयः ॥ ७
तमनादृत्य पद्मानि जिहीर्षसि बलादिह ।
धर्मराजस्य चात्मानं ब्रवीषि भ्रातरं कथम् ॥ ८
[आमन्त्र्य यक्षराजं वै ततः पिब हरस्व च ।
नातोऽन्यथा त्वया शक्यं किंचित्पुष्करमीक्षितुं॥९
भीमसेन उवाच ।
राक्षसास्तं न पश्यामि धनेश्वरमिहान्तिके ।
दृष्ट्वाऽपि च महाराजं नाहं याचितुमुत्सहे ॥ १०
न हि याचन्ति राजान एष धर्मः सनातनः ।
न चाहं हातुमिच्छामि क्षात्रधर्मं कथंचन ॥ ११
इयं च नलिनी रम्या जाता पर्वतनिर्झरे ।
नेयं भवनमासाद्य कुबेरस्य महात्मनः ॥ १२
तुल्या हि सर्वभूतानामियं वैश्रवणस्य च ।
एवं गतेषु द्रव्येषु कः कं याचितुमर्हति ॥ १३
इत्युक्त्वा राक्षसान्सर्वान्भीमसेनो व्यगाहत ।
तां तु पुष्करिणीं वीरः प्रभिन्न इव कुञ्जरः ॥ १४
ततः स राक्षसैर्वाचा प्रतिषिद्धः प्रतापवान् ।
मा मैवमिति सक्रोधैर्भर्त्सयद्भिः समन्ततः ॥ १५
कदर्थीकृत्य तु स तान्राक्षसान्भीमविक्रमः ।
व्यगाहत महातेजास्ते तं सर्वे न्यवारयन् ॥ १६
गृह्णीत बध्नीत विकर्ततेमं
पचाम खादाम च भीमसेनम् ।
क्रुद्धा ब्रुवन्तोऽभिययुर्द्रुतं ते
शस्त्राणि चोद्यम्य विवृत्तनेत्राः ॥ १७
ततः स गुर्वीं यमदण्डकल्पां
महागदां काञ्चनपट्टबद्धाम् ।
प्रगृह्य तानभ्यपतत्तरस्वी
ततोऽब्रवीत्तिष्ठत तिष्ठतेति ॥ १८

प्राप्तं मां निबोधत राक्षसाः इति ध. पाठः ॥ १ ॥

अनिलोढं वायुना आनीतम् ॥ २ ॥

ते तं तदा तोमरपट्टसाद्यै-
व्याविद्धशस्त्रैः सहसा निपेतुः ।
जिघांसवः क्रोधवशाः सुभीमा
भीमं समन्तात्परिवव्रुरुग्राः ॥ १९
वातेन कुन्त्यां बलवान्सुजातः
शूरस्तरस्वी द्विषतां निहन्ता ।
सत्ये च धर्मे च रतः सदैव
पराक्रमे शत्रुभिरप्रधृष्यः ॥ २०
तेषां स मार्गान्विविधान्महात्मा
निहत्य शस्त्राणि च शात्रवाणाम् ।
यथा प्रवीरान्निजघान भीमः
परश्शतान्पुष्करिणीसमीपे ॥ २१
ते तस्य वीर्यं च बलं च दृष्ट्वा
विद्याबलं बाहुबलं तथैव ।
अशक्नुवन्तः सहितं समन्ता-
द्धतं प्रवीराः सहसा निवृत्ताः ॥ २२
विदीर्यमाणास्तत एव तूर्ण-
माकाशमास्थाय विमूढसंज्ञाः ।
कैलासशृङ्गाण्यभिदुद्रुवुस्ते
भीमार्दिताः क्रोधवशाः प्रभग्नाः ॥ २३
स शक्रवद्दानवदैत्यसङ्घान्
विक्रम्य जित्वा च रणेऽरिसङ्घान् ।
विगाह्य तां पुष्करिणीं जितारिः
कामं स जग्राह ततोऽम्बुजानि ॥ २४
ततः स पीत्वाऽमृतकल्पमम्भो
भूयो बभूवोत्तमवीर्यतेजाः ।
उत्पाट्य जग्राह ततोऽम्बुजानि
सौगन्धिकान्युत्तमगन्धवन्ति ॥ २५
ततस्तु ते क्रोधवशाः समेत्य
धनेश्वरं भीमबलप्रणुन्नाः ।
भीमस्य वीर्यं च बलं च संख्ये
यथावदाचख्युरतीव दीनाः ॥ २६
तेषां वचस्तत्तु निशाम्य देवः
प्रहस्य रक्षांसि ततोऽभ्युवाच ।
गृह्णातु भीमो जलजानि कामं
कृष्णानिमित्तं विदितं ममैतत् ॥ २७
ततोऽभ्यनुज्ञाय धनेश्वरं ते
जग्मुः कुरूणां प्रवरं विरोषाः ।
भीमं च तस्यां ददृशुर्नलिन्यां
यथोपजोषं विहरन्तमेकम् ॥ २८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

## षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

दुर्निमित्तप्रदर्शिना भीमसेनानवलोकिना च युधिष्ठिरेण द्रौपदींप्रति भीमाभिगतदेशप्रश्नः ॥ १ ॥ द्रौपद्या भीमचिकीर्षितं निवेदितेन युधिष्ठिरेण घटोत्कचसाहाय्येन भीमसमीपगमनम् ॥ २ ॥ कुबेरबहुमानितैस्तैरर्जुनदिदृक्षया तत्रैव सुखेन विहरणम् ॥ ३ ॥

वैशंपायन उवाच ।
ततस्तानि महार्हाणि दिव्यानि भरतर्षभ ।
बहूनि बहुरूपाणि विरजांसि समाददे ॥ १
ततो वायुर्महाञ्शीघ्रो नीचैः शर्करकर्षणः ।
प्रादुरासीत्खरस्पर्शः संग्राममभिचोदयन् ॥ २
पपात महती चोल्का सनिर्घाता महाभया ।
निष्प्रभश्चाभवत्सूर्यश्छन्नरश्मिस्तमोवृतः ॥ ३
निर्घातश्चाभवद्भीमो भीमे विक्रममास्थिते ।
चचाल पृथिवी चापि पांसुवर्षं पपात च ॥ ४
सलोहिता दिशश्चासन्खरवाचो मृगद्विजाः ।
तमोवृतमभूत्सर्वं न प्राज्ञायत किंचन ।
[अन्ये च बहवो भीमा उत्पातास्तत्र जज्ञिरे ॥]५
तदद्भुतमभिप्रेक्ष्य धर्मपुत्रो युधिष्ठिरः ।
उवाच वदतां श्रेष्ठः कोऽस्मानभिभविष्यति ॥ ६

सज्जीभवत भद्रं वः पाण्डवा युद्धदुर्मदाः ।
यथा रूपाणि पश्यामि सुव्यक्तो नः पराक्रमः ७
एवमुक्त्वा ततो राजा वीक्षांचक्रे समन्ततः ।
अपश्यमानो भीमं तु धर्मपुत्रो युधिष्ठिरः ॥ ८
ततः कृष्णां यमौ चापि समीपस्थानरिंदमः ।
पप्रच्छ भ्रातरं भीमं भीमकर्माणमाहवे ॥ ९
कच्चिन्न भीमः पाञ्चालि किंच कृत्यं चिकीर्षति ।
कृतवानपि वा वीरः साहसं साहसप्रियः ॥ १०
इमे ह्यकस्मादुत्पाता महासमरशंसिनः ।
दर्शयन्तो भयं तीव्रं प्रादुर्भूताः समन्ततः ॥ ११
तं तथावादिनं कृष्णा प्रत्युवाच मनस्विनी ।
प्रिया प्रियं चिकीर्षन्ती महिषी चारुहासिनी १२
यत्तत्सौगन्धिकं राजन्नाहृतं मातरिश्वना ।
तन्मया भीमसेनस्य प्रीतयाऽद्योपपादितम् ॥ १३
अपि चोक्तो मया वीरो यदि पश्येर्बहून्यपि ।
तानि सर्वाण्युपादाय शीघ्रमागम्यतामिति ॥ १४
स तु नूनं महाबाहुः प्रियार्थं मम पाण्डवः ।
प्रागुदीचीं दिशं राजंस्तान्याहर्तुमितो गतः ॥ १५
उक्तस्त्वेवं तया राजा यमाविदमथाब्रवीत् ।
गच्छाम सहितास्तूर्णं येन यातो वृकोदरः ॥ १६
वहन्तु राक्षसा विप्रान्यथाश्रान्तान्यथाकृशान् ।
त्वमप्यमरसंकाश वह कृष्णां घटोत्कच ॥ १७
व्यक्तं दूरमितो भीमः प्रविष्ट इति मे मतिः ।
चिरं च तस्य कालोऽयं स च वायुसमो जवे ॥ १८
तरस्वी वैनतेयस्य सदृशो भुवि लङ्घने ।
उत्पतेदपि चाकाशं निपतेच्च यथेच्छकम् ॥ १९
तमन्वियाम भवतां प्रभावाद्रजनीचराः ।
पुरा स नापराध्नोति सिद्धानां ब्रह्मवादिनाम् ॥ २०
तथेत्युक्त्वा तु ते सर्वे हैडिम्बप्रमुखास्तदा ।
उद्देशज्ञाः कुबेरस्य नलिन्या भरतर्षभ ॥ २१
आदाय पाण्डवांश्चैव तांश्च विप्राननेकशः ।
लोमशेनैव सहिताः प्रययुः प्रीतमानसाः ॥ २२
ते सर्वे त्वरिता गत्वा ददृशुस्तत्र कानने ।
पद्मसौगन्धिकवतीं नलिनीं सुमनोरमाम् ॥ २३
तं च भीमं महात्मानं तस्यास्तीरे व्यवस्थितम् ।
ददृशुर्निहतांश्चैव यक्षांश्च विपुलेक्षणान् ॥ २४
भिन्नकायाक्षिबाहूरून्संचूर्णितशिरोधरान् ।
तं च भीमं महात्मानं तस्यास्तीरे व्यवस्थितम् ॥ २५
सक्रोधं स्तब्धनयनं संदष्टदशनच्छदम् ।
उद्यम्य च गदां दोर्भ्यां नदीतीरे व्यवस्थितम् २६
प्रजासंक्षेपसमये दण्डहस्तमिवान्तकम् ।
तं दृष्ट्वा धर्मराजस्तु परिष्वज्याथ भारत ॥ २७
उवाच श्लक्ष्णया वाचा कौन्तेय किमिदं कृतम् ।
साहसं बत भद्रं ते देवानामपि चाप्रियम् ।
पुनरेवं न कर्तव्यं मम चेदिच्छसि प्रियम् ॥ २८
अनुशिष्य तु कौन्तेयं पद्मानि परिगृह्य च ।
तस्यामेव नलिन्यां तु विजह्रुरमरोपमाः ॥ २९
एतस्मिन्नेव काले तु प्रगृहीतशिलायुधाः ।
प्रादुरासन्महाकायास्तस्योद्यानस्य रक्षिणः ॥ ३०
ते दृष्ट्वा धर्मराजानं महर्षिं चापि लोमशम् ।
नकुलं सहदेवं च तथाऽन्यान्ब्राह्मणर्षभान् ॥ ३१
विनयेन नताः सर्वे प्रणिपत्य च भारत ।
सान्त्विता धर्मराजेन प्रसेदुः क्षणदाचराः ॥ ३२
विदिताश्च कुबेरस्य तत्र ते कुरुपुङ्गवाः ।
ऊषुर्नातिचिरं कालं रममाणाः कुरूद्वहाः ।
प्रतीक्षमाणा बीभत्सुं गन्धमादनसानुषु ॥ ३३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

---

पराक्रमः पराक्रमकालः ॥ ७ ॥ उद्देशज्ञाः स्थलज्ञाः ॥ २१ ॥ षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

## सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

गन्धमादनादुत्तरं देशं जिगमिषुणा युधिष्ठिरेण आकाशवाणीश्रवणात्ततः प्रतिनिवृत्य अनुचरैःसह नरनारायणाश्रमं प्रति पुनरागमनम् ॥ १ ॥

वैशंपायन उवाच ।
तस्मिन्निवसमानोऽथ धर्मराजो युधिष्ठिरः ।
आमन्त्र्य सहितान्भ्रातॄनित्युवाच सहद्विजान् ॥ १
दृष्टानि तीर्थान्यस्माभिः पुण्यानि च शिवानि च ।
मनसो ह्लादनीयानि वनानि च पृथक्पृथक् ॥ २
देवैः पूर्वं विचीर्णानि मुनिभिश्च महात्मभिः ।
यथाक्रममशेषेण द्विजैः संपूजितानि च ॥ ३
ऋषीणां पूर्वचरितं तपोधर्मविचेष्टितम् ।
राजर्षीणां च चरितं कथाश्च विविधाः शुभाः ॥४
शृण्वानास्तत्रतत्र स्म आश्रमेषु शिवेषु च ।
अभिषेकं द्विजैः सार्धं कृतवन्तो विशेषतः ॥ ५
अर्चिताः सततं देवाः पुष्पैरद्भिः सदा च वः ।
यथालब्धैर्मूलफलैः पितरश्चापि तर्पिताः ॥ ६
पर्वतेषु च रम्येषु सर्वेषु च सरस्सु च ।
उदधौ च महापुण्ये सूपस्पृष्टं महात्मभिः ॥ ७
इला सरस्वती सिन्धुर्यमुना नर्मदा तथा ।
नानातीर्थेषु रम्येषु सूपस्पृष्टं सह द्विजैः ॥ ८
गङ्गाद्वारमतिक्रम्य बहवः पर्वताः शुभाः ।
हिमवान्पर्वतश्चैव नानाद्विजगणायुतः ॥ ९
विशाला बदरी दृष्टा नरनारायणाश्रमः ।
दिव्यपुष्करिणी दृष्टा सिद्धदेवर्षिपूजिता ॥ १०
यथाक्रमविशेषेण सर्वाण्यायतनानि च ।
दर्शितानि द्विजेन्द्रेण लोमशेन महात्मना ॥ ११
इमं वैश्रवणावासं दुर्गमं गन्धमादनम् ।
कथं भीम गमिष्यामो मतिरत्र विधीयताम् ॥१२
वैशंपायन उवाच ।
एवं ब्रुवति राजेन्द्रे वागुवाचाशरीरिणी ।
न शक्यो दुर्गमो गन्तुं पर्वतो गन्धमादनः ॥१३
अनेनैव पथा राजन्प्रतिगच्छ यथागतम् ।
नरनारायणस्थानं बदरीत्यभिविश्रुतम् ॥ १४
तस्माद्यास्यसि कौन्तेय सिद्धचारणसेवितम् ।
बहुपुष्पफलं रम्यमाश्रमं वृषपर्वणः ॥ १५
अतिक्रम्य च तं पार्थ त्वार्ष्टिषेणाश्रमे वसेः ।
ततो द्रक्ष्यसि कौन्तेय निवेशं धनदस्य च ॥१६
एतस्मिन्नन्तरे वायुर्दिव्यगन्धवहः शुभः ।
मनःप्रह्लादनः शीतः पुष्पवर्षं ववर्ष वै ॥ १७
तच्छ्रुत्वा दिव्यमाकाशाद्विस्मयः समपद्यत ।
ऋषीणां ब्राह्मणानां च पार्थिवानां विशेषतः १८
श्रुत्वा तन्महदाश्चर्यं द्विजो धौम्यस्त्वभाषत ।
न शक्यमुत्तरं गन्तुं प्रतिगच्छाम पाण्डव ॥ १९
ततो युधिष्ठिरो राजा विस्मयोत्फुल्ललोचनः ।
[प्रत्यागम्य पुनस्तं तु नरनारायणाश्रमम् ॥] २०
भीमसेनादिभिः सर्वैर्भ्रातृभिः परिवारितः ।
पाञ्चाल्या ब्राह्मणैश्चैव न्यवसत्सुसुखं तदा ॥ २१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

समाप्तं चेदं तीर्थयात्रापर्व ॥ ६ ॥

# ( अथ जटासुरवधपर्व ॥ ७ ॥ )

## अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

विप्रवेषेण पाण्डवनिकटचिरवासिना जटासुरेण भीमासंनिधाने द्रौपदीसहितान्युधिष्ठिरादीनपहृत्य पलायनम् ॥ १ ॥ मध्येमार्गं यदृच्छासमागतेन भीमेन तस्य मारणम् ॥ २ ॥

वैशंपायन उवाच ।
ततस्तान्परिविश्वस्तान्वसतस्तत्र पाण्डवान् ।
[पर्वतेन्द्रे द्विजैः सार्धं पार्थागमनकाङ्क्षया ॥] १
गतेषु तेषु रक्षःसु भीमसेनात्मजेऽपि च ।

रहितान्भीमसेनेन कदाचित्तान्यदृच्छया ।
जहार धर्मराजं वै यमौ कृष्णां च राक्षसः ॥ २
'जनमेजय उवाच ।
ब्रह्मन्कथं धर्मराजं यमौ कृष्णां च राक्षसः ।
जहार चित्रं भीमश्च गतो राक्षसकण्टकः ।
वक्तुमर्हसि विप्राग्र्य व्यक्तमेतन्ममाऽनघ ॥ ३
वैशंपायन उवाच ।'
ब्राह्मणो मन्त्रकुशलः सर्वास्त्रेष्वस्त्रवित्तमः ।
इति ब्रुवन्पाण्डवेयान्पर्युपास्ते स नित्यदा ।
परीप्समानः पार्थानां कलापांश्च धनूंषि च ॥ ४
अन्तरं संपरिप्रेप्सुर्द्रौपद्या हरणं प्रति ।
दुष्टात्मा पापबुद्धिः स नाम्ना ख्यातो जटासुरः ५
[पोषणं तस्य राजेन्द्र चक्रे पाण्डवनन्दनः ।
बुबुधे न च तं पापं भस्मच्छन्नमिवानलम् ॥ ६
स भीमसेने निष्क्रान्ते मृगयार्थमरिंदमे ।
[घटोत्कचं सानुचरं दृष्ट्वा विप्रद्रुतं दिशः ॥ ७
लोमशप्रभृतींस्तांस्तु महर्षींश्च समाहितान् ।
स्नातुं विनिर्गतान्दृष्ट्वा पुष्पार्थं च तपोधनान् ]८
रूपमन्यत्समास्थाय विकृतं भैरवं महत् ।
गृहीत्वा सर्वशस्त्राणि द्रौपदीं परिगृह्य च ।
प्रातिष्ठत सुदुष्टात्मा त्रीन्गृहीत्वा च पाण्डवान् ९
सहदेवस्तु यत्नेन ततोपक्रम्य पाण्डवः ।
[विक्रम्य कौशिकं खड्गं मोक्षयित्वा ग्रहं रिपोः।]
आक्रन्दद्भीमसेनं वै येन यातो महाबलः ॥ १०
तमब्रवीद्धर्मराजो ह्रियमाणो युधिष्ठिरः ।
धर्मस्ते हीयते मूढ न चैनं समवेक्षसे ॥ ११
येऽन्ये क्वचिन्मनुष्येषु तिर्यग्योनिगताश्च ये ।
धर्मं ते समवेक्षन्ते रक्षांसि च विशेषतः ॥ १२
धर्मस्य राक्षसा मूलं धर्मं ते विदुरुत्तमम् ।
एतत्परीक्ष्य सर्वं त्वं समीपे स्थातुमर्हसि ॥ १३
देवाश्च ऋषयः सिद्धाः पितरश्चापि राक्षस ।
गन्धर्वोरगरक्षांसि वयांसि पशवस्तथा ॥ १४
तिर्यग्योनिगताश्चैव अपि कीटपिपीलिकाः ।
मनुष्यानुपजीवन्ति ततस्त्वमपि जीवसि ॥ १५
समृद्ध्या यस्य लोकस्य लोको युष्माकमृध्यति ।
इमं च लोकं शोचन्तमनुशोचन्ति देवताः ।
पूज्यमानाश्च वर्धन्ते हव्यकव्यैर्यथाविधि ॥ १६
वयं राष्ट्रस्य गोप्तारो रक्षितारश्च राक्षस ।
राष्ट्रस्यारक्ष्यमाणस्य कुतो भूतिः कुतः सुखम् १७
न च राजाऽवमन्तव्यो रक्षसा जात्वनागसि ।
अणुरप्यपचारश्च नास्त्यस्माकं नराशन ॥ १८
विघसाशान्यथाशक्त्या कुर्महे देवतादिषु ।
गुरूंश्च ब्राह्मणांश्चैव प्रमाणप्रवणाः सदा ॥ १९
द्रोग्धव्यं न च मित्रेषु न विश्वस्तेषु कर्हिचित् ।
येषां चान्नानि भुञ्जीत यत्र च स्यात्प्रतिश्रयः २०
स त्वं प्रतिश्रयेऽस्माकं पूज्यमानः सुखोषितः ।
भुक्त्वा चान्नानि दुष्प्रज्ञ कथमस्माञ्जिहीर्षसि २१
एवमेव वृथाचारो वृथा वृद्धो वृथामतिः ।
वृथामरणमर्हस्त्वं वृथाऽद्य नभविष्यसि ॥ २२
अथ चेद्दुष्टबुद्धिस्त्वं सर्वैर्धर्मैर्विवर्जितः ।
प्रदाय शस्त्राण्यस्माकं युद्धेन द्रौपदीं हर ॥ २३
अथ चेत्त्वमविज्ञाय इदं कर्म करिष्यसि ।
अधर्मं चाप्यकीर्तिं च लोके प्राप्स्यसि केवलं २४
एतामद्य परामृश्य स्त्रियं राक्षस मानुषीम् ।
विषमेतत्समालोड्य कुम्भेन प्राशितं त्वया ॥२५
ततो युधिष्ठिरस्तस्य भारिकः समपद्यत ।
स तु भाराभिभूतात्मा न तथा शीघ्रगोऽभवत् ॥
अथाब्रवीद्द्रौपदीं च नकुलं च युधिष्ठिरः ।
मा भैष्ट राक्षसान्मूढाद्गतिरस्य मया हृता ॥ २७
नातिदूरे महाबाहुर्भविता पवनात्मजः ।
अस्मिन्मुहूर्ते संप्राप्ते नभविष्यति राक्षसः ॥ २८
सहदेवस्तु तं दृष्ट्वा राक्षसं मूढचेतसम् ।
उवाच वचनं राजन्कुन्तीपुत्रं युधिष्ठिरम् ॥ २९
राजन्किं नाम सत्कृत्यं क्षत्रियस्यास्त्यतोऽधिकम् ।

कलापान् निषङ्गान् ॥ ४ ॥ कौशिकं कोशादागतम् । ग्रहं ग्रहणम् ॥ १० ॥ युष्माकं देवासुरादीनाम् । ऋध्यति वृद्धिं गच्छति ॥ १६ ॥ विघसाशान् देवादिशेषान्नं विघसं तस्य आशो भोजनं येषां तान् ॥ १९ ॥ प्रतिश्रयो गृहम् ॥ २० ॥ नभविष्यसि मरिष्यसि ॥ २२ ॥ गुरुकः समपद्यतेति झ. पाठः ॥ २६ ॥ सत्कृत्यं साधुकार्यम् ॥ ३० ॥

यद्युद्धेऽभिमुखः प्राणांस्त्यजेच्छत्रुं जयेत वा ॥३०
एष वास्मान्वयं वैनं युध्यमानाः परंतप ।
सूदयेम महाबाहो देशः कालो ह्ययं नृप ॥ ३१
क्षत्रधर्मस्य संप्राप्तः कालः सत्यपराक्रम ।
जयन्तो हन्यमाना वा प्राप्तुमर्हाम सद्गतिम् ॥३२
राक्षसे जीवमानेऽद्य रविरस्तमियाद्यदि ।
नाहं ब्रूयां पुनर्जातु क्षत्रियोस्मीति भारत ॥ ३३
भोभो राक्षस तिष्ठस्व सहदेवोस्मि पाण्डवः ।
हत्वा वा मां नयस्वैनां हतो वा स्वप्स्यसीह वै ३४
तदा ब्रुवति माद्रेये भीमसेनो यदृच्छया ।
प्रादृश्यत महाबाहुः सवज्र इव वासवः ॥ ३५
सोऽपश्यद्भ्रातरौ तत्र द्रौपदीं च यशस्विनीम् ।
क्षितिस्थं सहदेवं च क्षिपन्तं राक्षसं तदा ॥ ३६
मार्गाच्च राक्षसं मूढं कालोपहतचेतसम् ।
भ्रमन्तं तत्रतत्रैव दैवेन परिमोहितम् ॥ ३७
हृतान्संदृश्य तान्भ्रातॄन्द्रौपदीं च महाबलः ।
क्रोधमाहारयद्भीमो राक्षसं चेदमब्रवीत् ॥ ३८
विज्ञातोऽसि मया पूर्वं चेष्टञ्शस्त्रपरीक्षणे ।
आस्था तु त्वयि मे नास्ति यतोसि न हतस्तदा ॥३९
ब्रह्मरूपप्रतिच्छन्नो न नो वदसि चाप्रियम् ।
प्रियेषु रममाणं त्वां न चैवाप्रियकारिणम् ।
ब्रह्मरूपेण विहितं नैव हन्यामनागसम् ॥ ४०
राक्षसं जानमानोऽपि यो हन्यान्नरकं व्रजेत् ।
अपक्वस्य च कालेन वधस्तव न विद्यते ॥ ४१
नूनमद्यासि संपक्वो यथा ते मतिरीदृशी ।
दत्ता कृष्णापहरणे कालेनाद्भुतकर्मणा ।
'सोपि कालं समासाद्य तथाऽद्य नभविष्यसि' ४२
बडिशोऽयं त्वया ग्रस्तः कालसूत्रेण लम्बितः ।
मत्स्योऽम्भसीव स्यूतास्यः कथमद्य गमिष्यसि ४३
यं चासि प्रस्थितो देशं मनः पूर्वं गतं च ते ।
न तं गन्तासि गन्तासि मार्गं बकहिडिम्बयोः ४४
एवमुक्तस्तु भीमेन राक्षसः कालचोदितः ।
भीत उत्सृज्य तान्सर्वान्युद्धाय समुपस्थितः ॥ ४५
अब्रवीच्च पुनर्भीमं रोषात्प्रस्फुरिताधरः ।
न मे मूढा दिशः पाप त्वदर्थं मे विलम्बनम् ॥४६
श्रुता मे राक्षसा ये ये त्वया विनिहता रणे ।
तेषामद्य करिष्यामि तवास्रेणोदकक्रियाम् ॥ ४७
'एवमुक्त्वा तदा भीमं राक्षसो योद्धुमाययौ ।
करालवदनः क्रोधात्कालसर्प इव श्वसन् ॥' ४८
एवमुक्तस्ततो भीमः सृक्किणी परिलेलिहन् ।
स्मयमान इव क्रोधात्साक्षात्कालान्तकोपमः ॥४९
'ब्रुवन्वै तिष्ठतिष्ठेति क्रोधसंरक्तलोचनः ।'
बाहुसंरम्भमेवेच्छन्नभिदुद्राव राक्षसम् ॥ ५०
[राक्षसोऽपि तदा भीमं युद्धार्थिनमवस्थितम् ।
मुहुर्मुहुर्व्याददानः सृक्किणी परिसंलिहन् ।]
अभिदुद्राव संरब्धो बलो वज्रधरं यथा ॥ ५१
भीमसेनोऽप्यवष्टब्धो नियुद्धायाभवत्स्थितः ।
राक्षसोऽपि च विस्रब्धो बाहुयुद्धमकाङ्क्षत ॥' ५२
वर्तमाने तयो राजन्बाहुयुद्धे सुदारुणे ।
माद्रीपुत्रावतिक्रुद्धावुभावप्यभ्यधावताम् ॥ ५३
न्यवारयत्तौ प्रहसन्कुन्तीपुत्रो वृकोदरः ।
शक्तोऽहं राक्षसस्येति प्रेक्षध्वमिति चाब्रवीत् ५४
आत्मना भ्रातृभिश्चैव धर्मेण सुकृतेन च ।
इष्टेन च शपे राजन्सूदयिष्यामि राक्षसम् ॥ ५५
इत्येवमुक्त्वा तौ वीरौ स्पर्धमानौ परस्परम् ।
बाहुभिः समसज्जेतामुभौ रक्षोवृकोदरौ ॥ ५६
तयोरासीत्संप्रहारः क्रुद्धयोर्भीमरक्षसोः ।
अमृष्यमाणयोः सङ्ख्ये शक्रशम्बरयोरिव ॥ ५७
तौ वीरौ समभिक्रुद्धावन्योन्यं पर्यधावताम् ।
आरुज्यारुज्य तौ वृक्षानन्योन्यमभिजघ्नतुः ।
जीमूताविव घर्मान्ते विनदन्तौ महाबलौ ॥ ५८
बभञ्जतुर्महावृक्षानूरुभिर्बलिनां वरौ ।
अन्योन्येनाभिसंरब्धौ परस्परवधैषिणौ ॥ ५९
तद्वृक्षयुद्धमभवन्महीरुहविनाशनम् ।

आस्था त्वन्मारणे आदरः ॥ ३९ ॥ अतिथिं ब्रह्मरूपं च कथं इति झ. पाठः ॥ ४० ॥ कालपक्व इदानीं त्वं यथेति थ. पाठः

॥४२॥ बडिशो मत्स्यवेधनम् ॥४३॥ अस्रेण लोहितेन ॥४७॥

वालिसुग्रीवयोर्भ्रात्रोः पुरेव कपिसिंहयोः ॥ ६०
आविध्याविध्य तौ वृक्षान्मुहूर्तमितरेतरम् ।
ताडयामासतुरुभौ विनदन्तौ मुहुर्मुहुः ॥ ६१
तस्मिन्देशे यदा वृक्षाः सर्व एव निपातिताः ।
पुञ्जीकृताश्च शतशः परस्परवधेप्सया ॥ ६२
ततः शिलाः समादाय मुहूर्तमिव भारत ।
महाभ्रैरिव शैलेन्द्रौ युयुधाते महाबलौ ॥ ६३
शिलाभिरुग्ररूपाभिर्बृहतीभिः परस्परम् ।
वज्रैरिव महावेगैराजघ्नतुरमर्षणौ ॥ ६४
अभिद्रुत्य च भूयस्तावन्योन्यबलदर्पितौ ।
भुजाभ्यां परिगृह्याथ चकर्षाते गजाविव ॥ ६५
मुष्टिभिश्च महाघोरैरन्योन्यमभिपेततुः ।
ततः कटकटाशब्दो बभूव सुमहात्मनोः ॥ ६६
ततः संहृत्य मुष्टिं तु पञ्चशीर्षमिवोरगम् ।
वेगेनाभ्यहनद्भीमो राक्षसस्य शिरोधराम् ॥ ६७
ततः श्रान्तं तु तद्रक्षो भीमसेनभुजाहतम् ।
सुपरिश्रान्तमालक्ष्य भीमसेनोऽभ्यवर्तत ॥ ६८
तत एनं महाबाहुर्बाहुभ्याममरोपमः ।
समुत्क्षिप्य बलाद्भीमो निष्पिपेष महीतले ॥ ६९
'ततः संपीड्य बलवद्भुजाभ्यां क्रोधमूर्च्छितः ।'
तस्य गात्राणि सर्वाणि चूर्णयामास पाण्डवः ।
अरत्निना चाभिहत्य शिरः कायादपाहरत् ॥ ७०
संदष्टौष्ठं विवृत्ताक्षं फलं वृक्षादिव च्युतम् ।
जटासुरस्य तु शिरो भीमसेनबलाद्धृतम् ।
पपात रुधिरादिग्धं संदष्टदशनच्छदम् ॥ ७१
तं निहत्य महेष्वासो युधिष्ठिरमुपागमत् ।
स्तूयमानो द्विजाग्र्यैस्तु मरुद्भिरिव वासवः ॥ ७२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि जटासुरवधपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

समाप्तं च जटासुरवधपर्व ॥ ७ ॥

---

## (अथ यक्षयुद्धपर्व ॥ ८ ॥)

### एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

जटासुरवधानन्तरं सपरिवारेण युधिष्ठिरेण नरनारायणाश्रमे निवासः ॥ १ ॥ ततो वृषपर्वाश्रमादिषु सुखेन संचरणम् ॥ २ ॥ तत आर्ष्टिषेणाश्रमगमनम् ॥ ३ ॥

वैशंपायन उवाच ।
निहते राक्षसे तस्मिन्पुनर्नारायणाश्रमम् ।
अभ्येत्य राजा कौन्तेयो निवासमकरोत्प्रभुः ॥ १
स समानीय तान्सर्वान्भ्रातॄनित्यब्रवीद्वचः ।
द्रौपद्या सहितः काले संस्मरन्भ्रातरं जयम् ॥ २
समाश्वतस्रोऽभिगताः शिवेन चरतां वने ।
कृतोद्देशः स बीभत्सुः पञ्चमीमभितः समाम् ॥ ३
प्राप्य पर्वतराजानं श्वेतं शिखरिणांवरम् ।
[पुष्पितैर्द्रुमषण्डैश्च मत्तकोकिलषट्पदैः ॥ ४
मयूरैश्चातकैश्चापि नित्योत्सवविभूषितम् ।
व्याघ्रैर्वराहैर्महिषैर्गवयैर्हरिणैस्तथा ॥ ५
श्वापदैर्व्यालरूपैश्च रुरुभिश्च निषेवितम् ।
फुल्लैः सहस्रपत्रैश्च शतपत्रैस्तथोत्पलैः ॥ ६
प्रफुल्लैः कमलैश्चैव तथा नीलोत्पलैरपि ।
महापुण्यं पवित्रं च सुरासुरनिषेवितम् ।]
तत्रापि च कृतोद्देशः समागमदिदृक्षुभिः ॥ ७

---

पुरा स्त्रीकाङ्क्षिणोर्यथा इति झ. पाठः ॥ ६० ॥ आविध्य भ्रामयित्वा ॥ ६१ ॥ मुञ्जीकृताश्चेति झ. पाठः । तत्र मुञ्जीकृताः रज्ज्वर्थं मुञ्जवज्जर्जरीकृता इत्यर्थः ॥ ६२ ॥ महाभ्रैरिवेत्यभूतोपमा ॥ ६३ ॥ शिरोधरां ग्रीवाम् ॥ ६७ ॥ अभ्यवर्तत अधिकोत्साहवानभूत् ॥ ६८ ॥ अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

जयं अर्जुनम् ॥ २ ॥ कृतोद्देशः पञ्चमे वर्षे मयाऽवश्यमागन्तव्यमिति कृतसंकेतः ॥ ३ ॥ श्वेतं कैलासम् ॥ ४ ॥ तत्रापि देशे अस्माभिरिति शेषः । उद्देशः कृतः । संधिरार्षः ॥ ७ ॥

कृतश्च समयस्तेन पार्थेनामिततेजसा ।
पञ्चवर्षाणि वत्स्यामि विद्यार्थीति पुरा मयि ॥ ८
अत्र गाण्डीवधन्वानमवाप्तास्त्रमरिंदमम् ।
देवलोकादिमं लोकं द्रक्ष्यामः पुनरागतम् ॥ ९
इत्युक्त्वा ब्राह्मणान्सर्वानामन्त्रयत पाण्डवः ।
कारणं चैव तत्तेषामाचचक्षे तपस्विनाम् ॥ १०
तमुग्रतपसः प्रीताः कृत्वा पार्थं प्रदक्षिणम् ।
ब्राह्मणास्तेऽन्वमोदन्त शिवेन कुशलेन च ॥ ११
सुखोदर्कमिमं क्लेशमचिराद्भरतर्षभ ।
क्षत्रधर्मेण धर्मज्ञ तीर्त्वा गां पालयिष्यसि ॥ १२
तत्तु राजा वचस्तेषां प्रतिगृह्य तपस्विनाम् ।
प्रतस्थे सह विप्रैस्तैर्भ्रातृभिश्च परंतपः ॥ १३
'द्रौपद्या सहितः श्रीमान्हैडिम्बेयादिभिस्तदा ।'
राक्षसैरनुयातो वै लोमशेनाभिरक्षितः ॥ १४
क्वचित्पद्भ्यां ततोऽगच्छद्राक्षसैरुह्यते क्वचित् ।
तत्रतत्र महातेजा भ्रातृभिः सह सुव्रतः ॥ १५
ततो युधिष्ठिरो राजा बहून्क्लेशान्विचिन्तयन् ।
सिंहव्याघ्रगजाकीर्णामुदीचीं प्रययौ दिशम् ॥ १६
अवेक्षमाणः कैलासं मैनाकं चैव पर्वतम् ।
गन्धमादनपादांश्च मेरुं चापि शिलोच्चयम् ॥ १७
उपर्युपरि शैलस्य बह्वीश्च सरितः शिवाः ।
पृष्ठं हिमवतः पुण्यं ययौ सप्तदशेऽहनि ॥ १८
ददृशुः पाण्डवा राजन्गन्धमादनमन्तिकात् ।
पृष्ठे हिमवतः पुण्ये नानाद्रुमलतावृते ॥ १९
सलिलावर्तसंजातैः पुष्पितैश्च महीरुहैः ।
समावृतं पुण्यतममाश्रमं वृषपर्वणः ॥ २०
तमुपक्रम्य राजर्षिं धर्मात्मानमरिंदमाः ।
पाण्डवा वृषपर्वाणमवदन्त गतक्लमाः ॥ २१
अभ्यनन्दत्स राजर्षिः पुत्रवद्भरतर्षभान् ।
पूजिताश्चावसंस्तत्र सप्तरात्रमरिंदमाः ॥ २२
अष्टमेऽहनि संप्राप्ते तमृषिं लोकविश्रुतम् ।
आमन्त्र्य वृषपर्वाणं प्रस्थानं प्रत्यरोचयन् ॥ २३
एकैकशश्च तान्विप्रान्निवेद्य वृषपर्वणि ।
न्यासभूतान्यथाकालं बन्धूनिव सुसत्कृतान् ।
पारिबर्हं च तं शेषं परिदाय महात्मने ॥ २४
ततस्ते यज्ञपात्राणि रत्नान्याभरणानि च ।
न्यदधुः पाण्डवा राजन्नाश्रमे वृषपर्वणः ॥ २५
अतीतानागते विद्वान्कुशलः सर्वधर्मवित् ।
अन्वशासत्स धर्मज्ञः पुत्रवद्भरतर्षभान् ॥ २६
तेऽनुज्ञाता महात्मानः प्रययुर्दिशमुत्तराम् ।
'कृष्णया सहिता वीरा ब्राह्मणैश्च महात्मभिः ॥ २७
तान्प्रस्थितानन्वगच्छद्वृषपर्वा महीपतीन् ।
उपन्यस्य महातेजा विप्रेभ्यः पाण्डवांस्तदा ॥ २८
अनुसंसार्य कौन्तेयानाशीर्भिरभिनन्द्य च ।
वृषपर्वा निववृते पन्थानमुपदिश्य च ॥ २९
नानामृगगणैर्जुष्टं कौन्तेयः सत्यविक्रमः ।
पदातिर्भ्रातृभिः सार्धं प्रातिष्ठत युधिष्ठिरः ॥ ३०
नानाद्रुमनिरोधेषु वसन्तः शैलसानुषु ।
पर्वतं विविशुस्ते तं चतुर्थेऽहनि पाण्डवाः ॥ ३१
महाभ्रघनसंकाशं सलिलोपहितं शुभम् ।
मणिकाञ्चनरम्यं च शैलं नानासमुच्छ्रयम् ॥ ३२
'रम्यं हिमवतः प्रस्थं बहुकन्दरनिर्झरम् ।
शिलाविभङ्गविकटं लतापादपसङ्कुलम् ॥' ३३
ते समासाद्य पन्थानं यथोक्तं वृषपर्वणा ।
अनुसस्रुर्यथोद्देशं पश्यन्तो विविधान्नगान् ॥ ३४
उपर्युपरि शैलस्य गुहाः परमदुर्गमाः ।
सुदुर्गमांस्ते सुबहून्सुखेनैवाभिचक्रमुः ॥ ३५
धौम्यः कृष्णा च पार्थाश्च लोमशश्च महानृषिः ।
आगच्छन्सहितास्तत्र न कश्चिदपि हीयते ॥ ३६
ते मृगद्विजसंघुष्टं नानाद्रुमलतायुतम् ।
शाखामृगगणैश्चैव सेवितं सुमनोरमम् ॥ ३७
पुण्यं पद्मसरोपेतं सपल्वलमहावनम् ।
उपतस्थुर्महाभागा माल्यवतं महागिरिम् ॥ ३८
ततः किंपुरुषावासं सिद्धचारणसेवितम् ।
ददृशुर्हृष्टरोमाणः पर्वतं गन्धमादनम् ॥ ३९
विद्याधरानुचरितं किन्नरीभिस्तथैव च ।

सुखोदर्कं सुखोदयम् ॥ १२ ॥ उपन्यस्य निवेद्य ॥ २८ ॥ अनुसंसार्य अनुगम्य ॥ २९ ॥

गजसङ्घसमावासं सिंहव्याघ्रगणायुतम् ॥ ४०
शरभोन्नादसंघुष्टं नानामृगनिषेवितम् ॥ ४१
ते गन्धमादनवनं तन्नन्दनवनोपमम् ।
मुदिताः पाण्डुतनया मनोनयननन्दनम् ॥ ४२
विविशुः क्रमशो वीरा अरण्यं शुभकाननम् ।
द्रौपदीसहिता वीरास्तैश्च विप्रैर्महात्मभिः ॥ ४३
शृण्वन्तः प्रीतिजननान्वल्गून्मन्दकलाञ्शुभान् ।
श्रोत्ररम्यान्सुमधुराञ्शब्दान्खगमुखेरितान् ॥ ४४
सर्वर्तुफलभाराढ्यान्सर्वर्तुकुसुमोज्ज्वलान् ।
पश्यन्तः पादपांश्चापि फलभारावनामितान् ॥ ४५
आम्रानाम्रातकान्फुल्लान्नारिकेलान्सतिन्दुकान् ।
मुञ्जातकांस्तथाजीरान्दाडिमान्बीजपूरकान् ॥ ४६
पनसाँल्लिकुचान्मोचाः खर्जूरानम्लवेतसान् ।
परावतांस्तथा क्षौद्रानीपांश्चापि मनोरमान् ॥ ४७
बिल्वान्कपित्थाञ्जम्बूश्च काश्मरीर्बदरीस्तथा ।
प्लक्षानुदुम्बरवटानश्वत्थान्क्षीरिकास्तथा ॥ ४८
भल्लातकानामलकीर्हरीतकविभीतकान् ।
इङ्गुदान्करमर्दांश्च तिन्दुकांश्च महाफलान् ॥ ४९
एतानन्यांश्च विविधान्गन्धमादनसानुषु ।
फलैरमृतकल्पैस्तानाचितान्स्वादुभिस्तरून् ॥ ५०
तथैव चम्पकाशोकान्केतकान्बकुलांस्तथा ।
पुन्नागान्सप्तपर्णांश्च कर्णिकारान्सकेतकान् ।
पाटलान्कुटजान्रम्यान्मन्दारेन्दीवरांस्तथा ॥ ५१
पारिजातान्कोविदारान्देवदारुद्रुमांस्तथा ।
शालांस्तालांस्तमालांश्च पिप्पलान्हिङ्गुकांस्तथा ।
शाल्मलीः किंशुकाशोकाञ्शिंशपाः सरलांस्तथा ॥
चकोरैः शतपत्रैश्च भृङ्गराजैस्तथा शुकैः ।
कोकिलैः कलविङ्कैश्च हारितैर्जीवजीवकैः ॥ ५३
प्रियकैश्चातकैश्चैव तथाऽन्यैर्विविधैः खगैः ।
श्रोत्ररम्यं सुमधुरं कूजद्भिश्चाप्यधिष्ठितान् ॥ ५४
सरांसि च मनोज्ञानि समन्ताज्जलचारिभिः ।
कुमुदैः पुण्डरीकैश्च तथा कोकनदोत्पलैः ।
कह्लारैः कमलैश्चैव आचितानि समन्ततः ॥ ५५
कादम्बैश्चक्रवाकैश्च कुररैर्जलकुक्कुटैः ।
कारण्डवैः प्लवैर्हंसैर्बकैर्मद्गुभिरेव च ॥ ५६
एतैश्चान्यैश्च कीर्णानि समन्ताज्जलचारिभिः ।
हृष्टैस्तथा तामरसरसासवमदालसैः ॥ ५७
पद्मोदरच्युतरजःकिञ्जल्कारुणरञ्जितैः ।
मञ्जुस्वरैर्मधुकरैर्विरुतान्कमलाकरान् ॥ ५८
अपश्यंस्ते नरव्याघ्रा गन्धमादनसानुषु ।
तथैव पद्मषण्डैश्च मण्डितांश्च समन्ततः ॥ ५९
शिखण्डिनीभिः सहिताँल्लतामण्डलकेषु च ।
मेघतूर्यरवोद्दाममदनाकुलितान्भृशम् ॥ ६०
कृत्वैव केकामधुरं संगीतं मधुरस्वरम् ।
चित्रान्कलापान्विस्तीर्य सविलासान्मदालसान् ॥
मयूरान्ददृशुर्हृष्टान्नृत्यतो वनलालसान् ।
कांश्चित्प्रियाभिः सहितान्रममाणान्कलापिनः ६२
वल्लीलतासंकटेषु कुटजेषु स्थितांस्तथा ।
कांश्चिच्च कुटजानां तु विटपेषूत्कटानिव ॥ ६३
कलापरुचिराटोपनिचितान्मुकुटानिव ।
विवरेषु तरूणां च रुचिरान्ददृशुश्च ते ॥ ६४
सिन्धुवारांस्तथोदारान्मन्मथस्येव तोमरान् ।
सुवर्णवर्णकुसुमान्गिरीणां शिखरेषु च ।
कर्णिकारान्विकसितान्कर्णपूरानिवोत्तमान् ॥ ६५
तथाऽपश्यन्कुरबकान्वनराजिषु पुष्पितान् ।
कामवश्यौत्सुक्यकरान्कामस्येव शरोत्करान् ॥ ६६
तथैव वनराजीनामुदारान्रचितानिव ।
विराजमानांस्तेऽपश्यंस्तिलकांस्तिलकानिव ॥ ६७
तथानङ्गशराकारान्सहकारान्मनोरमान् ।
अपश्यन्भ्रमराराजन्मञ्जरीभिर्विराजितान् ॥ ६८
हिरण्यसदृशैः पुष्पैर्दावाग्निसदृशैरपि ।
लोहितैरञ्जनाभैश्च वैदूर्यसदृशैरपि ।
अतीव वृक्षा राजन्ते पुष्पिताः शैलसानुषु ॥ ६९
तथा सालांस्तमालांश्च पाटलाबकुलानपि ।

तामरसानां रसएव आसवो मद्यं तज्जेन मदेन अलसाः ॥ ५७ ॥ विरुतान्विशिष्टशब्दयुतान् ॥ ५८ ॥ कुटजेषु वृक्षविशेषेषु । वल्लीनां लताप्रतानानि तैः संकटेषु कुञ्जीकृतेषु ॥ ६३ ॥ सिंधुवारान् पद्मविशेषान् ॥ ६५ ॥ कामवश्यानां नराणामौत्सुक्यकरान् ॥ ६६ ॥

माला इव समासक्ताः शैलानां शिखरेषु च ७०
विमलस्फाटिकाभानि पाण्डुरच्छदनैर्द्विजैः।
कलहंसैरुपेतानि सारसाभिरुतानि च ॥ ७१
सरांसि बहुशः पार्थाः पश्यन्तः शैलसानुषु।
पद्मोत्पलविमिश्राणि सुखशीतजलानि च ॥ ७२
एवं क्रमेण ते वीरा वीक्षमाणाः समन्ततः।
गन्धवन्त्यथ माल्यानि रसवन्ति फलानि च ७३
सरांसि च मनोज्ञानि वृक्षांश्चातिमनोरमान्।
विविशुः पाण्डवाः सर्वे विस्मयोत्फुल्ललोचनाः ७४
कमलोत्पलकह्लारपुण्डरीकसुगन्धिना।
सेव्यमाना वने तस्मिन्सुखस्पर्शेन वायुना ॥ ७५
ततो युधिष्ठिरो भीममाहेदं प्रीतिमद्वचः।
अहो श्रीमदिदं भीम गन्धमादनकाननम् ॥ ७६
वने ह्यस्मिन्मनोरम्ये दिव्याः काननजा द्रुमाः।
लताश्च विविधाकाराः पत्रपुष्पफलोपगाः।
भान्त्येते पुष्पविकचाः पुंस्कोकिलकुलाकुलाः ७७
नात्र कण्टकिनः केचिन्न च विद्यन्त्यपुष्पिताः।
स्निग्धपत्रफला वृक्षा गन्धमादनसानुषु ॥ ७८
भ्रमरारावमधुरा नलिनीः फुल्लपङ्कजाः।
विलोड्यमानाः पश्येमाः करिभिः सकरेणुभिः ७९
पश्येमां नलिनीं चान्यां कमलोत्पलमालिनीम्।
स्रग्धरां विग्रहवतीं साक्षाच्छ्रियमिवापराम् ॥ ८०
नानाकुसुमगन्धाढ्यास्तस्येमाः काननोत्तमे।
उपगीयमाना भ्रमरै राजन्ते वनराजयः ॥ ८१
पश्य भीम शुभान्देशान्देवाक्रीडान्समन्ततः।
अमानुषगतिं प्राप्ताः संसिद्धाः स्म वृकोदर ॥ ८२
लताभिः पुष्पिताग्राभिः पुष्पिताः पादपोत्तमाः।
संश्लिष्टाः पार्थ शोभन्ते गन्धमादनसानुषु ॥ ८३
शिखण्डिनीभिश्चरतां सहितानां शिखण्डिनाम्।
नदतां शृणु निर्घोषं भीम पर्वतसानुषु ॥ ८४
चकोराः शतपत्राश्च मत्तकोकिलशारिकाः।
पत्रिणः पुष्पितानेतान्संपतन्ति महाद्रुमान् ॥ ८५
रक्तपीतारुणाः पार्थ पादपाग्रगताः खगाः।
परस्परमुदीक्षन्ते बहवो जीवजीवकाः ॥ ८६
हरितारुणवर्णानां शाड्वलानां समीपतः।
सारसाः प्रतिदृश्यन्ते शैलप्रस्रवणेष्वपि ॥ ८७
वदन्ति मधुरा वाचः सर्वभूतमनोरमाः।
भृङ्गराजोपचक्राश्च लोहपृष्ठाः पतत्रिणः ॥ ८८
चतुर्विषाणाः पद्माभाः कुञ्जराः सकरेणवः।
एते वैडूर्यवर्णाभं क्षोभयन्ति महत्सरः ॥ ८९
बहुतालसमुत्सेधाः शैलशृङ्गपरिच्युताः।
नानाप्रस्रवणेभ्यश्च वारिधाराः पतन्ति च ॥ ९०
भास्कराभप्रभा भीमाः शारदाभ्रघनोपमाः।
शोभयन्ति महाशैलं नानारजतधातवः ॥ ९१
क्वचिदञ्जनवर्णाभाः क्वचित्काञ्चनसन्निभाः।
धातवो हरितालस्य क्वचिद्धिङ्गुलकस्य च ॥ ९२
मनःशिलागुहाश्चैव संध्याभ्रनिकरोपमाः।
शशलोहितवर्णाभाः क्वचिद्गैरिकधातवः ॥ ९३
सितासिताभ्रप्रतिमा बालसूर्यसमप्रभाः।
एते बहुविधाः शैलं शोभयन्ति महाप्रभाः ॥ ९४
गन्धर्वाः सह कान्ताभिर्यथेष्टं भीमविक्रमाः।
दृश्यन्ते शैलशृङ्गेषु पार्थ किंपुरुषैः सह ॥ ९५
गीतानां समतालानां तथा साम्नां च निःस्वनः।
श्रूयते बहुधा भीम सर्वभूतमनोहरः ॥ ९६
महागङ्गामुदीक्षस्व पुण्यां देवनदीं शुभाम्।
कलहंसगणैर्जुष्टामृषिकिन्नरसेविताम् ॥ ९७
धातुभिश्च सरिद्भिश्च किन्नरैर्मृगपक्षिभिः।
गन्धर्वैरप्सरोभिश्च काननैश्च मनोरमैः ॥ ९८
व्यालैश्च विविधाकारैः शतशीर्षैः समन्ततः।
उपेतं पश्य कौन्तेय शैलराजमरिंदम ॥ ९९
वैशंपायन उवाच।
ते प्रीतमनसः शूराः प्राप्ता गतिमनुत्तमाम्।
नातृप्यन्पर्वतेन्द्रस्य दर्शनेन परंतपाः ॥ १००

हे भीम ॥ ७६ ॥ नलिनीं सरसीम्। कमलोत्पलयोरवान्तरजातिभेदः। विग्रहवतीं शरीरवतीम् ॥८०॥ तस्य शैलस्य ॥८१॥ भृङ्गराजादयः पक्षिविशेषाः ॥ ८८ ॥ चतुर्विषाणाश्चतुर्दन्ताः ॥ ८९ ॥ एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

उपेतमथ माल्यैश्च फलवद्भिश्च पादपैः ।
आर्ष्टिषेणस्य राजर्षेराश्रमं ददृशुस्तदा ॥ १०१
ततस्ते तिग्मतपसं कृशं धमनिसंततम् ।
पारगं सर्वविद्यानामार्ष्टिषेणमुपागमन् ॥ १०२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि यक्षयुद्धपर्वणि एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

## षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

आर्ष्टिषेणराजर्षिणा युधिष्ठिरंप्रति कैलासवर्णनपूर्वकमर्जुनागमनपर्यन्तं स्वाश्रमएव निवासचोदना ॥ १ ॥

वैशंपायन उवाच ।
युधिष्ठिरस्तमासाद्य तपसा दग्धकिल्बिषम् ।
अभ्यवादयत प्रीतः शिरसा नाम कीर्तयन् ॥ १
ततः कृष्णा च भीमश्च यमौ च सुतपस्विनौ ।
शिरोभिः प्राप्य राजर्षिं परिवार्योपतस्थिरे ॥ २
तथैव धौम्यो धर्मज्ञः पाण्डवानां पुरोहितः ।
यथान्यायमुपाक्रान्तस्तमृषिं संशितव्रतम् ॥ ३
अन्वजानात्स धर्मज्ञो मुनिर्दिव्येन चक्षुषा ।
पाण्डोः पुत्रान्कुरुश्रेष्ठानास्यतामिति चाब्रवीत् ४
कुरूणामृषभं प्राज्ञं पूजयित्वा महातपाः ।
सह भ्रातृभिरासीनं पर्यपृच्छदनामयम् ॥ ५
नानृते कुरुषे भावं कच्चिद्धर्मे प्रवर्तसे ।
मातापित्रोश्च ते वृत्तिः कच्चित्पार्थ न सीदति ॥६
कच्चित्ते गुरवः सर्वे वृद्धा वैद्याश्च पूजिताः ।
कच्चिन्न कुरुषे भावं पार्थ पापेषु कर्मसु ॥ ७
सुकृतं प्रतिकर्तुं च कच्चिद्धातुं च दुष्कृतम् ।
यथान्यायं कुरुश्रेष्ठ जानासि न विकत्थसे ॥ ८
यथार्हं मानिताः कच्चित्त्वया नन्दन्ति साधवः ।
वनेष्वपि वसन्कच्चिद्धर्ममेवानुवर्तसे ॥ ९
कच्चिद्धौम्यस्त्वदाचारैर्न पार्थ परितप्यते ।
दानधर्मतपःशौचैरार्जवेन तितिक्षया ॥ १०
पितृपैतामहं वृत्तं कच्चित्पार्थानुवर्तसे ।
कच्चिद्राजर्षियातेन पथा गच्छसि पाण्डव ॥ ११
स्वे स्वे किल कुले जाते पुत्रे नप्तरि वा पुनः ।
पितरः पितृलोकस्थाः शोचन्ति च रमन्ति च १२
किं तस्य दुष्कृतेऽस्माभिः संप्राप्तव्यं भविष्यति ।
किं चास्य सुकृतेऽस्माभिः प्राप्तव्यमिति शोभनं १३
पिता माता तथैवाग्निर्गुरुरात्मा च पञ्चमः ।
यस्यैते पूजिताः पार्थ तस्य लोकावुभौ जितौ १४
[युधिष्ठिर उवाच ।
भगवन्नार्य माऽऽहैतद्यथावद्धर्मनिश्चयम् ।
यथाशक्ति यथान्यायं क्रियते विधिवन्मया ॥१५
आर्ष्टिषेण उवाच ।]
अब्भक्षा वायुभक्षाश्च प्लवमाना विहायसा ।
जुषन्ते पर्वतश्रेष्ठमृषयः पर्वसन्धिषु ॥ १६
कामिनः सह कान्ताभिः परस्परमनुव्रताः ।
दृश्यन्ते शैलशृङ्गस्था यथा किंपुरुषा नृप ॥ १७
अरजांसि च वासांसि वसानाः कौशिकानि च ।
दृश्यन्ते बहवः पार्थ गन्धर्वाप्सरसां गणाः ॥१८
विद्याधरगणाश्चैव स्रग्विणः प्रियदर्शनाः ।
महोरगगणाश्चैव सुपर्णाश्चारणादयः ॥ १९
अस्य चोपरि शैलस्य श्रूयते पर्वसन्धिषु ।
भेरीपणवशङ्खानां मृदङ्गानां च निःस्वनः ॥ २०
इहस्थैरेव तत्सर्वं श्रोतव्यं भरतर्षभाः ।
न कार्या वः कथंचित्स्यात्तत्राभिगमने मतिः२१
न चाप्यतः परं शक्यं गन्तुं भरतसत्तमाः ।
विहारस्तत्र देवानाममानुषगतिस्तु सा ॥ २२
ईषच्चपलकर्माणं मनुष्यमिह भारत ।
द्विषन्ति सर्वभूतानि ताडयन्ति च राक्षसाः॥२३
अस्यातिक्रम्य शिखरं कैलासस्य युधिष्ठिर ।
गतिः परमसिद्धानां देवर्षीणां प्रकाशते ॥ २४

मुनिः आर्ष्टिषेणः ॥ ४ ॥ वैद्याः विद्यया विदिताः ॥ ७ ॥ सुष्टुकृतमस्य तं उपकारिणम् । दुष्कृतं अपकारिणं हातुं त्यक्तुं न विकत्थसे ज्ञातास्मीति न श्लाघसे ॥ ८ ॥ यथावत् माऽऽह यथा मामाह ॥१५॥ पर्वसंधिषु प्रतिपत्पञ्चदश्योरन्तराले ॥१६॥

चापलाद्धि न गन्तव्यं पार्थ यानैस्ततः परम् ।
अयःशूलादिभिर्घ्नन्ति राक्षसाः शत्रुसूदन ॥ २५
अप्सरोभिः परिवृतः समृद्ध्या नरवाहनः ।
इह वैश्रवणस्तात पर्वसन्धिषु दृश्यते ॥ २६
शिखरे तं समासीनमधिपं यक्षरक्षसाम् ।
प्रेक्षन्ते सर्वभूतानि भानुमन्तमिवोदितम् ॥ २७
देवदानवसिद्धानां तथा वैश्रवणस्य च ।
गिरेः शिखरमुद्यानमिदं भरतसत्तम ॥ २८
उपासीनस्य धनदं तुम्बुरोः पर्वसन्धिषु ।
गीतसामस्वनस्तात श्रूयते गन्धमादने ॥ २९
एतदेवंविधं चित्रमिह तात युधिष्ठिर ।
प्रेक्षन्ते सर्वभूतानि बहुशः पर्वसन्धिषु ॥ ३०
भुञ्जाना मुनिभोज्यानि रसवन्ति फलानि च ।
वसध्वं पाण्डवश्रेष्ठा यावदर्जुनदर्शनात् ॥ ३१
न तात चपलैर्भाव्यमिह प्राप्तैः कथंचन ।
'चपलः सर्वभूतानां द्वेष्यो भवति मानवः ॥'३२
उषित्वेह यथाकामं यथाश्रद्धं विहृत्य च ।
ततः शस्त्रजितां श्रेष्ठ पृथिवीं पालयिष्यसि ॥ ३३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि यक्षयुद्धपर्वणि षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

## एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

कदाचन गरुडपक्षवातानीताद्भुताम्बुजदर्शिन्या द्रौपद्या तादृशबहुपुष्पानयनं तथा दुष्टयक्षराक्षसक्षपणं च प्रार्थितेन भीमेन तदर्थं गन्धमादनशिखरारोहणम् ॥ १ ॥ तथा स्वीयशङ्खध्वनिश्रवणेनाभिद्रुतवतां मणिमदादीनां युद्धे हननम् ॥२॥

जनमेजय उवाच ।
आर्ष्टिषेणाश्रमे तस्मिन्मम पूर्वपितामहाः ।
पाण्डोः पुत्रा महात्मानः सर्वे दिव्यपराक्रमाः १
कियन्तं कालमवसन्पर्वते गन्धमादने ।
किंच चक्रुर्महावीर्याः सर्वेऽतिबलपौरुषाः ॥ २
कानि चाभ्यवहार्याणि तत्र तेषां महात्मनाम् ।
वसतां लोकवीराणामासंस्तद्ब्रूहि सत्तम ॥ ३
विस्तरेण च मे शंस भीमसेनपराक्रमम् ।
यद्यच्चक्रे महाबाहुस्तस्मिन्हैमवते गिरौ ॥ ४
न खल्वासीत्पुनर्युद्धं तस्य यक्षैर्द्विजोत्तम ।
'धनदाध्युषिते नित्यं वसतस्तत्र पर्वते ॥' ५
कच्चित्समागमस्तेषामासीद्वैश्रवणस्य च ।
तत्र ह्यायाति धनद आर्ष्टिषेणो यथाऽब्रवीत् ॥६
एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
न हि मे शृण्वतस्तृप्तिरस्ति तेषां विचेष्टितम् ॥७
वैशंपायन उवाच ।
एतदात्महितं श्रुत्वा तस्याप्रतिमतेजसः ।
शासनं सततं चक्रुस्तथैव भरतर्षभाः ॥ ८
भुञ्जाना मुनिभोज्यानि रसवन्ति फलानि च ।
शुद्धबाणहतानां च मृगाणां पिशितान्यपि ॥ ९
मेध्यानि हिमवत्पृष्ठे मधूनि विविधानि च ।
एवं ते न्यवसंस्तत्र पाण्डवा भरतर्षभाः ॥ १०
तथा निवसतां तेषां पञ्चमं वर्षमभ्यगात् ।
शृण्वतां लोमशोक्तानि वाक्यानि विविधान्युत॥
कृत्यकाल उपस्थास्य इति चोक्त्वा घटोत्कचः ।
राक्षसैः सह सर्वैश्च पूर्वमेव गतः प्रभो ॥ १२
आर्ष्टिषेणाश्रमे तेषां वसतां वै महात्मनाम् ।
अगच्छन्बहवो मासाः पश्यतां महदद्भुतम् ॥१३
तैस्तत्र विहरद्भिश्च रममाणैश्च पाण्डवैः ।
प्रीतिमन्तो महाभागा मुनयश्चारणास्तथा ॥ १४
आजग्मुः पाण्डवान्द्रष्टुं शुद्धात्मानो यतव्रताः ।
ते तैः सह कथा चक्रुर्दिव्यां भरतसत्तमाः ॥१५
ततः कतिपयाहस्सु महाह्रदनिवासिनम् ।
ऋद्धिमन्तं महानागं सुपर्णः सहसाऽहरत् ॥ १६
प्राकम्पत महाशैलः प्रामृद्यन्त महाद्रुमाः ।
ददृशुः सर्वभूतानि पाण्डवाश्च तदद्भुतम् ॥ १७

उद्यानं क्रीडावनयुतम् ॥ २८ ॥

षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

ततः शैलोत्तमस्याग्रात्पाण्डवान्प्रति मारुतः ।
अवहत्सर्वमाल्यानि गन्धवन्ति शुभानि च ॥१८
तत्र पुष्पाणि दिव्यानि सुहृद्भिः सह पाण्डवाः ।
ददृशुः पञ्चवर्णानि द्रौपदी च यशस्विनी ॥ १९
भीमसेनं ततः कृष्णा काले वचनमब्रवीत् ।
विविक्ते पर्वतोद्देशे सुखासीनं महाभुजम् ॥ २०
सुपर्णानिलवेगेन श्वसनेन महाबलात् ।
पञ्चवर्णानि पात्यन्ते पुष्पाणि भरतर्षभ ॥ २१
'दिव्यवर्णानि दिव्यानि दिव्यगन्धवहानि च ।
मदयन्तीव गन्धेन मनो मे भरतर्षभ ॥ २२
येषां तु दर्शनात्स्पर्शात्सौरभ्याच्च तथैव च ।
नश्यतीव मनोदुःखं ममेदं शत्रुतापन ॥ २३
ईदृशैः कुसुमैर्दिव्यैर्दिव्यगन्धवहैः शुभैः ।
देवतान्यर्चयित्वाऽहमिच्छेयं सङ्गमं त्वया ॥ २४
इदं तु पुरुषव्याघ्र विशेषेणाम्बुजं शुभम् ।
गन्धसंस्थानसंपन्नं मम मानसवर्धनम् ॥' २५
प्रत्यक्षं सर्वलोकस्य नह्यदृश्यत मां प्रति ॥ २६
'वासुदेवसहायेन वासुदेवप्रियेण च ।'
खाण्डवे सत्यसन्धेन भ्रात्रा तव महात्मना ॥२७
गन्धर्वोरगरक्षांसि वासवश्च पराजितः ।
हता मायाविनश्चोग्रा धनुः प्राप्तं च गाण्डिवं २८
तवापि सुमहत्तेजो महद्बाहुबलं च ते ।
अविषह्यमनाधृष्यं शक्रतुल्यपराक्रम ॥ २९
त्वद्बाहुबलवेगेन त्रासिताः सर्वराक्षसाः ।
हित्वा शैलं प्रपद्यन्तां भीमसेन दिशो दश ॥३०
ततः शैलोत्तमस्याग्रं चित्रमाल्यधरं शिवम् ।
व्यपेतभयसंमोहाः पश्यन्तु सुहृदस्तव ॥ ३१
एवं प्रणिहितं भीम चिरात्प्रभृति मे मनः ।
द्रष्टुमिच्छामि शैलाग्रं त्वद्बाहुबलमाश्रिता ॥ ३२
'इच्छामि च नरव्याघ्र पुष्पं प्रत्यक्षमीदृशम् ।
आनीयमानं क्षिप्रं वै त्वया भरतसत्तम ॥' ३३
ततः क्षिप्तमिवात्मानं द्रौपद्या स परंतपः ।
नामृष्यत महाबाहुः प्रहारमिव सद्गजः ॥ ३४
सिंहर्षभगतिः श्रीमानुदारः कनकप्रभः ।
मनस्वी बलवान्दृप्तो मानी शूरश्च पाण्डवः ॥३५
लोहिताक्षः पृथुव्यंसो मत्तवारणविक्रमः ।
सिंहदंष्ट्रो वृषस्कन्धः सालपोत इवोद्गतः ॥ ३६
महात्मा चारुसर्वाङ्गः कम्बुग्रीवो महाहनुः ।
रुक्मपृष्ठं धनुः खड्गं तूणांश्चापि परामृशन् ॥ ३७
स केसरीव चोत्सिक्तः प्रभिन्न इव वारणः ।
व्यपेतभयसंमोहः शैलमभ्यपतद्बली ॥ ३८
तं मृगेन्द्रमिवायान्तं प्रभिन्नमिव वारणम् ।
ददृशुः सर्वभूतानि पार्थं खड्गधनुर्धरम् ॥ ३९
द्रौपद्या वर्धयन्हर्षं गदामादाय पाण्डवः ।
व्यपेतभयसंमोहः शैलराजं समाविशत् ॥ ४०
न ग्लानिर्न च कातर्यं न वैक्लव्यं न मत्सरः ।
कदाचिज्जुषते पार्थमात्मजं मातरिश्वनः ॥ ४१
तदेकायनमासाद्य विषमं भीमदर्शनम् ।
बहुतालोच्छ्रयं शृङ्गमारुरोह महाबलः ॥ ४२
स किन्नरमहानागमुनिगन्धर्वराक्षसान् ।
हर्षयन्पर्वतस्याग्रमारुरोह महाबलः ॥ ४३
ततो वैश्रवणावासं ददर्श भरतर्षभः ।
काञ्चनैः स्फाटिकैश्चैव वेश्मभिः समलंकृतम् ४४
[प्राकारेण परिक्षिप्तं सौवर्णेन समन्ततः ।
सर्वरत्नद्युतिमता सर्वोद्यानवता तथा ॥ ४५
शैलादभ्युच्छ्रयवता चयाट्टालकशोभिना ।
द्वारतोरणनिर्व्यूहध्वजसंवाहशोभिना ॥ ४६
विलासिनीभिरत्यर्थं नृत्यन्तीभिः समन्ततः ।
वायुना धूयमानाभिः पताकाभिरलंकृतम् ॥ ४७
धनुष्कोटिमवष्टभ्य वक्रभावेन बाहुना ।

सद्गव इति झ. पाठः ॥ ३४ ॥ पृथू विशिष्टौ अंसौ यस्य-स पृथुव्यंसः ॥ ३६ ॥ ग्लानिः श्रमः । कातर्यं भयम् । वैक्लव्यमनुत्साहः । मत्सरः परोत्कर्षासहिष्णुत्वम् ॥ ४१ ॥ एकायनं वामदक्षिणसंचारशून्यम् ॥ ४२ ॥ परिक्षिप्तं परित आवृतम् ॥ ४५ ॥ चयाट्टालकशोभिना । चयः प्राकारस्य मूलबन्धः । अट्टालकः उपरिगृहम् । तोरणं बहिर्द्वारम् । निर्व्यूहः नागदन्ताख्यं गृहान्निर्गतं दारु ॥ ४६ ॥ वक्रभावेन वक्रेण बाहुना उपलक्षितः । खेदेन तद्दर्शनात्स्वसंपत्स्मरणं तेन । द्रविणाधिपतेः धनाधिपतेः ॥ ४८ ॥

पश्यमानः सखेदेन द्रविणाधिपतेः पुरम् ॥] ४८
मोदयन्सर्वभूतानि गन्धमादनसंभवः ।
सर्वगन्धवहस्तत्र मारुतः सुसुखो ववौ ॥ ४९
चित्रा विविधवर्णाभाश्चित्रमञ्जरिधारिणः ।
अचिन्त्या विविधास्तत्र द्रुमाः परमशोभिनः ५०
रत्नजालपरिक्षिप्तं चित्रमाल्यविभूषितम् ।
राक्षसाधिपतेः स्थानं ददृशे भरतर्षभः ॥ ५१
गदाखड्गधनुष्पाणिः समभित्यक्तजीवितः ।
भीमसेनो महाबाहुस्तस्थौ गिरिरिवाचलः ॥ ५२
ततः शङ्खमुपाध्माय द्विषतां रोमहर्षणम् ।
ज्याघोषं तलशब्दं च कृत्वा भूतान्यमोहयत् ५३
ततः प्रहृष्टरोमाणस्तं शब्दमभिदुद्रुवुः ।
यक्षराक्षसगन्धर्वाः पाण्डवस्य समीपतः ॥ ५४
गदापरिघनिस्त्रिंशशूलशक्तिपरश्वथाः ।
प्रगृहीता व्यरोचन्त यक्षराक्षसबाहुभिः ॥ ५५
ततः प्रववृते युद्धं तेषां तस्य च भारत ॥ ५६
तैः प्रयुक्तान्महामायैः शूलशक्तिपरश्वथान् ।
भल्लैर्भीमः प्रचिच्छेद भीमवेगतरैस्ततः ॥ ५७
अन्तरिक्षगतानां च भूमिष्ठानां च गर्जताम् ।
शरैर्विव्याध गात्राणि राक्षसानां महाबलः ॥५८
'शोणितस्य ततः पेतुर्घनानामिव भारत ।
गात्रेभ्यः प्रच्युता धारा राक्षसानां समन्ततः ।'
स लोहितमहावृष्टिमभ्यवर्षन्महाबलः ॥ ५९
गदापरिघपाणीनां रक्षसां कायसंभवा ।
कायेभ्यः प्रच्युता धारा राक्षसानां समन्ततः ६०
भीमबाहुबलोत्सृष्टैरायुधैर्यक्षरक्षसाम् ।
विनिकृत्तानि दृश्यन्ते शरीराणि शिरांसि च ६१
प्रच्छाद्यमानं रक्षोभिः पाण्डवं प्रियदर्शनम् ।
ददृशुः सर्वभूतानि सूर्यमभ्रगणैरिव ॥ ६२
स रश्मिभिरिवादित्यः शरैररिनिपातिभिः ।
सर्वानार्च्छन्महाबाहुर्बलवान्सत्यविक्रमः ॥ ६३
अभितर्जयमानाश्च रुवन्तश्च महारवान् ।
सन्नाहं भीमसेनस्य ददृशुः सर्वराक्षसाः ॥ ६४
ते हि विक्षतसर्वाङ्गा भीमसेनभयार्दिताः ।
भीममार्तस्वरं चक्रुर्विप्रकीर्णमहायुधाः ॥ ६५
उत्सृज्य ते गदाशूलानसिशक्तिपरश्वथान् ।
दक्षिणां दिशमाजग्मुस्त्रासिता दृढधन्वना ॥ ६६
तत्र शूलगदापाणिर्व्यूढोरस्को महाभुजः ।
सखा वैश्रवणस्यासीन्मणिमान्नाम राक्षसः ॥ ६७
दर्शयन्स प्रतीकारं पौरुषं च महाबलः ।
स तान्दृष्ट्वा परावृत्तान्स्मयमान इवाब्रवीत् ॥ ६८
एकेन बहवः सङ्ख्ये मानुषेण पराजिताः ।
प्राप्य वैश्रवणावासं किं वक्ष्यथ धनेश्वरम् ॥ ६९
एवमाभाष्य तान्सर्वानभ्यवर्तत राक्षसः ।
शक्तिशूलगदापाणिरभ्यधावत्स पाण्डवम् ॥ ७०
तमापतन्तं वेगेन प्रभिन्नमिव वारणम् ।
वत्सदन्तैस्त्रिभिः पार्श्वे भीमसेनः समार्दयत् ॥७१
मणिमानपि संक्रुद्धः प्रगृह्य महतीं गदाम् ।
प्राहिणोद्भीमसेनाय परिगृह्य महाबलः ॥ ७२
विद्युद्रूपां महाघोरामाकाशे महतीं गदाम् ।
शरैर्बहुभिरानर्च्छद्भीमसेनः शिलाशितैः ॥ ७३
प्रत्यहन्यन्त ते सर्वे गदामासाद्य सायकाः ।
न वेगं धारयामासुर्गदावेगस्य वेगिताः ॥ ७४
गदायुद्धसमाचारं बुध्यमानः स वीर्यवान् ।
व्यंसयामास तं तस्य प्रहारं भीमविक्रमः ॥ ७५
ततः शक्तिं महाघोरां रुक्मदण्डामयस्मयीम् ।
तस्मिन्नेवान्तरे धीमान्प्रचिक्षेप स राक्षसः ॥ ७६
सा भुजं भीमनिर्ह्रादा भित्त्वा भीमस्य दक्षिणम् ।
साग्निज्वाला महारौद्रा पपात सहसा भुवि ॥७७
सोऽतिविद्धो महेष्वासः शक्त्याऽमितपराक्रमः ।
गदां जग्राह कौन्तेयो गदायुद्धविशारदः ॥ ७८
रुक्मपट्टपिनद्धां तां शत्रूणां भयवर्धिनीम् ।
प्रगृह्याथ नदन्भीमः शैक्यां सर्वायसीं गदाम् ।

---

ददृशे ददर्श ॥ ५१ ॥ न मोहं भीमसेनस्येति झ. पाठः ॥ ६४ ॥ अदर्शयदधीकारमिति झ. पाठः ॥ ६८ ॥ सङ्ख्ये संग्रामे ॥ ६९ ॥ प्रत्यहन्यन्त प्रतिहताः । वेगिताः वेगवन्तोपि । गदावेगस्य गदायां वेगोऽत्यभ्यासो यस्य तस्य ॥ ७४ ॥ सः भीमः । व्यंसयामास व्यर्थीचकार ॥ ७५ ॥ अयस्मयीं अयोमयीम् ॥ ७६ ॥ शैक्यां शीकयति शत्रून्पराभवतीति शैक्या ।

तरसा चाभिदुद्राव मणिमन्तं महाबलम् ॥ ७९
दीप्यमानं महाशूलं प्रगृह्य मणिमानपि ।
प्राहिणोद्भीमसेनाय वेगेन महता नदन् ॥ ८०
भङ्क्त्वा शूलं गदाग्रेण गदायुद्धविभागवित् ।
अभिदुद्राव तं तूर्णं गरुत्मानिव पन्नगम् ॥ ८१
सोऽन्तरिक्षमवप्लुत्य विधूय सहसा गदाम् ।
प्रचिक्षेप महाबाहुर्विनद्य रणमूर्धनि ॥ ८२
सेन्द्राशनिरिवेन्द्रेण विसृष्टा वातरंहसा ।
हत्वा रक्षः क्षितिं प्राप्य कृत्येव निपपात ह ॥ ८३
तं राक्षसं भीमबलं भीमसेनबलाहतम् ।
ददृशुः सर्वभूतानि सिंहेनेव गवांपतिम् ॥ ८४
तं प्रेक्ष्य निहतं भूमौ हतशेषा निशाचराः ।
भीममार्तस्वरं कृत्वा जग्मुः प्राचीं दिशं प्रति ८५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि यक्षयुद्धपर्वणि एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

---

## द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥

भीमादर्शनेन दुर्मनायमानैर्युधिष्ठिरादिभिः पर्वताग्रारोहणेन भीमसमीपगमनम् ॥ १ ॥ भीमहतावशिष्टैर्निवेदितमणिमदादिवधेन कुबेरेण युयुत्सया भीमंप्रत्यागमनम् ॥ २ ॥ तत्र युधिष्ठिरादिदर्शनेन शान्तमन्युना तेन तान्प्रति स्वस्यागस्त्यशापावाप्तिकथनपूर्वकं भीमसेनकार्यानुमोदनम् ॥ ३ ॥

वैशंपायन उवाच ।
श्रुत्वा बहुविधैः शब्दैर्नाद्यमानां गिरेर्गुहाम् ।
अजातशत्रुः कौन्तेयो माद्रीपुत्रावुभावपि ॥ १
धौम्यः कृष्णा च विप्राश्च सर्वे च सुहृदस्तथा ।
भीमसेनमपश्यन्तः सर्वे विमनसोऽभवन् ॥ २
द्रौपदीमार्ष्टिषेणाय संप्रधार्य महारथाः ।
सहिताः सायुधाः शूराः शैलमारुरुहुस्तदा ॥ ३
ततः संप्राप्य शैलाग्रं वीक्षमाणा महारथाः ।
ददृशुस्ते महेष्वासा भीमसेनमरिंदमम् ॥ ४
स्फुरतश्च महाकायान्गतसत्वांश्च राक्षसान् ।
महाबलान्महासत्वान्भीमसेनेन पातितान् ॥ ५
शुशुभे स महाबाहुर्गदाखड्गधनुर्धरः ।
निहत्य समरे सर्वान्दानवान्मघवानिव ॥ ६
ततस्ते समतिक्रम्य परिष्वज्य वृकोदरम् ।
तत्रोपविविशुः पार्थाः प्राप्ता गतिमनुत्तमाम् ॥ ७
तैश्चतुर्भिर्महेष्वासैर्गिरिशृङ्गमशोभत ।
लोकपालैर्महाभागैर्दिवं देववरैरिव ॥ ८
कुबेरसदनं दृष्ट्वा राक्षसांश्च निपातितान् ।
भ्राता भ्रातरमासीनमथोवाच युधिष्ठिरः ॥ ९
साहसाद्यदि वा मोहाद्भीम पापमिदं कृतम् ।
नैतत्ते सदृशं वीर मुनेरिव मृषा वधः ॥ १०
राजद्विष्टं न कर्तव्यमिति धर्मविदो विदुः ।
त्रिदशानामिदं द्विष्टं भीमसेन त्वया कृतम् ॥ ११
अर्थधर्मावनादृत्य यः पापे कुरुते मनः ।
कर्मणां पार्थ पापानां स फलं विन्दते ध्रुवम् १२
'साहसं बत भद्रं ते देवानामपि चाप्रियम् ।'
पुनरेवं न कर्तव्यं मम चेदिच्छसि प्रियम् ॥ १३
वैशंपायन उवाच ।
एवमुक्त्वा स धर्मात्मा भ्राता भ्रातरमच्युतम् ।
'भीमसेनं महाबाहुमप्रधृष्यपराक्रमम् ॥' १४
अर्थतत्त्वविभागज्ञः कुन्तीपुत्रो युधिष्ठिरः ।
विरराम महातेजास्तमेवार्थं विचिन्तयन् ॥ १५
ततस्ते हतशिष्टा ये भीमसेनेन राक्षसाः ।
सहिताः प्रत्यपद्यन्त कुबेरसदनं प्रति ॥ १६
ते जवेन महावेगाः प्राप्य वैश्रवणालयम् ।
भीममार्तस्वरं चक्रुर्भीमसेनभयार्दिताः ॥ १७
न्यस्तशस्त्रायुधाः क्लान्ताः शोणिताक्तपरिच्छदाः ।
प्रकीर्णमूर्धजा राजन्यक्षाधिपतिमब्रुवन् ॥ १८

---

शीकयतेर्ऋहलोर्ण्यदिति ण्यत् । ततः स्वार्थिकोण् ॥ ७९ ॥ एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

संप्रधार्य रक्षार्थं समर्प्य ॥ ३ ॥ मुनेरिव वनवासिनस्ते तवैतत् सदृशं नोचितम् । यत् मृषा निर्निमित्तम् । वधो रक्षसां हिंसा ॥ १० ॥ सहिता मिलिताः ॥ १६ ॥

गदापरिघनिस्त्रिंशतोमरप्रासयोधिनः ।
राक्षसा निहताः सर्वे तव देवपुरःसराः ॥ १९
प्रमृद्य तरसा शैलं मानुषेण धनेश्वर ।
एकेन निहताः सङ्ख्ये गताः क्रोधवशा गणाः २०
प्रवरा राक्षसेन्द्राणां यक्षाणां च नराधिप ।
शेरते निहता देव गतसत्वाः परासवः ॥ २१
भग्नः शैलो वयं भग्ना मणिमांस्ते सखा हतः ।
मानुषेण कृतं कर्म विधत्स्व यदनन्तरम् ॥ २२
स तच्छ्रुत्वा तु संक्रुद्धः सर्वयक्षगणाधिपः ।
कोपसंरक्तनयनः कथमित्यब्रवीद्वचः ॥ २३
द्वितीयमपराध्यन्तं भीमं श्रुत्वा धनेश्वरः ।
चुक्रोध यक्षाधिपतिर्युज्यतामिति चाब्रवीत् ॥ २४
अथाभ्रघनसंकाशं गिरिकूटमिवोच्छ्रितम् ।
रथं संयोजयामासुर्गन्धर्वैर्हेममालिभिः ॥ २५
तस्य सर्वगुणोपेता विमलाक्षा हयोत्तमाः ।
तेजोबलगुणोपेता नानारत्नविभूषिताः ।
शोभमाना रथे युक्तास्तरिष्यन्त इवाशुगाः ॥२६
'ततस्ते तु महायक्षाः क्रुद्धं दृष्ट्वा धनेश्वरम् ।'
हर्षयामासुरन्योन्यमिङ्गितैर्विजयावहैः ॥ २७
स तमास्थाय भगवान्राजराजो महारथम् ।
प्रययौ देवगन्धर्वैः स्तूयमानो महाद्युतिः ॥ २८
तं प्रयान्तं महात्मानं सर्वे यक्षा धनाधिपम् ।
'अनुजग्मुर्महात्मानं धनदं घोरदर्शनाः ॥' २९
रक्ताक्षा हेमसंकाशा महाकाया महाबलाः ।
सायुधा बद्धनिस्त्रिंशा यक्षा बहुशतायुधाः ॥ ३०
ते जवेन महावेगाः प्लवमाना विहायसा ।
गन्धमादनमाजग्मुः प्रकर्षन्त इवाम्बरम् ॥ ३१
तत्केसरिमहाजालं धनाधिपतिपालितम् ।
'रम्यं चैव गिरेः शृङ्गमासेदुर्यत्र पाण्डवाः ॥'३२
कुबेरं च महात्मानं यक्षरक्षोगणावृतम् ।
ददृशुर्हृष्टरोमाणः पाण्डवाः प्रियदर्शनम् ॥ ३३
कुबेरस्तु महासत्वान्पाण्डोः पुत्रान्महारथान् ।
आत्तकार्मुकनिस्त्रिंशान्दृष्ट्वा प्रीतोऽभवत्तदा ॥ ३४
'सर्वे चेमे नरव्याघ्राः पुरन्दरसमौजसः ।'
देवकार्यं करिष्यन्ति हृदयेन तुतोष ह ॥ ३५
ते पक्षिण इवापेतुर्गिरिशृङ्गं महाजवाः ।
तस्थुस्तेषां सकाशे वै धनेश्वरपुरःसराः ॥ ३६
ततस्तं हृष्टमनसं पाण्डवान्प्रति भारत ।
समीक्ष्य यक्षगन्धर्वा निर्विकारमवस्थिताः ॥ ३७
पाण्डवाश्च महात्मानः प्रणम्य धनदं प्रभुम् ।
नकुलः सहदेवश्च धर्मपुत्रश्च धर्मवित् ॥ ३८
अपराद्धमिवात्मानं मन्यमाना महारथाः ।
तस्थुः प्राञ्जलयः सर्वे परिवार्य धनेश्वरम् ॥ ३९
शय्यासनयुतं श्रीमत्पुष्पकं विश्वकर्मणा ।
विहितं चित्रपर्यन्तमातिष्ठत धनाधिपः ॥ ४०
तमासीनं महाकायाः शङ्कुकर्णा महाजवाः ।
उपोपविविशुर्यक्षा राक्षसाश्च सहस्रशः ॥ ४१
शतशश्चापि गन्धर्वास्तथैवाप्सरसां गणाः ।
परिवार्योपतिष्ठन्ति यथा देवाः शतक्रतुम् ॥ ४२
काञ्चनीं शिरसा बिभ्रद्भीमसेनः स्रजं शुभाम् ।
बाणखड्गधनुष्पाणिरुदैक्षत धनाधिपम् ॥ ४३
न भीर्भीमस्य न ग्लानिर्विक्षतस्यापि राक्षसैः ।
आसीत्तस्यामवस्थायां कुबेरमपि पश्यतः ॥ ४४
आददानं शितान्बाणान्योद्धुकाममवस्थितम् ।
दृष्ट्वा भीमं धर्मसुतमब्रवीन्नरवाहनः ॥ ४५
विदुस्त्वां सर्वभूतानि पार्थ भूतहिते रतम् ।
निर्भयश्चापि शैलाग्रे वस त्वं सह बन्धुभिः ॥४६
न च मन्युस्त्वया कार्यो भीमसेनस्य पाण्डव ।
कालेनैते हताः पूर्वं निमित्तमनुजस्तव ॥ ४७
व्रीडा चात्र न कर्तव्या साहसं यदिदं कृतम् ।
दृष्टश्चापि सुरैः पूर्वं विनाशो यक्षरक्षसाम् ॥ ४८
न भीमसेने कोपो मे प्रीतोस्मि भरतर्षभ ।
कर्मणा भीमसेनस्य मम तुष्टिरभूत्पुरा ॥ ४९
वैशंपायन उवाच ।
स एवमुक्त्वा राजानं भीमसेनमभाषत ।
नैतन्मनसि मे तात वर्तते कुरुसत्तम ॥ ५०

युज्यतां रथ इति शेषः ॥ २४ ॥ अभ्रघनः सजलमेघः । गन्धर्वैर्हयैर्योजयामासुः यक्षा इति शेषः ॥ २५ ॥ विमलाक्षाः दशावर्तशुद्धाः ॥ २६ ॥ दृष्टो ज्ञातः ॥ ४८ ॥

यदिदं साहसं भीम कृष्णार्थे कृतवानसि ।
मामनादृत्य देवांश्च विनाशं यक्षरक्षसाम् ॥ ५१
स्वबाहुबलमाश्रित्य तेनाहं प्रीतिमांस्त्वयि ।
शापादद्य विनिर्मुक्तो घोरादस्माद्वृकोदर ॥ ५२
अहं पूर्वमगस्त्येन क्रुद्धेन परमर्षिणा ।
शप्तोऽपराधे कस्मिंश्चित्तस्यैषा निष्कृतिर्ध्रुवम् ॥५३
दृष्टो हि मम संक्लेशः पुरा पाण्डवनन्दन ।
न तवात्रापराधोस्ति कथंचिदपि पाण्डव ॥ ५४
युधिष्ठिर उवाच ।
कथं शप्तोसि भगवन्नगस्त्येन महात्मना ।
श्रोतुमिच्छाम्यहं देव यथैतच्छापकारणम् ॥ ५५
इदं चाश्चर्यभूतं मे यत्क्रोधात्तस्य धीमतः ।
तदैव त्वं न निर्दग्धः सबलः सपदानुगः ॥ ५६
धनेश्वर उवाच ।
देवतानामभून्मन्त्रः कुशावत्यां नरेश्वर ॥ ५७
वृतस्तत्राहमगमं महापद्मशतैस्त्रिभिः ।
यक्षाणां घोररूपाणां विविधायुधधारिणाम् ॥५८
अध्वन्यहमथापश्यमगस्त्यमृषिसत्तमम् ।
उग्रं तपस्तप्यमानं यमुनातीरमाश्रितम् ।
नानापक्षिगणाकीर्णे पुष्पितद्रुमशोभितम् ॥ ५९
तमूर्ध्वबाहुं दृष्ट्वैव सूर्यस्याभिमुखे स्थितम् ।
तेजोराशिं दीप्यमानं हुताशनमिवैधितम् ॥६०
राक्षसाधिपतिः श्रीमान्मणिमान्नाम मे सखा ।
मौर्ख्यादज्ञानभावाच्च दर्पान्मोहाच्च पार्थिव ॥६१
न्यष्ठीवदाकाशगतो महर्षेस्तस्य मूर्धनि ।
ततः क्रुद्धः स भगवानुवाचेदं तपोधनः ॥ ६२
मामवज्ञाय दुष्टात्मा यस्मादेष सखा तव ।
धर्षणां कृतवानेतां पश्यतस्ते धनेश्वर ॥ ६३
तस्मात्सहैभिः सैन्यैस्तैर्वधं प्राप्स्यति मानुषात् ।
त्वं चाप्येभिर्हतैः सैन्यैः क्लेशं प्राप्नुहि दुर्मते ।
तमेव मानुषं दृष्ट्वा किल्बिषाद्विप्रमोक्ष्यसे ॥ ६४
सैन्यानां तु तवैतेषां पुत्रपौत्रबलान्वितम् ।
न शापं प्राप्यते घोरं गच्छ तेऽऽज्ञां करिष्यति ६५
एष शापो मया प्राप्तः प्राक्तस्मादृषिसत्तमात् ।
स भीमेन महाराज भ्रात्रा तव विमोक्षितः ६६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि यक्षयुद्धपर्वणि द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥

## त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

कुबेरेण युधिष्ठिरानुशासनपूर्वकं स्वभवनगमनम् ॥ १ ॥ कुबेराज्ञया राक्षसपूजितैर्युधिष्ठिरादिभिस्तद्रात्रौ तद्गृहे सुखवासः ॥ २ ॥

धनद उवाच ।
युधिष्ठिर धृतिर्दाक्ष्यं देशकालपराक्रमाः ।
लोकतन्त्रविधानानामेष पञ्चविधो विधिः ॥ १
धृतिमन्तश्च दक्षाश्च स्वे स्वे कर्मणि भारत ।
पराक्रमविधानज्ञा नराः कृतयुगेऽभवन् ॥ २
धृतिमान्देशकालज्ञः सर्वधर्मविधानवित् ।
क्षत्रियः क्षत्रियश्रेष्ठ शास्ति वै पृथिवीमनु ॥ ३
य एवं वर्तते पार्थ पुरुषः सर्वकर्मसु ।
स लोके लभते वीर यशः प्रेत्य च सद्गतिम् ॥४
देशकालान्तरप्रेप्सुः कृत्वा शक्रः पराक्रमम् ।
संप्राप्तस्त्रिदिवे राज्यं वृत्रहा वसुभिः सह ॥ ५
[यस्तु केवलसंरम्भात्प्रपातं न निरीक्षते ।]
पापात्मा पापबुद्धिर्यः पापमेवानुवर्तते ।
कर्मणामविभागज्ञः प्रेत्य चेह विनश्यति ॥ ६

मम मया । संक्लेशो भाविदुःखम् ॥ ५४ ॥ कुशावत्यां कुशस्थलीसंज्ञे देशविशेषे ॥५७॥ एधितं समिद्धम् ॥ ६० ॥ मौर्ख्यात् विचाराक्षमत्वात् । अतएव अगस्त्योयमित्यज्ञानभावात् । मौर्ख्यमपि दर्पात्संपत्तिगर्वात् । सोपि मोहात् संपत्तेर्नश्वरत्वाज्ञानात् ॥६१॥ न्यष्ठीवत् थूत्कृतवान् ॥६२ ॥ द्विषष्ट्यधिकशततमोऽध्यायः १६२

दाक्ष्यं यत्नशीलता । पराक्रमः शत्रूणामभिभावनहेतुः क्रिया। विधानानां कार्याणां विधिरभ्युदयहेतुः । अदेशे अकाले च कृतं धृत्यादिकमभिभवहेतुरित्यर्थः ॥ १ ॥ संरम्भात् कोपात् ॥ ६ ॥

अकालज्ञः सुदुर्मेधाः कार्याणामविशेषवित् ।
वृथाचारसमारम्भः प्रेत्य चेह विनश्यति ॥ ७
साहसे वर्तमानानां निकृतीनां दुरात्मनाम् ।
सर्वेषामर्थलिप्सूनां पापो भवति निश्चयः ॥ ८
अधर्मज्ञोऽवलिप्तश्च बालबुद्धिरमर्षणः ।
निर्भयो भीमसेनोऽयं तं शाधि पुरुषर्षभ ॥ ९
आर्ष्टिषेणस्य राजर्षेः प्राप्य भूयस्त्वमाश्रमम् ।
तमिस्रां प्रथमां तत्र वीतशोकभयो वस ॥ १०
अलकां सह गन्धर्वैर्यक्षैश्च सह किन्नरैः ।
'गमिष्यामि महाबाहो त्वं चापि बदरीं व्रज'११
मन्नियुक्ता मनुष्येन्द्र सर्वे च गिरिवासिनः ।
रक्षन्तु त्वां महाबाहो सहितं द्विजसत्तमैः ॥ १२
साहसेषु च संतिष्ठंस्त्वया शैले वृकोदरः ।
वार्यतां साध्वयं राजंस्त्वया धर्मभृतांवर ॥ १३
इतः परं च वो राजन्द्रक्ष्यन्ति वनगोचराः ।
उपस्थास्यन्ति वो राजन्रक्षिष्यन्ते च वः सदा १४
तथैव चान्नपानानि स्वादूनि च बहूनि च ।
आहरिष्यन्ति मत्प्रेष्याः सदा वः पुरुषर्षभाः १५
यथा जिष्णुर्महेन्द्रस्य यथा वायोर्वृकोदरः ।
धर्मस्य त्वं यथा तात योगोत्पन्नो निजः सुतः ॥
आत्मजावात्मसंपन्नौ यमौ चोभौ यथाश्विनोः ।
रक्ष्यास्तद्वन्ममापीह यूयं सर्वे युधिष्ठिर ॥ १७
अर्थतत्त्वविधानज्ञः सर्वधर्मविधानवित् ।
भीमसेनादवरजः फल्गुनः कुशली दिवि ॥ १८
याः काश्चन मता लोके स्वर्ग्याः परमसंपदः ।
जन्मप्रभृति ताः सर्वाः स्थितास्तात धनंजये १९
दमो दानं बलं बुद्धिर्ह्रीर्धृतिस्तेज उत्तमम् ।
एतान्यपि महासत्वे स्थितान्यमिततेजसि ॥ २०
न मोहात्कुरुते जिष्णुः कर्म पाण्डव गर्हितम् ।
न पार्थस्य मृषोक्तानि कथयन्ति नरा नृषु ॥२१
स देवपितृगन्धर्वैः कुरूणां कीर्तिवर्धनः ।
आनीतः कुरुतेऽस्त्राणि शक्रसद्मनि भारत ॥२२
योऽसौ सर्वान्महीपालान्धर्मेण वशमानयत् ।
स शन्तनुर्महातेजाः पितुस्तव पितामहः ॥ २३
प्रीयते पार्थ पार्थेन दिवि गाण्डीवधन्वना ।
सम्यक्चासौ महावीर्यः कुलधुर्य इव स्थितः ॥२४
पितॄन्देवानृषीन्विप्रान्पूजयित्वा महायशाः ।
सप्त मुख्यान्महामेधानाहरद्यमुनां प्रति ॥ २५
अधिराजः स राजंस्त्वां शन्तनुः प्रपितामहः ।
स्वर्गजिच्छक्रलोकस्थः कुशलं परिपृच्छति ॥ २६
वैशंपायन उवाच ।
एतच्छ्रुत्वा तु वचनं धनदेन प्रभाषितम् ।
पाण्डवाश्च ततस्तेन बभूवुः संप्रहर्षिताः ॥ २७
ततः शक्तिं गदां खड्गं धनुश्च भरतर्षभः ।
प्राध्वंकृत्वा नमश्चक्रे कुबेराय वृकोदरः ॥ २८
ततोऽब्रवीद्धनाध्यक्षः शरण्यः शरणागतम् ।
मानहा भव शत्रूणां सुहृदां नन्दिवर्धनः ॥ २९
'विभयस्ताप शैलाग्रे वसानः सह बन्धुभिः ।
सुपर्णपितृदेवानां सततं मानकृद्भव ॥ ३०
ऋजुं पश्यत मा वक्रं सत्यं वदत माऽनृतम् ।
दीर्घं पश्यत मा ह्रस्वं परं पश्यत माऽपरम्'॥३१
स्वेषु वेश्मसु रम्येषु वसतामित्रतापनाः ।
कामान्न परिहास्यन्ति यक्षा वो भरतर्षभाः ॥ ३२
शीघ्रमेव गुडाकेशः कृतास्त्रः पुरुषर्षभः ।
साक्षान्मघवतोत्सृष्टः संप्राप्स्यति धनंजयः ॥ ३३
एवमुत्तमकर्माणमनुशिष्य युधिष्ठिरम् ।
अस्तं गिरिमिवादित्यः प्रययौ गुह्यकाधिपः॥ ३४
तं परिस्तोमसंकीर्णैर्नानारत्नविभूषितैः ।
यानैरनुययुर्यक्षा राक्षसाश्च सहस्रशः ॥ ३५
पक्षिणामिव निर्घोषः कुबेरसदनं प्रति ।
बभूव परमाश्वानामैरावतपथे यथा ॥ ३६

---

निकृतीनां वञ्चनापराणाम् ॥ ८ ॥ अवलिप्तो गर्वितः ॥ ९ ॥ तत्त्वं याथात्म्यम् । विधानं प्राप्त्युपायम् ॥ १८ ॥ स्वर्ग्याः स्वर्गाय हिताः संपदः ॥ १९ ॥ कुरुते अभ्यस्यति ॥ २२ ॥ महामेधानश्वमेधान् ॥ २५ ॥ प्राध्वंकृत्वा बद्धा । उपसंहृत्येत्यर्थः ॥ २८ ॥ नन्दिः समृद्धिः ॥ २९ ॥ स्वेषु वेश्मसु अस्मदीयेषु । कामान् काम्यमानानर्थान् न परिहास्यन्ति किंतु साधयिष्यन्त्येवेत्यर्थः ॥ ३२ ॥ परिस्तोमाश्चित्रकम्बला हस्त्यादीनां पल्याणभूताः ॥ ३५ ॥ ऐरावतपथे इन्द्रपुरीप्रदेशे ॥ ३६ ॥

ते जग्मुस्तूर्णमाकाशं धनाधिपतिवाजिनः ।
प्रकर्षन्त इवाभ्राणि पिबन्त इव मारुतम् ॥ ३७
ततस्तानि शरीराणि गतसत्वानि रक्षसाम् ।
अपाकृष्यन्त शैलाग्राद्धनाधिपतिशासनात् ॥ ३८
तेषां हि शापकालः स कृतोऽगस्त्येन धीमता ।
समरे निहतास्तस्माच्छापस्यान्तोऽभवत्तदा ॥ ३९
पाण्डवाश्च महात्मानस्तेषु वेश्मसु तां क्षपाम् ।
सुखमूषुर्गतोद्वेगाः पूजिताः सह राक्षसैः ॥ ४०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि यक्षयुद्धपर्वणि त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

## चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

धौम्येन युधिष्ठिरंप्रति मेरुमन्दरवर्णनपूर्वकं चन्द्रसूर्यादिगतिप्रकारनिरूपणम् ॥ १ ॥

वैशंपायन उवाच ।
ततः सूर्योदये धौम्यः पाञ्चालीसहितांश्च तान् ।
आर्ष्टिषेणेन सहितः पाण्डवानभ्यवर्तत ॥ १
तेऽभिवाद्यार्ष्टिषेणस्य पादौ धौम्यस्य चैव ह ।
ततः प्राञ्जलयः सर्वे ब्राह्मणांस्तानपूजयन् ॥ २
'आर्ष्टिषेणं परिष्वज्य पुत्रवद्भरतर्षभ ।'
धर्मराजं स्पृशन्पाणौ पाणिना स महातपाः ।
प्राचीं दिशमभिप्रेक्ष्य महर्षिरिदमब्रवीत् ॥ ३
असौ सागरपर्यन्तां भूमिमावृत्य तिष्ठति ।
शैलराजो महाराज मन्दरोऽभिविराजयन् ।
इन्द्रवैश्रवणोपेतां दिशं पाण्डव रक्षति ॥ ४
पर्वतैश्च वनान्तैश्च काननैश्चैव शोभितम् ।
एतमाहुर्महेन्द्रस्य राज्ञो वैश्रवणस्य च ।
ऋषयः सर्वधर्मज्ञाः सर्वे तात मनीषिणः ॥ ५
अतश्चोद्यन्तमादित्यमुपतिष्ठन्ति वै प्रजाः ।
ऋषयश्चापि धर्मज्ञाः सिद्धाः साध्याश्च देवताः ६
यमस्तु राजा धर्मज्ञः सर्वप्राणभृतां प्रभुः ।
प्रेतसत्वगतीमेतां दक्षिणामाश्रितो दिशम् ॥ ७
एतत्संयमनं पुण्यमतीवाद्भुतदर्शनम् ।
प्रेतराजस्य भवनमृद्ध्या परमया युतम् ॥ ८
यं प्राप्य सविता राजन्सत्येन प्रतितिष्ठति ।
अस्तं पर्वतराजानमेतमाहुर्मनीषिणः ॥ ९
एवं पर्वतराजानं समुद्रं च महोदधिम् ।
अवसन्वरुणो राजा भूतानि परिरक्षति ॥ १०
उदीचीं दीपयन्नेष दिशं तिष्ठति कीर्तिमान् ।
महामेरुर्महाभाग शिवो ब्रह्मविदां गतिः ॥ ११
यस्मिन्ब्रह्मसदश्चैव भूतात्मा चावतिष्ठते ।
प्रजापतिः सृजन्सर्वं यत्किंचिज्जङ्गमागमम् ॥ १२
यानाहुर्ब्रह्मणः पुत्रान्मानसान्दक्षसप्तमान् ।
तेषामपि महामेरुः शिवं स्थानमनामयम् ॥ १३
अत्रैव प्रतितिष्ठन्ति पुनरेवोदयन्ति च ।
सप्त देवर्षयस्तात वसिष्ठप्रमुखास्तदा ॥ १४
देशं विरजसं पश्य मेरोः शिखरमुत्तमम् ।
यत्रात्मतृप्तैरध्यास्ते देवैः सह पितामहः ॥ १५
यमाहुः सर्वभूतानां प्रकृतेः प्रकृतिं ध्रुवम् ।
अनादिनिधनं देवं प्रभुं नारायणं परम् ॥ १६
ब्रह्मणः सदनाच्चस्य परं स्थानं प्रकाशते ।
देवाश्च यत्नात्पश्यन्ति सर्वतेजोमयं शुभम् ॥ १७
अत्यर्कानलदीप्तं तत्स्थानं विष्णोर्महात्मनः ।
स्वयैव प्रभया राजन्दुष्प्रेक्ष्यं देवदानवैः ॥ १८
प्राच्यां नारायणस्थानं मेरावतिविराजते ॥ १९
यत्र भूतेश्वरस्तात सर्वप्रकृतिरात्मभूः ।
भासयन्सर्वभूतानि सुश्रियाऽभिविराजते ॥ २०
नात्र ब्रह्मर्षयस्तात कुत एव महर्षयः ।

अपाकृष्यन्त अपाकृतानि ॥ ३८ ॥ त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥
इन्द्रवैश्रवणावेतां दिशं पाण्डव रक्षतः इति झ० पाठः ॥ ४ ॥ प्रेतसत्वगतीं मृतानां प्राणिनां गम्याम् ॥ ७ ॥ संयमनं नामतः ॥ ८ ॥ आवसन्नधितिष्ठन् ॥ १० ॥ भूतात्मा सर्वेषां भूतानामात्मा । संपूर्णब्रह्माण्डपिण्डाभिमानित्वात् ॥ १२ ॥ ब्रह्मणः चतुर्मुखस्य ॥ १७ ॥

प्राप्नुवन्ति गतिं ह्येतां यतीनां भावितात्मनाम् २१
न तं ज्योतींषि सर्वाणि प्राप्य भासन्ति पाण्डव।
स्वयंप्रभुरचिन्त्यात्मा तत्र ह्यतिविराजते ॥ २२
यतयस्तत्र गच्छन्ति भक्त्या नारायणं हरिम् ।
परेण तपसा युक्ता भाविताः कर्मभिः शुभैः ।
योगसिद्धा महात्मानस्तमोमोहविवर्जिताः ॥ २३
तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत ।
स्वयंभुवं महात्मानं देवदेवं सनातनम् ॥ २४
स्थानमेतन्महाभाव ध्रुवमक्षयमव्ययम् ।
ईश्वरस्य सदा ह्येतत्प्रणमात्र युधिष्ठिर ॥ २५
[एनं त्वहरहर्मेरुं सूर्याचन्द्रमसौ ध्रुवम् ।
प्रदक्षिणमुपावृत्य कुरुतः कुरुनन्दन ॥ २६
ज्योतींषि चाप्यशेषेण सर्वाण्यनघ सर्वतः ।
परियान्ति महाराज गिरिराजं प्रदक्षिणम् ॥] २७
एतं ज्योतींषि सर्वाणि प्रकर्षन्भगवानपि ।
कुरुते वितमस्कर्मा आदित्योऽभिप्रदक्षिणम् २८
अस्तं प्राप्य ततः सन्ध्यामतिक्रम्य दिवाकरः।
उदीचीं भजते काष्ठां बहुधा पर्वसन्धिषु ॥ २९
सुमेरुमनुवृत्तः स पुनर्गच्छति पाण्डव ।
प्राङ्मुखः सविता देवः सर्वभूतहिते रतः ॥ ३०
स सम्यग्विभजन्कालान्बहुधा पर्वसन्धिषु ।
तथैव भगवान्सोमो नक्षत्रैः सह गच्छति ॥ ३१
एवमेतं त्वतिक्रम्य महामेरुमतन्द्रितः ।
सोमश्च विभजन्कालं बहुधा पर्वसन्धिषु ।
भासयन्सर्वभूतानि पुनर्गच्छति सागरम् ॥ ३२
तथा तमिस्रहा देवो मयूखैर्भासयञ्जगत् ।
मार्गमेतमसंबाधमादित्यः परिवर्तते ॥ ३३
सिसृक्षुः शिशिराण्येव दक्षिणां भजते दिशम् ।
ततः सर्वाणि भूतानि कालं शिशिरमृच्छति ॥ ३४
स्थावराणां च भूतानां जङ्गमानां च तेजसा ।
तेजांसि समुपादत्ते निवृत्तः स विभावसुः ॥ ३५
ततः स्वेदः क्लमस्तन्द्री ग्लानिश्च भजते नरान् ।
प्राणिभिः सततं स्वप्नो ह्यभीक्ष्णं च निषेव्यते ॥ ३६
एवमेतमनिर्देश्यं मार्गमावृत्य भानुमान् ।
पुनः सृजति वर्षाणि भगवान्भासयन्प्रजाः ॥ ३७
वृष्टिमारुतसंतापैः सुखैः स्थावरजङ्गमान् ।
वर्धयन्सुमहातेजाः पुनः प्रतिनिवर्तते ॥ ३८
एवमेष चरन्पार्थ कालचक्रमतन्द्रितः ।
प्रकर्षन्सर्वभूतानि सविता परिवर्तते ॥ ३९
संतता गतिरेतस्य नैष तिष्ठति पाण्डव ।
आदायैव तु भूतानां तेजो विसृजते पुनः ॥ ४०
विभजन्सर्वभूतानामायुः कर्म च भारत ।
अहोरात्रं कलाः काष्ठाः सृजत्येष सदा विभुः ॥ ४१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि यक्षयुद्धपर्वणि चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

## पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

इन्द्रादधिगतास्त्रेणार्जुनेन स्वर्गाद्गन्धमादननिवासिनो युधिष्ठिरादीन्प्रत्यागमनम् ॥ १ ॥

वैशंपायन उवाच ।
तस्मिन्नगेन्द्रे वसतां तु तेषां
महात्मनां सद्व्रतमास्थितानाम् ।
रतिः प्रमोदश्च बभूव तेषा-
माकाङ्क्षतां दर्शनमर्जुनस्य ॥ १
तान्वीर्ययुक्तान्सुविशुद्धसत्वां-
स्तेजस्विनः सत्यधृतिप्रधानान् ।
संप्रीयमाणा बहवोऽभिजग्मु-
र्गन्धर्वसङ्घाश्च महर्षयश्च ॥ २

प्रणम नमस्कुरु ॥ २५ ॥ उपावृत्य अप्रदक्षिणं गत्वैव । भचक्रवेगात् कुलालचक्रे प्रतीपं क्रमन्ती पिपीलिकेव प्रदक्षिणं कुरुत इत्यर्थः ॥ २६ ॥ पुनर्गच्छति मन्दरमिति झ. पाठः ॥ ३२ ॥ शिशिराणि शीतानि ॥ ३४ ॥ तेजांसि समुपादत्ते ग्रीष्मे ॥ ३५ ॥ अनिर्देश्यं मार्गं अन्तरिक्षम् ॥ ३७ ॥ चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

तं पादपैः पुष्पफलैरुपेतं
नगोत्तमं प्राप्य महारथानाम् ।
मनःप्रसादः परमो बभूव
यथा दिवं प्राप्य मरुद्गणानाम् ॥ ३

मयूरहंसस्वननादितानि
पुष्पोपकीर्णानि महाचलस्य ।
शृङ्गाणि सानूनि च पश्यमाना
गिरेः परं हर्षमवाप्य तस्थुः ॥ ४

साक्षात्कुबेरेण कृताश्च तस्मि-
न्नगोत्तमे संवृतकूटगुल्माः ।
कादम्बकारण्डवहंसजुष्टाः
पद्माकुलाः पुष्करिणीरपश्यन् ॥ ५

क्रीडाप्रदेशांश्च समृद्धरूपा-
न्सवेदिकांस्ते न्यवसन्सुवेशान् ।
मणिप्रकीर्णांश्च मनोरसांश्च
यथा भवेयुर्धनदस्य राज्ञः ॥ ६

अनेकवर्णैश्च सुगन्धिभिश्च
महाद्रुमैः संततमभ्रजालैः ।
तपःप्रधानाः सततं चरन्तः
शृङ्गं गिरेश्चिन्तयितुं न शेकुः ॥ ७

स्वतेजसा तस्य नगोत्तमस्य
महौषधीनां च तथा प्रभावात् ।
विभक्तरूपः सविता बभूव
निशामुखं प्राप्य नरर्षभाणाम् ॥ ८

यमास्थितः स्थावरजङ्गमानां
विभावसुर्भावयिता हरीशः ।
तस्योदयं चास्तमनं च वीरा-
स्तत्र स्थितास्ते ददृशुर्नृसिंहाः ॥ ९

रवेस्तमिस्रागमनिर्गमांस्ते
तथोदयं चास्तमनं च वीराः ।
समावृताः प्रेक्ष्य तमोनुदस्य
गभस्तिजालैः प्रदिशो दिशश्च ॥ १०

स्वाध्यायवन्तः सततक्रियाश्च
धर्मप्रधानाश्च शुचिव्रताश्च ।
सत्ये स्थितास्तस्य महारथस्य
सत्यव्रतस्यागमनप्रतीक्षाः ॥ ११

इहैव हर्षोऽस्तु समागतानां
क्षिप्रं कृतास्त्रेण धनंजयेन ।
इति ब्रुवन्तः परमाशिषस्ते
पार्थास्तपोयोगपरा बभूवुः ॥ १२

दृष्ट्वा विचित्राणि गिरौ वनानि
किरीटिनं चिन्तयतामभीक्ष्णम् ।
बभूव रात्रिर्दिवसश्च तेषां
संवत्सरेणैव समानरूपः ॥ १३

यदैव धौम्यानुमते महात्मा
कृत्वा जटां प्रव्रजितः स जिष्णुः ।
तदैव तेषां नबभूव हर्षः
कुतो रतिस्तद्गतमानसानाम् ॥ १४

भ्रातुर्नियोगात्तु युधिष्ठिरस्य
वनादसौ वारणमत्तगामी ।
यत्काम्यकात्प्रव्रजितः स जिष्णु-
स्तदैव ते शोकहता बभूवुः ॥ १५

तथैव तं चिन्तयतां सिताश्व-
मस्त्रार्थिनं वासवमभ्युपेतम् ।
कालः स कृच्छ्रेण महानतीत-
स्तस्मिन्नगे भारत भारतानाम् ॥ १६

[उषित्वा पञ्चवर्षाणि सहस्राक्षनिवेशने ।
अवाप्य दिव्यान्यस्त्राणि सर्वाणि विबुधेश्वरात् १७

आग्नेयं वारुणं सौम्यं वायव्यमथ वैष्णवम् ।
ऐन्द्रं पाशुपतं ब्राह्मं पारमेष्ठ्यं प्रजापतेः ॥ १८

---

महती चला लक्ष्मीः शोभा यस्य महाचलस्य । चला लक्ष्म्यां पुमान् कम्पे इति मेदिनी । सानून्येव तीक्ष्णाग्राणि पुंसंचारायोग्यानि शृङ्गाणीत्युच्यन्ते ॥ ४ ॥ यं सूर्यम् । विभावसुर्वह्निरास्थितः । यस्य सूर्यस्याश्रयेणैव रात्रौ वह्निर्जगद्दीपयति तस्योदयमित्यन्वयः ॥ ९ ॥ पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

यमस्य धातुः सवितुस्त्वष्टुर्वैश्रवणस्य च ।
तानि प्राप्य सहस्राक्षादभिवाद्य शतक्रतुम् ॥१९
अनुज्ञातस्तदा तेन कृत्वा चापि प्रदक्षिणम् ।
आगच्छदर्जुनः प्रीतः प्रहृष्टो गन्धमादनम् ॥२०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि यक्षयुद्धपर्वणि पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

समाप्तं च यक्षयुद्धपर्व ॥ ८ ॥

---

## ( अथ निवातकवचयुद्धपर्व ॥ ९ ॥ )

### षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

अर्जुनेन युधिष्ठिरादीन्प्रति संक्षेपेण स्वकीयस्वर्गनिवासप्रकारकथनम् ॥ १ ॥

वैशंपायन उवाच ।
ततः कदाचिद्धरिसंप्रयुक्तं
महेन्द्रवाहं सहसोपयातम् ।
विद्युत्प्रभं प्रेक्ष्य महारथानां
हर्षोऽर्जुनं चिन्तयतां बभूव ॥ १
स दीप्यमानः सहसाऽन्तरिक्षं
प्रकाशयन्मातलिसंगृहीतः ।
बभौ महोल्केव घनान्तरस्था
शिखेव चाग्नेर्ज्वलिता विधूमा ॥ २
तमास्थितः संददृशे किरीटी
स्रग्वी नवान्याभरणानि बिभ्रत् ।
धनंजयो वज्रधरप्रभावः
श्रिया ज्वलन्पर्वतमाजगाम ॥ ३
स शैलमासाद्य किरीटमाली
महेन्द्रवाहादवरुह्य तस्मात् ।
धौम्यस्य पादावभिवाद्य पूर्व-
मजातशत्रोस्तदनन्तरं च ॥ ४
वृकोदरस्यापि च वन्द्य पादौ
माद्रीसुताभ्यामभिवादितश्च ।
समेत्य कृष्णां परिसान्त्व्य चैनां
प्रह्वोऽभवद्भ्रातुरुपह्वरे सः ॥ ५
बभूव तेषां परमः प्रहर्ष-
स्तेनाप्रमेयेण समेत्य तत्र ।
स चापि तान्प्रेक्ष्य किरीटमाली
ननन्द राजानमभिप्रशंसन् ॥ ६
यमास्थितः सप्त जघान पूगान्
दितेः सुतानां नमुचेर्निहन्ता ।
तमिन्द्रवाहं समुपेत्य पार्थाः
प्रदक्षिणं चक्रुरदीनसत्वाः ॥ ७
ते मातलेश्चक्रुरतीव हृष्टाः
सत्कारमग्र्यं सुरराजतुल्यम् ।
सर्वं यथावच्च दिवौकसस्तं
पप्रच्छुरेनं कुरुराजपुत्राः ॥ ८
तानप्यसौ मातलिरभ्यनन्द-
त्पितेव पुत्राननुशिष्य पार्थान् ।
ययौ रथेनाप्रतिमप्रभेण
पुनः सकाशं त्रिदिवेश्वरस्य ॥ ९
गते तु तस्मिन्वरदेववाहे
शक्रात्मजः सर्वरिपुप्रमाथी ।
'साक्षात्सहस्राक्ष इव प्रतीतः
श्रीमान्स्वदेहादवमुच्य जिष्णुः ॥' १०
शक्रेण दत्तानि ददौ महात्मा
महाधनान्युत्तमरूपवन्ति ।
दिवाकराभाणि विभूषणानि
प्रीतः प्रियायै सुतसोममात्रे ॥ ११

---

हरिभिरश्वैः संप्रयुक्तम् । महेन्द्रस्य वाहं रथम् ॥ १ ॥ प्रह्वो नम्रः । उपह्वरे समीपे ॥ ५ ॥ पूगान्यूथानि ॥ ७ ॥ एनं मातलिम् ॥ ८ ॥ सुतसोमो भीमाद्द्रौपद्यां जातः ॥ ११ ॥

ततः स तेषां कुरुपुङ्गवानां
तेषां च सूर्याग्निसमप्रभाणाम् ।
विप्रर्षभाणामुपविश्य मध्ये
सर्वं यथावत्कथयांबभूव ॥ १२
एवं मयाऽस्त्राण्युपशिक्षितानि
शक्राच्च वायोश्च शिवाच्च साक्षात् ।
तथैव शीलेन समाधिना च
प्रीताः सुरा मे सहिताः सहेन्द्राः ॥ १३
संक्षेपतो वै स विशुद्धकर्मा
तेभ्यः समाख्याय दिवःप्रवेशम् ।
माद्रीसुताभ्यां सहितः किरीटी
सुष्वाप तामावसतिं प्रतीतः ॥ १४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

## सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

इन्द्रेण सभ्रातृकं युधिष्ठिरमेत्य जयाशीःशंसनपूर्वकं पुनः स्वर्गंप्रति गमनम् ॥ १ ॥

वैशंपायन उवाच ।
[ततो रजन्यां व्युष्टायां धर्मराजं युधिष्ठिरम् ।
भ्रातृभिः सहितः सर्वैरवन्दत धनंजयः ॥] १
एतस्मिन्नेव काले तु सर्ववादित्रनिःस्वनः ।
बभूव तुमुलः शब्दस्त्वन्तरिक्षे दिवौकसाम् ॥ २
रथनेमिस्वनश्चैव घण्टाशब्दश्च भारत ।
पृथग्व्यालमृगाणां च पक्षिणां चैव सर्वशः ॥ ३
'रवोन्मुखास्ते ददृशुः प्रीयमाणाः कुरूद्वह ।
मरुद्भिरन्वितं शक्रमापतन्तं विहायसा ॥' ४
ते समन्तादनुययुर्गन्धर्वाप्सरसस्तथा ।
विमानैः सूर्यसंकाशैर्देवराजमरिंदमम् ॥ ५
ततः स हरिभिर्युक्तं जाम्बूनदपरिष्कृतम् ।
मेघनादिनमारुह्य श्रिया परमया ज्वलन् ॥ ६
पार्थानभ्याजगामाशु देवराजः पुरंदरः ।
आगत्य च सहस्राक्षो रथादवरुरोह वै ॥ ७
तं दृष्ट्वैव महात्मानं धर्मराजो युधिष्ठिरः ।
भ्रातृभिः सहितः श्रीमान्देवराजमुपागमत् ॥ ८
पूजयामास चैवाथ विधिवद्भूरिदक्षिणः ।
यथार्हममितात्मानं विधिदृष्टेन कर्मणा ॥ ९
धनंजयश्च तेजस्वी प्रणिपत्य पुरंदरम् ।
भृत्यवत्प्रणतस्तस्थौ देवराजसमीपतः ॥ १०
आघ्राय तं महातेजाः कुन्तीपुत्रो युधिष्ठिरः ।
धनंजयमभिप्रेक्ष्य विनीतं स्थितमन्तिके ॥ ११
जटिलं देवराजस्य तपोयुक्तमकल्मषम् ।
हर्षेण महताऽऽविष्टः फल्गुनस्याथ दर्शनात् ।
बभूव परमप्रीतो देवराजं च पूजयन् ॥ १२
तं तथाऽदीनमनसं राजानं हर्षसंप्लुतम् ।
उवाच वचनं धीमान्धर्मराजं पुरंदरः ॥ १३
त्वमिमां पृथिवीं राजन्प्रशासिष्यसि पाण्डव ।
स्वस्ति प्राप्नुहि कौन्तेय काम्यकं पुनराश्रमम् ॥ १४
अस्त्राणि लब्धानि च पाण्डवेन
सर्वाणि मत्तः प्रयतेन राजन् ।
कृतप्रियश्चास्मि धनंजयेन
जेतुं न शक्यस्त्रिभिरेष लोकैः ॥ १५
एवमुक्त्वा सहस्राक्षः कुन्तीपुत्रं युधिष्ठिरम् ।
जगाम त्रिदिवं हृष्टः स्तूयमानो महर्षिभिः ॥ १६
धनेश्वरगृहस्थानां पाण्डवानां समागमम् ।
शक्रेण य इदं विद्वानधीयीत समाहितः ॥ १७
संवत्सरं ब्रह्मचारी नियतः संशितव्रतः ।
स जीवेद्धि निराबाधः सुसुखी शरदां शतम् १८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

---

आवसतिं रात्रिम् । प्रतीतो हृष्टः ॥ १४ ॥ षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥
भुजङ्गव्याघ्रसिंहानां इति थ. पाठः ॥ ३ ॥ हरिभिर्युक्तं रथम् ॥ ६ ॥ अमितात्मा अमितबुद्धिः ॥ ९ ॥ कृतप्रियः शत्रुवधेन । सर्वाणि मत्तो गिरिशाच्च देवात् इति थ. पाठः ॥ १५ ॥ सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

## अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

अर्जुनेन स्वस्य किरातरूपिणा सह युद्धप्रकारस्य पाशुपतास्त्रलाभप्रकारस्य च कथनम् ॥ १ ॥

वैशंपायन उवाच ।
यथागतं गते शक्रे भ्रातृभिः सह संगतः ।
कृष्णया चैव बीभत्सुर्धर्मराजमपूजयत् ॥ १
अभिवादयमानं तं मूर्ध्न्युपाघ्राय पाण्डवम् ।
हर्षगद्गदया वाचा प्रहृष्टोऽर्जुनमब्रवीत् ॥ २
कथमर्जुन कालोऽयं स्वर्गे व्यतिगतस्तव ।
कथं चास्त्राण्यवाप्तानि देवराजश्च तोषितः ॥ ३
सम्यग्वा ते गृहीतानि कच्चिदस्त्राणि पाण्डव ।
कच्चित्सुराधिपः प्रीतो रुद्रश्चास्त्राण्यदात्तव ॥ ४
यथा दृष्टश्च ते शक्रो भगवान्वा पिनाकधृत् ।
यथैवास्त्राण्यवाप्तानि यथैवाराधिताश्च ते ॥ ५
यथोक्तवांस्त्वां भगवाञ्शतक्रतुररिंदम ।
कृतप्रियस्त्वयाऽसीति तस्य ते किं प्रियं कृतम् ६
एतदिच्छाम्यहं श्रोतुं विस्तरेण महाद्युते ।
यथा तुष्टो महादेवो देवराजस्तथाऽनघ ॥ ७
यच्चापि वज्रपाणेस्तु प्रियं कृतमरिंदम ।
एतदाख्याहि मे सर्वमखिलेन धनंजय ॥ ८
अर्जुन उवाच ।
शृणु हन्त महाराज विधिना येन दृष्टवान् ।
शतक्रतुमहं देवं भगवन्तं च शंकरम् ॥ ९
विद्यामधीत्य तां राजंस्त्वयोक्तामरिमर्दन ।
भवता च समादिष्टस्तपसे प्रस्थितो वनम् ॥ १०
भृगुतुन्दमथो गत्वा काम्यकादास्थितस्तपः ।
एकरात्रोषितः कंचिदपश्यं ब्राह्मणं पथि ॥ ११
स मामपृच्छत्कौन्तेय क्वासि गन्ता ब्रवीहि मे ।
तस्मा अवितथं सर्वमब्रवं कुरुनन्दन ॥ १२
स तथ्यं मम तच्छ्रुत्वा ब्राह्मणो राजसत्तम ।
अपूजयत मां राजन्प्रीतिमांश्चाभवन्मयि ॥ १३
ततो मामब्रवीत्प्रीतस्तप आतिष्ठ भारत ।
तपस्वी नचिरेण त्वं द्रक्ष्यसे विबुधाधिपम् ॥ १४
ततोऽहं वचनात्तस्य गिरिमारुह्य शैशिरम् ।
तपोऽतप्यं महाराज मासं मूलफलाशनः ॥ १५
द्वितीयश्चापि मे मासो जलं भक्षयतो गतः ।
निराहारस्तृतीयेऽथ मासे पाण्डवनन्दन ॥ १६
ऊर्ध्वबाहुश्चतुर्थं तु मासमस्मि स्थितस्तदा ।
न च मे हीयते प्राणस्तदद्भुतमिवाभवत् ॥ १७
पञ्चमे त्वथ संप्राप्ते प्रथमे दिवसे गते ।
वराहसंस्थितं भूतं मत्समीपं समागमत् ॥ १८
निघ्नन्प्रोथेन पृथिवीं विलिखंश्चरणैरपि ।
संमार्जञ्जठरेणोर्वीं विवर्तंश्च मुहुर्मुहुः ॥ १९
अनु तस्यापरं भूतं महत्कैरातसंस्थितम् ।
धनुर्बाणासिमत्प्राप्तं स्त्रीगणानुगतं तदा ॥ २०
ततोऽहं धनुरादाय तथाऽक्षय्ये महेषुधी ।
अताडयं शरेणाथ तद्भूतं रोमहर्षणम् ॥ २१
युगपत्तं किरातस्तु विकृष्य बलवद्धनुः ।
अभ्याजघ्ने दृढतरं कम्पयन्निव मेदिनीम् ॥ २२
स तु मामब्रवीद्राजन्मम पूर्वपरिग्रहः ।
मृगयाधर्ममुत्सृज्य किमर्थं ताडितस्त्वया ॥ २३
एष ते निशितैर्बाणैर्दर्पं हन्मि स्थिरो भव ।
संघर्षवान्महाकायस्ततो मामभ्यधावत ॥ २४
ततो गिरिमिवात्यर्थमावृणोन्मां महाशरैः ।
तं चाहं शरवर्षेण महता समवाकिरम् ॥ २५
ततः शरैर्दीप्तमुखैर्यन्त्रितैरनु यन्त्रितैः ।
प्रत्यविध्यमहं तं तु वज्रैरिव शिलोच्चयम् ॥ २६
तस्य तच्छतधा रूपमभवच्च सहस्रधा ।
तानि चास्य शरीराणि शरैरहमताडयम् ॥ २७
पुनस्तानि शरीराणि एकीभूतानि भारत ।
अदृश्यन्त महाराज तान्यहं व्यधमं पुनः ॥ २८

---

प्रहृष्टो धर्मपुत्रः ॥ २ ॥ हन्तेत्यव्ययं वाक्यारम्भे हर्षे वा ॥ ९ ॥ शैशिरं हिममयम् ॥ १५ ॥ प्राणो बलम् ॥ १७ ॥ चतुर्थे मास्यतिक्रान्ते इति ध. पाठः । वराहवत् संस्थितं आकारो यस्य ॥ १८ ॥ प्रोथेन मुखाग्रेण पोत्राख्येन । विवर्तन् विषमेण भावेन वर्तमानः इतस्ततः पर्यटन्वा ॥ १९ ॥ अनु पश्चात् यन्त्रितैः दृढाकृष्टैः ॥ २६ ॥

अणुर्बृहच्छिरा भूत्वा बृहच्चाणुशिराः पुनः ।
एकीभूतस्तदा राजन्सोऽभ्यवर्तत मां युधि ॥२९
यदाऽभिभवितुं बाणैर्न च शक्नोमि तं रणे ।
ततो महास्त्रमातिष्ठं वायव्यं भरतर्षभ ॥ ३०
न चैनमशकं हन्तुं तदद्भुतमिवाभवत् ।
तस्मिन्प्रतिहते चास्त्रे विस्मयो मे महानभूत् ॥३१
तत्रापि च महाराज सविशेषमहं ततः ।
अस्त्रपूगेन महता रणे भूतमवाकिरम् ॥ ३२
स्थूणाकर्णमथो जालं शरवर्षं शरोल्बणम् ।
शलभास्त्रमश्मवर्षं समास्थायाहमभ्ययाम् ॥ ३३
जग्रास प्रसभं तानि सर्वाण्यस्त्राणि मे नृप ।
तेषु सर्वेषु जग्धेषु ब्रह्मास्त्रं महदादिशम् ॥ ३४
ततः प्रज्वलितैर्बाणैः सर्वतश्चोपचीयत ।
उपचीयमानश्च तदा सहास्त्रेण व्यवर्धत ॥ ३५
ततः संतापिता लोका मत्प्रसूतेन तेजसा ।
क्षणेन हि दिशः खं च सर्वतो हि विदीपितं ३६
तदप्यस्त्रं महातेजाः क्षणेनैव व्यशामयत् ।
ब्रह्मास्त्रे तु हते राजन्भयं मां महदाविशत् ॥३७
ततोऽहं धनुरादाय तथाऽक्षय्ये महेषुधी ।
सहसाऽभ्यहनं भूतं तान्यप्यस्त्राण्यभक्षयत् ॥३८
एतेष्वस्त्रेषु भूतेन भक्षितेष्वायुधेषु च ।
मम तस्य च भूतस्य बाहुयुद्धमवर्तत ॥ ३९
व्यायामं मुष्टिभिः कृत्वा तलैरभिसमाहतौ ।
अपातयच्च तद्भूतमहं चापातयं महीम् ॥ ४०
ततः प्रहस्य तद्भूतं तत्रैवान्तरधीयत ।
सह स्त्रीभिर्महाराज पश्यतो मेऽद्भुतोपमम् ॥ ४१
मुख्यं कृत्वा स भगवांस्ततोऽन्यद्रूपमात्मनः ।
दिव्यमेव महाराज वसानोऽद्भुतमम्बरम् ॥ ४२
हित्वा किरातरूपं च भगवांस्त्रिदशेश्वरः ।
स्वरूपं दिव्यमास्थाय तस्थौ तत्र महेश्वरः ॥ ४३
सोऽदृश्यत ततः साक्षाद्भगवान्गोवृषध्वजः ।
धनुर्गृह्य तदा पाणौ बहुरूपः पिनाकधृत् ॥ ४४
स मामभ्येत्य समरे तथैवाभिमुखं स्थितम् ।
शूलपाणिरथोवाच तुष्टोस्मीति परंतप ॥ ४५
ततस्तद्धनुरादाय तूणौ चाक्षय्यसायकौ ।
प्रादान्ममैव भगवान्वरयस्वेति चाब्रवीत् ॥ ४६
तुष्टोऽस्मि तव कौन्तेय ब्रूहि किं करवाणि ते ।
मनोगतं वीर यत्ते तद्ब्रूहि वितराम्यहम् ।
अमरत्वमपाहाय ब्रूहि यत्ते मनोगतम् ॥ ४७
ततः प्राञ्जलिरेवाहमस्त्रेषु कृतमानसः ।
प्रणम्य शिरसा शर्वं ततो वचनमाददे ॥ ४८
भगवान्मे प्रसन्नश्चेदीप्सितोऽयं वरो मम ।
अस्त्राणीच्छाम्यहं ज्ञातुं यानि देवेषु कानिचित् ॥
ददानीत्येव भगवानब्रवीत्त्र्यम्बकश्च माम् ।
रौद्रमस्त्रं मदीयं त्वामुपस्थास्यति पाण्डव ॥ ५०
प्रददौ च मम प्रीतः सोऽस्त्रं पाशुपतं प्रभुः ।
उवाच च महादेवो दत्त्वा मेऽस्त्रं सनातनम् ५१
न प्रयोज्यं भवेदेतन्मानुषेषु कथंचन ।
[जगद्विनिर्दहेदेवमल्पतेजसि पातितम् ॥ ५२
पीड्यमानेन बलवत्प्रयोज्यं स्याद्धनंजय ।
अस्त्राणां प्रतिघाते च सर्वथैव प्रयोजयेः ॥ ५३
ततोऽप्रतिहतं दिव्यं सर्वास्त्रप्रतिषेधनम् ।
मूर्तिमन्मे स्थितं पार्श्वे प्रसन्ने गोवृषध्वजे ॥ ५४
उत्सादनममित्राणां परसेनानिकर्तनम् ।
दुरासदं दुष्प्रसहं सुरदानवराक्षसैः ॥ ५५
अनुज्ञातस्त्वहं तेन तत्रैव समुपाविशम् ।
प्रेक्षतश्चैव मे देवस्तत्रैवान्तरधीयत ॥ ५६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

---

स्थूणाकर्ण इति शङ्कुकर्णाख्यो रुद्रावतारभेदस्तद्दैवत्यमस्त्रम् । जालं जलमयं वारुणम् । शैलास्त्रमश्मवर्षं च इति ध. पाठः ॥ ३३ ॥ व्यायामं संघटनम् ॥ ४० ॥ गोवृषो बलीवर्दश्रेष्ठः ॥ ४४ ॥ अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

## एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥

अर्जुनेन स्वस्येन्द्रलोकगमनप्रकारस्य तत्र निवासप्रकारकथनपूर्वकमिन्द्रादस्त्रप्राप्तिप्रकारस्य च कथनम् ॥ १ ॥

अर्जुन उवाच ।
ततस्तामवसं प्रीतो रजनीं तत्र भारत ।
प्रसादाद्देवदेवस्य त्र्यम्बकस्य महात्मनः ॥ १
व्युषितो रजनीं चाहं कृत्वा पौर्वाह्निकीः क्रियाः ।
अपश्यं तं द्विजश्रेष्ठं दृष्टवानस्मि यं पुरा ॥ २
तस्मै चाहं यथावृत्तं सर्वमेव न्यवेदयम् ।
भगवन्तं महादेवं समेतोस्मीति भारत ॥ ३
स मामुवाच राजेन्द्र प्रीयमाणो द्विजोत्तमः ।
दृष्टस्त्वया महादेवो यथा नान्येन केनचित् ॥ ४
समेतं लोकपालैस्तु सर्वैर्वैवस्वतादिभिः ।
द्रष्टास्यनघ देवेन्द्रं स च तेऽस्त्राणि दास्यति ॥ ५
एवमुक्त्वा स मां राजन्नाश्लिष्य च पुनः पुनः ।
अगच्छत्स यथाकामं ब्राह्मणः सूर्यसन्निभः ॥ ६
अथापराह्णे तस्याह्नः प्रावात्पुण्यः समीरणः ।
पुनर्नवमिमं लोकं कुर्वन्निव सपत्नहन् ॥ ७
दिव्यानि चैव माल्यानि सुगन्धीनि नवानि च ।
शैशिरस्य गिरेः पादे प्रादुरासन्समीपतः ॥ ८
वादित्राणि च दिव्यानि सुघोषाणि समन्ततः ।
स्तुतयश्चेन्द्रसंयुक्ता अश्रूयन्त मनोहराः ॥ ९
गणाश्चाप्सरसां तत्र गन्धर्वाणां तथैव च ।
पुरस्ताद्देवदेवस्य जगुर्गीतानि सर्वशः ॥ १०
मरुतां च गणास्तत्र देवयानैरुपागमन् ।
महेन्द्रानुचरा ये च देवसद्मनिवासिनः ॥ ११
ततो मरुत्वान्हरिभिर्युक्तैर्वाहैः स्वलंकृतैः ।
शचीसहायस्तत्रायात्सह सर्वैस्तदाऽमरैः ॥ १२
एतस्मिन्नेव काले तु कुबेरो नरवाहनः ।
दर्शयामास मां राजँल्लक्ष्म्या परमया युतः ॥ १३
दक्षिणस्यां दिशि यमं प्रत्यपश्यं व्यवस्थितम् ।
वरुणं देवराजं च यथास्थानमवस्थितम् ॥ १४
ते मामूचुर्महाराज सान्त्वयित्वा सुरर्षभाः ।
सव्यसाचिन्निरीक्षास्माँल्लोकपालानवस्थितान् ॥ १५
सुरकार्यार्थसिद्ध्यर्थं दृष्टवानसि शंकरम् ।
अस्मत्तोऽपि गृहाण त्वमस्त्राणीति समन्ततः ॥ १६
ततोऽहं प्रयतो भूत्वा प्रणिपत्य सुरर्षभान् ।
प्रत्यगृह्णां तदाऽस्त्राणि महान्ति विविधानि च ॥ १७
गृहीतास्त्रस्ततो देवैरनुज्ञातोस्मि भारत ।
अथ देवा ययुः सर्वे यथागतमरिंदम ॥ १८
मघवानपि मां देवो रथमारोप्य सुप्रभम् ।
उवाच भगवान्वाक्यं स्मयन्निव महायशाः ॥ १९
पुरैवागमनादस्माद्वेदाहं त्वां धनंजय ।
अतः परं त्वहं वै त्वां दर्शये भरतर्षभ ॥ २०
त्वया हि तीर्थेषु पुरा समाप्लावः कृतोऽसकृत् ।
तपश्चेदं महत्तप्तं स्वर्गं गन्तासि पाण्डव ॥ २१
भूयश्चैव च तप्तव्यं तपश्चरणमुत्तमम् ।
'दुश्चरं घोरमस्त्राणां तपोबलकरं तव ॥' २२
स्वर्गस्त्ववश्यं गन्तव्यस्त्वया शत्रुनिषूदन ।
मातलिर्मन्नियोगात्त्वां त्रिदिवं प्रापयिष्यति ॥२३
विदितस्त्वं हि देवानां मुनीनां च महात्मनाम् ।
'इहस्थः पाण्डवश्रेष्ठ तपः कुर्वन्सुदुष्करम् ॥' २४
ततोऽहमब्रुवं शक्रं प्रसीद भगवन्मम ।
आचार्यं वरयेऽहं त्वामस्त्रार्थं त्रिदशेश्वर ॥ २५
इन्द्र उवाच ।
क्रूरकर्माऽस्त्रवित्तात भविष्यसि परंतप ।
यदर्थमस्त्राणीप्सुस्त्वं तं कामं पाण्डवाप्नुहि ॥ २६
ततोऽहमब्रुवं नाहं दिव्यान्यस्त्राणि शत्रुहन् ।
मानुषेषु प्रयोक्ष्यामि विनाऽस्त्रप्रतिघातनात् ॥२७
तानि दिव्यानि मेऽस्त्राणि प्रयच्छ विबुधाधिप ।
लोकांश्चास्त्रजितान्पश्चाल्लभेयं सुरपुङ्गव ॥ २८
इन्द्र उवाच ।
परीक्षार्थं मयैतत्ते वाक्यमुक्तं धनंजय ।

देवयानैर्विमानैः । देवसद्मनिवासिनः स्त्रीबालादयः शचीजयन्तादय इत्यर्थः ॥ ११ ॥ यथास्थानं प्राच्यामिन्द्रं प्रतीच्यां वरुणमित्यादि ॥ १४ ॥ अस्त्रस्यैव प्रतिघातार्थमस्त्रं मोक्ष्ये नलन्यत्र मानुषे ॥ २७ ॥

ममात्मजस्य वचनं सूपपन्नमिदं तव ॥ २९
शिक्ष मे भवनं गत्वा सर्वाण्यस्त्राणि भारत ।
वायोरग्नेर्वसुभ्योऽपि वरुणात्समरुद्गणात् ॥ ३०
साध्यं पैतामहं चैव गन्धर्वोरगरक्षसाम् ।
वैष्णवानि च सर्वाणि नैर्ऋतानि तथैव च ॥३१
मद्गतानि च जानीहि सर्वास्त्राणि कुरूद्वह ।
एवमुक्त्वा तु मां शक्रस्तत्रैवान्तरधीयत ॥ ३२
अथापश्यं हरियुजं रथमैन्द्रमुपस्थितम् ।
दिव्यं मायामयं पुण्यं यत्तं मातलिना नृप ॥३३
लोकपालेषु यातेषु मामुवाचाथ मातलिः ।
द्रष्टुमिच्छति शक्रस्त्वां देवराजो महाद्युते ॥ ३४
संसिद्धस्त्वं महाबाहो कुरु कार्यमनुत्तमम् ।
पश्य पुण्यकृतां लोकान्सशरीरो दिवं व्रज ॥ ३५
देवराजः सहस्राक्षस्त्वां दिदृक्षति भारत ।
इत्युक्तोऽहं मातलिना गिरिमामन्त्र्य शैशिरम् ३६
प्रदक्षिणमुपावृत्य समारोहं रथोत्तमम् ।
चोदयामास स हयान्मनोमारुतरंहसः ॥ ३७
[मातलिर्हयतत्त्वज्ञो यथावद्भूरिदक्षिणः ।
अवैक्षत च मे वक्त्रं स्थितस्याथ ससारथिः ।
तथा भ्रान्ते रथे राजन्विस्मितश्चेदमब्रवीत् ॥ ३८
अत्यद्भुतमिदं त्वद्य विचित्रं प्रतिभाति मे ।
यदास्थितो रथं दिव्यं पदान्न चलितः पदम् ॥] ३९
देवराजोऽपि हि मया नित्यमत्रोपलक्षितः ।
विचलन्प्रथमोत्पाते हयानां भरतर्षभ ॥ ४०
त्वं पुनः स्थित एवात्र रथे भ्रान्ते कुरूद्वह ।
अतिशक्रमिदं सर्वं तवेति प्रतिभाति मे ॥ ४१
इत्युक्त्वाऽऽकाशमाविश्य मातलिर्विबुधालयान् ।
दर्शयामास मे राजन्विमानानि च भारत ॥ ४२
[स रथो हरिभिर्युक्तो ह्यूर्ध्वमाचक्रमे ततः ।
ऋषयो देवताश्चैव पूजयन्ति नरोत्तम ॥ ४३
ततः कामगमाँल्लोकानपश्यं वै सुरर्षिणाम् ।
गन्धर्वाप्सरसां चैव प्रभावममितौजसाम् ॥] ४४

नन्दनादीनि देवानां वनान्युपवनानि च ।
दर्शयामास मे शीघ्रं मातलिः शक्रसारथिः ॥४५
ततः शक्रस्य भवनमपश्यममरावतीम् ।
दिव्यैः कामफलैर्वृक्षै रत्नैश्च समलंकृताम् ॥ ४६
न तां भासयते सूर्यो न शीतोष्णे न च क्लमः ।
न बाधते तत्र रजस्तत्रास्ति न जरा नृप ॥ ४७
न तत्र शोको दैन्यं वा वैवर्ण्यं चोपलक्ष्यते ।
दिवौकसां महाराज न ग्लानिररिमर्दन ।
न क्रोधलोभौ तत्रास्तामशुभं वा विशांपते ॥ ४८
नित्यं तुष्टाश्च ते राजन्प्राणिनः सुरवेश्मनि ।
नित्यपुष्पफलास्तत्र पादपा हरितच्छदाः ॥ ४९
पुष्करिण्यश्च विविधाः पद्मसौगन्धिकायुताः ।
शीतस्तत्र ववौ वायुः सुगन्धो वीजते शुभः ॥५०
सर्वरत्नविचित्रा च भूमिः पुष्पविभूषिता ।
मृगद्विजाश्च बहवो रुचिरा मधुरस्वराः ।
विमानगामिनश्चात्र दृश्यन्ते बहवोऽमराः ॥ ५१
ततोऽपश्यं वसून्रुद्रान्साध्यांश्च समरुद्गणान् ।
आदित्यानश्विनौ चैव तान्सर्वान्प्रत्यपूजयम् ५२
ते मां वीर्येण यशसा तेजसा च बलेन च ।
अस्त्रैश्चाप्यन्वजानन्त संग्रामे विजयेन च ॥ ५३
प्रविश्य तां पुरीं दिव्यां देवगन्धर्वपूजिताम् ।
देवराजं सहस्राक्षमुपातिष्ठं कृताञ्जलिः ॥ ५४
ददावर्धासनं प्रीतः शक्रो मे ददतांवरः ।
बहुमानाच्च गात्राणि पस्पर्श मम वासवः ॥५५
तत्राहं देवगन्धर्वैः सहितो भूरिदक्षिणैः ।
अस्त्रार्थमवसं स्वर्गे शिक्षाणोऽस्त्राणि भारत ॥५६
विश्वावसोश्च वै पुत्रश्चित्रसेनोऽभवत्सखा ।
स च गान्धर्वमखिलं ग्राहयामास मां नृप ॥५७
तत्राहमवसं राजन्गृहीतास्त्रः सुपूजितः ।
सुखं शक्रस्य भवने सर्वकामसमन्वितः ॥ ५८
शृण्वन्वै गीतशब्दं च तूर्यशब्दं च पुष्कलम् ।
पश्यंश्चाप्सरसः श्रेष्ठा नृत्यन्तीर्भरतर्षभ ॥ ५९

मायामयमिवात्यद्भुतम् ॥ ३३ ॥ पदात् स्थानात् न चलितः । रथस्य भ्रमणेपि दृढासन इत्यर्थः ॥ ३९ ॥ सुरर्षिणामिति दैर्घ्याभाव आर्षः ॥ ४४ ॥ अन्वजानन्त वीर्यादिमान्भवेत्याशीर्वादान्ददुरित्यर्थः ॥ ५३ ॥

तत्सर्वमनवज्ञाय तथ्यं विज्ञाय भारत ।
अत्यर्थं प्रतिगृह्याहमस्त्रेष्वेव व्यवस्थितः ॥ ६०
ततोऽतुष्यत्सहस्राक्षस्तेन कामेन मे विभुः ।
एवं मे वसतो राजन्नेष कालोऽत्यगाद्दिवि ॥ ६१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥

## सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

अस्त्रविद्यासमाप्तौ सहस्राक्षेण गुरुदक्षिणात्वेन निवातकवचानां क्षपणं भिक्षितेनार्जुनेन तदर्थं प्रस्थानम् ॥ १ ॥

अर्जुन उवाच ।
कृतास्त्रमतिविश्वस्तमथ मां हरिवाहनः ।
संस्पृश्य मूर्ध्नि पाणिभ्यामिदं वचनमब्रवीत् ॥ १
न त्वमद्य युधा जेतुं शक्यः सुरगणैरपि ।
किं पुनर्मानुषे लोके मानुषैरकृतात्मभिः ॥ २
अप्रमेयोऽप्रधृष्यश्च युद्धेष्वप्रतिमस्तथा ।
'अजेयस्त्वं हि सङ्ग्रामे सर्वैरपि सुरासुरैः ॥' ३
अथाब्रवीत्पुनर्देवः संप्रहृष्टतनूरुहः ।
अस्त्रयुद्धे समो वीर न ते कश्चिद्भविष्यति ॥ ४
अप्रमत्तः सदा दक्षः सत्यवादी जितेन्द्रियः ।
ब्रह्मण्यश्चास्त्रविच्चासि शूरश्चासि कुरूद्वह ॥ ५
अस्त्राणि समवाप्तानि त्वया दश च पञ्च च ।
पञ्चभिर्विधिभिः पार्थ विद्यते न त्वया समः ॥६
प्रयोगमुपसंहारमावृत्तिं च धनञ्जय ।
प्रायश्चित्तं च वेत्थ त्वं प्रतीघातं च सर्वशः ॥ ७
तव गुर्वर्थकालोऽयं समुत्पन्नः परंतप ।
प्रतिजानीष्व तं कर्तुं ततो वेत्स्याम्यहं परम् ॥ ८
ततोऽहमब्रवं राजन्देवराजमिदं वचः ।
विषह्यं यन्मया कर्तुं कृतमेव निबोध तत् ॥ ९
ततो मामब्रवीद्राजन्प्रहसन्वलवृत्रहा ।
नाविषह्यं तवाद्यास्ति त्रिषु लोकेषु किंचन ॥ १०
निवातकवचा नाम दानवा मम शत्रवः ।
समुद्रकुक्षिमाश्रित्य दुर्गे प्रतिवसन्त्युत ॥ ११
तिस्रः कोट्यः समाख्यातास्तुल्यरूपबलप्रभाः ।
तांस्तत्र जहि कौन्तेय गुर्वर्थस्ते भविष्यति ॥ १२
ततो मातलिसंयुक्तं मयूरसमरोमभिः ।
हयैरुपेतं प्रादान्मे रथं दिव्यं महाप्रभम् ॥ १३
बबन्ध चैव मे मूर्ध्नि किरीटमिदमुत्तमम् ।
स्वरूपसदृशं चैव प्रादादङ्गविभूषणम् ॥ १४
अभेद्यं कवचं चेदं स्पर्शरूपवदुत्तमम् ।
अजरां ज्यामिमां चापि गाण्डीवे समयोजयत् १५
ततः प्रायामहं तेन स्यन्दनेन विराजता ।
येनाजयद्देवपतिर्बलिं वैरोचनिं पुरा ॥ १६
ततो देवाः सर्व एव तेन घोषेण बोधिताः ।
मन्वाना देवराजं मां समाजग्मुर्विशांपते ॥ १७
दृष्ट्वा च मामपृच्छन्त किं करिष्यसि फल्गुन ।
तानब्रुवं यथाभूतमिदं कर्ताऽस्मि संयुगे ॥ १८
निवातकवचानां तु प्रस्थितं मां वधैषिणम् ।
निबोधत महाभागाः शिवं चाशास्त मेऽनघाः॥१९
'ततो वाग्भिः प्रशस्ताभिस्त्रिदशाः पृथिवीपते ।'
तुष्टुवुर्मां प्रसन्नास्ते यथा देवं पुरंदरम् ॥ २०
रथेनानेन मघवा जितवाञ्शम्बरं युधि ।
नमुचिं बलवृत्रौ च प्रह्लादनरकावपि ॥ २१
बहूनि च सहस्राणि प्रयुतान्यर्बुदान्यपि ।
रथेनानेन दैत्यानां जितवान्मघवा युधि ॥ २२

---

अनवज्ञाय आदृत्य । तथ्यं यथावत् । अत्यर्थं पुरुषार्थं इति विज्ञाय ॥ ६० ॥ तेन कामेन अस्त्रेच्छया नतु भोगेच्छया ॥ ६१ ॥ एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥

पञ्चभिः प्रयोगादिभिः ॥ ६ ॥ आवृत्तिः पुनःपुनः प्रयोगोपसंहारौ । प्रायश्चित्तं अस्त्राग्निना दग्धानामनागसां पुनरुज्जीवनम् । प्रतीघातं परास्त्रेणाभिभूतस्य स्वास्त्रस्योद्दीपनम् ॥ ७ ॥ गुर्वर्थो दक्षिणा । वेत्स्यामि वेदयिष्यामि । परं कार्यमिति शेषः ॥ ८ ॥ विषह्यं शक्यम् ॥ ९ ॥ प्रायां प्रयाणं कृतवान् ॥ १६ ॥ आशास्त आशाध्वम् ॥ १९ ॥ सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

त्वमप्यनेन कौन्तेय निवातकवचात्रणे ।
विजेता युधि विक्रम्य पुरेव मघवा वशी ॥ २३
अयं च शङ्खप्रवरो येन जेतासि दानवान् ।
अनेन विजिता लोकाः शक्रेणापि महात्मना ॥ २४
प्रदीयमानं देवैस्तं देवदत्तं जलोद्भवम् ।
प्रत्यगृह्णां जयायैनं स्तूयमानस्तदाऽमरैः ॥ २५
स शङ्खी कवची बाणी प्रगृहीतशरासनः ।
दानवालयमत्युग्रं प्रयातोस्मि युयुत्सया ॥ २६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

## एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

पार्थेन निवातकवचैः सह युयुत्सया मातलिसनाथेनेन्द्ररथेन तत्पुरंप्रति गमनम् ॥ १ ॥ अर्जुनशङ्खध्वनिश्रवणेन सन्नद्धैर्निवातकवचैस्तेन सह युद्धारम्भः ॥ २ ॥

अर्जुन उवाच ।
ततोऽहं स्तूयमानस्तु तत्रतत्र सुरर्षिभिः ।
अपश्यमुदधिं भीममपांपतिमथाव्ययम् ॥ १
फेनवत्यः प्रकीर्णाश्च संहताश्च समुच्छ्रिताः ।
ऊर्मयश्चात्र दृश्यन्ते चलन्तइव पर्वताः ॥ २
नावः सहस्रशस्तत्र रत्नपूर्णाः समन्ततः ।
'नभसीव विमानानि विचरन्त्यो विरेजिरे ॥' ३
तिमिङ्गिलाः कच्छपाश्च तथा तिमितिमिङ्गिलाः ।
मकराश्चात्र दृश्यन्ते जले मग्ना इवाद्रयः ॥ ४
शङ्खानां च सहस्राणि मग्नान्यप्सु समन्ततः ।
दृश्यन्ते स्म यथा रात्रौ तारास्तन्वभ्रसंवृताः ॥ ५
तथा सहस्रशस्तत्र रत्नसङ्घाः प्लवन्त्युत ।
वायुश्च घूर्णते भीमस्तदद्भुतमिवाभवत् ॥ ६
तमतीत्य महावेगं सर्वाम्भोनिधिमुत्तमम् ।
अपश्यं दानवाकीर्णं तद्दैत्यपुरमन्तिकात् ॥ ७
तत्रैव मातलिस्तूर्णं निपात्य पृथिवीतले ।
दानवान्रथघोषेण तत्पुरं समुपाद्रवत् ॥ ८
रथघोषं तु तं श्रुत्वा स्तनयित्नोरिवाम्बरे ।
मन्वाना देवराजं मामाविग्ना दानवाऽभवन् ॥ ९
सर्वे संभ्रान्तमनसः शरचापधराः स्थिताः ।
तथाऽसिशूलपरशुगदामुसलपाणयः ॥ १०
ततो द्वाराणि पिदधुर्दानवास्त्रस्तचेतसः ।
संविधाय पुरे रक्षां न स्म कश्चन दृश्यते ॥ ११
ततः शङ्खमुपादाय देवदत्तं महास्वनम् ।
परमां मुदमाश्रित्य प्राधमं तं शनैरहम् ॥ १२
स तु शब्दो दिवं स्तब्ध्वा प्रतिशब्दमजीजनत् ।
वित्रेसुश्च निलिल्युश्च भूतानि सुमहान्त्यपि ॥ १३
ततो निवातकवचाः सर्व एव समन्ततः ।
दंशिता विविधैस्त्राणैर्विचित्रायुधपाणयः ॥ १४
आयसैश्च महाशूलैर्गदाभिर्मुसलैरपि ।
पट्टिसैः करवालैश्च रथचक्रैश्च भारत ॥ १५
शतघ्नीभिर्भुशुण्डीभिः खड्गैश्चित्रैः स्वलंकृतैः ।
प्रगृहीतैर्दितेः पुत्राः प्रादुरासन्सहस्रशः ॥ १६
ततो विचार्य बहुशो रथमार्गेषु तान्हयान् ।
प्राचोदयत्समे देशे मातलिर्भरतर्षभ ॥ १७
तेन तेषां प्रणुन्नानामाशुत्वाच्छीघ्रगामिनाम् ।
नान्वपश्यत्तदा कश्चित्तन्मेऽद्भुतमिवाभवत् ॥ १८
ततस्ते दानवास्तत्र योधव्रातान्यनेकशः ।
विकृतस्वररूपाणि भृशं सर्वाण्यचोदयन् ॥ १९
तेन शब्देन सहसा समुद्रे पर्वतोपमाः ।
आप्लवन्त गतैः सत्वैर्मत्स्याः शतसहस्रशः ॥ २०

तिमिर्मत्स्यस्तं गिलति महामत्स्यस्तिमिंगिलः तमपि गिलतीति तिमितिमिंगिलः । तिमिरिव गिलनीयस्तिमिंगिलो यस्येति विग्रहः ॥ ४ ॥ घूर्णते भ्रमति ॥ ६ ॥ दिवं स्तब्ध्वा आकाशं व्याप्य ॥ १३ ॥ दंशिताः सन्नद्धाः । त्राणैः कवचैः ॥ १४ ॥

ततस्ते दानवास्तत्र वादित्राणि सहस्रशः । विकृतस्वररूपाणि भृशं सर्वाण्यनादयन् इति झ. पाठः ॥ १९ ॥ आप्लवन्त पलायनं कृतवन्तः । गतैः सत्वैर्विगताभिर्बुद्धिभिरुपलक्षिता भ्रान्ता इत्यर्थः ॥ २० ॥

ततो वेगेन महता दानवा मामुपाद्रवन् ।
विमुञ्चन्तः शितान्बाणाञ्शतशोऽथ सहस्रशः २१
स संप्रहारस्तुमुलस्तेषां च मम भारत ।
अवर्तत महाघोरो निवातकवचान्तकः ॥ २२
ततो देवर्षयश्चैव दानवर्षिगणाश्च ये ।
ब्रह्मर्षयश्च सिद्धाश्च समाजग्मुर्महामृधे ॥ २३
ते वै मामनुरूपाभिर्मधुराभिर्जयैषिणः ।
अस्तुवन्मुनयो वाग्भिर्यथेन्द्रं तारकामृधे ॥ २४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

## द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

अर्जुनस्य निवातकवचैः सह युद्धम् ॥ १ ॥

अर्जुन उवाच ।
ततो निवातकवचाः सर्वे वेगेन भारत ।
अभ्यद्रवन्मां सहिताः प्रगृहीतायुधा रणे ॥ १
आच्छाद्य रथपन्थानमुत्क्रोशन्तो महारथाः ।
अवृत्य सर्वतस्ते मां शरवर्षैरवाकिरन् ॥ २
ततोऽपरे महावीर्याः शूलपट्टसपाणयः ।
शूलानि च भुशुण्डीश्च मुमुचुर्दानवा मयि ॥ ३
सुमहत्तुमुलं वर्षं गदाशक्तिसमाकुलम् ।
अनिशं सृज्यमानं तैरपतन्मद्रथोपरि ॥ ४
अन्ये मामभ्यधावन्त निवातकवचा युधि ।
शितशस्त्रायुधा रौद्राः कालरूपाः प्रहारिणः ॥ ५
तानहं विविधैर्बाणैर्वेगवद्भिरजिह्मगैः ।
गाण्डीवमुक्तैरभ्यघ्नमेकैकं दशभिर्मृधे ॥ ६
ते कृता विमुखाः सर्वे मत्प्रयुक्तैः शिलाशितैः ।
ततो मातलिना तूर्णं हयास्ते संप्रचोदिताः ॥ ७
अथ मार्गान्बहूंस्तत्र विचेरुर्वातरंहसः ।
सुसंयता मातलिना प्रामथ्नन्त दितेः सुतान् ॥ ८
शतं शतास्ते हरयस्तस्मिन्युक्ता महारथे ।
तदा मातलिना यत्ता व्यचरन्नल्पका इव ॥ ९
तेषां चरणपातेन रथनेमिस्वनेन च ।
मम बाणनिपातैश्च हतास्ते शतशोऽसुराः ॥ १०
गतासवस्तथैवान्ये दानवाः पाण्डवर्षभ ।
हतसारथयस्तत्र व्यकृष्यन्त तुरंगमैः ॥ ११
ते दिशो विदिशः सर्वे प्रतिरुध्य प्रहारिणः ।
अभ्यघ्नन्विविधैः शस्त्रैस्ततो मे व्यथितं मनः ॥ १२
ततोऽहं मातलेर्वीर्यमद्भुतं समदर्शयम् ।
अश्वांस्तथा वेगवतो यदयत्नादधारयत् ॥ १३
ततोऽहं लघुभिश्चित्रैरस्त्रैस्तानसुरान्रणे ।
चिच्छेद सायुधान्राजञ्छतशोऽथ सहस्रशः ॥ १४
एवं मे चरतस्तत्र सर्वयत्नेन शत्रुहन् ।
प्रीतिमानभवद्वीरो मातलिः शक्रसारथिः ॥ १५
वध्यमानास्ततस्तैस्तु हयैस्तेन रथेन च ।
अगमन्प्रक्षयं केचिन्न्यवर्तन्त तथाऽपरे ॥ १६
स्पर्धमाना इवास्माभिर्निवातकवचा रणे ।
शरवर्षैः शरार्तं मां महद्भिः प्रत्यवारयन् ॥ १७
शरवेगैर्निहत्याहमस्त्रैः शरविघातिभिः ।
ज्वलद्भिः परमैः शीघ्रैस्तानविध्यं सहस्रशः ॥ १८
ततः संपीड्यमानास्ते क्रोधाविष्टा महासुराः ।
अपीडयन्मां सहिताः शक्तिशूलासिवृष्टिभिः ॥ १९
ततोऽहमस्त्रं प्रायुञ्जं गान्धर्वं नाम भारत ।
दयितं देवराजस्य माधवं नाम भारत ॥ २०
ततः खड्गांस्त्रिशूलांश्च तोमरांश्च सहस्रशः ।
अस्त्रवीर्येण शतधा तैर्मुक्तानहमच्छिदम् ॥ २१
छित्त्वा प्रहरणान्येषां ततस्तानपि सर्वशः ।
प्रत्यविध्यमहं रोषाद्दशभिर्दशभिः शरैः ॥ २२
गाण्डीवाद्धि तदा सङ्ख्ये यथा भ्रमरपङ्क्तयः ।

तारकामये इति झ. पाठः । तत्र तारकामये तारार्थे संग्रामे इत्यर्थः ॥ २४ ॥ एकसप्तत्यधिकशततमोऽध्यायः ॥१७१॥ शताः शतानि अयुतमित्यर्थः । हरयोऽश्वाः ॥ ९ ॥ चिच्छेद अहमिति शेषः ॥ १४ ॥ माधवं नाम मधोर्दैत्यस्य वधार्थं निर्मितत्वात् । देवराजस्य ब्रह्मदण्डसमं रणे इति ध. पाठः ॥२०॥ द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

निष्पतन्ति महाबाणास्तन्मातलिरपूजयत् ॥ २३
तेषामपि तु बाणास्ते बहुत्वाच्छलभा इव ।
अवाकिरन्मां बलवत्तानहं व्यधमं शरैः ॥ २४
वध्यमानास्ततस्ते तु निवातकवचाः पुनः ।
शरवर्षैर्महद्भिर्मां समन्तात्पर्यवारयन् ॥ २५
शरवेगान्निहत्याहमस्त्रैरस्त्रविघातिभिः ।
ज्वलद्भिः परमैः शीघ्रैस्तानविध्यं सहस्रशः ॥२६
तेषां छिन्नानि गात्राणि विसृजन्तिस्म शोणितम् ।
प्रावृषीवाभिवृष्टानि शृङ्गाण्यथ धराभृताम् ॥ २७
इन्द्राशनिसमस्पर्शैर्वेगवद्भिरजिह्मगैः ।
मद्बाणैर्वध्यमानास्ते समुद्विग्नाः स्म दानवाः ॥२८
शतधा भिन्नदेहास्ते क्षीणप्रहरणौजसः ।
ततो निवातकवचा मामयुध्यन्त मायया ॥ २९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

## त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

अर्जुनेन दिव्यास्त्रैर्मायानिरसनपूर्वकं दैत्यहननम् ॥ १ ॥

अर्जुन उवाच ।
ततोऽश्मवर्षं सुमहत्प्रादुरासीत्समन्ततः ।
नगमात्रैः शिलाखण्डैस्तन्मां दृढमपीडयत् ॥ १
तदहं वज्रसंकाशैः शरैरिन्द्रास्त्रचोदितैः ।
अचूर्णयं वेगवद्भिः शतधैकैकमाहवे ॥ २
चूर्ण्यमानेऽश्मवर्षे तु पावकः समजायत ।
तत्राश्मचूर्णा न्यपतन्पावकप्रकरा इव ॥ ३
ततोऽश्मवर्षे विहते जलवर्षं महत्तरम् ।
धाराभिरक्षमात्राभिः प्रादुरासीन्ममान्तिके ॥ ४
नभसः प्रच्युता धारास्तिग्मवीर्याः सहस्रशः ।
आवृण्वन्सर्वतो व्योम दिशश्चोपदिशस्तथा ॥ ५
धाराणां च निपातेन वायोर्विस्फूर्जितेन च ।
गर्जितेन च मेघानां न प्राज्ञायत किंचन ॥ ६
धारा दिवि च संबद्धा वसुधायां च सर्वशः ।
व्यामोहयन्त मां तत्र निपतन्त्योऽनिशं भुवि ॥ ७
तत्रोपदिष्टमिन्द्रेण दिव्यमस्त्रं विशोषणम् ।
दीप्तं प्राहिणवं घोरमशुष्यत्तेन तज्जलम् ॥ ८
हतेऽश्मवर्षे च मया जलवर्षे च शोषिते ।
मुमुचुर्दानवा मायामग्निं वायुं च भारत ॥ ९
ततोऽहमग्निं व्यधमं सलिलास्त्रेण सर्वशः ।
शैलेन च महास्त्रेण वायोर्वेगमधारयम् ॥ १०
तस्यां प्रतिहतायां ते दानवा युद्धदुर्मदाः ।
प्राकुर्वन्विविधां मायां यौगपद्येन भारत ॥ ११
ततो वर्षं प्रादुरभूत्सुमहद्रोमहर्षणम् ।
अस्त्राणां घोररूपाणामग्नेर्वायोस्तथाऽश्मनाम् ॥ १२
सा तु मायामयी वृष्टिः पीडयामास मां युधि ।
अथ घोरं तमस्तीव्रं प्रादुरासीत्समन्ततः ॥ १३
तमसा संवृते लोके घोरेण परुषेण च ।
हरयो विमुखाश्चासन्प्रास्खलच्चापि मातलिः ॥ १४
हस्ताद्धिरण्मयश्चास्य प्रतोदः प्रापतद्भुवि ।
असकृच्चाह मां भीतः किं करिष्याव इत्यपि ॥ १५
मां च भीराविशत्तीव्रा तस्मिन्विगतचेतसि ।
स च मां विगतज्ञानः संत्रस्तमिदमब्रवीत् ॥ १६
सुराणामसुराणां च संग्रामः सुमहानभूत् ।
अमृतार्थे पुरा पार्थ स च दृष्टो मयाऽनघ ॥ १७
शम्बरस्य वधे घोरः संग्रामः सुमहानभूत् ।
सारथ्यं देवराजस्य तत्रापि कृतवानहम् ॥ १८
तथैव वृत्रस्य वधे संगृहीता हया मया ।
वैरोचनेर्मया युद्धं दृष्टं चापि सुदारुणम् ॥ १९
एते मया महाघोराः संग्रामाः पर्युपासिताः ।
न चापि विगतज्ञानो भूतपूर्वोऽसि पाण्डव ॥ २०
पितामहेन संहारः प्रजानां विहितो ध्रुवम् ।

नगमात्रैः वृक्षप्रमाणैः ॥ १ ॥ पावकप्रकराः वह्निराशयः ॥ ३ ॥

वैरोचनेः बलेः ॥ १९ ॥

न हि युद्धमिदं युक्तमन्यत्र जगतः क्षयात् ॥ २१
तस्य तद्वचनं श्रुत्वा संस्तभ्यात्मानमात्मना ।
मोहयिष्यन्दानवानामहं मायाबलं महत् ॥ २२
अब्रुवं मातलिं भीतं पश्य मे भुजयोर्बलम् ।
अस्त्राणां च प्रभावं वै धनुषो गाण्डिवस्य च २३
अथास्त्रमाययैतैषां मायामेतां सुदारुणाम् ।
विनिहन्मि तमश्चोग्रं मा भैः सूत स्थिरो भव २४
एवमुक्त्वाहमसृजमस्त्रमायां नराधिप ।
मोहनीं सर्वभूतानां हिताय त्रिदिवौकसाम् ॥२५
पीड्यमानासु मायासु तासु तास्वसुरोत्तमाः ।
पुनर्बहुविधा मायाः प्राकुर्वन्नमितौजसः ॥ २६
पुनः प्रकाशमभवत्तमसा ग्रस्यते पुनः ।
भवत्यदर्शनो लोकः पुनरप्सु निमज्जति ॥ २७
सुसंगृहीतैर्हरिभिः प्रकाशे सति मातलिः ।
व्यचरत्स्यन्दनाग्र्येण संग्रामे रोमहर्षणे ॥ २८
ततः पर्यपतन्नुग्रा निवातकवचा मयि ।
तानहं विवरं दृष्ट्वा प्राहिण्वं यमसादनम् ॥ २९
वर्तमाने तथा युद्धे निवातकवचान्तके ।
नापश्यं सहसा सर्वान्दानवान्मायया वृतान् ३०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

---

## चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

अर्जुनेन निवातकवचवधानन्तरं पुनः स्वर्गंप्रति प्रस्थानम् ॥ १ ॥

अर्जुन उवाच ।
अदृश्यमानास्ते दैत्या योधयन्ति स्म मायया ।
अदृश्येनास्त्रवीर्येण तानप्यहमयोधयम् ॥ १
गाण्डीवमुक्ता विशिखाः सम्यगस्त्रप्रचोदिताः ।
अच्छिन्दन्नुत्तमाङ्गानि यत्रयत्र स्म तेऽभवन् ॥ २
ततो निवातकवचा वध्यमाना मया युधि ।
संहृत्य मायां सहसा प्राविशन्पुरमात्मनः ॥ ३
व्यपयातेषु दैत्येषु प्रादुर्भूते च दर्शने ।
अपश्यं दानवांस्तत्र हताञ्शतसहस्रशः ॥ ४
विनिष्पिष्टानि तत्रैषां शस्त्राण्याभरणानि च ।
शतशः स्म प्रदृश्यन्ते गात्राणि कवचानि च ॥५
हयानां नान्तरं ह्यासीत्पदाद्विचलितुं पदम् ।
उत्पत्य सहसा तस्थुरन्तरिक्षगमास्ततः ॥ ६
ततो निवातकवचा व्योम संछाद्य केवलम् ।
अदृश्या ह्यभ्यवर्तन्त विसृजन्तः शिलोच्चयान् ॥७
अन्तर्भूमिगताश्चान्ये हयानां चरणानथ ।
व्यगृह्णन्दानवा घोरा रथचक्रे च भारत ॥ ८
विनिगृह्य हयांश्चान्ये रथं च मम युध्यतः ।
सर्वतो मामविध्यन्त सरथं धरणीधरैः ॥ ९
पर्वतैरुपचीयद्भिः पतद्भिश्च तथाऽपरैः ।
स देशो यत्र वर्तामि गुहेव समपद्यत ॥ १०
पर्वतैश्छाद्यमानोऽहं निगृहीतैश्च वाजिभिः ।
अगच्छं परमामार्तिं मातलिस्तदलक्षयत् ॥ ११
लक्षयित्वा च मां भीतमिदं वचनमब्रवीत् ।
आर्जुनार्जुन मा भैस्त्वं वज्रमस्त्रमुदीरय ॥ १२
ततोऽहं तस्य तद्वाक्यं श्रुत्वा वज्रमुदीरयम् ।
देवराजस्य दयितं वज्रमस्त्रं नराधिप ॥ १३
अचलं स्थानमासाद्य गाण्डीवमनुमन्त्र्य च ।
अमुञ्चं वज्रसंस्पर्शानायतान्निशिताञ्शरान् ॥१४
ततो मायाश्च ताः सर्वा निवातकवचांश्च तान् ।
ते वज्रचोदिता बाणा वज्रभूताः समाविशन् १५
ते वज्रवेगविहता दानवाः पर्वतोपमाः ।
इतरेतरमाश्लिष्य न्यपतन्पृथिवीतले ॥ १६
अन्तर्भूमौ च येऽगृह्णन्दानवा रथवाजिनः ।
अनुप्रविश्य तान्बाणाः प्राहिण्वन्यमसादनम् १७
हतैर्निवातकवचैर्निरस्तैः पर्वतोपमैः ।

---

पीड्यमानासु नश्यमानासु ॥ २६ ॥

त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

समाच्छाद्यत देशः स विकीर्णैरिव पर्वतैः ॥ १८
न हयानां क्षतिः काचिन्न रथस्य न मातलेः ।
मम चादृश्यत तदा तदद्भुतमिवाभवत् ॥ १९
ततो मां प्रहसन्राजन्मातलिः प्रत्यभाषत ।
नैतदर्जुन देवेषु त्वयि वीर्यं यदीक्ष्यते ॥ २०
हतेष्वसुरसङ्घेषु दारास्तेषां तु सर्वशः ।
प्राक्रोशन्नगरे तस्मिन्यथा शरदि लक्ष्मणाः ॥२१
ततो मातलिना सार्धमहं तत्पुरमभ्ययाम् ।
त्रासयन्रथघोषेण निवातकवचस्त्रियः ॥ २२
तान्दृष्ट्वा दशसाहस्रान्मयूरसदृशान्हयान् ।
रथं च रविसंकाशं प्राद्रवन्गणशः स्त्रियः ॥ २३
ताभिराभरणैः शब्दस्त्रासिताभिः समीरितः ।
शिलानामिव शैलेषु पतन्तीनामभूत्तदा ॥ २४
वित्रस्ता दैत्यनार्यस्ताः स्वानि वेश्मान्यथाविशन् ।
बहुरत्नविचित्राणि शातकुम्भमयानि च ॥ २५
तदद्भुताकारमहं दृष्ट्वा नगरमुत्तमम् ।
विशिष्टं देवनगरादपृच्छं मातलिं ततः ॥ २६
इदमेवंविधं कस्माद्देवता न विशन्त्युत ।
पुरंदरपुराद्धीदं विशिष्टमिति लक्षये ॥ २७

मातलिरुवाच ।
आसीदिदं पुरा पार्थ देवराजस्य नः पुरम् ।
ततो निवातकवचैरितः प्रच्याविताः सुराः ॥ २८
तपस्तप्त्वा महत्तीव्रं प्रसाद्य च पितामहम् ।
इदं वृतं निवासाय देवेभ्यश्चाभयं युधि ॥ २९
ततः शक्रेण भगवान्स्वयंभूरभिचोदितः ।
विधत्तां भगवानत्रेत्यात्मनो हितकाम्यया ॥ ३०
तत उक्तो भगवता दिष्टमत्रेति भारत ।
भवितान्तस्त्वमप्येषां देहेनान्येन वृत्रहन् ॥ ३१
तत एषां वधार्थाय शक्रोऽस्त्राणि ददौ तव ।
न हि शक्याः सुरैर्हन्तुं य एते निहतास्त्वया ३२
कालस्य परिणामेन ततस्त्वमिह भारत ।
एषामन्तकरः प्राप्तस्तत्त्वया च कृतं तथा ॥ ३३
दानवानां विनाशार्थं महास्त्राणां महद्बलम् ।
ग्राहितस्त्वं महेन्द्रेण पुरुषेन्द्र तदुत्तमम् ॥ ३४
अर्जुन उवाच ।
ततः प्रशाम्य नगरं दानवांश्च निहत्य तान् ।
पुनर्मातलिना सार्धमगमं देवसद्म तत् ॥ ३५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

---

## पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

निवातकवचवधानन्तरं स्वर्गंप्रत्यागच्छताऽर्जुनेन मध्येमार्गं हिरण्यपुरावलोकनम् ॥ १ ॥ ततस्तद्वासिनां पौलोमानां कालकेयानां च वधानन्तरं पुनः स्वर्गं प्रत्यागमनम् ॥ २ ॥

अर्जुन उवाच ।
निवर्तमानेन मया महद्दृष्टं ततोऽपरम् ।
पुरं कामगमं दिव्यं पावकार्कसमप्रभम् ॥ १
रत्नद्रुममयैश्चित्रैर्भास्वरैश्च पतत्रिभिः ।
पौलोमैः कालकेयैश्च नित्यहृष्टैरधिष्ठितम् ॥ २
गोपुराट्टालकोपेतं चतुर्द्वारं दुरासदम् ।
सर्वरत्नमयं दिव्यमद्भुतोपमदर्शनम् ॥ ३
द्रुमैः पुष्पफलोपेतैः सर्वरत्नमयैर्वृतम् ।
तथा पतत्रिभिर्दिव्यैरुपेतं सुमनोहरैः ॥ ४
असुरैर्नित्यमुदितैः शूलर्ष्टिमुसलायुधैः ।
चापमुद्गरहस्तैश्च स्रग्विभिः सर्वतो वृतम् ॥ ५
तदहं प्रेक्ष्य दैत्यानां पुरमद्भुतदर्शनम् ।
अपृच्छं मातलिं राजन्किमिदं दृश्यतेति वै ॥ ६
मातलिरुवाच ।
पुलोमा नाम दैतेयी कालका च महासुरी ।
दिव्यं वर्षसहस्रं ते चेरतुः परमं तपः ॥ ७

---

लक्ष्मणाः सारसाः ॥ २१ ॥ प्रशाम्य प्रकर्षेण आलोच्य ॥ ३५ ॥ चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

तपसोन्ते ततस्ताभ्यां स्वयंभूरददाद्वरम् ।
अगृह्णीतां वरं ते तु सुतानामल्पदुःखताम् ॥ ८
अवध्यतां च राजेन्द्र सुरराक्षसपन्नगैः ।
पुरं सुरमणीयं च खचरं सुकृतप्रभम् ॥ ९
सर्वरत्नैः समुदितं दुर्धर्षममरैरपि ।
महर्षियक्षगन्धर्वपन्नगासुरराक्षसैः ॥ १०
सर्वकामगुणोपेतं वीतशोकमनामयम् ।
ब्रह्मणो भवनाच्छ्रेष्ठं कालकेयकृतं विभो ॥ ११
तदेतत्खपुरं दिव्यं चरत्यमरवर्जितम् ।
पौलोमाध्युषितं वीर कालकेयैश्च दानवैः ॥ १२
हिरण्यपुरमित्येवं ख्यायते नगरं महत् ।
रक्षितं कालकेयैश्च पौलोमैश्च महासुरैः ॥ १३
त एते मुदिता राजन्नवध्याः सर्वदैवतैः ।
निवसन्त्यत्र राजेन्द्र गतोद्वेगा निरुत्सुकाः ॥१४
'सुरासुरैरवध्यानां दानवानां धनञ्जय ।'
मानुषान्मृत्युरेतेषां निर्दिष्टो ब्रह्मणा पुरा ॥ १५
[एतानपि रणे पार्थ कालकेयान्दुरासदान् ।
वज्रास्त्रेण नयस्वाशु विनाशं सुमहाबलान् ]॥१६

अर्जुन उवाच ।

सुरासुरैरवध्यं तदहं ज्ञात्वा विशांपते ।
अब्रुवं मातलिं हृष्टो याह्येतत्पुरमञ्जसा ॥ १७
त्रिदशेशद्विषो यावत्क्षयमस्त्रैर्नयाम्यहम् ।
न कथंचिद्धि मे पापा न वध्या ये सुरद्विषः १८
उवाह मां ततः शीघ्रं हिरण्यपुरमन्तिकात् ।
रथेन तेन दिव्येन हरियुक्तेन मातलिः ॥ १९
ते मामालक्ष्य दैतेया विचित्राभरणाम्बराः ।
समुत्पेतुर्महावेगा रथानास्थाय दंशिताः ॥ २०
ततो नालीकनाराचैर्भल्लैः शक्त्यृष्टितोमरैः ।
प्रत्यघ्नन्दानवेन्द्रा मां क्रुद्धास्तीव्रपराक्रमाः ॥ २१
तदहं शस्त्रवर्षेण महता प्रत्यवारयम् ।
शस्त्रवर्षं महद्राजन्विद्याबलमुपाश्रितः ॥ २२
व्यामोहयं च तान्सर्वान्रथमार्गैश्चरन्रणे ।
तेऽन्योन्यमभिसंमूढाः पातयन्ति स्म दानवाः २३
तेषामेवं विमूढानामन्योन्यमभिधावताम् ।
शिरांसि विशिखैर्दीप्तैरच्छिन्दं शतसङ्घशः ॥ २४
ते वध्यमाना दैतेयाः पुरमास्थाय तत्पुनः ।
खमुत्पेतुः सनगरा मायामास्थाय दानवीम् ॥२५
ततोऽहं शरवर्षेण महता कुरुनन्दन ।
मार्गमावृत्य दैत्यानां गतिं चैषामवारयम् ॥ २६
तत्पुरं खचरं दिव्यं कामगं दिव्यवर्चसम् ।
दैतेयैर्वरदानेन धार्यते स्म यथासुखम् ॥ २७
अन्तर्भूमौ निपतति पुनरूर्ध्वं प्रतिष्ठते ।
पुनस्तिर्यक् प्रयात्याशु पुनरप्सु निमज्जति ॥ २८
अमरावतिसंकाशं तत्पुरं कामगं महत् ।
अहमस्त्रैर्बहुविधैः प्रत्यगृह्णां परंतप ॥ २९
ततोऽहं शरजालेन दिव्यास्त्रनुदितेन च ।
व्यगृह्णां सह दैतेयैस्तत्पुरं पुरुषर्षभ ॥ ३०
विक्षतं चायसैर्बाणैर्मत्प्रयुक्तैरजिह्मगैः ।
महीमभ्यपतद्राजन्प्रभग्नं पुरमासुरम् ॥ ३१
ते वध्यमाना मद्बाणैर्वज्रवेगैरयस्मयैः ।
पर्यभ्रमन्त वै राजन्नसुराः कालचोदिताः ॥ ३२
ततो मातलिरारुह्य पुरस्तान्निपतन्निव ।
महीमवातरत्क्षिप्रं रथेनादित्यवर्चसा ॥ ३३
ततो रथसहस्राणि षष्टिस्तेषाममर्षिणाम् ।
युयुत्सूनां मया सार्धं पर्यवर्तन्त भारत ।
तान्यहं निशितैर्बाणैर्व्यधमं गार्ध्रराजितैः ॥ ३४
ते युद्धे संन्यवर्तन्त समुद्रस्य यथोर्मयः ।
नेमे शक्या मानुषेण युद्धेनेति प्रचिन्त्य तत् ३५
ततोऽहमानुपूर्व्येण दिव्यान्यस्त्राण्ययोजयम् ३६
ततस्तानि सहस्राणि रथिनां चित्रयोधिनाम् ।
अस्त्राणि मम दिव्यानि प्रत्यघ्नञ्छनकैरिव ॥ ३७
रथमार्गान्विचित्रांस्ते विचरन्तो महाबलाः ।
प्रत्यदृश्यन्त संग्रामे शतशोऽथ सहस्रशः ॥ ३८
विचित्रमुकुटापीडा विचित्रकवचध्वजाः ।

---

खपुरं खचरत्वात् ॥ १२ ॥ न वध्या इति न अपितु वध्याएव ॥ १८ ॥ आरुह्य गगनमुत्पत्य । अवातरत् अवतीर्णः ॥ ३३ ॥ पर्यवर्तन्त परिवार्य अवर्तन्त । गार्ध्रराजितैः गृध्रपत्रशोभितैः ॥ ३४ ॥ युद्धे निमित्ते सति संन्यवर्तन्त । इमे वयमिति शेषः । युद्धेन जेतुमिति शेषः ॥ ३५ ॥

विचित्राभरणाश्चैव मम प्रीतिकराऽभवन् ॥ ३९
अहं तु शरवर्षैस्तानस्त्रप्रचुदितै रणे ।
नाशक्नुवं पीडयितुं ते तु मां प्रत्यपीडयन् ॥४०
तैः पीड्यमानो बहुभिः कृतास्त्रैः कुशलैर्युधि ।
व्यथितोस्मि महायुद्धे भयं चागान्महन्मम ॥४१
'ततोहं परमायत्तो मातलिं परिपृष्टवान् ॥ ४२
किमेते मम बाणौघैर्दिव्यास्त्रप्रतिमन्त्रितैः ।
न वध्यन्ते महाघोरैस्तत्त्वमाख्याहि पृच्छतः॥४३
स मामुवाच पर्याप्तस्त्वमेषां भरतर्षभ ।
तानुद्दिश्याथ मर्माणि प्रतिघातं तदाचर ॥ ४४
एतच्छ्रुत्वा तु राजेन्द्र संप्रहृष्टस्तमूचिवान् ।
निवर्तय रथं शीघ्रं पश्य चैतान्निपातितान् ॥४५
एवमुक्तो रथं तत्र मातलिः पर्यवर्तयत् ॥ ४६
ततो मत्वा रणे भग्नं दानवाः प्रतिहर्षिताः ।
विचुक्रुशुर्महाराज स्वरेण महता मुहुः ॥ ४७
अभग्नः कैश्चिदप्येष पाण्डवो रणमूर्धनि ।
अस्माभिः समरे भग्न इत्येवं संघशस्तदा ॥ ४८
ततोहं देवदेवाय रुद्रायाव्यक्तमूर्तये ।
प्रयतः प्रणतो भूत्वा नमस्कृत्य महात्मने ।'
स्वस्ति भूतेभ्य इत्युक्त्वा महास्त्रं समयोजयम्४९
यत्तद्रौद्रमिति ख्यातं सर्वामित्रविनाशनम् ।
'महत्पाशुपतं दिव्यं सर्वलोकनमस्कृतम् ॥' ५०
'ततोऽपश्यं त्रिशिरसं पुरुषं नवलोचनम् ।
त्रिमुखं षड्भुजं दीप्तमर्कज्वलनमूर्धजम् ।
लेलिहानैर्महानागैः कृतचिह्नममित्रहन् ॥ ५१
विभीस्ततस्तदस्त्रं तु घोरं रौद्रं सनातनम् ।
दृष्ट्वा गाण्डीवसंयोगमानीय भरतर्षभ ॥ ५२
नमस्कृत्वा त्रिनेत्राय शर्वायामिततेजसे ।
मुक्तवान्दानवेन्द्राणां पराभावाय भारत ॥ ५३
मुक्तमात्रे ततस्तस्मिन्रूपाण्यासन्सहस्रशः ।
मृगाणामथ सिंहानां व्याघ्राणां च विशांपते ५४
ऋक्षाणां महिषाणां च पन्नगानां तथा गवाम् ।
शरभाणां गजानां च वानराणां च सङ्घशः ।

मांसमेदोवसास्थिभिः संयुक्तैरिति शेषः ॥ ६१ ॥ निबर्हणैर्नाशकैः ॥ ६३ ॥ निशाम्य दृष्ट्वा ॥ ६५ ॥

ऋषभाणां वराहाणां मार्जाराणां तथैव च ॥ ५५
सालावृकाणां प्रेतानां भुरुण्डानां च सर्वशः ।
गृध्राणां गरुडानां च चमराणां तथैव च ॥ ५६
देवानां च ऋषीणां च गन्धर्वाणां च सर्वशः ।
पिशाचानां सयक्षाणां तथैव च सुरद्विषाम् ॥४७
गुह्यकानां च संग्रामे नैर्ऋतानां तथैव च ।
झषाणां गजवक्त्राणामुलूकानां तथैव च ॥ ५८
मीनवाजिसरूपाणां नानाशस्त्रासिपाणिनाम् ।
तथैव यातुधानानां गदामुद्गरधारिणाम् ॥ ५९
एतैश्चान्यैश्च बहुभिर्नानारूपधरैस्तदा ।
सर्वमासीज्जगद्व्याप्तं तस्मिन्नस्त्रे विसर्जिते ॥ ६०
त्रिशिरोभिश्चतुर्दंष्ट्रैश्चतुरास्यैश्चतुर्भुजैः ।
अनेकरूपसंयुक्तैर्मांसमेदोवसास्थिभिः ॥ ६१
अभीक्ष्णं वध्यमानास्ते दानवा ये समागताः ।
अर्कज्वलनतेजोभिर्वज्राशनिसमप्रभैः ॥ ६२
अद्रिसारमयैश्चान्यैर्बाणैरपि निबर्हणैः ।
न्यहनं दानवान्सर्वान्मुहूर्तेनैव भारत ॥ ६३
गाण्डीवास्त्रप्रणुन्नांस्तान्गतासून्नभसश्च्युतान् ।
दृष्ट्वाऽहं प्राणमं भूयस्त्रिपुरघ्नाय वेधसे ॥ ६४
तथा रौद्रास्त्रनिष्पिष्टान्दिव्याभरणभूषितान् ।
निशाम्य परमं हर्षमगमद्देवसारथिः ॥ ६५
तदसह्यं कृतं कर्म देवैरपि दुरासदम् ।
दृष्ट्वा मां पूजयामास मातलिः शक्रसारथिः ॥६६
उवाच वचनं चेदं प्रीयमाणः कृताञ्जलिः ।
'हतांस्तान्दानवान्दृष्ट्वा मया सङ्ख्ये सहस्रशः॥६७
सुरासुरैरसह्यं हि कर्म यत्साधितं त्वया ।
न ह्येतत्संयुगे कर्तुमपि शक्तः सुरेश्वरः ।
'ध्रुवं धनञ्जय प्रीतस्त्वयि शक्रः पुरार्दन ॥' ६८
सुरासुरैरवध्यं हि पुरमेतत्खगं महत् ।
त्वया विमथितं वीर स्ववीर्यतपसो बलात् ॥ ६९
अर्जुन उवाच ।
विध्वस्ते खपुरे तस्मिन्दानवेषु हतेषु च ।

पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

विनदन्त्यः स्त्रियः सर्वा निष्पेतुर्नगराद्बहिः ॥७०
प्रकीर्णकेश्यो व्यथिताः कुरर्य इव दुःखिताः ।
पेतुः पुत्रान्पितॄन्भ्रातॄन्शोचमाना महीतले ॥७१
रुदत्यो दीनकण्ठ्यस्तु निनदन्त्यो हतेश्वराः ।
उरांसि पाणिभिर्घ्नन्त्यो विस्रस्तस्रग्विभूषणाः ७२
तच्छोकयुक्तमश्रीकं दुःखदैन्यसमाहतम् ।
न बभौ दानवपुरं हतत्विट्कं हतेश्वरम् ॥ ७३
गन्धर्वनगराकारं हृतनागमिव ह्रदम् ।
शुष्कवृक्षमिवारण्यमदृश्यमभवत्पुरम् ॥ ७४
मां तु संहृष्टमनसं क्षिप्रं मातलिरानयत् ।
देवराजस्य भवनं कृतकर्माणमाहवात् ॥ ७५
हिरण्यपुरमुत्सृज्य निहत्य च महासुरान् ।
निवातकवचांश्चैव ततोऽहं शक्रमागमम् ॥ ७६
मम कर्म च देवेन्द्रं मातलिर्विस्तरेण तत् ।
सर्वं विश्रावयामास यथाभूतं महाद्युते ॥ ७७
हिरण्यपुरघातं च मायानां च निवारणम् ।
निवातकवचानां च वधं सङ्ख्ये महौजसाम् ।
'कालकेयवधं चैव अद्भुतं रोमहर्षणम् ॥' ७८
तच्छ्रुत्वा भगवान्प्रीतः सहस्राक्षः पुरंदरः ।
मरुद्भिः सहितः श्रीमान्साधुसाध्वित्यथाब्रवीत् ।
'परिष्वज्य च मां प्रेम्णा मूर्ध्नि चाघ्राय सस्मितम् ।'
ततो मां देवराजो वै समाश्वास्य पुनः पुनः ।
अब्रवीद्विबुधैः सार्धमिदं समधुरं वचः ॥ ८०
अतिदेवासुरं कर्म कृतमेव त्वया रणे ।
गुर्वर्थश्च कृतः पार्थ महाशत्रून्घ्नता मम ॥ ८१
एवमेव सदा भाव्यं स्थिरेणाजौ धनंजय ।
असंमूढेन चास्त्राणां कर्तव्यं प्रतिपादनम् ॥ ८२
अविषह्यो रणे हि त्वं देवदानवराक्षसैः ।
सयक्षासुरगन्धर्वैः सपक्षिगणपन्नगैः ॥ ८३
वसुधां चापि कौन्तेय त्वद्बाहुबलनिर्जिताम् ।
पालयिष्यति धर्मात्मा कुन्तीपुत्रो युधिष्ठिरः॥८४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

---

## षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

अर्जुनेन युधिष्ठिरंप्रति इन्द्रेण स्वस्मै सानुग्रहं कवचकिरीटादिदानकथनम् ॥ १ ॥ तथा युधिष्ठिरेण दिव्यास्त्रप्रदर्शनचोदनायां श्वःप्रदर्शनप्रतिज्ञानम् ॥ २ ॥

अर्जुन उवाच ।
ततो माममतिविश्वस्तं संरूढशरविक्षतम् ।
देवराजोऽनुगृह्येदं काले वचनमब्रवीत् ॥ १
दिव्यान्यस्त्राणि सर्वाणि त्वयि तिष्ठन्ति भारत ।
न त्वाऽभिभवितुं शक्तो मानुषो भुवि कश्चन ॥२
भीष्मो द्रोणः कृपः कर्णः शकुनिः सह राजभिः ।
संग्रामस्थस्य ते पुत्र कलां नार्हन्ति षोडशीम् ॥३
इदं च मे तनुत्राणं प्रायच्छन्मघवान्प्रभुः ।
अभेद्यं कवचं दिव्यं स्रजं चैव हिरण्मयीम् ॥ ४
देवदत्तं च मे शङ्खं देवः प्रादान्महारवम् ।
दिव्यं चेदं किरीटं मे स्वयमिन्द्रो युयोज ह ॥५
ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च ।
प्रादाच्छक्रो ममैतानि रुचिराणि बृहन्ति च ॥ ६
एवं संपूजितस्तत्र सुखमस्म्युषितो नृप ।
इन्द्रस्य भवने पुण्ये गन्धर्वशिशुभिः सह ॥ ७
ततो मामब्रवीच्छक्रः प्रीतिमानमरैः सह ।
समयोऽर्जुन गन्तुं ते भ्रातरो हि स्मरन्ति ते ॥८
एवमिन्द्रस्य भवने पञ्चवर्षाणि भारत ।
उषितानि मया राजन्स्मरता द्यूतजं कलिम् ॥ ९
ततो भवन्तमद्राक्षं भ्रातृभिः परिवारितम् ।
गन्धमादनमासाद्य पर्वतस्यास्य मूर्धनि ॥ १०

अतिविश्वस्तं अति अत्यन्तं विश्वस्तं शत्रून् जेष्यतीति विश्वासो यस्मिंस्तम् । संरूढा देहे निमग्नाः शरास्तैर्विक्षतम्

॥ १ ॥ त्वा त्वाम् ॥ २ ॥ षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

युधिष्ठिर उवाच ।
दिष्ट्या धनंजयास्त्राणि त्वया प्राप्तानि भारत ।
दिष्ट्या चाराधितो राजा देवानामीश्वरः प्रभुः ११
दिष्ट्या च भगवन्स्थाणुर्देव्या सह परंतप ।
साक्षाद्दृष्टः स्वयुद्धेन तोषितश्च त्वयाऽनघ ॥ १२
दिष्ट्या च लोकपालैस्त्वं समेतो भरतर्षभ ।
दिष्ट्या वर्धामहे पार्थ दिष्ट्याऽसि पुनरागतः १३
अद्य कृत्स्नामिमां देवीं विजितां पुरमालिनीम् ।
'पश्यामि भूमिं कौन्तेय त्वया मे प्रतिपादिताम्'
मन्ये च धृतराष्ट्रस्य पुत्रानपि वशीकृतान् ॥ १४
इच्छामि तानि चास्त्राणि द्रष्टुं दिव्यानि भारत ।
यैस्तथा वीर्यवन्तस्ते निवातकवचा हताः ॥ १५
अर्जुन उवाच ।
श्वः प्रभाते भवान्द्रष्टा दिव्यान्यस्त्राणि सर्वशः ।
निवातकवचा घोरा यैर्मया विनिपातिताः ॥ १६
वैशंपायन उवाच ।
एवमागमनं तत्र कथयित्वा धनंजयः ।
भ्रातृभिः सहितः सर्वे रजनीं तामुवास ह ॥ १७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

## सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

अर्जुनेन युधिष्ठिराय दिव्यास्त्रप्रदर्शनम् ॥ १ ॥ अस्त्रतेजसा जगत्क्षोभे सति इन्द्रचोदनया नारदेनार्जुनंप्रत्यस्त्रप्रदर्शन-प्रतिषेधनम् ॥ २ ॥

वैशंपायन उवाच ।
तस्यां रात्र्यां व्यतीतायां धर्मराजो युधिष्ठिरः ।
उत्थायावश्यकार्याणि कृतवान्भ्रातृभिः सह ॥ १
ततः संचोदयामास सोऽर्जुनं मातृनन्दनम् ।
दर्शयास्त्राणि कौन्तेय यैर्जिता दानवास्त्वया ॥२
ततो धनंजयो राजन्देवैर्दत्तानि पाण्डवः ।
अस्त्राणि तानि दिव्यानि दर्शयामास भारत ॥३
यथान्यायं महातेजाः शौचं परममास्थितः ।
'नमस्कृत्य त्रिनेत्राय वासवाय च पाण्डवः ॥'४
गिरिकूबरपादाक्षं शुभवेणु त्रिवेणुमत् ।
पार्थिवं रथमास्थाय शोभमानो धनंजयः ॥ ५
दिव्येन संवृतस्तेन कवचेन सुवर्चसा ।
धनुरादाय गाण्डीवं देवदत्तं स वारिजम् ॥ ६
शोशुभ्यमानः कौन्तेय आनुपूर्व्यान्महाभुजः ।
अस्त्राणि तानि दिव्यानि दर्शनायोपचक्रमे ॥ ७
अथ प्रयोक्ष्यमाणेषु दिव्येष्वस्त्रेषु तेषु वै ।
समाक्रान्ता मही पद्भ्यां समकम्पत सद्रुमा ॥ ८
क्षुभिताः सरितश्चैव तथैव च महोदधिः ।
शैलाश्चापि व्यदीर्यन्त न ववौ च समीरणः ॥९
न बभासे सहस्रांशुर्न जज्वाल च पावकः ।
न वेदाः प्रतिभान्ति स्म द्विजातीनां कथंचन१०
अन्तर्भूमिगता ये च प्राणिनो जनमेजय ।
पीड्यमानाः समुत्थाय पाण्डवं पर्यवारयन् ॥११
वेपमानाः प्राञ्जलयस्ते सर्वे विकृताननाः ।
दह्यमानास्तदाऽस्त्रैस्ते याचन्ति स्म धनंजयम्॥ १२
ततो ब्रह्मर्षयश्चैव सिद्धा ये च महर्षयः ।
जङ्गमानि च भूतानि सर्वाण्येवावतस्थिरे ॥ १३
देवर्षयश्च प्रवरास्तथैव च दिवौकसः ।
यक्षराक्षसगन्धर्वास्तथैव च पतत्रिणः ।
खेचराणि च भूतानि सर्वाण्येवावतस्थिरे ॥ १४
ततः पितामहश्चैव लोकपालाश्च सर्वशः ।
भगवांश्च महादेवः सगणोऽभ्याययौ तदा ॥ १५

मातृनन्दनं मातुः सुखकरम् ॥ २ ॥ गिरयएव कूबरादयस्तद्वन्तम् । कूबरो यस्मिन् युगं ध्रियते तद्दारु । पादौ चक्रे । अक्षः तयोः संधानं दारु । शुभाः वेणवइव वेणवो यस्मिन् तत् शुभवेणु त्रिवेणु अक्षकूबरयोः संधानार्थं त्रिशिखं दारु तद्वन्तम् । सुपां सुलुगिति द्वितीयाया आर्षो लुक् । रथपदे वा क्लीबलं ध्येयम् । पृथिवीमेव पार्थिवं मानसं भूमिरूपं रथम् ॥ ५ ॥ वारिजं शङ्खम् । देवदत्तं नामतः ॥ ६ ॥ दर्शनाय दर्शयितुम् ॥ ७ ॥

ततो वायुर्महाराज दिव्यैर्माल्यैः समन्वितः ।
अभितः पाण्डवं चित्रैरवचक्रे समन्ततः ॥ १६
जगुश्च गाथा विविधा गन्धर्वाः सुरचोदिताः ।
ननृतुः सङ्घशश्चैव राजन्नप्सरसां गणाः ॥ १७
तस्मिंश्च तादृशे काले नारदश्चोदितः सुरैः ।
आगम्याह वचः पार्थं श्रवणीयमिदं नृप ॥ १८
अर्जुनार्जुन मा युङ्क्ष्व दिव्यान्यस्त्राणि भारत ।
नैतानि निरधिष्ठाने प्रयुज्यन्ते कथंचन ॥ १९
अधिष्ठाने न वाऽनार्तः प्रयुञ्जीत कदाचन ।
प्रयोगेषु महान्दोषो ह्यस्त्राणां कुरुनन्दन ॥ २०
एतानि रक्ष्यमाणानि धनंजय यथागमम् ।
बलवन्ति सुखार्हाणि भविष्यन्ति न संशयः ॥ २१
अरक्ष्यमाणान्येतानि त्रैलोक्यस्यापि पाण्डव ।
भवन्ति स्म विनाशाय मैवं भूयः कृथाः क्वचित् २२
अजातशत्रो त्वं चैव द्रक्ष्यसे तानि संयुगे ।
योज्यमानानि पार्थेन द्विषतामवमर्दने ॥ २३
वैशंपायन उवाच ।
निवार्याथ ततः पार्थं सर्वे देवा यथागतम् ।
जग्मुरन्ये च ये तत्र समाजग्मुर्नरर्षभ ॥ २४
तेषु सर्वेषु कौरव्य प्रतियातेषु पाण्डवाः ।
तस्मिन्नेव वने हृष्टास्त ऊषुः सह कृष्णया ॥ २५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

समाप्तं च निवातकवचयुद्धपर्व ॥ ९ ॥

---

## (अथाजगरपर्व ॥ १० ॥)

### अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥

अर्जुनसमागमानन्तरं युधिष्ठिरेण गन्धमादनादवतरणाध्यवसायः ॥ १ ॥ लोमशेन पाण्डवान्प्रति जयाशीर्वचनपूर्वकं स्वर्गंप्रति गमनम् ॥ २ ॥

जनमेजय उवाच ।
तस्मिन्कृतास्त्रे रथिनां प्रवीरे
प्रत्यागते भवनाद्वृत्रहन्तुः ।
अतः परं किमकुर्वन्त पार्थाः
समेत्य शूरेण धनंजयेन ॥ १
वैशंपायन उवाच ।
वनेषु तेष्वेव तु ते नरेन्द्राः
सहार्जुनेनेन्द्रसमेन वीराः ।
तस्मिंश्च शैलप्रवरे सुरम्ये
धनेश्वराक्रीडगता विजह्रुः ॥ २
वेश्मानि तान्यप्रतिमानि पश्यन्
क्रीडाश्च नानाद्रुमसन्निबद्धाः ।
चचार धन्वी बहुधा नरेन्द्रः
सोऽस्त्रेषु यत्तः सततं किरीटी ॥ ३
अवाप्य वासं नरदेवपुत्राः
प्रसादजं वैश्रवणस्य राज्ञः ।
न प्राणिनां ते स्पृहयन्ति राज-
ञ्शिवश्च कालः स बभूव तेषाम् ॥ ४
समेत्य पार्थेन यथैकरात्र-
मूषुः समास्तत्र तथा चतस्रः ।
पूर्वाश्च षट् ता दश पाण्डवानां
शिवा बभूवुर्वसतां वनेषु ॥ ५
ततोऽब्रवीद्वायुसुतस्तरस्वी
जिष्णुश्च राजानमुपोपविश्य ।

---

निरधिष्ठाने लक्ष्याभावे सति ॥ १९ ॥ अधिष्ठानेपि वा अनार्तः न प्रयुञ्जीत ॥ २० ॥ सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

वृत्रहन्तुरिन्द्रस्य ॥ १ ॥ आक्रीडं उद्यानम् ॥ २ ॥ वासं स्थानम् । प्राणिनां भूमिस्थानामैश्वर्यमिति शेषः ॥ ४ ॥ पूर्वाश्च षट् समाः ॥ ५ ॥

यमौ च वीरौ सुरराजकल्पा-
वेकान्तमास्थाय हितं प्रियं च ॥ ६

तव प्रतिज्ञां कुरुराज सत्यां
चिकीर्षमाणास्त्वदनुप्रियं च ।
ततो न गच्छाम वनान्यपास्य
सुयोधनं सानुचरं निहन्तुम् ॥ ७

एकादशं वर्षमिदं वसामः
सुयोधनेनात्तसुखाः सुखार्हाः ।
तं वञ्चयित्वाऽधमबुद्धिशील-
मज्ञातवासं सुखमाप्नुयाम ॥ ८

तवाज्ञया पार्थिव निर्विशङ्का
विहाय मानं विचरामो वनानि ।
समीपवासेन विलोभितास्ते
ज्ञास्यन्ति नास्मानपकृष्टदेशान् ॥ ९

संवत्सरं तत्र विहृत्य गूढं
नराधमं तं सुखमुद्धरेम ।
निर्यात्य वैरं सफलं सपुष्पं
तस्मै नरेन्द्राधमपूरुषाय ॥ १०

सुयोधनायानुचरैर्वृताय
ततो महीं प्राप्नुहि धर्मराज ।
स्वर्गोपमं देशमिमं चरद्भिः
शक्यो विहन्तुं नरदेव शोकः ॥ ११

कीर्तिस्तु ते भारत पुण्यगन्धा
नश्येद्धि लोकेषु चराचरेषु ।
तत्प्राप्य राज्यं कुरुपुङ्गवानां
शक्यं महत्प्राप्तुमथ क्रियाश्च ॥ १२

इदं तु शक्यं सततं नरेन्द्र
प्राप्तुं त्वया यल्लभसे कुबेरात् ।
कुरुष्व बुद्धिं द्विषतां वधाय
कृतागसां भारत निग्रहे च ॥ १३

तेजस्तवोग्रं न सहेत राजन्
समेत्य साक्षादपि वज्रपाणिः ।
न हि व्यथां जातु करिष्यतस्तौ
समेत्य देवैरपि धर्मराज ॥ १४

तवार्थसिद्ध्यर्थमपि प्रवृत्तौ
सुपर्णकेतुश्च शिनेश्च नप्ता ।
यथैव कृष्णोऽप्रतिमो बलेन
तथैव राजन्स शिनिप्रवीरः ॥ १५

तवार्थसिद्ध्यर्थमभिप्रपन्नो
यथैव कृष्णः सह यादवैस्तैः ।
तथैव चेमौ नरदेववर्य
यमौ च वीरौ कृतिनौ प्रयोगे ॥ १६

त्वदर्थयोगप्रभवप्रधानाः
शमं करिष्याम परान्समेत्य ॥ १७

वैशंपायन उवाच ।

ततस्तदाज्ञाय मतं महात्मा
तेषां च धर्मस्य सुतो वरिष्ठः ।
प्रदक्षिणं स्थानमुपेत्य राजा
पर्याक्रमद्वैश्रवणस्य राज्ञः ॥ १८

आमन्त्र्य वेश्मानि नदीः सरांसि
सर्वाणि रक्षांसि च धर्मराजः ।
यथागतं मार्गमवेक्षमाणः
पुनर्गिरिं चैव निरीक्षमाणः ।
[ततो महात्मा स विशुद्धबुद्धिः
संप्रार्थयामास नगेन्द्रवर्यम् ॥] १९

समाप्तकर्मा सहितः सुहृद्भि-
र्जित्वा सपत्नान्प्रतिलभ्य राज्यम् ।
शैलेन्द्र भूयस्तपसे जितात्मा
द्रष्टा तवास्मीति मतिं चकार ॥ २०

---

अपकृष्टदेशान् दूरस्थान् न ज्ञास्यन्ति अपितु समीपस्थानेव ॥ ९ ॥ निर्यात्य प्रत्यर्प्य । अपकारिणेऽपकारं कृत्वेत्यर्थः । फलं राज्यप्राप्तिः । पुष्पं शत्रुवधः ॥ १० ॥ निग्रहे च बन्धने वा । भ्रातृत्वाद्वधेऽप्रवृत्तिश्चेदिति भावः ॥ १३ ॥ समेत्य युद्धं प्राप्य ॥ १४ ॥ सुपर्णकेतुः कृष्णः । शिनेर्नप्ता सात्यकिः । एतयोर्वीर्ये हितकारित्वं चाह । तथैवेति । तथैव कृष्णोऽप्रतिमो बलेन तथैव चाहं नरदेव वर्य । इति झ. पाठः । तत्र कृष्णोऽर्जुनः । अहं भीमसेन इत्यर्थः ॥ १५ ॥ प्रयोगेऽस्त्रप्रयोगे कृतिनौ कुशलौ ॥ १६ ॥ त्वदर्थयोगप्रभवप्रधानाः तव अर्थयोगो धनलाभः प्रभव ऐश्वर्योत्कर्षस्तद्द्वयं प्रधानं तेषां ते तथा ॥ १७ ॥ इति प्रार्थयामासेति पूर्वेण संबन्धः । मतिं चकार । गमने इति शेषः ॥ २० ॥ अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥

वृतश्च सर्वैरनुजैर्द्विजैश्च
तेनैव मार्गेण पुनर्निवृत्तः ।
उवाह चैनान्गणशस्तथैव
घटोत्कचः पर्वतनिर्झरेषु ॥ २१

तान्प्रस्थितान्प्रीतमना महर्षिः
पितेव पुत्राननुशिष्य सर्वान् ।
स लोमशो दिवमेवोर्जितश्री-
र्जगाम तेषां विजयं तदोक्त्वा ॥ २२

तेनार्ष्टिषेणेन तथानुशिष्टा-
स्तीर्थानि रम्याणि तपोवनानि ।
महान्ति चान्यानि सरांसि पार्थाः
संपश्यमानाः प्रययुर्नराग्र्याः ॥ २३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि आजगरपर्वणि अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥

## एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

गन्धमादनादवतीर्णैः पाण्डवैः क्रमेण कैलासवृषपर्वसुबाह्वादिनिवासगमनपूर्वकं पुनर्द्वैतवनमेत्य सरस्वतीतीरे सुखविहरणम् ॥ १ ॥

वैशंपायन उवाच ।
नगोत्तमं प्रस्रवणैरुपेतं
दिशां गजैः किन्नरपक्षिभिश्च ।
सुखं निवासं जहतां हि तेषां
न प्रीतिरासीद्भरतर्षभाणाम् ॥ १

ततस्तु तेषां पुनरेव हर्षः
कैलासमालोक्य महान्बभूव ।
कुबेरकान्तं भरतर्षभाणां
महीधरं वारिधरप्रकाशम् ॥ २

समुच्छ्रयान्पर्वतसंनिरोधान्
गोष्ठान्हरीणां गिरिगह्वराणि ।
बहुप्रकाराणि समीक्ष्य वीराः
स्थलानि निम्नानि च तत्र तत्र ॥ ३

तथैव चान्यानि महावनानि
मृगद्विजानेकपसेवितानि ।
आलोकयन्तोऽभिययुः प्रतीता-
स्ते धन्विनः खड्गधरा नराग्र्याः ॥ ४

वनानि रम्याणि नदीः सरांसि
गुहा गिरीणां गिरिगह्वराणि ।
एते निवासाः सततं बभूवु-
र्निशामुखं प्राप्य नरर्षभाणाम् ॥ ५

ते दुर्गवासं बहुधा निरुष्य
व्यतीत्य कैलासमचिन्त्यरूपम् ।
आसेदुरत्यर्थमनोरमं ते
तमाश्रमाग्र्यं वृषपर्वणस्तु ॥ ६

समेत्य राज्ञा वृषपर्वणा ते
प्रत्यर्चितास्तेन च वीतमोहाः ।
शशंसिरे विस्तरशः प्रवासं
शिवं यथावद्वृषपर्वणस्ते ॥ ७

सुखोषितास्तस्य त एकरात्रं
पुण्याश्रमे देवमहर्षिजुष्टे ।
अभ्याययुस्ते बदरीं विशालां
सुखेन वीराः पुनरेव वासम् ॥ ८

ऊषुस्ततस्तत्र महानुभावा
नारायणस्थानगताः समग्राः ।
कुबेरकान्तां नलिनीं विशोकाः
संपश्यमानाः सुरसिद्धजुष्टाम् ॥ ९

तां चाथ दृष्ट्वा नलिनीं विशोकाः
पाण्डोः सुताः सर्वनरप्रधानाः ।
ते रेमिरे नन्दनवासमेत्य
द्विजर्षयो वीतमला यथैव ॥ १०

नगोत्तमं गन्धमादनं जहतां त्यजताम् ॥ १ ॥ कुबेरस्य कान्तं प्रियम् ॥ २ ॥ समुच्छ्रयान् उच्चैस्थलानि । संनिरोधान् संकीर्णत्वानि । गोष्ठान् स्थानानि । हरीणां सिंहानाम् ॥ ३ ॥ अनेकपाः द्विपाः ॥ ४ ॥ गुहा अल्पप्रमाणा दरी । गह्वरं महती दरी ॥ ५ ॥ नलिनीं सरसीम् ॥ ९ ॥ नन्दनमिन्द्रवनम् ॥ १० ॥

ततः क्रमेणोपययुर्नृवीरा
यथागतेनैव पथा समग्राः ।
विहृत्य मासं सुखिनो बदर्यां
किरातराज्ञो विषयं सुबाहोः ॥ ११

चीनांस्तुषारान्दरदांश्च सर्वान्
देशान्कुलिन्दस्य च भूरिरम्यान् ।
अतीत्य दुर्गं हिमवत्प्रदेशं
पुरं सुबाहोर्ददृशुर्नृवीराः ॥ १२

श्रुत्वा च तान्पार्थिव पुत्रपौत्रा-
न्प्राप्तान्सुबाहुर्विषये समग्रान् ।
प्रत्युद्ययौ प्रीतियुतः स राजा
तं चाभ्यनन्दन्वृषभाः कुरूणाम् ॥ १३

समेत्य राज्ञा तु सुबाहुना ते
सूतैर्विशोकप्रमुखैश्च सर्वे ।
सहेन्द्रसेनैः परिचारकैश्च
पौरोगवैर्ये च महानसस्थाः ॥ १४

सुखोषितास्तत्र त एकरात्रं
सूतान्समादाय रथांश्च सर्वान् ।
घटोत्कचं सानुचरं विसृज्य
ततोऽभ्ययुर्यामुनमद्रिराजम् ॥ १५

तस्मिन्गिरौ प्रस्रवणोपपन्न-
हिमोत्तरीयारुणपाण्डुसानौ ।
विशाखयूपं समुपेत्य चक्रु-
स्तदा निवासं पुरुषप्रवीराः ॥ १६

वराहनानामृगपक्षिजुष्टं
महावनं चैत्ररथप्रकाशम् ।
शिवेन यात्वा मृगयाप्रधानाः
संवत्सरं तत्र वने विजह्रुः ॥ १७

तत्राससादातिबलं भुजङ्गं
क्षुधार्दितं मृत्युमिवोग्ररूपम् ।
वृकोदरः पर्वतकन्दरायां
विषादमोहव्यथितान्तरात्मा ॥ १८

द्वीपोऽभवद्यत्र वृकोदरस्य
युधिष्ठिरो धर्मभृतां वरिष्ठः ।
अमोक्षयद्यस्तमनन्ततेजा
ग्राहेण संवेष्टितसर्वगात्रम् ॥ १९

ते द्वादशं वर्षमथोपयान्तं
वने विहर्तुं कुरवः प्रतीताः ।
तस्माद्वनाच्चैत्ररथप्रकाशा-
च्छ्रिया ज्वलन्तस्तपसा च युक्ताः ॥ २०

ततश्च यात्वा मरुधन्वपार्श्वं
सदा धनुर्वेदरतिप्रधानाः ।
सरस्वतीमेत्य निवासकामाः
सरस्ततो द्वैतवनं प्रतीयुः ॥ २१

समीक्ष्य तान्द्वैतवने निविष्टा-
न्निवासिनस्तत्र ततोऽभिजग्मुः ।
तपोदमाचारसमाधियुक्ता-
स्तृणोदपात्रावरणाश्मकुट्टाः ॥ २२

प्लक्षाक्षरौहीतकवेतसाश्च
तथा बदर्यः खदिराः शिरीषाः ।
बिल्वेङ्गुदाः पीलुशमीकरीराः
सरस्वतीतीररुहा बभूवुः ॥ २३

तां यक्षगन्धर्वमहर्षिकान्ता-
मावासभूतामिव देवतानाम् ।
सरस्वतीं प्रीतियुताश्चरन्तः
सुखं विजह्रुर्नरदेवपुत्राः ॥ २४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि आजगरपर्वणि एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

---

पौरोगवैः पुरोगामिभिः पटगृहादिसामग्रीवाहैः ॥ १४ ॥ यामुनं यमुनोद्गमम् ॥ १५ ॥ पुंसि यथा श्वेतमुत्तरीयं श्वेतारुणमुष्णीषं च तद्वत् गिरौ प्रस्रवणानि अरुणपाण्डुसानूनि च भान्तीत्युत्प्रेक्षा । विशाखयूपं स्थानविशेषः ॥ १६ ॥ शिवेन पार्थाः इति ङ. पाठः ॥ १७ ॥ द्वीपो द्वीपवदाश्रयः । ग्राहेण सर्पेण ॥ १९ ॥ तृणोदपात्रावरणाः आसनार्थं तृणेन पाद्यार्थं उदकपात्रेण च आवृण्वन्ति ते तथाभूताः । अश्मकुट्टाः वानप्रस्था दन्तोलूखलिका एव सन्तो जरया नष्टदन्ता अश्मकुट्टा भवन्ति ॥ २२ ॥ बभूवुः शोभावन्त इति शेषः ॥ २३ ॥ एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

## अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

वने मृगयार्थमटतो भीमस्य महताऽजगरेण ग्रहणम् ॥ १ ॥

जनमेजय उवाच ।
कथं नागायुतप्राणो भीमो भीमपराक्रमः ।
भयमाहारयत्तीव्रं तस्मादजगरान्मुने ॥ १
पौलस्त्यं धनदं युद्धे य आह्वयति दर्पितः ।
नलिन्यां कदनं कृत्वा निहन्ता यक्षरक्षसाम् ॥ २
तं शंससि भयाविष्टमापन्नमरिसूदनम् ।
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ॥ ३
वैशंपायन उवाच ।
बह्वाश्चर्ये वने तेषां वसतामुग्रधन्विनाम् ।
प्राप्तानामाश्रमं राजन्राजर्षेर्वृषपर्वणः ॥ ४
यदृच्छया धनुष्पाणिर्बद्धखड्गो वृकोदरः ।
ददर्श तद्वनं रम्यं देवगन्धर्वसेवितम् ॥ ५
स ददर्श शुभान्देशान्गिरेर्हिमवतस्तदा ।
देवर्षिसिद्धचरितानप्सरोगणसेवितान् ॥ ६
चकोरैरुपचक्रैश्च पक्षिभिर्जीवजीवकैः ।
कोकिलैर्भृङ्गराजैश्च तत्र तत्र निनादितान् ॥ ७
नित्यपुष्पफलैर्वृक्षैर्हिमसंस्पर्शकोमलैः ।
उपेतान्बहुलच्छायैर्मनोनयननन्दनैः ॥ ८
स संपश्यन्गिरिनदीर्वैडूर्यमणिसंनिभैः ।
सलिलैर्हिमसंकाशैर्हंसकारण्डवायुतैः ॥ ९
वनानि देवदारूणां मेघानामिव वागुराः ।
हरिचन्दनमिश्राणि तुङ्गकालीयकान्यपि ॥ १०
मृगयां परिधावन्स समेषु मरुधन्वसु ।
विध्यन्मृगाञ्शरैः शुद्धैश्चचार स महाबलः ॥ ११
भीमसेनस्तु विख्यातो महान्तं दंष्ट्रिणं बलात् ।
निघ्नन्नागशतप्राणो वने तस्मिन्महाबलः ॥ १२
मृगाणां सवराहाणां महिषाणां महाभुजः ।
विनिघ्नंस्तत्रतत्रैव भीमो भीमपराक्रमः ॥ १३
स मातङ्गशतप्राणो मनुष्यशतवारणः ।
सिंहशार्दूलविक्रान्तो वने तस्मिन्महाबलः ॥ १४
वृक्षानुत्पाटयामास तरसा वै बभञ्ज च ।
पृथिव्याश्च प्रदेशान्वै नादयंस्तु वनानि च ॥ १५
पर्वताग्राणि वै मृद्नन्नादयानश्च विज्वरः ।
प्रक्षिपन्पादपांश्चापि नादेनापूरयन्महीम् ॥ १६
वेगेन न्यपतद्भीमो निर्भयश्च पुनः पुनः ।
आस्फोटयन्क्ष्वेडयंश्च तलतालांश्च वादयन् ।
चिरसंवृद्धदर्पस्तु भीमसेनो वने तदा ॥ १७
गजेन्द्राश्च महासत्वा मृगेन्द्राश्च महाबलाः ।
भीमसेनस्य नादेन व्यमुञ्चन्त गुहा भयात् ॥ १८
क्वचित्प्रधावंस्तिष्ठंश्च क्वचिच्चोपविशंस्तथा ।
मृगप्रेप्सुर्महारौद्रे वने चरति निर्भयः ॥ १९
स तत्र मनुजव्याघ्रो वने वनचरोपमः ।
पद्भ्यामभिसमापेदे भीमसेनो महाबलः ॥ २०
स प्रविष्टो महारण्ये नादान्नदति चाद्भुतान् ।
त्रासयन्सर्वभूतानि महासत्वपराक्रमः ॥ २१
ततो भीमस्य शब्देन भीताः सर्पा गुहाशयाः ।
अतिक्रान्तास्तु वेगेन जगामानुसृतः शनैः ।
ततोऽमरवरप्रख्यो भीमसेनो महाबलः ॥ २२
स ददर्श महाकायं भुजङ्गं रोमहर्षणम् ।
गिरिदुर्गे समापन्नं कायेनावृत्य कन्दरम् ॥ २३
पर्वताभोगवर्ष्माणं भोगैश्चन्द्रार्कमण्डलैः ।
चित्राङ्गमङ्गजैश्चित्रैर्हरिद्रासदृशच्छविम् ॥ २४
गुहाकारेण वक्त्रेण चतुर्दंष्ट्रेण राजता ।
दीप्ताक्षेणातिताम्रेण लिहानं सृक्किणी मुहुः ॥ २५
त्रासनं सर्वभूतानां कालान्तकयमोपमम् ।
निःश्वासक्ष्वेडनादेन भर्त्सयन्तमिव स्थितम् ॥ २६
स भीमं सहसाऽभ्येत्य पृदाकुः क्षुधितो भृशम् ।
जग्राहाजगरो ग्राहो भुजयोरुभयोर्बलात् ॥ २७
तेन संस्पृष्टगात्रस्य भीमसेनस्य वै तदा ।
संज्ञा मुमोह सहसा वरदानेन तस्य हि ॥ २८

तुङ्गं कालीयकं च काष्ठविशेषौ ॥ १० ॥ मरुधन्वसु गिरेर्निर्जलप्रदेशेषु । मरुर्ना गिरिधन्वनोरिति मेदिनी ॥ ११ ॥

पर्वतस्याभोगः विस्तीर्णता तत्परिमाणं वर्ष्म शरीरं यस्य तम् ॥ २४ ॥ पृदाकुः सर्पः ॥ २७ ॥

दशनागसहस्राणि धारयन्ति हि यद्बलम् ।
तद्बलं भीमसेनस्य भुजयोरसमं परैः ॥ २९
स तेजस्वी तथा तेन भुजगेन वशीकृतः ।
विस्फुरञ्शनकैर्भीमो न शशाक विचेष्टितुम् ॥ ३०
नागायुतसमप्राणः सिंहस्कन्धो महाभुजः ।
गृहीतो व्यजहात्सत्त्वं वरदानविमोहितः ॥ ३१
स हि प्रयत्नमकरोत्तीव्रमात्मविमोक्षणे ।
न चैनमशकद्वीरः कथंचित्प्रतिबाधितुम् ॥ ३२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि आजगरपर्वणि अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

## एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

अजगरेण भीमंप्रति स्वस्याजगरत्वप्रापककारणाभिधानम् ॥ १ ॥ दुर्निमित्तदर्शनाद्दुर्मनायमानेन युधिष्ठिरेण भीममार्गानुसरणेनाजगरगृहीतभीमस्य दर्शनम् ॥ २ ॥

वैशंपायन उवाच ।
स भीमसेनस्तेजस्वी तदा सर्पवशं गतः ।
चिन्तयामास सर्पस्य वीर्यमत्यद्भुतं महत् ॥ १
उवाच च महासर्पं कामया ब्रूहि पन्नग ।
कस्त्वं भो भुजगश्रेष्ठ किं मया च करिष्यसि ॥ २
पाण्डवो भीमसेनोऽहं धर्मराजादनन्तरः ।
नागायुतसमप्राणस्त्वया नीतः कथं वशम् ॥ ३
सिंहाः केसरिणो व्याघ्रा महिषा वारणास्तथा ।
समागताश्च बहुशो निहताश्च मया युधि ॥ ४
राक्षसाश्च पिशाचाश्च पन्नगाश्च महाबलाः ।
भुजवेगमशक्ता मे सोढुं पन्नगसत्तम ॥ ५
किंनु विद्याबलं किंनु वरदानमथो तव ।
उद्योगमपि कुर्वाणो वशगोस्मि कृतस्त्वया ॥ ६
अनित्यो विक्रमो नृणामिति मे धीयते मतिः ।
यथेदं मे त्वया नाग बलं प्रतिहतं महत् ॥ ७
इत्येवंवादिनं वीरं भीममक्लिष्टकारिणम् ।
भोगेन महता गृह्य समन्तात्पर्यवेष्टयत् ॥ ८
निगृह्यैनं महाबाहुं ततः स भुजगस्तदा ।
विमुच्यास्य भुजौ पीनाविदं वचनमब्रवीत् ॥ ९
दिष्टस्त्वं क्षुधितस्याद्य देवैर्भक्षो महाभुज ।
दिष्ट्या कालस्य महतः प्रियाः प्राणा हि देहिनां १०
यथा त्विदं मया प्राप्तं भुजङ्गत्वमरिंदम ।
तदवश्यं त्वया मत्तः श्रोतव्यं शृणु यन्मम ॥ ११
इमामवस्थां संप्राप्तो ह्यहं कोपान्महर्षिणा ।
शापस्यान्तं परिप्रेप्सुः सर्वस्य कथयामि तत् ॥ १२
नहुषो नाम राजर्षिर्व्यक्तं ते श्रोत्रमागतः ।
तवैव पूर्वः पूर्वेषामायोर्वंशधरः सुतः ॥ १३
सोहं शापादगस्त्यस्य ब्राह्मणानवमत्य च ।
इमामवस्थामापन्नः पश्य दैवमिदं मम ॥ १४
त्वां चेदवध्यमायान्तमतीव प्रियदर्शनम् ।
अहमद्योपयोक्ष्यामि विधानं पश्य यादृशम् ॥ १५
न हि मे मुच्यते कश्चित्कथंचित्प्रग्रहं गतः ।
गजो वा महिषो वाऽपि षष्ठे काले नरोत्तम ॥ १६
नासि केवलसर्पेण तिर्यग्योनिषु वर्तता ।
गृहीतः कौरवश्रेष्ठ वरदानमिदं मम ॥ १७
पतता हि विमानाग्रान्मया शक्रासनाद्द्रुतम् ।
कुरु शापान्तमित्युक्तो भगवान्मुनिसत्तमः ॥ १८
स मामुवाच तेजस्वी कृपयाऽभिपरिप्लुतः ।
'यस्त्वया वेष्टितो राजन्मोहमेति महाबलः ।'
मोक्षस्ते भविता राजन्कस्माच्चित्कालपर्ययात् ॥ १९
ततोस्मि पतितो भूमौ न च मामजहात्स्मृतिः ।
स्मार्तमस्ति पुराणं मे यथैवाधिगतं तथा ॥ २०
यस्तु ते व्याहृतान्प्रश्नान्प्रतिब्रूयाद्विभागवित् ।
स त्वां मोक्षयिता शापादिति मामब्रवीदृषिः ॥ २१

सत्वं बुद्धिम् ॥ ३१ ॥ अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥
कामया इच्छातः ॥ २ ॥ भोगेन देहेन ॥ ८ ॥ उपयोक्ष्यामि भक्षितुमिच्छामि । विधानं दैवम् ॥ १५ ॥ षष्ठे कालेऽष्टधाविभक्तस्याह्नो भागे ॥ १६ ॥ स्मार्तं स्मृतिविषयम् । पुराणं चिरकालीनमपि स्मरामीत्यर्थः ॥ २० ॥ विभागविदात्मानात्मविवेकवित् ॥ २१ ॥

गृहीतस्य त्वया राजन्प्राणिनोपि बलीयसः ।
सत्वभ्रंशोऽधिकस्यापि सर्वस्याशु भविष्यति ॥२२
इति चाप्यहमश्रौषं वचस्तेषां दयावताम् ।
मयि संजातहार्दानामथ तेऽन्तर्हिता द्विजाः ॥२३
सोहं परमदुष्कर्मा वसामि निरयेऽशुचौ ।
सर्पयोनिमिमां प्राप्य कालाकाङ्क्षी महाद्युते ॥२४
तमुवाच महाबाहुर्भीमसेनो भुजङ्गमम् ।
न ते कुप्ये महासर्प नात्मने द्विजसत्तम ॥ २५
यस्मादभावी भावी वा मनुष्यः सुखदुःखयोः ।
आगमे यदि वाऽपाये न तत्र ग्लपयेन्मनः ॥२६
दैवं पुरुषकारेण को वञ्चयितुमर्हति ।
दैवमेव परं मन्ये पौरुषं तु निरर्थकम् ॥ २७
पश्य दैवोपघाताद्धि भुजवीर्यव्यपाश्रयम् ।
इमामवस्थां संप्राप्तमनिमित्तमिहाद्य माम् ॥ २८
किंतु नाद्यानुशोचामि तथाऽऽत्मानं विनाशितम् ।
तथा तु विपिने न्यस्तान्भ्रातॄन्राज्यपरिच्युतान् ॥
हिमवांश्च सुदुर्गोऽयं यक्षराक्षससंकुलः ।
मां समुद्वीक्षमाणास्ते प्रपतिष्यन्ति विह्वलाः ॥३०
विनष्टमथ मां श्रुत्वा भविष्यन्ति निरुद्यमाः ।
धर्मशीला मया ते हि बाध्यन्ते राज्यगृद्धिना ३१
अथवा नार्जुनो धीमान्विषादमुपयास्यति ।
सर्वास्त्रविदनाधृष्यो देवगन्धर्वराक्षसैः ॥ ३२
समर्थः स महाबाहुरेकाह्ना सुमहाबलः ।
देवराजमपि स्थानात्प्रच्यावयितुमञ्जसा ॥ ३३
किं पुनर्धृतराष्ट्रस्य पुत्रं दुर्द्यूतदेविनम् ।
विद्विष्टं सर्वलोकस्य दम्भमोहपरायणम् ॥ ३४
मातरं चैव शोचामि कृपणां पुत्रगृद्धिनीम् ।
याऽस्माकं नित्यमाशास्ते महत्त्वमधिकं परैः ॥ ३५
तस्याः कथं त्वनाथाया मद्विनाशाद्भुजङ्गम ।
सफलास्ते भविष्यन्ति मयि सर्वे मनोरथाः ॥ ३६
नकुलः सहदेवश्च यमौ च गुरुवर्तिनौ ।
मद्बाहुबलसंगुप्तौ नित्यं पुरुषमानिनौ ॥ ३७
भविष्यतो निरुत्साहौ भ्रष्टवीर्यपराक्रमौ ।
मद्विनाशात्परिद्यूनाविति मे वर्तते मतिः ॥ ३८
एवंविधं बहु तदा विललाप वृकोदरः ।
भुजङ्गभोगसंरुद्धो नाशकच्च विचेष्टितुम् ॥ ३९
युधिष्ठिरस्तु कौन्तेयो बभूवास्वस्थचेतनः ।
अनिष्टदर्शनान्घोरानुत्पातान्परिचिन्तयन् ॥ ४०
दारुणं ह्यशिवं नादं शिवा दक्षिणतः स्थिता ।
दीप्तायां दिशि वित्रस्ता रौति तस्याश्रमस्य ह ४१
एकपक्षाक्षिचरणा वर्तिका घोरदर्शना ।
रक्तं वमन्ती ददृशे प्रत्यादित्यमभासुरा ॥ ४२
प्रववौ चानिलो रूक्षश्चण्डः शर्करकर्षणः ।
अपसव्यानि सर्वाणि मृगपक्षिरुतानि च ॥ ४३
पृष्ठतो वायसः कृष्णो याहियाहीति वाशति ।
मुहुर्मुहुः स्फुरति च दक्षिणोऽस्य भुजस्तथा ॥४४
हृदयं चरणश्चापि वामोऽस्य परितप्यति ।
सव्यस्याक्ष्णो विकारश्चाप्यनिष्टः समपद्यत ॥ ४५
धर्मराजोपि मेधावी शङ्कमानो महद्भयम् ।
द्रौपदीं परिपप्रच्छ क्व भीम इति भारत ॥ ४६
शशंस तस्मै पाञ्चाली चिरयातं वृकोदरम् ।
स प्रतस्थे महाबाहुर्धौम्येन सहितो नृपः ॥ ४७
द्रौपद्या रक्षणं कार्यमित्युवाच धनंजयम् ।
नकुलं सहदेवं च व्यादिदेश द्विजान्प्रति ॥ ४८
स तस्य पदमुन्नीय तस्मादेवाश्रमात्प्रभुः ।
मृगयामास कौन्तेयो भीमसेनं महावने ॥ ४९
स प्राचीं दिशमास्थाय महतो गजयूथपान् ।
ददर्श पृथिवीं चिह्नैर्भीमस्य परिचिह्निताम् ॥ ५०
ततो मृगसहस्राणि मृगेन्द्राणां शतानि च ।
पतितानि वने दृष्ट्वा मार्गं तस्याविशन्नृपः ॥ ५१
धावतस्तस्य वीरस्य मृगार्थं वातरंहसः ।
ऊरुवातविनिर्भग्नान्द्रुमान्व्यावर्जितान्पथि ॥ ५२
स गत्वा तैस्तदा चिह्नैर्ददर्श गिरिगह्वरे ।

कदाचिदभावी सामर्थ्यहीनः कदाचित् भावी सामर्थ्यवान् अवश्यं भवति ॥ २६ ॥ परुषोक्तिभिरिति शेषः ॥ ३१ ॥ वर्तिका पक्षिविशेषः ॥ ४२ ॥ दक्षिणो भुजः स्फुरतीति भविष्यतोऽनिष्टप्रशमनस्य लिङ्गम् ॥ ४४ ॥ विकारः स्फुरणम् ॥ ४५ ॥ यूथपान्पतितान्ददर्शेत्यन्वयः ॥ ५० ॥

[रूक्षमारुतभूयिष्ठे निष्पत्रद्रुमसंकुले ॥ ५३
अश्मस्थाणुक्षुपाकीर्णे सुदुर्गे विषमोत्कटे ।]
ईरिणे निर्जले देशे कण्टकिद्रुमसंकुले ।
गृहीतं भुजगेन्द्रेण निश्चेष्टमनुजं तदा ॥ ५४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि आजगरपर्वणि एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

## द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥

युधिष्ठिराजगरयोः संवादः ॥ १ ॥

वैशंपायन उवाच ।
युधिष्ठिरस्तमासाद्य सर्पभोगेन वेष्टितम् ।
दयितं भ्रातरं धीमानिदं वचनमब्रवीत् ॥ १
कुन्तीमातः कथमिमामापदं त्वमवाप्तवान् ।
कश्चायं पर्वताभोगप्रतिमः पन्नगोत्तमः ॥ २
स धर्मराजमालक्ष्य भ्राता भ्रातरमग्रजम् ।
कथयामास तत्सर्वं ग्रहणादिविचेष्टितम् ॥ ३
[अयमार्य महासत्त्वो भक्षार्थं मां गृहीतवान् ।
नहुषो नाम राजर्षिः प्राणवानिव संस्थितः ॥ ४
युधिष्ठिर उवाच ।
मुच्यतामयमायुष्मन्भ्राता मेऽमितविक्रमः ।
वयमाहारमन्यं ते दास्यामः क्षुन्निवारणम् ॥ ५
सर्प उवाच ।
आहारो राजपुत्रोऽयं मया प्राप्तो मुखागतः ।
गम्यतां नेह स्थातव्यं श्वो भवानपि मे भवेत् ॥६
व्रतमेतन्महाबाहो विषयं मम यो व्रजेत् ।
स मे भक्ष्यो भवेत्तात त्वं चापि विषये मम ॥ ७
चिरेणाद्य मयाऽऽहारः प्राप्तोऽयमनुजस्तव ।
नाहमेनं विमोक्ष्यामि न चान्यमभिकाङ्क्षये ॥] ८
युधिष्ठिर उवाच ।
देवो वा यदि वा दैत्य उरगो वा भवान्यदि ।
सत्यं सर्प वचो ब्रूहि पृच्छति त्वां युधिष्ठिरः ॥९
किमर्थं च त्वया ग्रस्तो भीमसेनो भुजंगम ।
किमाहृत्य विदित्वा वा प्रीतिस्ते स्याद्भुजंगम ।
किमाहारं प्रयच्छामि कथं मुञ्चेद्भवानिमम् ॥ १०
सर्प उवाच ।
नहुषो नाम राजाऽहमासं पूर्वस्तवानघ ।
प्रथितः पञ्चमः सोमादायोः पुत्रो नराधिप ॥११
क्रतुभिस्तपसा चैव स्वाध्यायेन दमेन च ।
त्रैलोक्यैश्वर्यमव्यग्रं प्राप्तोऽहं विक्रमेण च ॥ १२
तदैश्वर्यं समासाद्य दर्पो मामगमत्तदा ।
सहस्रं हि द्विजातीनामुवाह शिबिकां मम ॥ १३
ऐश्वर्यमदमत्तोऽहमवमत्य ततो द्विजान् ।
इमामगस्त्येन दशामानीत इति मे स्मृतिः ॥१४
न तु मामजहात्प्रज्ञा यावदन्वेति पाण्डवः ।
तस्यैवानुग्रहाद्राजन्नगस्त्यस्य महात्मनः ॥ १५
षष्ठे काले मयाऽऽहारः प्राप्तोऽयमनुजस्तव ।
नाहमेनं विमोक्ष्यामि न चान्यदपि कामये ॥१६
प्रश्नानुचारितानद्य व्याहरिष्यसि चेन्मम ।
अथ पश्चाद्विमोक्ष्यामि भ्रातरं ते वृकोदरम् ॥१७
युधिष्ठिर उवाच ।
ब्रूहि सर्प यथाकामं प्रतिवक्ष्यामि ते वचः ।
अपि चेच्छक्नुयां प्रीतिमाहर्तुं ते भुजङ्गम ॥ १८
वेद्यं च ब्राह्मणेनेह तद्भवान्वेत्ति केवलम् ।
सर्पराज ततः श्रुत्वा प्रतिवक्ष्यामि ते वचः ॥१९
सर्प उवाच ।
ब्राह्मणः को भवेद्राजन्वेद्यं किंच युधिष्ठिर ।
ब्रवीह्यतिमतिं त्वां हि वाक्यैरनुमिनोमि ते ॥ २०
युधिष्ठिर उवाच ।
सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा ।
दृश्यन्ते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः २१

ईरिणे ऊषरे। क्षुपाः ह्रस्ववृक्षाः ॥ ५४ ॥ एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

प्राणवान्वायुभक्षः सर्पइव नतु सर्पः ॥ ४ ॥

वेद्यं सर्प परं ब्रह्म निर्दुःखमसुखं च यत् ।
यत्र गत्वा न शोचन्ति भवतः किं विवक्षितं २२
सर्प उवाच ।
चातुर्वर्ण्यं प्रमाणं च सत्यं च ब्रह्म चैव हि ।
शूद्रेष्वपि च सत्यं च दानमक्रोध एव च ।
आनृशंस्यमहिंसा च घृणा चैव युधिष्ठिर ॥ २३
वेद्यं यच्चात्र निर्दुःखमसुखं च नराधिप ।
ताभ्यां हीनं पदं चान्यन्न तदस्तीति लक्षये॥२४
युधिष्ठिर उवाच ।
शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः २५
यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः ।
तत्रैतन्न भवेत्सर्प तं शूद्रमिति निर्दिशेत् ॥ २६
यत्पुनर्भवता प्रोक्तं न वेद्यं विद्यतेति च ।
ताभ्यां हीनमतोऽन्यत्र पदं नास्तीति चेदपि २७
एवमेतन्मतं सर्प ताभ्यां हीनं तु विद्यते ।
यथा शीतोष्णयोर्मध्ये भवेन्नोष्णं न शीतता २८
एवं वै सुखदुःखाभ्यां हीनमस्ति पदं क्वचित् ।
एषा मम मतिः सर्प यथा वा मन्यते भवान्॥ २९
सर्प उवाच ।
यदि ते वृत्ततो राजन्ब्राह्मणः प्रसमीक्षितः ।
वृथा जातिस्तदायुष्मन्कृतिर्यावन्न विद्यते ॥ ३०
युधिष्ठिर उवाच ।
जातिरत्र महासर्प मनुष्यत्वे महामते ।
संकरात्सर्ववर्णानां दुष्परीक्ष्येति मे मतिः ॥ ३१
सर्वे सर्वास्वपत्यानि जनयन्ति यदा नराः ।
वाङ्मैथुनमथो जन्म मरणं च समं नृणाम्॥३२
इदमार्षं प्रमाणं च ये यजामह इत्यपि ।
तस्माच्छीलं प्रधानेष्टं विदुर्ये तत्त्वदर्शिनः ॥ ३३
प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ।
'तथोपनयनं प्रोक्तं द्विजातीनां यथाक्रमम् ।'
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते॥
वृत्त्या शूद्रसमो ह्येष यावद्वेदेन जायते ।
तस्मिन्नेवं मतिद्वैधे मनुः स्वायंभुवोऽब्रवीत्॥ ३५
कृतकृत्याः सर्ववर्णा यदि वृत्तं न पश्यति ।
संकरस्त्वत्र नागेन्द्र बलवान्प्रसमीक्षितः ॥ ३६
यत्रेदानीं महासर्प संस्कृतं वृत्तमिष्यते ।
तं ब्राह्मणमहं पूर्वमुक्तवान्भुजगोत्तम ॥ ३७
सर्प उवाच ।
श्रुतं विदितवेद्यस्य तव वाक्यं युधिष्ठिर ।
भक्षयेयमहं कस्माद्भ्रातरं ते वृकोदरम् ॥ ३८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि आजगरपर्वणि द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥

## त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

स्वप्रश्नस्योत्तरदानतुष्टेनाजगररूपिणा नहुषेण युधिष्ठिरंप्रति स्वस्याजगरभावसंभवहेतुकथनपूर्वकं भीमं विमुच्य पुनः स्वर्गं प्रति गमनम् ॥ १ ॥

युधिष्ठिर उवाच ।
भवानेतादृशो लोके वेदवेदाङ्गपारगः ।
ब्रूहि किं कुर्वतः कर्म भवेद्गतिरनुत्तमा ॥ १
सर्प उवाच ।
पात्रे दत्त्वा प्रियाण्युक्त्वा सत्यमुक्त्वा च भारत ।
अहिंसानिरतः स्वर्गं गच्छेदिति मतिर्मम ॥ २
युधिष्ठिर उवाच ।
दानाद्वा सर्प सत्याद्वा किमतो गुरु दृश्यते ।
अहिंसाप्रिययोश्चैव गुरुलाघवमुच्यताम् ॥ ३
सर्प उवाच ।

ताभ्यां हीनं न विद्यते इति झ. पाठः ॥ २८ ॥ हीनं नास्ति पदं क्वचित् इति झ. पाठः ॥ २९ ॥ प्रधानं च तदिष्टं चेति कर्मधारयः ॥ ३३ ॥ नाभिवर्धनान्नालच्छेदनात् ॥ ३४ ॥ यदि वृत्तं न विद्यते इति झ. पाठः । यदि वृत्तं न नश्यति इति ख. पाठः । यदि वृत्तं न दृष्यते इति ध. पाठः ॥ ३६ ॥ द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥

दानं च सत्यं तत्त्वं वा अहिंसा प्रियमेव च ।
एषां कार्यगरीयस्त्वाद्दृश्यते गुरुलाघवम् ॥ ४
क्वचिद्दानप्रयोगाद्धि सत्यमेव विशिष्यते ।
सत्यवाक्याच्च राजेन्द्र क्वचिद्दानं विशिष्यते ॥ ५
एवमेव महेष्वास प्रियवाक्यान्महीपते ।
अहिंसा दृश्यते गुर्वी ततश्च प्रियमिष्यते ॥ ६
एवमेतद्भवेद्राजन्कार्यापेक्षमनन्तरम् ।
यदभिप्रेतमन्यत्ते ब्रूहि यावद्ब्रवीम्यहम् ॥ ७
युधिष्ठिर उवाच ।
कथं स्वर्गे गतिः सर्प कर्मणां च फलं ध्रुवम् ।
अशरीरस्य दृश्येत प्रब्रूहि विषयांश्च मे ॥ ८
सर्प उवाच ।
तिस्रो वै गतयो राजन्परिदिष्टाः स्वकर्मभिः ।
मानुषं स्वर्गवासश्च तिर्यग्योनिश्च तत्त्रिधा ॥ ९
तत्र वै मानुषाल्लोकाद्दानादिभिरनादिभिः ।
अहिंसार्थसमायुक्तैः कारणैः स्वर्गमश्नुते ॥ १०
विपरीतैश्च राजेन्द्र कारणैर्मानुषो भवेत् ।
तिर्यग्योनिस्तथा तात विशेषश्चात्र वक्ष्यते ॥ ११
कामक्रोधसमायुक्तो हिंसालोभसमन्वितः ।
मनुष्यत्वात्परिभ्रष्टस्तिर्यग्योनौ प्रसूयते ॥ १२
तिर्यग्योन्याः पृथग्भावो मनुष्यार्थे विधीयते ।
गवादिभ्यस्तथाऽश्वेभ्यो देवत्वमपि दृश्यते ॥ १३
सोयमेता गतीस्तात जन्तुश्चरति कार्यवान् ।
नित्ये महति चात्मानमवस्थाप्य च वै नृप ॥ १४
जातो जातश्च बलवान्भुङ्क्ते नाम्नाऽथ देहवान् ।
फलार्थस्तात निष्पृक्तः प्रजालक्षणभावनः ॥ १५
युधिष्ठिर उवाच ।
शब्दे स्पर्शे च रूपे च तथैव रसगन्धयोः ।
तस्याधिष्ठानमव्यग्रो ब्रूहि सर्प यथातथम् ॥ १६
किं न गृह्णासि विषयान्युगपत्त्वं महामते ।
एतावदुच्यतां चोक्तं सर्वं पन्नगसत्तम ॥ १७
सर्प उवाच ।
तदात्मद्रव्यमायुष्मन्देहसंश्रयणान्वितम् ।
करणाधिष्ठितं भोगानुपभुङ्क्ते यथाविधि ॥ १८
ज्ञानं चैवात्र बुद्धिश्च मनश्च भरतर्षभ ।
तस्य भोगाधिकरणे करणानि निबोध मे ॥ १९
मनसा तात पर्येति क्रमशो विषयानिमान् ।
विषयायतनत्वेन भूतात्मा क्षेत्रविष्ठितः ॥ २०
तत्र चापि नरव्याघ्र मनो जन्तोर्विधीयते ।
तस्माद्युगपदत्रास्य ग्रहणं नोपपद्यते ॥ २१
स आत्मा पुरुषव्याघ्र भ्रुवोरन्तरमाश्रितः ।
बुद्धिं द्रव्येषु सृजति विविधेषु परावराम् ॥ २२
बुद्धेरुत्तरकालं च वेदना दृश्यते बुधैः ।
एष वै राजशार्दूल विधिः क्षेत्रज्ञभावनः ॥ २३
युधिष्ठिर उवाच ।
मनसश्चापि बुद्धेश्च ब्रूहि मे लक्षणं परम् ।
एतदध्यात्मविदुषां परं कार्यं विधीयते ॥ २४
सर्प उवाच ।
बुद्धिरात्मानुगाऽतीव उत्पातेन विधीयते ।
तदाश्रिता हि सा ज्ञेया बुद्धिस्तस्यैषिणी भवेत् २५
बुद्धिरुत्पद्यते कार्यान्मनस्तूत्पन्नमेव हि ।
बुद्धेर्गुणविधानेन मनस्तद्गुणवद्भवेत् ॥ २६
एतद्विशेषणं तात मनोबुद्ध्योर्मयेरितम् ।
त्वमप्यत्राभिसंबुद्धः कथं वा मन्यसे स्वयम् ॥२७
युधिष्ठिर उवाच ।
अहो बुद्धिमतांश्रेष्ठ शुभा बुद्धिरियं तव ।
विदितं वेदितव्यं ते कस्मान्नहुष पृच्छसि ॥ २८
सर्वज्ञं त्वां कथं मोह आविशत्स्वर्गवासिनम् ।
एवमद्भुतकर्माणमिति मे संशयो महान् ॥ २९
सर्प उवाच ।
सुप्रज्ञमपि चेच्छूरमृद्धिर्मोहयते नरम् ।
वर्तमानः सुखे सर्वो नावैतीति मतिर्मम ॥ ३०
सोहमैश्वर्यमोहेन मदाविष्टो युधिष्ठिर ।
पतितः प्रतिसंबुद्धस्त्वां तु संबोधयाम्यहम् ॥ ३१
कृतं कार्यं महाराज त्वया मम परंतप ।
क्षीणः शापः सुकृच्छ्रो मे त्वया संभाष्य साधुना ॥
अहं हि दिवि दिव्येन विमानेन चरन्पुरा ।

गुरुलाघवं गौरवं लाघवं चेत्यर्थः ॥ ४ ॥

अभिमानेन मत्तः सन्कंचिन्नान्यमचिन्तयम् ॥३३
ब्रह्मर्षिदेवगन्धर्वयक्षराक्षसपन्नगाः ।
वरं मम प्रयच्छन्ति सर्वे त्रैलोक्यवासिनः ॥ ३४
चक्षुषा यं प्रपश्यामि प्राणिनं पृथिवीपते ।
तस्य तेजो हराम्याशु तद्धि दृष्टेर्बलं मम ॥ ३५
ब्रह्मर्षीणां सहस्रं हि उवाह शिबिकां मम ।
स मामपनयो राजन्भ्रंशयामास वै श्रियः ॥ ३६
तत्र ह्यगस्त्यः पादेन वहन्स्पृष्टो महामुनिः ।
अगस्त्येन ततोऽस्म्युक्तो ध्वंस सर्पेति वै रुषा ॥३७
ततस्तस्माद्विमानाग्र्यात्प्रच्युतश्च्युतलक्षणः ।
प्रपतन्बुबुधेऽऽत्मानं व्यालीभूतमधोमुखम् ॥ ३८
अयाचं तमहं विप्रं शापस्यान्तो भवेदिति ।
प्रमादात्संप्रमूढस्य भगवन्क्षन्तुमर्हसि ॥ ३९
ततः स मामुवाचेदं प्रपतन्तं कृपान्वितः ।
युधिष्ठिरो धर्मराजः शापात्त्वां मोक्षयिष्यति ॥४०
अभिमानस्य वै तस्य बलस्य च नराधिप ।
फले क्षीणे महाराज फलं पुण्यमवाप्स्यसि ॥ ४१
ततो मे विस्मयो जातस्तदृष्ट्वा तपसो बलम् ।
ब्रह्म च ब्राह्मणत्वं च येन त्वाऽहमचूचुदम् ॥४२
सत्यं दमस्तपो योगमहिंसा ज्ञाननित्यता ।
साधकानि सतां पुंसां न जातिर्न कुलं नृप ॥४३
अरिष्ट एष ते भ्राता मुक्तो भीमो महाभुज ।
स्वस्ति तेऽस्तु महाराज गमिष्यामि दिवं पुनः ॥४४
'स चायं पुरुषव्याघ्र कालः पुण्य उपागतः ।
तदस्मात्कारणात्पार्थ कार्यं तन्मे महत्कृतम् ॥'४५
वैशंपायन उवाच ।
'ततस्तस्मिन्मुहूर्ते तु विमानं कामगामि वै ।
अवपातेन महता तत्रावाप तदुत्तमम् ॥' ४६
इत्युक्त्वाऽऽजगरं देहं मुक्त्वा स नहुषो नृपः ।
दिव्यं वपुः समास्थाय गतस्त्रिदिवमेव ह ॥ ४७
युधिष्ठिरोपि धर्मात्मा भ्रात्रा भीमेन संगतः ।
धौम्येन सहितः श्रीमानाश्रमं पुनरागमत् ॥ ४८
ततो द्विजेभ्यः सर्वेभ्यः समेतेभ्यो यथातथम् ।
कथयामास तत्सर्वं धर्मराजो युधिष्ठिरः ॥ ४९
तच्छ्रुत्वा ते द्विजाः सर्वे भ्रातरश्चास्य ते त्रयः ।
आसन्सुव्रीडिता राजन्द्रौपदी च यशस्विनी ॥५०
ते तु सर्वे द्विजश्रेष्ठाः पाण्डवानां हितेप्सया ।
मैवमित्यब्रुवन्भीमं गर्हयन्तोऽस्य साहसम् ॥ ५१
पाण्डवास्तु भयान्मुक्तं प्रेक्ष्य भीमं महाबलम् ।
हर्षमाहारयांचक्रुर्विजह्रुश्च मुदा युताः ॥ ५२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि आजगरपर्वणि त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

समाप्तं चेदमाजगरं पर्व ॥ १० ॥

---

## (अथ मार्कण्डेयसमास्यापर्व* ॥ ११ ॥)

### चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

वर्षाशरद्वर्णनम् ॥ १ ॥ युधिष्ठिरादिभिर्द्वैतवनात्पुनः काम्यकवनप्रवेशः ॥ २ ॥

वैशंपायन उवाच ।
निदाघान्तकरः कालः सर्वभूतसुखावहः ।
तत्रैव वसतां तेषां प्रावृट् समभिपद्यत ॥ १
छादयन्तो महाघोषाः खं दिशश्च बलाहकाः ।

करान्मम प्रयच्छन्तीति झ. पाठः ॥ ३४ ॥ अभिमानस्य घोरस्य पापस्य च इति झ. पाठः ॥ ४१ ॥

त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

* मार्कण्डेयेन समास्या सहासनमित्यर्थः । आस उपवेशनेऽस्माण्ण्यत् ।

प्रववर्षुर्दिवारात्रमसिताः सततं तदा ॥ २
तपात्ययनिकेताश्च शतशोऽथ सहस्रशः ।
अपेतार्कप्रभाजालाः सविद्युन्मण्डलप्रभाः ॥ ३
विरूढशष्पा धरणी मत्तदंशसरीसृपा ।
बभूव पयसा सिक्ता शान्तधूमरजोगणा ॥ ४
न स्म प्रज्ञायते किंचिदम्भसा समवस्तृते ।
समं वा विषमं वाऽपि नद्यो वा स्थावराणि वा ५
क्षुब्धतोया महावेगाः श्वसमाना इवाशुगाः ।
सिन्धवः शोभयांचक्रुः काननानि तपात्यये ॥ ६
नदतां काननान्तेषु श्रूयन्ते विविधाः स्वनाः ।
वृष्टिभिस्ताड्यमानानां वराहमृगपक्षिणाम् ॥ ७
स्तोककाः शिखिनश्चैव पुंस्कोकिलगणैः सह ।
मत्ताः परिपतन्ति स्म दर्दुराश्चैव दर्पिताः ॥ ८
तदा बहुविधाकारा प्रावृण्मेघानुनादिता ।
अभ्यतीता शिवा तेषां चरतां मरुधन्वसु ॥ ९
क्रौञ्चहंससमाकीर्णा शरत्प्रमुदिताऽभवत् ।
रूढकक्षवनप्रस्था प्रसन्नजलनिम्नगा ॥ १०
विमलाकाशनक्षत्रा शरत्तेषां शिवाऽभवत् ।
मृगद्विजसमाकीर्णा पाण्डवानां महात्मनाम् ॥ ११
दृश्यन्ते शान्तरजसः क्षपाजलदशीतलाः ।
ग्रहनक्षत्रसङ्घैश्च सोमेन च विराजिताः ॥ १२
कुमुदैः पुण्डरीकैश्च शीतवारिधराः शिवाः ।
नदीः पुष्करिणीश्चैव ददृशुः समलंकृताः ॥ १३
आकाशसंकाशजलां तीरवानीरसंकुलाम् ।
बभूव चरतां हर्षः पुण्यतीर्थां सरस्वतीम् ॥ १४
ते वै मुमुदिरे वीराः प्रसन्नसलिलां शिवाम् ।
पश्यन्तो दृढधन्वानः परिपूर्णां सरस्वतीम् ॥ १५
तेषां पुण्यतमा रात्रिः पर्वसन्धौ स्म शारदी ।
तत्रैव वसतामासीत्कार्तिकी जनमेजय ॥ १६
पुण्यकृद्भिर्महासत्वैस्तापसैः सह पाण्डवाः ।
तत्सर्वं भरतश्रेष्ठ समूहुर्योगमुत्तमम् ॥ १७
तमिस्राभ्युदये तस्मिन्धौम्येन सह पाण्डवाः ।
सूतैः पौरोगवैः साकं काम्यकं प्रययुर्वनम् ॥ १८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

---

## पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥

पाण्डवानां पुनः काम्यकागमनं श्रुतवता कृष्णेन सत्यभामया सह तत्रागमनम् ॥ १ ॥ तथा नारदमार्कण्डेययोरागमनं च ॥ २ ॥ मार्कण्डेयेन श्रीकृष्णचोदनया पुराणकथाकथनारम्भः ॥ ३ ॥

वैशंपायन उवाच ।
काम्यकं प्राप्य कौरव्य युधिष्ठिरपुरोगमाः ।
कृतातिथ्या मुनिगणैर्निषेदुः सह कृष्णया ॥ १
ततस्तान्परिविश्वस्तान्वसतः पाण्डुनन्दनान् ।
ब्राह्मणा बहवस्तत्र समन्तात्पर्यवारयन् ॥ २
अथाब्रवीद्द्विजः कश्चिदर्जुनस्य प्रियः सखा ।
स एष्यति महाबाहुर्वशी शौरिरुदारधीः ॥ ३
विदिता हि हरेर्यूयमिहायाताः कुरूद्वहाः ।
सदा हि दर्शनाकाङ्क्षी श्रेयोन्वेषी च वो हरिः ॥ ४
बहुवत्सरजीवी च मार्कण्डेयो महातपाः ।
स्वाध्यायतपसा युक्तः क्षिप्रं युष्मान्समेष्यति ॥ ५
तथैव ब्रुवतस्तस्य प्रत्यदृश्यत केशवः ।
शैब्यसुग्रीवयुक्तेन रथेन रथिनांवरः ॥ ६
मघवानिव पौलोम्या सहितः सत्यभामया ।

---

असिताः कृष्णवर्णाः ॥ २ ॥ तपात्यये वर्षासु निकेता इव सण्डपीभूता इत्यर्थः ॥ ३ ॥ समवस्तृते आच्छादिते । स्थावराणि भूतलादीनि ॥ ५ ॥ आशुगाः तीव्रवेगाः । सिंधवः नद्यः ॥ ६ ॥ स्तोककाश्चातकाः । दुर्दराः मण्डूकाः ॥ ८ ॥ मरुधन्वसु गिरेः शुष्कस्थानेषु ॥ ९ ॥ रूढकक्षाणि बहुतृणानि वनानि प्रस्थशब्दोदितानि सानूनि च यस्यां सा तथा ॥ १० ॥ कार्तिकी कृत्तिकायुक्ता पौर्णमासी ॥ १६ ॥ योगं युज्यते रथादाविति व्युत्पत्त्या वाहनादिकं समूहुः आरोपितभारं कृतवन्तः ॥ १७ ॥ चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

उपायाद्देवकीपुत्रो दिदृक्षुः कुरुसत्तमान् ॥ ७
अवतीर्य रथात्कृष्णो धर्मराजं यथाविधि ।
ववन्दे मुदितो धीमान्भीमं च बलिनां वरम् ॥८
पूजयामास धौम्यं च यमाभ्यामभिवादितः ।
परिष्वज्य महाभागां द्रौपदीं पर्यसान्त्वयत् ॥ ९
स दृष्ट्वा फल्गुनं वीरं चिरस्य प्रियमागतम् ।
पर्यष्वजत दाशार्हः पुनः पुनररिंदमः ॥ १०
तथैव सत्यभामाऽपि द्रौपदीं परिषस्वजे ।
पाण्डवानां प्रियां भार्यां कृष्णस्य महिषी प्रिया ॥
ततस्ते पाण्डवाः सर्वे सभार्याः सपुरोहिताः ।
आनर्चुः पुण्डरीकाक्षं परिवव्रुश्च सर्वशः ॥ १२

कृष्णस्तु पार्थेन समेत्य विद्वान्
धनंजयेनासुरमर्दनेन ।
बभौ यथा भूतपतिर्महात्मा
समेत्य साक्षाद्भगवान्गुहेन ॥ १३

ततः समस्तानि किरीटमाली
वनेषु वृत्तानि गदाग्रजाय ।
उक्त्वा यथावत्पुनरन्वपृच्छ-
त्तस्मिन्सुभद्रां च तथाऽभिमन्युम् ॥ १४

धौम्यं च कृष्णां च युधिष्ठिरं च
यमौ च भीमं च दशार्हसिंहः ।
उवाच दिष्ट्या भवतां शिवेन
प्राप्तः किरीटी मुदितः कृतास्त्रः ॥ १५

स पूजयित्वा मधुहा यथाव-
त्पार्थांश्च कृष्णां च पुरोहितं च ।
उवाच राजानमभिप्रशंसन्
युधिष्ठिरं तेन सहोपविश्य ॥ १६

धर्मः परः पाण्डव राज्यलाभा-
त्तस्यादिमाहुस्तप एव राजन् ।
सत्यार्जवाभ्यां चरता स्वधर्मं
जितस्त्वयाऽयं च परश्च लोकः ॥ १७

अधीतमग्रे चरता व्रतानि
सम्यग्धनुर्वेदमवाप्य कृत्स्नम् ।
क्षात्रेण धर्मेण वसूनि लब्ध्वा
सर्वे ह्यवाप्ताः क्रतवः पुराणाः ॥ १८

न ग्राम्यधर्मेषु रतिस्तवास्ति
कामान्न किंचित्कुरुषे नरेन्द्र ।
न चार्थलोभात्प्रजहासि धर्मं
तस्मात्प्रभावादसि धर्मराजः ॥ १९

दानं च सत्यं च तपश्च राजन्
क्षमा च शान्तिश्च दमो धृतिश्च ।
अवाप्य राष्ट्राणि वसूनि भोगा-
नेषा परा पार्थ सदा रतिस्ते ॥ २०

हृतं च देशं कुरुजाङ्गलानां
कृष्णां सभायामवशां च पश्यन् ।
अपेतधर्मव्यवहारवृत्तं
सहेत तत्पाण्डव कस्त्वदन्यः ॥ २१

असंशयं सर्वसमृद्धकामः
क्षिप्रं प्रजाः पालयितासि सम्यक् ।
अद्यैव तन्निग्रहणं कुरूणां
यदि प्रतिज्ञा भवतः समाप्ता ॥ २२

प्रोवाच कृष्णामपि याज्ञसेनीं
दशार्हभर्ता सहितः सुहृद्भिः ।
दिष्ट्या समग्राऽसि धनंजयेन
समागतेत्येवमुवाच कृष्णः ॥ २३

कृष्णे धनुर्वेदरतिप्रधाना-
स्तवात्मजास्ते शिशवः सुशीलाः ।
सद्भिः सदैवाचरितं समाधिं
चरन्ति पुत्रास्तव याज्ञसेनि ॥ २४

राज्ये नियुक्तैश्च निमन्त्र्यमाणाः
पित्रा च कृष्णे तव सोदरैश्च ।
न यज्ञसेनस्य न मातुलानां
गृहेषु बाला रतिमाप्नुवन्ति ॥ २५

---

भूतपतिः रुद्रः । गुहेन कार्तिकेयेन ॥ १३ ॥ कोपो न कश्चित्परुषो नरेन्द्रेति ध. पाठः ॥ १९ ॥ एषा दानादिरूपा सदारतिः नित्यं प्रीतिविषयः ॥ २० ॥ राज्ये निविष्टः कुरुजांगलानां कृष्णां सभायां सभवानपश्यदिति ध. पाठः ॥ २१ ॥

आनर्तमेवाभिमुखाः शिवेन
गत्वा धनुर्वेदरतिप्रधानाः ।
तवात्मजा वृष्णिपुरं प्रविश्य
न दैवतेभ्यः स्पृहयन्ति कृष्णे ॥ २६

यथा त्वमेवार्हसि तेषु वृत्तं
प्रयोक्तुमार्या च यथैव कुन्ती ।
तेष्वप्रमादेन तथा करोति
तथैव भूयश्च तथा सुभद्रा ॥ २७

यथाऽनिरुद्धस्य यथाऽभिमन्यो-
र्यथा सुनीथस्य यथैव भानोः ।
तथा विनेता च गतिश्च कृष्णे
तवात्मजानामपि रौक्मिणेयः ॥ २८

गदासिचर्मग्रहणेषु शूरा-
नस्त्रेषु शिक्षासु रथाश्वयाने ।
सम्यग्विनेता विनयेदतन्द्री-
स्तांश्चाभिमन्युं च सदा कुमारान् ॥ २९

स चापि सम्यक्प्रणिधाय शिक्षां
शस्त्राणि चैषां विधिवत्प्रदाय ।
तवात्मजानां च तथाऽभिमन्योः
पराक्रमैस्तुष्यति रौक्मिणेयः ॥ ३०

यथा विहारं प्रसमीक्षमाणाः
प्रयान्ति पुत्रास्तव याज्ञसेनि ।
एकैकमेषामनुयान्ति तत्र
रथाश्च यानानि च दन्तिनश्च ॥ ३१

अथाब्रवीद्धर्मराजं तु कृष्णो
दशार्हयोधाः कुकुरान्धकाश्च ।
एते निदेशं तव पालयन्त-
स्तिष्ठन्तु यत्रेच्छसि तत्र राजन् ॥ ३२

आवर्ततां कार्मुकवेगवाता
हलायुधप्रग्रहणा मधूनाम् ।
सेना तवार्थेषु नरेन्द्र यत्ता
ससादिपत्त्यश्वरथा सनागा ॥ ३३

प्रस्थाप्यतां पाण्डव धार्तराष्ट्रः
सुयोधनः पापकृतां वरिष्ठः ।
स सानुबन्धः ससुहृद्गणश्च
भौमस्य सौभाधिपतेश्च मार्गम् ॥ ३४

कामं तथा तिष्ठ नरेन्द्र तस्मि-
न्यथा कृतस्ते समयः सभायाम् ।
दाशार्हयोधैस्तु हतारियोधं
प्रतीक्षतां नागपुरं प्रभग्नम् ॥ ३५

व्यपेतमन्युर्व्यपनीतपाप्मा
विहृत्य यत्रेच्छसि तत्र कामम् ।
ततः समृद्धिप्रभवं विशोकः
प्रपत्स्यसे नागपुरं सराष्ट्रम् ॥ ३६

ततस्तदाज्ञाय मतं महात्मा
यथावदुक्तं पुरुषोत्तमेन ।
प्रशस्य विप्रेक्ष्य च धर्मराजः
कृताञ्जलिः केशवमित्युवाच ॥ ३७

असंशयं केशव पाण्डवानां
भवान्गतिस्त्वच्छरणा हि पार्थाः ।
कालोदये तच्च ततश्च भूयः
कर्ता भवान्कर्म न संशयोस्ति ॥ ३८

यथाप्रतिज्ञं विहृतश्च कालः
सर्वाः समा द्वादश निर्जनेषु ।
अज्ञातचर्या विधिवत्समाप्य
भवद्गताः केशव पाण्डवेयाः ॥ ३९

एषैव बुद्धिर्जुषतां सदा त्वां
सत्ये स्थिताः केशव पाण्डवेयाः ।
सदानधर्माः सजलाः सदाराः
सबान्धवास्त्वच्छरणा हि पार्थाः ॥ ४०

वैशंपायन उवाच ।
तथा वदति वार्ष्णेये धर्मराजे च भारत ।
अथ पश्चात्तपोवृद्धो बहुवर्षसहस्रधृक् ।
प्रत्यदृश्यत धर्मात्मा मार्कण्डेयो महातपाः ॥ ४१

---

आनर्तं द्वारकादेशम् ॥ २६ ॥ विनेता शिक्षयिता रौक्मिणेयः प्रद्युम्नः ॥ २८ ॥ मधूनां माथुराणाम् । हलायुधः प्रग्रहणो नियन्ता यस्याः सा सेना । यत्ता सन्नद्धा ॥ ३३ ॥ भौमस्य नरकासुरस्य सौभाधिपतेः साल्वस्य । साल्वस्य सौभाधिपतेश्च मार्गमिति ख. पाठः ॥ ३४ ॥

अजरश्चामरश्चैव रूपौदार्यगुणान्वितः ।
व्यदृश्यत तथा युक्तो यथा स्यात्पञ्चविंशकः ॥ ४२
तमागतमृषिं वृद्धं बहुवर्षसहस्रिणम् ।
उपातिष्ठन्त ते सर्वे पाण्डवाः सहयादवाः ॥ ४३
तमर्चितं सुविश्वस्तमासीनमृषिसत्तमम् ।
ब्राह्मणानां मतेनाह पाण्डवानां च केशवः ॥ ४४
शुश्रूषवः पाण्डवास्ते ब्राह्मणाश्च समागताः ।
द्रौपदी सत्यभामा च तथाऽहं परमं वचः ॥ ४५
पुरावृत्ताः कथाः पुण्याः सदाचारान्सनातनान् ।
राज्ञां स्त्रीणामृषीणां च मार्कण्डेय प्रचक्ष्व नः ॥ ४६
वैशंपायन उवाच ।
तेषु तत्रोपविष्टेषु देवर्षिरपि नारदः ।
आजगाम विशुद्धात्मा पाण्डवानवलोककः ॥ ४७
तमप्यथ महात्मानं सर्वे ते पुरुषर्षभाः ।
पाद्यार्घ्याभ्यां यथान्यायमुपतस्थुर्मनीषिणः ॥ ४८
नारदस्त्वथ देवर्षिर्ज्ञात्वा तांस्तु कृतक्षणान् ।
मार्कण्डेयस्य वदतस्तां कथामन्वमोदत ॥ ४९
उवाच चैनं कालज्ञं स्मयन्निव सनारदः ।
ब्रह्मर्षे कथ्यतां यत्ते पाण्डवेषु विवक्षितम् ॥ ५०
एवमुक्तः प्रत्युवाच मार्कण्डेयो महातपाः ।
क्षणं कुरुध्वं विपुलमाख्यातव्यं भविष्यति ॥ ५१
एवमुक्ताः क्षणं चक्रुः पाण्डवाः सह तैर्द्विजैः ।
मध्यंदिने यथादित्यं प्रेक्षन्तस्ते महामुनिम् ॥ ५२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥

---

## षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

मार्कण्डेयेन युधिष्ठिरादीन्प्रति प्राणिनां सुकृतदुष्कृतफलभोगादिप्रकारनिरूपणम् ॥ १ ॥

वैशंपायन उवाच ।
तं विवक्षन्तमालक्ष्य कुरुराजो महामुनिम् ।
कथासंजननार्थाय चोदयामास पाण्डवः ॥ १
भवान्दैवतदैत्यानामृषीणां च महात्मनाम् ।
राजर्षीणां च सर्वेषां चरितज्ञः पुरातनः ॥ २
सेव्यश्चोपासितव्यश्च मतो नः काङ्क्षितश्चिरम् ।
अयं च देवकीपुत्रः प्राप्तोऽस्मानवलोककः ॥ ३
भ्रमत्येव हि मे बुद्धिर्दृष्ट्वाऽऽत्मानं सुखाच्च्युतम् ।
धार्तराष्ट्रांश्च दुर्वृत्तानृद्ध्यतः प्रेक्ष्य सर्वशः ॥ ४
कर्मणः पुरुषः कर्ता शुभस्याप्यशुभस्य वा ।
स्वफलं तदुपाश्नाति कथं कर्ता स्विदीश्वरः ॥ ५
अथवा सुखदुःखेषु नृणां ब्रह्मविदांवर ।
इह वा कृतमन्वेति परदेहेऽथवा पुनः ॥ ६
देही च देहं संत्यज्य मृग्यमाणः शुभाशुभैः ।
कथं संयुज्यते प्रेत्य इह वा द्विजसत्तम ॥ ७
ऐहलौकिकमेवैतदुताहो पारलौकिकम् ।
क्व वा कर्माणि तिष्ठन्ति जन्तोः प्रेतस्य भार्गव ॥ ८
मार्कण्डेय उवाच ।
त्वद्युक्तोऽयमनुप्रश्नो यथावद्वदतांवर ।
विदितं वेदितव्यं ते स्थित्यर्थं त्वं तु पृच्छसि ॥ ९
अत्र ते कथयिष्यामि तदिहैकमनाः शृणु ।
यथेहामुत्र च नरः सुखदुःखमुपाश्नुते ॥ १०
निर्मलानि शरीराणि विशुद्धानि शरीरिणाम् ।
ससर्ज धर्मतन्त्राणि पूर्वोत्पन्नः प्रजापतिः ॥ ११
अमोघफलसंकल्पाः सुव्रताः सत्यवादिनः ।
ब्रह्मभूता नराः पुण्याः पुराणाः कुरुसत्तम ॥ १२
सर्वे देवैः समायान्ति स्वच्छन्देन नभस्तलम् ।
ततश्च पुनरायान्ति सर्वे स्वच्छन्दचारिणः ॥ १३
स्वच्छन्दमरणाश्चासन्नराः स्वच्छन्दजीविनः ।
अल्पबाधा निरातङ्काः सिद्धार्था निरुपद्रवाः ॥ १४

---

पञ्चविंशकः वर्षैरिति शेषः ॥ ४२ ॥ अवलोककः अवलोकनार्थी ॥ ४७ ॥ पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥

ऋद्ध्यतः समृद्धियुतान् ॥ ४ ॥ स्थित्यर्थं लोकरक्षार्थम् । वेदितव्यं ते स्मृत्यर्थमनुपृच्छसीति ध. पाठः ॥ ९ ॥

द्रष्टारो देवसङ्घानामृषीणां च महात्मनाम् ।
प्रत्यक्षाः सर्वधर्माणां दान्ता विगतमत्सराः ॥ १५
आसन्वर्षसहस्राणि तथा पुत्रसहस्रिणः ।
ततः कालान्तरे तस्मिन्पृथिवीतलचारिणः ॥ १६
कामक्रोधाभिभूतास्ते मायाव्याजोपजीविनः ।
लोभमोहाभिभूताश्च त्यक्ता देवैस्ततो नराः ॥ १७
अशुभैः कर्मभिः पापास्तिर्यङ्निरयगामिनः ।
संसारेषु विचित्रेषु पच्यमानाः पुनः पुनः ॥ १८
मोघेष्टा मोघसंकल्पा मोघज्ञाना विचेतसः ।
'काङ्क्षिणः सर्वकामानां नास्तिका भिन्नसेतवः'१९
सर्वाभिशङ्किनश्चैव संवृत्ताः क्लेशदायिनः ।
अशुभैः कर्मभिश्चापि प्रायशः परिचिह्निताः ॥ २०
दौष्कुल्या व्याधिबहुला दुरात्मानोऽभितापिनः ।
भवन्त्यल्पायुषः पापा रौद्रकर्मफलोदयाः ।
नाथन्तः सर्वकामानां नास्तिका भिन्नचेतसः ॥२१
जन्तोः प्रेतस्य कौन्तेय गतिः स्वैरिह कर्मभिः ।
प्राज्ञस्य हीनबुद्धेश्च कर्मकोशः क्व तिष्ठति ॥ २२
क्वस्थस्तत्समुपाश्नाति सुकृतं यदि वेतरत् ।
इति ते दर्शनं यच्च तत्राप्यनुनयं शृणु ॥ २३
अयमादिशरीरेण देवसृष्टेन मानवः ।
शुभानामशुभानां च कुरुते संचयं महत् ॥ २४
आयुषोऽन्ते प्रहायेदं क्षीणप्रायं कलेबरम् ।
संभवत्येव युगपद्योनौ नास्त्यन्तराऽभवः ॥ २५
तत्रास्य स्वकृतं कर्म च्छायेवानुगतं सदा ।
फलत्यथ सुखार्हो वा दुःखार्हो वाऽथ जायते ॥२६
कृतान्तविधिसंयुक्तः स जन्तुर्लक्षणैः शुभैः ।
अशुभैर्वा निरादानो लक्ष्यते ज्ञानदृष्टिभिः ॥२७
एषा तावदबुद्धीनां गतिरुक्ता युधिष्ठिर ।
अतः परं ज्ञानवतां निबोध गतिमुत्तमाम् ॥ २८
मनुष्यास्तप्ततपसः सर्वागमपरायणाः ।
स्थिरव्रताः सत्यपरा गुरुशुश्रूषणे रताः ॥ २९
सुशीलाः शुक्लजातीयाः क्षान्ता दान्ताः सुतेजसः ।
शुचियोन्यन्तरगताः प्रायशः शुभलक्षणाः ॥ ३०
जितेन्द्रियत्वाद्वशिनः सत्कृत्यान्मन्दरागिणः ।
अल्पाबाधपरित्रासा भवन्ति निरुपद्रवाः ॥ ३१
च्यवन्तं जायमानं च गर्भस्थं चैव सर्वशः ।
स्वमात्मानं परं चैव बुध्यन्ते ज्ञानचक्षुषः ॥ ३२
ऋषयस्ते महात्मानः प्रत्यक्षागमबुद्धयः ।
कर्मभूमिमिमां प्राप्य पुनर्यान्ति सुरालयम् ।
'कृत्वा शुभानि कर्माणि ज्ञानेन भरतर्षभ ॥'३३
किंचिद्दैवाद्धठात्किंचित्किंचिदेव स्वकर्मभिः ।
प्राप्नुवन्ति नरा राजन्मा तेऽस्त्वन्या विचारणा ३४
इमामत्रोपमां चापि निबोध वदतांवर ।
मनुष्यलोके यच्छ्रेयः परं मन्ये युधिष्ठिर ॥ ३५
इहैवैकस्य नामुत्र अमुत्रैकस्य नो इह ।
इह चामुत्र चैकस्य नामुत्रैकस्य नो इह ॥ ३६

धनानि येषां विपुलानि सन्ति
नित्यं रमन्ते सुविभूषिताङ्गाः ।
तेषामयं शत्रुवरघ्नलोको
नासौ सदा ग्राम्यसुखे रतानाम् ॥ ३७
ये योगयुक्तास्तपसि प्रसक्ताः
स्वाध्यायशीला जरयन्ति देहान् ।
जितेन्द्रिया भूतहिते निविष्टा-
स्तेषामसौ नायमरिघ्नलोकः ॥ ३८
ये धर्ममेव प्रथमं चरन्ति
धर्मेण लब्ध्वा च धनानि काले ।
दारानवाप्य क्रतुभिर्यजन्ते
तेषामयं चैव परश्च लोकः ॥ ३९
ये नैव विद्यां न तपो न दानं
न चापि मूढाः प्रजने यतन्ते ।
न चापिगच्छन्ति शुभान्यभाग्या-
स्तेषामयं चैव परश्च नास्ति ॥ ४०

माया कूटकार्षापणादिः व्याजं दम्भः तदेवोपजीवन्ति नतु धर्मम् । ते मायाव्याजोपजीविनः ॥ १७ ॥ नाथन्तः प्रार्थयमानाः । कामानां कामान् ॥ २१ ॥ अनुनयं सिद्धान्तम् ॥ २३ ॥ शरीरेण मानवो विधिसंयुतः इति क. पाठः ॥ २४ ॥ जितेन्द्रियाः प्राणिवधे निवृत्ताः इति झ. पाठः ॥ ३८ ॥ प्रजने पुत्रोत्पादने ॥ ४० ॥ षडशीत्यधिकशततमोऽध्यायः ॥१८६॥

सर्वे भवन्तस्त्वतिवीर्यसत्वा
दिव्यौजसः संहननोपपन्नाः ।
लोकादमुष्मादवनिं प्रपन्नाः
स्वधीतविद्याः सुरकार्यहेतोः ॥ ४१

कृत्वैव कर्माणि महान्ति शूरा-
स्तपोदमाचारविहारशीलाः ।
देवानृषीन्प्रेतगतांश्च सर्वा-
न्संतर्पयित्वा विधिना परेण ॥ ४२

स्वर्गं परं पुण्यकृतां निवासं
क्रमेण संप्राप्स्यथ कर्मभिः स्वैः ।
माभूद्विशङ्का तव कौरवेन्द्र
दृष्ट्वाऽऽत्मनः क्लेशमिमं सुखार्थम् ॥ ४३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

---

## सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

मार्कण्डेयेन युधिष्ठिरादीन्प्रति मृतस्य पुनरुज्जीवनशक्त्यादिरूपब्राह्मणमाहात्म्यकथनम् ॥ १ ॥

वैशंपायन उवाच ।
मार्कण्डेयं महात्मानमूचुः पाण्डुसुतास्तदा ।
माहात्म्यं द्विजमुख्यानां श्रोतुमिच्छाम कथ्यताम् १
एवमुक्तः स भगवान्मार्कण्डेयो महातपाः ।
उवाच सुमहातेजाः सर्वशास्त्रविशारदः ॥ २
हेहयानां कुलकरो राजा परपुरंजयः ।
कुमारो रूपसंपन्नो मृगयां व्यचरद्बली ॥ ३
चरमाणस्तु सोऽरण्ये तृणवीरुत्समावृते ।
कृष्णाजिनोत्तरासङ्गं ददर्श मुनिमन्तिके ॥ ४
स तेन हिंसितोऽरण्ये मन्यमानेन वै मृगम् ।
व्यथितः कर्म तत्कृत्वा शोकोपहतचेतनः ॥ ५
जगाम हेहयानां वै सकाशं प्रथितात्मनाम् ।
राज्ञां राजीवनेत्रोसौ कुमारः पृथिवीपते ॥ ६
तेषां च तद्यथावृत्तं कथयामास वै तदा ।
'स कुमारो महीपालो हेहयानां महीभृताम् ॥'७
तं चापि हिंसितं तात मुनिं मूलफलाशिनम् ।
श्रुत्वा दृष्ट्वा च ते तत्र बभूवुर्दीनमानसाः ॥ ८
कस्यायमिति ते सर्वे मार्गमाणास्ततस्ततः ।
जग्मुश्चारिष्टनाम्नोऽथ तार्क्ष्यस्याश्रममञ्जसा ॥ ९
तेऽभिवाद्य महात्मानं तं मुनिं संशितव्रतम् ।
तस्थुः सर्वे स तु मुनिस्तेषां पूजामथाहरत् ॥ १०
ते तमूचुर्महात्मानं न वयं सत्क्रियां मुने ।
त्वत्तोऽर्हाः कर्मदोषेण ब्राह्मणो हिंसितो हि नः॥
तानब्रवीत्स विप्रर्षिः कथं वो ब्राह्मणो हतः ।
क्व चासौ ब्रूत सहिताः पश्यध्वं मे तपोबलम्१२
ते तु तत्सर्वमखिलमाख्यायास्मै यथातथम् ।
नापश्यंस्तमृषिं तत्र गतासुं ते समागताः ॥ १३
अन्वेषमाणाः सव्रीडाः सुस्रवद्गतमानसाः ।
तानब्रवीत्तत्र मुनिस्तार्क्ष्यः परपुरंजयः ॥ १४
स्यादयं ब्राह्मणः सोऽथ युष्माभिर्यो विनाशितः।
पुत्रो ह्ययं मम नृपास्तपोबलसमन्वितः ॥ १५
ते च दृष्ट्वैव तमृषिं विस्मयं परमं गताः ।
महदाश्चर्यमिति वै ते ब्रुवाणा महीपते ॥ १६
मृतो ह्ययमितो दृष्टः कथं जीवितमाप्तवान् ।
किमेतत्तपसो वीर्यं येनायं जीवितः पुनः ।
श्रोतुमिच्छामहे विप्र यदि श्रोतव्यमित्युत ॥ १७
स तानुवाच नास्माकं मृत्युः प्रभवते नृपाः ।
कारणं च प्रवक्ष्यामि हेतुयोगं समासतः ।
'मृत्युः प्रभवते येन नास्माकं नृपसत्तमाः ॥ १८
शुद्धाचारादनलसाः साध्योपासनतत्पराः ।
शुद्धान्नाः शुद्धसदना ब्रह्मचर्यव्रतान्विताः ॥'१९
सत्यमेवाभिजानीमो नानृते कुर्महे मनः ।
स्वधर्ममनुतिष्ठामस्तस्मान्मृत्युभयं न नः ॥ २०
यद्ब्राह्मणानां कुशलं तदेषां कथयामहे ।

---

उत्तरासङ्गः प्रावरणम् ॥ ४ ॥ जग्मुश्चारिष्टनेम्नोऽथ इति झ. पाठः । अरिष्टनेमिशब्द इकारान्तोऽप्यत्र मन्नन्तोऽपि ज्ञेयः ॥ ९ ॥ तार्क्ष्यः तृक्षस्य कश्यपस्यापत्यम् ॥ १४ ॥

तेषां हि चरितं ब्रूमस्तस्मान्मृत्युभयं न नः ॥ २१
अतिथीनन्नपानेन भृत्यानत्यशनेन च ।
संभोज्य शेषमश्नीमस्तस्मान्मृत्युभयं न नः ॥ २२
क्षान्ता दान्ताः क्षमाशीलास्तीर्थदानपरायणाः ।
पुण्यदेशनिवासाच्च तस्मान्मृत्युभयं न नः ।
तेजस्विदेशवासाच्च तस्मान्मृत्युभयं न नः ॥ २३
एतद्वै लेशमात्रं वः समाख्यातं विमत्सराः ।
गच्छध्वं सहिताः सर्वे न पापाद्भयमस्ति वः ॥ २४
एवमस्त्विति ते सर्वे प्रतिपूज्य महामुनिम् ।
स्वदेशमगमन्हृष्टा राजानो भरतर्षभ ॥ २५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

---

## अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

मार्कण्डेयेन युधिष्ठिरादीन्प्रति वैन्यस्याश्वमेधे अत्रिगौतमविवादानुवादेन ब्राह्मणमाहात्म्यकथनम् ॥ १ ॥

मार्कण्डेय उवाच ।
भूय एव तु माहात्म्यं ब्राह्मणानां निबोध मे ।
वैन्यो नामेह राजर्षिरश्वमेधाय दीक्षितः ॥ १
तमत्रिर्गन्तुमारेभे वित्तार्थमिति नः श्रुतम् ।
भूयोऽर्थं नानुरुध्यत्स धर्मव्यक्तिनिदर्शनात् ॥ २
स विचिन्त्य महातेजा वनमेवान्वरोचयत् ।
धर्मपत्नीं समाहूय पुत्रांश्चेदमुवाच ह ॥ ३
प्राप्स्यामः फलमत्यन्तं बहुलं निरुपद्रवम् ।
अरण्यगमनं क्षिप्रं रोचतां वो गुणाधिकम् ॥ ४
तं भार्या प्रत्युवाचाथ धनमेवानुरुन्धती ।
वैन्यं गत्वा महात्मानमर्थयस्व धनं बहु ॥ ५
स ते दास्यति राजर्षिर्यजमानोऽर्थिने धनम् ।
तत आदाय विप्रर्षे प्रतिगृह्य धनं बहु ॥ ६
भृत्यान्सुतान्संविभज्य ततो व्रज यथेप्सितम् ।
एष वै परमो धर्मो धर्मविद्भिरुदाहृतः ॥ ७
अत्रिरुवाच ।
कथितो मे महाभागे गौतमेन महात्मना ।
वैन्यो धर्मार्थसंयुक्तः सत्यव्रतसमन्वितः ॥ ८
किंत्वस्ति तत्र द्वेष्टारो निवसन्ति हि मे द्विजाः ।
यथा मे गौतमः प्राह ततो न व्यवसाम्यहम् ॥ ९
तत्र स्म वाचं कल्याणीं धर्मकामार्थसंहिताम् ।
मयोक्तामन्यथा ब्रूयुस्ततस्ते वै निरर्थिकाम् ॥ १०
गमिष्यामि महाप्राज्ञे रोचते मे वचस्तव ।
गाश्च मे दास्यते वैन्यः प्रभूतं चार्थसंचयम् ॥ ११
एवमुक्त्वा जगामाशु वैन्ययज्ञं महातपाः ।
गत्वा च यज्ञायतनमत्रिस्तुष्टाव तं नृपम् ॥ १२
वाक्यैर्मङ्गलसंयुक्तैः पूजयानोऽब्रवीद्वचः ।
राजन्धन्यस्त्वमीशश्च भुवि त्वं प्रथमो नृपः ।
स्तुवन्ति त्वां मुनिगणास्त्वदन्यो नास्ति धर्मवित् ॥
तमब्रवीदृषिः क्रुद्धो वचनं वै महातपाः ॥ १४
गौतम उवाच ।
मैवमत्र पुनर्ब्रूया न ते प्रज्ञा समाहिता ।
अत्र नः प्रथमो धाता महेन्द्रो वै प्रजापतिः ॥ १५
वैशंपायन उवाच ।
अथात्रिरपि राजेन्द्र गौतमं प्रत्यभाषत ।
अयमेव विधाता च तथैवेन्द्रः प्रजापतिः ।

---

नैषां दुश्चरितं ब्रूमः इति झ. पाठः ॥ २१ ॥ तेजस्विनां योगसिद्धानां देशः सामीप्यम् । तत्सङ्गादित्यर्थः ॥ २३ ॥ सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

सोऽत्रिरर्थं भूयो नानुरुध्यत् अत्यन्तमर्थार्थी न बभूव । कुतः । धर्मव्यक्तिर्धर्मस्य फलद्वाराऽभिव्यक्तिः । फलव्यक्त्या हि धर्मो नश्यत्यतस्तद्रक्षणार्थं नैच्छदित्यर्थः ॥ २ ॥ वनं गन्तुमिति शेषः ॥ ३ ॥ निरुपद्रवमक्षयं मोक्षाख्यम् ॥ ४ ॥ धर्ममेवानुतन्वतीति झ. पाठः । धर्मं यज्ञादिकं अनुतन्वती विस्तारयन्ती । हेतौ शतृप्रत्ययः । धर्मार्थं धनमेवार्जयस्वेत्युवाचेत्यर्थः ॥ ५ ॥ राजप्रतिग्रहे दोषं जानन्नत्रिस्तत्र विघ्नमुपन्यस्यति कथित इत्यादिना ॥ ८ ॥ व्यवसामि उद्यमं करोमि ॥ ९ ॥ एवं जानन्नपि स्नेहदोषात्तत्कर्तुं प्रतिजानीते गमिष्यामीति ॥ ११ ॥ धन्यो धनार्हः ईश ईशिता नियन्ता । प्रथमः हिरण्यगर्भइव अग्रजः । नृपः मनुष्याणां रक्षकः ॥ १३ ॥ अत्र परलोकमेव बहुमन्वानो गौतम आह मैवमिति ॥ १५ ॥ तत्रेन्द्रइवात्र राजैव महेन्द्र इति वित्तार्थी अत्रिः परपक्षं दूषयति अथेति

त्वमेव मुह्यसे मोहान्न प्रज्ञानं तवास्ति ह ॥ १६

गौतम उवाच ।

जानामि नाहं मुह्यामि त्वं विवक्षुर्विमुह्यसे ।
स्तौषि त्वं दर्शनप्रेप्सू राजानं जनसंसदि ॥ १७

न वेत्थ परमं धर्मं न चास्त्यत्र प्रयोजनम् ।
बालस्त्वमसि मूढश्च वृद्धः केनापि हेतुना ॥ १८

वैशंपायन उवाच ।

विवदन्तौ तथा तौ तु मुनीनां दर्शने स्थितौ ।
ये तस्य यज्ञे संवृत्तास्तेऽपृच्छन्त कथं त्विमौ ॥ १९

प्रवेशः केन दत्तोऽयमनयोर्वैन्यसंसदि ।
उच्चैः समभिभाषन्तौ केन कार्येण धिष्ठितौ ॥ २०

ततः परमधर्मात्मा काश्यपः सर्वधर्मवित् ।
विवादिनावनुप्राप्तौ तावुभौ प्रत्यवेदयत् ॥ २१

अथाब्रवीत्सदस्यांस्तु गौतमो मुनिसत्तमान् ।
आवयोर्व्याहृतं प्रश्नं शृणुत द्विजसत्तमाः ।
वैन्यं विधातेत्याहात्रिरत्र नौ संशयो महान् ॥ २२

'ततस्तु गौतमेनोक्तं वाक्यं वैन्यस्य संसदि ।'
श्रुत्वैव तु महात्मानो मुनयोऽभ्यद्रवन्द्रुतम् ॥ २३

सनत्कुमारं धर्मज्ञं संशयच्छेदनाय वै ।
'पप्रच्छुः प्रणताः सर्वे ब्रह्माणमिव सोमपाः ॥' २४

स च तेषां वचः श्रुत्वा यथातत्त्वं महातपाः ।
प्रत्युवाचाथ तानेवं धर्मार्थसहितं वचः ॥ २५

ब्रह्म क्षत्रेण सहितं क्षत्रं च ब्रह्मणा सह ।
संयुक्तौ दहतः शत्रून्वनानीवाग्निमारुतौ ॥ २६

राजा वै प्रथितो धर्मः प्रजानां पतिरेव च ।
स एव शक्रः शुक्रश्च स धाता च बृहस्पतिः २७

प्रजापतिर्विराट् सम्राट् क्षत्रियो भूपतिर्नृपः ।
य एभिः स्तूयते शब्दैः कस्तं नार्चितुमर्हति ॥ २८

पुरायोनिर्युधाजिच्च अभीष्टानुचितो भवः ।
स्वर्णेता सहजिद्बभ्रुरिति राजाऽभिधीयते ।
सत्ययोनिः पुराविच्च सत्यधर्मप्रवर्तकः ॥ २९

अधर्मादृषयो भीता बलं क्षत्रे समादधन् ।
'तस्माद्धि ब्रह्मणा क्षत्रं क्षत्रेण ब्रह्म चाव्ययम् ॥' ३०

आदित्यो दिवि देवेषु तमो नुदति तेजसा ।
तथैव नृपतिर्भूमावधर्मान्नुदते भृशम् ॥ ३१

ततो राज्ञः प्रधानत्वं शास्त्रप्रामाण्यदर्शनात् ।
उत्तरः सिद्ध्यते पक्षो येन राजेति भाषितम् ॥ ३२

मार्कण्डेय उवाच ।

ततः स राजा संहृष्टः सिद्धे पक्षे महामनाः ।
तमत्रिमब्रवीत्प्रीतः पूर्वं येनाभिसंस्तुतः ॥ ३३

यस्मात्पूर्वं मनुष्येषु ज्यायांसं मामिहाब्रवीः ।
सर्वदेवैश्च विप्रर्षे संमितं श्रेष्ठमेव च ॥ ३४

तस्मात्तेऽहं प्रदास्यामि विविधं वसु भूरि च ।
दासीसहस्रं श्यामानां सुवस्त्राणामलंकृतम् ॥ ३५

दशकोटीर्हिरण्यस्य रुक्मभारांस्तथा दश ।
एतद्ददामि विप्रर्षे सर्वज्ञस्त्वं मतो हि मे ॥ ३६

तदत्रिर्न्यायतः सर्वं प्रतिगृह्याभिसत्कृतः ।
प्रत्युज्जगाम तेजस्वी गृहानेव महातपाः ॥ ३७

प्रदाय च धनं प्रीतः पुत्रेभ्यः प्रयतात्मवान् ।
ततः समभिसंधाय वनमेवान्वपद्यत ॥ ३८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

---

॥ १६ ॥ दर्शने दृष्टिपथे ॥ १९ ॥ प्रत्यषेधयत् इति ध. पाठः ॥ २१ ॥ नौ आवयोः । संशयः विवादः ॥ २२ ॥ प्रथितः प्रथांगतः । धर्मः धर्मस्थापकः । शक्रः रक्षिता । शुक्रः नीतिवित् । धाता अतएव जनकः । बृहस्पतिः हितोपदेष्टा ॥ २७ ॥ अभिया मुदित इति झ. पाठः । पुरायोनिः धर्मप्रवर्तकत्वेन प्रथमं कारणम् । युधाजित् संग्रामे जयकर्तृत्वेनोपद्रवनाशकः । अभियाः अभितो याति यामिकवद्रक्षणार्थमित्यभियाः । मुदितः भवः ईश्वरः । स्वर्णेता स्वर्गं प्रति गमयिता । सहजित् सद्योजयशीलः । बभ्रुर्विष्णुः ॥ २९ ॥ अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

## एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

मार्कण्डेयेन युधिष्ठिरादीन्प्रति दानाग्निहोत्रमोक्षादिनिरूपकतार्क्ष्यसरस्वतीसंवादानुवादः ॥ १ ॥

मार्कण्डेय उवाच ।
अत्रैव च सरस्वत्या गीतं परपुरंजय ।
पृष्टया मुनिना वीर शृणु तार्क्ष्येण धीमता ॥ १
तार्क्ष्य उवाच ।
किंनु श्रेयः पुरुषस्येह भद्रे
कथं कुर्वन्न च्यवते स्वधर्मात् ।
आचक्ष्व मे चारुसर्वाङ्गि सर्वं
त्वया शिष्टो न च्यवेयं स्वधर्मात् ॥ २
कथं चाग्निं जुहुयां पूजये वा
कस्मिन्काले केन धर्मो न नश्येत् ।
एतत्सर्वं सुभगे प्रब्रवीहि
यथा लोकान्विरजाः संचरेयम् ॥ ३
मार्कण्डेय उवाच ।
एवं पृष्टा प्रीतियुक्तेन तेन
शुश्रूषुणा चोत्तमबुद्धियुक्तम् ।
तार्क्ष्यं विप्रं धर्मयुक्तं हितं च
सरस्वती वाक्यमिदं बभाषे ॥ ४
यो ब्रह्म जानाति यथोपदेशं
स्वाध्यायनित्यः शुचिरप्रमत्तः ।
स वै पुरो देवलोकस्य गन्ता
सहामरैः प्राप्नुयात्प्रीतियोगम् ॥ ५
तत्र स्म रम्या विपुला विशोकाः
सुपुष्पिताः पुष्करिण्यः सुपुण्याः ।
अकर्दमा मीनवत्यः सुतीर्था
हिरण्मयैरावृताः पुण्डरीकैः ॥ ६
तासां तीरेष्वासते पुण्यभाजो
महीयमानाः पृथगप्सरोभिः ।
सुपुण्यगन्धाभिरलंकृताभि-
र्हिरण्यवर्णाभिरतीव हृष्टाः ॥ ७
परं लोकं गोप्रदास्त्वाप्नुवन्ति
दत्त्वाऽनड्वाहं सूर्यलोकं व्रजन्ति ।
वासो दत्त्वा चान्द्रमसं तु लोकं
दत्त्वा हिरण्यममरत्वमेति ॥ ८
धेनुं दत्त्वा सुप्रभां साधुदोहां
कल्याणवत्सामपलायिनीं च ।
यावन्ति रोमाणि भवन्ति तस्या-
स्तावद्वर्षाण्यासते देवलोके ॥ ९
अनड्वाहं सुव्रतं यो ददाति
हलस्य वोढारमनन्तवीर्यम् ।
धुरंधरं बलवन्तं युवानं
प्राप्नोति लोकान्दशधेनुदस्य ॥ १०
ददाति यो वै कपिलां सचैलां
कांस्योपदोहां द्रविणैरुत्तरीयैः ।
तैस्तैर्गुणैः कामदुहाऽथ भूत्वा
नरं प्रदातारमुपैति नाकैः ॥ ११
यावन्ति रोमाणि भवन्ति धेन्वा-
स्तावत्फलं लभते गोप्रदाने ।
पुत्रांश्च पौत्रांश्च कुलं च सर्व-
मासप्तमं तारयते परत्र ॥ १२
सदक्षिणां काञ्चनचारुशृङ्गीं
कांस्योपदोहां द्रविणैरुत्तरीयैः ।
धेनुं तिलानां ददतो द्विजाय
लोका वसूनां सुलभा भवन्ति ॥ १३
स्वकर्मभिर्दानवसंनिरुद्धे
तीव्रान्धकारे नरके पतन्तम् ।
महार्णवे नौरिव वातयुक्ता
दानं गवां तारयते परत्र ॥ १४
यो ब्राह्मदेयां तु ददाति कन्यां
भूमिप्रदानं च करोति विप्रे ।
ददाति दानं विधिना च यश्च
स लोकमाप्नोति पुरंदरस्य ॥ १५

अनड्वाहं वृषभम् ॥ ८ ॥ उत्तरीयैः पश्चाद्भवैर्दक्षिणादिभिर्द्रव्यैः सहिताम् ॥ ११ ॥ ब्राह्मदेयां गृह्योक्तेन विधिना देयाम् ॥ १५ ॥

य: सप्तवर्षाणि जुहोति तार्क्ष्य
हव्यं त्वग्नौ नियतः साधुशीलः ।
सप्तावरान्सप्तपूर्वान्पुनाति
पितामहानात्मना कर्मभिः स्वैः ॥ १६

तार्क्ष्य उवाच ।
किमग्निहोत्रस्य व्रतं पुराण-
माचक्ष्व मे पृच्छतश्चारुरूपे ।
त्वयाऽनुशिष्टोऽहमिहाद्य विद्यां
यदग्निहोत्रस्य व्रतं पुराणम् ॥ १७

सरस्वत्युवाच ।
न चाशुचिर्नाप्यनिर्णिक्तपाणि-
र्नाब्रह्मविज्जुहुयान्नाविपश्चित् ।
बुभुत्सवः शुचिकामा हि देवा
नाश्रद्दधानाद्धि हविर्जुषन्ति ॥ १८

नाश्रोत्रियं देवहव्ये नियुञ्ज्या-
न्मोघं पुरा सिञ्चति तादृशो हि ।
अपूर्णमश्रोत्रियमाह तार्क्ष्य
न वै तादृग्जुहुयादग्निहोत्रम् ॥ १९

ये वै कृशानुं जुह्वति श्रद्दधानाः
सत्यव्रता हुतशिष्टाशिनश्च ।
गवां लोकं प्राप्यते पुण्यगन्धं
पश्यन्ति देवं परमं चापि सत्यम् ॥ २०

तार्क्ष्य उवाच ।
क्षेत्रज्ञभूतां परलोकभावे
कर्मोदये बुद्धिमभिप्रविष्टाम् ।
प्रज्ञां च देवीं सुभगे विमृश्य
पृच्छामि त्वां का ह्यसि चारुरूपे ॥ २१

सरस्वत्युवाच ।
अग्निहोत्रादहमभ्यागताऽस्मि
विप्रर्षभाणां संशयच्छेदनाय ।
त्वत्संयोगादहमेतदब्रुवं
भावे स्थिता तथ्यमर्थं यथावत् ॥ २२

तार्क्ष्य उवाच ।
न हि त्वया सदृशी काचिदस्ति
विभ्राजसे ह्यतिमात्रं यथा श्रीः ।
रूपं च ते दिव्यमनन्तकान्ति
प्रज्ञां च देवीं सुभगे बिभर्षि ॥ २३

सरस्वत्युवाच ।
श्रेष्ठानि यानि द्विपदांवरिष्ठ
यज्ञेषु विद्वन्नुपपादयन्ति ।
तैरेव चाहं संप्रवृद्धा भवामि
चाप्यायिता रूपवती च विप्र ॥ २४

यच्चापि पात्रमुपयुज्यते ह
वानस्पत्यमायसं पार्थिवं वा ।
दिव्येन रूपेण च प्रज्ञया च
तेनैव सिद्धिरिति विद्धि विद्वन् ॥ २५

तार्क्ष्य उवाच ।
इदं श्रेयः परमं मन्यमाना
व्यायच्छन्ते मुनयः संप्रतीताः ।
आचक्ष्व मे तं परमं विशोकं
मोक्षं परं यं प्रविशन्ति धीराः ।
साङ्ख्या योगाः परमं यं विदन्ति
परं पुराणं तमहं न वेद्मि ॥ २६

सरस्वत्युवाच ।
तं वै परं वेदविदः प्रपन्नाः
परं परेभ्यः प्रथितं पुराणम् ।
स्वाध्यायदानव्रतपुण्ययोगै-
स्तपोधना वीतशोका विमुक्ताः ॥ २७

तस्याथ मध्ये वेतसः पुण्यगन्धः
सहस्रशाखो विपुलो विभाति ।
तस्य मूलात्सरितः प्रस्रवन्ति
मधूदकप्रस्रवणाः सुपुण्याः ॥ २८

शाखांशाखां महानद्यः संयान्ति सिकताशयाः ।
धानापूपा मांसशाकाः सदापायसकर्दमाः ॥ २९

आह वेद इति शेषः ॥ १९ ॥

एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

यस्मिन्नग्निमुखा देवाः सेन्द्राः सहमरुद्गणाः । ईजिरे क्रतुभिः श्रेष्ठैस्तत्पदं परमं मुने ॥ ३०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

---

## नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

मार्कण्डेयेन युधिष्ठिरादीन्प्रति मत्स्यरूपिणो हरेर्वैवस्वतमनोश्च चरितप्रतिपादकमत्स्योपाख्यानकथनम् ॥ १ ॥

वैशंपायन उवाच ।
ततः स पाण्डवो भूयो मार्कण्डेयमुवाच ह ।
कथयस्वेति चरितं मनोर्वैवस्वतस्य च ॥ १
मार्कण्डेय उवाच ।
विवस्वतः सुतो राजन्महर्षिः सुप्रतापवान् ।
बभूव नरशार्दूल प्रजापतिसमद्युतिः ॥ २
ओजसा तेजसा लक्ष्म्या तपसा च विशेषतः ।
अतिचक्राम पितरं मनुः स्वं च पितामहम् ॥ ३
ऊर्ध्वबाहुर्विशालायां बदर्यां स नराधिपः ।
एकपादस्थितस्तीव्रं चकार सुमहत्तपः ॥ ४
अवाक्शिरास्तथा चापि नेत्रैरनिमिषैर्दृढम् ।
सोऽतप्यत तपो घोरं वर्षाणामयुतं तदा ॥ ५
तं कदाचित्तपस्यन्तमार्द्रचीरजटाधरम् ।
चीरिणीतीरमागम्य मत्स्यो वचनमब्रवीत् ॥ ६
भगवन्क्षुद्रमत्स्योस्मि बलवद्भ्यो भयं मम ।
मत्स्येभ्यो हि ततो मां त्वं त्रातुमर्हसि सुव्रत ॥ ७
दुर्बलं बलवन्तो हि मत्स्या मत्स्यं विशेषतः ।
भक्षयन्ति सदा वृत्तिर्विहिता नः सनातनी ॥ ८
तस्माद्भयौघान्महतो मज्जन्तं मां विशेषतः ।
त्रातुमर्हसि कर्तास्मि कृते प्रतिकृतं तव ॥ ९
स मत्स्यवचनं श्रुत्वा कृपयाऽभिपरिप्लुतः ।
मनुर्वैवस्वतोऽगृह्णात्तं मत्स्यं पाणिना स्वयम् ॥ १०
उदकान्तमुपानीय मत्स्यं वैवस्वतो मनुः ।
अलिञ्जरे प्राक्षिपत्तं चन्द्रांशुसदृशप्रभम् ॥ ११
स तत्र ववृधे राजन्मत्स्यः परमसत्कृतः ।
पुत्रवत्स्वीकरोत्तस्मै मनुर्भावं विशेषतः ॥ १२
अथ कालेन महता स मत्स्यः सुमहानभूत् ।
अलिञ्जरजले चैव नासौ समभवत्किल ॥ १३
अथ मत्स्यो मनुं दृष्ट्वा पुनरेवाभ्यभाषत ।
भगवन्साधु मेऽद्यान्यत्स्थानं संप्रतिपादय ॥ १४
उद्धृत्यालिञ्जरात्तस्मात्ततः स भगवान्मनुः ।
तं मत्स्यमनयद्वापीं महतीं स मनुस्तदा ॥ १५
तत्र तं प्राक्षिपच्चापि मनुः परपुरंजय ।
अथावर्धत मत्स्यः स पुनर्वर्षगणान्बहून् ॥ १६
द्वियोजनायता वापी विस्तृता चापि योजनम् ।
तस्यां नासौ समभवन्मत्स्यो राजीवलोचन ॥ १७
विचेष्टितुं च कौन्तेय मत्स्यो वाप्यां विशांपते ।
मनुं मत्स्यस्ततो दृष्ट्वा पुनरेवाभ्यभाषत ॥ १८
नय मां भगवन्साधो समुद्रमहिषीं प्रियाम् ।
गङ्गां तत्रापि शक्तोस्मि वस्तुं मतिमतांवर ॥ १९
निदेशे हि मया तुभ्यं स्थातव्यमनसूयता ।
वृद्धिर्हि परमा प्राप्ता त्वत्कृते हि मयाऽनघ ॥ २०
एवमुक्तो मनुर्मत्स्यमनयद्भगवान्वशी ।
नदीं गङ्गां तत्र चैनं स्वयं प्राक्षिपदेव च ॥ २१
स तत्र ववृधे मत्स्यः कंचित्कालमरिंदम ।
गतः पुनर्मनुं दृष्ट्वा मत्स्यो वचनमब्रवीत् ॥ २२
गङ्गायां हि न शक्नोमि बृहत्त्वाच्चेष्टितुं प्रभो ।
समुद्रं नय मामाशु प्रसीद भगवन्निति ॥ २३
उद्धृत्य गङ्गासलिलात्ततो मत्स्यं मनुः स्वयम् ।
समुद्रमनयत्पार्थ तत्र चैनमवासृजत् ॥ २४
सुमहानपि मत्स्यस्तु स मनोर्नयतस्तदा ।
आसीद्यथेष्टहार्यश्च स्पर्शगन्धसुखश्च वै ॥ २५
यदा समुद्रे प्रक्षिप्तः स मत्स्यो मनुना तदा ।
तत एनमिदं वाक्यं स्मयमान इवाब्रवीत् ॥ २६

---

चीरिणीनदीविशेषः ॥६ ॥अलिञ्जरे मणिकाख्यपात्रे ॥११॥

न समभवत्स्थूलत्वेन न ममावित्यर्थः ॥ १३ ॥

भगवन्हि कृता रक्षा त्वया सर्वा विशेषतः ।
प्राप्तकालं तु यत्कार्यं त्वया तच्छ्रूयतां मम ॥ २७

अचिराद्भगवन्भौममिदं स्थावरजङ्गमम् ।
सर्वमेव महाभाग प्रलयं वै गमिष्यति ॥ २८
संप्रक्षालनकालोऽयं लोकानां समुपस्थितः ।
तस्मात्त्वां बोधयाम्यद्य यत्ते हितमनुत्तमम् ॥ २९
त्रसानां स्थावराणां च यच्चेङ्गं यच्च नेङ्गति ।
तस्य सर्वस्य संप्राप्तः कालः परमदारुणः ॥ ३०
नौश्च कारयितव्या ते दृढा युक्तवटारका ।
तत्र सप्तर्षिभिः सार्धमारुहेथा महामुने ॥ ३१
बीजानि चैव सर्वाणि यथोक्तानि मया पुरा ।
तस्यामारोहयेर्नावि सुसंगुप्तानि भागशः ॥ ३२
नौस्थश्च मां प्रतीक्षेथास्ततो मुनिजनप्रिय ।
आगमिष्याम्यहं शृङ्गी विज्ञेयस्तेन तापस ॥ ३३
एवमेतत्त्वया कार्यमापृष्टोसि व्रजाम्यहम् ।
ता न शक्या महत्यो वै आपस्तर्तुं मया विना ।
नातिशङ्क्यमिदं चापि वचनं मे त्वया विभो ॥ ३४
एवं करिष्य इति तं स मत्स्यं प्रत्यभाषत ।
जग्मतुश्च यथाकाममनुज्ञाप्य परस्परम् ॥ ३५
ततो मनुर्महाराज यथोक्तं मत्स्यकेन ह ।
बीजान्यादाय सर्वाणि सागरं पुप्लुवे तदा ।
नौकया शुभया वीर महोर्मिणमरिंदम ॥ ३६
चिन्तयामास च मनुस्तं मत्स्यं पृथिवीपते ।
स च तच्चिन्तितं ज्ञात्वा मत्स्यः परपुरंजय ।
शृङ्गी तत्राजगामाशु तदा भरतसत्तम ॥ ३७
तं दृष्ट्वा मनुजव्याघ्र मनुर्मत्स्यं जलार्णवे ।
शृङ्गिणं तं यथोक्तेन रूपेणाद्रिमिवोच्छ्रितम् ॥ ३८
वटारकमयं पाशमथ मत्स्यस्य मूर्धनि ।
मनुर्मनुजशार्दूल तस्य शृङ्गे न्यवेशयत् ॥ ३९
संयतस्तेन पाशेन मत्स्यः परपुरंजय ।
वेगेन महता नावं प्राकर्षल्लवणाम्भसि ॥ ४०
स ततार तया नावा समुद्रं मनुजेश्वर ।
नृत्यमानमिवोर्मीभिर्गर्जमानमिवाम्भसा ॥ ४१
क्षोभ्यमाणा महावातैः सा नौस्तस्मिन्महोदधौ ।
घूर्णते चपलेव स्त्री मत्ता परपुरंजय ॥ ४२
नैव भूमिर्न च दिशः प्रदिशो वा चकाशिरे ।
सर्वं सलिलमेवासीत्खं द्यौश्च नरपुङ्गव ॥ ४३
एवंभूते तदा लोके संकुले भरतर्षभ ।
अदृश्यन्त सप्तर्षयो मनुर्मत्स्यस्तथैव च ॥ ४४
एवं बहून्वर्षगणांस्तां नावं सोऽथ मत्स्यकः ।
चकर्षातन्द्रितो राजंस्तस्मिन्सलिलसंचये ॥ ४५
ततो हिमवतः शृङ्गं यत्परं भरतर्षभ ।
तत्राकर्षत्ततो नावं स मत्स्यः कुरुनन्दन ॥ ४६
अथाब्रवीत्तदा मत्स्यस्तानृषीन्प्रहसञ्शनैः ।
अस्मिन्हिमवतः शृङ्गे नावं बध्नीत माचिरम् ॥ ४७
सा बद्धा तत्र तैस्तूर्णमृषिभिर्भरतर्षभ ।
नौर्मत्स्यस्य वचः श्रुत्वा शृङ्गे हिमवतस्तदा ॥ ४८
तच्च नौबन्धनं नाम शृङ्गं हिमवतः परम् ।
ख्यातमद्यापि कौन्तेय तद्विद्धि भरतर्षभ ॥ ४९
अथाब्रवीदनिमिषस्तानृषीन्सहितस्तदा ।
अहं प्रजापतिर्ब्रह्मा मत्परं नाधिगम्यते ।
मत्स्यरूपेण यूयं च मयाऽस्मान्मोक्षिता भयात् ५०
मनुना च प्रजाः सर्वाः सदेवासुरमानुषाः ।
स्रष्टव्याः सर्वलोकाश्च यच्चेङ्गं यच्च नेङ्गति ॥ ५१
तपसा चापि तीव्रेण प्रतिभाऽस्य भविष्यति ।
मत्प्रसादात्प्रजासर्गे न च मोहं गमिष्यति ।
इत्युक्त्वा वचनं मत्स्यः क्षणेनादर्शनं गतः ॥ ५२
स्रष्टुकामः प्रजाश्चापि मनुर्वैवस्वतः स्वयम् ।
प्रमूढोऽभूत्प्रजासर्गे तपस्तेपे महत्ततः ॥ ५३
तपसा महता युक्तः सोऽथ स्रष्टुं प्रचक्रमे ।
सर्वाः प्रजा मनुः साक्षाद्यथावद्भरतर्षभ ॥ ५४
इत्येतन्मात्स्यकं नाम पुराणं परिकीर्तितम् ।
आख्यानमिदमाख्यातं सर्वपापहरं मया ॥ ५५

---

त्रसानां जङ्गमानाम् । इङ्गं चलनशीलं वृक्षादि । नेङ्गति पाषाणादि । कालोऽन्तः ॥ ३० ॥ वटारका रज्जुः ॥ ३१ ॥ यथोक्तानि द्विजैः पुरा इति झ. पाठः ॥ ३२ ॥ सच तांस्ता-

रयन्नावा इति झ. पाठः ॥ ४१ ॥ नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

य इदं शृणुयान्नित्यं मनोश्चरितमादितः । स सुखी सर्वपूर्णार्थः सर्वलोकमियान्नरः ॥ ५६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

## एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

मार्कण्डेयेन युधिष्ठिरादीन्प्रति कृतादियुगचतुष्टयधर्मकथनपूर्वकं प्रलयवर्णनम् ॥ १ ॥ तथा प्रलयजले परिप्लवता मार्कण्डेयेन वटशाखाशायिनः शिशुरूपस्य हरेरुदरान्तःप्रविश्य ब्रह्माण्डदर्शनपूर्वकं पुनर्बहिर्निर्गमनम् ॥ २ ॥

वैशंपायन उवाच ।
ततः स पुनरेवाथ मार्कण्डेयं तपस्विनम् ।
पप्रच्छ विनयोपेतो धर्मराजो युधिष्ठिरः ॥ १
नैके युगसहस्रान्तास्त्वया दृष्टा महामुने ।
न चापीह समः कश्चिदायुष्मान्दृश्यते तव ॥ २
वर्जयित्वा महात्मानं ब्रह्माणं परमेष्ठिनम् ।
न तेऽस्ति सदृशः कश्चिदायुषा ब्रह्मसत्तम ॥ ३
अथाऽन्तरिक्षे लोकेऽस्मिन्देवदानववर्जिते ।
त्वमेव प्रलये विप्र ब्रह्माणमुपतिष्ठसे ॥ ४
प्रलये चापि निर्वृत्ते प्रबुद्धे च पितामहे ।
त्वमेकः सृज्यमानानि भूतानीह प्रपश्यसि ॥ ५
चतुर्विधानि विप्रर्षे यथावत्परमेष्ठिना ।
वायुभूता दिशः कृत्वा विक्षिप्यापस्ततस्ततः ॥ ६
त्वया लोकगुरुः साक्षात्सर्वलोकपितामहः ।
आराधितो द्विजश्रेष्ठ तत्परेण समाधिना ॥ ७
स्वप्रमाणमथो विप्र त्वया कृतमनेकशः ।
घोरेणाविश्य तपसा वेधसो निर्जितास्त्वया ॥ ८
नारायणाङ्कप्रख्यस्त्वं सांपरायेऽतिपठ्यसे ॥ ९
भगवाननेकशः कृत्वा त्वया विष्णोश्च विश्वकृत् ।
कर्णिकोद्धरणं दिव्यं ब्रह्मणः कामरूपिणः ।
रत्नालंकारयोगाभ्यां दृग्भ्यां दृष्टस्त्वया पुरा ॥ १०
तस्मात्त्वान्तको मृत्युर्जरा वा देहनाशिनी ।
न त्वां विशति विप्रर्षे प्रसादात्परमेष्ठिनः ॥ ११
यदा नैव रविर्नाग्निर्न वायुर्न च चन्द्रमाः ।
नैवान्तरिक्षं नैवोर्वी शेषं भवति किंचन ॥ १२
तस्मिन्नेकार्णवे लोके नष्टे स्थावरजङ्गमे ।
नष्टे देवासुरगणे समुत्सन्नमहोरगे ॥ १३
शयानममितात्मानं पद्मे पद्मनिकेतनम् ।
त्वमेकः सर्वभूतेशं ब्रह्माणमुपतिष्ठसि ॥ १४
एतत्प्रत्यक्षतः सर्वं पूर्वं वृत्तं द्विजोत्तम ।
तस्मादिच्छाम्यहं श्रोतुं सर्वां हेत्वात्मिकां कथां १५
अनुभूतं हि बहुशस्त्वयैकेन द्विजोत्तम ।
न तेऽस्त्यविदितं किंचित्सर्वलोकेषु नित्यदा १६
मार्कण्डेय उवाच ।
हन्त ते कथयिष्यामि नमस्कृत्वा स्वयंभुवे ।
पुरुषाय पुराणाय शाश्वतायाव्ययाय च ।
अव्यक्ताय सुसूक्ष्माय निर्गुणाय गुणात्मने ॥ १७
य एष पृथुदीर्घाक्षः पीतवासा जनार्दनः ।
एष कर्ता विकर्ता च भूतात्मा भूतकृत्प्रभुः ॥ १८
अचिन्त्यं महदाश्चर्यं पवित्रमिति चोच्यते ।
अनादिनिधनं भूतं विश्वमव्ययमक्षयम् ॥ १९
एष कर्ता न क्रियते कारणं चापि पौरुषे ।
को ह्येनं पुरुषं वेत्ति देवा अपि न तं विदुः । २०
सर्वमाश्चर्यमेवैतन्निर्वृत्तं राजसत्तम ।

अनन्तरिक्षे लोके इति झ. पाठः ॥ ४ ॥ चतुर्विधानि जरायुजाण्डजस्वेदजोद्भिज्जानि ॥ ६ ॥ नारायणस्य अङ्कः स्थानं समीपं वा । तत्र प्रख्यः प्रख्यातः भगवद्भक्तेषूत्तमः । सांपराये परलोके अतिपठ्यसे अत्यन्तं स्तूयसे । लोकैरिति शेषः ॥ ९ ॥ विष्णोर्ब्रह्मणः उपलब्धिस्थानत्वेन संबन्धिकर्णिकोद्धरणं कृत्वा योगकलया हृदयपुण्डरीकमुद्घाट्येत्यर्थः । त्वया दृग्भ्यां भगवाननेकशोऽनेकवारं दृष्ट इत्यन्वयः । रत्नानि तत्तज्जात्युत्कृष्टवस्तूनि तेषां अलंकारो निवारणक्रिया । परं वैराग्यमिति यावत् । योगः अभियोगोऽभ्यासः । वैराग्याभ्यासाभ्यामित्यर्थः ॥ १० ॥ तव त्वां न विशतीत्यपकृष्यते ॥ ११ ॥ शेषं अवशिष्टम् । पञ्चमहाभूतप्रलये सतीत्यर्थः ॥ १२ ॥ एतत्सर्वं त्वया दृष्टमिति शेषः ॥ १५ ॥ स्वयंभुवे अजन्मने । पुरुषाय पूर्णाय । पुराणाय नित्यैकरूपाय । शाश्वताय अनादये । अव्ययाय नित्याय ॥ १७ ॥ यद्येष पुरुषो वेद वेदा अपि

आदितो मनुजव्याघ्र कृत्स्नस्य जगतः क्षये ॥ २१
चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम् ।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ॥
त्रीणि वर्षसहस्राणि त्रेतायुगमिहोच्यते ।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च ततः परं२३
तथा वर्षसहस्रे द्वे द्वापरं परिमाणतः ।
तस्यापि द्विशती सन्ध्या सन्ध्यांशश्च तथाविधः ॥
सहस्रमेकं वर्षाणां ततः कलियुगं स्मृतम् ।
तस्य वर्षशतं सन्ध्या सन्ध्यांशश्च ततः परम् ॥ २५
सन्ध्यासंध्यांशयोस्तुल्यं प्रमाणमुपधारय ।
क्षीणे कलियुगे चैव प्रवर्तति कृतं युगम् ॥ २६
एषा द्वादशसाहस्री युगाख्या परिकीर्तिता ।
एतत्सहस्रपर्यन्तमहो ब्राह्ममुदाहृतम् ॥ २७
विश्वं हि ब्रह्मभवने सर्वतः परिवर्तते ।
लोकानां मनुजव्याघ्र प्रलयं तं विदुर्बुधाः ॥ २८
अल्पावशिष्टे तु तदा युगान्ते भरतर्षभ ।
सहस्रान्ते नराः सर्वे मायशोऽनृतवादिनः ॥ २९
यज्ञप्रतिनिधिः पार्थ दानप्रतिनिधिस्तथा ।
व्रतप्रतिनिधिश्चैव तस्मिन्काले प्रवर्तते ॥ ३०
ब्राह्मणाः शूद्रकर्माणस्तथा शूद्रा धनार्जकाः ।
क्षत्रधर्मेण वाऽप्यत्र वर्तयन्ति युगक्षये ॥ ३१
निवृत्तयज्ञस्वाध्याया दण्डाजिनविवर्जिताः ।
ब्राह्मणाः सर्वभक्षाश्च भविष्यन्ति कलौ युगे ॥ ३२
अजपा ब्राह्मणास्तात शूद्रा जपपरायणाः ।
विपरीते तदा लोके पूर्वरूपं क्षयस्य तत् ॥ ३३
बहवो म्लेच्छराजानः पृथिव्यां मनुजाधिप ।
मृषानुशासिनः पापा मृषावादपरायणाः ॥ ३४
आन्ध्राः शकाः पुलिन्दाश्च यवनाश्च नराधिपाः ।
काम्भोजा बाह्लिकाः शूरास्तथाऽऽभीरा नरोत्तम ॥
न तदा ब्राह्मणः कश्चित्स्वधर्ममुपजीवति ।
क्षत्रियाश्चापि वैश्याश्च विकर्मस्था नराधिप ॥ ३६
अल्पायुषः स्वल्पबलाः स्वल्पवीर्यपराक्रमाः ।
अल्पसाराल्पदेहाश्च तथा सत्याल्पभाषिणः ॥ ३७
बहुशून्या जनपदा मृगव्यालावृता दिशः ।
युगान्ते समनुप्राप्ते वृथा च ब्रह्मवादिनः ॥ ३८
भोवादिनस्तथा शूद्रा ब्राह्मणाश्चार्यवादिनः ।
युगान्ते मनुजव्याघ्र भवन्ति बहुजन्तवः ॥ ३९
न तथा घ्राणयुक्ताश्च सर्वगन्धा विशांपते ।
रसाश्च मनुजव्याघ्र न तथा स्वादुयोगिनः ॥ ४०
बहुप्रजा ह्रस्वदेहा शीलाचारविवर्जिताः ।
मुखेभगाः स्त्रियो राजन्भविष्यन्ति युगक्षये ॥ ४१
अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ।
केशशूलाः स्त्रियो राजन्भविष्यन्ति युगक्षये ॥ ४२
अल्पक्षीरास्तथा गावो भविष्यन्ति जनाधिप ।
अल्पपुष्पफलाश्चापि पादपा बहुवायसाः ॥ ४३
ब्रह्मवध्यानुलिप्तानां तथा मिथ्याभिशंसिनाम् ।
नृपाणां पृथिवीपाल प्रतिगृह्णन्ति वै द्विजाः ४४
लोभमोहपरीताश्च मिथ्याधर्मध्वजावृताः ।
भिक्षार्थं पृथिवीपाल चञ्चूर्यन्ते द्विजैर्दिशः ॥ ४५
करभारभयाद्भीता गृहस्थाः परिमोषकाः ।
मुनिच्छद्माकृतिच्छन्ना वाणिज्यमुपभुञ्जते ॥ ४६
मिथ्या च नखरोमाणि धारयन्ति तदा द्विजाः ।
अर्थलोभान्नरव्याघ्र वृथा च ब्रह्मचारिणः ॥ ४७
आश्रमेषु वृथाचारः पानपा गुरुतल्पगाः ।

इति झ. पाठः ॥ २० ॥ तावच्छती चतुःशती । सन्ध्या पूर्वस्मिन् युगे उत्तरयुगधर्माणामुपसर्जनतया संक्रमः । सन्ध्यांशस्तूत्तरस्मिन् पूर्वयुगधर्माणाम् । तथाविध उत्तरप्रकारस्त्रिशतीमितोयमेव पूर्वयुगापेक्षया सन्ध्यांश उत्तरयुगापेक्षया सन्ध्येति चोच्यते । तथाच कृतत्रेतयोः सन्ध्यासन्ध्यांशौ सप्तशती । त्रेताद्वापरयोः पञ्चशती । द्वापारकल्योस्त्रिशती । कलिकृतयोस्तु पञ्चशतीति विज्ञेयम् । एवंच कृतस्यादौ चतुःशती कल्यपेक्षया सन्ध्यांशोपि कृतापेक्षया सन्ध्या । एवं सर्वत्र । तेन सन्ध्यासन्ध्यांशयोस्तुल्यं प्रमाणं भवति ॥ २२ ॥ तथा शूद्रधनार्जकाः इति थ. पाठः ॥ ३१ ॥ सत्येऽल्पं सत्याल्पम् । सत्यवादोऽत्यन्तमल्प इत्यर्थः ॥ ३७ ॥ वृथा अनुभवाभावात् ॥ ३८ ॥ मुखेभगाः प्रथमं मुखेनैव भगकार्यं कृत्वा पुरुषस्य काममुद्दीपयन्त्यः । अत्यन्तं रतार्तत्वात् ॥ ४१ ॥ अट्टमन्नं शिवो वेदो ब्राह्मणाश्च चतुष्पथाः । केशो भगं समाख्यातं शूलं तद्विक्रयं विदुरिति पूर्वेषां व्याख्यासंक्षेपः ॥ ४२ ॥ मिथ्याधर्मः कपटधर्मः सएव ध्वजइव ख्यात्यर्थं ज्ञाप्यो येषां ते तथा चञ्चूर्यन्ते पीड्यन्ते । दिशः दिक्स्थाः जनाः ॥ ४५ ॥ पानपाः मद्यपाः ॥ ४८ ॥

ऐहलौकिकमीहन्ते मांसशोणितवर्धनम् ॥ ४८
'पारलौकिककार्येषु प्रमत्ता भृशनास्तिकाः ।'
बहुपाषण्डसंकीर्णाः परान्नगुणवादिनः ।
आश्रमा मनुजव्याघ्र न भवन्ति युगक्षये ॥ ४९
यथर्तुवर्षी भगवान्न तथा पाकशासनः ।
न चापि सर्वबीजानि सम्यग्रोहन्ति भारत ॥ ५०
फलं धर्मस्य राजेन्द्र सर्वत्र परिहीयते ।
हिंसाभिरामश्च जनस्तथा संपद्यतेऽशुचिः ।
अधर्मफलमत्यर्थं तदा भवति चानघ ॥ ५१
तदा च पृथिवीपाल यो भवेद्धर्मसंयुतः ।
अल्पायुः स हि मन्तव्यो न हि धर्मोस्ति कश्चन ॥
भूयिष्ठं कूटमानैश्च पण्यं विक्रीणते जनाः ।
वणिजश्च नरव्याघ्र बहुमाया भवन्त्युत ॥ ५३
धर्मिष्ठाः परिहीयन्ते पापीयान्वर्धते जनः ।
धर्मस्य बलहानिः स्यादधर्मश्च बलायते ॥ ५४
अल्पायुषो दरिद्राश्च धर्मिष्ठा मानवास्तथा ।
दीर्घायुषः समृद्धाश्च विधर्माणो युगक्षये ॥ ५५
नगराणां विहारेषु विधर्माणो युगक्षये ।
अधर्मिष्ठैरुपायैश्च प्रजा व्यवहरन्त्युत ॥ ५६
संचयेन तथाऽल्पेन भवन्त्याढ्यमदान्विताः ।
धनं विश्वासतो न्यस्तं मिथो भूयिष्ठशो नराः ५७
हर्तुं व्यवसिता राजन्पापाचारसमन्विताः ।
नैतदस्तीति मनुजा वर्तन्ते निरपत्रपाः ॥ ५८
पुरुषादानि सत्वानि पक्षिणोऽथ मृगास्तथा ।
नगराणां विहारेषु चैत्येष्वपि च शेरते ॥ ५९
सप्तवर्षाष्टवर्षाश्च स्त्रियो गर्भधरा नृप ।
दशद्वादशवर्षाणां पुंसां पुत्रः प्रजायते ॥ ६०
भवन्ति षोडशे वर्षे नराः पलितिनस्तथा ।
आयुःक्षयो मनुष्याणां क्षिप्रमेव प्रपद्यते ॥ ६१
क्षीणायुषो महाराज तरुणा वृद्धशीलिनः ।
तरुणानां च यच्छीलं तद्वृद्धेषु प्रजायते ॥ ६२
विपरीतास्तदा नार्यो वञ्चयित्वाऽर्हतः पतीन् ।
व्युच्चरन्त्यपि दुःशीला दासैः पशुभिरेव च ॥ ६३
वीरपत्न्यस्तथा नार्यः संश्रयन्ति नरान्नृप ।
भर्तारमपि जीवन्तमन्यान्व्यभिचरन्त्युत ॥ ६४
तस्मिन्युगसहस्रान्ते संप्राप्ते चायुपः क्षये ।
अनावृष्टिर्महाराज जायते बहुवार्षिकी ॥ ६५
ततस्तान्यल्पसाराणि सत्वानि क्षुधितानि वै ।
प्रलयं यान्ति भूयिष्ठं पृथिव्यां पृथिवीपते ॥ ६६
ततो दिनकरैर्दीप्तैः सप्तभिर्मनुजाधिप ।
पीयते सलिलं सर्वं समुद्रेषु सरित्सु च ॥ ६७
यच्च काष्ठं तृणं चापि शुष्कं चार्द्रं च भारत ।
सर्वं तद्भस्मसाद्भूतं दृश्यते भरतर्षभ ॥ ६८
ततः संवर्तको वह्निर्वायुना सह भारत ।
लोकमाविशते पूर्वमादित्यैरुपशोषितम् ॥ ६९
ततः स पृथिवीं भित्त्वा प्रविश्य च रसातलम् ।
देवदानवयक्षाणां भयं जनयते महत् ॥ ७०
निर्दहन्नागलोकं च यच्च किंचित्क्षिताविह ।
अधस्तात्पृथिवीपाल सर्वं नाशयते क्षणात् ॥ ७१
ततो योजनविंशानां सहस्राणि शतानि च ।
निर्दहत्यशिवो वायुः स च संवर्तकोऽनलः ॥ ७२
सदेवासुरगन्धर्वं सयक्षोरगराक्षसम् ।
ततो दहति दीप्तः स सर्वमेव जगद्विभुः ॥ ७३
ततो गजकुलप्रख्यास्तडिन्मालाविभूषिताः ।
उत्तिष्ठन्ति महामेघा नभस्यद्भुतदर्शनाः ॥ ७४
केचिन्नीलोत्पलश्यामाः केचित्कुमुदसन्निभाः ।
केचित्किञ्जल्कसंकाशाः केचित्पीताः पयोधराः ॥
केचिद्धारिद्रसंकाशाः कारण्डवनिभास्तथा ।
केचित्कमलपत्राभाः केचिद्धिङ्गुलसप्रभाः ॥ ७६
केचित्पुरवराकाराः केचिद्गजकुलोपमाः ।
केचिदञ्जनसंकाशाः केचिन्मकरसन्निभाः ॥ ७७
विद्युन्मालापिनद्धाङ्गाः समुत्तिष्ठन्ति वै घनाः ।
घोररूपा महाराज घोरस्वननिनादिताः ॥ ७८
ततो जलधराः सर्वे व्याप्नुवन्ति नभस्तलम् ।
'गर्जन्तः पृथिवीपाल पृथिवीधरसन्निभाः ॥' ७९
तैरियं पृथिवी सर्वा सपर्वतवनाकरा ।

नगराणां नगरस्थानाम् ॥ ५६ ॥ आढ्योहमिति मदः आढ्यमदः ॥ ५७ ॥ पुरुषादानि वृकव्याघ्रादीनि चैत्येषु देवतास्थानेषु ॥ ५९ ॥ अर्हतः योग्यान् ॥ ६३ ॥

आपूर्यते महाराज सलिलौघपरिप्लुता ॥ ८०
ततस्ते जलदा घोरा राविणः पुरुषर्षभ ।
पर्वतान्प्लावयन्त्याशु चोदिताः परमेष्ठिना ॥ ८१
वर्षमाणा महत्तोयं पूरयन्तो वसुंधराम् ।
सुघोरमशिवं रौद्रं नाशयन्ति च पावकम् ॥ ८२
ततो द्वादशवर्षाणि पयोदास्त उपप्लवे ।
धाराभिः पूरयन्तो वै चोद्यमाना महात्मना ८३
ततः समुद्रः स्वां वेलामतिक्रामति भारत ।
पर्वताश्च विदीर्यन्ते मही चापि विदीर्यते ॥ ८४
सर्वतः सहसा भ्रान्तास्ते पयोदा नभस्तलम् ।
संवेष्टयित्वा नश्यन्ति वायुवेगपराहताः ॥ ८५
ततस्तं मारुतं घोरं स्वयंभूर्मनुजाधिप ।
आदिः पद्मालयो देवः पीत्वा स्वपिति भारत ८६
तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे ।
नष्टे देवासुरगणे यक्षराक्षसवर्जिते ॥ ८७
निर्मनुष्ये महीपाल निःश्वापदमहीरुहे ।
अनन्तरिक्षे लोकेऽस्मिन्भ्रमाम्येकोऽहमातुरः॥८८
एकार्णवे जले घोरे विचरन्पार्थिवोत्तम ।
अपश्यन्सर्वभूतानि वैक्लब्यमगमं ततः ॥ ८९
ततः सुदीर्घं गत्वाऽहं प्लवमानो धराधिप ।
श्रान्तः क्वचिन्न शरणं लब्धवानस्म्यतन्द्रितः ९०
ततः कदाचित्पश्यामि तस्मिन्सलिलसंनिधौ ।
न्यग्रोधं सुमहान्तं वै विशालं पृथिवीपते ॥ ९१
शाखायां तस्य वृक्षस्य विस्तीर्णायां नराधिप ।
पर्यङ्के पृथिवीपाल दिव्यास्तरणसंस्तृते ॥ ९२
उपविष्टं महाराज पद्मेन्दुसदृशाननम् ।
फुल्लपद्मविशालाक्षं बालं पश्यामि भारत ॥ ९३
ततो मे पृथिवीपाल विस्मयः सुमहाभूत् ।
कथं त्वयं शिशुः शेते लोके नाशमुपागते ॥ ९४
तपसा चिन्तयंश्चापि तं शिशुं नोपलक्षये ।
भूतं भव्यं भविष्यं च जानन्नपि नराधिप ॥९५
अतसीपुष्पवर्णाभः श्रीवत्सकृतभूषणः ।
साक्षाल्लक्ष्म्या इवावासः स तदा प्रतिभाति मे ९६

ततस्तं सलिलं घोरं इति क. ध. पाठः ॥ ८६ ॥

ततो मामब्रवीद्बालः स पद्मनिभलोचनः ।
श्रीवत्सधारी द्युतिमान्वाक्यं श्रुतिसुखावहम् ९७
जानामि त्वां परिश्रान्तं तात विश्रामकाङ्क्षिणम् ।
मार्कण्डेय महासत्त्वं यावदिच्छसि भार्गव ॥ ९८
अभ्यन्तरं शरीरं मे प्रविश्य मुनिसत्तम ।
आस्स्वेह विहितो वासः प्रसादस्ते कृतो मया ॥ ९९
ततो बालेन तेनैव मुक्तस्यासीत्तदा मम ।
निर्वेदो जीविते दीर्घे मनुष्यत्वे च भारत ॥ १००
ततो बालेन तेनास्यं सहसा विवृतं कृतम् ।
तस्याहमवशो वक्त्रे दैवयोगात्प्रवेशितः ॥ १०१
ततः प्रविष्टस्तत्कुक्षिं सहसा मनुजाधिप ।
सराष्ट्रनगराकीर्णां कृत्स्नां पश्यामि मेदिनीम् १०२
गङ्गां शतद्रुं सीतां च यमुनामथ कौशिकीम् ।
चर्मण्वतीं वेत्रवतीं चन्द्रभागां सरस्वतीम् ॥ १०३
सिन्धुं चैव विपाशां च नदीं गोदावरीमपि ।
वस्वोकसारां नलिनीं नर्मदां चैव भारत ॥ १०४
नदीं ताम्रां च वेणां च पुण्यतोयां शुभावहाम् ।
सुवेणां कृष्णवेणां च इरामां च महानदीम् १०५
वितस्तां च महाराज कावेरीं च महानदीम् ।
'तुङ्गभद्रां कृष्णवेणीं कमलां च महानदीम् ।'
शोणं च पुरुषव्याघ्र विशल्यां किंपुनामपि १०६
एताश्चान्याश्च नद्योऽहं पृथिव्यां या नरोत्तम ।
परिक्रामन्प्रपश्यामि तस्य कुक्षौ महात्मनः १०७
ततः समुद्रं पश्यामि यादोगणनिषेवितम् ।
रत्नाकरममित्रघ्न पयसोनिधिमुत्तमम् ॥ १०८
ततः पश्यामि गगनं चन्द्रसूर्यविराजितम् ।
जाज्वल्यमानं तेजोभिः पावकार्कसमप्रभम् १०९
पश्यामि च महीं राजन्काननैरुपशोभिताम् ।
'सपर्वतवनद्वीपां निम्नगाशतसंकुलाम् ॥ ११०
यजन्ते हि ततो राजन्ब्राह्मणा बहुभिर्मखैः ।
क्षत्रियाश्च प्रवर्तन्ते सर्ववर्णानुरञ्जनैः ॥ १११
वैश्याः कृषिं यथान्यायं कारयन्ति नराधिप ।
शुश्रूषायां च निरता द्विजानां वृषलास्तथा ११२

एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

ततः परिपतन्राजंस्तस्य कुक्षौ महात्मनः ।
हिमवन्तं च पश्यामि हेमकूटं च पर्वतम् ॥११३
निषधं चापि पश्यामि श्वेतं च रजतान्वितम् ।
पश्यामि च महीपाल पर्वतं गन्धमादनम् ११४
मन्दरं मनुजव्याघ्र नीलं चापि महागिरिम् ।
पश्यामि च महाराज मेरुं कनकपर्वतम् ॥ ११५
महेन्द्रं चैव पश्यामि विन्ध्यं च गिरिमुत्तमम् ।
मलयं चापि पश्यामि पारियात्रं च पर्वतम्११६
एते चान्ये च बहवो यावन्तः पृथिवीधराः ।
तस्योदरे मया दृष्टाः सर्वे रत्नविभूषिताः ॥ ११७
सिंहान्व्याघ्रान्वराहांश्च पश्यामि मनुजाधिप ।
पृथिव्यां यानि चान्यानि सत्त्वानि जगतीपते ।
तानि सर्वाण्यहं तत्र पश्यन्पर्यचरं तदा ॥ ११८
कुक्षौ तस्य नरव्याघ्र प्रविष्टः संचरन्दिशः ।
शक्रादींश्चापि पश्यामि कृत्स्नान्देवगणानहम्११९
साध्यान्रुद्रांस्तथाऽऽदित्यान्गुह्यकान्पितरस्तथा ।
सर्पान्नागान्सुपर्णांश्च वसूनप्यश्विनावपि ॥ १२०
गन्धर्वाप्सरसो यक्षानृषींश्चैव महीपते ।
दैत्यदानवसङ्घांश्च नागांश्च मनुजाधिप ॥ १२१
सिंहिकातनयांश्चापि ये चान्ये सुरशत्रवः ।
यच्च किंचिन्मया लोके दृष्टं स्थावरजङ्गमम् १२२
सर्वं पश्याम्यहं राजंस्तस्य कुक्षौ महात्मनः ।
त्वरमाणः फलाहारः कृत्स्नं जगदिदं विभो१२३
अन्तःशरीरे तस्याहं वर्षाणामधिकं शतम् ।
न च पश्यामि यस्याहं देहस्यान्तं कदाचन१२४
सततं धावमानश्च चिन्तयानो विशांपते ।
'भ्रमंस्तत्र महीपाल यदा वर्षगणान्बहून् ।'
आसादयामि नैवान्तं तस्य राजन्महात्मनः१२५
ततस्तमेव शरणं गतोस्मि विधिवत्तदा ।
वरेण्यं वरदं देवं मनसा कर्मणैव च ॥ १२६
ततोऽहं सहसा राजन्वायुवेगेन निःसृतः ।
महात्मनो मुखात्तस्य विवृतात्पुरुषोत्तम ॥ १२७
ततस्तस्यैव शाखायां न्यग्रोधस्य विशांपते ।
आस्ते मनुजशार्दूल कृत्स्नमादाय वै जगत् १२८
तेनैव बालवेषेण श्रीवत्सकृतलक्षणम् ।
आसीनं तं नरव्याघ्र पश्याम्यमिततेजसम् १२९
ततो मामब्रवीद्बालः स प्रीतः प्रहसन्निव ।
श्रीवत्सधारी द्युतिमान्पीतवासा महाद्युतिः१३०
अपीदानीं शरीरेऽस्मिन्मामके मुनिसत्तम ।
उषितस्त्वं परिश्रान्तो मार्कण्डेय ब्रवीहि मे १३१
मुहूर्तादथ मे दृष्टिः प्रादुर्भूता पुनर्नवा ।
मायानिर्मुक्तमात्मानमपश्यं लब्धचेतसम्॥१३२
तस्य ताम्रतलौ तात चरणौ सुप्रतिष्ठितौ ।
सुजातौ मृदुरक्ताभिरङ्गुलीभिर्विराजितौ ॥ १३३
प्रयत्नेन मया मूर्ध्ना गृहीत्वा ह्यभिवन्दितौ ।
दृष्ट्वाऽपरिमितं तस्य प्रभावममितौजसः ॥ १३४
विनयेनाञ्जलिं कृत्वा प्रयत्नेनोपगम्य ह ।
दृष्टो मया स भूतात्मा देवः कमललोचनः१३५
तमहं प्राञ्जलिर्भूत्वा नमस्कृत्येदमब्रवम् ।
ज्ञातुमिच्छामि देव त्वां मायां चैतां तवोत्तमाम्॥
आस्येनानुप्रविष्टोऽहं शरीरे भगवंस्तव ।
दृष्टवानखिलाँल्लोकान्समस्तान्जठरे हि ते ॥ १३७
तव देव शरीरस्था देवदानवराक्षसाः ।
यक्षगन्धर्वनागाश्च जगत्स्थावरजङ्गमम् ॥ १३८
त्वत्प्रसादाच्च मे देव स्मृतिर्न परिहीयते ।
द्रुतमन्तःशरीरे ते सततं परिवर्तिनः ॥ १३९
निर्गतोऽहमकामस्तु इच्छया ते महाप्रभो ।
यतिष्ये पुण्डरीकाक्ष ज्ञातुं त्वाऽहमनिन्दितं१४०
इह भूत्वा शिशुः साक्षात्किं भवानवतिष्ठते ।
पीत्वा जगदिदं सर्वमेतदाख्यातुमर्हसि ॥ १४१
किमर्थं च जगत्सर्वं शरीरस्थं तवानघ ।
कियन्तं च त्वया कालमिह स्थेयमरिंदम ॥१४२
एतदिच्छामि देवेश श्रोतुं ब्राह्मणकाम्यया ।
त्वत्तः कमलपत्राक्ष विस्तरेण यथातथम् ।
महद्ध्येतदचिन्त्यं च यदहं दृष्टवान्प्रभो ॥ १४३
इत्युक्तः स मया श्रीमान्देवदेवो महाद्युतिः ।
सान्त्वयन्मामिदं वाक्यमुवाच वदतांवरः ॥१४४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

## द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

हरिणा मार्कण्डेयंप्रति स्वमाहात्म्यकथनपूर्वकमन्तर्धानम् ॥ १ ॥ मार्कण्डेयेन युधिष्ठिरादीन्प्रति कृष्णस्य सर्वोत्तमत्व-प्रतिपादनेन तंप्रति शरणागमनचोदना ॥ २ ॥ कृष्णेन तेषां समाश्वासनम् ॥ ३ ॥

देव उवाच ।
कामं देवाऽपि मां विप्र न हि जानन्ति तत्त्वतः ।
त्वत्प्रीत्या तु प्रवक्ष्यामि यथेदं विसृजाम्यहम् ॥ १
पितृभक्तोसि विप्रर्षे मां चैव शरणं गतः ।
ततो दृष्टोसि ते साक्षाद्ब्रह्मचर्यं च ते महत् ॥ २
आपो नारा इति प्रोक्तास्तासां नाम कृतं मया ।
तेन नारायणोप्युक्तो मम तत्त्वयनं सदा ॥ ३
अहं नारायणो नाम प्रभवः शाश्वतोऽव्ययः ।
विधाता सर्वभूतानां संहर्ता च द्विजोत्तम ॥ ४
अहं विष्णुरहं ब्रह्मा शक्रश्चाहं सुराधिपः ।
अहं वैश्रवणो राजा यमः प्रेताधिपस्तथा ॥ ५
अहं शिवश्च सोमश्च कश्यपोऽथ प्रजापतिः ।
अहं धाता विधाता च यज्ञश्चाहं द्विजोत्तम ॥ ६
अग्निरास्यं क्षितिः पादौ चन्द्रादित्यौ च लोचने ।
द्यौर्मूर्धा मे दिशः श्रोत्रे तथाऽऽपः स्वेदसंभवाः ।
सकलं च नभः कायो वायुर्मनसि मे स्थितः ॥ ७
मया क्रतुशतैरिष्टं बहुभिस्त्वाप्तदक्षिणैः ।
यजन्ते वेदविदुषो मां देवसदने स्थितम् ॥ ८
पृथिव्यां क्षत्रियेन्द्राश्च पार्थिवाः स्वर्गकाङ्क्षिणः ।
यजन्ते मां तथा वैश्याः स्वर्गलोकजिगीषया ॥ ९
चतुःसमुद्रपर्यन्तां मेरुमन्दरभूषणाम् ।
शेषो भूत्वाऽहमेवैतां धारयामि वसुंधराम् ॥ १०
वाराहं रूपमास्थाय मयेयं जगती पुरा ।
मज्जमाना जले विप्र वीर्येणासीत्समुद्धृता ॥ ११
अग्निश्च बडबावक्त्रे भूत्वाऽहं द्विजसत्तम ।
पिबाम्यापः सदा विद्वंस्ताश्चैव विसृजाम्यहम् १२
ब्रह्म वक्त्रं भुजौ क्षत्रमूरू मे संस्थिता विशः ।
पादौ शूद्रा भवन्तीमे विक्रमेण क्रमेण च ॥ १३
ऋग्वेदः सामवेदश्च यजुर्वेदोऽप्यथर्वणः ।
मत्तः प्रादुर्भवन्त्येते मामेव प्रविशन्ति च ॥ १४
यतयः शान्तिपरमा यतात्मानो मुमुक्षवः ।
कामक्रोधद्वेषमुक्ता निःसंज्ञा वीतकल्मषाः ॥ १५
सत्वस्था निरहंकारा नित्यमध्यात्मकोविदाः ।
मामेव सततं विप्राश्चिन्तयन्त उपासते ॥ १६
अहं संवर्तको वह्निरहं संवर्तको यमः ।
अहं संवर्तकः सूर्यस्त्वहं संवर्तकोऽनिलः ॥ १७
तारारूपाणि दृश्यन्ते यान्येतानि नभस्तले ।
मम रूपाण्यथैतानि विद्धि त्वं द्विजसत्तम ॥ १८
रत्नाकराः समुद्राश्च सर्व एव चतुर्दिशः ।
वसनं शयनं चैव विलयं चैव विद्धि मे ॥ १९
मयैव सुविभक्तास्ते देवकार्यार्थसिद्धये ।
कामं क्रोधं च हर्षं च भयं मोहं तथैव च ।
ममैव विद्धि रोमाणि सर्वाण्येतानि सत्तम ॥ २०
प्राप्नुवन्ति नरा विप्र यत्कृत्वा कर्म शोभनम् ।
सत्यं दानं तपश्चोग्रमहिंसा चैव जन्तुषु ॥ २१
मद्विधानेन विहिता मम देहविहारिणः ।
मयाऽभिभूतविज्ञाना विचेष्टन्ते न कामतः ॥ २२
सम्यग्वेदमधीयाना यजन्ते विविधैर्मखैः ।
शान्तात्मानो जितक्रोधाः प्राप्नुवन्ति द्विजातयः ॥
प्राप्तुं न शक्यो यो विद्वन्नरैर्दुष्कृतकर्मभिः ।
लोभाभिभूतैः कृपणैरनार्यैरकृतात्मभिः ॥ २४
तस्मान्महाफलं विद्धि पदं सुकृतकर्मणः ।
सुदुष्प्रापं विमूढानां मार्गं योगैर्निषेवितम् ॥ २५
यदा यदा च धर्मस्य ग्लानिर्भवति सत्तम ।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् २६
दैत्या हिंसानुरक्ताश्च अवध्याः सुरसत्तमैः ।
राक्षसाश्चापि लोकेऽस्मिन्यदोत्पत्स्यन्ति दारुणाः ॥
तदाऽहं संप्रसूयामि गृहेषु शुभकर्मणाम् ।
प्रविष्टो मानुषं देहं सर्वं प्रशमयाम्यहम् ॥ २८
सृष्ट्वा देवमनुष्यांस्तु गन्धर्वोरगराक्षसान् ।
स्थावराणि च भूतानि संहराम्यात्ममायया ॥ २९

ते त्वया ॥ २ ॥

कर्मकाले पुनर्देहमनुचिन्त्य सृजाम्यहम् ।
आविश्य मानुषं देहं मर्यादाबन्धकारणात् ॥३०
श्वेतः कृतयुगे वर्णः पीतस्त्रेतायुगे मम ।
श्यामो द्वापरमासाद्य कृष्णः कलियुगे तथा ३१
त्रयो भागा ह्यधर्मस्य तस्मिन्काले भवन्ति च ।
'यदा भवति मे वर्णः कृष्णो वै द्विजसत्तम' ३२
अन्तकाले च संप्राप्ते कालो भूत्वाऽतिदारुणः ।
त्रैलोक्यं नाशयाम्येकः कृत्स्नं स्थावरजङ्गमम् ३३
अहं त्रिवर्त्मा विश्वात्मा सर्वलोकसुखावहः ।
अजितः सर्वगोऽनन्तो हृषीकेश उरुक्रमः ।
कालचक्रं नयाम्येको ब्रह्मन्नहमरूपकम् ॥ ३४
शमनं सर्वभूतानां सर्वकालकृतोद्यमम् ।
एवं प्रणिहितः सम्यङ्मायया मुनिसत्तम ।
सर्वभूतेषु विप्रेन्द्र न च मां वेत्ति कश्चन ॥ ३५
सर्वलोके च मां भक्ताः पूजयन्ति च सर्वशः ॥
यच्च किंचित्त्वया प्राप्तं मयि क्लेशात्मकं द्विज ।
सुखोदयाय तत्सर्वं श्रेयसे च तवानघ ॥ ३७
यच्च किंचित्त्वया लोके दृष्टं स्थावरजङ्गमम् ।
विहितः सर्वथैवासौ ममात्मा भूतभावनः ॥ ३८
अर्धं मम शरीरस्य सर्वलोकपितामहः ।
अहं नारायणो नाम शङ्खचक्रगदाधरः ॥ ३९
यावद्युगानां विप्रर्षे सहस्रपरिवर्तनम् ।
तावत्स्वपिमि विश्वात्मा सर्वलोकपितामहः ॥४०
एवं सर्वमहं कालमिहासे मुनिसत्तम ।
अशिशुः शिशुरूपेण यावद्ब्रह्मा न बुध्यते ॥ ४१
मया च दत्तो विप्राग्र्य वरस्ते ब्रह्मरूपिणा ।
असकृत्परितुष्टेन विप्रर्षिगणपूजित ॥ ४२
सर्वमेकार्णवं दृष्ट्वा नष्टं स्थावरजङ्गमम् ।
विक्लबोसि मया ज्ञातस्ततस्ते दर्शितं जगत् ॥४३
अभ्यन्तरं शरीरस्य प्रविष्टोसि यदा मम ।
दृष्ट्वा लोकं समस्तं च विस्मितो नावबुध्यसे ॥४४
ततोसि वक्त्राद्विप्रर्षे द्रुतं निःसारितो मया ।
आख्यातस्ते मया चात्मा दुर्ज्ञेयोपि सुरासुरैः ४५
यावत्स भगवान्ब्रह्मा न बुध्येत महातपाः ।
तावत्त्वमिह विप्रर्षे विस्रब्धश्चर वै सुखम् ॥ ४६
ततो विबुद्धे तस्मिंस्तु सर्वलोकपितामहे ।
एकीभूतः प्रवेक्ष्यामि शरीराणि द्विजोत्तम ॥ ४७
आकाशं पृथिवीं ज्योतिर्वायुं सलिलमेव च ।
लोके यच्च भवेच्छेषमिह स्थावरजङ्गमम् ॥ ४८

मार्कण्डेय उवाच ।

इत्युक्त्वान्तर्हितस्तात स देवः परमाद्भुतः ।
प्रजाश्चेमाः प्रपश्यामि विचित्रा विविधाः कृताः ॥
एवं दृष्टं मया राजंस्तस्मिन्प्राप्ते युगक्षये ।
आश्चर्यं भरतश्रेष्ठ सर्वधर्मभृतांवर ॥ ५०
यः स देवो मया दृष्टः पुरा पद्मायतेक्षणः ।
स एष पुरुषव्याघ्र संबन्धी ते जनार्दनः ॥ ५१
अस्यैव वरदानाद्धि स्मृतिर्न प्रजहाति माम् ।
दीर्घमायुश्च कौन्तेय स्वच्छन्दमरणं मम ॥ ५२
स एष कृष्णो वार्ष्णेयः पुराणपुरुषो विभुः ।
आस्ते हरिरचिन्त्यात्मा क्रीडन्निव महाभुजः ५३
एष धाता विधाता च संहर्ता चैव शाश्वतः ।
श्रीवत्सवक्षा गोविन्दः प्रजापतिपतिः प्रभुः॥५४
दृष्ट्वेमं वृष्णिप्रवरं स्मृतिर्मामियमागता ।
आदिदेवमयं जिष्णुं पुरुषं पीतवाससम् ॥ ५५
सर्वेषामेव भूतानां पिता माता च माधवः ।
गच्छध्वमेनं शरणं शरण्यं कौरवर्षभाः ॥ ५६

वैशंपायन उवाच ।

एवमुक्ताश्च ते पार्था यमौ च पुरुषर्षभौ ।
द्रौपद्या सहिताः सर्वे नमश्चक्रुर्जनार्दनम् ॥ ५७
स चैतान्पुरुषव्याघ्र साम्ना परमवल्गुना ।
सान्त्वयामास मानार्हो मन्यमानो यथाविधि ५८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

---

रक्तो द्वापरमासाद्य इति झ. पाठः ॥ ३१ ॥ एकीभूतो हि स्रक्ष्यामि इति झ. पाठः ॥ ४७ ॥

द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

## त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

मार्कण्डेयेन युधिष्ठिरंप्रति कलौ भविष्यल्लोकवृत्तान्तकथनम् ॥ १ ॥ कलियुगान्ते कल्कित्वेनावतरिष्यता हरिणा दुष्टजनसंहारः ॥ २ ॥

वैशंपायन उवाच ।
युधिष्ठिरस्तु कौन्तेयो मार्कण्डेयं महामुनिम् ।
पुनः पप्रच्छ सामात्यो भविष्यां जगतो गतिम् १

युधिष्ठिर उवाच ।
आश्चर्यभूतं भवतः श्रुतं नो वदतांवर ।
मुने भार्गव यद्वृत्तं युगादौ प्रभवाप्ययौ ॥ २
अस्मिन्कलियुगे त्वस्ति पुनः कौतूहलं मम ।
समाकुलेषु धर्मेषु किंनु शेषं भविष्यति ॥ ३
किंवीर्या मानवास्तत्र किमाहारविहारिणः ।
किमायुषः किंवसना भविष्यन्ति युगक्षये ॥ ४
कां च काष्ठां समासाद्य पुनः संपत्स्यते कृतम् ।
विस्तरेण मुने ब्रूहि विचित्राणीह भाषसे ॥ ५
इत्युक्तः स मुनिश्रेष्ठः पुनरेवाभ्यभाषत ।
रमयन्वृष्णिशार्दूलं पाण्डवांश्च महानृषिः ॥ ६
शृणु राजन्मया दृष्टं यत्पुरा श्रुतमेव च ।
अनुभूतं च राजेन्द्र देवदेवप्रसादजम् ॥ ७
भविष्यं सर्वलोकस्य वृत्तान्तं भरतर्षभ ।
कलुषं कालमासाद्य कथ्यमानं निबोध मे ॥ ८
कृते चतुष्पात्सकलो निर्व्याजोपाधिवर्जितः ।
वृषः प्रतिष्ठितो धर्मो मनुष्ये भरतर्षभ ॥ ९
अधर्मपादविद्धस्तु त्रिभिरंशैः प्रतिष्ठितः ।
त्रेतायां द्वापरेऽर्धेन व्यामिश्रो धर्म उच्यते ॥१०
त्रिभिरंशैरधर्मस्तु लोकानाक्रम्य तिष्ठति ।
तामसं युगमासाद्य तदा भरतसत्तम ॥ ११
चतुर्थांशेन धर्मस्तु मनुष्यानुपतिष्ठति ।
आयुर्वीर्यं मनो बुद्धिर्बलं तेजश्च पाण्डव ॥ १२
मनुष्याणामनुयुगं ह्रसन्तीति निबोध मे ।
ब्राह्मणाःक्षत्रिया वैश्याः शूद्राश्चैव युधिष्ठिर ॥१३
व्याजैर्धर्मं चरिष्यन्ति धर्मवैतंसिका नराः ।
सत्यं संक्षेप्स्यते लोके नरैः पण्डितमानिभिः ॥१४
सत्यहान्या ततस्तेषामायुरल्पं भविष्यति ।
आयुषः प्रक्षयाद्विद्यां न शक्ष्यन्त्युपशिक्षितुम् १५
विद्याहीनानविज्ञानाल्लोभोप्यभिभविष्यति ।
लोभमोहपरा मूढाः कामासक्ताश्च मानवाः ॥१६
वैरबद्धा भविष्यन्ति परस्परवधैषिणः ।
ब्राह्मणाः क्षत्रिया वैश्याः संकीर्यन्ते परस्परम् १७
शूद्रतुल्या भविष्यन्ति तपःसत्यविवर्जिताः ।
अन्त्या मध्या भविष्यन्ति मध्याश्चान्त्या न संशयः
ईदृशो भविता लोको युगान्ते पर्युपस्थिते ।
वस्त्राणां प्रवरा शाणी धान्यानां कोरदूषकाः १९
भार्यामित्राश्च पुरुषा भविष्यन्ति युगक्षये ।
मत्स्यामिषेण जीवन्तो दुहन्तश्चाप्यजैडकम् ॥२०
गोषु नष्टासु पुरुषा येऽपि नित्यं धृतव्रताः ।
तेऽपि लोभसमायुक्ता भविष्यन्ति युगक्षये ॥२१
अन्योन्यं परिमुष्णन्तो हिंसयन्तश्च मानवाः ।
अजपा नास्तिकाः स्तेना भविष्यन्ति युगक्षये २२
सरित्तीरेषु कुद्दालैर्वापयिष्यन्ति चौषधीः ।
ताश्चाप्यल्पफलास्तेषां भविष्यन्ति युगक्षये ॥ २३
श्राद्धे दैवे च पुरुषा येऽपि नित्यं धृतव्रताः ।
तेऽपि लोभसमायुक्ता भोक्ष्यन्तीह परस्परम् २४
पिता पुत्रस्य भोक्ता च पितुः पुत्रस्तथैव च ।
अतिक्रान्तानि भोज्यानि भविष्यन्ति युगक्षये२५
न व्रतानि चरिष्यन्ति ब्राह्मणा वेदनिन्दकाः ।
न यक्ष्यन्ति न होष्यन्ति हेतुवादविमोहिताः ।
निम्नेष्वीहां करिष्यन्ति हेतुवादविमोहिताः ॥२६
निम्ने कृषिं करिष्यन्ति योक्ष्यन्ति धुरि धेनुकाः ।

शेषं जगद्भविष्यति उत्कर्षं प्राप्स्यति ॥ ३ ॥ काष्ठां अवधिम् । कृतं कृतयुगम् ॥ ५ ॥ कलुषं कलिम् ॥ ८ ॥ निर्व्याजश्छद्महीनः। उपाधिवर्जितः लोभादिहीनः । वृषइव चतुष्पात् ॥ ९ ॥ अर्धेनाधर्मेण ॥ १० ॥ धर्मवैतंसिकाः धर्मजालिकाः धर्मजालं विस्तार्य लोकान्वञ्चयन्तीत्यर्थः ॥ १४ ॥ अन्त्या इति । चाण्डालाः क्षत्रियादिकर्म क्षत्रियादयश्चाण्डालकर्म करिष्यन्तीत्यर्थः ॥ १८ ॥ शाणी शणसूत्रजा प्रवराशाटीति ख. पाठः ॥ १९ ॥ निम्नेषु हीनेषु कर्मसु ॥ २६ ॥

एकहायनवत्सांश्च वाहयिष्यन्ति मानवाः ॥ २७
पुत्रः पितृवधं कृत्वा पिता पुत्रवधं तथा ।
'स्त्रियोऽपि पतिपुत्रादीन्वधिष्यन्ति युगक्षये ।'
निरुद्वेगो बृहद्वादी न निन्दामुपलप्स्यते ॥ २८
म्लेच्छभूतं जगत्सर्वं निष्क्रियं दानवर्जितम् ।
भविष्यति निरानन्दमनुत्सवमथो तथा ॥ २९
प्रायशः कृपणानां हि तथा बन्धुमतामपि ।
विधवानां च वित्तानि हरिष्यन्तीह मानवाः ३०
स्वल्पवीर्यबलाः स्तब्धा लोभमोहपरायणाः ।
तत्कथादानसंतुष्टाः शिष्टानामपि बान्धवाः ॥३१
परिग्रहं करिष्यन्ति मायाचारपरिग्रहाः ।
संघातयन्तः कौन्तेय राजानः पापबुद्धयः ॥ ३२
परस्परवधोद्युक्ता मूर्खाः पण्डितमानिनः ।
भविष्यन्ति युगस्यान्ते क्षत्रिया लोककण्टकाः ३३
अरक्षितारो लुब्धाश्च मानाहंकारदर्पिताः ।
केवलं दण्डरुचयो भविष्यन्ति युगक्षये ॥ ३४
आक्रम्याक्रम्य साधूनां दारांश्चापि धनानि च ।
भोक्ष्यन्ते निरनुक्रोशा रुदतामपि भारत ॥ ३५
न कन्यां याचते कश्चिन्नापि कन्या प्रदीयते ।
स्वयंग्रहा भविष्यन्ति युगान्ते समुपस्थिते ॥ ३६
राजानश्चाप्यसंतुष्टाः परार्थान्मूढचेतसः ।
सर्वोपायैर्हरिष्यन्ति युगान्ते पर्युपस्थिते ॥ ३७
म्लेच्छीभूतं जगत्सर्वं भविष्यति न संशयः ।
हस्तो हस्तं परिमुषेद्युगान्ते समुपस्थिते ॥ ३८
सत्यं संक्षिप्यते लोके नरैः पण्डितमानिभिः ।
स्थविरा बालमतयो बालाः स्थविरबुद्धयः ॥ ३९
भीरुस्तथा शूरमानी शूरा भीरुविषादिनः ।
न विश्वसन्ति चान्योन्यं युगान्ते पर्युपस्थिते ४०
नैकभार्यं जगत्सर्वं लोभमोहव्यवस्थितम् ।
अधर्मो वर्धते तत्र न तु धर्मः प्रवर्तते ॥ ४१

ब्राह्मणाः क्षत्रिया वैश्या नशिष्यन्ति जनाधिप ।
एकवर्णस्तदा लोको भविष्यति युगक्षये ॥ ४२
न क्षंस्यति पिता पुत्रं पुत्रश्च पितरं तथा ।
भार्याश्च पतिशुश्रूषां न करिष्यन्ति संक्षये ॥ ४३
ये यवान्ना जनपदा गोधूमान्नास्तथैव च ।
तान्देशान्संश्रयिष्यन्ति युगान्ते पर्युपस्थिते ॥४४
स्वैराहाराश्च पुरुषा योषितश्च विशांपते ।
अन्योन्यं न सहिष्यन्ति युगान्ते पर्युपस्थिते ॥४५
म्लेच्छभूतं जगत्सर्वं भविष्यति युधिष्ठिर ।
श्राद्धे न देवान्न पितृंस्तर्पयिष्यन्ति मानवाः ॥४६
न कश्चित्कस्यचिच्छ्रोता न कश्चित्कस्यचिद्गुरुः ।
तमोग्रस्तस्तदा लोको भविष्यति जनाधिप ॥४७
परमायुश्च भविता तदा वर्षाणि षोडश ।
ततः प्राणान्विमोक्ष्यन्ति युगान्ते समुपस्थिते ४८
पञ्चमे वाऽथ षष्ठे वा वर्षे कन्या प्रसूयते ।
सप्तवर्षाष्टवर्षाश्च प्रजास्यन्ति नरास्तदा ॥ ४९
पत्यौ स्त्री तु तदा राजन्पुरुषो वा स्त्रियं प्रति ।
युगान्ते राजशार्दूल न तोषमुपयास्यति ॥ ५०
अल्पद्रव्या वृथालिङ्गा हिंसा च प्रभविष्यति ।
न कश्चित्कस्यचिद्दाता भविष्यति युगक्षये ॥५१
अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ।
केशशूलाः स्त्रियश्चापि भविष्यन्ति युगक्षये ॥५२
म्लेच्छाचाराः सर्वभक्षा दारुणाः सर्वकर्मसु ।
भाविनः पश्चिमे काले मनुष्या नात्र संशयः ५३
क्रयविक्रयकाले च सर्वः सर्वस्य वञ्चनम् ।
युगान्ते भरतश्रेष्ठ वित्तलोभात्करिष्यति ॥ ५४
ज्ञानानि चाप्यविज्ञाय करिष्यन्ति क्रियास्तथा ।
आत्मच्छन्देन वर्तन्ते युगान्ते समुपस्थिते ॥ ५५
स्वभावात्क्रूरकर्माणश्चान्योन्यमभिशंसिनः ।
भवितारो जनाः सर्वे संप्राप्ते तु युगक्षये ॥ ५६

---

पापाचारपरिग्रहा इति ध.पाठः॥३२॥ परार्थान्परधनानि॥३७॥ हस्तो हस्तं परिमुषेद्धस्तवदेकोदरजोपि भ्राता भ्रातरं वञ्चयेदेव ॥ ३८ ॥ एकाहार्यं युगं सर्वमिति झ. पाठः । एकाहार्यं एकविधमेव मांसशाकादिकमाहारमर्हतीति तथा । भक्ष्याभक्ष्यविभागो नास्तीत्यर्थः ॥ ४१ ॥ एकवर्णः वर्णविभागनाशनात् ॥ ४२ ॥ न रक्षति पिता पुत्रमिति ध. पाठः ॥ ४३ ॥ स्वैराचाराश्चेति झ. पाठः ॥ ४५ ॥ प्रजास्यन्ति प्रजाः जनयिष्यन्ति ॥ ४९ ॥ ज्ञानानि ज्ञेयस्वरूपाणि ॥ ५५ ॥ श्चान्योन्यमभिशङ्किता इति ध. पाठः ॥ ५६ ॥

आरामांश्चैव वृक्षांश्च नाशयिष्यन्ति निर्व्यथाः ।
भविता संशयो लोके जीवितस्य हि देहिनाम् ५७
तथा लोभाभिभूताश्च भविष्यन्ति नरा नृप ।
ब्राह्मणांश्च हनिष्यन्ति ब्राह्मणस्वोपभोगिनः ॥५८
हाहाकृता द्विजाश्चैव भयार्ता वृषलार्दिताः ।
त्रातारमलभन्तो वै भ्रमिष्यन्ति महीमिमाम् ५९
जीवितान्तकराः क्रूरा रौद्राः प्राणिविहिंसकाः ।
यदा भविष्यन्ति नरास्तदा संक्षेप्स्यते युगम् ॥६०
आश्रयिष्यन्ति च नदीः पर्वतान्विषमाणि च ।
प्रधावमाना वित्रस्ता द्विजाः कुरुकुलोद्वह ॥ ६१
दस्युभिः पीडिता राजन्काका इव द्विजोत्तमाः ।
कुराजभिश्च सततं करभारप्रपीडिताः ॥ ६२
धैर्यं त्यक्त्वा महीपाल दारुणे युगसंक्षये ।
विकर्माणि करिष्यन्ति शूद्राणां परिचारकाः॥६३
शूद्रा धर्मं प्रवक्ष्यन्ति ब्राह्मणाः पर्युपासकाः ।
श्रोतारश्च भविष्यन्ति प्रामाण्येन व्यवस्थिताः६४
विपरीतश्च लोकोऽयं भविष्यत्यधरोत्तरः ।
एडूकान्पूजयिष्यन्ति वर्जयिष्यन्ति देवताः ।
शूद्राश्च प्रभविष्यन्ति न द्विजा युगसंक्षये ॥ ६५
आश्रमेषु महर्षीणां ब्राह्मणावसथेषु च ।
देवस्थानेषु चैत्येषु नागानामालयेषु च ॥ ६६
एडूकचिह्ना पृथिवी न देवगृहभूषिता ।
भविष्यति युगे क्षीणे तद्युगान्तस्य लक्षणम् ॥६७
यदा रौद्रा धर्महीना मांसादाः पानपास्तथा ।
भविष्यन्ति नरा नित्यं तदा संक्षेप्स्यते युगम् ६८
पुष्पं पुष्पे यदा राजन्फले वा फलमाश्रितम् ।
प्रजास्यति महाराज तदा संक्षेप्स्यते युगम् ॥६९
अकालवर्षी पर्जन्यो भविष्यति गते युगे ।
अक्रमेण मनुष्याणां भविष्यन्ति तदा क्रियाः ७०
विरोधमथ यास्यन्ति वृषला ब्राह्मणैः सह ।
मही म्लेच्छजनाकीर्णा भविष्यति ततोऽचिरात् ॥

करभारभयाद्विप्रा भजिष्यन्ति दिशो दश ।
'अन्यायवर्तिनश्चापि भविष्यन्ति नराधिपाः॥'७२
निर्विशेषा जनपदास्तथा विष्टिकरार्दिताः ।
आश्रमानुपलप्स्यन्ति फलमूलोपजीविनः ॥ ७३
एवं पर्याकुले लोके मर्यादा न भविष्यति ।
'ब्राह्मणाः क्षत्रिया वैश्याः परित्यक्ष्यन्ति सत्क्रियाम्'
न स्थास्यन्त्युपदेशे च शिष्या विप्रियकारिणः॥७४
आचार्योपनिधिश्चैव भर्त्स्यते तदनन्तरम् ।
अर्थयुक्त्या प्रवात्स्यन्ति मित्रसंबन्धिबान्धवाः ७५
अभावः सर्वभूतानां युगान्ते संभविष्यति ।
दिशः प्रज्वलिताः सर्वा नक्षत्राण्यप्रभाणि च ७६
प्रधूपितानि ज्योतींषि वाताः पर्याकुलास्तथा ।
उल्कापाताश्च बहवो महाभयनिदर्शकाः ॥ ७७
षड्भिरन्यैश्च सहितो भास्करः प्रतपिष्यति ।
तुमुलाश्चापि निर्ह्रादा दिग्दाहाश्चापि सर्वशः ।
कबन्धान्तर्हितो भानुरुदयास्तमने तदा ॥ ७८
अकालवर्षी भगवान्भविष्यति सहस्रदृक् ।
सस्यानि च न रोक्ष्यन्ति युगान्ते पर्युपस्थिते ७९
अभीक्ष्णं क्रूरवादिन्यः परुषा रुदितप्रियाः ।
भर्तॄणां वचने चैव न स्थास्यन्ति ततः स्त्रियः८०
पुत्राश्च मातापितरौ हनिष्यन्ति युगक्षये ।
सूदयिष्यन्ति च पतीन्स्त्रियः पुत्रानपाश्रिताः ८१
अपर्वणि महाराज सूर्यं राहुरुपैष्यति ।
युगान्ते हुतभुक्चापि सर्वतः प्रज्वलिष्यति ॥८२
पानीयं भोजनं चापि याचमानास्तदाऽध्वगाः ।
न लप्स्यन्ते निवासं च निरस्ताः पथि शेरते ८३
निर्घातवायसा नागाः शकुनाः समृगद्विजाः ।
रूक्षा वाचो विमोक्ष्यन्ति युगान्ते पर्युपस्थिते ८४
मित्रसंबन्धिनश्चापि संत्यक्ष्यन्ति नरास्तदा ।
जनं परिजनं चापि युगान्ते पर्युपस्थिते ॥ ८५
अथ देशान्दिशश्चापि पत्तनान्यापणानि च ।

---

संक्षयो लोक इति ध. पाठः ॥ ५७ ॥ वृषलार्दिताः शूद्रपीडिताः ॥ ५९ ॥ संक्षेप्स्यते नाशं गमिष्यति ॥ ६० ॥ काका इव सर्वतः शङ्किनः नीचवृत्त्युपजीविनो वा ॥ ६२ ॥ एडूकान् अस्थ्यङ्कितानि कुड्यानि । जाल्कान्पूजयिष्यन्तीति क. ध. पाठः

॥ ६५ ॥ निर्विशेषाः तुल्याचारवेषाः । विष्टिकराः भृतिमदत्त्वा-कारयन्ति ते ॥ ७३ ॥ आचार्योपि अपनिधिः निर्धनः भर्त्स्यते धिक्क्रियते । अर्थयुक्त्या धनयोगेन नतु स्नेहेन धर्मेण वा ॥ ७५ ॥ कबन्धान्तर्हितः राह्वन्तर्हितः ॥ ७८ ॥

क्रमशः संलयिष्यन्ति युगान्ते पर्युपस्थिते ॥ ८६
हा तात हा सुतेत्येवं तदा वाचः सुदारुणाः ।
विक्रोशमानश्चान्योन्यं जनो गां पर्यटिष्यति ८७
'भोवादिनस्तथा शूद्रा ब्राह्मणाः प्राकृतप्रियाः ।
पाषण्डजनसंकीर्णा भविष्यन्ति युगक्षये ॥' ८८
ततस्तुमुलसंघाते वर्तमाने युगक्षये ।
द्विजातिपूर्वको लोकः क्रमेण प्रभविष्यति ॥८९
ततः कालान्तरेऽन्यस्मिन्पुनर्लोकविवृद्धये ।
भविष्यति पुनर्दैवमनुकूलं यदृच्छया ॥ ९०
यदा सूर्यश्च चन्द्रश्च तथा तिष्यबृहस्पती ।
एकराशौ समेष्यन्ति प्रपत्स्यति तदा कृतम्॥९१
कालवर्षी च पर्जन्यो नक्षत्राणि शुभानि च ।
प्रदक्षिणा ग्रहाश्चापि भविष्यन्त्यनुलोमगाः ।
क्षेमं सुभिक्षमारोग्यं भविष्यति निरामयम् ॥९२
कल्की विष्णुयशा नाम द्विजः कालप्रचोदितः ।
उत्पत्स्यते महावीर्यो महाबुद्धिपराक्रमः ॥ ९३
संभूतः संभलग्रामे ब्राह्मणावसथे शुभे ।
'महात्मा वृत्तसंपन्नः प्रजानां हितकृन्नृप ॥' ९४
मनसा तस्य सर्वाणि वाहनान्यायुधानि च ।
उपस्थास्यन्ति योधाश्च शस्त्राणि कवचानि च ९५
स धर्मविजयी राजा चक्रवर्ती भविष्यति ।
स चेमं संकुलं लोकं प्रसादमुपनेष्यति ॥ ९६
उत्थितो ब्राह्मणो दीप्तः क्षयान्तकृदुदारधीः ।
संक्षेपको हि सर्वस्य युगस्य परिवर्तकः ॥ ९७
स सर्वत्र गतान्क्षुद्रान्ब्राह्मणैः परिवारितः ।
उत्सादयिष्यति तदा सर्वम्लेच्छगणान्द्विजः ॥९८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

## चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

मार्कण्डेयेन युधिष्ठिरंप्रति कृतयुगवृत्तान्तकथनपूर्वकं धर्माचरणचोदना ॥ १ ॥

मार्कण्डेय उवाच ।
ततश्चोरक्षयं कृत्वा द्विजेभ्यः पृथिवीमिमाम् ।
वाजिमेधे महायज्ञे विधिवत्कल्पयिष्यति ॥ १
स्थापयित्वा च मर्यादाः स्वयंभुविहिताः शुभाः ।
पुनः पुण्ययशःकर्म जरया संश्रयिष्यति ॥ २
तच्छीलमनुवर्त्स्यन्ति मनुष्या लोकवासिनः ।
विप्रैश्चोरक्षये चैव कृते क्षेमं भविष्यति ॥ ३
कृष्णाजिनानि शक्तीश्च त्रिशूलान्यायुधानि च ।
स्थापयन्द्विजशार्दूलो देशेषु विजितेषु च ॥ ४
संस्तूयमानो विप्रेन्द्रैर्मानयानो द्विजोत्तमान् ।
कल्की चरिष्यति महीं सदा दस्युवधे रतः ॥ ५
हा मातस्तात पुत्रेति तास्ता वाचः सुदारुणाः ।
विक्रोशमानान्सुभृशं दस्यूनेष्यति संक्षयम् ॥ ६
ततोऽधर्मविनाशो वै धर्मवृद्धिश्च भारत ।
भविष्यति कृते प्राप्ते क्रियावांश्च जनस्तथा ॥ ७
आरामाश्चैव चैत्याश्च तटाकावसथास्तथा ।
पुष्करिण्यश्च विविधा देवतायतनानि च ॥ ८
यज्ञक्रियाश्च विविधा भविष्यन्ति कृते युगे ।
ब्राह्मणाः साधवश्चैव मुनयश्च तपस्विनः ॥ ९
आश्रमा हतपाषण्डाः स्थिताः सत्ये जनास्तदा ।
जायन्ति सर्वभूतानि शुध्यमानानि चैव हि ॥ १०
सर्वेष्वृतुषु राजेन्द्र सर्वं सस्यं भविष्यति ।

यदेति । गुरुसूर्यचन्द्राः यदा युगपत्पुष्यनक्षत्रमेष्यन्ति तदा कृतयुगप्रवृत्तिरित्यर्थः ॥ ९१ ॥ संभूतः शंवलग्रामे इति ध. पाठः ॥ ९४ ॥ त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

कल्पयिष्यति दास्यति ॥ १ ॥ वनं पुण्ययशः कर्मारमणीयं प्रवेक्ष्यति । इति झ. पाठः ॥ २ ॥ विप्रैर्हेतुभिः कृतेयुगे ॥ ३ ॥ कृष्णाजिनानि ब्रह्मचारिपरिधेयानि । तेन सर्वाणि ब्राह्मणकर्माणि लक्ष्यन्ते । शक्तीरित्यादिना राजधर्माः । स्थापयन् ब्रह्मक्षत्रयोर्धर्मव्यवस्थांचक्रे इति भावः ॥ ४ ॥ प्रयन्ति सर्वबीजानि रोप्यमाणानि चैव हेति झ. पाठः । तत्र प्रयन्ति नश्यन्ति बीजानि संस्काराः रोप्यमाणानि क्रियमाणैः कर्मभिर्दृढं संपाद्यमानान्यपि ज्ञानबलान्नश्यन्तीत्यर्थः ॥ १० ॥

नरा दानेषु निरता व्रतेषु नियमेषु च ॥ ११
जपयज्ञपरा विप्रा धर्मकामा मुदा युताः ।
पालयिष्यन्ति राजानो धर्मेणेमां वसुंधराम् ॥ १२
व्यवहाररता वैश्या भविष्यन्ति कृते युगे ।
षट्कर्मनिरता विप्राः क्षत्रिया रक्षणे रताः ॥ १३
शुश्रूषायां रताः शूद्रास्तथा वर्णत्रयस्य च ।
एष धर्मः कृतयुगे त्रेतायां द्वापरे तथा ॥ १४
पश्चिमे युगकाले च यः स ते संप्रकीर्तितः ।
सर्वलोकस्य विदिता युगसङ्ख्या च पाण्डव ॥ १५
एतत्ते सर्वमाख्यातमतीतानागतं मया ।
वायुप्रोक्तमनुस्मृत्य पुराणमृषिसंस्तुतम् ॥ १६
एवं संसारमार्गा मे बहुशश्चिरजीविनः ।
दृष्टाश्चैवानुभूताश्च किं भूयः श्रोतुमिच्छसि ॥ १७
इदं चैवापरं भूयः सह भ्रातृभिरच्युत ।
धर्मसंशयमोक्षार्थं निबोध वचनं मम ॥ १८
न तेऽन्यथाऽत्र विज्ञेयो धर्मो धर्मभृतांवर ।
धर्मात्मा हि सुखं राजन्प्रेत्य चेह च नन्दति ॥ १९
निबोध च शुभां वाणीं यां प्रवक्ष्यामि तेऽनघ ।
न ब्राह्मणे परिभवः कर्तव्यस्ते कदाचन ।
ब्राह्मणः कुपितो हन्यादपि लोकान्प्रतिज्ञया ॥ २०
वैशंपायन उवाच ।
मार्कण्डेयवचः श्रुत्वा कुरूणां प्रवरो नृपः ।
उवाच वचनं धीमान्परमं परमद्युतिः ॥ २१
'एतच्छ्रुत्वा मया किं स्यात्कर्तव्यं मुनिसत्तम ।
कथं चायं जितो लोको रक्षितव्यो भविष्यति ॥' २२
कस्मिन्धर्मे मया स्थेयं प्रजाः संरक्षता मुने ।
कथं च वर्तमानो वै न च्यवेयं स्वधर्मतः ॥ २३
मार्कण्डेय उवाच ।
दयावान्सर्वभूतेषु हितो रक्तोऽनसूयकः ।
अपत्यानामिव स्नेहात्प्रजानां रक्षणे रतः ॥ २४
चर धर्मं त्यजाधर्मं पितॄन्पूर्वाननुस्मर ।
प्रमादाद्यत्कृतं तेऽभूत्सम्यग्ज्ञानेन तज्जय ॥ २५
अलं ते मानमाश्रित्य सततं प्रियवाग्भव ।
विजित्य पृथिवीं सर्वां मोदमानः सुखी भव २६
एष भूतो भविष्यश्च धर्मस्ते समुदीरितः ।
न तेऽस्त्यविदितं किंचिदतीतानागतं भुवि ॥२७
तस्मादिमं परिक्लेशं त्वं तात हृदि मा कृथाः ।
प्राज्ञास्तात न मुह्यन्ति कालेनापि प्रपीडिताः २८
एष कालो महाबाहो अपि सर्वदिवौकसाम् ।
मुह्यन्ति हि प्रजास्तात कालेनापि प्रचोदिताः २९
मा च तेऽत्र विशङ्का भूद्यन्मयोक्तं तवानघ ।
अतिशङ्क्य वचो ह्येतद्धर्मलोपो भवेत्तव ॥ ३०
जातोसि प्रथिते वंशे कुरूणां भरतर्षभ ।
कर्मणा मनसा वाचा सर्वमेतत्समाचर ॥ ३१
युधिष्ठिर उवाच ।
यत्त्वयोक्तं द्विजश्रेष्ठ वाक्यं श्रुतिमनोहरम् ।
तथा करिष्ये यत्नेन भवतः शासनं विभो ॥ ३२
न मे लोभोस्ति विप्रेन्द्र न भयं न च मत्सरः ।
करिष्यामि हि तत्सर्वमुक्तं यत्ते मयि प्रभो ॥३३
वैशंपायन उवाच ।
श्रुत्वा तु वचनं तस्य पाण्डवस्य यशस्विनः ।
संहृष्टाः पाण्डवा राजन्सहिता शार्ङ्गधन्वना ॥३४
विप्रर्षभाश्च ते सर्वे ये तत्रासन्समागताः ।
तथा कथां शुभां श्रुत्वा मार्कण्डेयस्य धीमतः ।
विस्मिताः समपद्यन्त पुराणस्य निवेदनात् ॥३५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

---

सम्यग्दानेन इति झ. पाठः ॥ २५ ॥ तस्य मार्कण्डेयस्य धीमत / इति झ. पाठः ॥ ३४ ॥ चतुर्नवत्यधिकशततमोऽध्यायः ॥१९४॥

## पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

मार्कण्डेयेन युधिष्ठिरंप्रति ब्राह्मणमाहात्म्यप्रतिपादकमण्डूकोपाख्यानकथनारम्भः ॥ १ ॥ इक्ष्वाकुवंशजेन परीक्षिन्नामकेन राज्ञा मृगयार्थं वनं प्रविष्टेन उदकादर्शनरूपसमयकरणेन मण्डूककन्यायाः परिणयः ॥ २ ॥ राज्ञा समयातिलङ्घने तया जले निमज्जनम् ॥ ३ ॥ तदन्वेषणाय राज्ञा मण्डूकहनने तापसरूपिणा मण्डूकराजेन तन्निवारणेन तस्याः स्वपुत्रीत्वकथनादिपूर्वकं पुनस्तस्मै तस्याः प्रदानम् ॥ ४ ॥ मार्कण्डेयेन मण्डूकपुत्र्याः पुत्रयोः शलदलयोर्वृत्तकथनपूर्वकं वामदेवमुनिमाहात्म्यकथनम् ॥ ५ ॥

वैशंपायन उवाच ।

भूय एव ब्राह्मणमाहात्म्यं वक्तुमर्हसीत्यब्रवीत्पाण्डवेयो मार्कण्डेयम् ॥ १

अथाचष्ट मार्कण्डेयोऽपूर्वमिदं श्रूयतां ब्राह्मणानां चरितम् ॥ २ ॥

अयोध्यायामिक्ष्वाकुकुलोद्वहः पार्थिवः परीक्षिन्नाम मृगयामगमत् ॥ ३ ॥

स एकोऽश्वेन मृगमन्वसरत् मृगो दूरमपाहरत् ॥ ४ ॥

अध्वनि जातश्रमः क्षुत्तृष्णाभिभूतश्चैकस्मिन्देशे नीलं गहनं वनषण्डमपश्यत् ॥ ५ ॥

तस्याविशेषतो वनषण्डस्य मध्येऽतीव रमणीयं सरो दृष्ट्वा साश्व एव व्यगाहत ॥ ६ ॥

अथाश्वस्तः स बिसमृणालमश्वायाग्रतो निक्षिप्य पुष्करिणीतीरे संविवेश ततः शयानो मधुरं गीतमशृणोत् ॥ ७ ॥

स श्रुत्वाऽचिन्तयन्नेह मनुष्यगतिं पश्यामि कस्य खल्वयं गीतशब्द इति ॥ ८ ॥

अथापश्यत्कन्यां परमरूपदर्शनीयां पुष्पाण्यवचिन्वतीं गायन्तीं च अथ सा राज्ञः समीपे पर्यक्रामत् ॥ ९ ॥

तामब्रवीद्राजा कस्यासि भद्रे का वा त्वमिति सा प्रत्युवाच कन्याऽस्मीति तां राजोवाचार्थी त्वयाऽहमिति ॥ १० ॥

अथोवाच कन्या समयेनाहं शक्या त्वया लब्धुं नान्यथेति राजा तां समयमपृच्छत् मण्डूकराजस्य कः समय इति ततः कन्येदमुवाच नोदकं मे दर्शयितव्यमिति ॥ ११ ॥

स राजा तां बाढमित्युक्त्वा तां समागम्य तयासह तत्र तस्थौ ॥ १२ ॥

ततस्तत्रैवासीने राजनि सा सेनाऽन्वगच्छत् ॥ १३ ॥

पदेनानुपदं दृष्ट्वा राजानं परिवार्यातिष्ठत अथ पर्याश्वस्तश्च राजा तयैव सह शिबिकया प्रायादविषादः स्वनगरमनुप्राप्य रहसि तया रममाणो न कांश्चिदपश्यत् ॥ १४ ॥

अथ प्रधानामात्योऽभ्याशचरास्तस्य स्त्रियोऽपृच्छत् ॥ १५ ॥

किमत्र प्रयोजनं वर्तते इत्यथाब्रुवंस्ताः स्त्रियः ॥ १६ ॥

अपूर्वमिव पश्याम उदकं नात्र नीयत इत्यथामात्योऽनुदकं वनं कारयित्वोदारवृक्षं बहुपुष्पफलमूलं तस्य मध्ये मुक्ताजालमयीं पार्श्वे वापीं गूढां सुधोपलिप्तां स रहस्युपगम्य राजानमब्रवीत् ॥ १७ ॥

वनमिदमुदारमनुदकं साध्वत्र सहैतया गम्यतामिति ॥ १८ ॥

स तस्य वचनात्तयैव सह देव्या तद्वनं प्राविशत्स कदाचित्तस्मिन्कानने रम्ये तयैव स व्यवाहरदथ क्षुत्तृष्णार्दितः श्रान्तोऽतिमुक्तागारमपश्यत् ॥ १९ ॥

तत्प्रविश्य राजा सह प्रियया सुसंस्कृतां विमलां सलिलपूर्णां वापीमपश्यत् ॥ २० ॥

दृष्ट्वैव च तां तस्याश्च तीरे सहैव तया देव्याऽवातिष्ठत् ॥ २१ ॥

आश्वस्त इति छेदः ॥ ७ ॥ प्रयोजनं कर्तव्यम् ॥ १६ ॥

अतिमुक्तागारं वासन्तीगृहम् ॥ १९ ॥

अथ तां देवीं स राजाऽब्रवीत्साध्ववतर वापीसलिलमिति सा तद्वचः श्रुत्वाऽवतीर्य वापीं न्यमज्जन्न पुनरुदकादुदमज्जत् ॥ २२ ॥

तां स मृगयमाणो राजा नापश्यद्वापीमथ निःस्राव्य मण्डूकं श्वभ्रमुखे दृष्ट्वा क्रुद्ध आज्ञापयामास स राजा ॥ २३ ॥

सर्वमण्डूकवधः क्रियतामिति यो मयाऽर्थी स मां मृतमण्डूकोपायनमादायोपतिष्ठेदिति ॥ २४ ॥

अथ मण्डूकवधे घोरे क्रियमाणे दिक्षु सर्वासु मण्डूकान्भयमाविवेश ते भीता मण्डूकराज्ञे यथावृत्तं न्यवेदयन् ॥ २५ ॥

ततो मण्डूकराड् तापसवेषधारी राजानमभ्यगच्छदुपेत्य चैनमुवाच ॥ २६ ॥

मा राजन्क्रोधवशं गमः प्रसादं कुरु नार्हसि मण्डूकानामनपराधिनां वधं कर्तुमिति श्लोकौ चात्र भवतः ॥ २७ ॥

मा मण्डूकाञ्जिघांसीस्त्वं कोपं संधारयाच्युत ।
प्रक्षिपन्ति वधाद्धेका जनानां परिजानताम् २८
प्रतिजानीहि नैतांस्त्वं प्राप्य क्रोधं विमोक्ष्यसे ।
अलं कृत्वा तवाधर्मं मण्डूकैः किं हतैर्हि ते ॥२९

तमेवंवादिनमिष्टजनवियोगशोकपरीतात्मा राजाऽथोवाच ॥ ३० ॥

न हि क्षम्यते तन्मया हनिष्याम्येतानेतैर्दुरात्मभिः प्रिया मे भक्षिता सर्वथैव मे वध्या मण्डूका नार्हसि विद्वन्मामुपरोद्धुमिति ॥ ३१ ॥

स तद्वाक्यमुपलभ्य व्यथितेन्द्रियमनाः प्रोवाच प्रसीद राजन्नहमायुर्नाम मण्डूकराजो मम सा दुहिता सुशोभना नाम तस्या हि दौःशील्यमेतद्बहवस्तया राजानो विप्रलब्धपूर्वा इति ॥ ३२ ॥

तमब्रवीद्राजा या सा तव दुहिता तया समर्थी सा मे दीयतामिति ॥ ३३ ॥

अथैनां राज्ञे पिताऽदादब्रवीच्चैनामेनं राजानं शुश्रूषस्वेति ॥ ३४ ॥

स एवमुक्त्वा दुहितरं क्रुद्धः शशाप यस्मात्त्वया राजानो विप्रलब्धा बहवस्तस्मादब्रह्मण्यानि तवापत्यानि भविष्यन्त्यानृतिकत्वात्तवेति ॥३५॥

स च राजा तामुपलभ्य तस्यां सुरतगुणनिबद्धहृदयो लोकत्रयैश्वर्यमिवोपलभ्य हर्षबाष्पसन्दिग्धया वाचा प्रणिपत्याभिपूज्य मण्डूकराजमब्रवीदनुगृहीतोस्मीति ॥ ३६ ॥

स च मण्डूकराजो दुहितरमनुज्ञाप्य यथागतमगच्छत् ॥ ३७ ॥

अथ कस्यचित्कालस्य तस्यां कुमारास्त्रयस्तस्य राज्ञः संबभूवुः शलो दलो बलश्चेति ततस्तेषां ज्येष्ठं शलं समये पिता राज्येऽभिषिच्य तपसि धृतात्मा वनं जगाम ॥ ३८ ॥

अथ कदाचिच्छलो मृगयामनुचरन्मृगमासाद्य रथेनान्वधावत् ॥ ३९ ॥

सूतं चोवाच शीघ्रं मां वाहयस्वेति स तथोक्तः सूतो राजानमब्रवीत् ॥ ४० ॥

न क्रियतामनुबन्धो नैष शक्यस्त्वया मृगोऽयं ग्रहीतुं यद्यपि ते रथे युक्तौ वाम्यौ स्यातामिति ततोऽब्रवीद्राजा सूतमाचक्ष्व मे वाम्यौ वाजिनौ त्वा पृच्छामीति ॥ स एवमुक्तो राजभयभीतः सूतो वामदेवशापभयभीतश्चाख्योपाचख्यौ ॥ वामदेवस्याश्वौ वाम्यौ मनोजवाविति ॥ ४१ ॥

अथैनमेवं ब्रुवाणमब्रवीद्राजा वामदेवाश्रमं प्रयाहीति स गत्वा वामदेवाश्रमं तमृषिमब्रवीत् ॥ ४२ ॥

---

प्रक्षीयते धनोद्रेको जनानामविजानताम् इति झ. पाठः । धनोद्रेकः श्रीतपसोरुत्कर्षः ॥ २८ ॥ प्रतिजानीहि निश्चयं कुरु । प्राप्य प्रापय्य मृत्युम् । क्रोधं स्त्रीशोकजम् । अलं कृत्वा मा कुरु ॥ २९ ॥ ब्रह्मण्यं ब्राह्मणहितं तेन रहितानि अब्रह्मण्यानि ॥ ३५ ॥ वाम्यौ वामदेवीयौ रथे युक्तौ अश्वौ अश्वतरौ ॥ ४१ ॥

भगवन्मृगो मे विद्धः पलायते संभावयितुमर्हसि वाम्यौ दातुमिति तमब्रवीद्दषिर्ददानि ते वाम्यौ कृतकार्येण भवता ममैव वाम्यौ निर्यातयितव्यौ क्षिप्रमिति स च तावश्वौ प्रतिगृह्यानुज्ञाप्य ऋषिं प्रायाद्वाजियुक्तेन रथेन मृगं प्रति गच्छंश्चाब्रवीत्सूतमश्वरत्नद्वयमावयोर्योग्यं नैतौ प्रतिदेयौ वामदेवायेत्युक्त्वा मृगमवाप्य स्वनगरमेत्याश्वावन्तःपुरेऽस्थापयत् ॥ ४३

अथर्षिश्चिन्तयामास तरुणो राजपुत्रः कल्याणं पत्रमासाद्य रमते न मे वाम्यौ प्रतिनिर्यातयत्यहो कष्टमिति ॥ ४४

स मनसा विचिन्त्य मासि पूर्णे शिष्यमब्रवीत् ॥ ४५

गच्छात्रेय राजानं ब्रूहि यदि पर्याप्तं निर्यातयोपाध्यायवाम्याविति स गत्वैवं तं राजानमब्रवीत्तं राजा प्रत्युवाच राज्ञामेतद्वाहनमनर्हा ब्राह्मणा रत्नानामेवंविधानां न किंचित् ब्राह्मणानामश्वैः कार्यं साधु गम्यतामिति ॥ ४६

स गत्वैतदुपाध्यायायाचष्ट तच्छ्रुत्वा वचनमप्रियं वामदेवः क्रोधपरीतात्मा स्वयमेव राजानमभिगम्याश्वार्थमचोदयन्न चाददद्राजा ॥ ४७

वामदेव उवाच ।

प्रयच्छ वाम्यौ मम पार्थिव त्वं
कृतं हि ते कार्यमाभ्यामशक्यम् ।
मा त्वा वधीद्वरुणो घोरपाशै-
र्ब्रह्मक्षत्रस्यान्तरे वर्तमानः ॥ ४८

राजोवाच ।

अनड्वाहौ सुव्रतौ साधु दान्ता-
वेतद्विप्राणां वाहनं वामदेव ।
ताभ्यां याहि त्वं यत्र कामो महर्षे-
श्छन्दांसि वै त्वादृशं संवहन्ति ॥ ४९

वामदेव उवाच ।

छन्दांसि वै मादृशं संवहन्ति
लोकेऽमुष्मिन्पार्थिव यानि सन्ति ।
अस्मिंस्तु लोके मम यानमेत-
दस्मद्विधानामपरेषां च राजन् ॥ ५०

राजोवाच ।

चत्वारस्त्वां वा गर्दभाः संवहन्तु
श्रेष्ठाश्वतर्यो हरयो वातरंहाः ।
तैस्त्वं याहि क्षत्रियस्यैष वाहो
ममैव वाम्यौ न तवैतौ हि विद्धि ॥ ५१

वामदेव उवाच ।

घोरं व्रतं ब्राह्मणस्यैतदाहु-
रेतद्राजन्यदिहाजीवमानः ।
अयस्मया घोररूपा महान्त-
श्चत्वारो वा यातुधानाः सुरौद्राः ।
मया प्रयुक्तास्त्वद्वधमीप्समाना
वहन्तु त्वां शितशूलाश्चतुर्धा ॥ ५२

राजोवाच ।

ये त्वां विदुर्ब्राह्मणं वामदेव
वाचा हन्तुं मनसा कर्मणा वा ।
ते त्वां सशिष्यमिह पातयन्तु
मद्वाक्यनुन्नाः शितशूलासिहस्ताः ॥ ५३

[वामदेव उवाच ।

ममैतौ वाम्यौ प्रतिगृह्य राजन्
पुनर्ददानीति प्रपद्य मे त्वम् ।
प्रयच्छ शीघ्रं मम वाम्यौ त्वमश्वौ
यद्यात्मानं जीवितुं ते क्षमं स्यात् ॥ ५४

राजोवाच ।

न ब्राह्मणेभ्यो मृगया प्रसूता
न त्वाऽनुशास्म्यद्यप्रभृति ह्यसत्यम् ।
तवैवाज्ञां संप्रणिधाय सर्वां
तथा ब्रह्मन्पुण्यलोकं लभेयम् ॥] ५५

---

पत्रं वाहनम् ॥ ४४ ॥ अन्तरे भेदे ॥ ४८ ॥ वाहो वाहनम् ॥ ५१ ॥ यदेतत् ब्राह्मणस्य स्वं आजीवमान उपजीवमानोसि एतदिह घोरमनिष्टपाकं व्रतं कर्म आहुरित्यन्वयः । वहंतु चतुर्दिक्षु प्रापयन्तु चतुर्धाकृत्वेति शेषः ॥ ५२ ॥ त्वां मां हन्तुमुद्युक्तं ते मदीयास्त्वामेव पातयन्त्वित्यर्थः ॥ ५३ ॥ असत्यं मिथ्यावादिनमपि त्वा त्वां नानुशास्मि न दण्डयामि । अद्य-

वामदेव उवाच ।

नानुयोगा ब्राह्मणानां भवन्ति
वाचा राजन्मनसा कर्मणा वा ।
यस्त्वेवं ब्रह्म तपसाऽन्वेति विद्वां-
स्तेन श्रेष्ठो भवति हि जीवमानः ॥ ५६

मार्कण्डेय उवाच ।

एवमुक्ते वामदेवेन राजन्
समुत्तस्थू राक्षसा घोररूपाः ।
तैः शूलहस्तैर्वध्यमानः स राजा
प्रोवाचेदं वाक्यमुच्चैस्तदानीम् ॥ ५७
इक्ष्वाकवो वा यदि मां त्यजेयु-
र्ये ते विधेया भुवि चान्ये महीपाः ।
नोत्स्रक्ष्येऽहं वामदेवस्य वाम्यौ
नैवंविधा धर्मशीला भवन्ति ॥ ५८
एवं ब्रुवन्नेव स यातुधानै-
र्हतो जगामाशु महीं क्षितीशः ।
ततो विदित्वा नृपतिं निपातित-
मिक्ष्वाकवो वै दलमभ्यषिञ्चन् ॥ ५९
राज्ये तदा तत्र गत्वा स विप्रः
प्रोवाचेदं वचनं वामदेवः ।
दलं राजानं ब्राह्मणानां हि देय-
मेवं राजन्सर्वधर्मेषु दृष्टम् ॥ ६०
बिभेषि चेत्त्वमधर्मान्नरेन्द्र
प्रयच्छ मे शीघ्रमेवाद्य वाम्यौ ।
एतच्छ्रुत्वा वामदेवस्य वाक्यं
स पार्थिवः सूतमुवाच रोषात् ॥ ६१
एकं हि मे सायकं चित्ररूपं
दिग्धं विषेणाहरसंगृहीतम् ।
येन विद्धो वामदेवः शयीत
संदश्यमानः श्वभिरार्तरूपः ॥ ६२

वामदेव उवाच ।

जानामि पुत्रं दशवर्षं तवाहं
जातं महिष्यां श्येनजितं नरेन्द्र ।
एतं जहि त्वं मद्वचनात्प्रणुन्न-
स्तूर्णं प्रियं सायकैर्घोररूपैः ॥ ६३

मार्कण्डेय उवाच ।

एवमुक्तो वामदेवेन राजन्न-
न्तःपुरे राजपुत्रं जघान ।
स सायकस्तिग्मतेजा विसृष्टः
श्रुत्वा दलस्तत्र वाक्यं बभाषे ॥ ६४
इक्ष्वाकवो हन्त चरामि वः प्रियं
निहन्मीमं विप्रमद्य प्रमथ्य ।
आनीयतामपरस्तिग्मतेजाः
पश्यध्वं मे वीर्यमद्य क्षितीशाः ॥ ६५

वामदेव उवाच ।

यत्त्वमेनं सायकं घोररूपं
विषेण दिग्धं मम संदधासि ।
न त्वेतं त्वं शरवर्यं विमोक्तुं
संधातुं वा शक्ष्यसे मानवेन्द्र ॥ ६६

राजोवाच ।

इक्ष्वाकवः पश्यत मां गृहीतं
न वै शक्नोम्येष शरं विमोक्तुम् ।
न चास्य कर्तुं नाशमभ्युत्सहामि
आयुष्मान्वै जीवतु वामदेवः ॥ ६७

वामदेव उवाच ।

संस्पृश्यैनां महिषीं सायकेन
ततस्तस्मादेनसो मोक्ष्यसे त्वम् ।
ततस्तथा कृतवान्पार्थिवस्तु
ततो मुनिं राजपुत्री बभाषे ॥ ६८

---

प्रभृति तवाज्ञामिति संबन्धः । तवापराधान् क्षमिष्ये आज्ञया च वर्तिष्ये इति वरद्वयं ज्ञेयम् ॥ ५५ ॥ अनुयोगः शासनम् । अदण्ड्या ब्राह्मणा इत्यर्थः । ब्रह्म ब्राह्मणजातिम् । यो ब्राह्मणसेवी स जीवत्यन्यो नश्यतीत्यर्थः । वरद्वयमपि निरर्थकमिति भावः ॥ ५६ ॥ ब्रह्मन्दलो वा विधेया मे यदि चेमे विशोपि इति झ. पाठः । दलः कनिष्ठो भ्राता । विधेया आज्ञाकारिणः ॥ ५८ ॥ निपातितं मृतम् ॥ ५९ ॥ एतं जहि तव सायकस्त्वत्पुत्रमेव हिंसिष्यति नतु मामित्यर्थः ॥ ६३ ॥ एवमुक्त्वा वामदेवेन स्तम्भितहस्तपादो राजोवाच इक्ष्वाकव इति॥ ६७ ॥ संस्पृश्य हत्वा । एनसो ब्रह्महत्याध्यवसायजात्पापात् ॥ ६८ ॥

यथा युक्ता वामदेवाहमेनं
दिनेदिने संदिशन्ती नृशंसम् ।
ब्राह्मणेभ्यो मृगयती सूनृतानि
तथा ब्रह्मन्पुण्यलोकं लभेयम् ॥ ६९

वामदेव उवाच ।
त्वया त्रातं राजकुलं शुभेक्षणे
वरं वृणीष्वाप्रतिमं ददानि ते ।
प्रशाधीमं स्वजनं राजपुत्रि
इक्ष्वाकुराज्यं सुमहच्चाप्यनिन्द्ये ॥ ७०

राजपुत्र्युवाच ।
वरं वृणे भगवंस्त्वेवमेष
विमुच्यतां किल्बिषादद्य भर्ता ।
शिवेन जीवामि सपुत्रबान्धवं
वरो वृतो ह्येष मया द्विजाग्र्य ॥ ७१

मार्कण्डेय उवाच ।
श्रुत्वा वचः स मुनी राजपुत्र्या-
स्तथाऽस्त्विति प्राह कुरुप्रवीर ।
ततः स राजा मुदितो बभूव
वाम्यौ चास्मै प्रददौ संप्रणम्य ॥ ७२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

---

## षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

मार्कण्डेयेन सुखदुःखनिरूपकबकशक्रसंवादानुवादः ॥ १ ॥

वैशंपायन उवाच ।
मार्कण्डेयमृषयो ब्राह्मणा युधिष्ठिरश्च ।
पर्यपृच्छन्नृषिः केन दीर्घायुरासीद्बकः ॥ १
मार्कण्डेयस्तु तान्सर्वान्प्रत्युवाच महातपाः ।
दीर्घायुश्च बको राजन्नृषिर्नात्र विचारणा ॥ २
एतच्छ्रुत्वा तु कौन्तेयो भ्रातृभिः सह भारत ।
मार्कण्डेयं पर्यपृच्छद्धर्मराजो युधिष्ठिरः ॥ ३
बकदाल्भ्यौ महात्मानौ श्रूयेते चिरजीविनौ ।
सखायौ देवराजस्य तावृषी लोकसंमतौ ॥ ४
एतदिच्छामि भगवन्बकशक्रसमागमम् ।
सुखदुःखसमायुक्तं तत्त्वेन कथितं त्वया ॥ ५
मार्कण्डेय उवाच ।
वृत्ते देवासुरे राजन्संग्रामे रोमहर्षणे ।
त्रयाणामपि लोकानामिन्द्रो लोकाधिपोऽभवत् ६
सम्यग्वर्षति पर्जन्ये सस्यसंपद उत्तमाः ।
निरामयाः सुधर्मिष्ठाः प्रजा धर्मपरायणाः ।
मुदितश्च जनः सर्वः स्वधर्मेषु व्यवस्थितः ॥ ७
ताः प्रजा मुदिताः सर्वा दृष्ट्वा बलनिषूदनः ।
ततस्तु मुदितो राजन्देवराजः शतक्रतुः ॥ ८
ऐरावतं समास्थाय अपश्यन्मुदिताः प्रजाः ।
आश्रमांश्च विचित्रांश्च नदीश्च विविधाः शुभाः ९
नगराणि समृद्धानि घेटाञ्जनपदांस्तथा ।
प्रजापालनदक्षांश्च नरेन्द्रान्धर्मचारिणः ॥ १०
उदपानं प्रपा वापी तटाकानि सरांसि च ।
नानाब्रह्मसमाचारैः सेवितानि द्विजोत्तमैः ॥ ११
ततोऽवतीर्य रम्यायां पृथ्व्यां राजञ्छतक्रतुः ।
तत्र रम्ये शिवे देशे बहुवृक्षसमाकुले ॥ १२
पूर्वस्यां दिशि रम्यायां समुद्राभ्याशतो नृप ।
तत्राश्रमपदं रम्यं मृगद्विजनिषेवितम् ।
तत्राश्रमपदे रम्ये बकं पश्यति देवराट् ॥ १३
बकस्तु दृष्ट्वा देवेन्द्रं दृढं प्रीतमनाऽभवत् ।
पाद्यासनार्थ्यदानेन फलमूलैरथार्चयत् ॥ १४
सुखोपविष्टो वरदस्ततस्तु बलसूदनः ।
ततः प्रश्नं बकं देव उवाच त्रिदशेश्वरः ॥ १५

---

एनं नृशंसं भर्तारं दिनेदिने सूनृतानि कल्याणकराणि वाक्यानि संदिशन्तीति संबन्धः । ब्राह्मणेभ्यो मृगयती ब्राह्मणान् सेवितुमिच्छन्ती ॥ ६९ ॥ पञ्चनवत्यधिकशततमोऽध्यायः ॥१९५॥

ऋषिर्बकः किल भवतो दीर्घायुरासीच्चेति ध. पाठः ॥ १ ॥
यज्ञोत्सववतीं रम्यां पृथ्वीं राजञ्शतक्रतुरिति ध. पाठः ॥१२॥

शतं वर्षसहस्राणि मुने जातस्य तेऽनघ ।
समाख्याहि मम ब्रह्मन्किं दुःखं चिरजीविनाम् ॥
बक उवाच ।
अप्रियैः सह संवासः प्रियैश्चापि विनाभवः ।
असद्भिः संप्रयोगश्च तद्दुःखं चिरजीविनाम् ॥ १७
पुत्रदारविनाशोऽत्र ज्ञातीनां सुहृदामपि ।
परेष्वायत्तता कृच्छ्रं किंनु दुःखतरं ततः ॥ १८
नान्यद्दुःखतरं किंचिल्लोकेषु प्रतिभाति मे ।
अर्थैर्विहीनः पुरुषः परैः संपरिभूयते ॥ १९
अकुलानां कुले भावं कुलीनानां कुलक्षयम् ।
संयोगं विप्रयोगं च पश्यन्ति चिरजीविनः ॥ २०
अपि प्रत्यक्षमेवैतत्तव देव शतक्रतो ।
अकुलानां समृद्धानां कथं कुलविपर्ययः ॥ २१
देवदानवगन्धर्वमनुष्योरगराक्षसाः ।
प्राप्नुवन्ति विपर्यासं किंनु दुःखतरं ततः ॥ २२
कुले जाताश्च क्लिश्यन्ते दौष्कुलेयवशानुगाः ।
आढ्यैर्दरिद्रा अवमताः किंनु दुःखतरं ततः ॥ २३
लोके वैधर्म्यमेतत्तु दृश्यते बहुविस्तरम् ।
हीनज्ञानाश्च हृष्यन्ते क्लिश्यन्ते प्राज्ञकोविदाः ।
बहुदुःखपरिक्लेशं मानुष्यमिह दृश्यते ॥ २४
इन्द्र उवाच ।
पुनरेव महाभाग देवर्षिगणसेवित ।
समाख्याहि मम ब्रह्मन्किं सुखं चिरजीविनाम् ॥ २५
बक उवाच ।
अष्टमे द्वादशे वाऽपि शाकं यः पचते गृहे ।
कुमित्राण्यनपाश्रित्य किं वै सुखतरं ततः ॥ २६
यत्राहानि न गण्यन्ते नैनमाहुर्महाशनम् ।
अपि शाकं पचानस्य सुखं वै मघवन्गृहे ॥ २७
आर्जितं स्वेन वीर्येण नाप्यपाश्रित्य कंचन ।
फलशाकमपि श्रेयो भोक्तुं ह्यकृपणं गृहे ॥ २८
परस्य तु गृहे भोक्तुः परिभूतस्य नित्यशः ।
सुमृष्टमपि न श्रेयो विकल्पोऽयमतः सताम् ॥ २९
श्ववद्धि लोलुपो यस्तु परान्नं भोक्तुमिच्छति ।
धिगस्तु तस्य तद्भुक्तं कृपणस्य दुरात्मनः ॥ ३०
यो दत्त्वाऽतिथिभृत्येभ्यः पितृभ्यश्च द्विजोत्तमः ।
शिष्टान्यन्नानि यो भुङ्क्ते किं वै सुखतरं ततः ३१
अतो मृष्टतरं नान्यत्पूतं किंचिच्छतक्रतो ।
दत्त्वा यस्त्वतिथिभ्योऽन्नं भुङ्क्ते तेनैव नित्यशः ॥
यावतो ह्यन्धसः पिण्डानश्नाति सततं द्विजः ।
तावतां गोसहस्राणां फलं प्राप्नोति दायकः ।
यदेनो यौवनकृतं तत्सर्वं नश्यते ध्रुवम् ॥ ३३
सदक्षिणस्य भुक्तस्य द्विजस्य तु करे गतम् ।
यद्वारि वारिणा सिञ्चेत्तद्ध्येनस्तरते क्षणात् ॥ ३४
एताश्चान्याश्च वै बह्वीः कथयित्वा कथाः शुभाः ।
बकेन सह देवेन्द्र आपृच्छ्य त्रिदिवं गतः ॥ ३५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

## सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

मार्कण्डेयेन पाण्डवान्प्रति क्षत्रियमहिमख्यापकशिबिचरित्रकीर्तनम् ॥ १ ॥

वैशंपायन उवाच ।
ततः पाण्डवाः पुनर्मार्कण्डेयमूचुः ॥ १

कथितं ब्राह्मणमाहात्म्यं राजन्यमाहात्म्यमिदानीं शुश्रूषामह इति तानुवाच मार्कण्डेयो महर्षिः श्रूयतामिदानीं राजन्यानां माहात्म्यमिति ॥ कुरूणामन्यतमः सुहोत्रो नाम राजा महर्षीनभिगम्य निवृत्य रथस्थमेव राजानमौशीनरं शिबिं ददर्शाभिमुखं तौ समेत्य परस्परेण यथावयः पूजां प्रयुज्य गुणसाम्येन परस्परेण तुल्यात्मानौ विदित्वाऽन्योन्यस्य पन्थानं न

आकुलानां समृद्धानां कथं कालविपर्ययः इति ध. पाठः ॥ २१ ॥
द्विजस्य तु करे हुतमिति ध. पाठः ॥ ३४ ॥

षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

ददतुस्तत्र नारदः प्रादुरासीत्किमिदं भवन्तौ परस्परस्य पन्थानमावृत्य तिष्ठत इति ॥ २

तावूचतुर्नारदं नैतद्भगवन्पूर्वकर्मकर्त्रादिभिर्विशिष्टस्य पन्था उपदिश्यते समर्थाय वा आवां च सख्यं परस्परेणोपगतौ तच्चावधानतोऽत्युत्कृष्टमधरोत्तरं परिभ्रष्टम् ॥

नारदस्त्वेवमुक्तः श्लोकत्रयमपठत् ॥ ३

क्रूरः कौरव्य मृदवे मृदुः क्रूरे च कौरव ।
साधुश्चासाधवे साधुः साधवे नाप्नुयात्कथम् ॥ ४
कृतं शतगुणं कुर्यान्नास्ति देवेषु निर्णयः ।
औशीनरः साधुशीलो भवतो वै महीपतिः ॥ ५
जयेत्कदर्यं दानेन सत्येनानृतवादिनम् ।
क्षमया क्रूरकर्माणमसाधुं साधुना जयेत् ॥ ६

तदुभावेव भवन्तावुदारौ य इदानीं भवद्भ्यामन्यतमः सोपसर्पतु एतद्वै निदर्शनमित्युक्त्वा तूष्णीं नारदो बभूव ॥ एतच्छ्रुत्वा तु कौरव्यः शिबिं प्रदक्षिणं कृत्वा पन्थानं दत्त्वा बहुकर्मभिः प्रशस्य प्रययौ ॥ ७

तदेतद्राज्ञो महाभाग्यमप्युक्तवान्नारदः ॥ ८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

---

## अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

मार्कण्डेयेन पाण्डवान्प्रति विप्राय गोप्रदानरूपययातिचरितकथनम् ॥ १ ॥

[*मार्कण्डेय उवाच ।

इदमन्यच्छ्रूयतां ययातिर्नाहुषो राजा राज्यस्थः पौरजनावृत आसांचक्रे ॥ गुर्वर्थी ब्राह्मण उपेत्याब्रवीत् भो राजन्गुर्वर्थं भिक्षेयं समयादिति राजोवाच ॥ १

ब्रवीतु भगवान्समयमिति ॥ २

ब्राह्मण उवाच ।

विद्वेषणं परमं जीवलोके
कुर्यान्नरः पार्थिव याच्यमानः ।
तं त्वां पृच्छामि कथं तु राजन्दद्याद्भवान्दयितं च मेऽद्य ॥ ३

राजोवाच ।

न चानुकीर्तये दद्य दत्त्वा
अयाच्यमर्थं न च संशृणोमि ।
प्राप्यमर्थं च संश्रुत्य
तं चापि दत्त्वा सुसुखी भवामि ॥ ४
ददामि ते रोहिणीनां सहस्रं
प्रियो हि मे ब्राह्मणो याचमानः ।
न मे मनः कुप्यति याचमाने
दत्तं न शोचामि कदाचिदर्थम् ॥ ५

इत्युक्त्वा ब्राह्मणाय राजा गोसहस्रं ददौ । प्राप्तवांश्च गवां सहस्रं ब्राह्मण इति ॥ ६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

---

नैतत् यत्पन्थास्त्याज्य इत्येतन्नेत्यर्थः । तत्र हेतुः पूर्वेति । पूर्वे च ते कर्मकर्त्रादयश्चेति विग्रहः । अनुमन्तृवक्तृप्रभृतय आदिशब्दार्थः । अवधानतो विचारतः । अधरेति । आवयोस्तारतम्यं नास्तीत्यर्थः ॥ ३ ॥ पूर्वार्धे खलवृत्तं नाप्नुयात्साधुत्वं वै कथं न कुर्यादित्यर्थः ॥ ४ ॥ राज्ञः शिबेः ॥ ८ ॥

सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

विद्वेषणं याचकस्य द्वेषम् । प्रीत्यैव ददासि चेत् ग्रहीष्यामीत्यर्थः ॥ ३ ॥ हे दद्य ददो दानं तदर्ह ॥ ४ ॥ रोहिणीनां गवाम् ॥ ५ ॥ अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

* एतदाद्यध्यायत्रयं षोडशगद्याधिकं झ. पुस्तकएव दृश्यते नेतरकोशेषु ।

## एकोनद्विशततमोऽध्यायः ॥ १९९ ॥

मार्कण्डेयेन सेदुकवृषदर्भचरितकथनम् ॥ १ ॥

वैशंपायन उवाच ।

भूय एव महाभाग्यं कथ्यतामित्यब्रवीत्पाण्डवः ॥ १

अथाचष्ट मार्कण्डेयो महाराज वृषदर्भसेदुकनामानौ राजानौ नीतिमार्गरतावस्त्रोपास्त्रकृतिनौ ॥ २

सेदुको वृषदर्भस्य बालस्यैव उपांशुव्रतमभ्यजानात् कुप्यमदेयं ब्राह्मणस्य ॥ ३

अथ तं सेदुकं ब्राह्मणः कश्चिद्वेदाध्ययनसंपन्न आशिषं दत्त्वा गुर्वर्थी भिक्षितवान् ॥ ४

अश्वसहस्रं मे भवान्ददात्विति ॥ तं सेदुको ब्राह्मणमब्रवीत् ॥ ५

नास्ति संभवो गुर्वर्थं दातुमिति ॥ ६

स त्वं गच्छ वृषदर्भसकाशम् ॥ राजा परमधर्मज्ञो ब्राह्मण तं भिक्षस्व ॥ स ते दास्यति तस्यैतदुपांशुव्रतमिति ॥ ७

अथ ब्राह्मणो वृषदर्भसकाशं गत्वा अश्वसहस्रमयाचत ॥ स राजा तं कशेनाताडयत् ॥ ८

तं ब्राह्मणोऽब्रवीत् ॥ किं हिंस्यनागसं मामिति ॥ ९

एवमुक्त्या तं शपन्तं राजाऽऽह ॥ विप्र किं यो न ददाति तुभ्यमुताहोस्विद्ब्राह्मण्यमेतत् ॥ १०

ब्राह्मण उवाच ।

राजाधिराज तव समीपं सेदुकेन प्रेषितो भिक्षितुमागतः तेनानुशिष्टेन मया त्वं भिक्षितोसि ॥ ११

राजोवाच ।

पूर्वाह्णे ते दास्यामि यो मेऽद्य बलिरागमिष्यति ॥ यो हन्यते कशया कथं मोघं क्षेपणं तस्य स्यात् ॥ १२

इत्युक्त्वा ब्राह्मणाय दैवसिकामुत्पत्तिं प्रादात् ॥ अधिकस्याश्वसहस्रस्य मूल्यमेवादादिति ॥ १३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि एकोनद्विशततमोऽध्यायः ॥ १९९ ॥

---

## द्विशततमोऽध्यायः ॥ २०० ॥

मार्कण्डेयेन पाण्डवान्प्रति श्येनात्कपोतरक्षणरूपशिबिचरितकथनम् ॥ १ ॥

मार्कण्डेय उवाच ।

देवानां कथा संजाता महीतलं गत्वा महीपतिं शिबिमौशीनरं साध्वेनं शिबिं जिज्ञास्याम इति ॥ एवं भो इत्युक्त्वा अग्नीन्द्रावुपतिष्ठेताम् ॥ १

अग्निः कपोतरूपेण तमभ्यधावदामिषार्थमिन्द्रः श्येनरूपेण ॥ २

अथ कपोतो राज्ञो दिव्यासनासीनस्योत्सङ्गं न्यपतत् ॥ ३

अथ पुरोहितो राजानमब्रवीत् ॥ प्राणरक्षार्थं श्येनाद्भीतो भवन्तं प्राणार्थी प्रपद्यते ॥ ४

---

उपांशु बहिरनुद्घाटितम् । कुप्यं स्वर्णरूप्यादन्यत् ॥ ३ ॥ कशेन पुंस्त्वमार्षम् ॥ ८ ॥ हिंसि हिनस्सि ताडयसि ॥ ९ ॥ शपन्तं शापं दित्सन्तम् । हे विप्र यो न ददाति स्वीयं धनं तुभ्यं तस्मै वा एतत् शापदानं उचितम् । उताहोस्वित् एतद्ब्राह्मण्यं ब्राह्मणयोग्यं स्वीयमपि दित्सन्न शापयोग्यः नापि शान्तिधर्मा ब्राह्मणः शापं दातुमर्हतीत्यर्थः ॥ १० ॥ क्षेपणं दूरीकरणम् । अवश्यं स प्रसादनीय इत्यर्थः ॥ १२ ॥ दैवसिकां एकदिवसजातामुत्पत्तिं धनस्य । स्वनियमभङ्गाय प्रवृत्तं ब्राह्मणं दण्डयितुमपि प्रार्थितादधिकं दत्त्वा प्रसादयितुमपि समर्थो राजान इति तात्पर्यम् ॥ १३ ॥ एकोनद्विशततमोऽध्यायः ॥ १९९ ॥

वसु ददातु अन्तवान्पार्थिवोऽस्य निष्कृतिं
कुर्यात् घोरं कपोतस्य निपातमाहुः ॥ ५

अथ कपोतो राजानमब्रवीत् ॥ प्राणरक्षणार्थं श्येनाद्भीतो भवन्तं प्राणार्थी प्रपद्ये अङ्गैरङ्गानि प्राप्यार्थी मुनिर्भूत्वा प्राणांस्त्वां प्रपद्ये ॥ ६

स्वाध्यायेन कर्शितं ब्रह्मचारिणं मां विद्धि ॥
तपसा दमेन युक्तमाचार्यस्याप्रतिकूलभाषिणम् ॥
एवंयुक्तमपापं मां विद्धि ॥ ७

गदामि वेदान्विचिनोमि छन्दः
सर्वे वेदा अक्षरशो मे अधीताः ।
न साधु दानं श्रोत्रियस्य प्रदानं
मा प्रादाः श्येनाय न कपोतोऽस्मि ॥ ८

अथ श्येनो राजानमब्रवीत् ॥ ९

पर्यायेण वसतिर्वा भवेषु
सर्गे जातः पूर्वमस्मात्कपोतात् ।
त्वमाददानोऽथ कपोतमेनं
मा त्वं राजन्विघ्नकर्ता भवेथाः ॥ १०

राजोवाच ।

केनेदृशी जातु परा हि दृष्टा
वागुच्यमाना शकुनेन संस्कृता ।
यां वै कपोतो वदते यां च श्येन
उभौ विदित्वा कथमस्तु साधु ॥ ११

नास्य वर्षं वर्षति वर्षकाले
नास्य बीजं रोहति काल उप्तम् ।
भीतं प्रपन्नं यो हि ददाति शत्रवे
न त्राणं लभेत्त्राणमिच्छन्स काले ॥ १२

जाता ह्रस्वा प्रजा प्रमीयते
सदा न वासं पितरोऽस्य कुर्वते ।
भीतं प्रपन्नं यो हि ददाति शत्रवे
नास्य देवाः प्रतिगृह्णन्ति हव्यम् ॥ १३

मोघमन्नं विन्दति चाप्रचेताः
स्वर्गाल्लोकाद्भ्रश्यति शीघ्रमेव ।
भीतं प्रपन्नं यो हि ददाति शत्रवे
सेन्द्रा देवाः प्रहरन्त्यस्य वज्रम् ॥ १४

उक्षाणं पक्त्वा सह ओदनेन
अस्मात्कपोतात्प्रति ते नयन्तु ।
यस्मिन्देशे रमसेऽतीव श्येन
तत्र मांसं शिबयस्ते वहन्तु ॥ १५

श्येन उवाच ।

नोक्षाणो राजन्प्रार्थयेयं न चान्य-
दस्मान्मांसमधिकं वा कपोतात् ।
देवैर्दत्तः सोऽद्य ममैष भक्ष-
स्तन्मे ददस्व शकुनानामभावात् ॥ १६

राजोवाच ।

उक्षाणं वेहतमनूनं नयन्तु
ते पश्यन्तु पुरुषा ममैव ।
भयाहितस्य दायं ममान्तिकात्त्वां
प्रत्याम्नायं तु त्वं ह्येनं मा हिंसीः ॥ १७

त्यजे प्राणान्नैव दद्यां कपोतं
सौम्यो ह्ययं किं न जानासि श्येन ।
यथा क्लेशं मा कुरुष्वेह सौम्य
नाहं कपोतमर्पयिष्ये कथंचित् ॥ १८

---

घोरं निन्दितं अनिष्टसूचकमित्यर्थः । अन्तवान् दिगन्तानामीश्वरः ॥ ५ ॥ अङ्गैरिति । मुनिरहं स्वशरीरेण कपोतशरीरं प्रविष्टोऽस्मीत्यर्थः । प्राणान्प्राणरक्षकत्वेन त्वमेव मम प्राणा इत्यर्थः ॥ ६ ॥ श्रोत्रियस्य मे श्येनाय त्वत्कर्तृकं प्रदानं न साधुदानम् ॥ ८ ॥ भवेषु जन्मसु पर्यायेण वसतिः स्थितिर्भवति अतस्त्वं सर्गे सृष्टौ अस्मात्कपोतात् जातोसि । अतस्त्वं तव जन्मान्तरीयं पितरं कपोतं आददानो रक्षन् मम आहारे विघ्नं माकुर्वित्यर्थः ॥ १० ॥ एतयोः स्वरूपं ज्ञात्वा साधुकर्म कथं कुर्यामिति विमृशतीत्यर्थः ॥ ११ ॥ ह्रस्वा शैशवे एव प्रजा प्रमीयते म्रियते ॥ १३ ॥ मोघं निष्फलं सोऽन्नं विन्दति लभते । अप्रचेताः अनुदारः ॥ १४ ॥ अस्मात्कपोतात् । एनं कपोतं मोचयित्वा ते तुभ्यं प्रतिनयन्तु प्रतिनिधित्वेन समर्पयन्तु ॥ १५ ॥ शकुनानां एकस्मिन्नेव बहुत्वम् । अभावात् नाशेन ॥ १६ ॥ उक्षाणं बलीवर्दम् । वेहतं वन्ध्यां गां वा अनूनं सर्वाङ्गसंपूर्णं यथा स्यात्तथा । भयाहितस्य भीग्रस्तस्य कपोतस्य । दायं प्रतिधनं प्रत्याम्नायं नयन्तु प्रापयन्तु । पश्यन्तु आलोचयन्तु च सन्तः । एनं कपोतं मा हिंसीरिति ॥ १७ ॥ सौम्यो ह्ययं सोमसंयुक्तक्रतुवन्नित्यं परिपाल्यो ह्ययम् ।

यथा मां वै साधुवादैः प्रसन्नाः
प्रशंसेयुः शिबयः कर्मणा तु ।
यथा श्येन प्रियमेव कुर्या
प्रशाधि मां यद्वदेस्तत्करोमि ॥ १९

श्येन उवाच ।

ऊरोर्दक्षिणादुत्कृत्य स्वपिशितं तावद्राजन्यावन्मांसं कपोतेन समम् ॥ तथा तस्मात्साधु त्रातः कपोतः प्रशंसेयुश्च शिबयः कृतं च प्रियं स्यान्ममेति ॥ २०

अथ स दक्षिणादूरोरुत्कृत्य स्वमांसपेशीं तुलयाधारयत् ॥ गुरुतर एव कपोत आसीत् २१

पुनरन्यमुच्चकर्त गुरुतर एव कपोतः ॥ एवं सर्वं समधिकृत्य शरीरं तुलायामारोपयामास तत्तथापि गुरुतर एव कपोत आसीत् ॥ २२

अथ राजा स्वयमेव तुलामारुरोह ॥ न च व्यलीकमासीद्राज्ञ एतद्वृत्तान्तं दृष्ट्वा त्रात इत्युक्त्वा प्रालीयत श्येनः अथ राजा अब्रवीत् ॥ २३

कपोतं विद्युः शिबयस्त्वां कपोत
पृच्छामि ते शकुने को नु श्येनः ।
नानीश्वर ईदृशं जातु कुर्या-
देतं प्रश्नं भगवन्मे विचक्ष्व ॥ २४

कपोत उवाच ।

वैश्वानरोऽहं ज्वलनो धूमकेतु-
रथैव श्येनो वज्रहस्तः शचीपतिः ।
साधु ज्ञातुं त्वामृषभं सौरथेय
नौ जिज्ञासया त्वत्सकाशं प्रपन्नौ ॥ २५

यामेतां पेशीं मम निष्क्रयाय
प्रादाद्भवानसिनोत्कृत्य राजन् ।
एतद्वो लक्ष्म शिवं करोमि
हिरण्यवर्णं रुचिरं पुण्यगन्धम् ॥ २६

एतासां प्रजानां पालयिता यशस्वी
सुरर्षीणामथ संमतो भृशम् ।
एतस्मात्पार्श्वात्पुरुषो जनिष्यति
कपोतरोमेति च तस्य नाम ॥ २७

कपोतरोमाणं शिबिनौद्भिदं पुत्रं प्राप्स्यसि नृपवृषसंहननं यशोदीप्यमानं द्रष्टासि शूरमृषभं सौरथानाम् ॥ २८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि द्विशततमोऽध्यायः ॥ २०० ॥

---

## एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥

मार्कण्डेयेन पाण्डवान्प्रति नारदेरिताष्टकादिराजतारतम्यकथनपूर्वकदानमहिमानुवादः ॥ १ ॥

वैशंपायन उवाच ।

भूय एव महाभाग्यं कथ्यतामित्यब्रवीत्पाण्डवो मार्कण्डेयम् ॥ अथाचष्ट मार्कण्डेयः ॥ अष्टकस्य वैश्वामित्रेरश्वमेधे सर्वे राजानः प्रागच्छन् ॥ १

भ्रातरश्चास्य प्रतर्दनो वसुमनाः शिबिरौशीनर इति स च समाप्तयज्ञो भ्रातृभिः सह रथेन प्रायात्ते च नारदमागच्छन्तमभिवाद्यारोहतु भवान्रथमित्यब्रुवन् ॥ २

तांस्तथेत्युक्त्वा रथमारुरोह ॥ अथ तेषामेकः सुरर्षिं नारदमब्रवीत् ॥ प्रसाद्य भगवन्तं किंचिदिच्छेयं प्रष्टुमिति ॥ ३

पृच्छेत्यब्रवीदृषिः ॥ सोऽब्रवीदायुष्मन्तः सर्वगुणप्रमुदिताः ॥ अथायुष्मन्तं स्वर्गस्थानं चतु-

---

हे सौम्य सोमवत्प्रियदर्शन ॥ १८ ॥ अधिकृत्य छित्त्वा ॥ २२॥ अपर्याप्तौ स्वयमेव तुलामाविवेश । व्यलीकं अप्रियम् । त्रातस्त्वया कपोत इत्युक्त्वा ॥ २३ ॥ हे सौरथेय सुरथायाः पुत्र । नौ आवाम् । विद्धीति शेषः ॥ २५ ॥ असिना खड्गेन । एतन्मांसम् । वः नृपाणां लक्ष्म चिह्नं करोमि ॥ २६ ॥ शिबिना शिथिलशरीरेण जातं औद्भिदं उद्भेदेन जातम् । यशसा दीप्यमानम् ॥ २८ ॥ द्विशततमोऽध्यायः ॥ २०० ॥

आयुष्मन्तं चिरकालभोग्यम् । स्वर्गस्थानम् । पुंस्त्वमार्षम् ।

भिर्यातव्यं स्यात्कोऽवतरेत् ॥ अयमष्टकोऽवतरेदित्यब्रवीदृषिः ॥ ४

किंकारणमित्यपृच्छत् ॥ अथाचष्टाष्टकस्य गृहे मया उषितं स मां रथेनानुप्रावहदथापश्यमनेकानि गोसहस्राणि वर्णशो विविक्तानि तमहमपृच्छं कस्येमा गाव इति सोऽब्रवीत् ॥ मया निसृष्टा इत्येतास्तेनैव स्वयं श्लाघति कथितेन ॥ एषोवतरेदथ त्रिभिर्यातव्यं सांप्रतं कोऽवतरेत् ॥ ५

प्रतर्दन इत्यब्रवीदृषिः ॥ तत्र किं कारणं प्रतर्दनस्यापि गृहे मयोषितं स मां रथेनानुप्रावहत् ॥ ६

अथैनं ब्राह्मणोऽभिक्षेताश्वं मे ददातु भवान्निवृत्तो दास्यामीत्यब्रवीद्ब्राह्मणं त्वरितमेव दीयतामित्यब्रवीद्ब्राह्मणस्त्वरितमेव स ब्राह्मणस्यैवमुक्त्वा दक्षिणं पार्श्वमददत् ॥ ७

अथान्योप्यश्वार्थी ब्राह्मण आगच्छत् ॥ तथैव चैनमुक्त्वा वामपार्ष्णिमभ्यदादथ प्रायात्पुनरपि चान्योप्यश्वार्थी ब्राह्मण आगच्छत् त्वरितोथ तस्मै अपनह्य वामं धुर्यमददत् ॥ ८

अथ प्रायात्पुनरन्य आगच्छदश्वार्थी ब्राह्मणस्तमब्रवीददतियातो दास्यामि त्वरितमेव मे दीयतामित्यब्रवीद्ब्राह्मणस्तस्मै दत्त्वाऽश्वं रथधुरं गृह्णता व्याहृतं ब्राह्मणानां सांप्रतं नास्ति किंचिदिति ॥ ९

य एष ददाति चासूयति च तेन व्याहृतेन तथाऽवतरेत् ॥ अथ द्वाभ्यां यातव्यमिति कोऽवतरेत् ॥ १०

वसुमना अवतरेदित्यब्रवीदृषिः ॥ ११

किं कारणमित्यपृच्छदथाचष्ट नारदः ॥ अहं परिभ्रमन्वसुमनसो गृहमुपस्थितः ॥ १२

स्वस्तिवचनमासीत्पुष्परथस्य प्रयोजनेन तमहमन्वगच्छं स्वस्तिवाचितेषु ब्राह्मणेषु रथो ब्राह्मणानां दर्शितः ॥ १३

तमहं रथं प्राशंसमथ राजाऽब्रवीद्भगवता रथः प्रशस्तः ॥ एष भगवतो भगवतो रथ इति ॥ १४

अथ कदाचित्पुनरप्यहमुपस्थितः पुनरेव च रथप्रयोजनमासीत् ॥ सम्यगयमेष भगवत इत्येवं राजाऽब्रवीदिति पुनरेव च तृतीयं स्वस्तिवाचनं समभावयमथ राजा ब्राह्मणानां दर्शयन्मामभिप्रेक्ष्याब्रवीत् ॥ अथो भगवता पुष्परथस्य स्वस्तिवाचनानि सुष्ठु संभावितानि एतेन द्रोहवचनेनावतरेत् ॥ १५

अथैकेन यातव्यं स्यात्कोऽवतरेत्पुनर्नारद आह ॥ शिबिर्यायादहमवतरेयं अत्र किं कारणमित्यब्रवीत् ॥ असावहं शिबिना समो नास्मि यतो] ब्राह्मणः कश्चिदेनमब्रवीत् ॥ १६

शिबे अन्नार्थ्यस्मीति तमब्रवीच्छिबिः किं क्रियतामाज्ञापयतु भवानिति ॥ १७

अथैनं ब्राह्मणोऽब्रवीत् य एष ते पुत्रो बृहद्गर्भो नाम एष प्रमातव्य इति तमेनं संस्कुरु अन्नं चोपपादय ततोऽहं प्रतीक्ष्य इति ॥ ततः पुत्रं प्रमाथ्य संस्कृत्य विधिना साधयित्वा पात्र्यामर्पयित्वा शिरसा प्रतिगृह्य ब्राह्मणममृगयत् ॥ १८

अथास्य मृगयमाणस्य कश्चिदाचष्ट एष ते ब्राह्मणो नगरं प्रविश्य दहति ते गृहं कोशागारमायुधागारं स्त्र्यगारमश्वशालां हस्तिशालां च क्रुद्ध इति ॥ १९

अथ शिबिस्तथैवाविकृतमुखवर्णो नगरं प्रविश्य ब्राह्मणं तमब्रवीत्सिद्धं भगवन्नन्नमिति ब्राह्मणो न किंचिद्व्याजहार विस्मयादधोमुखश्चासीत् ॥२०

अवतरेत्स्वर्गात् भूमौ प्रथममिति शेषः ॥ ४ ॥ पार्श्वं रथचक्रप्रदेशस्थमश्वम् ॥ ७ ॥ अतियातोऽतिवेगवान् । अश्वचतुष्टयस्यापि दानात् धुरं स्वहस्तेनैव गृह्णता । सांप्रतं युक्तायुक्तविचारः ॥ ९ ॥ पुष्परथस्य गिरिगगनसागरेष्वप्रतिषिद्धमार्गस्य प्रयोजनेन तदर्थमित्यर्थः ॥ १३ ॥ रथः स्तुत एव नतु याचितः । राजापि ममाशयं बुद्ध्वापि रथं न दत्तवान् रथस्तुतिं चानुमोदितवानिति प्रघट्टकार्थः ॥ १४ ॥ द्रोहवचनेन अदत्त्वा वृथास्तवेन ॥ १५ ॥

ततः प्रासादयद्ब्राह्मणं भगवन्भुज्यतामिति ॥ मुहूर्तादुद्वीक्ष्य शिबिमब्रवीत् ॥ २१

त्वमेवैतदशानेति तत्राह तथेति शिबिस्तथैवाविमना महित्वा कपालमभ्युद्धार्य भोक्तुमैच्छत् ॥ २२

अथास्य ब्राह्मणो हस्तमगृह्णात् ॥ अब्रवीच्चैनं जितक्रोधोसि न ते किंचिदपरित्याज्यं ब्राह्मणार्थे ब्राह्मणोऽपि तं महाभागं सभाजयत् ॥ २३

स ह्युद्वीक्षमाणः पुत्रमपश्यदग्रे तिष्ठन्तं देवकुमारमिव पुण्यगन्धान्वितमलंकृतं सर्वं च तमर्थं विधाय ब्राह्मणोऽन्तरधीयत ॥ २४

तस्य राजर्षेर्विधाता तेनैव वेषेण परीक्षार्थमागत इति तस्मिन्नन्तर्हिते अमात्या राजानमूचुः॥ किं प्रेप्सुना भवता इदमेवं जानता कृतमिति२५

शिबिरुवाच ।

नैवाहमेतद्यशसे ददानि
न चार्थहेतोर्न च भोगतृष्णया ।
पापैरनासेवित एष मार्ग
इत्येवमेतत्सकलं करोमि ॥ २६

सद्भिः सदाऽध्यासितं तु प्रशस्तं
तस्मात्प्रशस्तं श्रयते मतिर्मे ।
एतन्महाभाग्यवरं शिबेस्तु
तस्मादहं वेद यथावदेतत् ॥ २७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥

---

## द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥

मार्कण्डेयेन पाण्डवान्प्रति कीर्त्यकीर्त्योः स्वर्गनरकनिवासहेतुताप्रतिपादकेन्द्रद्युम्नोपाख्यानकथनम् ॥ १ ॥

वैशंपायन उवाच ।

मार्कण्डेयमृषिं पाण्डवाः पर्यपृच्छन्नस्ति कश्चिद्भवतश्चिरजाततर इति ॥ १

स तानुवाचास्ति खलु राजर्षिरिन्द्रद्युम्नो नाम क्षीणपुण्यस्त्रिदिवात्प्रच्युतः कीर्तिर्मे व्युच्छिन्नेति स मामुपातिष्ठदथ मत्यभिजानाति मां भवानिति ॥ २

तमहमब्रवं नाभिजानीमो भवन्तमिति कार्यचेष्टाकुलत्वान्न वयं रासायनिका ग्रामैकरात्रवासिनो न प्रत्यभिजानीमोऽप्यात्मनोऽर्थानामनुष्ठानं न शरीरोपतापेनात्मनः समारभामोऽर्थानामनुष्ठानम् ॥ ३

'एवमुक्तो राजर्षिरिन्द्रद्युम्नः पुनर्मामब्रवीत् ॥ अथास्ति कश्चित्त्वत्तश्चिरजाततर इति । तं पुनः प्रत्यब्रवम् ॥' अस्ति खलु हिमवति प्रावारकर्णो नामोलूकः प्रतिवसति ॥ स मत्तश्चिरजातो भवन्तं यदि जानीयाद्विप्रकृष्टे चाध्वनि हिमवांस्तत्रासौ प्रतिवसतीति ॥ ४

ततः स मामश्वो भूत्वा तत्रावहद्यत्र बभूवोलूकः ॥ अथैनं स राजर्षिः पर्यपृच्छत्प्रतिजानाति मां भवानिति ॥ ५

स मुहूर्तमिव ध्यात्वाऽब्रवीदेनं नाभिजानामि भवन्तमिति स एवमुक्त इन्द्रद्युम्नः पुनस्तमुलूकमब्रवीद्राजर्षिः ॥ ६

अथास्ति कश्चिद्भवतः सकाशाच्चिरजात इति स एवमुक्तोऽब्रवीदस्तिखल्विन्द्रद्युम्नं नाम सरस्-

---

महित्वा पूजयित्वा । कपालं शीर्षास्थिपात्रम् ॥ २२ ॥ यो दत्त्वा श्लाघते यश्चासूयेत् यश्चार्थिनो लिप्सितमिङ्गितैर्ज्ञात्वापि तं स्तुतिमात्रेणैव संभावयति नत्वर्थेन यश्च ब्राह्मणेनार्थितः श्रद्धाक्षमापूर्वकमदेयमपि ददाति अकर्तव्यमपि करोति ते उत्तरोत्तरं श्रेष्ठाः । तत्राप्यन्यो नारदादपि श्रेष्ठ इति दातुर्गुणदोषविधानपरोऽयमध्यायः ॥ २७ ॥ एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥

रसायनिकाः इति झ. पाठः ॥ ३ ॥

स्मिन्नालिजङ्घो नाम बकः प्रतिवसति सोस्मत्तश्चिरजाततरस्तं पृच्छेति तत इन्द्रद्युम्नो मां चोलूकमादाय तत्सरोऽगच्छद्यत्रासौ नालिजङ्घो नाम बको बभूव ॥ ७

सोस्माभिः पृष्टो भवानिममिन्द्रद्युम्नं राजानमभिजानातीति स एवं मुहूर्तं ध्यात्वाऽब्रवीन्नाभिजानाम्यहमिन्द्रद्युम्नं राजानमिति ॥ ततः सोस्माभिः पृष्टः कश्चिद्भवतोऽन्यश्चिरजाततरोस्तीति स नोऽब्रवीदस्ति खल्वस्मिन्नेव सरस्यकूपारो नाम कच्छपः प्रतिवसति ॥ स मत्तश्चिरजाततरः स यदि कथंचिदभिजानीयादिमं राजानं तमकूपारं पृच्छध्वमिति ॥ ८

ततः स बकस्तमकूपारं कच्छपं विज्ञापयामास अस्माकमभिप्रेतं भवन्तं कंचिदर्थमभिप्रष्टुं साध्वागम्यतां तावदिति तच्छ्रुत्वा कच्छपस्तस्मात्सरस उत्थायाभ्यागच्छद्यत्र तिष्ठामो वयं तस्य सरसस्तीरे आगतं चैनं वयमपृच्छाम भवानिन्द्रद्युम्नं राजानमभिजानातीति ॥ ९

स मुहूर्तं ध्यात्वा बाष्पसंपूर्णनयन उद्विग्नहृदयो वेपमानो विसंज्ञकल्पः प्राञ्जलिरब्रवीत् किमहमेनं न प्रत्यभिज्ञास्यामीह ह्यनेन सहस्रकृत्वः पूर्वमग्निचितिषूपहिताः ॥ १०

सरश्चेदमस्य दक्षिणोदकदत्ताभिर्गोभिरतिक्रममाणाभिः कृतम् ॥ अत्र चाहं प्रतिवसामीति॥ ११

अथैतत्सकलं कच्छपेनोदाहृतं श्रुत्वा तदनन्तरं देवलोकाद्देवरथः प्रादुरासीद्वाचश्चाश्रूयन्तेन्द्रद्युम्नं प्रति प्रस्तुतस्ते स्वर्गो यथोचितं स्थानं प्रतिपद्यस्व कीर्तिमानस्यव्यग्रो याहीति ॥ १२

भवन्ति चात्र श्लोकाः ।

दिवं स्पृशति भूमिं च शब्दः पुण्यस्य कर्मणः ।
यावत्स शब्दो भवति तावत्स्वर्गे महीयते ॥ १३
अकीर्तिः कीर्त्यते लोके यस्य भूतस्य कस्यचित् ।
स पतत्यधमाँल्लोकान्यावच्छब्दः प्रकीर्त्यते ॥१४
तस्मात्कल्याणवृत्तः स्याद्दाता तावन्नरो भुवि ।
विहाय वृत्तं पापिष्ठं धर्ममेव समाश्रयेत् ॥ १५

इत्येतच्छ्रुत्वा स राजाऽब्रवीत्तिष्ठ तावद्यावदिमौ वृद्धौ यथास्थानं प्रतिपादयामीति ॥ १६

स मां प्रावारकर्णं चोलूकं यथोचिते स्थाने प्रतिपाद्य तेन देवयानेन संसिद्धं यथोचितं स्थानं प्रतिपेदे तन्मयाऽनुभूतं चिरजीविनेदृशमिति पाण्डवानुवाच मार्कण्डेयः ॥ १७

तमृषिं पाण्डवाश्चोचुः साधु शोभनं भवता कृतं राजानमिन्द्रद्युम्नं स्वर्गलोकाच्च्युतं स्वे स्थाने प्रतिपादयतेत्यथैतानब्रवीदसौ ननु देवकीपुत्रेणापि कृष्णेन नरके मज्जमानो राजर्षिर्नृगस्तस्मात्कृच्छ्रात्पुनः समुद्धृत्य स्वर्गं प्रापित इति ॥ १८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥

## त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥

मार्कण्डेयेन युधिष्ठिरंप्रति स्वर्गकारणीभूतसाधारणधर्मकथनम् ॥ १ ॥

वैशंपायन उवाच ।

श्रुत्वा स राजा राजर्षेरिन्द्रद्युम्नस्य तत्तदा ।
मार्कण्डेयान्महाभागात्स्वर्गस्य प्रतिपादनम् ॥ १
युधिष्ठिरो महाराज पुनः पप्रच्छ तं मुनिम् ।
कीदृशीषु ह्यवस्थासु दत्त्वा दानं महामुने ।
इन्द्रलोकं त्वनुभवेत्पुरुषस्तद्ब्रवीहि मे ॥ २
गार्हस्थ्येऽप्यथवा बाल्ये यौवने स्थाविरेऽपि वा ।
यथा फलं समश्नाति तथा त्वं कथयस्व मे ॥ ३

अग्निचितिषु अग्निचयनेषु कर्तव्येषु सत्सु ॥ १० ॥ तावत्पुरुष उच्यते इति झ. पाठः । पुरुषः स्वर्गस्थ इति शेषः ॥ १३ ॥

असौ मार्कण्डेयः ॥ १८ ॥ द्व्यधिकद्विशततमोऽध्यायः ॥ २२ ॥

मार्कण्डेय उवाच ।
वृथा जन्मानि चत्वारि वृथा दानानि षोडश ।
वृथा जन्म ह्यपुत्रस्य ये च धर्मबहिष्कृताः ॥ ४
परपाकं च येऽश्नन्ति आत्मार्थं च पचेत्तु यः ।
पर्यश्नन्ति वृथा यत्र तदसत्यं प्रकीर्त्यते ॥ ५
आरूढपतिते दत्तमन्यायोपहृतं च यत् ।
व्यर्थं तु पतिते दानं ब्राह्मणे तस्करे तथा ॥ ६
गुरौ चानृतिके पापे कृतघ्ने ग्रामयाजके ।
वेदविक्रयिणे दत्तं तथा वृषलयाजके ॥ ७
ब्रह्मबन्धुषु यद्दत्तं यद्दत्तं वृषलीपतौ ।
स्त्रीजितेषु च यद्दत्तं व्यालग्राहे तथैव च ॥ ८
परिचारकेषु यद्दत्तं वृथा दानानि षोडश ।
तमोवृतस्तु यो दद्याद्भयात्क्रोधात्तथैव च ॥ ९
भुङ्क्ते च दानं तत्सर्वं गर्भस्थस्तु नरः सदा ।
ददद्दानं द्विजातिभ्यो वृद्धभावेन मानवः ॥ १०
तस्मात्सर्वास्ववस्थासु सर्वदानानि पार्थिव ।
दातव्यानि द्विजातिभ्यः स्वर्गमार्गजिगीषया ११
युधिष्ठिर उवाच ।
चातुर्वर्ण्यस्य सर्वस्य वर्तमानाः प्रतिग्रहे ।
केन विप्रा विशेषेण तारयन्ति तरन्ति च ॥ १२
मार्कण्डेय उवाच ।
जपैर्मन्त्रैश्च होमैश्च स्वाध्यायाध्ययनेन च ।
नावं वेदमयीं कृत्वा तारयन्ति तरन्ति च ॥ १३
ब्राह्मणांस्तोषयेद्यस्तु तुष्यन्ते तस्य देवताः ।
वचनाच्चापि विप्राणां स्वर्गलोकमवाप्नुयात् ॥ १४
पितृदैवतपूजाभिर्ब्राह्मणाभ्यर्चनेन च ।
अनन्तं पुण्यलोकं तु गन्ताऽसौ तु न संशयः ।
श्लेष्मादिभिर्व्याप्ततनुर्म्रियमाणोऽविचेतनः ॥ १५
ब्राह्मणा एव संपूज्याः पुण्यं स्वर्गमभीप्सता ।
श्राद्धकाले तु यत्नेन भोक्तव्या ह्यजुगुप्सिताः १६
दुर्बलः कुनखी कुष्ठी मायावी कुण्डगोलकौ ।
वर्जनीयाः प्रयत्नेन काण्डपृष्ठाश्च देहिनः ॥ १७
जुगुप्सितं हि यच्छ्राद्धं दहत्यग्निरिवेन्धनम् ॥ १८
ये ये श्राद्धे न पूज्यन्ते मूकान्धबधिरादयः ।
तेऽपि सर्वे नियोक्तव्या मिश्रिता वेदपारगैः ॥ १९
प्रतिग्रहश्च वै देयः शृणु यस्य युधिष्ठिर ।
प्रदातारं तथाऽऽत्मानं यस्तारयति शक्तिमान् २०
तस्मिन्देयं द्विजे दानं सर्वागमविजानता ।
प्रदातारं तथाऽऽत्मानं तारयेद्यः स शक्तिमान् २१
न तथा हविषो होमैर्न पुष्पैर्नानुलेपनैः ।
अग्नयः पार्थ तुष्यन्ति यथा ह्यतिथिभोजने ॥ २२
तस्मात्त्वं सर्वयत्नेन यतस्वातिथिभोजने ॥ २३
पादोदकं पादघृतं दीपमन्नं प्रतिश्रयम् ।
प्रयच्छन्ति तु ये राजन्नोपसर्पन्ति ते यमम् ॥ २४
देवमाल्यापनयनं द्विजोच्छिष्टावमार्जनम् ।
आकल्पपरिचर्या च गात्रसंवाहनानि च ।
अत्रैकैकं नृपश्रेष्ठ गोदानाद्व्यतिरिच्यते ॥ २५
कपिलायाः प्रदानात्तु मुच्यते नात्र संशयः ।
तस्मादलंकृतां दद्यात्कपिलां तु द्विजातये ॥ २६
श्रोत्रियाय दरिद्राय गृहस्थायाग्निहोत्रिणे ।
पुत्रदाराभिभूताय तथा ह्यनुपकारिणे ॥ २७
एवंविधेषु दातव्या न समृद्धेषु भारत ।
को गुणो भरतश्रेष्ठ समृद्धेष्वभिवर्जितम् ॥ २८
एकस्यैका प्रदातव्या न बहूनां कदाचन ।
सा गौर्विक्रयमापन्ना हन्यात्त्रिपुरुषं कुलम् ।
न तारयति दातारं ब्राह्मणं नैव नैव तु ॥ २९
ब्राह्मणस्य विशुद्धस्य सुवर्णं यः प्रयच्छति ।
सुवर्णानां शतं तेन दत्तं भवति शाश्वतम् ॥ ३०

---

यत्र जन्मनि असत्यं वृथा गोब्राह्मणादित्राणं विना कीर्त्यते तदपि वृथेत्यर्थः ॥ ५ ॥ आरूढश्चासौ पतितः ॥ ६ ॥ गुरावप्यानृतिकेऽनृतप्रिये । वृषलः शूद्रः ॥ ७ ॥ ब्रह्मबन्धवो जातिमात्रब्राह्मणा वृत्ताध्ययनशून्याः ॥ ८ ॥ दानं दानफलं अन्यत्तु दानं वृद्धभावेन जरया भुङ्क्ते ॥ १० ॥ काण्डपृष्ठाः बाणनिषङ्गधराः क्षात्रवृत्तय इत्यर्थः । दुर्वर्णः कुनखीति झ. पाठः ॥१७॥ माल्यं निर्माल्यम् । आकल्पः गन्धादिनालंकरणम् । अरोगिप्रतिचर्याचेति नृपश्रेष्ठगोशतादिति च ध. पाठः ॥ २५ ॥ अभिभूताय दारिद्र्यादेव ॥ २७ ॥ अभिवर्जितं दत्तम् ॥ २८ ॥ सा बहुभ्यो दत्ता ॥ २९ ॥

अनड्वाहं तु यो दद्याद्बलवन्तं धुरंधरम् ।
स निस्तरति दुर्गाणि स्वर्गलोकं च गच्छति ॥३१
वसुंधरां तु यो दद्याद्द्विजाय विदुषात्मने ।
दातारं ह्यनुगच्छन्ति सर्वे कामाभिवाञ्छिताः ३२
पृच्छन्ति चान्नदातारं वदन्ति पुरुषा भुवि ।
अध्वनि क्षीणगात्राश्च पांसुना चावकुण्ठिताः ३३
तेषामेव श्रमार्तानां यो ह्यन्नं कथयेद्बुधः ।
अन्नदातृसमः सोपि कीर्त्यते नात्र संशयः ॥३४
तस्मात्त्वं सर्वदानानि हित्वाऽन्नं संप्रयच्छ ह ।
न हीदृशं पुण्यफलं विचित्रमिह विद्यते ॥ ३५
यथाशक्ति च यो दद्यादन्नं विप्रेषु संस्कृतम् ।
स तेन कर्मणाऽऽप्नोति प्रजापतिसलोकताम् ३६
अन्नमेव विशिष्टं हि तस्मात्परतरं न च ।
अन्नं प्रजापतिश्चोक्तः स च संवत्सरो मतः ॥३७
संवत्सरस्तु यज्ञोऽसौ सर्वं यज्ञे प्रतिष्ठितम् ।
तस्मात्सर्वाणि भूतानि स्थावराणि चराणि च ३८
तस्मादन्नं विशिष्टं हि सर्वेभ्य इति विश्रुतम् ॥३९

येषां तटाकानि महोदकानि
वाप्यश्च कूपाश्च प्रतिश्रयाश्च ।
अन्नस्य दानं मधुरा च वाणी
यमस्य ते निर्वचना भवन्ति ॥ ४०
धान्यं श्रमेणार्जितवित्तसंचितं
विप्रे सुशीले प्रतियच्छते यः ।
वसुंधरा तस्य भवेत्सुतुष्टा
धारां वसूनां प्रतिमुञ्चतीव ॥ ४१

अन्नदाः प्रथमं यान्ति सत्यवाक्तदनन्तरम् ।
अयाचितप्रदाता च समं यान्ति त्रयो जनाः ॥४२
वैशंपायन उवाच ।
कौतूहलसमुत्पन्नः पर्यपृच्छद्युधिष्ठिरः ।
मार्कण्डेयं महात्मानं पुनरेव सहानुजः ॥ ४३
यमलोकस्य चाध्वानमन्तरं मानुषस्य च ।
कीदृशं किंप्रमाणं वा कथं वा तन्महामुने ।
तरन्ति पुरुषाश्चैव केनोपायेन शंस मे ॥ ४४
मार्कण्डेय उवाच ।
सर्वगुह्यतमं प्रश्नं पवित्रमृषिसंस्तुतम् ।
कथयिष्यामि ते राजन्धर्मं धर्मभृतांवर ॥ ४५
षडशीतिसहस्राणि योजनानां नराधिप ।
यमलोकस्य चाध्वानमन्तरं मानुषस्य च ॥ ४६
आकाशं तदपानीयं घोरं कान्तारदर्शनम् ।
न तत्र वृक्षच्छाया वा पानीनं केतनानि च ४७
विश्रमेद्यत्र वै श्रान्तः पुरुषोऽध्वनि कर्शितः ।
नीयते यमदूतैस्तु यमस्याज्ञाकरैर्बलात् ॥ ४८
नराः स्त्रियस्तथैवान्ये पृथिव्यां जीवसंज्ञिताः ।
ब्राह्मणेभ्यः प्रदानानि नानारूपाणि पार्थिव ४९
हयादीनां प्रकृष्टानि तेऽध्वानं यान्ति वै नराः ।
सन्निवार्यातपं यान्ति च्छत्रेणैव हि च्छत्रदाः ॥५०
तृप्ताश्चैवान्नदातारो ह्यतृप्ताश्चाप्यनन्नदाः ।
वस्त्रिणो वस्त्रदा यान्ति अवस्त्रा यान्त्यवस्त्रदाः ॥
हिरण्यदाः सुखं यान्ति पुरुषास्त्वभ्यलंकृताः ।
भूमिदास्तु सुखं यान्ति सर्वैः कामैः सुतर्पिताः ॥
यान्ति चैवापरिक्लिष्टा नराः सस्यप्रदायकाः ।
नराः सुखतरं यान्ति विमानेषु गृहप्रदाः ॥ ५३
पानीयदा ह्यतृषिताः प्रहृष्टमनसो नराः ।
पन्थानं द्योतयन्तश्च यान्ति दीपप्रदाः सुखम् ५४
गोप्रदास्तु सुखं यान्ति निर्मुक्ताः सर्वपातकैः ।
विमानैर्हंससंयुक्तैर्यान्ति मासोपवासिनः ॥ ५५
तथा बर्हिप्रयुक्तैश्च षष्ठरात्रोपवासिनः ।
त्रिरात्रं क्षपते यस्तु एकभक्तेन पाण्डव ॥ ५६
अन्तरा चैव नाश्नाति तस्य लोका ह्यनामयाः ।
पानीयस्य गुणा दिव्याः प्रेतलोकसुखावहाः ५७
तत्र पुष्पोदका नाम नदी तेषां विधीयते ।
शीतलं सलिलं तत्र पिबन्ति ह्यमृतोपमम् ॥५८
ये च दुष्कृतकर्माणः पूयं तेषां विधीयते ।
एवं नदी महाराज सर्वकामप्रदा हि सा ॥ ५९

---

प्रतिश्रयाः गृहाः येषां यैः उत्सृष्टा इति शेषः । निर्वचनाः यमवार्तामपि न शृण्वन्तीत्यर्थः ॥ ४० ॥ वसूनां धनानाम् ॥४१॥

सत्योक्तास्तदनन्तरमिति ध. पाठः ॥ ४२ ॥ सर्वं पूज्यतमं प्रश्नमिति ध. पाठः ॥४५॥ प्रावृता वस्त्रदातार इति ध. पाठः ॥ ५१ ॥

तस्मात्त्वमपि राजेन्द्र पूजयैनान्यथाविधि ।
अध्वनि क्षीणगात्रश्च पथि पांसुसमन्वितः ॥६०
पृच्छते ह्यन्नदातारं गृहमायाति चाशया ।
तं पूजयाथ यत्नेन सोऽतिथिर्ब्राह्मणश्च सः ॥६१
तं यान्तमनुगच्छन्ति देवाः सर्वे सवासवाः ।
तस्मिन्संपूजिते प्रीता निराशा यान्त्यपूजिते ॥६२
तस्मात्त्वमपि राजेन्द्र पूजयैनं यथाविधि ।
एतत्ते शतशः प्रोक्तं किं भूयः श्रोतुमिच्छसि ६३
युधिष्ठिर उवाच ।
पुनः पुनरहं श्रोतुं कथां धर्मसमाश्रयाम् ।
पुण्यामिच्छामि धर्मज्ञ कथ्यमानां त्वया विभो ॥
मार्कण्डेय उवाच ।
धर्मान्तरं प्रति कथां कथ्यमानां मया नृप ।
सर्वपापहरां नित्यं शृणुष्वावहितो मम ॥ ६५
कपिलायां तु दत्तायां यत्फलं ज्येष्ठपुष्करे ।
तत्फलं भरतश्रेष्ठ विप्राणां पादधावने ॥ ६६
द्विजपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ।
तावत्पुष्करपर्णेन पिबन्ति पितरो जलम् ॥ ६७
स्वागतेनाग्नयस्तृप्ता आसनेन शतक्रतुः ।
पितरः पादशौचेन अन्नाद्येन प्रजापतिः ॥ ६८
यावद्वत्सस्य पादौ द्वौ शिरश्चैव प्रदृश्यते ।
तस्मिन्काले प्रदातव्या प्रयतेनान्तरात्मना ॥६९
अन्तरिक्षगतो वत्सो यावद्योन्यां प्रदृश्यते ।
तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥७०
यावन्ति तस्यां रोमाणि वत्सस्य च युधिष्ठिर ।
तावद्युगसहस्राणि स्वर्गलोके महीयते ॥ ७१
सुवर्णनासां यः कृत्वा सखुरां कृष्णधेनुकाम् ।
तिलैः प्रच्छादितां दद्यात्सर्वरत्नैरलंकृताम् ॥७२
प्रतिग्रहं गृहीत्वा यः पुनर्ददति साधवे ।
फलानां फलमश्नाति तदा दत्त्वा च भारत ॥७३
ससमुद्रगुहा तेन सशैलवनकानना ।
चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः ॥ ७४

अन्तर्जानुशयो यस्तु भुङ्क्ते सक्तभाजनः ।
यो द्विजः शब्दरहितं संयन्तुस्तारणाय वै ॥ ७५
ये पानीयानि ददति तथाऽन्ये ये द्विजातयः ।
जपन्ति संहितां सम्यक्ते नित्यं तारणक्षमाः ॥७६
हव्यं कव्यं च यत्किंचित्सर्वं तच्छ्रोत्रियोऽर्हति ।
दत्तं हि श्रोत्रिये साधौ ज्वलितेऽग्नौ यथा हुतम् ७७
मन्युप्रहरणा विप्रा न विप्राः शस्त्रयोधिनः ।
निहन्युर्मन्युना विप्रा वज्रपाणिरिवासुरान् ॥ ७८
धर्माश्रितेयं तु कथा कथिता हि तवानघ ।
यां श्रुत्वा मुनयः प्रीता नैमिषारण्यवासिनः ॥७९
वीतशोकभयक्रोधा विपाप्मानस्तथैव च ।
श्रुत्वेमां तु कथां राजन्भवन्तीह तु मानवाः ॥८०
युधिष्ठिर उवाच ।
किं तच्छौचं भवेद्येन विप्रः शुद्धः सदा भवेत् ।
तदिच्छामि महाप्राज्ञ श्रोतुं धर्मभृतांवर ॥ ८१
मार्कण्डेय उवाच ।
वाक्शौचं कर्मशौचं च यच्च शौचं जलात्मकम् ।
त्रिभिः शौचैरुपेतो यः स स्वर्गी नात्र संशयः ॥
सायं प्रातश्च संध्यां यो ब्राह्मणोऽभ्युपसेवते ।
प्रजपन्पावनीं देवीं गायत्रीं वेदमातरम् ॥ ८३
स तया पावितो देव्या ब्राह्मणो नष्टकिल्बिषः ।
न सीदेत्प्रतिगृह्णानो महीमपि ससागराम् ॥ ८४
ये चास्य दारुणाः केचिद्ग्रहाः सूर्यादयो दिवि ।
ते चास्य सौम्या जायन्ते शिवाः शिवतराः सदा ॥
सर्वे नानुगतं चैनं दारुणाः पिशिताशनाः ।
घोररूपा महाकाया धर्षयन्ति द्विजोत्तमम् ॥ ८६
नाध्यापनाद्याजनाद्वा अन्यायाद्वा प्रतिग्रहात् ।
दोषो भवति विप्राणां ज्वलिताग्निसमा द्विजाः ॥
दुर्वेदा वा सुवेदा वा प्राकृताः संस्कृतास्तथा ।
ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः ॥८८
यथा श्मशाने दीप्तौजाः पावको नैव दुष्यति ।
एवं विद्वानविद्वान्वा ब्राह्मणो दैवतं महत् ॥८९

अपानपा नगदितास्तथा इति झ. पाठः । अपानपाः अमद्यपाः नगदिताः न केनचिद्दोषवत्तया कीर्तिताः ॥ ७६ ॥ राजन्न भवन्तीह मानवाः इति झ. पाठः । न भवन्तीह मानवाः स्वर्गे प्राप्योपर्युपरि गच्छन्तो मुक्तिमेव प्राप्नुवन्तीत्यर्थः ॥ ८० ॥ अन्यसाद्वा इति झ. पाठः ॥ ८७ ॥

प्राकारैश्च पुरद्वारैः प्रासादैश्च पृथग्विधैः ।
नगराणि न शोभन्ते हीनानि ब्राह्मणोत्तमैः ९०
वेदाढ्या वृत्तसंपन्ना ज्ञानवन्तस्तपस्विनः ।
यत्र तिष्ठन्ति वै विप्रास्तन्नाम नगरं नृप ॥ ९१
व्रजे वाऽप्यथवाऽरण्ये यत्र सन्ति बहुश्रुताः ।
तत्तन्नगरमित्याहुः पार्थ तीर्थं च तद्भवेत् ॥ ९२
रक्षितारं च राजानं ब्राह्मणं च तपस्विनम् ।
अभिगम्याभिपूज्याथ सद्यः पापात्प्रमुच्यते ॥९३
पुण्यतीर्थाभिषेकं च पवित्राणां च कीर्तनम् ।
सद्भिः संभाषणं चैव प्रशस्तं कीर्त्यते बुधैः ॥९४
साधुसङ्गमपूतेन वाक्सुभाषितवारिणा ।
पवित्रीकृतमात्मानं सन्तो मन्यन्ति नित्यशः९५
त्रिदण्डधारणं मौनं जटाभारोऽथ मुण्डनम् ।
वल्कलाजिनसंवेष्टं व्रतचर्याऽभिषेचनम् ॥ ९६
अग्निहोत्रं वने वासः शरीरपरिशोषणम् ।
सर्वाण्येतानि मिथ्या स्युर्यदि भावो न निर्मलः॥
न दुष्करमनाशित्वं सुकरं ह्यशनं विना ।
विशुद्धिं चक्षुरादीनां षण्णामिन्द्रियगामिनाम् ।
विकारि तेषां राजेन्द्र सुदुष्करतरं मनः ॥ ९८
ये पापानि न कुर्वन्ति मनोवाक्कर्मबुद्धिभिः ।
ते तपन्ति महात्मानो न शरीरस्य शोषणम् ९९
न ज्ञातिभ्यो दया यस्य शुक्लदेहोऽविकल्मषः ।
हिंसा सा तपसस्तस्य नानाशित्वं तपः स्मृतम्॥
तिष्ठन्गृहे चैव मुनिर्नित्यं शुचिरलंकृतः ।
यावज्जीवं दयावांश्च सर्वपापैः प्रमुच्यते ॥ १०१
न हि पापानि कर्माणि शुद्ध्यन्त्यनशनादिभिः।
सीदत्यनशनादेव मांसशोणितलेपनः ॥ १०२
अज्ञातं कर्म कृत्वा च क्लेशो नान्यत्प्रहीयते ।
नाग्निर्दहति कर्माणि भावशून्यस्य देहिनः॥१०३
पुण्यादेव प्रव्रजन्ति शुध्यन्त्यनशनानि च ।
न मूलफलभक्षित्वान्न मौनान्नानिलाशनात् १०४
शिरसो मुण्डनाद्वाऽपि न स्थानकुटिकासनात् ।
न जटाधारणाद्वाऽपि न तु स्थण्डिलशय्यया१०५
नित्यं ह्यनशनाद्वाऽपि नाग्निशुश्रूषणादपि ।
न चोदकप्रवेशेन न च क्ष्माशयनादपि ॥ १०६
ज्ञानेन कर्मणा वापि जरामरणमेव च ।
व्याधयश्च प्रहीयन्ते प्राप्यते चोत्तमं पदम् १०७
बीजानि ह्यग्निदग्धानि न रोहन्ति पुनर्यथा ।
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संयुज्यते पुनः १०८
आत्मना विप्रहीणानि काष्ठकुड्योपमानि च ।
विनश्यन्ति न संदेहः फेनानीव महार्णवे॥१०९
आत्मानं विन्दते येन सर्वभूतगुहाशयम् ।
श्लोकेन यदि वाऽर्धेन क्षीणं तस्य प्रयोजनम्११०
द्व्यक्षरादभिसंधाय केचिच्छ्लोकपदाङ्कितैः ।
शतैरन्यैः सहस्रैश्च प्रत्ययो मोक्षलक्षणम् ॥ १११
नायं लोकोस्ति न परो न सुखं संशयात्मनः ।
ऊचुर्ज्ञानविदो वृद्धाः प्रत्ययो मोक्षलक्षणम् ११२
विदितार्थस्तु वेदानां परिवेद प्रयोजनम् ।
उद्विजेत्स तु देवेभ्यो दावाग्नेरिव मानवः ॥११३
शुष्कं तर्कं परित्यज्य आश्रयस्व श्रुतिं स्मृतिम् ।
एकाक्षराभिसंबद्धं तत्त्वं हेतुभिरिच्छसि ।
बुद्धिर्न तस्य सिद्ध्येत साधनस्य विपर्ययात् ११४
वेद्यं पूर्वं वेदितव्यं प्रयत्ना-
त्तद्धीर्वेदस्तस्य वेदः शरीरम् ।

---

पवित्राणां त्रिसुपर्णादिमन्त्राणाम् ॥ ९४ ॥ अभिषेचनं तीर्थेषु ॥ ९६ ॥ भावश्चित्तम् ॥ ९७ ॥ न दुष्करमिति इन्द्रियगामिनां विषयाणां विशुद्धिं विना अशनं भोगः सुकरम् । भोगो विषयशुद्धिं नापेक्षते । पण्याङ्गनासङ्गादिनापि तत्सिद्धेः । किंतु अनाशित्वं अमृतत्वं भोगवर्जनं वा तां विना न सुकरम् । यतो दुष्करं स्वभावतो दुःसंपादमिति योजना । दुष्करत्वे हेतुमाहार्धेन विकारीति । सुदुष्करतरं दुर्जयम् ॥ ९८ ॥ ज्ञातिभ्यः पुत्राद्यर्थे । शुक्लदेहः शुक्लवृत्त्युपजीवी । अविकल्मषः शुक्लवृत्त्या यः कुटुम्बं पीडयति स निष्कल्मषो न भवतीत्यर्थः । तस्योपपादनमुत्तरार्धेन हिंसेति । अनाशित्वं अशनत्यागः ॥ १०० ॥ मांसशोणितलेपनः देहः ॥ १०१ ॥ अज्ञातं शास्त्रात्किंतु स्वयमेव कल्पितं तप्तशिलारोहणादि । तेन क्लेश एव नतु अन्यत्पापं प्रहीयते ॥ १०३ ॥ स्थानकुटिकासनात्स्थावरगृहत्यागात् ॥ १०५ ॥ आत्मनेति शरीराणीति शेषः ॥ १०९ ॥ स तु वेदेभ्यः इति झ. पाठः ॥ ११३ ॥ वेदपूर्वं वेदितव्यं प्रयत्नात्तद्वै वेदस्तस्य वेदः शरी-

वेदस्तत्त्वं तत्समासोपलब्धिः
क्लीबस्त्वात्मा न स वेद्यं न वेदः ॥११५
वेदोक्तमायुर्देवानामाशिषश्चैव कर्मणाम् ।
फलत्यनुयुगं लोके प्रभावश्च शरीरिणाम् ॥ ११६
इन्द्रियाणां प्रसादेन तदेतत्परिवर्जयेत् ।
तस्मादनशनं दिव्यं निरुद्धेन्द्रियगोचरम् ॥११७
तपसा स्वर्गगमनं भोगो दानेन जायते ।
ज्ञानेन मोक्षो विज्ञेयस्तीर्थस्नानादघक्षयः ॥११८

वैशंपायन उवाच ।

एवमुक्तस्तु राजेन्द्र प्रत्युवाच महायशाः ।
भगवञ्श्रोतुमिच्छामि प्रदानविधिमुत्तमम् ॥११९

मार्कण्डेय उवाच ।

यत्तत्पृच्छसि राजेन्द्र दानधर्मं युधिष्ठिर ।
इष्टं चेदं सदा मह्यं राजन्गौरवतस्तथा ॥ १२०
शृणु दानरहस्यानि श्रुतिस्मृत्युदितानि च ।
छायायां करिणः श्राद्धं तत्कर्म परिवीजितम् ।
दशकल्पायुतानीह न क्षीयेत युधिष्ठिर ॥ १२१
जीवनाय समाक्लिन्नं वसु दत्त्वा महीपते ।
विप्रं तु वासयेद्यस्तु सर्वयज्ञैः स इष्टवान् ॥१२२
प्रतिस्रोतश्चित्रवाहाः पर्जन्योऽन्नानुसंचरन् ।
महाधुरि यथा नावा महापापैः प्रमुच्यते ।
विषुवे विप्रदत्तानि दधिमध्वक्षयाणि च ॥ १२३
पर्वसु द्विगुणं दानमृतौ दशगुणं भवेत् ।
'अब्दे दशगुणं प्रोक्तमनन्तं विषुवे भवेत्' १२४
अयने विषुवे चैव षडशीतिमुखेषु च ।
चन्द्रसूर्योपरागे च दत्तमक्षयमुच्यते ॥ १२५
ऋतुषु दशगुणं वदन्ति दत्तं
शतगुणमृत्वयनादिषु ध्रुवम् ।
भवति सहस्रगुणं दिनस्य राहो-
र्विषुवति चाक्षयमश्नुते फलम् ॥ १२६
नाभूमिदो भूमिमश्नाति राज-
न्नायानदो यानमारुह्य याति ।
यान्यान्कामान्ब्राह्मणेभ्यो ददाति
तांस्तान्कामाञ्जायमानः स भुङ्क्ते ॥ १२७
अग्नेरपत्यं प्रथमं सुवर्णं
भूर्वैष्णवी सूर्यसुताश्च गावः ।
लोकास्त्रयस्तेन भवन्ति दत्ता
यः काञ्चनं गाश्च महीं च दद्यात् ॥१२८
परं हि दानान्न बभूव शाश्वतं
भव्यं त्रिलोके भवते कुतः पुनः ।
तस्मात्प्रधानं परमं हि दानं
वदन्ति लोकेषु विशिष्टबुद्धयः ॥ १२९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥

---

रम् । वेदस्तत्वं तत्समासोपलब्धौ क्लीबस्त्वात्मा तत्सवेद्यस्य वेद्यम् । इति झ. पाठः ॥ ११५ ॥ प्रसादेन नैर्मल्येन । अनशनं नाम चित्तेन्द्रियनिरोधो नत्वाहारत्याग इत्याह तस्मादिति ॥ ११७ ॥ छायायां करिणः । गुर्वमायोगेऽश्वत्थच्छाया गजच्छायाख्यं पर्व देशकालयोगजम् । तत्कर्णपरिवीजिते इति झ. पाठः । कर्णाइव कर्णा अश्वत्थपल्लवास्तैर्वीजिते देशे जलोपान्ते ॥ १२१ ॥ समाक्लिन्नं आर्द्रं वसु अन्नादिद्रव्यं दत्त्वा महीयते । वैश्यं तु इति झ. पाठः ॥ १२२ ॥ प्रति प्रतीपं पूर्ववाहिन्याः नद्याः पश्चिमाभिमुखं स्रोतः प्रवाहो यत्र तत् तीर्थं प्रतिस्रोतः । तत्र पात्रेऽर्पिताश्चित्रवाहा उत्तमाश्वाः । विपरिणम्य अक्षया इत्यपकृष्यते । अक्षयफला इत्यर्थः । पर्जन्योऽन्नानुसंचरन् अन्नार्थं अनुसंचरन्पर्जन्य इन्द्रोऽप्यक्षयः । अतिथिरूपेण तृप्त इन्द्रोप्यक्षयस्वर्गप्रद इत्यर्थः । महाधुरि महति धूःसदृशे प्रवाहे ना पुरुषो वा यथा महाधुरि योगभारे । यथा सर्वपापैः प्रमुच्यते तथैव गजच्छायाश्राद्धादिकर्तारोपि मुच्यन्त इत्यर्थः ॥ १२३ ॥ विप्लवे विप्रदत्तानि दधिमस्त्वक्षयाणि च इति झ. पाठः ॥ १२४ ॥ विषुवे तुलामेषसंक्रान्त्योः । षडशीतिमुखे मिथुनकन्यामीनसंक्रान्तिषु ॥ १२५ ॥ कामान् काम्यमानान्विषयान् ॥ १२७ ॥ त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥

## चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥

मार्कण्डेयेन युधिष्ठिरंप्रति धुन्धुमारोपाख्यानकथनारम्भः ॥ १ ॥ उदङ्कनामकमुनेस्तपसा तुष्टेन विष्णुना तस्मै वरदानम् ॥ २ ॥ तथा विष्णुना उदङ्कंप्रति कुवलाश्वेन धुन्धुनामकासुरघातनविधानपूर्वकमन्तर्धानम् ॥ ३ ॥

वैशंपायन उवाच ।
[श्रुत्वा तु राजा राजर्षेरिन्द्रद्युम्नस्य तत्तथा ।
मार्कण्डेयान्महाभागात्स्वर्गस्य प्रतिपादनम् ॥] १
युधिष्ठिरो महाराज पप्रच्छ भरतर्षभ ।
मार्कण्डेयं तपोवृद्धं दीर्घायुषमकल्मषम् ॥ २
विदितास्तव धर्मज्ञ देवदानवरक्षसाम् ।
राजवंशाश्च विविधा ऋषिवंशाश्च शाश्वताः ॥ ३
न तेऽस्त्यविदितं किंचिदस्मिँल्लोके द्विजोत्तम ।
अथ वेत्सि मुने वंशान्मनुष्योरगरक्षसाम् ॥ ४
देवगन्धर्वयक्षाणां किन्नराप्सरसां तथा ।
इदमिच्छाम्यहं श्रोतुं तत्त्वेन द्विजसत्तम ॥ ५
कुवलाश्व इति ख्यात इक्ष्वाकुकुलसंभवः ।
कथं नाम विपर्यासाद्धुन्धुमारत्वमागतः ॥ ६
एतदिच्छामि तत्त्वेन ज्ञातुं भार्गवसत्तम ।
विपर्यस्तं यथा नाम कुवलाश्वस्य धीमतः ॥ ७
[वैशंपायन उवाच ।
युधिष्ठिरेणैवमुक्तो मार्कण्डेयो महामुनिः ।
धौन्धुमारमुपाख्यानं कथयामास भारत ॥] ८
मार्कण्डेय उवाच ।
हन्त ते कथयिष्यामि शृणु राजन्युधिष्ठिर ।
धर्मिष्ठमिदमाख्यानं धुन्धुमारस्य तच्छृणु ॥ ९
यथा स राजा ऐक्ष्वाकः कुवलाश्वो महीपतिः ।
धुन्धुमारत्वमगमत्तच्छृणुष्व महीपते ॥ १०
महर्षिर्विश्रुतस्तात उदङ्क इति भारत ।
मरुधन्वसु रम्येषु आश्रमस्तस्य कौरव ॥ ११
उदङ्कस्तु महाराज तपोतप्यत्सुदुश्चरम् ।
आरिराधयिषुर्विष्णुं बहून्वर्षगणान्विभुः ॥ १२
तस्य प्रीतः स भगवान्साक्षाद्दर्शनमेयिवान् ।
दृष्ट्वा महर्षिस्तद्ब्रह्म तुष्टाव विविधैः स्तवैः ॥ १३

उदङ्क उवाच ।
त्वया देव प्रजाः सर्वाः ससुरासुरमानवाः ।
स्थावराणि च भूतानि जङ्गमानि तथैव च ॥ १४
ब्रह्म वेदाश्च वेद्यं च त्वया सृष्टं महाद्युते ।
शिरस्ते गगनं देव नेत्रे शशिदिवाकरौ ॥ १५
निःश्वासः पवनश्चापि तेजोऽग्निश्च तवाच्युत ।
बाहवस्ते दिशः सर्वाः कुक्षिश्चापि महार्णवः ॥ १६
ऊरू ते पर्वता देव खं नाभिर्मधुसूदन ।
पादौ ते पृथिवी चैव रोमाण्योषधयस्तथा ॥ १७
इन्द्रसोमाग्निवरुणा देवासुरमहोरगाः ।
प्रह्वास्त्वामुपतिष्ठन्ति स्तुवन्तो विविधैः स्तवैः ॥ १८
त्वया व्याप्तानि सर्वाणि भूतानि भुवनेश्वर ।
योगिनः सुमहावीर्याः स्तुवन्ति त्वां महर्षयः ॥ १९
त्वयि तुष्टे जगच्छान्तं त्वयि क्रुद्धे महद्भयम् ।
भयानामपनेतासि त्वमेकः पुरुषोत्तम ॥ २०
देवानां मानुषाणां च सर्वभूतसुखावहः ।
त्रिभिर्विक्रमणैर्देव त्रयो लोकास्त्वया वृताः ॥ २१
असुराणां समृद्धानां विनाशश्च त्वया कृतः ।
तव विक्रमणैर्देवा निर्वाणमगमन्परम् ॥ २२
पराभवं च दैत्येन्द्रास्त्वयि क्रुद्धे महाद्युते ।
त्वं हि कर्ता विकर्ता च भूतानामिह सर्वशः ।
आराधयित्वा त्वां देवाः सुखमेधन्ति नित्यशः ॥
एवं स्तुतो हृषीकेश उदङ्केन महात्मना ।
उदङ्कमब्रवीद्विष्णुः प्रीतस्तेऽहं वरं वृणु ॥ २४
उदङ्क उवाच ।
पर्याप्तो मे वरो ह्येष यदहं दृष्टवान्हरिम् ।
पुरुषं शाश्वतं दिव्यं स्रष्टारं जगतः प्रभुम् ॥ २५
विष्णुरुवाच ।
प्रीतस्तेऽहमलौल्येन भक्त्या तव च सत्तम ।

देवदानवराक्षसा इति ध. पाठः ॥ ३ ॥

अवश्यं हि त्वया ब्रह्मन्मत्तो ग्राह्यो वरो द्विज२६
एवं स च्छन्द्यमानस्तु वरेण हरिणा तदा ।
उदङ्कः प्राञ्जलिर्वव्रे वरं भरतसत्तम ॥ २७
यदि मे भगवन्प्रीतः पुण्डरीकनिभेक्षण ।
धर्मे सत्ये दमे चैव बुद्धिर्भवतु मे सदा ।
अभ्यासश्च भवेद्भक्त्या त्वयि नित्यं ममेश्वर ॥२८
भगवानुवाच ।
सर्वमेतद्धि भविता मत्प्रसादात्तव द्विज ॥ २९
प्रतिभास्यति योगश्च येन युक्तो दिवौकसाम् ।
त्रयाणामपि लोकानां महत्कार्यं करिष्यसि ॥३०
उत्सादनार्थं लोकानां धुन्धुर्नाम महासुरः ।
तपस्यति तपो घोरं शृणु यस्तं हनिष्यति ॥ ३१
[राजा हि वीर्यवांस्तात इक्ष्वाकुरपराजितः ।]
बृहदश्व इति ख्यातो भविष्यति महीपतिः ॥३२
तस्य पुत्रः शुचिर्दान्तः कुवलाश्व इति श्रुतः ।
स योगबलमास्थाय मामकं पार्थिवोत्तमः ।
शासनात्तव विप्रर्षे धुन्धुमारो भविष्यति ॥ ३३
उदङ्कमेवमुक्त्वा तु विष्णुरन्तरधीयत ॥ ३४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥

---

## पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥

उदङ्केन राज्ये स्वपुत्राभिषेचनपूर्वकं वनंप्रस्थितं बृहदश्वं प्रति तन्निवारणपूर्वकं धुन्धुनामकासुरहननचोदना ॥ १ ॥

मार्कण्डेय उवाच ।
इक्ष्वाकौ संस्थिते राजञ्शशादः पृथिवीमिमाम् ।
प्राप्तः परमधर्मात्मा सोऽयोध्यायां नृपोऽभवत् १
शशादस्य तु दायादः ककुत्स्थो नाम वीर्यवान् ।
अनेनाश्चापि काकुत्स्थः पृथुश्चानेनसः सुतः ॥ २
विष्वगश्वः पृथोः पुत्रस्तस्मादार्द्रश्च जज्ञिवान् ।
आर्द्रस्य युवनाश्वस्तु श्रावस्तस्तस्य चात्मजः ॥ ३
जज्ञे श्रावस्तको राजा श्रावस्ती येन निर्मिता ।
श्रावस्तस्य तु दायादो बृहदश्वो महाबलः ॥ ४
बृहदश्वस्य दायादः कुवलाश्व इति स्मृतः ।
कुवलाश्वस्य पुत्राणां सहस्राण्येकविंशतिः ॥ ५
सर्वे विद्यासु निष्णाता बलवन्तो दुरासदाः ।
कुवलाश्वश्च पितृतो गुणैरभ्यधिकोऽभवत् ॥ ६
समये तं तदा राज्ये बृहदश्वोऽभ्यषेचयत् ।
कुवलाश्वं महाराज शूरमुत्तमधार्मिकम् ॥ ७
पुत्रसंक्रामितश्रीस्तु बृहदश्वो महीपतिः ।
जगाम तपसे धीमांस्तपोवनममित्रहा ॥ ८
अथ शुश्राव राजर्षिं तमुदङ्को नराधिप ।
वनं संप्रस्थितं राजन्बृहदश्वं द्विजोत्तमः ॥ ९
तमुदङ्को महातेजाः सर्वास्त्रविदुषांवरम् ।
न्यवारयदमेयात्मा समासाद्य पुरोत्तमे ॥ १०
उदङ्क उवाच ।
भवता रक्षणं कार्यं तत्तावत्कर्तुमर्हसि ।
निरुद्विग्ना वयं राजंस्त्वत्प्रदाद्वसेमहि ॥ ११
त्वया हि पृथिवी राजन्रक्ष्यमाणा महात्मना ।
भविष्यति निरुद्विग्ना नारण्यं गन्तुमर्हसि ॥ १२
पालने हि महान्धर्मः प्रजानामिह दृश्यते ।
न तथा दृश्यतेऽरण्ये माभूत्ते बुद्धिरीदृशी ॥ १३
ईदृशो न हि राजेन्द्र धर्मः क्वचन दृश्यते ।
प्रजानां पालने यत्नः पुरा राजर्षिभिः कृतः ॥१४
रक्षितव्याः प्रजा राज्ञा तास्त्वं रक्षितुमर्हसि ।
निरुद्विग्नस्तपस्तप्तुं न हि शक्नोमि पार्थिव ॥ १५
ममाश्रमसमीपे वै समेषु मरुधन्वसु ।
समुद्रवालुकापूर्ण उज्जालक इति स्मृतः ।
बहुयोजनविस्तीर्णो बहुयोजनमायतः ॥ १६
तत्र रौद्रो दानवेन्द्रो महावीर्यपराक्रमः ।
मधुकैटभयोः पुत्रो धुन्धुर्नाम सुदारुणः ।
अन्तर्भूमिगतो राजन्वसत्यमितविक्रमः ॥ १७

बाडिशश्च पृथोः पुत्र इति क. थ. पाठः ॥ ३ ॥

तं निहत्य महाराज वनं त्वं गन्तुमर्हसि ॥ १८
शेते लोकविनाशाय तप आस्थाय दारुणम् ।
त्रिदशानां विनाशाय लोकानां चापि पार्थिव १९
अवध्यो दैवतानां हि दैत्यानामथ रक्षसाम् ।
नागानामथ यक्षाणां गन्धर्वाणां च सर्वशः ।
अवाप्य स वरं राजन्सर्वलोकपितामहात् ॥ २०
तं विनाशय भद्रं ते मा ते बुद्धिरतोऽन्यथा ।
प्राप्स्यसे महतीं कीर्तिं शाश्वतीमव्ययां ध्रुवाम् २१
क्रूरस्य तस्य स्वपतो वालुकान्तर्हितस्य च ।
संवत्सरस्य पर्यन्ते निःश्वासः संप्रवर्तते ॥ २२
यदा तदा भूश्चलति सशैलवनकानना ।
तस्य निःश्वासवातेन रज उद्धूयते महत् ॥ २३
आदित्यपथमाश्रित्य सप्ताहं भूमिकम्पनम् ।
सविस्फुलिङ्गं सज्वालं धूममिश्रं सुदारुणम् ॥२४
तेन राजन्न शक्नोमि तस्मिन्स्थातुं स्वआश्रमे॥२५
तं विनाशय राजेन्द्र लोकानां हितकाम्यया ।
लोकाः स्वस्था भविष्यन्ति तस्मिन्विनिहतेऽसुरे॥
'धुन्धुनामानमत्युग्रं दानवं घोरविग्रहम् ।
समरे घोरतुमुले विनाशय महेषुणा ॥' २७
त्वं हि तस्य विनाशाय पर्याप्त इति मे मतिः ।
तेजसा तव तेजश्च विष्णुराप्याययिष्यति ॥ २८
विष्णुना च वरो दत्तः पूर्वं मम महीपते ॥ २९
यस्तं महासुरं रौद्रं वधिष्यति महीपतिः ।
तेजस्तद्वैष्णवमिति प्रवेक्ष्यति दुरासदम् ॥ ३०
तत्तेजस्त्वं समाधाय राजेन्द्र भुवि दुःसहम् ।
तं निषूदय संदिष्टो दैत्यं रौद्रपराक्रमम् ॥ ३१
न हि धुन्धुर्महातेजास्तेजसाऽल्पेन शक्यते ।
निर्दग्धुं पृथिवीपाल स हि वर्षशतैरपि ॥ ३२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥

---

## षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥

बृहदश्वेनोदङ्कंप्रति स्वपुत्रेण कुवलाश्वेन धुन्धुवधस्य भावित्वकथनपूर्वकं वनंप्रति गमनम् ॥ १ ॥ धुन्धूत्पत्तिं पृष्टेन मार्कण्डेयेन युधिष्ठिरंप्रति तदुपोद्घाततया मधुकैटभवृत्तान्तकथनम् ॥ २ ॥

मार्कण्डेय उवाच ।
स एवमुक्तो राजर्षिरुदङ्केनापराजितः ।
उदङ्कं कौरवश्रेष्ठ कृताञ्जलिरथाब्रवीत् ॥ १
न हि मे गमनं ब्रह्मन्मोघमेतद्भविष्यति ।
पुत्रो ममायं भगवन्कुवलाश्व इति स्मृतः ॥ २
धृतिमान्क्षिप्रकारी च वीर्येणाप्रतिमो भुवि ।
प्रियं च ते सर्वमेतत्करिष्यति न संशयः ॥ ३
पुत्रैः परिवृतः सर्वैः शूरैः परिघबाहुभिः ।
'हनिष्यति महाबाहुस्तं वै धुन्धुं महाऽसुरम् ।'
विसर्जयस्व मां ब्रह्मन्न्यस्तशस्त्रोस्मि सांप्रतम् ॥ ४
तथाऽस्त्विति च तेनोक्तो मुनिनाऽमिततेजसा ।
स तमादिश्य तनयमुदङ्काय महात्मने ।
क्रियतामिति राजर्षिर्जगाम वनमुत्तमम् ॥ ५

युधिष्ठिर उवाच ।
क एष भगवन्दैत्यो महावीर्यस्तपोधन ।
कस्य पुत्रोऽथ नप्ता वा एतदिच्छामि वेदितुम् ६
एवं महाबलो दैत्यो न श्रुतो मे तपोधन ।
'यस्य निश्वासवातेन कम्पते भूः सपर्वता ॥' ७
एतदिच्छामि भगवन्याथातथ्येन वेदितुम् ।
सर्वमेव महाप्राज्ञ विस्तरेण तपोधन ॥ ८
मार्कण्डेय उवाच ।
शृणु राजन्निदं सर्वं यथावृत्तं नराधिप ।
कथ्यमानं महाप्राज्ञ विस्तरेण यथातथम् ॥ ९
एकार्णवे निरालोके नष्टे स्थावरजङ्गमे ।
प्रनष्टेषु च भूतेषु सर्वेषु भरतर्षभ ॥ १०
प्रभवं लोककर्तारं विष्णुं शाश्वतमव्ययम् ।

न तेऽभिगमनं इति झ. पाठः ॥ २ ॥

षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥

यमाहुर्मुनयः सिद्धाः सर्वलोकमहेश्वरम् ।
'चतुर्भुजमुदाराङ्गं दृष्टवानसि भारत ॥' ११
सुष्वाप भगवान्विष्णुरप्शय्यामेक एव हि ।
नागस्य भोगे महति शेषस्यामिततेजसः ॥ १२
लोककर्ता महाभाग भगवानच्युतो हरिः ।
नागभोगेन महता परिरभ्य महीमिमाम् ॥ १३
स्वपतस्तस्य देवस्य पद्मं सूर्यसमप्रभम् ।
नाभ्या विनिःसृतं दिव्यं तत्रोत्पन्नः पितामहः ॥
साक्षाल्लोकगुरुर्ब्रह्मा पद्मे सूर्यसमप्रभः ।
चतुर्वेदश्चतुर्मूर्तिश्चतुर्वर्गश्चतुर्मुखः ॥ १५
स्वप्रभावाद्दुराधर्षो महाबलपराक्रमः ।
कस्यचित्त्वथ कालस्य दानवौ वीर्यवत्तमौ ॥ १६
मधुश्च कैटभश्चैव दृष्टवन्तौ हरिं प्रभुम् ।
शयानं शयने दिव्ये नागभोगे महाद्युतिम् ॥१७
बहुयोजनविस्तीर्णे बहुयोजनमायते ।
किरीटकौस्तुभधरं पीतकौशेयवाससम् ॥ १८
दीप्यमानं श्रिया राजंस्तेजसा वपुषा तथा ।
सहस्रसूर्यप्रतिममद्भुतोपमदर्शनम् ॥ १९
विस्मयः सुमहानासीन्मधुकैटभयोस्तदा ॥ २०
दृष्ट्वा पितामहं चापि पद्मे पद्मनिभेक्षणम् ।
वित्रासयेतामथ तौ ब्रह्माणममितौजसम् ॥ २१
वित्रास्यमानो बहुधा ब्रह्मा ताभ्यां महायशाः ।
अकम्पयत्पद्मनालं ततोऽबुध्यत केशवः ॥ २२
अथापश्यत गोविन्दो दानवौ वीर्यवत्तरौ ॥ २३
दृष्ट्वा तावब्रवीद्देवः स्वागतं वां महाबलौ ।
ददामि वां वरं श्रेष्ठं प्रीतिर्हि मम जायते ॥ २४
तौ प्रहस्य हृषीकेशं महादर्पौ महाबलौ ।
प्रत्यब्रूतां महाराज सहितौ मधुसूदनम् ॥ २५
आवां वरय देव त्वं वरदौ स्वः सुरोत्तम ।
दातारौ स्वो वरं तुभ्यं तद्ब्रवीह्यविचारयन् ॥२६
भगवानुवाच ।
प्रतिगृह्णे वरं वीरावीप्सितश्च वरो मम ।
युवां हि वीर्यसंपन्नौ न वामस्ति समः पुमान् ॥
वध्यत्वमुपगच्छेतां मम सत्यपराक्रमौ ।
एतदिच्छाम्यहं कामं प्राप्तुं लोकहिताय वै ॥२८
मधुकैटभावूचतुः ।
अनृतं नोक्तपूर्वं नौ स्वैरेष्वपि कुतोऽन्यथा ।
सत्ये धर्मे च निरतौ विद्ध्यावां पुरुषोत्तम ॥२९
बले रूपे च शौर्ये च शमे न च समोस्ति नौ ।
धर्मे तपसि दाने च शीलसत्वदमेषु च ॥ ३०
उपप्लवो महानस्मानुपावर्तत केशव ।
उक्तं प्रतिकुरुष्व त्वं कालो हि दुरतिक्रमः ॥३१
आवामिच्छावहे देव कृतमेकं त्वया विभो ।
अनावृतेऽवकाशे त्वं जह्यावां सुरसत्तम ॥ ३२
पुत्रत्वमधिगच्छाव तव चापि सुलोचन ।
वर एष वृतो देव तद्विद्धि सुरसत्तम ॥ ३३
अनृतं मा भवेद्देव यद्धि नौ संश्रुतं तदा ॥ ३४
भगवानुवाच ।
बाढमेवं करिष्यामि सर्वमेतद्भविष्यति ॥ ३५
स विचिन्त्याथ गोविन्दो नापश्यद्यदनावृतम् ।
अवकाशं पृथिव्यां वा दिवि वा मधुसूदनः ३६
स्वकावनावृतावूरू दृष्ट्वा देववरस्तदा ।
मधुकैटभयो राजञ्शिरसी मधुसूदनः ।
चक्रेण शितधारेण न्यकृन्तत महायशाः ॥ ३७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥

## सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

मधुकैटभपुत्रेण धुन्धुना तपस्तोषिताद्विरिञ्चादवध्यत्वादिवरग्रहणेन देवानां पीडनम् ॥ १ ॥ उदङ्कचोदितेन कुवलाश्वेन समुद्रमध्यमधिवसतस्तस्य ब्रह्मास्त्रेण दहनम् ॥ २ ॥ तदा देवादिभिः कुवलाश्वस्य धुन्धुमारइति नामकरणेन तस्मै वरदानपूर्वकं स्वस्वस्थानंप्रति गमनम् ॥३॥ मार्कण्डेयेन युधिष्ठिरंप्रति तत्पुत्राणां नामकथनपूर्वकं धुन्धुमारोपाख्यानस्तवनम् ॥४॥

मार्कण्डेय उवाच ।
धुन्धुर्नाम महाराज तयोः पुत्रो महाद्युतिः ।
स तपोऽतप्यत महन्महावीर्यपराक्रमः ॥ १
अतिष्ठदेकपादेन कृशो धमनिसंततः ।

तस्मै ब्रह्मा ददौ प्रीतो वरं वव्रे स च प्रभुम् ॥ २
देवदानवयक्षाणां सर्पगन्धर्वरक्षसाम् ।
अवध्योऽहं भवेयं वै वर एष वृतो मया ॥ ३
एवं भवतु गच्छेति तमुवाच पितामहः ।
स एवमुक्तस्तत्पादौ मूर्ध्ना स्पृष्ट्वा जगाम ह ॥ ४
स तु धुन्धुर्वरं लब्ध्वा महावीर्यपराक्रमः ।
अनुस्मरन्पितृवधं द्रुतं विष्णुमुपागमत् ॥ ५
स तु देवान्सगन्धर्वाञ्जित्वा धुन्धुरमर्षणः ।
बबाध सर्वानसकृद्विष्णुं देवांश्च वै भृशम् ॥ ६
समुद्रवालुकापूर्णे उज्जानक इति स्मृते ।
आगम्य च स दुष्टात्मा तं देशं भरतर्षभ ।
बाधतेस्म परं शक्त्या तमुदङ्काश्रमं विभो ॥ ७
अन्तर्भूमिगतस्तत्र वालुकान्तर्हितस्तथा ।
मधुकैटभयोः पुत्रो धुन्धुर्भीमपराक्रमः ॥ ८
शेते लोकविनाशाय तपोबलमुपाश्रितः ।
उदङ्कस्याश्रमाभ्याशे निःश्वसन्पावकार्चिषः ॥ ९
एतस्मिन्नेव काले तु राजा सबलवाहनः ।
कुवलाश्वो नरपतिरन्वितो बलशालिनाम् ॥ १०
सहस्रैरेकविंशत्या पुत्राणामरिमर्दनः ।
प्रायादुदङ्कसहितो धुन्धोस्तस्य वधाय वै ॥ ११
तमाविशत्ततो विष्णुर्भगवांस्तेजसा प्रभुः ।
उदङ्कस्य नियोगेन लोकानां हितकाम्यया ॥ १२
तस्मिन्प्रयाते दुर्धर्षे दिवि शब्दो महानभूत् ।
एष श्रीमान्नृपसुतो धुन्धुमारो भविष्यति ॥ १३
दिव्यैश्च पुष्पैस्तं देवाः समन्तात्पर्यवाकिरन् ।
देवदुन्दुभयश्चापि नेदुः स्वयमनीरिताः ॥ १४
शीतश्च वायुः प्रववौ प्रयाणे तस्य धीमतः ।
विपांसुलां महीं कुर्वन्ववर्ष च सुरेश्वरः ।
'प्रदक्षिणाश्चाप्यभवन्वन्यास्तं समृगद्विजाः ॥'१५
अन्तरिक्षे विमानानि देवतानां युधिष्ठिर ।
तत्रैव समदृश्यन्त धुन्धुर्यत्र महासुरः ॥ १६
कुवलाश्वस्य धुन्धोश्च युद्धकौतूहलान्विताः ।
देवगन्धर्वसहिताः समवैक्षन्महर्षयः ॥ १७
नारायणेन कौरव्य तेजसाऽऽप्यायितस्तदा ।
स गतो नृपतिः क्षिप्रं पुत्रैस्तैः सर्वतो दिशम् १८
अर्णवं खानयामास कुवलाश्वो महीपतिः ।
'हितार्थं सर्वलोकानामुदङ्कस्य वशे स्थितः ॥ १९
कुवलाश्वस्य पुत्रैश्च तस्मिन्वै वालुकार्णवे ।
सप्तभिर्दिवसैः खात्वा दृष्टो धुन्धुर्महाबलः ॥२०
आसीद्धोरं वपुस्तस्य वालुकान्तर्हितं महत् ।
दीप्यमानं यथा सूर्यस्तेजसा भरतर्षभ ॥ २१
ततो धुन्धुर्महाराज दिशमावृत्य पश्चिमाम् ।
सुप्तोऽभूद्राजशार्दूल कालानलसमद्युतिः ॥ २२
कुवलाश्वस्य पुत्रैस्तु सर्वतः परिवारितः ।
अभिद्रुतः शरैस्तीक्ष्णैर्गदाभिर्मुसलैरपि ॥ २३
पट्टसैः परिघैः प्रासैः खड्गैश्च विमलैः शितैः ।
स वध्यमानः संक्रुद्धः समुत्तस्थौ महाबलः ॥२४
क्रुद्धश्चाभक्षयत्तेषां शस्त्राणि विविधानि च ।
आस्याद्वमन्पावकं स संवर्तकसमं तदा ॥ २५
तान्सर्वान्नृपतेः पुत्रानदहत्स्वेन तेजसा ।
मुखजेनाग्निना क्रुद्धो लोकानुद्वर्तयन्निव ॥ २६
क्षणेन राजशार्दूल पुरेव कपिलः प्रभुः ।
सगरस्यात्मजान्क्रुद्धस्तदद्भुतमिवाभवत् ॥ २७
तेषु क्रोधाग्निदग्धेषु तदा भरतसत्तम ।
तं प्रबुद्धं महात्मानं कुम्भकर्णमिवापरम् ।
आससाद महातेजाः कुवलाश्वो महीपतिः ॥२८
तस्य वारि महाराज सुस्राव बहु देहतः ।
तत्तदापीयते तेजो राज्ञा वारिमयं नृप ॥ २९
योगी योगेन वह्निं स शमयित्वा च वारिणा ।
ब्रह्मास्त्रेण ततो राजा दैत्यं क्रूरपराक्रमम् ।
ददाह भरतश्रेष्ठ सर्वलोकभवाय वै ॥ ३०
सोऽस्त्रेण दग्ध्वा राजर्षिः कुवलाश्वो महासुरम् ।
सुरशत्रुममित्रघ्नस्त्रैलोक्येश इवापरः ॥ ३१
धुन्धोर्वधात्तदा राजा कुवलाश्वो महामनाः ।
धुन्धुमार इति ख्यातो नाम्ना समभवत्ततः ॥३२
प्रीतैश्च त्रिदशैः सर्वैर्महर्षिसहितैस्तदा ।

सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

वृष्टिं स गमयित्वा विचारिणा इति क. थ. पाठः । वह्निं च शमयामास वारिणा इति झ. पाठः ॥ ३० ॥

वरं वृणीष्वेत्युक्तः स प्राञ्जलिः प्रणतस्तदा ।
अतीव मुदितो राजन्निदं वचनमब्रवीत् ॥ ३३
दद्यां वित्तं द्विजाग्र्येभ्यः शत्रूणां चापि दुर्जयः ।
सख्यं च विष्णुना मे स्याद्भूतेष्वद्रोह एव च ।
धर्मे रतिश्च सततं स्वर्गे वासस्तथाऽक्षयः ॥ ३४
तथाऽस्त्विति ततो देवैः प्रीतैरुक्तः स पार्थिवः ।
ऋषिभिश्च सगन्धर्वैरुदङ्केन च धीमता ॥ ३५
संभाष्य चैनं विविधैराशीर्वादैस्ततो नृपम् ।
देवा महर्षयश्चापि स्वानि स्थानानि भेजिरे ॥३६
तस्य पुत्रास्त्रयः शिष्टा युधिष्ठिर तदाऽभवन् ।
दृढाश्वः कपिलाश्वश्च भद्राश्वश्चैव भारत ॥ ३७
तेभ्यः परम्परा राजन्निक्ष्वाकूणां महात्मनाम् ।
[वंशस्य सुमहाभाग राज्ञाममिततेजसाम् ॥] ३८
एवं स निहतस्तेन कुवलाश्वेन सत्तम ।
धुन्धुर्नाम महादैत्यो मधुकैटभयोः सुतः ॥ ३९
कुवलाश्वश्च नृपतिर्धुन्धुमार इति स्मृतः ।
नाम्ना च गुणयुक्तेन तदाप्रभृति सोऽभवत् ॥४०
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
धौन्धुमारमुपाख्यानं प्रथितं यस्य कर्मणा ॥ ४१
इदं तु पुण्यमाख्यानं विष्णोः समनुकीर्तनम् ।
शृणुयाद्यः स धर्मात्मा पुत्रवांश्च भवेन्नरः ॥ ४२
आयुष्मान्भूतिमांश्चैव श्रुत्वा भवति पर्वसु ।
न च व्याधिभयं किंचित्प्राप्नोति विगतज्वरः ४३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

## अष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥

मार्कण्डेयेन युधिष्ठिरंप्रति पतिव्रतामाहात्म्यकथनारम्भः ॥ १ ॥

वैशंपायन उवाच ।
ततो युधिष्ठिरो राजा मार्कण्डेयं महाद्युतिम् ।
पप्रच्छ भरतश्रेष्ठ धर्मप्रश्नं स दुर्वचम् ॥ १
श्रोतुमिच्छामि भगवन्स्त्रीणां माहात्म्यमुत्तमम् ।
कथ्यमानं त्वया विप्र सूक्ष्मं धर्म्यं च तत्त्वतः ॥२
प्रत्यक्षमिह विप्रर्षे देवा दृश्यन्ति सत्तम ।
सूर्याचन्द्रमसौ वायुः पृथिवी वह्निरेव च ॥ ३
पिता माता च भगवान्गाव एव च सत्तम ।
यच्चान्यदेव विहितं तच्चापि भृगुनन्दन ॥ ४
मन्येऽहं गुरुवत्सर्वमेकपत्न्यस्तथा स्त्रियः ।
पतिव्रतानां शुश्रूषा दुष्करा प्रतिभाति मे ।
पतिव्रतानां माहात्म्यं वक्तुमर्हसि नः प्रभो ॥ ५
निरुध्य चेन्द्रियग्रामं मनः संरुध्य चानघ ।
पतिं दैवतवच्चापि चिन्तयन्त्यः स्थिता हि याः ६
भगवन्दुष्करं त्वेतत्प्रतिभाति मम प्रभो ।
मातापित्रोश्च शुश्रूषा स्त्रीणां भर्तरि च द्विज ॥७
स्त्रीणां धर्मात्सुघोराद्धि नान्यं पश्यामि दुष्करम् ।
साध्वाचाराः स्त्रियो ब्रह्मन्कुर्वन्तीह सदादृताः ८
दुष्करं खलु कुर्वन्ति पितरो मातरश्च वै ।
एकपत्न्यश्च या नार्यो याश्च सत्यं वदन्त्युत ॥ ९
कुक्षिणा दशमासांश्च गर्भं संधारयन्ति याः ।
नार्यः कालेन संभूय किमद्भुततरं ततः ॥ १०
संशयं परमं प्राप्य वेदनामतुलामपि ।
प्रजायन्ते सुतान्नार्यो दुःखेन महता विभो ॥११
पुष्णन्ति चापि महता स्नेहेन द्विजपुङ्गव ।
'चिन्तयन्ति ततश्चापि किंशीलोऽयं भविष्यति ॥'
याश्च क्रूरेषु सर्वेषु वर्तमाना जुगुप्सिताः ।
स्वकर्म कुर्वन्ति सदा दुष्करं तच्च मे मतम् ॥१२
क्षत्रधर्मसमाचारतत्त्वं व्याख्याहि मे द्विज ।
धर्मः सुदुर्लभो विप्र नृशंसेन महात्मना ॥ १४
एतदिच्छामि भगवन्प्रश्नं प्रश्नविदांवर ।
श्रोतुं भृगुकुलश्रेष्ठ शुश्रूषे तव सुव्रत ॥ १५
मार्कण्डेय उवाच ।
हन्त तेऽहं समाख्यास्ये प्रश्नमेतं सुदुर्वचम् ।
तत्त्वेन भरतश्रेष्ठ गदतस्तन्निबोध मे ॥ १६

ये चक्रूरेषु इति झ. पाठः ॥ १३ ॥

मातरं श्रेयसीं तात पितॄनन्ये तु मेनिरे ।
दुष्करं कुरुते माता विवर्धयति या प्रजाः ॥१७
तपसा देवतेज्याभिर्वन्दनेन तितिक्षया ।
सुप्रशस्तैरुपायैश्चापीहन्ते पितरः सुतान् ॥ १८
एवं कृच्छ्रेण महता पुत्रं प्राप्य सुदुर्लभम् ।
चिन्तयन्ति सदा वीर कीदृशोऽयं भविष्यति१९
आशंसते हि पुत्रेषु पिता माता च भारत ।
यशः कीर्तिमथैश्वर्यं तेजो धर्मं तथैव च ॥ २०
'मातुः पितुश्च राजेन्द्र सततं हितकारिणोः ।'
तयोराशां तु सफलां यः करोति स धर्मवित् २१
पिता माता च राजेन्द्र तुष्यतो यस्य नित्यशः ।
इह प्रेत्य च तस्याथ कीर्तिर्धर्मश्च शाश्वतः ॥ २२
नैव यज्ञक्रियाः काश्चिन्न श्राद्धं नोपवासकम् ।
या तु भर्तरि शुश्रूषा तया स्वर्गं जयत्युत ॥ २३
एतत्प्रकरणं राजन्नधिकृत्य युधिष्ठिर ।
पतिव्रतानां नियतं धर्मं चावहितः शृणु ॥ २४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि अष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥

## नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥

तरुतले तपस्यता कौशिकेनात्मोपरि पुरीषोत्सृष्ट्या बलाकायाः सक्रोधनिरीक्षणेन दहनम् ॥ १ ॥ तथा भिक्षार्थं पतिव्रतायाः कस्याश्चिद्गृहं प्रविष्टं भिक्षादाने चिरीकरणेन रुष्टं च कौशिकंप्रति तया स्वस्य बलाकावृत्तान्तावगतिसूचनेन स्वशक्तिप्रकाशनपूर्वकं धर्मावगतये धर्मव्याधसमीपगमनचोदना ॥ २ ॥

मार्कण्डेय उवाच ।
कश्चिद्द्विजातिप्रवरो वेदाध्यायी तपोधनः ।
तपस्वी धर्मशीलश्च कौशिको नाम भारत ॥ १
साङ्गोपनिषदान्वेदानधीते द्विजसत्तमः ।
स वृक्षमूले कस्मिंश्चिद्वेदानुच्चारयन्स्थितः ॥ २
उपरिष्टाच्च वृक्षस्य बलाका संन्यलीयत ।
तया पुरीषमुत्सृष्टं ब्राह्मणस्य तदोपरि ॥ ३
समवेक्ष्य ततः क्रुद्धः समभ्यध्यायत द्विजः ।
'तां बलकां महाराज निलीनां नगमूर्धनि ॥ ४
भृशं क्रोधाभिभूतेन बलाका सा निरीक्षिता ।
अपध्याता च विप्रेण न्यपतद्धरणीतले ॥ ५
बलाकां पतितां दृष्ट्वा गतसत्वामचेतनाम् ।
कारुण्यादभिसंतप्तः पर्यशोचत तां द्विजः ।
अकार्यं कृतवानस्मि द्वेषरागबलात्कृतः ॥ ६
इत्युक्त्वा बहुशो विद्वान्ग्रामं भैक्षाय संश्रितः ।
ग्रामे शुचीनि प्रचरन्कुलानि भरतर्षभ ॥ ७
प्रविष्टस्तत्कुलं यत्र पूर्वं चरितवांस्तु सः ।
देहीति याचमानोऽसौ तिष्ठेत्युक्तः स्त्रिया ततः ।
शौचं तु यावत्कुरुते भाजनस्य कुटुम्बिनी ॥ ८
एतस्मिन्नन्तरे राजन्क्षुधासंपीडितो भृशम् ।
भर्ता प्रविष्टः सहसा तस्या भरतसत्तम ॥ ९
सा तु दृष्ट्वा पतिं साध्वी ब्राह्मणं व्यपहाय तम् ।
पाद्यमाचमनीयं वै ददौ भर्तुस्तथाऽऽसनम् ॥१०
प्रह्वा पर्यचरच्चापि भर्तारमसितेक्षणा ।
आहारेणाथ भक्ष्यैश्च वाक्यैः सुमधुरैस्तथा ॥ ११
उच्छिष्टं भाविता भर्तुर्भुङ्क्ते नित्यं युधिष्ठिर ।
दैवतं च पतिं मेने भर्तुश्चित्तानुसारिणी ॥ १२
कर्मणा मनसा वाचा नात्यश्नान्नापि चापिबत् ।
तं सर्वभावोपगता पतिशुश्रूषणे रता ॥ १३
साध्वाचारा शुचिर्दक्षा कुटुम्बस्य हितैषिणी ।
भर्तुश्चापि हितं यत्तत्सततं साऽनुवर्तते ॥ १४
देवतातिथिभृत्यानां श्वश्रूश्वशुरयोस्तथा ।
शुश्रूषणपरा नित्यं सततं संयतेन्द्रिया ॥ १५
सा ब्राह्मणं तदा दृष्ट्वा संस्थितं भैक्षकाङ्क्षिणम् ।
कुर्वती पतिशुश्रूषां सस्माराथ शुभेक्षणा ॥ १६
व्रीडिता साऽभवत्साध्वी तदा भरतसत्तम ।
भिक्षामादाय विप्राय निर्जगाम यशस्विनी ॥१७

प्रजाधर्मं इति झ. पाठः ॥ २० ॥

ब्राह्मण उवाच ।
किमिदं भवति त्वं मां तिष्ठेत्युक्त्वा वराङ्गने ।
उपरोधं कृतवती न विसर्जितवत्यसि ॥ १८
मार्कण्डेय उवाच ।
ब्राह्मणं क्रोधसंतप्तं ज्वलन्तमिव तेजसा ।
दृष्ट्वा साध्वी मनुष्येन्द्र सान्त्वपूर्वं वचोऽब्रवीत्॥
'क्षमस्व विप्रप्रवर क्षमस्व स्त्रीजडात्मताम् ।
प्रसीद भगवन्मह्यं कृपां कुरु मयि द्विज ॥' २०
क्षन्तुमर्हसि मे विद्वन्भर्ता मे दैवतं महत् ।
स चापि क्षुधितः श्रान्तः प्राप्तः शुश्रूषितो मया२१
ब्राह्मण उवाच ।
ब्राह्मणा न गरीयांसो गरीयांस्ते पतिः कृतः ।
गृहस्थधर्मे वर्तन्ती ब्राह्मणानवमन्यसे ॥ २२
इन्द्रोऽप्येषां प्रणमते किं पुनर्मानवो भुवि ।
अवलिप्ते न जानीषे वृद्धानां न श्रुतं त्वया॥२३
ब्राह्मणा ह्यग्निसदृशा दहेयुः पृथिवीमपि ।
'सपर्वतवनद्वीपां क्षिप्रमेवावमानिताः ॥' २४
स्त्र्युवाच ।
[नाहं बलाका विप्रर्षे त्यज क्रोधं तपोधन ।
अनया क्रुद्धया दृष्ट्या क्रुद्धः किं मां करिष्यसि] २५
नावजानाम्यहं विप्रान्देवैस्तुल्यान्मनस्विनः ।
अपराधमिमं विप्र क्षन्तुमर्हसि मेऽनघ ॥ २६
जानामि तेजो विप्राणां महाभाग्यं च धीमताम् ।
अपेयः सागरः क्रोधात्कृतो हि लवणोदकः ॥२७
तथैव दीप्ततपसां मुनीनां भावितात्मनाम् ।
येषां क्रोधाग्निरद्यापि समुद्रे नोपशाम्यति ।
'कस्तान्परिभवेन्मूढो ब्राह्मणानमितौजसः ॥'२८
ब्राह्मणानां परिभवाद्वातापिः सुदुरात्मवान् ।
अगस्त्यमृषिमासाद्य जीर्णः क्रूरो महासुरः ॥२९
बहुप्रभावाः श्रूयन्ते ब्राह्मणानां महात्मनाम् ।
क्रोधः सुविपुलो ब्रह्मन्प्रसादश्च महात्मनाम् ।
अस्मिंस्त्वतिक्रमे ब्रह्मन्क्षन्तुमर्हसि मेऽनघ ॥ ३०
पतिशुश्रूषया धर्मो यः स मे रोचते द्विज ।

दण्डकेनोपशाम्यति इति झ. पाठः ॥ २८ ॥

दैवतेष्वपि सर्वेषु भर्ता मे दैवतं परम् ॥ ३१
अविशेषेण तस्याहं कुर्यां धर्मं द्विजोत्तम ।
शुश्रूषायाः फलं पश्य पत्युर्ब्राह्मण यादृशम् ॥३२
बलाका हि त्वया दग्धा रोषात्तद्विदितं मया ।
क्रोधः शत्रुः शरीरस्थो मनुष्याणां द्विजोत्तम ३३
'मास्म क्रुध्यो बलाकेव न वध्याऽस्मि पतिव्रता' ।
यः क्रोधमोहौ त्यजति तं देवा ब्राह्मणं विदुः॥३४
यो वदेदिह सत्यानि गुरुं संतोषयेत च ।
हिंसितश्च न हिंसेत तं देवा ब्राह्मणं विदुः ॥३५
जितेन्द्रियो धर्मपरः स्वाध्यायनिरतः शुचिः ।
कामक्रोधौ वशौ यस्य तं देवा ब्राह्मणं विदुः ३६
यस्य चात्मसमो लोको धर्मज्ञस्य मनस्विनः ।
सर्वधर्मेषु चरतस्तं देवा ब्राह्मणं विदुः ॥ ३७
योऽध्यापयेदधीयीत यजेद्वा याजयीत वा ।
दद्याद्वाऽपि यथाशक्ति तं देवा ब्राह्मणं विदुः ३८
ब्रह्मचारी वदान्यो योऽप्यधीयाद्द्विजपुङ्गवः ।
स्वाध्यायवानमत्तो वै तं देवा ब्राह्मणं विदुः ३९
यद्ब्राह्मणानां कुशलं तदेषां परिकीर्तयेत् ।
सत्यं तथा व्याहरतां नानृते रमते मनः ॥ ४०
धनं तु ब्राह्मणस्याहुः स्वाध्यायं दममार्जवम् ।
इन्द्रियाणां निग्रहं च शाश्वतं द्विजसत्तम ॥ ४१
सत्यार्जवे धर्ममाहुः परं धर्मविदो जनाः ।
दुर्ज्ञेयः शाश्वतो धर्मः स च सत्ये प्रतिष्ठितः ४२
श्रुतिप्रमाणो धर्मः स्यादिति वृद्धानुशासनम् ।
बहुधा दृश्यते धर्मः सूक्ष्म एव द्विजोत्तम ॥ ४३
भगवानपि धर्मज्ञः स्वाध्यायनिरतः शुचिः ।
न तु तत्त्वेन भगवन्धर्मं वेत्सीति मे मतिः ॥४४
यदि विप्र न जानीषे धर्मं परमकं द्विज ।
धर्मव्याधं ततः पृच्छ गत्वा तु मिथिलां पुरीम्॥
मातापितृभ्यां शुश्रूषुः सत्यवादी जितेन्द्रियः ।
मिथिलायां वसेद्व्याधः स ते धर्मान्प्रवक्ष्यति ४६
तत्र गच्छस्व भद्रं ते यथाकामं द्विजोत्तम ।
'व्याधः परमधर्मात्मा स ते छेत्स्यति संशयम्'४७
अत्युक्तमपि मे सर्वं क्षन्तुमर्हस्यनिन्दित ।

स्त्रियो ह्यवध्याः सर्वेषां ये धर्ममभिविन्दते ॥४८
ब्राह्मण उवाच ।
प्रीतोस्मि तव भद्रं ते गतः क्रोधश्च शोभने ।
उपालम्भस्त्वया प्रोक्तो मम निश्रेयसं परम् ॥४९
स्वस्ति तेऽस्तु गमिष्यामि साधयिष्यामि शोभने।
'धन्या त्वमसि कल्याणि यस्याः स्याद्वृत्तमीदृशम्।
मार्कण्डेय उवाच ।
तया विसृष्टो निर्गत्य स्वमेव भवनं ययौ ।
विनिन्दन्स स्वमात्मानं कौशिको द्विजसत्तमः ॥

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥

---

## दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥

कौशिकनामकेन द्विजवरेण पतिव्रतावचनाद्धर्मावगतये धर्मव्याधंप्रति गमनम् ॥ १ ॥ व्याधेन तस्मै नानाधर्मोपदेशः ॥ २ ॥

मार्कण्डेय उवाच ।
चिन्तयित्वा तदाश्चर्यं स्त्रिया प्रोक्तमशेषतः ।
विनिन्दन्स द्विजोऽऽत्मानमागस्कृत इवाबभौ ॥१
चिन्तयानः स धर्मस्य सूक्ष्मां गतिमथाब्रवीत् ।
श्रद्दधानेन वै भाव्यं गच्छामि मिथिलामहम् ॥२
कृतात्मा धर्मवित्तस्यां व्याधो निवसते किल ।
तं गच्छाम्यहमद्यैव धर्मं प्रष्टुं तपोधनम् ॥ ३
इति संचिन्त्य मनसा श्रद्दधानः स्त्रिया वचः ।
बलाकाप्रत्ययेनासौ धर्म्यैश्च वचनैः शुभैः ॥ ४
संप्रतस्थे स मिथिलां कौतूहलसमन्वितः ।
अतिक्रामन्नरण्यानि ग्रामांश्च नगराणि च ॥ ५
ततो जगाम मिथिलां जनकेन सुरक्षिताम् ।
धर्मसेतुसमाकीर्णां यज्ञोत्सववतीं शुभाम् ॥ ६
गोपुराट्टालकवतीं हर्म्यप्राकारशोभनाम् ।
प्रविश्य नगरीं रम्यां विमानैर्बहुभिर्युताम् ॥ ७
पण्यैश्च बहुभिर्युक्तां सुविभक्तमहापथाम् ।
अश्वै रथैस्तथा नागैर्योधैश्च बहुभिर्युताम् ॥ ८
हृष्टपुष्टजनाकीर्णां नित्योत्सवसमाकुलाम् ।
सोऽपश्यद्बहुवृत्तान्तां ब्राह्मणः समतिक्रमन् ॥ ९
धर्मव्याधमपृच्छच्च स चास्य कथितो द्विजैः ।
अपश्यत्तत्र गत्वा तं सूनामध्ये व्यवस्थितम् ॥१०
मार्गमाहिषमांसानि विक्रीणन्तं तपस्विनम् ।
आकुलत्वाच्च क्रेतॄणामेकान्ते संस्थितो द्विजः ११
स तु ज्ञात्वा द्विजं प्राप्तं सहसा संभ्रमोत्थितः ।
आजगाम यतो विप्रः स्थित एकान्तआसने ॥१२
व्याध उवाच ।
अभिवादये त्वां भगवन्स्वागतं ते द्विजोत्तम ।
अहं व्याधो हि भद्रं ते किं करोमि प्रशाधि माम्॥
एकपत्न्या यदुक्तोसि गच्छ त्वं मिथिलामिति ।
जानाम्येतदहं सर्वं यदर्थं त्वमिहागतः ॥ १४
श्रुत्वा च तस्य तद्वाक्यं स विप्रो भृशविस्मितः ।
द्वितीयमिदमाश्चर्यमित्यचिन्तयत द्विजः ॥ १५
अदेशस्थं हि ते स्थानमिति व्याधोऽब्रवीद्द्विजम्।
गृहं गच्छाव भगवन्यदि ते रोचतेऽनघ ॥ १६
मार्कण्डेय उवाच ।
बाढमित्येव तं विप्रो हृष्टो वचनमब्रवीत् ।
अग्रतस्तु द्विजं कृत्वा स जगाम गृहं प्रति ॥१७
प्रविश्य च गृहं रम्यमासनेनाभिपूजितः ।
'अर्घ्येण च स वै तेन व्याधेन द्विजसत्तमः॥'१८
पाद्यमाचमनीयं च प्रतिगृह्य द्विजोत्तमः ।
ततः सुखोपविष्टस्तं व्याधं वचनमब्रवीत् ॥ १९
कर्मैतद्वै न सदृशं भवतः प्रतिभाति मे ।

---

अभिविन्दते जानन्तीत्यर्थः ॥ ४८ ॥ साधयिष्यामि स्वकार्यमिति शेषः ॥ ५० ॥ नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥
आगोऽपराधः कृतमनेनेत्यागस्कृतः ॥ १ ॥ विमानैः सप्त-
भौमिकगृहैः ॥ ७ ॥ सूना वधस्थानं तन्मध्ये ॥ १० ॥
अदेशस्थं अयोग्यदेशस्थम् ॥ १६ ॥

अनुतप्ये भृशं तात तव घोरेण कर्मणा ॥ २०
व्याध उवाच ।
कुलोचितमिदं कर्म पितृपैतामहं परम् ।
वर्तमानस्य मे धर्मे स्वे मन्युं मा कृथा द्विज २१
विधात्रा विहितं पूर्वं कर्म स्वमनुपालयन् ।
प्रयत्नाच्च गुरू वृद्धौ शुश्रूषेऽहं द्विजोत्तम ॥ २२
सत्यं वदे नाभ्यसूये यथाशक्ति ददामि च ।
देवतातिथिभृत्यानामवशिष्टेन वर्तये ॥ २३
न कुत्सयाम्यहं किंचिन्न गर्हे बलवत्तरम् ।
कृतमन्वेति कर्तारं पुरा कर्म द्विजोत्तम ॥ २४
कृषिगोरक्ष्यवाणिज्यमिह लोकस्य जीवनम् ।
दण्डनीतिस्त्रयो विद्या तेन लोको भवत्युत ॥२५
कर्म शूद्रे कृषिर्वैश्ये संग्रामः क्षत्रिये स्मृतः ।
ब्रह्मचर्यतपोमन्त्राः सत्यं च ब्राह्मणे सदा ॥ २६
राजा प्रशास्ति धर्मेण स्वकर्मनिरताः प्रजाः ।
विकर्माणश्च ये केचित्तान्युनक्ति स्वकर्मसु ॥ २७
भेतव्यं हि सदा राज्ञां प्रजानामधिपा हि ते ।
मारयन्ति विकर्मस्थं लुब्धा मृगमिवेषुभिः ॥२८
जनकस्येह विप्रर्षे विकर्मस्थो न विद्यते ।
स्वकर्मनिरता वर्णाश्चत्वारोपि द्विजोत्तम ॥ २९
स एष जनको राजा दुर्वृत्तमपि चेत्सुतम् ।
दण्ड्यं दण्डे निक्षिपति यथा न ग्लाति धार्मिकम्॥
सुयुक्तचारो नृपतिः सर्वं धर्मेण पश्यति ।
श्रीश्च राज्यं च दण्डश्च क्षत्रियाणां द्विजोत्तम३१
राजानो हि स्वधर्मेण श्रियमिच्छन्ति भूयसीम् ।
सर्वेषामेव वर्णानां त्राता राजा भवत्युत ॥ ३२
परेण हि हतान्ब्रह्मन्वराहमहिषानहम् ।
न स्वयं हन्मि विप्रर्षे विक्रीणामि सदा त्वहम्॥
न भक्षयामि मांसानि ऋतुगामी तथाप्यहम् ।
सदोपवासी च तथा नक्तभोजी सदा द्विज ३४
अशीलश्चापि पुरुषो भूत्वा भवति शीलवान् ।
प्राणिहिंसारतिश्चापि भवते धार्मिकः पुनः ॥३५
व्यभिचारान्नरेन्द्राणां धर्मः संकीर्यते महान् ।
अधर्मो वर्तते चापि संकीर्यन्ते ततः प्रजाः ॥३६
भेरुण्डा वामनाः कुब्जाः स्थूलशीर्षास्तथैव च ।
क्लीबाश्चान्धाश्च बधिरा जायन्तेऽत्युच्चलोचनाः ॥
पार्थिवानामधर्मत्वात्प्रजानामभवः सदा ।
स एष राजा जनकः प्रजा धर्मेण पश्यति ॥ ३८
अनुगृह्णन्प्रजाः सर्वाः स्वधर्मनिरताः सदा ।
'पात्येष राजा जनकः पितृवद्द्विजसत्तम ॥' ३९
येचैव मां प्रशंसन्ति येच निन्दन्ति मानवाः ।
सर्वान्सुपरिणीतेन कर्मणा तोषयाम्यहम् ॥ ४०
ये जीवन्ति स्वधर्मेण संयुञ्जन्ति च पार्थिवाः ।
न किंचिदुपजीवन्ति दान्ता उत्थानशीलिनः ॥
शक्त्याऽन्नदानं सततं तितिक्षा धर्मनित्यता ।
यथार्हं प्रतिपूजा च सर्वभूतेषु वै दया ॥ ४२
त्यागान्नान्यत्र मर्त्यानां गुणास्तिष्ठान्ति पूरुषे ।
मृषावादं परिहरेत्कुर्यात्प्रियमयाचितः ॥ ४३
न च कामान्न संरम्भान्न द्वेषाद्धर्ममुत्सृजेत् ।
प्रिये नातिभृशं हृष्येदप्रिये न च संज्वरेत् ॥४४
न मुह्येदर्थकृच्छ्रेषु न च धर्मं परित्यजेत् ।
कर्म चेत्किंचिदन्यत्स्यादितरन्न तदाचरेत् ॥ ४५
यत्कल्याणमभिध्यायेत्तत्रात्मानं नियोजयेत् ।
न पापं प्रति पापः स्यात्साधुरेव सदा भवेत्४६
आत्मनैव हतः पापो यः पापं कर्तुमिच्छति ।
कर्म चैतदसाधूनां वृजिनानामसाधुकम् ॥ ४७
न धर्मोऽस्तीति मन्वानाः शुचीनवहसन्ति ये ।
अश्रद्दधाना धर्मस्य ते नश्यन्ति न संशयः ॥४८
महादृतिरिवाध्मातः पापो भवति नित्यदा ।
'साधुः सन्नतिमानेव सर्वत्र द्विजसत्तम ॥' ४९

गुरू मातापितरौ ॥ २२ ॥ वर्तये जीवामि ॥ २३ ॥ कुत्सा विद्यमानदोषसंकीर्तनम् । गर्हा अविद्यमानदोषारोपः । पुराकृतं कर्मेति संबन्धः ॥ २४ ॥ लोकः परलोकः ॥ २५ ॥ न ग्लाति न ग्लानिं नयति ॥ ३० ॥ व्यभिचारात्स्वैरगतेः ॥४६॥ भेरुण्डाः भयानकाः । उरुण्डाः इति ख. थ. ध. पाठः ॥३७॥ सुपरिणीतेन साधुना ॥ ४० ॥ ये संयुञ्जन्ति सम्यग्योगं सेनाविनेशं कुर्वन्ति तएव पार्थिवा अन्ये चोरा इत्यर्थः ॥ ४१ ॥ संरम्भाद्भयात् ॥ ४४ ॥ अन्यत् विपरीतं स्यात् इतरत्तादृशं द्वितीयं कल्याणमेवाचरेत् ॥ ४५ ॥ पापः पापी ॥ ४६ ॥ वृजिनानां व्यसनवताम् ॥ ४७ ॥ दृतिर्भस्त्रा । आध्मातः सन्न-

मूढानामवलिप्तानामसारं भाषितं भवेत् ।
दर्शयन्त्यन्तरात्मानं दिवा रूपमिवांशुमान् ॥५०
न लोके राजते मूर्खः केवलात्मप्रशंसया ।
अपिचेह मृजाहीनः कृतविद्यः प्रकाशते ॥ ५१
अब्रुवन्कस्यचिन्निन्दामात्मपूजामवर्णयन् ।
न कश्चिद्गुणसंपन्नः प्रकाशो भुवि दृश्यते ॥ ५२
विकर्मणा तप्यमानः पापाद्विपरिमुच्यते ।
न तत्कुर्यां पुनरिति द्वितीयात्परिमुच्यते ॥ ५३
कर्मणा येन केनापि पापात्मा द्विजसत्तम ।
एवं श्रुतिरियं ब्रह्मन्धर्मेषु प्रतिदृश्यते ॥ ५४
पापानि बुद्ध्वेह पुरा कृतानि
स्वधर्मशीलो विनिहन्ति पश्चात् ।
धर्मो ब्रह्मन्नुदते ब्राह्मणानां
यत्कुर्वते पापमिह प्रमादात् ॥ ५५
पापं कृत्वा हि मन्येत नाहमस्मीति पूरुषः ।
[तं तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषः ॥]५६
चिकीर्षेदेव कल्याणं श्रद्दधानोऽनसूयकः ॥ ५७
वसनस्येव च्छिद्राणि साधूनां विवृणोति यः ।
'अपश्यन्नात्मनो दोषान्स पापः प्रेत्य नश्यति ॥'
पापं चेत्पुरुषः कृत्वा कल्याणमभिपद्यते ।
मुच्यते सर्वपापेभ्यो महाभ्रेणेव चन्द्रमाः ॥ ५९
यथाऽऽदित्यः समुद्यन्वै तमः सर्वं व्यपोहति ।
एवं कल्याणमातिष्ठन्सर्वपापैः प्रमुच्यते ॥ ६०
पापानां विद्ध्यधिष्ठानं लोभमोहौ द्विजोत्तम ।
'तस्मात्तौ विदुषा विप्र वर्जनीयौ विशेषतः ॥'६१
लुब्धाः पापं व्यवस्यन्ति नरा नातिबहुश्रुताः ।
अधर्म्या धर्मरूपेण तृणैः कूपा इवावृताः ॥ ६२
येषां पञ्च पवित्राणि प्रलापा धर्मसंश्रिताः ।
सर्वं हि विद्यते तेषु शिष्टाचारः सुदुर्लभः ॥ ६३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥

## एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

कौशिकंप्रति धर्मव्याधेन शिष्टलक्षणादिकथनम् ॥ १ ॥

मार्कण्डेय उवाच ।
स तु विप्रो महाप्राज्ञ धर्मव्याधमपृच्छत ।
शिष्टाचारं कथमहं विद्यामिति नरोत्तम ॥ १
'पञ्च कानि पवित्राणि शिष्टाचारेषु नित्यदा ।'
एतदिच्छामि भद्रं ते श्रोतुं धर्मभृतांवर ।
त्वत्तो महामते व्याध तद्ब्रवीहि यथातथम् ॥ २
व्याध उवाच ।
यज्ञो दानं तपो वेदाः सत्यं च द्विजसत्तम ।
पञ्चैतानि पवित्राणि शिष्टाचारेषु नित्यदा ॥ ३
कामक्रोधौ वशे कृत्वा दम्भं लोभमनार्जवम् ।
धर्ममित्येव संतुष्टास्ते शिष्टाः शिष्टसंमताः ॥ ४
न तेषां भिद्यते वृत्तं यज्ञस्वाध्यायशीलिनाम् ।
आचारपालनं चैव द्वितीयं शिष्टलक्षणम् ॥ ५
गुरुशुश्रूषणं सत्यमक्रोधो दानमेव च ।
एतच्चतुष्टयं ब्रह्मञ्शिष्टाचारेषु नित्यदा ॥ ६
शिष्टाचारे मनः कृत्वा प्रतिष्ठाप्य च सर्वशः ।
यामयं लभते तुष्टिं सा न शक्या ह्यतोऽन्यथा ७
वेदस्योपनिषत्सत्यं सत्यस्योपनिषद्दमः ।
दमस्योपनिषत्त्यागः शिष्टाचारेषु नित्यदा ॥ ८
ये तु धर्मानसूयन्ते बुद्धिमोहान्विता नराः ।
अपथा गच्छतां तेषामनुयाता च पीड्यते ॥ ९
ये तु शिष्टाः सुनियताः श्रुतित्यागपरायणाः ।

सारोपि पुष्टो भवेत् ॥ ४९ ॥ मृजाहीनः मलिनदेहः ॥ ५१ ॥ मूढस्वरूपमाह अब्रुवन्निति ॥ ५२ ॥ पापात् प्राक्कृतात् । द्वितीयात्करिष्यमाणात् ॥ ५३ ॥ जपतपस्तीर्थाद्यन्यतमेन येनकेनचिदपि कर्मणा पापात् परिमुच्यत इत्यनुषज्यते ॥ ५४ ॥

दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥

वृत्तं वृतं स्वेच्छोपात्तमिति यावत् ॥ ६ ॥ अतोऽन्यथा गुरुशुश्रूषणाद्यभावे ॥ ७ ॥ उपनिषद्रहस्यम् ॥ ८ ॥ अनुयाता अनुगन्ता ॥ ९ ॥ श्रुतिश्च त्यागश्च ते द्वे परं अयनं स्थानं

धर्मपन्थानमारूढाः सत्यधर्मपरायणाः ॥ १०
नियच्छन्ति परां बुद्धिं शिष्टाचारान्विता जनाः ।
उपाध्यायमते युक्ताः स्थित्या धर्मार्थदर्शिनः ११
नास्तिकान्भिन्नमर्यादान्क्रूरान्पापमतौ स्थितान् ।
त्यज ताञ्ज्ञानमाश्रित्य धार्मिकानुपसेव्य च १२
कामलोभग्रहाकीर्णां पञ्चेन्द्रियजलां नदीम् ।
नावं धृतिमयीं कृत्वा जन्मदुर्गाणि संतर ॥ १३
क्रमेण संचितो धर्मो बुद्धियोगमयो महान् ।
शिष्टाचारे भवेत्साधू रागः शुक्ले व वाससि ॥१४
अहिंसा सत्यवचनं सर्वभूतहितं परम् ।
अहिंसा परमो धर्मः स च सत्ये प्रतिष्ठितः ।
सत्यं कृत्वा प्रतिष्ठां तु प्रवर्तन्ते प्रवृत्तयः ॥ १५
सत्यमेव गरीयस्तु शिष्टाचारनिषेवितम् ।
आचारश्च सतां धर्मः सन्तो ह्याचारलक्षणाः १६
यो यथा प्रकृतिर्जन्तुः स स्वां प्रकृतिमश्नुते ।
पापात्मा क्रोधकामादीन्दोषानाप्नोत्यनात्मवान्॥
आरम्भो न्याययुक्तो यः स हि धर्म इति स्मृतः।
अनाचारस्त्वधर्मेति एतच्छिष्टानुशासनम् ॥ १८
अक्रुध्यन्तोऽनसूयन्तो निरहंकारमत्सराः ।
ऋजवः शमसंपन्नाः शिष्टाचारा भवन्ति ते॥१९
त्रैविद्यवृद्धाः शुचयो वृत्तवन्तो मनस्विनः ।
गुरुशुश्रूषवो दान्ताः शिष्टाचारा भवन्त्युत ॥ २०
तेषामहीनसत्वानां दुष्कराचारकर्मणाम् ।
स्वैः कर्मभिः सत्कृतानां घोरत्वं संप्रणश्यति॥२१
तं सदाचारमाश्चर्यं पुराणं शाश्वतं ध्रुवम् ।
धर्म्यं धर्मेण पश्यन्तः स्वर्गं यान्ति मनीषिणः॥२२
आस्तिका मानहीनाश्च द्विजातिजनपूजकाः ।
श्रुतवृत्तोपसंपन्नास्ते सन्तः स्वर्गगामिनः ॥ २३
वेदोक्तः प्रथमो धर्मो धर्मशास्त्रेषु चापरः ।
शिष्टाचीर्णश्च शिष्टानां त्रिविधं धर्मलक्षणम् ॥२४
धारणं चापि वेदानां तीर्थानामवगाहनम् ।
क्षमा सत्यार्जवं शौचं शिष्टाचारनिदर्शनम् ॥२५
सर्वभूतदयावन्तो ह्यहिंसानिरताः सदा ।
परुषं च न भाषन्ते सदा सन्तो द्विजप्रियाः ॥२६
शुभानामशुभानां च कर्मणां सबलाश्रयम् ।
विपाकमभिजानन्ति ते शिष्टाः शिष्टसंमताः॥ २७
न्यायोपेता गुणोपेताः सर्वलोकहितैषिणः ।
सन्तः स्वर्गजितः शक्त्या सन्निविष्टाश्च सत्पथे ।
दातारः संविभक्तारो दीनानुग्रहकारिणः ॥ २८
सर्वपूज्याः श्रुतधनास्तथैव च तपस्विनः ।
सर्वभूतदयावन्तस्ते शिष्टाः शिष्टसंमताः ॥ २९
दाननित्याः सुखान्याशु प्राप्नुवन्त्यपि च श्रियम् ।
पीडया च कलत्रस्य भृत्यानां च समाहिताः॥३०
अतिशक्त्या प्रयच्छन्ति सन्तः सद्भिः समागताः।
लोकयात्रां च पश्यन्तो धर्ममात्महितानि च ।
एवं सन्तो वर्तमानास्त्वेधन्ते शाश्वतीः समाः॥३१
अहिंसा सत्यवचनमानृशंस्यमथार्जवम् ।
अद्रोहो नातिमानश्च ह्रीस्तितिक्षा दमः शमः ॥३२
धीमन्तो धृतिमन्तश्च भूतानामनुकम्पकाः ।
अकामद्वेषसंयुक्तास्ते सन्तो लोकसत्कृताः ॥ ३३
त्रीण्येव तु पदान्याहुः सतां वृत्तमनुस्मरन् ।
न चैव द्रुह्येद्दद्याच्च सत्यं चैव सदा वदेत् ॥ ३४
सर्वत्र च दयावन्तः सन्तः करुणवेदिनः ।
गच्छन्तीह सुसंतुष्टा धर्म्यं पन्थानमुत्तमम् ॥ ३५

येषां ते श्रुतित्यागपरायणाः ॥ १० ॥ शिष्टाचारवति शुक्लपटोपमे योगधर्मः रागइव साधुर्भवेत् । शुक्लेव वेति इवार्थे ॥ १४ ॥ अनात्मवान् अजितचित्तः ॥ १७ ॥ अहंकारो दर्पः मत्सरः परदोषासहिष्णुत्वं तद्वर्जिताः । शिष्टं गुरुशास्त्रोक्तं आचरन्तः शिष्टाचाराः ॥ १९ ॥ त्रैविद्यवृद्धाः तिस्रो विद्या ऋग्यजुःसामात्मिका यत्र स त्रिविद्यो यज्ञस्तत्र साधवस्त्रैविद्या याज्ञिकाः । वृत्तं शीलं तद्वन्तः । मनस्विनः जितचित्ताः ॥ २० ॥ दुष्कराचारकर्मणां अन्यैर्दुष्करः आचारः शीलं कर्म यज्ञादि येषां तेषाम् । घोरत्वं हिंसादिदोषवत्त्वम् ॥ २१ ॥ पुराणमनादिम् । शाश्वतं अनवच्छिन्नम् । ध्रुवं नित्यम् । अत्याज्यमित्यर्थः॥२२॥ वेदोक्तोऽग्निहोत्रादिः । धर्मशास्त्रोक्तः अष्टकाश्राद्धादिः । शिष्टाचीर्णः होलकादिः । शिष्टानां तुष्टिरिति शेषः ॥ २४ ॥ न्यायो युक्तिः । गुणाः शमादयस्तदुपेताः । संविभक्तारः कुटुम्बेषु ॥ २८ ॥ श्रुतधनाः विद्याधनाः ॥ २९ ॥ करुणाः करुणावन्तश्च ते वेदनशीलाश्च । मत्वर्थीयोऽच् ॥ ३५ ॥

शिष्टाचारा महात्मानो येषां धर्मः सुनिश्चितः ।
अनसूया क्षमा शान्तिः संतोषः प्रियवादिता॥३६
कामक्रोधपरित्यागः शिष्टाचारनिषेवणम् ।
कर्म च श्रुतसंपन्नं सतां मार्गमनुत्तमम् ॥ ३७
शिष्टाचारं निषेवन्ते नित्यं धर्ममनुव्रताः ।
प्रज्ञाप्रासादमारुह्य मुह्यतो महतो जनान् ॥ ३८
प्रेक्षन्ते लोकवृत्तानि विविधानि द्विजोत्तमाः ।
अतिपुण्यानि दानानि तानि द्विजवरोत्तम ॥ ३९
एतत्ते सर्वमाख्यातं यथाप्रज्ञं यथाश्रुतम् ।
शिष्टाचारगुणान्ब्रह्मन्पुरस्कृत्य द्विजर्षभ ॥ ४०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

---

## द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥

कौशिकंप्रति धर्मव्याधेन सर्वैर्हिंसाया दुस्त्यजत्वोपपादनपूर्वकं सर्ववर्णानां स्वस्वधर्मानुष्ठानस्य श्रेयःसाधनत्वादिकथनम् ॥ १ ॥

---

मार्कण्डेय उवाच ।
स तु विप्रमथोवाच धर्मव्याधो युधिष्ठिर ।
यदहं ह्याचरे कर्म घोरमेतदसंशयम् ॥ १
विधिस्तु बलवान्ब्रह्मन्दुस्तरं हि पुरा कृतम् ।
पुरा कृतस्य पापस्य कर्मदोषो भवत्ययम् ॥ २
दोषस्यैतस्य वै ब्रह्मन्विघाते यत्नवानहम् ।
विधिना हि हते पूर्वं निमित्तं घातको भवेत् ॥३
निमित्तभूता हि वयं कर्मणोऽस्य द्विजोत्तम ॥ ४
येषां हतानां मांसानि विक्रीणीमो वयं द्विज ।
तेषामपि भवेद्धर्म उपयोगेन भक्षणात् ।
देवतातिथिभृत्यानां पितॄणां चापि पूजनात् ॥५
ओषध्यो वीरुधश्चैव पशवो मृगपक्षिणः ।
अन्नाद्यभूता लोकस्य इत्यपि श्रूयते श्रुतिः ॥ ६
आत्ममांसप्रसादेन शिबिरौशीनरो नृपः ।
स्वर्गं सुदुर्लभं प्राप्तः क्षमावान्द्विजसत्तम ॥ ७
राज्ञो महानसे पूर्वं रन्तिदेवस्य वै द्विज ।
[द्वे सहस्रे तु पच्येते पशूनामन्वहं तदा ।]
अहन्यहनि पच्येते द्वे सहस्रे गवां तथा ॥ ८
स मांसं ददतो ह्यन्नं रन्तिदेवस्य नित्यशः ।
अतुला कीर्तिरभवन्नृपस्य द्विजसत्तम ॥ ९
चातुर्मास्ये च पशवो वध्यन्त इति नित्यशः ।
अग्नयो मांसकामाश्च इत्यपि श्रूयते श्रुतिः ॥ १०
यज्ञेषु पशवो ब्रह्मन्वध्यन्ते सततं द्विजैः ।
संस्कृताः किल मन्त्रैश्च तेऽपि स्वर्गमवाप्नुवन् ॥११
यदि नैवाग्नयो ब्रह्मन्मांसकामाऽभवन्पुरा ।
भक्ष्यं नैवाभवन्मांसं कस्यचिद्द्विजसत्तम ॥ १२
अत्रापि विधिरुक्तश्च मुनिभिर्मांसभक्षणे ॥ १३
देवतानां पितॄणां च भुङ्क्ते दत्त्वाऽपि यः सदा ।
यथाविधि यथाश्रद्धं न स दुष्येत भक्षणात् ॥१४
अमांसाशी भवत्येवमित्यपि श्रूयते श्रुतिः ।
भार्यां गच्छन्ब्रह्मचारी ऋतौ भवति ब्राह्मणः ॥१५
सत्यानृते विनिश्चित्य अत्रापि विधिरुच्यते ।
सौदासेन तदा राज्ञा मानुषा भक्षिता द्विज ।
शापाभिभूतेन भृशमत्र किं प्रतिभाति ते ॥ १६
स्वधर्म इति कृत्वा तु न त्यजामि द्विजोत्तम ।
पुरा कृतमिति ज्ञात्वा जीवाम्येतेन कर्मणा ॥१७
स्वधर्मं त्यजतो ब्रह्मन्नधर्म इह दृश्यते ।
स्वकर्मनिरतो यस्तु धर्मः स इति निश्चयः ॥ १८
कुले हि विहितं कर्म देही तं न विमुञ्चति ।
धात्रा विधिरयं दृष्टो बहुधा कर्मनिर्णये ॥ १९

---

अतिपुण्यानि पापानि इति झ. पाठः ॥ ३९ ॥ एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

एतन्मांसविक्रयात्मकम् ॥ १ ॥ यत्नवानपि न परिहर्तुं शक्नोमि । विधेः प्राबल्यादित्यर्थः ॥ ३ ॥ शरवन्निमित्तभूता वयं संधातृवत्कर्ता तु विधिरेवेत्यर्थः ॥ ४ ॥ अन्नाद्यभूताः अन्नं च तदद्यं च भोग्यं भक्ष्यं चेत्यर्थः ॥ ६ ॥ यज्ञियमांसभुजोऽपि ऋतुगामिनो ब्रह्मचर्यमिव औपचारिकममांसाशित्वमिति भावः ॥ १५ ॥

द्रष्टव्यस्तु भवेद्ब्रह्मन्धर्मो धर्मविनिश्चये ।
कथं कर्म शुभं कुर्यां कथं मुच्ये पराभवात् ॥२०
कर्मणस्तस्य घोरस्य वसुधा निर्णयो भवेत् ।
दाने च सत्यवाक्ये च गुरुशुश्रूषणे तथा ।
द्विजातिपूजने चाहं धर्मे च निरतः सदा ॥ २१
अतिमानातिवादाभ्यां निवृत्तोस्मि द्विजोत्तम ।
कृषिं साध्वीति मन्यन्ते तत्र हिंसा परा स्मृता॥
कर्षन्तो लाङ्गलैरुर्वी घ्नन्ति भूमिशयान्बहून् ।
जीवानन्यांश्च बहुशस्तत्र किं प्रतिभाति ते ॥२३
धान्यबीजानि यान्याहुर्व्रीह्यादीनि द्विजोत्तम ।
सर्वाण्येतानि जीवा हि तत्र किं प्रतिभाति ते२४
अध्याक्रम्य पशूंश्चापि घ्नन्ति वै भक्षयन्ति च।
वृक्षांस्तथौषधीश्चापि छिन्दन्ति पुरुषा द्विज ॥२५
जीवा हि बहवो ब्रह्मन्वृक्षेषु च फलेषु च ।
उदके बहवश्चापि तत्र किं प्रतिभाति ते ॥ २६
सर्वं व्याप्तमिदं ब्रह्मन्प्राणिभिः प्राणिजीवनैः ।
मत्स्यान्ग्रसन्ते मत्स्याश्च तत्र किं प्रतिभाति ते ॥
सत्वैः सत्वानि जीवन्ति बहुधा द्विजसत्तम ।
प्राणिनोऽन्योन्यभक्षाश्च तत्र किं प्रतिभाति ते ॥
चङ्क्रम्यमाणा जीवांश्च धरणीसंश्रितान्बहून् ।
पद्भ्यां घ्नन्ति नरा विप्र तत्र किं प्रतिभाति ते ॥
उपविष्टाः शयानाश्च घ्नन्ति जीवाननेकशः ।
अज्ञानादथवा ज्ञानात्तत्र किं प्रतिभाति ते ॥३०
जीवैर्ग्रस्तमिदं सर्वमाकाशं पृथिवी तथा ।
अविज्ञानाच्च हिंसन्ति तत्र किं प्रतिभाति ते॥३१
अहिंसेति यदुक्तं हि पुरुषैर्विस्मितैः पुरा ।
के न हिंसन्ति जीवान्वै लोकेऽस्मिन्द्विजसत्तम ॥
बहु संचिन्त्य इह वै नास्ति कश्चिदहिंसकः ॥३३
अहिंसायां तु निरता यतयो द्विजसत्तम ।
कुर्वन्त्येव हि हिंसां ते यत्नादल्पतरा भवेत् ॥ ३४
आलक्ष्याश्चैव पुरुषाः कुले जाता महागुणाः ।
महाघोराणि कर्माणि कृत्वा लज्जन्ति वै न च ॥
सुहृदः सुहृदोऽन्यांश्च दुर्हृदश्चापि दुर्हृदः ।
सम्यक्प्रवृत्तान्पुरुषान्न सम्यगनुपश्यति ॥ ३६
समृद्धैश्च न नन्दन्ति बान्धवा बान्धवैरपि ।
गुरूंश्चैव विनिन्दन्ति मूढा निश्चितमानिनः ॥३७
बहु लोके विपर्यस्तं दृश्यते द्विजसत्तम ।
धर्मयुक्तमधर्मं च तत्र किं प्रतिभाति ते ॥ ३८
वक्तुं बहुविधं शक्यं धर्माधर्मेषु कर्मसु ।
स्वकर्मनिरतो यो हि स यशः प्राप्नुयान्महत् ॥३९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥

---

## त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥

धर्मव्याधेन कौशिकंप्रति पौरुषनिन्दनेन दैवप्रशंसनपूर्वकं सुकृतदुष्कृतयोः सुखदुःखहेतुताप्रतिपादनम् ॥ १ ॥

मार्कण्डेय उवाच ।
धर्मव्याधस्तु निपुणं पुनरेव युधिष्ठिर ।
विप्रर्षभमुवाचेदं सर्वधर्मभृतांवर ॥ १
श्रुतिप्रमाणो धर्मोऽयमिति वृद्धानुशासनम् ।
सूक्ष्मा गतिर्हि धर्मस्य बहुशाखा ह्यनन्तिका ॥२
प्राणान्तिके विवाहे च वक्तव्यमनृतं भवेत् ।
अनृतेन भवेत्सत्यं सत्येनैवानृतं भवेत् ॥ ३
यद्भूतहितमत्यन्तं तत्सत्यमिति धारणा ।
विपर्ययकृतोऽधर्मः पश्य धर्मस्य सूक्ष्मताम् ॥ ४
यत्करोत्यशुभं कर्म शुभं वा यदि सत्तम ।
अवश्यं तत्समाप्नोति पुरुषो नात्र संशयः ॥ ५
विषमां च दशां प्राप्तो देवान्गर्हति वै भृशम् ।
आत्मनः कर्मदोषेण न विजानात्यपण्डितः ॥ ६
मूढो नैकृतिकश्चापि चपलश्च द्विजोत्तम ।

द्रष्टव्या तु भवेत्प्रज्ञा क्रूरे कर्मणि वर्तता इति झ. पाठः ॥ २० ॥ द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥

धारणा अवधारणं । निश्चय इत्यर्थः ॥ ४ ॥

'न शुभं कर्म बध्नाति पुरुषं पापनिश्चयम् ॥' ७
सुखदुःखविपर्यासो यदा समुपपद्यते ।
नैनं प्रज्ञा सुनीतं वा त्रायते नैव पौरुषम् ॥ ८
यो यमिच्छेद्यथा कामं तं तं कामं स आप्नुयात् ।
यदि स्यादपराधीनं पौरुषस्य क्रियाफलम् ॥ ९
संयताश्चापि दक्षाश्च मतिमन्तश्च मानवाः ।
दृश्यन्ते निष्फलाः सन्तः प्रहीणाः सर्वकर्मभिः १०
भूतानामपरः कश्चिद्धिंसायां सततोत्थितः ।
वञ्चनायां च लोकस्य स सुखेनैव युज्यते ॥ ११
अचेष्टमपि चासीनं श्रीः कंचिदुपतिष्ठति ।
कश्चित्कर्माणि कुर्वन्हि न प्राप्यमधिगच्छति ॥ १२
देवानिष्ट्वा तपस्तप्त्वा कृपणैः पुत्रगृद्धुभिः ।
दशमासधृता गर्भा जायन्ते कुलपांसनाः ॥ १३
अपरे धनधान्यैश्च भोगैश्च पितृसंचितैः ।
विपुलैरभिजायन्ते लब्धास्तैरेव मङ्गलैः ॥ १४
'न देहजा मनुष्याणां व्याधयो द्विजसत्तम ।'
कर्मजा हि मनुष्याणां रोगा नास्त्यत्र संशयः ॥ १५
आधिभिश्चैव बाध्यन्ते व्यालैः क्षुद्रमृगा इव ।
ते चापि कुशलैर्वैद्यैर्निपुणैः संभृतौषधैः ।
व्याधयो विनिवार्यन्ते मृगा व्याधैरिव द्विज ॥ १६
येषामस्ति च भोक्तव्यं ग्रहणीरोगपीडिताः ।
न शक्नुवन्ति ते भोक्तुं चेष्टितं पूर्वकर्मया ॥ १७
अपरे बाहुबलिनः क्लिश्यन्ति बहवो जनाः ।
दुःखेन चाधिगच्छन्ति भोजनं द्विजसत्तम ॥ १८
इति लोकमनाक्रन्दं देहशङ्कापरिप्लुतम् ।
स्रोतसाऽसकृदाक्षिप्तं ह्रियमाणं बलीयसा ॥ १९
न म्रियेयुर्न जीर्येयुः सर्वे स्युः सर्वकामिकाः ।
नाप्रियं प्रतिपश्येयुर्विधिश्च यदि नो भवेत् ॥ २०
उपर्युपरि लोकस्य सर्वो गन्तुं समीहते ।
यतते च यथाशक्ति न च तद्वर्तते तथा ॥ २१
बहवः संप्रदृश्यन्ते तुल्यनक्षत्रमङ्गलाः ।
महत्तु फलवैषम्यं दृश्यते कर्मसिद्धिषु ॥ २२
न केचिदीशते ब्रह्मन्स्वयंग्राह्यस्य सत्तम ।
कर्मणां प्राकृतानां वै इह सिद्धिः प्रदृश्यते ॥ २३
तथा श्रुतिरियं ब्रह्मञ्जीवः किल सनातनः ।
शरीरमध्रुवं लोके सर्वेषां प्राणिनामिह ॥ २४
वध्यमाने शरीरे तु देहनाशो भवत्युत ।
जीवः संक्रमतेऽन्यत्र कर्मबन्धनिबन्धनः ॥ २५

ब्राह्मण उवाच ।

कथं धर्मविदांश्रेष्ठ जीवो भवति शाश्वतः ।
एतदिच्छाम्यहं ज्ञातुं तत्त्वेन वदतांवर ॥ २६

व्याध उवाच ।

न जीवनाशोस्ति हि देहभेदे
मिथ्यैतदाहुर्म्रियतीति मूढाः ।
जीवस्तु देहान्तरितः प्रयाति
दशार्धतैवास्य शरीरभेदः ॥ २७
अन्यो हि नाश्नाति कृतं हि कर्म
मनुष्यलोके मनुजस्य कश्चित् ।
यत्तेन किंचिद्धि कृतं हि कर्म
तदश्नुते नास्ति कृतस्य नाशः ॥ २८
सुपुण्यशीला हि भवन्ति पुण्या
नराधमाः पापकृतो भवन्ति ।
नरोऽनुयातस्त्विह कर्मभिः स्वै-
स्ततः समुत्पद्यति भावितस्तैः ॥ २९

ब्राह्मण उवाच ।

कथं संभवते योनौ कथं वा पुण्यपापयोः ।
जातीः पुण्या ह्यपुण्याश्च कथं गच्छति सत्तम ३०

व्याध उवाच ।

गर्भाधानसमायुक्तं कर्मेदं संप्रदृश्यते ।
समासेन तु ते क्षिप्रं प्रवक्ष्यामि द्विजोत्तम ॥ ३१
यथा संभृतसंभारः पुनरेव प्रजायते ।
शुभकृच्छुभयोनीषु पापकृत्पापयोनिषु ॥ ३२

---

सुनीतं गुरुशिक्षा ॥ ८ ॥ प्रहीणाः श्रान्ता अपीत्यर्थः ॥ १० ॥ पुत्रगृद्धुभिः पुत्रकामैः ॥ १३ ॥ अनाक्रन्दं असहायम् । आक्रन्दः क्रन्दने ह्वाने मित्रदारुण्युद्धयोरिति मेदिनी । स्रोतसा कर्मप्रवाहेण ॥ १९ ॥ स्वीयमपि वस्तु स्वस्यानधीनं प्राक्कर्मवशाद्भवतीत्यर्थः ॥ २३ ॥ दशार्धता पञ्चत्वम् ॥ २७ ॥

शुभैः प्रयोगैर्देवत्वं व्यामिश्रैर्मानुषो भवेत् ।
मोहनीयैर्वियोनीषु त्वधोगामी च किल्बिषैः ३३
जातिमृत्युजरादुःखैः सततं समभिद्रुतः ।
संसारे पच्यमानश्च दोषैरात्मकृतैर्नरः ॥ ३४
तिर्यग्योनिसहस्राणि गत्वा नरकमेव च ।
जीवाः संपरिवर्तन्ते कर्मबन्धनिबन्धनाः ॥ ३५
जन्तुस्तु कर्मभिस्तैस्तैः स्वकृतैः प्रेत्य दुःखितः ।
तद्दुःखप्रतिघातार्थमपुण्यां योनिमाप्नुते ॥ ३६
ततः कर्म समादत्ते पुनरन्यन्नवं बहु ।
पच्यते तु पुनस्तेन भुक्त्वाऽपथ्यमिवातुरः ॥३७
अजस्रमेव दुःखार्तोऽदुःखितः सुखिसंज्ञितः ।
ततो निवृत्तबन्धत्वात्कर्मणामुदयादपि ॥ ३८
परिक्रामति संसारे चक्रवद्बहुवेदनः ।
स चेन्निवृत्तबन्धस्तु विशुद्धश्चापि कर्मभिः ॥ ३९
तपोयोगसमारम्भं कुरुते द्विजसत्तम ।
कर्मभिर्बहुभिश्चापि लोकानश्नाति मानवः ॥४०
[स चेन्निवृत्तबन्धस्तु विशुद्धश्चापि कर्मभिः ।]
प्राप्नोति सुकृताँल्लोकान्यत्र गत्वा न शोचति॥४१
पापं कुर्वन्पापवृत्तः पापस्यान्तं न गच्छति ।
'पुण्यं कुर्वन्पुण्यवृत्तः पुण्यस्यान्तं न गच्छति ।'
तस्मात्पुण्यं यतेत्कर्तुं वर्जयीत च पापकम् ॥४२
अनसूयुः कृतज्ञश्च कल्याणान्येव सेवते ।
सुखानि धर्ममर्थं च स्वर्गं च लभते नरः ॥ ४३
संस्कृतस्य च दान्तस्य नियतस्य यतात्मनः ।
प्राज्ञस्यानन्तरा वृत्तिरिह लोके परत्र च ॥ ४४
सतां धर्मेण वर्तेत क्रियां शिष्टवदाचरेत् ।
असंक्लेशेन लोकस्य वृत्तिं लिप्सेत वै द्विजः ॥४५
सन्ति ह्यागमविज्ञानाः शिष्टाः शास्त्रे विचक्षणाः।
स्वधर्मेण क्रिया लोके कुर्वाणास्ते ह्यसंकराः ॥४६
प्राज्ञो धर्मेण रमते धर्मं चैवोपजीवति ।
तस्माद्धर्मादवाप्तेन धनेन द्विजसत्तम ॥ ४७
तस्यैव सिंचते मूलं गुणान्पश्यति यत्र वै ।
धर्मात्मा भवति ह्येवं चित्तं चास्य प्रसीदति ।
स मित्रजनसंतुष्ट इह प्रेत्य च नन्दति ॥ ४८
शब्दं स्पर्शं तथा रूपं गन्धानिष्टांश्च सत्तम ।
प्रभुत्वं लभते चापि धर्मस्यैतत्फलं विदुः ॥ ४९
धर्मस्य च फलं लब्ध्वा न तुष्यति महाद्विज ।
अतुष्यमाणो निर्वेदमादत्ते ज्ञानचक्षुषा ॥ ५०
प्रज्ञाचक्षुर्नर इह दोषं नैवानुरुध्यते ।
विरज्यते यथाकामं न च धर्मं विमुञ्चति ॥५१
फलत्यागे च यतते दृष्ट्वा लोकं क्रियात्मकम् ।
ततो मोक्षे प्रयतते नानुपायादुपायतः ॥ ५२
एवं निर्वेदमादत्ते पापं कर्म जहाति च ।
धार्मिकश्चापि भवति मोक्षं च लभते परम् ॥५३
तपो निःश्रेयसं जन्तोस्तस्य मूलं शमो दमः ।
तेन सर्वानवाप्नोति कामान्यान्मनसेच्छति ॥५४
इन्द्रियाणां निरोधेन सत्येन च दमेन च ।
ब्रह्मणः पदमाप्नोति यत्परं द्विजसत्तम ॥ ५५
ब्राह्मण उवाच ।
इन्द्रियाणीति यान्याहुः कानि तानि यतव्रत ।
निग्रहश्च कथं कार्यो निग्रहस्य च किं फलम् ५६
कथं च फलमाप्नोति तेषां धर्मभृतांवर ।
एतदिच्छामि तत्त्वेन धर्मं ज्ञातुं सुधार्मिक ॥५७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥

---

मोहनीयैस्तामसैः । अधः नरकतिर्यक्षु ॥ ३३ ॥ प्रेत्य मृत्वा । दुःखात्मकः प्रतीघातः । दुःखं भोक्तुमित्यर्थः ॥ ३६ ॥ निवृत्तबन्धो वीतरागः । तत्र हेतुः विशुद्धश्चेति ॥ ३९ ॥ तपोयोगयोः आलोचनध्यानयोः समारम्भम् ॥ ४० ॥ यतेत् यतेत ॥ ४२ ॥ प्रभुत्वं अप्रतिहतेच्छत्वम् ॥ ४९ ॥ अतुष्यमाणः प्रीतिमलभमानः निर्वेदं वैराग्यं दोषं रागद्वेषादिकं नानुरुध्यते तद्वशो न भवतीत्यर्थः ॥ ५१ ॥ उपायतएव मोक्षे प्रयतते नत्वनुपायाद्दैवमात्राश्रयादिति योजना ॥ ५२ ॥ तपः ज्ञानम् । निःश्रेयसं मोक्षसाधनम् ॥ ५४ ॥ तेषां इन्द्रियाणां निग्रहादिति शेषः ॥ ५७ ॥ त्रयोदशाधिकद्विशततमोऽध्यायः॥२१३॥

## चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥

धर्मव्याधेन कौशिकंप्रति प्राणिभिर्दुष्कृतसुकृतकरणप्रकारादिकथनपूर्वकं ब्राह्मणमाहात्म्यादिकथनम् ॥ १ ॥

मार्कण्डेय उवाच ।
एवमुक्तस्तु विप्रेण धर्मव्याधो युधिष्ठिर ।
प्रत्युवाच यथा विप्रं तच्छृणुष्व नराधिप ॥ १
व्याध उवाच ।
विज्ञानार्थं मनुष्याणां मनः पूर्वं प्रवर्तते ।
तत्प्राप्य कामं भजते क्रोधं च द्विजसत्तम ॥ २
ततस्तदर्थं यतते कर्म चारभते महत् ।
इष्टानां रूपगन्धानामभ्यासं च निषेवते ॥ ३
ततो रागः प्रभवति द्वेषश्च तदनन्तरम् ।
ततो लोभः प्रभवति मोहश्च तदनन्तरम् ॥ ४
तस्य लोभाभिभूतस्य रागद्वेषहतस्य च ।
न धर्मे जायते बुद्धिर्व्याजाद्धर्मं करोति च ॥ ५
व्याजेन चरते धर्ममर्थं व्याजेन रोचते ।
व्याजेन सिध्यमानेषु धनेषु द्विजसत्तम ॥ ६
तत्रैव रमते बुद्धिस्ततः पापं चिकीर्षति ।
सुहृद्भिर्वार्यमाणश्च पण्डितैश्च द्विजोत्तम ॥ ७
उत्तरं श्रुतिसंबद्धं ब्रवीत्यश्रुतियोजितम् ।
अधर्मस्त्रिविधस्तस्य वर्तते रागदोषजः ॥ ८
पापं चिन्तयते चैव ब्रवीति च करोति च ।
तस्याधर्मप्रवृत्तस्य गुणा नश्यन्ति साधवः ॥ ९
एकशीलाश्च मित्रत्वं भजन्ते पापकर्मिणः ।
स तेन दुःखमाप्नोति परत्र च विपद्यते ॥ १०
पापात्मा भवति ह्येवं धर्मलाभं तु मे शृणु ।
यस्त्वेतान्प्रज्ञया दोषान्पूर्वमेवानुपश्यति ॥ ११
कुशलः सुखदुःखेषु साधूंश्चाप्युपसेवते ।
तस्य साधुसमारम्भाद्बुद्धिर्धर्मेषु राजते ॥ १२
ब्राह्मण उवाच ।
ब्रवीषि सूनृतं धर्मं यस्य वक्ता न विद्यते ।
दिव्यप्रभावः सुमहानृषिरेव मतोसि मे ॥ १३
व्याध उवाच ।
ब्राह्मणा वै महाभागाः पितरोऽग्रभुजः सदा ।
तेषां सर्वात्मना कार्यं प्रियं लोके मनीषिणा ॥ १४
यत्तेषां च प्रियं तत्ते वक्ष्यामि द्विजसत्तम ।
नमस्कृत्वा ब्राह्मणेभ्यो ब्राह्मीं विद्यां निबोध मे ॥ १५
इदं विश्वं जगत्सर्वमजगच्चापि सर्वशः ।
महाभूतात्मकं ब्रह्मन्नातः परतरं भवेत् ॥ १६
महाभूतानि खं वायुरग्निरापस्तथा च भूः ।
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च तद्गुणाः ॥ १७
तेषामपि गुणाः सर्वे गुणवृत्तिः परस्परम् ।
पूर्वपूर्वगुणाः सर्वे क्रमशो गुणिषु त्रिषु ॥ १८
षष्ठी तु चेतना नाम मन इत्यभिधीयते ।
सप्तमी तु भवेद्बुद्धिरहंकारस्ततः परम् ॥ १९
इन्द्रियाणि च पञ्चात्मा रजः सत्वं तमस्तथा ।
इत्येष सप्तदशको राशिरव्यक्तसंज्ञकः ॥ २०
सर्वैरिहेन्द्रियार्थैस्तु व्यक्ताव्यक्तैः सुसंवृतैः ।
चतुर्विंशक इत्येष व्यक्ताव्यक्तमयो गुणः ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि २१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥

## पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥

कौशिकंप्रति धर्मव्याधेन भूतपञ्चकगुणनिरूपणपूर्वकमिन्द्रियजयाजययोः सुखदुःखासाधारणकारणताकथनम् ॥ १ ॥

मार्कण्डेय उवाच ।
एवमुक्तः स विप्रस्तु धर्मव्याधेन भारत ।
कथामकथयद्भूयो मनसः प्रीतिवर्धनीम् ॥ १
ब्राह्मण उवाच ।
महाभूतानि यान्याहुः पञ्च धर्मविदांवर ।
एकैकस्य गुणान्सम्यक्पञ्चानामपि मे वद ॥ २

व्याध उवाच ।
भूमिरापस्तथा ज्योतिर्वायुराकाशमेव च ।
गुणोत्तराणि सर्वाणि तेषां वक्ष्यामि ते गुणान् ३
भूमिः पञ्चगुणा ब्रह्मन्नुदकं च चतुर्गुणम् ।
गुणास्त्रयस्तेजसि च त्रयश्चाकाशवातयोः ॥ ४
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
एते गुणाः पञ्च भूमेः सर्वेभ्यो गुणवत्तराः ॥ ५
शब्दः स्पर्शश्च रूपं च रसश्चापि द्विजोत्तम ।
अपामेते गुणा ब्रह्मन्कीर्तितास्तव सुव्रत ॥ ६
शब्दः स्पर्शश्च रूपं च तेजसोऽथ गुणास्त्रयः ।
शब्दः स्पर्शश्च वायौ तु शब्दश्चाकाश एव तु ॥७
एते पञ्चदश ब्रह्मन्गुणा भूतेषु पञ्चसु ।
वर्तन्ते सर्वभूतेषु येषु लोकाः प्रतिष्ठिताः ॥ ८
अन्योन्यं नातिवर्तन्ते सम्यक्क भवति द्विज ।
यदा तु विषमं भावमाचरन्ति चराचराः ॥ ९
तदा देही देहमन्यं व्यतिरोहति कालतः ।
प्रातिलोम्याद्विनश्यन्ति जायन्ते चानुपूर्वशः १०
तत्र तत्र हि दृश्यन्ते धातवः पाञ्चभौतिकाः ।
यैराव्रतमिदं सर्वं जगत्स्थावरजङ्गमम् ॥ ११
इन्द्रियैर्गृह्यते यद्यत्तत्तव्द्यक्तमिति स्मृतम् ।
तदव्यक्तमिति ज्ञेयं लिङ्गग्राह्यमतीन्द्रियम् ॥ १२
यथास्वं ग्राहकान्येषां शब्दादीनामिमानि तु ।
इन्द्रियाणि तथा देही धारयन्निह तप्यते ॥ १३
लोके विततमात्मानं लोकं चात्मनि पश्यति ।
परापरज्ञः सक्तः सन्स तु भूतानि पश्यति ॥१४
पश्यतः सर्वभूतानि सर्वावस्थासु सर्वदा ।
ब्रह्मभूतस्य संयोगो नाशुभेनोपपद्यते ॥ १५
ज्ञानमूलात्मकं क्लेशमतिवृत्तस्य मोहजम् ।
लोकबुद्धिप्रकाशेन ज्ञेयमार्गेण गम्यते ॥ १६
अनादिनिधनं जन्तुमात्मयोनिं सदाव्ययम् ।
अनौपम्यममूर्तं च भगवानाह बुद्धिमान् ॥ १७
तपोमूलमिदं सर्वं यन्मां विप्रानुपृच्छसि ।
'तपसा हि समाप्नोति यद्यदेवाभिवाञ्छति ।'
इन्द्रियाण्येव संयम्य तपो भवति नान्यथा ॥१८
इन्द्रियाण्येव तत्सर्वं यत्स्वर्गनरकावुभौ ।
निगृहीतविसृष्टानि स्वर्गाय नरकाय च ॥ १९
एष योगविधिः कृत्स्नो यावदिन्द्रियधारणम् ।
एतन्मूलं हि तपसः स्वर्गस्य नरकस्य च ॥ २०
इन्द्रियाणां प्रसङ्गेन दोषमार्च्छत्यसंशयम् ।
सन्नियम्य तु तान्येव ततः सिद्धिं समाप्नुयात् २१
षण्णामात्मनि योज्यानामैश्वर्यं योऽधितिष्ठति ।
न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः ॥२२
रथः शरीरं पुरुषस्य दृष्ट-
मात्मा नियन्तेन्द्रियाण्याहुरश्वान् ।
तैरप्रमत्तः कुशली सदश्वै-
र्दान्तः सुखं याति रथीव धीरः ॥ २३
षण्णामात्मनियुक्तानामिन्द्रियाणां प्रमाथिनाम् ।
यो धीरो धारयेद्रश्मीन्स स्यात्परमसारथिः ॥२४
इन्द्रियाणां प्रसृष्टानां हयानामिव वर्त्मसु ।
धृतिं कुर्वीत सारथ्ये धृत्वा तानि जयेद्ध्रुवम् २५
इन्द्रियाणां विचरतां यन्मनोऽनुविधीयते ।
तदस्य हरते बुद्धिं नावं वायुरिवाम्भसि ॥ २६
येषु विप्रतिपद्यन्ते षट्सु मोहात्फलागमम् ।
तेष्वध्यवसिताध्यायी विन्दते ध्यानजं फलम् २७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥

## षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥

धर्मव्याधेन कौशिकंप्रति सत्त्वादिगुणत्रयगुणनिरूपणपूर्वकमध्यात्मकथनम् ॥ १ ॥

मार्कण्डेय उवाच ।
एवं तु सूक्ष्मे कथिते धर्मव्याधेन भारत ।

गुणोत्तराणि उत्तरोत्तरगुणाः पूर्वपूर्वस्मिन्वर्तन्त इत्यर्थः ॥३॥ आनुपूर्व्या विनश्यन्ति इति झ. थ. पाठः ॥ १० ॥ कृत्स्नस्य नरकस्य चेति झ. ध. पाठः ॥ २० ॥ षट्सु मोहात् इति झ. पाठः ॥ २७ ॥ पञ्चदशाधिकद्विशततमोऽध्यायः ॥२१५॥

ब्राह्मणः स पुनः सूक्ष्मं पप्रच्छ सुसमाहितः ॥ १
सत्त्वस्य रजसश्चैव तमसश्च यथातथम् ।
गुणांस्तत्त्वेन मे ब्रूहि यथावदिह पृच्छतः ॥ २
व्याध उवाच ।
हन्त ते कथयिष्यामि यन्मां त्वं परिपृच्छसि ।
एतान्गुणान्पृथक्त्वेन निबोध गदतो मम ॥ ३
मोहात्मकं तमस्तेषां रज एषां प्रवर्तकम् ।
प्रकाशबहुलत्वाच्च सत्वं ज्याय इहोच्यते ॥ ४
अविद्याबहुलो मूढः स्वप्नशीलो विचेतनः ।
दुर्हृषीकस्तमोध्यस्तः सक्रोधस्तामसोऽलसः ॥ ५
सुवृत्तवाक्यो मन्त्री च यो नराग्र्योऽनसूयकः ।
विवित्समानो विप्रर्षे स्तब्धो मानी स राजसः ६
प्रकाशबहुलो धीरो निर्विवित्सोऽनसूयकः ।
अक्रोधनो नरो धीमान्दान्तश्चैव स सात्विकः॥७
सात्विकस्त्वथ संबुद्धो लोकवृत्तैर्न लिप्यते ।
यदा बुध्यति बोद्धव्यं लोकवृत्तं जुगुप्सते ॥ ८
वैराग्यस्य च रूपं तु पूर्वमेव प्रवर्तते ।
मृदुर्भवत्यहंकारः प्रसीदत्यार्जवं च यत् ॥ ९
ततोऽस्य सर्वद्वन्द्वानि प्रशाम्यन्ति परस्परम् ।
न चास्यासंयमो नाम क्वचिद्भवति कश्चन ॥ १०
शूद्रयोनौ हि जातस्य सद्गुणानुपतिष्ठतः ।
वैश्यत्वं भवति ब्रह्मन्क्षत्रियत्वं तथैव च ॥ ११
आर्जवे वर्तमानस्य ब्राह्मण्यमभिजायते ।
गुणास्ते कीर्तिताः सर्वे किं भूयः श्रोतुमिच्छसि॥
ब्राह्मण उवाच ।
पार्थिवं धातुमासाद्य शारीरोऽग्निः कथं भवेत् ।
अवकाशविशेषेण कथं वर्तयतेऽनिलः ॥ १३
मार्कण्डेय उवाच ।
प्रश्नमेतं समुद्दिष्टं ब्राह्मणेन युधिष्ठिर ।
व्याधस्तु कथयामास ब्राह्मणाय महात्मने ॥ १४
मूर्धानमाश्रितो वह्निः शरीरं परिपालयन् ।
प्राणो मूर्धनि चाग्नौ च वर्तमानो विचेष्टते ॥१५
भूतं भव्यं भविष्यं च सर्वं प्राणे प्रतिष्ठितम् ।
श्रेष्ठं तदेव भूतानां ब्रह्मज्योतिरुपास्महे ॥ १६
स जन्तुः सर्वभूतात्मा पुरुषः स सनातनः ।
मनोबुद्धिरहंकारो भूतानां विषयश्च सः ॥ १७
'अव्यक्तं सत्वसंज्ञं च जीवः कालः स चैव हि ।
प्रकृतिः पुरुषश्चैव प्राण एव द्विजोत्तम ॥ १८
जागर्ति स्वप्नकाले च स्वप्ने स्वप्नायते च सः ।
जाग्रत्सु बलमाधत्ते चेष्टत्सु चेष्टयत्यपि ॥ १९
तस्मिन्निरुद्धे विप्रेन्द्र मृत इत्यभिधीयते ।
त्यक्त्वा शरीरं भूतात्मा पुनरन्यत्प्रपद्यते ॥ २०
शरीरमध्ये नाभिः स्यान्नाभ्यामग्निः प्रतिष्ठितः ।'
एष त्वग्निरपानेन प्राणेन परिपाल्यते ।
पृष्ठतस्तु समानेन स्वां स्वां गतिमुपाश्रितः ॥ २१
बस्तिमूले गुदे चैव पावकं समुपाश्रितः ।
वहन्मूत्रं पुरीषं वाऽप्यपानः परिवर्तते ॥ २२
प्रयत्ने कर्मणि बले य एकस्त्रिषु वर्तते ।
उदान इति तं प्राहुरध्यात्मविदुषो जनाः ॥ २३
सन्धौसन्धौ संनिविष्टः सर्वेष्वपि तथाऽनिलः ।
शरीरेषु मनुष्याणां व्यान इत्युपदिश्यते ॥ २४
धातुष्वग्निस्तु विततः स तु वायुसमीरितः ।
रसान्धातूंश्च दोषांश्च वर्तयन्परिधावति ॥ २५
प्राणानां संनिपातात्तु सन्निपातः प्रजायते ।
सोष्मा सोऽग्निरिति ज्ञेयो योऽन्नं पचति देहिनां २६
अपानोदानयोर्मध्ये प्राणव्यानौ समाहितौ ।
समन्वितस्त्वधिष्ठानं सम्यक्पचति पावकः ॥२७
अस्यापि पायुपर्यन्तस्तथा स्याद्गुदसंज्ञितः ।
स्रोतांसि तस्माज्जायन्ते सर्वप्राणेषु देहिनाम् ॥२८
अग्निवेगवहः प्राणो गुदान्ते प्रतिहन्यते ।
स ऊर्ध्वमागम्य पुनः समुत्क्षिपति पावकम् ॥२९
पक्वाशयस्त्वधोनाभ्या ऊर्ध्वमामाशयः स्थितः ।
नाभिमध्ये शरीरस्य प्राणाः सर्वे प्रतिष्ठिताः॥३०
प्रवृत्ता हृदयात्सर्वे तिर्यगूर्ध्वमधस्तथा ।
वहन्त्यन्नरसान्नाड्यो दशप्राणप्रचोदिताः ॥ ३१
योगिनामेष मार्गस्तु येन गच्छन्ति तत्परम् ।

नचास्य संशयो नाम इति झ. पाठः ॥ १० ॥ समानोदानयोर्मध्ये प्राणापानौ समाहितौ इति झ. पाठः ॥ २७ ॥

जितक्लमासनो धीरो मूर्धन्यात्मानमादधत् ॥३२
एवं सर्वेषु विततौ प्राणापानौ हि देहिषु ।
'तौ तावदग्निसहितौ विद्धि वै प्राणमात्मनि' ३३
एकादशविकारात्मा कलासंभारसंभृतः ।
मूर्तिमन्तं हि तं विद्धि नित्यं कर्मजितात्मकम् ।
तस्मिन्यः संस्थितो ह्यग्निर्नित्यं स्थाल्यामिवाहितः॥
आत्मानं तं विजानीहि नित्यं त्यागजितात्मकं ३५
देवो यः संस्थितस्तस्मिन्नब्बिन्दुरिव पुष्करे ।
क्षेत्रज्ञं तं विजानीहि नित्यं त्यागजितात्मकं ३६
जीवात्मकं विजानीहि रजः सत्वं तमस्तथा ।
जीवमात्मगुणं विद्धि तथाऽऽत्मानं परात्मकं ३७

अचेतनं जीवगुणं वदन्ति
स चेष्टते चेष्टयते च सर्वम् ।
ततः परं क्षेत्रविदो वदन्ति
प्राकल्पयद्यो भुवनानि सप्त ॥ ३८

एष सर्वेषु भूतेषु भूतात्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया ज्ञानवेदिभिः॥
चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् ।
प्रसन्नात्मात्मनि स्थित्वा सुखमानन्त्यमश्नुते ४०
लक्षणं तु प्रसादस्य यथा तृप्तः सुखं स्वपेत् ।
'सुखदुःखे हि संत्यज्य निर्द्वन्द्वो निष्परिग्रहः ।'
निवाते वा यथा दीपो दीप्येत्कुशलदीपितः ४१
पूर्वरात्रेऽपरे चैव युञ्जानः सततं मनः ।
लघ्वाहारो विशुद्धात्मा पश्यत्यात्मानमात्मनि४२
प्रदीप्तेनेव दीपेन मनोदीपेन पश्यति ।
दृष्ट्वाऽऽत्मानं निरात्मानं स तदा विप्रमुच्यते ॥
सर्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः ।
एतत्पवित्रं यज्ज्ञानं तपो वै संक्रमो मतः ॥ ४४
नित्यं क्रोधात्तपो रक्षेच्छ्रियं रक्षेच्च मत्सरात् ।
विद्यां मानापमानाभ्यामात्मानं तु प्रमादतः ४५
आनृशंस्यं परो धर्मः क्षमा च परमं बलम् ।
आत्मज्ञानं परं ज्ञानं परं सत्यव्रतव्रतम् ॥ ४६
सत्यस्य वचनं श्रेयः सत्यं ज्ञानं हितं भवेत् ।
यद्भूतहितमत्यन्तं तद्वै सत्यं परं मतम् ॥ ४७
यस्य सर्वे समारम्भा निराशीर्बन्धनाः सदा ।
त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान्॥
यदा न गुरुतां चैनं च्यावयेदुपपादयन् ।
तं विद्याद्ब्राह्मणो योगमयोगं योगसंज्ञितम्॥४९
न हिंस्यात्सर्वभूतानि मैत्रायणगतश्चरेत् ।
नेदं जीवितमासाद्य वैरं कुर्वीत केनचित् ॥ ५०
आकिंचन्यं सुसंतोषो निराशित्वमचापलम् ।
एतदेव परं ज्ञानं सदात्मज्ञानमुत्तमम् ॥ ५१
परिग्रहं परित्यज्य भवेद्बुद्ध्या यतव्रतः ।
अशोकं स्थानमाश्रित्य निश्चलं प्रेत्य चेह च ॥५२
तपोनित्येन दान्तेन मुनिना संयतात्मना ।
अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना ॥ ५३
गुणागुणमनासङ्गमेककार्यमनन्तरम् ।
एतत्तद्ब्राह्मणो वृत्तमाहुरेकपदं सुखम् ॥ ५४
परित्यजति यो दुःखं सुखं चाप्युभयं नरः ।
ब्रह्म प्राप्नोति सोत्यन्तमासङ्गं च न गच्छति ५५
यथाश्रुतमिदं सर्वं समासेन द्विजोत्तम ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ५६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥

## सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥

धर्मव्याधेन कौशिकाय स्वगृहप्रवेशनपूर्वकं वृद्धयोः स्वपित्रोः प्रदर्शनम् ॥ १ ॥ तथा मातापितृविषये स्वानुसंधानप्रकारनिवेदनम् ॥ २ ॥

मार्कण्डेय उवाच ।
एवं संकथिते कृत्स्ने मोक्षधर्मे युधिष्ठिर ।

धर्मं रक्षेच्च मत्सरात् इति झ. पाठः ॥ ४५ ॥ मैत्रं मित्रभावस्तदेवायनं मार्गस्तद्गतश्चरेत् ॥ ५० ॥
षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥

दृढप्रीतमना विप्रो धर्मव्याधमुवाच ह ॥ १
न्याययुक्तमिदं सर्वं भवता परिकीर्तितम् ।
न तेऽस्त्यविदितं किंचिद्धर्मेष्वभिसमीक्ष्यते ॥ २
व्याध उवाच ।
प्रत्यक्षं मम यो धर्मस्तं च पश्य द्विजोत्तम ।
येन सिद्धिरियं प्राप्ता मया ब्राह्मणपुङ्गव ॥ ३
उत्तिष्ठ भगवन्क्षिप्रं प्रविश्याभ्यन्तरं गृहम् ।
द्रष्टुमर्हसि धर्मज्ञ मातरं पितरं च मे ॥ ४
इत्युक्तः स प्रविश्याथ ददर्श परमार्चितम् ।
सौधं हृद्यं चतुःशालमतीव च मनोरमम् ॥ ५
देवतागृहसंकाशं दैवतैश्च सुपूजितम् ।
शयनासनसंबाधं गन्धैश्च परमैर्युतम् ॥ ६
तत्र शुक्लाम्बरधरौ पितरावस्य पूजितौ ।
कृताहारौ तु संतुष्टावुपविष्टौ वरासने ॥ ७
'तस्य व्याधस्य पितरौ ब्राह्मणः संददर्श ह ।'
धर्मव्याधस्तु तौ दृष्ट्वा पादेषु शिरसाऽपतत् ॥ ८
वृद्धावूचतुः ।
उत्तिष्ठोत्तिष्ठ धर्मज्ञ धर्मस्त्वामभिरक्षतु ।
प्रीतौ स्वस्तव शौचेन दीर्घमायुरवाप्नुहि ।
[गतिमिष्टां तपो ज्ञानं मेधां च परमां गतः॥]९
सत्पुत्रेण त्वया पुत्र नित्यं काले सुपूजितौ ।
'सुखमेव वसावोऽत्र देवलोकगताविव ॥' १०
न तेऽन्यद्दैवतं किंचिद्दैवतेष्वपि वर्तते ।
प्रयतत्वाद्द्विजातीनां दमेनासि समन्वितः ॥ ११
पितुः पितामहा ये च तथैव प्रपितामहाः ।
प्रीतास्ते सततं पुत्र दमेनावां च पूजया ॥ १२
मनसा कर्मणा वाचा शुश्रूषा नैव हीयते ।
न चान्या हि तथा बुद्धिर्दृश्यते सांप्रतं तव ॥१३
जामदग्न्येन रामेण यथा वृद्धौ सुपूजितौ ।
तथा त्वया कृतं सर्वं तद्विशिष्टं च पुत्रक ॥ १४
मार्कण्डेय उवाच ।
ततस्तं ब्राह्मणं ताभ्यां धर्मव्याधो न्यवेदयत् ।
तौ स्वागतेन तं विप्रमर्चयामासतुस्तदा ॥ १५
प्रतिगृह्य च तां पूजां द्विजः पप्रच्छ तावुभौ ।
सपुत्राभ्यां सभृत्याभ्यां कच्चिद्वां कुशलं गृहे ।
अनामयं च वां कच्चित्सुखं वेह शरीरयोः ॥ १६
वृद्धावूचतुः ।
कुशलं नौ गृहे विप्र भृत्यवर्गे च सर्वशः ।
कच्चित्त्वमप्यविघ्नेन संप्राप्तो भगवन्निति ॥ १७
मार्कण्डेय उवाच ।
बाढमित्येव तौ विप्रः प्रत्युवाच मुदान्वितः ।
धर्मव्याधस्तु तं विप्रमर्थवद्वाक्यमब्रवीत् ॥ १८
पिता माता च भगवन्नेतौ मे दैवतं परम् ।
यद्दैवतेभ्यः कर्तव्यं तदेताभ्यां करोम्यहम् ॥१९
त्रयस्त्रिंशद्यथा देवाः सर्वे शक्रपुरोगमाः ।
संपूज्याः सर्वलोकस्य तथा वृद्धाविमौ मम ॥२०
उपाहारानाहरन्तो देवतानां यथा द्विजाः ।
कुर्वन्ति तद्वदेताभ्यां करोम्यहमतन्द्रितः ॥ २१
एतौ मे परमं ब्रह्मन्पिता माता च दैवतम् ।
एतौ पुष्पैः फलैरत्नैस्तोषयामि सदा द्विज ॥२२
एतावेवाग्नयो मह्यं यान्वदन्ति मनीषिणः ।
यज्ञा वेदाश्च चत्वारः सर्वमेतौ मम द्विज ॥ २३
एतदर्थं मम प्राणा भार्या पुत्रः सुहृज्जनः ।
सपुत्रदारः शुश्रूषां नित्यमेव करोम्यहम् ॥ २४
स्वयं च स्नापयाम्येतौ तथा पादौ प्रधावये ।
आहारं च प्रयच्छामि स्वयं च द्विजसत्तम ॥२५
अनुकूलाः कथा वच्मि विप्रियं परिवर्जये ।
अधर्मेणापि संयुक्तं प्रियमाभ्यां करोम्यहम् ॥ २६
धर्ममेव गुरुं मत्वा साक्षादेतौ द्विजोत्तम ।
अतन्द्रितः सदा विप्र शुश्रूषां वै करोम्यहम् ॥२७
पञ्चैव गुरवो ब्रह्मन्पुरुषस्य बुभूषतः ।
पिता माताऽग्निरात्मा च गुरुश्च द्विजसत्तम ॥२८
एतेषु यस्तु वर्तेत सम्यगेव द्विजोत्तम ।

सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥

शयनासनसंबाधं शयनादिसंकीर्णम् ॥ ६ ॥ वां युवयोः ॥ १६ ॥ नौ आवयोः ॥ १७ ॥

भवेयुरभयस्तेन परिचीर्णास्तु नित्यशः । गार्हस्थ्ये वर्तमानस्य एष धर्मः सनातनः ॥ २९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥

## अष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥

धर्मव्याधेन कौशिकंप्रति मातापितृशुश्रूषणचोदनपूर्वकं स्वस्य शूद्रयोनौ जननिदानकथनम् ॥ १ ॥

मार्कण्डेय उवाच ।
गुरू निवेद्य विप्राय तौ मातापितरावुभौ ।
पुनरेव स धर्मात्मा व्याधो ब्राह्मणमब्रवीत् ॥ १
प्रवृत्तचक्षुर्जातोस्मि संपश्य तपसो बलम् ।
यदर्थमुक्तोसि तया गच्छ त्वं मिथिलामिति ॥ २
पतिशुश्रूषपरया दान्तया सत्यशीलया ।
मिथिलायां वसन्व्याधः स ते धर्मान्प्रवक्ष्यति ३
ब्राह्मण उवाच ।
पतिव्रतायाः सत्यायाः शीलाढ्याया यतव्रत ।
संस्मृत्य वाक्यं धर्मज्ञ गुणवानसि मे मतः ॥ ४
व्याध उवाच ।
यत्तया त्वं द्विजश्रेष्ठ नियुक्तो मां प्रति प्रभो ।
दृष्टमेव तया सम्यगेकपत्न्या न संशयः ॥ ५
त्वदनुग्रहबुद्ध्या तु विप्रैतद्दर्शितं मया ।
वाक्यं च शृणु मे तात यत्ते वक्ष्ये हितं द्विज॥६
त्वया न पूजिता माता पिता च द्विजसत्तम ।
अनिसृष्टोसि निष्क्रान्तो गृहात्ताभ्यामनिन्दित ७
वेदोच्चारणकार्यार्थमयुक्तं तत्त्वया कृतम् ।
तव शोकेन वृद्धौ तावन्धीभूतौ तपस्विनौ ॥ ८
तौ प्रसादयितुं गच्छ मा त्वां धर्मोऽत्यगादयम् ।
तपस्वी त्वं महात्मा च धर्मे च निरतः सदा॥९
सर्वमेतदपार्थं ते क्षिप्रं तौ संप्रसादय ।
'तौ प्रसाद्य द्विजश्रेष्ठ यच्छ्रेयस्तदवाप्स्यसि॥'१०
श्रद्दधस्व मम ब्रह्मन्नान्यथा कर्तुमर्हसि ।
गम्यतामद्य विप्रर्षे श्रेयस्ते कथयाम्यहम् ॥ ११
ब्राह्मण उवाच ।
यदेतदुक्तं भवता सर्वं सत्यमसंशयम् ।
प्रीतोस्मि तव भद्रं ते धर्माचारगुणान्वित ॥ १२
व्याध उवाच ।
दैवतप्रतिमो हि त्वं यस्त्वं धर्ममनुव्रतः ।
पुराणं शाश्वतं दिव्यं दुष्प्रापमकृतात्मभिः ॥ १३
मातापित्रोः सकाशं हि गत्वा त्वं द्विजसत्तम ।
अतन्द्रितः कुरु क्षिप्रं मातापित्रोर्हि पूजनम् ।
अतः परमहं धर्मं नान्यं पश्यामि कंचन ॥ १४
ब्राह्मण उवाच ।
इहाहमागतो दिष्ट्या दिष्ट्या मे संगतं त्वया ।
ईदृशा दुर्लभा लोके नरा धर्मप्रदर्शकाः ॥ १५
एको नरसहस्रेषु धर्मवान्विद्यते न वा ।
प्रीतोस्मि तव सत्येन भद्रं ते पुरुषर्षभ ॥ १६
पतमानोऽद्य नरके भवताऽस्मि समुद्धृतः ।
भवितव्यमथैवं च यद्दृष्टोसि मयाऽनघ ॥ १७
राजा ययातिर्दौहित्रैः पतितस्तारितो यथा ।
सद्भिः पुरुषशार्दूल तथाऽहं भवता त्विह ॥ १८
मातापितृभ्यां शुश्रूषां करिष्ये वचनात्तव ।
नाकृतात्मा वेदयति धर्माधर्मविनिश्चयम् ॥ १९
दुर्ज्ञेयः शाश्वतो धर्मः शूद्रयोनौ हि वर्तता ।
न त्वां शूद्रमहं मन्ये भवितव्यं हि कारणम् २०
येन कर्मविशेषेण प्राप्तेयं शूद्रता त्वया ।
एतामिच्छामि विज्ञातुं तत्त्वेन तव शूद्रताम् ।
कामयानस्य मे शंस सर्वं त्वं प्रयतात्मवान्॥२१
व्याध उवाच ।
अनतिक्रमणीया वै ब्राह्मणा मे द्विजोत्तम ।
शृणु सर्वमिदं वृत्तं पूर्वदेहे ममानघ ॥ २२
अहं हि ब्राह्मणः पूर्वमासं द्विजवरात्मजः ।
वेदाध्यायी सुकुशलो वेदाङ्गानां च पारगः ।

प्रवृत्तचक्षुर्दिव्यदृष्टिः । तपसः पित्रोः शुश्रूषात्मकस्य ॥ २ ॥

आत्मदोषकृतैर्ब्रह्मन्नवस्थामाप्तवानिमाम् ॥ २३
कश्चिद्राजा मम सखा धनुर्वेदपरायणः ।
संसर्गाद्धनुषि श्रेष्ठस्ततोऽहमभवं द्विज ॥ २४
एतस्मिन्नेव काले तु मृगयां निर्गतो नृपः ।
सहितो योधमुख्यैश्च मन्त्रिभिश्च सुसंवृतः ।
ततोऽभ्यहन्मृगांस्तत्र सुबहूनाश्रमं प्रति ॥ २५
अथ क्षिप्तः शरो घोरो मयापि द्विजसत्तम ।
ताडितश्च ऋषिस्तेन शरेणानतपर्वणा ॥ २६
भूमौ निपतितो ब्रह्मन्नुवाच प्रतिनादयन् ।
नापराध्याम्यहं किंचित्केन पापमिदं कृतम् ॥२७
मन्वानस्तं मृगं चाहं संप्राप्तः सहसा मुनिम् ।
अपश्यं तमृषिं विद्धं शरेणानतपर्वणा ।
तमुग्रतपसं विप्रं निष्टनन्तं महीतले ॥ २८
अकार्यकरणाच्चापि भृशं मे व्यथितं मनः ।
अजानता कृतमिदं मयेत्यहमथाब्रुवम् ॥ २९
क्षन्तुमर्हसि मे सर्वमिति चोक्तो मया मुनिः ३०
ततः प्रत्यब्रवीद्वाक्यमृषिर्मां क्रोधमूर्च्छितः ।
व्याधस्त्वं भविता क्रूर शूद्रयोनाविति द्विज ३१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि अष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥

---

## एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥

धर्मव्याधेन नानाधर्मान्बोधितेन कौशिकेन गृहमेत्य स्वपित्रोः शुश्रूषणम् ॥ १ ॥ मार्कण्डेयेन युधिष्ठिरम्प्रति पतिव्रता-माहात्म्यादिकथनोपसंहारः ॥ २ ॥

व्याध उवाच ।
एवं शप्तोऽहमृषिणा तदा द्विजवरोत्तम ।
अहं प्रासादयमृषिं गिरा वाक्यविशारदम् ॥ १
अजानता मयाऽकार्यमिदमद्य कृतं मुने ।
क्षन्तुमर्हसि तत्सर्वं प्रसीद भगवन्निति ॥ २
ऋषिरुवाच ।
नान्यथा भविता शाप एवमेतदसंशयम् ।
आनृशंस्यात्त्वहं किंचित्कर्ताऽनुग्रहमद्य ते ॥ ३
शूद्रयोन्यां वर्तमानो धर्मज्ञो हि भविष्यसि ।
मातापित्रोश्च शुश्रूषां करिष्यसि न संशयः ॥ ४
तयोः शुश्रूषया सिद्धिं महतीं समवाप्स्यसि ।
जातिस्मरश्च भविता स्वर्गं चैव गमिष्यसि ॥ ५
'भूत्वा च धार्मिको व्याधः पित्रोः शुश्रूषणे रतः।
शापक्षये तु निर्वृत्ते भविताऽसि पुनर्द्विजः ॥ ६
एवं शप्तः पुरा तेन ऋषिणाऽस्म्युग्रतेजसा ।
प्रसादश्च कृतस्तेन ममैव द्विपदांवर ॥ ७
शरं चोद्धृतवानस्मि तस्य वै द्विजसत्तम ।
आश्रमं च मया नीतो न च प्राणैर्व्ययुज्यत ॥८
एतत्ते सर्वमाख्यातं यथा मम पुराऽभवत् ।
अभितश्चापि गन्तव्यो मया स्वर्गो द्विजोत्तम॥९
ब्राह्मण उवाच ।
एवमेतानि पुरुषा दुःखानि च सुखानि च ।
आप्नुवन्ति महाबुद्धे नोत्कण्ठां कर्तुमर्हसि ॥ १०
दुष्करं हि कृतं कर्म जानता जातिमात्मनः ।
[लोकवृत्तान्ततत्त्वज्ञ नित्यं धर्मपरायण ॥] ११
कर्मदोषाच्च वै विद्वन्नात्मजातिकृतेन वै ।
कंचित्कालं मृष्यतां वै ततोसि भविता द्विजः१२
सांप्रतं च मतो मेऽसि ब्राह्मणो नात्र संशयः१३
ब्राह्मणः पतनीयेषु वर्तमानो विकर्मसु ।
दाम्भिको दुष्कृतप्रायः शूद्रेण सदृशो भवेत्॥१४
यस्तु शूद्रो दमे सत्ये धर्मे च सततोत्थितः ।
तं ब्राह्मणमहं मन्ये वृत्तेन हि भवेद्द्विजः ॥ १५
कर्मदोषेण विषमां गतिमाप्तोसि दारुणाम् ।
क्षीणदोषमहं मन्ये चाभितस्त्वां नरोत्तम ॥ १६
कर्तुमर्हसि नोत्कण्ठां त्वद्विधा ह्यविषादिनः ।
लोकवृत्तान्ततत्त्वज्ञा नित्यं धर्मपरायणाः ॥ १७

---

निष्टनन्तं शब्दं कुर्वन्तम् ॥ २८ ॥

व्याध उवाच ।
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतद्विज्ञानसामर्थ्यं न बालैः समतामियात् ॥ १८
अनिष्टसंप्रयोगाच्च विप्रयोगात्प्रियस्य च ।
मनुष्या मानसैर्दुःखैर्युज्यन्ते चाल्पबुद्धयः ॥ १९
गुणैर्भूतानि युज्यन्ते वियुज्यन्ते तथैव च ।
सर्वाणि नैतदेकस्य शोकस्थानं हि विद्यते ॥ २०
अनिष्टेनान्वितं पश्यंस्तथा क्षिप्रं विरज्यते ।
ततश्च प्रतिकुर्वन्ति यदि पश्यन्त्युपक्रमम् ॥ २१
शोचतो न भवेत्किंचित्केवलं परितप्यते ।
परित्यजन्ति ये दुःखं सुखं वाऽप्युभयं नराः ॥ २२
त एव सुखमेधन्ते ज्ञानतृप्ता मनीषिणः ।
असंतोषपरा मूढाः संतोषं यान्ति पण्डिताः ॥ २३
असंतोषस्य नास्त्यन्तस्तुष्टिस्तु परमं सुखम् ।
न शोचन्ति गताध्वानः पश्यन्तः परमां गतिं २४
न विषादे मनः कार्यं विषादो विषमुत्तमम् ।
मारयत्यकृतप्रज्ञं बालं क्रुद्ध इवोरगः ॥ २५
यं विषादोऽभिभवति विषमे समुपस्थिते ।
तेजसा तस्य हीनस्य पुरुषार्थो न विद्यते ॥ २६
अवश्यं क्रियमाणस्य कर्मणो दृश्यते फलम् ।
न हि निर्वेदमागम्य किंचित्प्राप्नोति शोभनम् ॥ २७
अथाप्युपायं पश्येत दुःखस्य परिमोक्षणे ।
अशोचन्नारभेतैव युक्तश्चाव्यसनी भवेत् ॥ २८
भूतेष्वभावं संचिन्त्य ये तु बुद्धेः परं गताः ।
न शोचन्ति कृतप्रज्ञाः पश्यन्तः परमां गतिम् ॥ २९
न शोचामि रमे विद्वन्कालाकाङ्क्षी स्थितोस्म्यहम् ।
एतैर्निदर्शनैर्ब्रह्मन्नावसीदामि सत्तम ॥ ३०
ब्राह्मण उवाच ।
कृतप्रज्ञोसि मेधावी बुद्धिश्च विपुला तव ।
पापान्निवृत्तोसि सदा ज्ञानवृद्धोसि धर्मवित् ॥ ३१
आपृच्छे त्वां स्वस्ति तेऽस्तु धर्मस्त्वां परिरक्षतु ।
अप्रमादस्तु कर्तव्यो धर्मे धर्मभृतांवर ॥ ३२
मार्कण्डेय उवाच ।
बाढमित्येव तं व्याधः कृताञ्जलिरुवाच ह ।
प्रदक्षिणमथो कृत्वा प्रस्थितो द्विजसत्तमः ॥ ३३
स तु गत्वा द्विजः सर्वां शुश्रूषां कृतवांस्तदा ।
मातापितृभ्यामन्धाभ्यां यथान्यायं सुसंशितः ॥ ३४
एतत्ते सर्वमाख्यातं निखिलेन युधिष्ठिर ।
पृष्टवानसि यं तात धर्मं धर्मभृतांवर ॥ ३५
पतिव्रताया माहात्म्यं ब्राह्मणस्य च सत्तम ।
मातापित्रोश्च शुश्रूषा धर्मव्याधेन कीर्तिता ॥ ३६
युधिष्ठिर उवाच ।
अत्यद्भुतमिदं ब्रह्मन्धर्माख्यानमनुत्तमम् ।
सर्वधर्मविदांश्रेष्ठ कथितं मुनिसत्तम ॥ ३७
सुखश्राव्यतया विद्वन्मुहूर्त इव मे गतः ।
न हि तृप्तोसि भगवञ्शृण्वानो धर्ममुत्तमम् ॥ ३८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥

## विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥

मार्कण्डेयेन युधिष्ठिरंप्रत्याङ्गिरसोपाख्यानकथनारम्भः ॥ १ ॥ अङ्गिरसःपुत्रस्य बृहस्पतेर्देवैरङ्गिरसो वचनाद्गुरुत्वेन स्वीकरणम् ॥ २ ॥

वैशंपायन उवाच ।
श्रुत्वेमां धर्मसंयुक्तां धर्मराजः कथां शुभाम् ।
पुनः पप्रच्छ तमृषिं मार्कण्डेयमिदं तदा ॥ १
कथमग्निर्वनं यातः कथं चाप्यङ्गिराः पुरा ।
नष्टेऽग्नौ हव्यमवहदग्निर्भूत्वा महाद्युतिः ॥ २
अग्निर्यदा चैक एव बहुत्वं चास्य कर्मसु ।
दृश्यते भगवन्सर्वमेतदिच्छामि वेदितुम् ॥ ३
कुमारश्च यथोत्पन्नो यथा चाग्नेः सुतोऽभवत् ।

गुणैः गुणकार्यैः सुखदुःखमोहैः ॥ २० ॥ गताध्वानः प्राप्तज्ञानमार्गाः ॥ २४ ॥ बुद्धेस्तत्त्वज्ञानात् । परं ब्रह्म गताः प्राप्ताः ॥ २९ ॥ एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥

यथा रुद्राच्च संभूतो गङ्गायां कृत्तिकासु च ॥ ४
एतदिच्छाम्यहं त्वत्तः श्रोतुं भार्गवसत्तम ।
कौतूहलसमाविष्टो याथातथ्यं महामुने ॥ ५
मार्कण्डेय उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथा क्रुद्धो हुतवहस्तपस्तप्तुं वनं गतः ॥ ६
यथा च भगवानग्निः स्वयमेवाङ्गिराऽभवत् ।
संतापयंश्च प्रभया नाशयंस्तिमिरावलिम् ॥ ७
पुराङ्गिरा महाबाहो चचार तप उत्तमम् ।
आश्रमस्थो महाभागो हव्यवाहं विशेषयन् ।
यथाग्निर्भूत्वा तु तदा जगत्सर्वं व्यकाशयत् ॥८
तपश्चरंस्तु हुतभुक्संतप्तस्तस्य तेजसा ।
भृशं ग्लानश्च तेजस्वी न च किंचित्प्रजज्ञिवान्॥९
अथ संचिन्तयामास भगवान्हव्यवाहनः ।
अन्योऽग्निरिव लोकानां ब्रह्मणा संप्रकल्पितः॥१०
अग्नित्वं विप्रनष्टं हि तप्यमानस्य मे तपः ।
कथमग्निः पुनरहं भवेयमिति चिन्त्य सः ॥ ११
अपश्यदग्निवल्लोकांस्तापयन्तं महामुनिम् ।
सोपासर्पच्छनैर्भीतस्तमुवाच तदाङ्गिराः ॥ १२
शीघ्रमेव भवस्वाग्निस्त्वं पुनर्लोकभावनः ।
विज्ञातश्चासि लोकेषु त्रिषु संस्थानचारिषु ॥ १३
त्वमग्ने प्रथमः सृष्टो ब्रह्मणा तिमिरापहः ।
स्वस्थानं प्रतिपद्यस्व शीघ्रमेव तमो नुद ॥ १४
अग्निरुवाच ।
नष्टकीर्तिरहं लोके भवाञ्जातो हुताशनः ।
भवन्तमेव ज्ञास्यन्ति पावकं न तु मां जनाः॥१५
निक्षिपाम्यहमग्नित्वं त्वमग्निः प्रथमो भव ।
भविष्यामि द्वितीयोऽहं प्राजापत्यक एव च ॥१६
अङ्गिरा उवाच ।
कुरु पुण्यं प्रजास्वर्ग्यं भवाग्निस्तिमिरापहः ।
मां च देव कुरुष्वाग्ने प्रथमं पुत्रमञ्जसा ॥ १७
मार्कण्डेय उवाच ।
तच्छ्रुत्वाङ्गिरसो वाक्यं जातवेदास्तथाऽकरोत् ।
राजन्बृहस्पतिर्नाम तस्याप्यङ्गिरसः सुतः ॥ १८
ज्ञात्वा प्रथमजं तं तु वह्नेरङ्गिरसं सुतम् ।
उपेत्य देवाः पप्रच्छुः कारणं तत्र भारत ॥ १९
स तु पृष्टस्तदा देवैस्ततः कारणमब्रवीत् ।
प्रत्यगृह्णन्त देवाश्च तद्वचोऽङ्गिरसस्तदा ॥ २०
तत्र नानाविधानग्नीन्प्रवक्ष्यामि महाप्रभान् ।
कर्मभिर्बहुभिः ख्यातान्नानार्थान्ब्राह्मणेष्विह २१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥

## एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥

मार्कण्डेयेनाग्नीनामुत्पत्त्यादिकथनम् ॥ १ ॥

मार्कण्डेय उवाच ।
ब्रह्मणो यस्तृतीयस्तु पुत्रः कुरुकुलोद्वह ।
तस्यापि वसुदाभार्या प्रजास्तस्यां च मे शृणु ॥१
बृहत्कीर्तिर्बृहज्ज्योतिर्बृहद्ब्रह्मा बृहन्मनाः ।
बृहन्मन्त्रो बृहद्भासस्तथा राजन्बृहस्पतिः ॥ २
प्रजासु तासु सर्वासु रूपेणाप्रतिमाऽभवत् ।
देवी भानुमती नाम प्रथमाऽङ्गिरसः सुता ॥ ३
भूतानामेव सर्वेषां यस्यां रागस्तदाऽभवत् ।
रागाद्रागेति यामाहुर्द्वितीयाऽङ्गिरसः सुता ॥ ४
यां कपर्दिसुतामाहुर्दृश्याद्दृश्येति देहिनः ।
तनुत्वात्सा सिनीवाली तृतीयाऽङ्गिरसः सुता॥५
यां तु दृष्ट्वा भगवतीं जनः कुहकुहायते ।

संस्थानचारिषु स्थावरजंगमेषु । सम्यक् स्थानं गतिनिवृत्तिर्येषु चरणशीलेषु चेति योगात् ॥ १३ ॥ प्राजापत्यस्तथैकत इति क. थ. ध. पाठः ॥ १६ ॥ प्रत्यगृह्णन् अङ्गिरसो वचः अयं भवतां गुरुरिति अङ्गीकृतवन्तः ॥ २० ॥ यातान्नानात्वं ब्राह्मणेष्वपि इति थ. पाठः ॥ २१ ॥ विंशत्युत्तरद्विशततमोऽध्यायः ॥ २२० ॥

तस्यापि वसुधा भार्या इति ट. ध. पाठः ॥ १ ॥ बृहत्तेजा बृहन्मना इति क. ध. पाठः ॥ २ ॥

एकानेकेति यामाहुश्चतुर्थ्यङ्गिरसः सुता ॥ ६
पञ्चम्यर्चिष्मती नाम्ना हविर्भिश्च हविष्मती ।
षष्ठीमङ्गिरसः कन्यां पुण्यामाहुर्महिष्मतीम् ॥ ७
महामखेष्वाङ्गिरसी दीप्तिमत्सु महीयती ।
महामतीति विख्याता सप्तमी कथ्यते सुता ॥८
बृहस्पतेश्चान्द्रमसी भार्याऽऽसीद्या यशस्विनी ।
अग्नीन्साऽजनयत्पुण्यान्षडेकां चापि पुत्रिकाम्॥९
आहुतिष्वेव यस्याग्नेर्हविराज्यं विधीयते ।
सोऽग्निर्बृहस्पतेः पुत्रः शंयुर्नाम महाप्रभः ॥ १०
चातुर्मास्येषु यस्येष्टमश्वमेधाग्रभागभूत् ।
दीप्तिज्वालैरनेकाग्रैरग्निष्टोमोऽथ वीर्यवान् ॥ ११
शंयोरप्रतिमा भार्या सत्या सत्याऽथ धर्मजा ।
अग्निस्तस्य सुतो दीप्तस्तिस्रः कन्याश्च सुव्रताः १२
प्रथमेनाज्यभागेन पूज्यते योऽग्निरध्वरे ।
अग्निस्तस्य भरद्वाजः प्रथमः पुत्र उच्यते ॥ १३
पौर्णमासेषु सर्वेषु हविराज्यं ध्रुवोद्यतम् ।
भरतो नामतः सोऽग्निर्द्वितीयः शंयुतः सुतः ॥१४
तिस्रः कन्या भवन्त्यन्या यासां स भरतः पतिः।
भारतस्तु सुतस्तस्य भारत्येका च पुत्रिका ॥ १५
भारतो भरतस्याग्नेः पावकस्तु प्रजायते ।
महानत्यर्थमहितस्तथा भरतसत्तम ॥ १६
भरद्वाजस्य भार्या तु वीरा वीरश्च पिण्डदः ।
प्राहुराज्येन तस्येज्यां सोमस्येव द्विजाः शनैः १७
हविषा यो द्वितीयेन सोमेन सह युज्यते ।
रथप्रभू रथध्वानः कुम्भरेताः स उच्यते ॥ १८
सरय्वां जनयत्सिद्धिं भानुं भाभिः समावृणोत् ।
आग्नेयमनयन्मिथ्यं मिथ्यो नामैष कथ्यते ॥१९
यस्तु न च्यवते नित्यं यशसा वर्चसा श्रिया ।
अग्निर्निश्च्यवनो नाम पृथिवीं स्तौति केवलम् २०
विपाप्मा कलुषैर्मुक्तो विशुद्धश्चार्चिषा ज्वलन् ।
विपापोऽग्निः सुतस्तस्य योज्यः समयकर्मसु ॥२१
अक्रोशतां हि भूतानां यः करोति हि निष्कृतिम् ।
अग्निः स निष्कृतिर्नाम शोभयत्यभिसेवितः ॥२२
अनुकूजन्ति येनेह वेदनार्ताः स्वयं जनाः ।
तस्य पुत्रः स्वनो नाम पावकः सरुजस्करः ॥२३
यस्तु विश्वस्य जगतो बुद्धिमाक्रम्य तिष्ठति ।
तं प्राहुरध्यात्मविदो विश्वजिन्नाम पावकम् ॥२४
अन्तराग्निः स्मृतो यस्तु भुक्तं पचति देहिनाम् ।
स यज्ञे विश्वभुङ्नाम सर्वलोकेषु भारत ॥ २५
ब्रह्मचारी यतात्मा च सततं विपुलप्रभः ।
ब्राह्मणाः पूजयन्त्येनं पाकयज्ञेषु पावकम् ॥ २६
प्रथितो गोपतिर्नाम नदी यस्याभवत्प्रिया ।
तस्मिन्कर्माणि सर्वाणि क्रियन्ते धर्मकर्तृभिः २७
बडबाग्निः पिबत्यम्भो योसौ परमदारुणः ।
ऊर्ध्वभागूर्ध्वभाङ् नाम कविः प्राणाश्रितस्तु यः ॥
उदग्द्वारं हविर्यस्य गृहे नित्यं प्रदीयते ।
ततस्तुष्टो भवेद्ब्रह्मा स्विष्टकृत्परमः स्मृतः ॥ २९
यः प्रशान्तेषु भूतेषु आविर्भवति पावकः ।
क्रोधस्य तु रसो जज्ञे मन्यती चाथ पुत्रिका ॥३०
स्वाहेति दारुणा क्रूरा सर्वभूतेषु तिष्ठति ।
त्रिदिवे यस्य सदृशो नास्ति रूपेण कश्चन ।
अतुलत्वात्कृतो देवैर्नाम्ना कामस्तु पावकः ॥३१
संहर्षाद्धारयन्क्रोधं धन्वी स्रग्वी रथे स्थितः ।
समरे नाशयेच्छत्रूनमोघो नाम पावकः ॥ ३२
उक्थ्यो नाम महाभाग त्रिभिरुक्थैरभिष्टुतः ।
महावर्षं त्वजनयत्सकामाश्वं हि यं विदुः ॥ ३३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥

## द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥

मार्कण्डेयेन युधिष्ठिरंप्रत्यङ्ग्युत्पत्तिकथनम् ॥ १ ॥

मार्कण्डेय उवाच ।
काश्यपो ह्यथ वासिष्ठः प्राणश्च प्राणपुत्रकः ।

हविषायं विधीयते इति झ. पाठः ॥ १० ॥ वीरस्य पिण्डदा इति झ. पाठः ॥१७॥ एकविंशत्यधिकद्विशततमोऽध्यायः ॥२२१

अग्निराङ्गिरसश्चैव च्यवनस्तीव्रवर्चकः ॥ १
अचरत्स तपस्तीव्रं पुत्रार्थे बहुवार्षिकम् ।
पुत्रं लभेयं धर्मिष्ठं यशसा ब्रह्मणा समम् ॥ २
महाव्याहृतिभिर्ध्यातः पञ्चभिस्तैस्तदा त्वथ ।
जज्ञे तेजोमयार्चिष्मान्पञ्चवर्णः प्रभाकरः ॥ ३
समिद्धोऽग्निः शिरस्तस्य बाहू सूर्यनिभौ तथा ।
त्वङ्नेत्रे च सुवर्णाभे कृष्णे जङ्घे च भारत ॥४
पञ्चवर्णः स तपसा कृतस्तैः पञ्चभिर्जनैः ।
पाञ्चजन्यः श्रुतो देवः पञ्चवंशकरस्तु सः ॥ ५
दशवर्षसहस्राणि तपस्तप्त्वा महातपाः ।
जनयत्पावकं घोरं पितॄणां स प्रजाः सृजन् ॥६
बृहद्रथंतरौ मूर्ध्नो वक्राच्च तपसा हरिम् ।
शिवं नाभ्यां बलादिन्द्रं प्राणाद्वायुं च भारत ॥७
बाहुभ्यामनुदात्तौ च विश्वे भूतानि चैव ह ।
एतान्सृष्ट्वा ततः पञ्च पितॄणामसृजत्सुतान् ॥ ८
बृहद्रथस्य प्रणिधिः काश्यपस्य महत्तरः ।
भानुरङ्गिरसो धीरः पुत्रो वर्चस्य सौरभः ॥ ९
प्राणस्य चानुदात्तस्तु व्याख्याताः पञ्च वंशजाः ।
देवान्यज्ञमुषश्चान्यान्सृजन्पञ्चदशोत्तरान् ॥ १०
सुभीममतिभीमं च भीमं भीमबलाबलम् ।
एतान्यज्ञमुषः पञ्च देवानप्यसृजत्ततः ॥ ११
सुमित्रं मित्रवन्तं च मित्रज्ञं मित्रवर्धनम् ।
मित्रधर्माणमित्येतान्देवानभ्यसृजत्ततः ॥ १२
सुरप्रवीरं वीरं च सुरेशं च सुवर्चसम् ।
सुराणामपि भर्तारं पञ्चैतानसृजत्ततः ॥ १३
त्रिविधं संस्थिता ह्येते पञ्चपञ्च पृथक्पृथक् ।
मुष्णन्त्यत्र स्थिता ह्येते स्वर्गतान्यज्ञयाजिनः ॥१४
तेषामिष्टं हरन्त्येते निघ्नन्ति च महद्भविः ।
स्पर्धया हव्यवाहानां निघ्नन्त्येते हरन्ति च ॥१५
बहिर्वेद्यां तदादानं कुशलैः संप्रवर्तितम् ।
तत्रैते नोपसर्पन्ति यत्र चाग्निः स्थितो भवेत् ॥१६
चितोऽग्निरुद्वहन्यज्ञं पक्षाभ्यां तान्प्रबाधते ।
मन्त्रैः प्रशमिता ह्येते नेष्टं मुष्णन्ति यज्ञियम् ॥ १७
तपस्ये बृहदुक्थस्य पुत्रो भूमिमुपाश्रितः ।
अग्निहोत्रे हूयमाने पृथिव्यां सद्भिरीड्यते ॥ १८
रथन्तरश्च तपसः पुत्रोऽग्निः परिपठ्यते ।
मित्रविन्दा तथा भार्या हविरध्वर्यवो विदुः ॥१९
'एतैः सह महाभाग तपस्तेजस्विभिर्नृप ।'
मुमुदे परमप्रीतः सह पुत्रैर्महायशाः ॥ २०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥

## त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥

मार्कण्डेयेन युधिष्ठिरंप्रति विस्तरेणाग्नीनां वंशकथनम् ॥ १ ॥

मार्कण्डेय उवाच ।
गुरुभिर्नियमैर्युक्तो भरतो नाम पार्थिव ।
अग्निः पुष्टिमतिर्नाम तुष्टः पुष्टिं प्रयच्छति ।
भरत्येष प्रजाः सर्वास्ततो भरत उच्यते ॥ १
'सततं भरतश्रेष्ठ पावकोयं महाप्रभः ।'
अग्निर्यश्च शिवो नाम शक्तिपूजायनिश्च सः ।
दुःखार्तानां स सर्वेषां शिवकृत्सततं शिवः ॥ २
तपसस्तु फलं दृष्ट्वा संप्रवृत्तं तपोमयम् ।
उद्धर्तुकामो मतिमान्पुत्रो जज्ञे पुरंदरः ॥ ३
उष्मा चैवोष्मणो जज्ञे सोऽग्निर्भूतेषु लक्ष्यते ।
अग्निश्चापि मनुर्नाम प्राजापत्यं सकारणम् ॥ ४
शंभुमग्निमथ प्राहुर्ब्राह्मणा वेदपारगाः ।
आवसथ्यं द्विजाः प्राहुर्दीप्तमग्निं महाप्रभम् ॥ ५
ऊर्जस्करान्हव्यवाहान्सुवर्णसदृशप्रभान् ।
अग्निस्तपो ह्यजनयत्पञ्च यज्ञसुतानिह ॥ ६
प्रततोऽग्निर्महाभाग परिश्रान्तो गवांपतिः ।
असुराञ्जनयन्घोरान्मर्त्यांश्चैव पृथग्विधान् ॥ ७

काश्यप इति त्रयाणां संबन्धः । अत्र पाठक्रमादर्थक्रमस्य बलीयस्त्वात् आद्ययोः श्लोकयोर्व्यत्यासेनार्थो ग्राह्यः । अचर-
दिति ॥ २ ॥ द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥

तपसश्च मनुं पुत्रं भानुं चाप्यङ्गिराः सृजत् ।
बृहद्भानुं तु तं प्राहुर्ब्राह्मणा वेदपारगाः ॥ ८
भानोर्भार्या महाराज बृहद्भासा तु सोमजा ।
षट्पुत्राञ्जनयामास तदा सा कन्यया सह ।
भानोराङ्गिरसस्याथ शृणु तस्य प्रजाविधिम् ॥ ९
दुर्बलानां तु भूतानामसून्यः संप्रयच्छति ।
तमग्निं बलदं प्राहुः प्रथमं भानुजं सुतम् ॥ १०
यः प्रशान्तेषु भूतेषु मन्युर्भवति दारुणः ।
अग्निः स मन्युमान्नाम द्वितीयो भानुजः सुतः ॥
दर्शे च पौर्णमासे च यस्येह हविरुच्यते ।
विष्णुर्नामेह योऽग्निस्तु धृतिमान्नाम सोङ्गिराः१२
इन्द्रेण सहितं यस्य हविराग्रयणं स्मृतम् ।
अग्निराग्रयणो नाम भानोरेवान्वयस्तु सः ॥ १३
चातुर्मास्येषु नित्यानां हविषां यो निरग्रहः ।
चतुर्भिः सहितः पुत्रैर्भानोरेवान्वयस्तु सः ॥ १४
निशां त्वजनयत्कन्यामग्नीषोमावुभौ तथा ।
मनोरेवाभवद्भार्या सुषुवे पञ्च पावकान् ॥ १५
पूज्यते हविषा योऽग्रे चातुर्मास्येषु पावकः ।
पर्जन्यसहितः श्रीमानग्निर्वैश्वानरस्तु सः ॥ १६
अस्य लोकस्य सर्वस्य यः प्रभुः परिपठ्यते ।
सोऽग्निर्विश्वपतिर्नाम द्वितीयस्तापसः सुतः ॥१७
कन्या या हरिणी नाम हिरण्यकशिपोः सुता १८
कर्मणाऽसौ बभौ भार्या स वह्निः स प्रजापतिः ।
प्राणानाश्रित्य यो देहं प्रवर्तयति देहिनाम् ।
तस्य सन्निहितो नाम शब्दरूपस्य साधनः ॥१९
शुक्लं कृष्णं वपुर्देवो यो बिभर्ति हुताशनः ।
अकल्मषः कल्मषाणां कर्ता क्रोधाश्रितस्तु सः२०
कपिलं परमर्षिं च यं प्राहुर्यतयः सदा ।
अग्निः स कपिलो नाम साङ्ख्ययोगप्रवर्तकः ॥२१
योऽन्तर्यच्छति भूतानि येन चेष्टन्ति नित्यदा ।
कर्मस्विह विचित्रेषु सोऽग्रणीर्वह्निरुच्यते ॥ २२
इमामन्यान्समसृजत्पावकान्प्रथितौजसः ।
अग्निहोत्रस्य दुष्टस्य प्रायश्चित्तार्थमुल्बणान् ॥ २३
संस्पृशेयुर्यदाऽन्योन्यं कथंचिद्वायुनाऽग्नयः ।
इष्टिरष्टाकपालेन कार्या वै शुचयेऽग्नये ॥ २४
दक्षिणाग्निर्यदा द्वाभ्यां संसृजेत तदा किल ।
इष्टिरष्टाकपालेन कार्या वै वीतयेऽग्नये ॥ २५
यद्यग्नयो हि स्पृश्येयुर्निवेशस्था दवाग्निना ।
इष्टिरष्टाकपालेन कार्या तु शुचयेऽग्नये ॥ २६
अग्निं रजस्वला वै स्त्री संस्पृशेदाग्निहौत्रिकम् ।
इष्टिरष्टाकपालेन कार्या वसुमतेऽग्नये ॥ २७
मृतः श्रूयेत यो जीवन्परासुरशुचिर्यथा ।
इष्टिरष्टाकपालेन कार्या सुरभिमतेऽग्नये ॥ २८
आर्तो न जुहुयादग्निं त्रिरात्रं यस्तु ब्राह्मणः ।
इष्टिरष्टाकपालेन कार्या तन्तुमतेऽग्नये ॥ २९
दर्शश्च पौर्णमासश्च यस्य तिष्ठेत्प्रतिष्ठितम् ।
इष्टिरष्टाकपालेन कार्या पथिकृतेऽग्नये ॥ ३०
सूतिकाग्निर्यदा चाग्निं संस्पृशेदाग्निहौत्रिकम् ।
इष्टिरष्टाकपालेन कार्या चाग्निमतेऽग्नये ॥ ३१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥

## चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥

मार्कण्डेयेन युधिष्ठिरंप्रत्यग्निवंशादिकीर्तनम् ॥ १ ॥

मार्कण्डेय उवाच ।
आपस्य मुदिता भार्या सा चास्य परमाप्रिया ।
भूपतिं भूतकर्तारं जनयामास पावकम् ॥ १
भूतानां साऽपि सर्वेषां यं प्राहुः पावकं पतिम् ।

भानोर्भार्या सुप्रजा तु बृहद्भासा तु सूर्यजा इति झ. पाठः ॥ ९ ॥ भानोरेवान्वयस्तुमः इति झ. पाठः ॥ १४ ॥ कन्या सा रोहिणी इति झ. पाठः ॥ १८ ॥ शुक्लकृष्णगतिर्देवो यो बिभर्ति हुताशनं इति झ. पाठः ॥ २० ॥ त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥

आत्मा भुवनकर्ता च सोऽध्वरेषु द्विजातिभिः ॥ २
महतां चैव भूतानां सर्वेषामिह यः पतिः ।
भगवान्स महातेजा नित्यं चरति पावकः ॥ ३
अग्निर्गृहपतिर्नाम नित्यं यज्ञेषु पूज्यते ।
आज्यं वहति यो हव्यं सर्वलोकस्य पावकः ॥ ४
अपांगर्भो महाभागः सत्वभुग्यो महाद्भुतः ।
भूपतिर्भूतकर्ता च महतः पतिरुच्यते ॥ ५
मृता वहन्तो हव्यानि तस्याग्नेरग्रजाऽभवन् ।
अग्निष्टोमस्तु नियतः क्रतुश्रेष्ठो भवत्युत ॥ ६
[स वह्निः प्रथमो नित्यं देवैरन्विष्यते प्रभुः ।]
आयान्तं नियतं दृष्ट्वा प्रविवेशार्णवं भयात् ॥ ७
देवास्तं नाधिगच्छन्ति मार्गमाणा यथातथम् ।
दृष्ट्वा त्वग्निरथर्वाणं ततो वचनमब्रवीत् ॥ ८
देवानां वह हव्यं त्वमहं वीर सुदुर्बलः ।
अथ त्वं गच्छ मध्वक्षं प्रियमेतत्कुरुष्व मे ॥ ९
प्रेष्य चाग्निरथर्वाणमन्यं देशं ततोऽगमत् ।
मत्स्यास्तस्य समाचख्युः क्रुद्धस्तानग्निरब्रवीत् ।
भक्ष्या वै विविधैर्भावैर्भविष्यथ शरीरिणाम् ॥१०
अथर्वाणं तथा चापि हव्यवाहोऽब्रवीद्वचः ॥११
अनुनीयमानो हि भृशं देववाक्यान्वितेन सः ।
नैच्छद्वोढुं हविः सर्वं शरीरं चापि सोऽत्यजत् १२
स तच्छरीरं संत्यज्य प्रविवेश धरां तदा ।
भूमिं स्पृष्ट्वाऽसृजद्धातून्पृथक्पृथगतीव हि ॥ १३
आस्यात्सुगन्धं तेजश्च अस्थिभ्यो देवदारु च ।
श्लेष्मणः स्फाटिकं तस्य पित्तान्मारकतं तथा १४
वातात्कृष्णायसं तस्य त्रिभिरेतैर्बहु प्रजाः ।
त्वचस्तस्याभ्रपटलं स्नायुजं चापि विद्रुमम् ॥१५
शरीरास्थिविधाश्चान्ये धातवोऽस्याभवन्नृप ।
एवं कृत्वा शरीरं च परमे तपसि स्थितः ॥ १६
भृग्वङ्गिरादिभिर्भूयस्तपसोत्थापितस्तदा ।
भृशं जज्वाल तेजस्वी तपसाऽऽप्यायितः शिखी॥
दृष्ट्वा ऋषीन्भयाच्चापि प्रविवेश महार्णवम् ।
तस्मिन्नष्टे जगद्भीतमथर्वाणमथाश्रितम् ।
अर्चयामासुरेवैनमथर्वाणं सुरादयः ॥ १८
अथर्वाणं श्रितॉंल्लोकानात्मन्यालोच्य पावकः ।
मिषतां सर्वभूतानामुन्ममज्ज महार्णवात् ॥ १९
एवमग्निर्भगवता नष्टः पूर्वमथर्वणा ।
आहूतः सर्वभूतानां हव्यं वहति सर्वदा ॥ २०
एवं त्वजनयद्धिष्ण्यान्वेदोक्तान्विबुधान्बहून् ।
विचरन्विविधान्देशान्भ्रममाणस्तु तत्र वै ॥ २१
सिन्धुवर्ज्याः पञ्च नद्यो देविकाऽथ सरस्वती ।
गङ्गा च शतकुम्भा च सरयू गण्डसाह्वया ॥ २२
चर्मण्वती मही चैव मेध्या मेधास्तिथिस्तदा ।
इरावती वेत्रवती नद्यतिस्रोऽथ कौशिकी ॥ २३
तमसा नर्मदा चैव नदी गोदावरी तथा ।
वेण्णा प्रवेणी भीमा च मरुदा चैव भारत ॥२४
भारती सुप्रयोगा च कावेरी मञ्जुरा तथा ।
तुङ्गवेणा कृष्णवेणा कपिला शोण एव च ॥ २५
एता नद्यस्तु धिष्ण्यानां मातरो याः प्रकीर्तिताः ॥
अद्भुतस्य प्रिया भार्या तस्याः पुत्रो विडूरथः ।
यावन्तः पावकाः प्रोक्ताः सोमास्तावन्त एव तु ॥
अत्रेश्चाप्यन्वये जाता ब्रह्मणो मानसाः प्रजाः ।
अत्रिः पुत्रान्स्रष्टुकामस्तानेवात्मन्यधारयत् ॥२८
तस्य तद्ब्रह्मणः कायान्निर्हरन्ति हुताशनाः ।
एवमेते महात्मानः कीर्तितास्तेऽग्नयो यथा ॥२९
अप्रमेया यथोत्पन्नाः श्रीमन्तस्तिमिरापहाः ।

---

अथर्वाणमङ्गिरसं तीव्रतपसं दृष्ट्वा ॥ ८ ॥ गच्छ मा द्वेषमिति ध. पाठः । मध्वक्षं पिङ्गाक्षमग्निम् । भावप्रधानो निर्देशः । तथाच निक्षिपाम्यहमग्नित्वं त्वमग्निः प्रथमो भवेत्युपक्रमस्योपसंहारेण सहैकवाक्यता भवति ॥ ९ ॥ प्रेष्य आदिश्य॥१०॥ तथाचापि तथैव मत्स्यैराख्यातोपि । वचस्त्वं मध्वक्षो भवेति पूर्वोक्तमेव ॥ ११ ॥ धातून् मनःशिलादीन् ॥ १३ ॥ यकृत्कृष्णायसं=त्रिभिरेव बभुः प्रजाः । नखास्तस्याभ्रपटलं शिराजालानि विद्रुमम् । इति झ. पाठः ॥ १५ ॥ शरीराद्विविधाश्चान्ये=एवं त्यक्त्वा शरीरं इति झ. पाठः । अन्ये स्वर्णपारदादयः ॥ १६ ॥ तपसा सामर्थ्येन । उत्थापितः समाधेश्च्यावितः ॥ १७ ॥ अथर्वा त्वसृजल्लोकानात्मना लोक्यपावकम् ।=उन्ममाथ महार्णवमिति झ. पाठः ॥ १९ ॥ एवंत्विति । अग्नेरङ्गिरास्ततो बृहस्पतिस्ततः शंय्वादिक्रमेण वेदोक्तान् धिष्ण्यान् नानास्थानानि अजनयत् ॥ २१ ॥ यावन्तः पावका धिष्ण्याः सन्ति तावन्तः सोमाः सोमयागाः ॥ २७ ॥

अद्भुतस्य तु माहात्म्यं यथा वेदेषु कीर्तितम् ॥३०
तादृशं विद्धि सर्वेषामेको ह्येषु हुताशनः ।
एक एवैष भगवान्विज्ञेयः प्रथमोऽङ्गिराः ॥ ३१
बहुधा निःसृतः कायाज्ज्योतिष्टोमः क्रतुर्यथा ।
इत्येष वंशः सुमहानग्नीनां कीर्तितो मया ।
पावको विविधैर्मन्त्रैर्हव्यं वहति देहिनाम् ॥ ३२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥

## पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥

मार्कण्डेयेन युधिष्ठिरंप्रति कुमारोत्पत्तिप्रकारकथनारम्भः ॥ १ ॥ देवसेनानां नायकसंपादनाय चिन्तयता इन्द्रेण मानसशैले कस्याश्चित्कन्याया अवलोकनम् तस्याः कुलचिकीर्षितादिप्रश्नश्च ॥ २ ॥

मार्कण्डेय उवाच ।
अग्नीनां विविधा वंशाः कीर्तितास्ते मयाऽनघ ।
शृणु जन्म तु कौरव्य कार्तिकेयस्य धीमतः ॥ १
अद्भुतस्याद्भुतं पुत्रं प्रवक्ष्याम्यमितौजसम् ।
जातं सप्तर्षिभार्याभिर्ब्रह्मण्यं कीर्तिवर्धनम् ॥ २
देवासुराः पुरा यत्ता विनिघ्नन्तः परस्परम् ।
तत्राजयन्सदा देवान्दानवा घोररूपिणः ॥ ३
वध्यमानं बलं दृष्ट्वा बहुशस्तैः पुरंदरः ।
स सैन्यनायकार्थाय चिन्तयामास वासवः ॥ ४
देवसेनां दानवैर्हि भग्नां दृष्ट्वा महाबलः ।
पालयेद्वीर्यमाश्रित्य स ज्ञेयः पुरुषो मया ॥ ५
स शैलं मानसं गत्वा ध्यायन्नर्थमिमं भृशम् ।
शुश्रावार्तस्वरं घोरमथ मुक्तं स्त्रिया तदा ॥ ६
अभिधावतु मां कश्चित्पुरुषस्त्रातु चैव ह ।
पतिं च मे प्रदिशतु स्वयं वा पतिरस्तु मे ॥ ७
पुरंदरस्तु तामाह मा भैर्नास्ति भयं तव ।
एवमुक्त्वा ततोऽपश्यत्केशिनं स्थितमग्रतः ॥ ८
किरीटिनं गदापाणिं धातुमन्तमिवाचलम् ।
हस्ते गृहीत्वा कन्यां तामथैनं वासवोऽब्रवीत् ॥९
अनार्यकर्मन्कस्मात्त्वमिमां कन्यां जिहीर्षसि ।
वज्रिणं मां विजानीहि विरमास्याः प्रबाधनात् ॥
केश्युवाच ।
विसृजस्व त्वमेवैनां शक्रैषा प्रार्थिता मया ।
क्षमं ते जीवतो गन्तुं स्वपुरं पाकशासन ॥ ११
एवमुक्त्वा गदां केशी चिक्षेपेन्द्रवधाय वै ।
तामापतन्तीं चिच्छेद मध्ये वज्रेण वासवः ॥१२
अथास्य शैलशिखरं केशी क्रुद्धो व्यवासृजत् ।
'महामेघप्रतीकाशं चलत्पावकसंकुलम् ॥ १३
तदापन्ततं संप्रेक्ष्य शैलशृङ्गं शतक्रतुः ।
बिभेद राजन्वज्रेण भुवि तन्निपपात ह ॥ १४
पतता तु तदा केशी तेन शृङ्गेण ताडितः ।
हित्वा कन्यां महाभागां प्राद्रवद्भृशपीडितः ॥१५
अपयातेऽसुरे तस्मिंस्तां कन्यां वासवोऽब्रवीत् ।
कासि कस्यासि किंचेह कुरुषे त्वं शुभानने ॥१६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः ॥ २२५ ॥

## षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥

कन्यया इन्द्रंप्रति स्वस्य दक्षपुत्रीत्वकथनपूर्वकं भर्तृकामनानिवेदनम् ॥ १ ॥ इन्द्रेण कन्याया उचितपतिं प्रार्थितेन ब्रह्मणा कन्याभर्तुरनतिचिरभावित्वकथनपूर्वकं तस्यैव तत्सेनापतीभवनकथनम् ॥ २ ॥ सप्तर्षिमखे तत्पत्नीनामवलोकनेन क्षुभितमनसाऽग्निना तासामलाभेन निर्वेदाद्वनंप्रति गमनम् ॥ ३ ॥ चिरेणाग्निकामया स्वाहयाऽत्रावसरे सप्तर्षिपत्नीसमानरूपस्वीकारेणाग्निवशीकरणनिर्धारणम् ॥ ४ ॥

कन्योवाच ।
अहं प्रजापतेः कन्या देवसेनेति विश्रुता ।

योर्चितो विविधैः इति झ. पाठः ॥ ३२ ॥ चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥

अद्भुतस्याग्नेः । अद्भुतं अभिवनम् ॥ २ ॥ स्त्रिया देवसेनाभिमानिदेवतया ॥६॥ पञ्चविंशत्यधिकद्विशततमोऽध्यायः २२५

भगिनी मे दैत्यसेना सा पूर्वं केशिना हृता ॥ १
सहैवावां भगिन्यौ तु सखीभिः सह मानसम् ।
आगच्छावो विहारार्थमनुज्ञाप्य प्रजापतिम् ॥ २
नित्यं चावां प्रार्थयते हर्तुं केशी महासुरः ।
इच्छत्येनं दैत्यसेना न चाहं पाकशासन ॥ ३
सा हृताऽनेन भगवन्मुक्ताऽहं त्वद्बलेन तु ।
त्वया देवेन्द्र निर्दिष्टं पतिमिच्छामि दुर्जयम् ॥४
इन्द्र उवाच ।
मम मातृष्वसेयी त्वं माता दाक्षायणी मम ।
आख्यातुं त्वहमिच्छामि स्वयमात्मबलं त्वया ॥५
कन्योवाच ।
अबलाऽहं महाबाहो पतिस्तु बलवान्मम ।
वरदानात्पितुर्भावी सुरासुरनमस्कृतः ॥ ६
इन्द्र उवाच ।
कीदृशं तु बलं देवि पत्युस्तव भविष्यति ।
एतदिच्छाम्यहं श्रोतुं तव वाक्यमनिन्दिते ॥ ७
कन्योवाच ।
देवदानवयक्षाणां किन्नरोरगरक्षसाम् ।
जेता यो दुष्टदैत्यानां महावीर्यो महाबलः ॥ ८
यस्तु सर्वाणि भूतानि त्वया सह विजेष्यति ।
स हि मे भविता भर्ता ब्रह्मण्यः कीर्तिवर्धनः ॥९
मार्कण्डेय उवाच ।
इन्द्रस्तस्या वचः श्रुत्वा दुःखितोऽचिन्तयद्भृशम् ।
अस्या देव्याः पतिर्नास्ति यादृशं संप्रभाषते ॥१०
अथापश्यत्स उदये भास्करं भास्करद्युतिः ।
सोमं चैव महाभागं प्रविशन्तं दिवाकरम् ॥ ११
अमावास्यां प्रवृत्तायां मुहूर्ते रौद्र एव तु ।
देवासुरं च संग्रामं सोऽपश्यदुदये गिरौ ॥ १२
लोहितैश्च घनैर्युक्तां पूर्वां संध्यां शतक्रतुः ।
अपश्यल्लोहितोदं च मघवान्वरुणालयम् ॥ १३
भृगुभिश्चाङ्गिरोभ्यश्च हुतं मन्त्रैः पृथग्विधैः ।
हव्यं गृहीत्वा वह्निं च प्रविशन्तं दिवाकरम् ॥१४
पर्व चैव चतुर्विंशं तदा सूर्यमुपस्थितम् ।
तथा सूर्यं वह्निगतं सोमं सूर्यगतं च तम् ॥ १५
समालोक्यैकतामेव शशिनो भास्करस्य च ।
समवायं तु तं रौद्रं दृष्ट्वा शक्रोऽन्वचिन्तयत् ॥१६
सूर्याचन्द्रमसोर्घोरं दृश्यते परिवेषणम् ।
एतस्मिन्नेव रात्र्यन्ते महद्युद्धं तु शंसति ॥ १७
सरित्सिन्धुरपीयं तु प्रत्यसृग्वाहिनी भृशम् ।
शृगालिन्यग्निवक्त्रा च प्रत्यादित्यं विराविणी ॥१८
एष रौद्रश्च संघातो महान्युक्तश्च तेजसा ।
सोमस्य वह्निसूर्याभ्यामद्भुतोऽयं समागमः ॥ १९
जनयेद्यं सुतं सोमः सोऽस्या देव्याः पतिर्भवेत् ।
अथानेकैर्गुणैश्चाग्निरग्निः सर्वाश्च देवताः ॥ २०
एष चेज्जनयेद्गर्भं सोऽस्या देव्याः पतिर्भवेत् ।
एवं संचिन्त्य भगवान्ब्रह्मलोकं तदा गतः ॥२१
गृहीत्वा देवसेनां तां ववन्दे स पितामहम् ।
उवाच चास्या देव्यास्त्वं साधु शूरं पतिं दिश ॥२२
ब्रह्मोवाच ।
यथैतच्चिन्तितं कार्यं त्वया दानवसूदन ।
तथा स भविता गर्भो बलवानुरुविक्रमः ॥ २३
स भविष्यति सेनानीस्त्वया सह शतक्रतो ।
अस्या देव्याः पतिश्चैव स भविष्यति वीर्यवान् २४
एतच्छ्रुत्वा नमस्तस्मै कृत्वाऽसौ सह कन्यया ।
तत्राभ्यगच्छद्देवेन्द्रो यत्र सप्तर्षयोऽभवन् ॥ २५
वसिष्ठप्रमुखा मुख्या विप्रेन्द्राः सुमहाप्रभाः ।
भागार्थं तपसोपात्तं तेषां सोमं तथाऽध्वरे ॥२६
पिपासवो ययुर्देवाः शतक्रतुपुरोगमाः ।
इष्टिं कृत्वा यथान्यायं सुसमिद्धे हुताशने ॥ २७
जुहुवुस्ते महात्मानो हव्यं सर्वदिवौकसाम् ।
समाहूतो हुतवहः सोऽद्भुतः सूर्यमण्डलात् ॥२८
विनिःसृत्य ययौ वह्निः पार्श्वतो विधिवत्प्रभुः ।
आगम्याहवनीयं वै तैर्द्विजैर्मन्त्रतो हुतम् ॥ २९
स तत्र विविधं हव्यं प्रतिगृह्य हुताशनः ।
ऋषिभ्यो भरतश्रेष्ठ प्रायच्छत दिवौकसाम् ॥३०
निष्क्रामंश्चाप्यपश्यत्स पत्नीस्तेषां महात्मनाम् ।

षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥

अप्यमावस्यमावासी चामामास्यप्यमामसीति शब्दार्णवः ॥ १२ ॥ अग्निश्च तैर्गुणैर्युक्तः सर्वैरग्निश्च देवतेति झ. पाठः ॥२०॥

खेष्वासनेषूपविष्टाः स्नायन्तीश्च यथासुखम् ॥३१
रुक्मवेदिनिभास्तास्तु चन्द्रलेखा इवामलाः ।
हुताशनार्चिःप्रतिमाः सर्वास्तारा इवाद्भुताः॥३२
स तत्र तेन मनसा बभूव क्षुभितेन्द्रियः ।
पत्नीर्दृष्ट्वा द्विजेन्द्राणां वह्निः कामवशं ययौ ॥ ३३
भूयः संचिन्तयामास न न्याय्यं क्षुभितो ह्यहम् ।
साध्व्यः पत्न्यो द्विजेन्द्राणामकामाः कामयाम्यहम्
नैताः शक्या मया द्रष्टुं स्प्रष्टुं वाऽप्यनिमित्ततः ।
गार्हपत्यं समाविश्य तस्मात्पश्याम्यभीक्ष्णशः ३५
मार्कण्डेय उवाच ।
संस्पृशन्निव सर्वास्ताः शिखाभिः काञ्चनप्रभाः ।
पश्यमानश्च मुमुदे गार्हपत्यं समाश्रितः ॥ ३६
निरुष्य तत्र सुचिरमेवं वह्निर्वनं गतः ।
मनस्तासु विनिक्षिप्य कामयानो वराङ्गनाः ॥ ३७
कामसंतप्तहृदयो देहत्यागे विनिश्चितः ।
अलाभे ब्राह्मणस्त्रीणामग्निर्वनमुपागमत् ॥ ३८
स्वाहा तं दक्षदुहिता प्रथमाऽकामयत्तदा ।
सा तस्य च्छिद्रमन्वैच्छच्चिरात्प्रभृति भामिनी ।
अप्रमत्तस्य देवस्य न च पश्यत्यनिन्दिता ॥ ३९
सा तं ज्ञात्वा यथावत्तु वह्निं वनमुपागतम् ।
तत्त्वतः कामसंतप्तं चिन्तयामास भामिनी ॥४०
अहं सप्तर्षिपत्नीनां कृत्वा रूपाणि पावकम् ।
कामयिष्यामि कामार्तं तासां रूपेण मोहितम् ।
एवं कृते प्रीतिरस्य कामावाप्तिश्च मे भवेत् ॥४१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥

## सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥

स्वाहयाऽरुन्धतीवर्जं सप्तर्षिपत्नीसारूप्येणाग्निना सह रमणम् ॥ १ ॥ ततो गारुडरूपस्वीकारेणाग्निरेतसां श्वेतपर्वतस्थ-काञ्चनकुण्डे प्रक्षेपणम् ॥ २ ॥ स्कन्नात्तद्रेतसः षण्मुखस्य संभवः ॥ ३ ॥ ततस्तेन बाणैः क्रौञ्चगिरिविदारणपूर्वकं शक्त्या श्वेतगिरिशिखरविभेदनम् ॥ ४ ॥

मार्कण्डेय उवाच ।
शिवा भार्या त्वङ्गिरसः शीलरूपगुणान्विता ।
तस्याः सा प्रथमं रूपं कृत्वा देवी जनाधिप ॥१
जगाम पावकाभ्याशं तं चोवाच वराङ्गना ।
मामग्ने कामसंतप्तां त्वं कामयितुमर्हसि ॥ २
करिष्यसि न चेदेवं मृतां मामुपधारय ।
'तवाप्यधर्मः सुमहान्भविता वै हुताशन ॥' ३
अहमङ्गिरसो भार्या शिवा नाम हुताशन ।
सखीभिः सहिता प्राप्ता मन्त्रयित्वा विनिश्चयम् ४
अग्निरुवाच ।
कथं मां त्वं विजानीषे कामार्तमितराः कथम् ।
यास्त्वया कीर्तिताः सर्वाः सप्तर्षीणां प्रियाःस्त्रियः५
शिवोवाच ।
अस्माकं त्वं प्रियो नित्यं बिभीमस्तु वयं तव ।
त्वच्चित्तमिङ्गितैर्ज्ञात्वा प्रेषिताऽस्मि तवान्तिकम् ६
मैथुनायेह संप्राप्ता कामाच्चैव द्रुतं च माम् ।
'उपयन्तुं महावीर्य पूर्वमेव त्वमर्हसि ।'
[जामयो मां प्रतीक्षन्ते गमिष्यामि हुताशन ॥] ७
मार्कण्डेय उवाच ।
ततोऽग्निरुपयेमे तां शिवां प्रीतिमुदायुतः ।
प्रीत्या देवी समायुक्ता शुक्रं जग्राह पाणिना ॥८
साऽचिन्तयन्ममेदं ये रूपं द्रक्ष्यन्ति कानने ।
ते ब्राह्मणीनामनृतं दोषं वक्ष्यन्ति पावके ॥ ९
तस्मादेतद्रक्षमाणा गरुडी संभवाम्यहम् ।
वनान्निर्गमनं चैव सुखं मम भविष्यति ॥ १०
मार्कण्डेय उवाच ।
सुपर्णी सा तदा भूत्वा निर्जगाम महावनात् ।
अपश्यत्पर्वतं श्वेतं शरस्तम्बैः सुसंवृतम् ॥ ११

शिष्टाभिः प्रहिता प्राप्तेति झ. पाठः ॥ ४ ॥ ते ब्राह्मणीना-महितमिति झ. थ. पाठः ॥ ९ ॥

सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥

दृष्टीविषैः सप्तशीर्षैर्गुप्तं भोगिभिरद्भुतैः ।
रक्षोभिश्च पिशाचैश्च रौद्रैर्भूतगणैस्तथा ॥ १२
राक्षसीभिश्च संपूर्णमनेकैश्च मृगद्विजैः ।
'नदीप्रस्रवणोपेतं नानातरुलताचितम् ॥' १३
सा तत्र सहसा गत्वा शैलपृष्ठं सुदुर्गमम् ।
प्राक्षिपत्काञ्चने कुण्डे शुक्रं सा त्वरिता शुभा १४
शिष्टानामपि सा देवी सप्तर्षीणां महात्मनाम् ।
पत्नीसरूपतां कृत्वा रमयामास पावकम् ॥ १५
दिव्यरूपमरुन्धत्याः कर्तुं न शकितं तया ।
तस्यास्तपःप्रभावेण भर्तृशुश्रूषणेन च ॥ १६
षट्कृत्वस्तत्तु निक्षिप्तमग्ने रेतः कुरूत्तम ।
तस्मिन्कुण्डे प्रतिपदि कामिन्या स्वाहया तदा १७
तत्स्कन्नं तेजसा तत्र संवृतं जनयत्सुतम् ।
ऋषिभिः पूजितं स्कन्नमनयन्स्कन्दतां ततः ॥१८
षट्शिरा द्विगुणश्रोत्रो द्वादशाक्षिभुजक्रमः ।
एकग्रीवस्त्वेककायः कुमारः समपद्यत ॥ १९
द्वितीयायामभिव्यक्तस्तृतीयायां शिशुर्बभौ ।
अङ्गप्रत्यङ्गसंभूतश्चतुर्थ्यामभवद्गुहः ॥ २०
लोहिताभ्रेण महता संवृतः सह विद्युता ।
लोहिताभ्रे सुमहति भाति सूर्य इवोदितः ॥ २१
गृहीतं तु धनुस्तेन विपुलं रोमहर्षणम् ।
न्यस्तं यत्त्रिपुरघ्नेन सुरारिविनिकृन्तनम् ॥ २२
तद्गृहीत्वा धनुःश्रेष्ठं ननाद बलवांस्तदा ।
संमोहयन्निमाँल्लोकान्गुहस्त्रीन्सचराचरान् ॥ २३
तस्य तं निनदं श्रुत्वा महामेघौघनिःस्वनम् ।
उत्पेततुर्महानागौ चित्रश्चैरावतश्च ह ॥ २४
तावापतन्तौ संप्रेक्ष्य स बालोऽर्कसमद्युतिः ।
द्वाभ्यां गृहीत्वा पाणिभ्यां शक्तिं चान्येन पाणिना
अपरेणाग्निदायादस्ताम्रचूडं भुजेन सः ।
महाकायमुपश्लिष्टं कुक्कुटं बलिनां वरम् ।
गृहीत्वा व्यनदद्भीमं चिक्रीड च महाभुजः ॥२६
द्वाभ्यां भुजाभ्यां बलवान्गृहीत्वा शङ्खमुत्तमम् ।
प्राध्मापयत भूतानां त्रासनं बलिनामपि ।
द्वाभ्यां भुजाभ्यामाकाशं बहुशो निजघान ह २७
क्रीडन्भाति महासेनस्त्रींल्लोकान्वदनैः पिबन् ।
पर्वताग्रेऽप्रमेयात्मा रश्मिमानुदये यथा ॥ २८
स तस्य पर्वतस्याग्रे निषण्णोऽद्भुतविक्रमः ।
व्यलोकयदमेयात्मा मुखैर्नानाविधैर्दिशः ॥ २९
स पश्यन्विविधान्भावांश्चकार निनदं पुनः ।
तस्य तं निनदं श्रुत्वा न्यपतन्बहुधा जनाः ।
भीताश्चोद्विग्नमनसस्तमेव शरणं ययुः ॥ ३०
ये तु तं संश्रिता देवं नानावर्णास्तदा जनाः ।
तानप्याहुः पारिषदान्ब्राह्मणाः सुमहाबलान् ३१
स तूत्थाय महाबाहुरुपसान्त्व्य च ताञ्जनान् ।
धनुर्विकृष्य व्यसृजद्बाणाञ्श्वेते महागिरौ ॥ ३२
बिभेद स शरैः शैलं क्रौञ्चं हिमवतः सुतम् ।
तेन हंसाश्च गृध्राश्च मेरुं गच्छन्ति पर्वतम् ॥ ३३
स विशीर्णोऽपतच्छैलो भृशमार्तस्वरान्रुवन् ॥ ३४
तस्मिन्निपतिते त्वन्ये नेदुः शैला भृशं भयात् ।
'घोरमार्तस्वरं चक्रुर्दृष्ट्वा क्रौञ्चं विदारितम् ॥'३५
स तं नादं भृशार्तानां श्रुत्वाऽपि बलिनांवरः ।
न प्राव्यथदमेयात्मा शक्तिमुद्यम्य चानदत् ॥३६
सा तदा विमला शक्तिः क्षिप्ता तेन महात्मना ।
बिभेद शिखरं घोरं श्वेतस्य तरसा गिरेः ॥ ३७
स तेनाभिहतो दीर्णो गिरिः श्वेतोऽचलैः सह ।
पलायत महीं त्यक्त्वा भीतस्तस्मान्महात्मनः ३८
ततः प्रव्यथिता भूमिर्व्यशीर्यत समन्ततः ।
आर्ता स्कन्दं समासाद्य पुनर्बलवती बभौ ॥३९
पर्वताश्च नमस्कृत्य तमेव पृथिवीं गताः ।
अथैनमभजल्लोकः स्कन्दं शुक्लस्य पञ्चमीम् ॥४०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥

## अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥

षड्षिभिर्लोकापवादभयात्स्वपत्नीनां परित्यागः ॥ १ ॥ विश्वामित्रेण कुमारस्य जातकर्मादिना संस्करणम् ॥ २ ॥ स्कन्दपराक्रमासहिष्णुना शक्रेण स्कन्देन सहाऽऽयोधनम् ॥ ३ ॥ इन्द्रवज्राभिहतात्स्कन्दस्य दक्षिणपार्श्वाद्विशाखस्य तथा कुमाराणां कन्यानां च समुद्भवः ॥ ४ ॥ स्कन्दाङ्गीतेनेन्द्रेण तेन सह संधानम् ॥ ५ ॥

मार्कण्डेय उवाच ।
तस्मिञ्जाते महासत्त्वे महासेने महाबले ।
समुत्तस्थुर्महोत्पाता घोररूपाः पृथग्विधाः ॥ १
स्त्रीपुंसोर्विपरीतं च तथा द्वन्द्वानि यानि च ।
ग्रहा दीप्ता दिशः खं च ररास च मही भृशम् ॥२
ऋषयश्च महाघोरान्दृष्ट्वोत्पातान्समन्ततः ।
अकुर्वञ्शान्तिमुद्विग्ना लोकानां लोकभावनाः ॥३
निवसन्ति वने ये तु तस्मिंश्चैत्ररथे जनाः ।
तेऽब्रुवन्नेष नोऽनर्थः पावकेनाहृतो महान् ।
संगम्य षड्भिः पत्नीभिः सप्तर्षीणामिति स ह ॥४
अपरे गरुडीमाहुस्त्वयाऽनर्थोऽयमाहृतः ।
यैर्दृष्टा सा तदा देवी तस्या रूपेण गच्छती ॥ ५
न तु तत्स्वाहया कर्म कृतं जानाति वै जनः ॥६
सुपर्णी तु वचः श्रुत्वा ममायं तनयस्त्विति ।
उपगम्य शनैः स्कन्दमाहाहं जननी तव ॥ ७
अथ सप्तर्षयः श्रुत्वा जातं पुत्रं महौजसम् ।
तत्यजुः षट् तदा पत्नीर्विना देवीमरुन्धतीम् ।
षड्भिरेव तदा जातमाहुस्तद्वनवासिनः ॥ ८
सप्तर्षीनाह च स्वाहा मम पुत्रोऽयमित्युत ।
अहं हेतुर्नैतदेवमिति राजन्पुनः पुनः ॥ ९
विश्वामित्रस्तु कृत्वेष्टिं सप्तर्षीणां महामुनिः ।
पावकं कामसंतप्तमदृष्टः पृष्ठतोऽन्वगात् ।
तत्तेन निखिलं सर्वमवबुध्य यथातथम् ॥ १०
विश्वामित्रस्तु प्रथमं कुमारं शरणं गतः ।
स्तवं दिव्यं संप्रचक्रे महासेनस्य चापि सः ॥११
मङ्गलानि च सर्वाणि कौमाराणि त्रयोदश ।
जातकर्मादिकास्तस्य क्रियाश्चक्रे महामुनिः ॥१२
षड्वक्त्रस्य तु माहात्म्यं कुक्कुटस्य तु साधनम् ।
शक्त्या देव्याः साधनं च तथा पारिषदामपि॥१३
विश्वामित्रश्चकारैतत्कर्म लोकहिताय वै ।
तस्मादृषिः कुमारस्य विश्वामित्रोऽभवत्प्रियः ॥१४
अन्वजानाच्च स्वाहाया रूपान्यत्वं महामुनिः ।
अब्रवीच्च मुनीन्सर्वान्नापराध्यन्ति वै स्त्रियः ।
श्रुत्वा तु तत्वतस्तस्मात्ते पत्नीः सर्वतोत्यजन् ॥१५
मार्कण्डेय उवाच ।
स्कन्दं श्रुत्वा तदा देवा वासवं सहिताऽब्रुवन् ।
अविषह्यं बलं स्कन्दं जहि शक्राशु माचिरम् ॥१६
यदि वा न निहंस्येनमद्येन्द्रोऽयं भविष्यति ।
त्रैलोक्यं सन्निगृह्यास्मांस्त्वां च शक्र महाबल॥१७
स तानुवाच व्यथितो बालोऽयं सुमहाबलः ।
स्रष्टारमपि लोकानां युधि विक्रम्य नाशयेत् ।
[न बालमुत्सहे हन्तुमिति शक्रः प्रभाषते ॥ १८
तेऽब्रुवन्नास्ति ते वीर्यं यत एवं प्रभाषसे ।]
सर्वास्त्वद्याभिगच्छन्तु स्कन्दं लोकस्य मातरः १९
कामवीर्या घ्नन्तु चैनं तथेत्युक्त्वा च ता ययुः ।
तमप्रतिबलं दृष्ट्वा विषण्णवदनास्तु ताः ॥ २०
अशक्योऽयं विचिन्त्यैवं तमेव शरणं ययुः ।
ऊचुश्चैनं त्वमस्माकं पुत्रोऽस्माभिर्धृतं जगत् ॥२१
अभिनन्द्य ततः सर्वाः प्रस्नुताः स्नेहविक्लबाः ।
[तासां तद्वचनं श्रुत्वा पातुकामः स्तनान्प्रभुः२२]
ताः संपूज्य महासेनः कामांश्चासां प्रदाय सः ।
अपश्यदग्निमायान्तं पितरं बलिनां बली ॥ २३
स तु संपूजितस्तेन सह मातृगणेन ह ।
परिवार्य महासेनं रक्षमाणः स्थितः शिवः ॥ २४
सर्वासां या तु मातृणां नारी क्रोधसमुद्भवा ।
धात्री स्वपुत्रवत्स्कन्दं शूलहस्ताऽभ्यरक्षत ॥ २५

---

विपरीतं वैरम् । द्वन्द्वानि अतिशीतात्युष्णादीनि ॥ २ ॥ श्रुत्वा तु श्रुत्वापि । सर्वतः लोकापवादभयाद्ग्रामवत्पत्नीस्त्यक्तवन्त इत्यर्थः । अथाब्रवीत्तान्सप्तर्षीन्युष्मत्पत्नीष्वयं शिशुः । षट्सु जातो हुतवहात्ते चाग्नेस्त्वग्रतोत्यजन् । इति ध. पाठः ॥ १५ ॥

लोहितस्योदधेः कन्या क्रूरा लोहितभोजना ।
परिष्वज्य महासेनं पुत्रवत्पर्यरक्षत ॥ २६
अग्निर्भूत्वा नैगमेयश्छागवक्त्रो बहुप्रजः ।
रमयामास शैलस्थं बालं क्रीडनकैरिव ॥ २७
ग्रहाः सोपग्रहाश्चैव ऋषयो मातरस्तथा ।
हुताशनमुखाश्चैव दृप्ताः पारिषदां गणाः ॥ २८
एते चान्ये च बहवो घोरास्त्रिदिववासिनः ।
परिवार्य महासेनं स्थिता मातृगणैः सह ॥ २९
संदिग्धं विजयं दृष्ट्वा विजयेप्सुः सुरेश्वरः ।
आरुह्यैरावतस्कन्धं प्रययौ दैवतैः सह ॥ ३०
आदाय वज्रं बलवान्सर्वैर्देवगणैर्वृतः ।
विजिघांसुर्महासेनमिन्द्रस्तूर्णतरं ययौ ॥ ३१
'इन्द्रस्तस्य महावेगं दृष्ट्वाऽद्भुतपराक्रमम् ।
विस्मितश्चाभवद्राजन्देवानीकमचोदयत् ॥ ३२
उग्रं तं च महानादं देवानीकं महाप्रभम् ।
विचित्रध्वजसन्नाहं नानावाहनकार्मुकम् ॥' ३३
प्रवराम्बरसंवीतं श्रिया जुष्टमलंकृतम् ।
विजिघांसुं तमायान्तं कुमारः शक्रमन्वयात् ३४
वियत्पतिः स शक्रस्तु द्रुतमायान्महाबलः ।
संहर्षयन्देवसेनां जिघांसुः पावकात्मजम् ॥ ३५
संपूज्यमानस्त्रिदशैस्तथैव परमर्षिभिः ।
समीपमथ संप्राप्तो वह्निपुत्रस्य वासवः ॥ ३६
सिंहनादं ततश्चक्रे देवेशः सहितैः सुरैः ।
गुहोऽपि शब्दं तं श्रुत्वा व्यनदत्सागरो यथा ३७
तस्य शब्देन महता समुद्धूतोदधिप्रभम् ।
बभ्राम तत्रतत्रैव दैवसैन्यमचेतनम् ॥ ३८
जिघांसूनुपसंप्राप्तान्देवान्दृष्ट्वा स पावकिः ।
विससर्ज मुखात्क्रुद्धः प्रवृद्धाः पावकार्चिषः ॥३९
अदहद्देवसैन्यानि वेपमानानि भूतले ॥ ४०
ते प्रदीप्तशिरोदेहाः प्रदीप्तायुधवाहनाः ।
प्रच्युताः सहसा भान्ति चित्रास्तारागणा इव ४१
दह्यमानाः प्रपन्नास्ते शरणं पावकात्मजम् ।
देवा वज्रधरं त्यक्त्वा ततः शान्तिमुपागताः ४२
त्यक्तो देवैस्ततः स्कन्दे वज्रं शक्रो न्यपातयत् ॥
तद्विसृष्टं जघानाशु पार्श्वं स्कन्दस्य दक्षिणम् ।
बिभेद च महाराज पार्श्वं तस्य महात्मनः ॥४४
वज्रप्रहारात्स्कन्दस्य संजातः पुरुषोऽपरः ।
युवा काञ्चनसन्नाहः शक्तिधृग्दिव्यकुण्डलः ॥४५
यद्वज्रविशनाज्जातो विशाखस्तेन सोऽभवत् ॥४६
तं जातमपरं दृष्ट्वा कालानलसमद्युतिम् ।
भयादिन्द्रस्तु तं स्कन्दं प्राञ्जलिः शरणं गतः॥४७
तस्याभयं ददौ स्कन्दः सहसैन्यस्य सत्तम ।
ततः प्रहृष्टास्त्रिदशा वादित्राण्यभ्यवादयन् ॥ ४८
स्कन्दपारिषदान्घोराञ्छृणुष्वाद्भुतदर्शनान् ।
वज्रप्रहारात्स्कन्दस्य जज्ञुस्तत्र कुमारकाः ।
ये हरन्ति शिशूञ्जातान्गर्भस्थांश्चैव दारुणाः ॥४९
वज्रप्रहारात्कन्याश्च जज्ञिरेऽस्य महाबलाः ॥ ५०
कुमारान्स विशाखं च पुत्रत्वे समकल्पयत् ।
स भूत्वा भगवान्सङ्ख्ये रक्षंश्छागमुखस्तदा ॥५१
वृतः कन्यागणैः सर्वैरात्मीयैः सह पुत्रकैः ।
मातॄणां प्रेषितानां च भद्रशाखश्च कोमलैः ॥५२
ततः कुमारं संजातं स्कन्दमाहुर्जना भुवि ।
रुद्रमग्निमुखां स्वाहां प्रदेशेषु महाबलाः ॥ ५३
यजन्ति पुत्रकामाश्च पुत्रिणश्च सदा जनाः ।
यास्तास्त्वजनयत्कन्यास्तपो नाम हुताशनः ॥५४
किं करोमीति ताः स्कन्दं संप्राप्ताः समभाषयन् ॥
भवेम सर्वलोकस्य मातरो वयमुत्तमाः ।
प्रसादात्तव पूज्याश्च प्रियमेतत्कुरुष्व नः ॥ ५६
सोऽब्रवीद्बाढमित्येवं भविष्यध्वं पृथग्विधाः ।
शिवाश्चैवाशिवाश्चैव पुनःपुनरुदारधीः ॥ ५७
'अग्निर्भूत्वा ततश्चैनं छागवक्त्रो बहुप्रजः ।
रमयामास शैलस्थं बालं क्रीडनकैरिव ॥' ५८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥

---

वज्रस्य विशनात् बाहोराखननाच्च विशाख इत्यर्थः ॥ ४६ ॥ कुमारास्ते=पितृत्वे इति झ. पाठः ॥ ५१ ॥ ततः कुमारपितरमिति झ. पाठः ॥ ५३ ॥ अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥

## एकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥

मार्कण्डेयेन युधिष्ठिरंप्रति स्कन्दचरित्रप्रतिपादनम् ॥ १ ॥ इन्द्रेण स्कन्दस्य देवसैनापत्येऽभिषेचनम् ॥ २ ॥ स्कन्देनेन्द्रप्रार्थनया देवसेनाया उद्वहनम् ॥ ३ ॥

मार्कण्डेय उवाच ।
ततः प्रकल्प्य पुत्रत्वे स्कन्दं मातृगणोऽगमत् ।
काकी च हलिमा चैव माता चाथ हली तथा ।
आर्या बाला च धात्री च सप्तैताः शिशुमातरः ॥ १
एतासां वीर्यसंपन्नः शिशुर्नामातिदारुणः ।
स्कन्दप्रसादजः पुत्रो लोहिताक्षो भयंकरः ॥ २
एष वीरोऽष्टमः प्रोक्तः स्कन्दो मातृगणोद्भवः ।
छागवक्त्रेण सहितो नवमः परिकीर्त्यते ॥ ३
षष्ठं छागमयं वक्त्रं स्कन्दस्यैवेति विद्धि तम् ।
षट्शिरोभ्यन्तरं राजन्नित्यं मातृगणार्चितम् ॥ ४
षण्णां तु प्रवरं तस्य शीर्षाणामिह शब्द्यते ।
शक्तिं येनासृजद्दिव्यां भद्रशाख इति स ह ॥ ५
इत्येतद्विविधाकारं वृत्तं शुक्लस्य पञ्चमीम् ।
तत्र युद्धं महाघोरं वृत्तं षष्ठ्यां जनाधिप ॥ ६
उपविष्टं तु तं स्कन्दमामुक्तकवचस्रजम् ।
हिरण्यचूडमुकुटं हिरण्याक्षं महाप्रभम् ॥ ७
लोहिताम्बरसंवीतं तीक्ष्णदंष्ट्रं मनोरमम् ।
सर्वलक्षणसंपन्नं त्रैलोक्यस्यापि सुप्रियम् ॥ ८
ततस्तं वरदं शूरं युवानं मृष्टकुण्डलम् ।
अभजत्पद्मरूपा श्रीः स्वयमेव शरीरिणी ॥ ९
श्रिया जुष्टः पृथुयशाः स कुमारो वरस्तदा ।
निषण्णो दृश्यते भूतैः पौर्णमास्यां यथा शशी ॥
अपूजयन्महात्मानो ब्राह्मणास्तं महाबलम् ॥ ११
इदमाहुस्तदा चैव स्कन्दं तत्र महर्षयः ॥ १२
हिरण्यवर्ण भद्रं ते लोकानां शंकरो भव ।
त्वया षड्रात्रजातेन सर्वे लोका वशीकृताः ॥ १३
अभयं च पुनर्दत्तं त्वयैवैषां सुरोत्तम ।
तस्मादिन्द्रो भवानस्तु त्रैलोक्यस्याभयंकरः ॥ १४
स्कन्द उवाच ।
किमिन्द्रः सर्वलोकानां करोतीह तपोधनाः ।
कथं देवगणांश्चैव पाति नित्यं सुरेश्वरः ॥ १५

ऋषय ऊचुः ।
इन्द्रो दधाति भूतानां बलं तेजः प्रजाः सुखम् ।
तुष्टः प्रयच्छति तथा सर्वान्कामान्सुरेश्वरः ॥ १६
दुर्वृत्तानां संहरति व्रतस्थानां प्रयच्छति ।
अनुशास्ति च भूतानि कार्येषु बलसूदनः ॥ १७
असूर्ये च भवेत्सूर्यस्तथाऽचन्द्रे च चन्द्रमाः ।
भवत्यग्निश्च वायुश्च पृथिव्यापश्च खं तथा ॥ १८
एतदिन्द्रेण कर्तव्यमिन्द्रे हि विपुलं बलम् ।
त्वं च वीर बली श्रेष्ठस्तस्मादिन्द्रो भवस्व नः ॥ १९
शक्र उवाच ।
भवस्वेन्द्रो महाबाहो सर्वेषां नः सुखावहः ।
अभिषिच्यस्व चैवाद्य प्राप्तरूपोऽसि सत्तम ॥ २०
स्कन्द उवाच ।
शाधि त्वमेव त्रैलोक्यमव्यग्रो विजये रतः ।
अहं ते किंकरः शक्र न ममेन्द्रत्वमीप्सितम् ॥ २१
शक्र उवाच ।
बलं तवाद्भुतं वीर त्वं देवानामरीञ्जहि ।
अवज्ञास्यन्ति मां लोका वीर्येण तव विस्मिताः ॥
इन्द्रत्वे तु स्थितं वीर बलहीनं पराजितम् ।
'त्वत्तेजसाऽवमंस्यन्ति लोका मां सुरसत्तम ॥' २३
आवयोश्च मिथो भेदे प्रयतिष्यन्त्यतन्द्रिताः ।
भेदिते च त्वयि विभो लोको द्वैधमुपेष्यति ॥ २४
द्विधाभूतेषु लोकेषु निश्चितेष्वावयोस्तथा ।
विग्रहः संप्रवर्तेत भूतभेदान्महाबल ॥ २५
तत्र त्वं मां रणे तात यथाश्रद्धं विजेष्यसि ।
तस्मादिन्द्रो भवानेव भविता मा विचारय ॥ २६
स्कन्द उवाच ।
त्वमेव राजा भद्रं ते त्रैलोक्यस्य ममैव च ।
करोमि किं च ते शक्र शासनात्तद्ब्रवीहि मे २७

शासनं तद्ब्रवीहि इति झ. पाठः ॥ २७ ॥

इन्द्र उवाच ।
अहमिन्द्रो भविष्यामि तव वाक्यान्महाबल ।
यदि सत्यमिदं वाक्यं निश्चयाद्भाषितं त्वया २८
यदि वा शासनं स्कन्द कर्तुमिच्छसि मे शृणु ।
अभिषिच्यस्व देवानां सैनापत्ये महाबल ॥ २९
स्कन्द उवाच ।
दानवानां विनाशाय देवानामर्थसिद्धये ।
गोब्राह्मणहितार्थाय सैनापत्येऽभिषिश्च माम्॥३०
मार्कण्डेय उवाच ।
सोऽभिषिक्तो मघवता सर्वैर्देवगणैः सह ।
अतीव शुशुभे तत्र पूज्यमानो महर्षिभिः ॥ ३१
तत्र तत्काश्चनं छत्रं ध्रियमाणं व्यरोचत ।
तथैव सुसमिद्धस्य पावकस्यात्ममण्डलम् ॥ ३२
विश्वकर्मकृता चास्य दिव्या माला हिरण्मयी ।
आबद्धा त्रिपुरघ्नेन स्वयमेव यशस्विना ॥ ३३
आगम्य मनुजव्याघ्र सह देव्या परंतप ।
अर्चयामास सुप्रीतो भगवान्गोवृषध्वजः ॥ ३४
रुद्रमग्निं द्विजाः प्राहू रुद्रसूनुस्ततस्तु सः ।
'कीर्त्यते सुमहातेजाः कुमारोऽद्भुतदर्शनः ॥'३५
रुद्रेण शुक्रमुत्सृष्टं तच्छ्वेतः पर्वतोऽभवत् ।
पावकस्येन्द्रियं श्वेते कृत्तिकाभिः कृतं नगे ॥३६
पूज्यमानं तु रुद्रेण दृष्ट्वा सर्वे दिवौकसः ।
रुद्रसूनुं ततः प्राहुर्गुहं गुणवतांवरम् ॥ ३७
अनुप्रविश्य रुद्रेण वह्निं जातो ह्ययं शिशुः ।
तत्र जातस्ततः स्कन्दो रुद्रसूनुस्ततोऽभवत् ॥३८
रुद्रस्य वह्नेः स्वाहायाः षण्णां स्त्रीणां च तेजसा ।
जातः स्कन्दः सुरश्रेष्ठो रुद्रसूनुस्ततोऽभवत् ॥३९
अरजे वाससी रक्ते वसानः पावकात्मजः ।
भाति दीप्तवपुः श्रीमान्रक्ताभ्राभ्यामिवांशुमान् ॥
कुकुटश्चाग्निना दत्तस्तस्य केतुरलंकृतः ।
रथे समुच्छ्रितो भाति कालाग्निरिव लोहितः॥४१
या चेष्टा सर्वभूतानां प्रभा शक्तिर्बलं तथा ।
अग्रतस्तस्य सा शक्तिर्देवानां जयवर्धनी ॥ ४२
विवेश कवचं चास्य शरीरं सहजं तथा ।
युध्यमानस्य देवस्य प्रादुर्भवति तत्सदा ॥ ४३
शक्तिर्धर्मो बलं तेजः कान्तत्वं सत्यमुन्नतिः ।
ब्रह्मण्यत्वमसंमोहो भक्तानां परिरक्षणम् ॥ ४४
निकृन्तनं च शत्रूणां लोकानां चाभिरक्षणम् ।
स्कन्देन सह जातानि सर्वाण्येव जनाधिप ॥४५
एवं देवगणैः सर्वैः सोऽभिषिक्तः स्वलंकृतः ।
बभौ प्रतीतः सुमनाः परिपूर्णेन्दुदर्शनः ॥ ४६
इष्टैः स्वाध्यायघोषैश्च देवतूर्यवरैरपि ।
देवगन्धर्वगीतैश्च सर्वैरप्सरसां गणैः ॥ ४७
एतैश्चान्यैश्च बहुभिस्तुष्टैर्हृष्टैः स्वलंकृतः ।
[सुसंवृतः पिशाचानां गणैर्देवगणैस्तथा ।]
क्रीडन्भाति तदा देवैरभिषिक्तश्च पावकिः ॥४८
अभिषिक्तं महासेनमपश्यन्त दिवौकसः ।
विनिहत्य तमः सूर्यं यथैवाभ्युदितं तथा ॥ ४९
अथैनमभ्ययुः सर्वा देवसेनाः सहस्रशः ।
अस्माकं त्वं पतिरिति ब्रुवाणाः सर्वतो दिशः॥५०
ताः समासाद्य भगवान्सर्वभूतगणैर्वृतः ।
अर्चितस्तु स्तुतश्चैव सान्त्वयामास ता अपि ५१
शतक्रतुश्चाभिषिच्य स्कन्दं सेनापतिं तदा ।
सस्मार तां देवसेनां या सा तेन विमोक्षिता ५२
अयं तस्याः पतिर्नूनं विहितो ब्रह्मणा स्वयम् ।
संचिन्त्य त्वानयामास देवसेनां ह्यलंकृताम्॥५३
स्कन्दं प्रोवाच बलभिदियं कन्या सुरोत्तम ।
अजाते त्वयि निर्दिष्टा तव पत्नी स्वयंभुवा ॥५४
तस्मात्त्वमस्या विधिवत्पाणिं मन्त्रपुरस्कृतम् ।
गृहाण दक्षिणं देव्याः पाणिना पद्मवर्चसा ॥५५
एवमुक्तः स जग्राह तस्याः पाणिं यथाविधि ।
बृहस्पतिर्मन्त्रविद्धि जजाप च जुहाव च ॥ ५६
एवं स्कन्दस्य महिषीं देवसेनां विदुर्जनाः ।
षष्ठीं यां ब्राह्मणाः प्राहुर्लक्ष्मीमाशां सुखप्रदाम्॥

एकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥

रुद्रमग्निमिति । रुद्रो वा एष यदग्निरिति श्रुतिविदो द्विजाः प्राहुः ॥ ३५ ॥ अनुप्रविश्य स्थितेनेति शेषः ॥ ३८ ॥

सिनीवालीं कुहूं चैव सद्वृत्तिमपराजिताम् ।
'इत्येवमादिभिर्देवी नामभिः परिकीर्त्यते ।।' ५८
यदा स्कन्दः पतिर्लब्धः शाश्वतो देवसेनया ।
तदा तमाश्रयल्लक्ष्मीः स्वयं देवी शरीरिणी ।।५९
श्रीजुष्टः पञ्चमीस्कन्दस्तस्माच्छ्रीः पञ्चमी स्मृता ।
षष्ठ्यां कृतार्थोऽभूद्यस्मात्तस्मात्षष्ठी महातिथिः ६०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि एकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥

## त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥

मार्कण्डेयेन युधिष्ठिरंप्रति स्कन्दचरित्रकीर्तनम् ॥ १ ॥

मार्कण्डेय उवाच ।
श्रिया जुष्टं महासेनं देवसेनापतीकृतम् ।
सप्तर्षिपत्नयः षड् देव्यस्तत्सकाशमथागमन् ।। १
ऋषिभिः संपरित्यक्ता धर्मयुक्ता महाव्रताः ।
द्रुतमागम्य चोचुस्ता देवसेनापतिं प्रभुम् ।। २
वयं पुत्र परित्यक्ता भर्तृभिर्देवसंमितैः ।
अकारणाद्रुषा तैस्तु पुण्यस्थानात्परिच्युताः ।। ३
अस्माभिः किल जातस्त्वमिति केनाप्युदाहृतम् ।
तत्सत्यमेतत्संश्रुत्य तस्मान्नस्त्रातुमर्हसि ।। ४
अक्षयश्च भवेत्स्वर्गस्त्वत्प्रसादाद्धि नः प्रभो ।
त्वां पुत्रं चाप्यभीप्सामः कृत्वैतदनृणो भव ।।५
स्कन्द उवाच ।
मातरो हि भवत्यो मे सुतो वोऽहमनिन्दिताः ।
यद्वापीच्छत तत्सर्वं संभविष्यति वस्तथा ।। ६
मार्कण्डेय उवाच ।
विवक्षन्तं ततः शक्रं किं कार्यमिति सोऽब्रवीत् ।
उक्तः स्कन्देन ब्रूहीति सोऽब्रवीद्वासवस्ततः ।।७
अभिजित्स्पर्धमाना तु रोहिण्या कन्यसी स्वसा ।
इच्छन्ती ज्येष्ठतां देवी तपस्तप्तुं वनं गता ।। ८
तत्र मूढोऽसि भद्रं ते नक्षत्रं गगनाच्च्युतम् ।
कालं त्विमं परं स्कन्द ब्रह्मणा सह चिन्तय ।।९
धनिष्ठादिस्तदा कालो ब्रह्मणा परिकल्पितः ।
रोहिणी ह्यभवत्पूर्वमेवं सङ्ख्या समाभवत् ।। १०
एवमुक्ते तु शक्रेण त्रिदिवं कृत्तिका गताः ।
नक्षत्रं शकटाकारं भाति तद्वह्निदैवतम् ।। ११
विनता चाब्रवीत्स्कन्दं मम त्वं पिण्डदः सुतः ।
इच्छामि नित्यमेवाहं त्वया पुत्र सहासितुम् ।।१२
स्कन्द उवाच ।
एवमस्तु नमस्तेऽस्तु पुत्रस्नेहात्प्रशाधि माम् ।
स्नुषया पूज्यमाना वै देवि वत्स्यसि नित्यदा ।।१३
मार्कण्डेय उवाच ।
अथ मातृगणः सर्वः स्कन्दं वचनमब्रवीत् ।
वयं सर्वस्य लोकस्य मातरः कविभिः स्तुताः ।
इच्छामो मातरस्तुभ्यं भवितुं पूजयस्व नः ।। १४
'तासां तु वचनं श्रुत्वा स्कन्दो वचनमब्रवीत् ।'
मातरो हि भवत्यो मे भवतीनामहं सुतः ।
उच्यतां यन्मया कार्यं भवतीनामथेप्सितम् ।।१५
मातर ऊचुः ।
यास्तु ता मातरः पूर्वं लोकस्यास्य प्रकल्पिताः ।
अस्माकं तु भवेत्स्थानं तासां चैव न तद्भवेत् ।।१६
भवेम पूज्या लोकस्य न ताः पूज्याः सुरर्षभ ।
प्रजाऽस्माकं हृतास्ताभिस्त्वत्कृते ताः प्रयच्छ नः ।।

असत्यमेतत्संस्कृत्य इति ध. पाठः । अपत्यमेतत्संस्मृत्य इति ट. थ. पाठः ॥ ४ ॥ विवक्षन्तमभिजिन्नक्षत्रस्य पतनान्नक्षत्रसंख्या कथं समा भवेदिति प्रष्टुमिच्छन्तम् ॥ ७ ॥ कन्यसी कनिष्ठा । वनं गता अधिकारं त्यक्त्वेति शेषः ॥ ८ ॥ यस्य नक्षत्रस्याद्यक्षणे चन्द्रसूर्यगुरूणां योगस्तद्युगादिनक्षत्रम् । तच्च पूर्वं रोहिण्यभूत् । तदाभिजित्पतनकाले त्वेकन्यूनैरहोरात्रैर्भगणस्य भोगात् कृतयुगादिनक्षत्रं धनिष्ठैवाभवदित्यर्थः । संख्या कलाकाष्ठादीनाम् ॥ १० ॥ तथाच कृत्तिकाभिरेव नक्षत्रसंख्यापूर्तिं कुर्विति शक्राशयं ज्ञात्वा तास्त्रिदिवं गताः । नक्षत्रं सप्तशीर्षाभं इति झ. पाठः ॥ ११ ॥ ऋषिपत्नीनामिव गरुत्मत्या अपि रूपं स्वाहया धृतमिति तत्सुतत्वं बोध्यम् ॥ १२ ॥ स्नुषया देवसेनया ॥ १३ ॥ मातृगणो विनतादिसमूहः ॥ १४ ॥ ताः प्रसिद्धाः मातरो ब्राह्मीमाहेश्वरीप्रभृतयः ॥ १६ ॥ त्वत्कृते त्वदर्थं ताभिर्ब्राह्म्यादिभिरस्मद्भर्तॄन् मिथ्याभिशापदोषेण

स्कन्द उवाच ।

वृत्ताः प्रजा न ताः शक्या भवतीभिर्निषेवितुम् ।
अन्यां वः कां प्रयच्छामि प्रजां यां मनसेच्छथ ॥१८

मातर ऊचुः ।

इच्छाम तासां मातॄणां प्रजा भोक्तुं प्रयच्छ नः ।
त्वया सह पृथग्भूता ये च तासामथेश्वराः ॥१९

स्कन्द उवाच ।

प्रजा वो दद्मि कष्टं तु भवतीभिरुदाहृतम् ।
परिरक्षत भद्रं वः प्रजाः साधुनमस्कृताः ॥ २०

मातर ऊचुः ।

परिरक्षाम भद्रं ते प्रजाः स्कन्द यथेच्छसि ।
त्वया नो रोचते स्कन्द सहवासश्चिरं प्रभो ॥२१

स्कन्द उवाच ।

यावत्षोडश वर्षाणि भवन्ति तरुणाः प्रजाः ।
प्रबाधत मनुष्याणां तावद्रूपैः पृथग्विधैः ॥ २२
अहं च वः प्रदास्यामि रौद्रमात्मानमव्ययम् ।
परमं तेन सहिताः सुखं वत्स्यथ पूजिताः ॥२३

मार्कण्डेय उवाच ।

ततः शरीरात्स्कन्दस्य पुरुषः पावकप्रभः ।
भोक्तुं प्रजाः स मर्त्यानां निष्पपात महाबलः॥२४
अपतत्सहसा भूमौ विसंज्ञोऽथ क्षुधार्दितः ।
स्कन्देन सोऽभ्यनुज्ञातो रौद्ररूपोऽभवद्ग्रहः ॥२५
स्कन्दापस्मार इत्याहुर्ग्रहं तं द्विजसत्तमाः ।
विनता तु महारौद्रा कथ्यते शकुनिग्रहः ॥ २६
मातॄणां राक्षसं प्राहुस्तं विद्यात्पूतनाग्रहम् ।
कष्टा दारुणरूपेण घोररूपा निशाचरी ॥ २७
पिशाची दारुणाकारा कथ्यते शीतपूतना ।
गर्भान्सा मानुषीणां तु हरते घोरदर्शना ॥ २८
अदितिं रेवतीं प्राहुर्ग्रहस्तस्यास्तु रैवतः ।
सोऽपि बालान्महाघोरो बाधते वै महाग्रहः ॥२९
दैत्यानां या दितिर्माता तामाहुर्मुखमण्डिकाम् ।
अत्यर्थं शिशुमांसेन संप्रहृष्टा दुरासदा ॥ ३०
कुमाराश्च कुमार्यश्च ये प्रोक्ताः स्कन्दसंभवाः ।
तेऽपि गर्भभुजः सर्वे कौरव्य सुमहाग्रहाः ॥ ३१
तासामेव तु पत्नीनां पतयस्ते प्रकीर्तिताः ।
आजायमानान्गृह्णन्ति बालकान्रौद्रकर्मणः॥ ३२
गवां माता तु या प्राज्ञैः कथ्यते सुरभिर्नृप ।
शकुनिस्तामथारुह्य सह भुङ्क्ते शिशून्भुवि ॥ ३३
सरमा नाम या माता शुनां देवी जनाधिप ।
साऽपि गर्भान्समादत्ते मानुषीणां सदैव हि ॥३४
पादपानां च या माता करञ्जनिलया हि सा ।
वरदा सा हि सौम्या च नित्यं भूतानुकम्पिनी॥
करञ्जे तां नमस्यन्ति तस्मात्पुत्रार्थिनो नराः ।
इमे त्वष्टादशान्ये वै ग्रहा मांसमधुप्रियाः ॥ ३६
द्विपञ्चरात्रं तिष्ठन्ति सततं सूतिकागृहे ।
कद्रूः सूक्ष्मवपुर्भूत्वा गर्भिणीं प्रविशत्यथ ॥ ३७
भुङ्क्ते सा तत्र तं गर्भं सा तु नागं प्रसूयते ।
गन्धर्वाणां तु या माता सा गर्भं गृह्य गच्छति॥
ततो विलीनगर्भा सा मानुषी भुवि दृश्यते ।
या जनित्री त्वप्सरसां गर्भमास्ते प्रगृह्य सा ॥३९
उपविष्टं ततो गर्भं कथयन्ति मनीषिणः ।
लोहितस्योदधेः कन्या धात्री स्कन्दस्य सा स्मृता॥
लोहितायनिरित्येवं कदम्बे सा हि पूज्यते ।
पुरुषेषु यथा रुद्रस्तथाऽऽर्या प्रमदास्वपि ॥ ४१
आर्या माता कुमारस्य पृथक्कामार्थमिज्यते ।
एवमेते कुमाराणां मया प्रोक्ता महाग्रहाः ॥ ४२
यावत्षोडश वर्षाणि शिशूनां ह्यशिवास्ततः ।
ये च मातृगणाः प्रोक्ताः पुरुषाश्चैव ये ग्रहाः ४३
सर्वे स्कन्दग्रहा नाम ज्ञेया नित्यं शरीरिभिः ।
तेषां प्रशमनं कार्यं स्नानं धूपमथाञ्जनम् ।

---

कोपयन्तीभिः प्रजाहृताः सङ्गाभावादित्यर्थः । संधिरार्षः । नोऽस्मभ्यं प्रयच्छ भर्तॄणामनुकूलनेनेत्यर्थः ॥ १७ ॥ वृत्ता मया दत्ता अपि । मया प्रार्थिता अपि मुनयो युष्मान् नाङ्गीकरिष्यन्तीति भावः ॥ १८ ॥ मातॄणां ब्राह्म्यादीनाम् । तासां प्रजानामीश्वराः पित्रादयः ॥ १९ ॥ प्रजाः अस्मदाद्याः । नमस्कृता यूयं मयेति शेषः ॥ २० ॥ अज्ञायमाना गृह्णन्ति इति ध. पाठः ॥ ३२ ॥ सुजाता हरिणी या तु सा गर्भं पिबति प्रभो इति ट. थ. ध. पाठः ॥ ३८ ॥ त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥

बलिकर्मोपहाराश्च स्कन्दस्येज्या विशेषतः ॥ ४४
एवमभ्यर्चिताः सर्वे प्रयच्छन्ति शुभं नृणाम् ।
आयुर्दीर्घं च राजेन्द्र सम्यक्पूजानमस्कृताः ४५
ऊर्ध्वं तु षोडशाद्वर्षाद्ये भवन्ति ग्रहा नृणाम् ।
तानहं संप्रवक्ष्यामि नमस्कृत्य महेश्वरम् ॥ ४६
यः पश्यति नरो देवाञ्जाग्रद्वा शयितोपि वा ।
उन्मादयति स तु क्षिप्रं तं तु देवग्रहं विदुः ॥ ४७
आसीनश्च शयानश्च यः पश्यति नरः पितॄन् ।
उन्मादयति स तु क्षिप्रं स ज्ञेयस्तु पितृग्रहः ॥ ४८
अवमन्यति यः सिद्धान्क्रुद्धाश्चापि शपन्ति यम् ।
उन्मादयति स तु क्षिप्रं ज्ञेयः सिद्धग्रहस्तु सः ४९
उपाघ्राति च यो गन्धान्रसांश्चापि पृथग्विधान् ।
उन्मादयति स तु क्षिप्रं स ज्ञेयो राक्षसो ग्रहः ॥ ५०
गन्धर्वाश्चापि यं दिव्याः संविशन्ति नरं भुवि ।
उन्मादयति स तु क्षिप्रं ग्रहो गान्धर्व एव सः ५१
अधिरोहन्ति यं नित्यं पिशाचाः पुरुषं प्रति ।
उन्मादयति स तु क्षिप्रं ग्रहः पैशाच एव सः ५२
आविशन्ति च यं यक्षाः पुरुषं कालपर्यये ।
उन्मादयति स तु क्षिप्रं ज्ञेयो यक्षग्रहस्तु सः ॥ ५३
यस्य दोषैः प्रकुपितं चित्तं मुह्यति देहिनः ।
उन्मादयति स तु क्षिप्रं साधनं तस्य शास्त्रतः ५४
वैक्लब्याच्च भयाच्चैव घोराणां चापि दर्शनात् ।
उन्मादयति स तु क्षिप्रं सान्त्वं तस्य तु साधनम् ॥
कश्चित्क्रीडितुकामो वै भोक्तुकामस्तथाऽपरः ।
अभिकामस्तथैवान्य इत्येष त्रिविधो ग्रहः ॥ ५६
यावत्सप्ततिवर्षाणि भवन्त्येते ग्रहा नृणाम् ।
अतः परं देहिनां तु ग्रहतुल्या भवेज्जरा ॥ ५७
अप्रकीर्णेन्द्रियं दान्तं शुचिं नित्यमतन्द्रितम् ।
आस्तिकं श्रद्दधानं च वर्जयन्ति तदा ग्रहाः ॥ ५८
इत्येष ते ग्रहोद्देशो मानुषाणां प्रकीर्तितः ।
न स्पृशन्ति ग्रहा भक्तान्नरान्देवं महेश्वरम् ॥ ५९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥

---

## एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥

स्कन्देन स्वाहादेव्या अभीष्टदानम् ॥ १ ॥ ब्रह्मणा स्कन्दंप्रति सोपपत्तिकं तस्य रुद्रपुत्रत्वादिकथनम् ॥ २ ॥

मार्कण्डेय उवाच ।
यदा स्कन्देन मातॄणामेवमेतत्प्रियं कृतम् ।
अथैनमब्रवीत्स्वाहा मम पुत्रस्त्वमौरसः ॥ १
इच्छाम्यहं त्वया दत्तां प्रीतिं परमदुर्लभाम् ।
तामब्रवीत्ततः स्कन्दः प्रीतिमिच्छसि कीदृशीम् २
स्वाहोवाच ।
दक्षस्याहं प्रिया कन्या स्वाहा नाम महाभुज ।
बाल्यात्प्रभृति नित्यं च जातकामा हुताशने ॥ ३
न स मां कामिनीं पुत्र सम्यग्जानाति पावकः ।
इच्छामि शाश्वतं वासं वस्तुं पुत्र सहाग्निना ॥ ४
स्कन्द उवाच ।
हव्यं कव्यं च यत्किंचिद्द्विजा मन्त्रसुसंस्तुतम् ।
होष्यन्त्यग्नौ सदा देवि स्वाहेत्युक्त्वा समुद्धृतम् ५
अद्यप्रभृति दास्यन्ति सुवृत्ताः सत्पथे स्थिताः ।
एवमग्निस्त्वया सार्धं सदा वत्स्यति शोभने ॥ ६
मार्कण्डेय उवाच ।
एवमुक्ता ततः स्वाहा तुष्टा स्कन्देन पूजिता ।
पावकेन समायुक्ता भर्त्रा स्कन्दमपूजयत् ॥ ७
ततो ब्रह्मा महासेनं प्रजापतिरथाब्रवीत् ।
अभिगच्छ महादेवं पितरं त्रिपुरार्दनम् ॥ ८
रुद्रेणाग्निं समाविश्य स्वाहामाविश्य चोमया ।
हितार्थं सर्वलोकानां जातस्त्वमपराजितः ॥ ९
उमायोन्यां च रुद्रेण शुक्रं सिक्तं महात्मना ।
अस्मिन्गिरौ निपतितं मिञ्जिकामिञ्जिकं यतः १०

मुञ्जिको मुञ्चिका ततः इति ट. थ. पाठः ॥ १० ॥

'मिथुनं वै महाभाग तत्र तद्रुद्रसंभवम् ।'
संभूतं लोहितोदे तु शुक्रशेषमवापतत् ॥ ११
सूर्यरश्मिषु चाप्यन्यदन्यच्चैवापतद्भुवि ।
आसक्तमन्यद्वृक्षेषु तदेवं पञ्चधाऽपतत् ॥ १२
तत्र ते विविधाकारा गणा ज्ञेया मनीषिभिः ।
तव पारिषदा घोरा य एते पिशिताशिनः ॥१३
एवमस्त्विति चाप्युक्त्वा महासेनो महेश्वरम् ।
अपूजयदमेयात्मा पितरं पितृवत्सलः ॥ १४
मार्कण्डेय उवाच ।
अर्कपुष्पैस्तु ते पञ्च गणाः पूज्या धनार्थिभिः ।
व्याधिप्रशमनार्थं च तेषां पूजां समाचरेत् ॥१५
मिञ्जिकामिञ्जिकं चैव मिथुनं रुद्रसंभवम् ।
नमस्कार्यं सदैवेह बालानां हितमिच्छता ॥ १६
स्त्रियो मानुषमांसादा वृक्षका नाम नामतः ।
वृक्षेषु जातास्ता देव्यो नमस्कार्याः प्रजार्थिभिः ॥
एषामेव पिशाचानामसङ्ख्येयगणाः स्मृताः ।
घण्टायाः सपताकायाः शृणु मे संभवं नृप ॥१८
ऐरावतस्य घण्टे द्वे वैजयन्त्याविति श्रुते ।
गुहस्य ते स्वयं दत्ते क्रमेणानाय्य धीमता ॥१९
एका तत्र विशाखस्य घण्टा स्कन्दस्य चापरा ।
पताका कार्तिकेयस्य विशाखस्य च लोहिता ॥२०
यानि क्रीडनकान्यस्य देवैर्दत्तानि वै तदा ।
तैरेव रमते देवो महासेनो महाबलः ॥ २१
स संवृतः पिशाचानां गणैर्देवगणैस्तथा ।
शुशुभे काञ्चने शैले दीप्यमानः श्रिया वृतः ॥२२
तेन वीरेण शुशुभे स शैलः शुभकाननः ।
आदित्येनेवांशुमता मन्दरश्चारुकन्दरः ॥ २३
संतानकवनैः फुल्लैः करवीरवनैरपि ।
पारिजातवनैश्चैव जपाशोकवनैस्तथा ॥ २४
कदम्बतरुषण्डैश्च दिव्यैर्मृगगणैरपि ।
दिव्यैः पक्षिगणैश्चैव शुशुभे श्वेतपर्वतः ॥ २५
तत्र देवगणाः सर्वे सर्वे देवर्षयस्तथा ।
मेघतूर्यरवाश्चैव क्षुब्धोदधिसमस्वनाः ॥ २६
तत्र देवाश्च गन्धर्वा नृत्यन्तेऽप्सरसस्तथा ।
हृष्टानां तत्र भूतानां श्रूयते निनदो महान् ॥२७
एवं सेन्द्रं जगत्सर्वं श्वेतपर्वतसंस्थितम् ।
प्रहृष्टं प्रेक्षते स्कन्दं न च ग्लायति दर्शनात् २८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥

## द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥

स्कन्दस्य देवसैनापत्येऽभिषेकानन्तरं महादेवस्य पार्वत्या सह भद्रवटंप्रति प्रस्थानम् ॥ १ ॥ तदेन्द्रादिभिर्दिक्पालैः ससैन्यैस्तमनु प्रस्थानम् ॥ २ ॥ तदा रुद्रेण स्कन्दस्य देवसैनापत्ये नियोजनम् ॥ ३ ॥ ततो देवासुराणां महायुद्धम् । तत्र स्कन्देन महिषासुरसंहारः ॥ ४ ॥

मार्कण्डेय उवाच ।
यदाऽभिषिक्तो भगवान्सैनापत्ये तु पावकिः ।
तदा संप्रस्थितः श्रीमान्हृष्टो भद्रवटं हरः ॥ १
रथेनादित्यवर्णेन पार्वत्या सहितः प्रभुः ।
'अनुयातः सुरैः सर्वैः सहस्राक्षपुरोगमैः ॥' २
सहस्रं तस्य सिंहानां तस्मिन्युक्तं रथोत्तमे ।
उत्पपात दिवं शुभ्रं कालेनाभिप्रचोदितम् ॥ ३
ते पिबन्त इवाकाशं त्रासयन्तश्चराचरान् ।
सिंहा नभस्यगच्छन्त नदन्तश्चारुकेसराः ॥ ४
तस्मिन्रथे पशुपतिः स्थितो भात्युमया सह ।
विद्युता सहितः सूर्यः सेन्द्रचापे घने यथा ॥ ५
अग्रतस्तस्य भगवान्धनेशो गुह्यकैः सह ।
आस्थाय रुचिरं याति पुष्पकं नरवाहनः ॥ ६
ऐरावतं समास्थाय शक्रश्चापि सुरैः सह ।
पृष्ठतोऽनुययौ यान्तं वरदं वृषभध्वजम् ॥ ७
जृम्भकैर्यक्षरक्षोभिः स्रग्विभिः समलंकृतः ।
यात्यमोघो महायक्षो दक्षिणं पक्षमास्थितः ॥ ८

जृम्भकैर्ग्रहविशेषैः भास्करैर्यक्षरक्षोभिः इति घ. पाठः ॥८॥

तस्य दक्षिणतो देवा बहवश्चित्रयोधिनः ।
गच्छन्ति वसुभिः सार्धं रुद्रैश्च सह संगताः ॥ ९
यमश्च मृत्युना सार्धं सर्वतः परिवारितः ।
घोरैर्व्याधिशतैर्याति घोररूपवपुस्तथा ॥ १०
यमस्य पृष्ठतश्चैव घोरस्त्रिशिखरः शितः ।
विजयो नाम रुद्रस्य याति शूलः स्वलंकृतः ॥११
तमुग्रपाशो वरुणो भगवान्सलिलेश्वरः ।
परिवार्य शनैर्याति यादोभिर्विविधैर्वृतः ॥ १२
पृष्ठतो विजयस्यापि याति रुद्रस्य पट्टसः ।
गदामुसलशक्त्याद्यैर्वृतः प्रहरणोत्तमैः ॥ १३
पट्टसं त्वन्वगाद्राजंश्छत्रं रौद्रं महाप्रभम् ।
कमण्डलुश्चाप्यनु तं महर्षिगणसेवितः ॥ १४
तस्य दक्षिणतो भाति दण्डो गच्छञ्श्रिया वृतः ।
भृग्वङ्गिरोभिः सहितो दैवतैश्चानुपूजितः ॥ १५
एषां तु पृष्ठतो रुद्रो विमले स्यन्दने स्थितः ।
याति संहर्षयन्सर्वांस्तेजसा त्रिदिवौकसः ॥ १६
ऋषयश्चापि देवाश्च गन्धर्वा भुजगास्तथा ।
नद्यो ह्रदाः समुद्राश्च तथैवाप्सरसां गणाः ॥ १७
नक्षत्राणि ग्रहाश्चैव देवानां शिशवश्च ये ।
स्त्रियश्च विविधाकारा यान्ति रुद्रस्य पृष्ठतः ॥१८
सृजन्त्यः पुष्पवर्षाणि चारुरूपा वराङ्गनाः ।
पर्जन्यश्चाप्यनुययौ नमस्कृत्य पिनाकिनम् ॥ १९
छत्रं च पाण्डुरं सोमस्तस्य मूर्धन्यधारयत् ।
चामरे चापि वायुश्च गृहीत्वाऽग्निश्च धिष्ठितौ ॥२०
शक्रश्च पृष्ठतस्तस्य याति राजञ्छ्रिया वृतः ।
सह राजर्षिभिः सर्वैः स्तुवानो वृषकेतनम् ॥२१
गौरी विद्याऽथ गान्धारी केशिनी मित्रसाह्वया ।
सावित्र्या सह सर्वास्ताः पार्वत्या यान्ति पृष्ठतः ॥
तत्र विद्यागणाः सर्वे ये केचित्कविभिः स्मृताः ।
तस्य कुर्वन्ति वचनं सेन्द्रा देवाश्चमूमुखे ॥ २३
गृहीत्वा तु पताकां वै यात्यग्रे राक्षसो ग्रहः ।
व्यापृतस्तु श्मशाने यो नित्यं रुद्रस्य वै सखा ।
पिङ्गलो नाम यक्षेन्द्रो लोकस्यानन्ददायकः ॥२४

एभिश्च सहितो देवस्तत्र याति यथासुखम् ।
अग्रतः पृष्ठतश्चैव न हि तस्य गतिर्ध्रुवा ॥ २५
रुद्रं सत्कर्मभिर्मर्त्याः पूजयन्तीह दैवतम् ।
शिवमित्येव यं प्राहुरीशं रुद्रं पिनाकिनम् ॥ २६
'एवं सर्वे सुरगणास्तदा वै प्रीतमानसाः ।'
भावैस्तु विविधाकारैः पूजयन्ति महेश्वरम् ॥ २७
देवसेनापतिस्त्वेवं देवसेनाभिरावृतः ।
अनुगच्छति देवेशं ब्रह्मण्यः कृत्तिकासुतः ॥२८
अथाब्रवीन्महासेनं महादेवो बृहद्वचः ।
सप्तमं मारुतस्कन्धं रक्ष नित्यमतन्द्रितः ॥ २९

स्कन्द उवाच ।

सप्तमं मारुतस्कन्धं पालयिष्याम्यहं प्रभो ।
यदन्यदपि मे कार्यं देव तद्वद माचिरम् ॥ ३०

रुद्र उवाच ।

कार्येष्वहं त्वया पुत्र संद्रष्टव्यः सदैव हि ।
दर्शनान्मम भक्त्या च श्रेयः परमवाप्स्यसि ॥३१

मार्कण्डेय उवाच ।

इत्युक्त्वा विससर्जैनं परिष्वज्य महेश्वरः ।
'स्कन्दं सहोमया प्रीतो ज्वलन्तमिव तेजसा ॥'
विसर्जिते ततः स्कन्दे बभूवौत्पातिकं महत् ।
सहसैव महाराज देवान्सर्वान्प्रमोहयत् ॥ ३३
जज्वाल खं सनक्षत्रं प्रमूढं भुवनं भृशम् ।
चचाल व्यनदच्चोर्वी तमोभूतं जगत्प्रभो ॥ ३४
ततस्तद्दारुणं दृष्ट्वा क्षुभितः शंकरस्तदा ।
उमा चैव महाभाग देवाश्च समहर्षयः ॥ ३५
ततस्तेषु प्रमूढेषु पर्वताम्बुदसन्निभम् ।
नानाप्रहरणं घोरमदृश्यत महद्बलम् ॥ ३६
तद्वै घोरमसङ्ख्येयं गर्जच्च विविधा गिरः ।
अभ्यद्रवद्रणे देवान्भगवन्तं च शंकरम् ॥ ३७
तैर्विसृष्टान्यनीकेषु बाणजालान्यनेकशः ।
पर्वताश्च शतघ्न्यश्च प्रासासिपरिघा गदाः ॥ ३८
निपतद्भिश्च तैर्घोरैर्देवानीकं महायुधैः ।
क्षणेन व्यद्रवत्सर्वं विमुखं चाप्यदृश्यत ॥ ३९
निकृत्तयोधनागाश्वं कृत्तायुधमहारथम् ।

---

विद्यागणाः श्रुतिपद्यसमूहाः ॥ २३ ॥

दानवैरर्दितं सैन्यं देवानां विमुखं बभौ ॥ ४०
असुरैर्वध्यमानं तत्पावकैरिव काननम् ।
अपतद्दग्धभूयिष्ठं महाद्रुमवनं तथा ॥ ४१
ते विभिन्नशिरोदेहाः प्राद्रवन्तो दिवौकसः ।
न नाथमधिगच्छन्ति वध्यमाना महारणे ॥ ४२
अथ तद्विद्रुतं सैन्यं दृष्ट्वा देवः पुरंदरः ।
आश्वासयन्नुवाचेदं बलभिद्दानवार्दितम् ॥ ४३
भयं त्यजत भद्रं वः शूराः शस्त्राणि गृह्णत ।
कुरुध्वं विक्रमे बुद्धिं मा वः काचिद्व्यथा भवेत् ४४
जयतैनान्सुदुर्वृत्तान्दानवान्घोरदर्शनान् ।
अभिद्रवत भद्रं वो मया सह महासुरान् ॥ ४५
शक्रस्य वचनं श्रुत्वा समाश्वस्ता दिवौकसः ।
दानवान्प्रत्ययुध्यन्त शक्रं कृत्वा व्यपाश्रयम् ४६
ततस्ते त्रिदशाः सर्वे मरुतश्च महाबलाः ।
प्रत्युद्ययुर्महाभागाः साध्याश्च वसुभिः सह ॥४७
तैर्विसृष्टान्यनीकेषु क्रुद्धैः शस्त्राणि संयुगे ।
शराश्च दैत्यकायेषु पिबन्ति रुधिरं बहु ॥ ४८
तेषां देहान्विनिर्भिद्य शरास्ते निशितास्तदा ।
निपतन्तोऽभ्यदृश्यन्त नगेभ्य इव पन्नगाः ॥४९
तानि दैत्यशरीराणि निर्भिन्नानि स्म सायकैः ।
अपतन्भूतले राजंश्छिन्नाभ्राणीव सर्वशः ॥ ५०
ततस्तद्दानवं सैन्यं सर्वैर्देवगणैर्युधि ।
त्रासितं विविधैर्बाणैः कृतं चैव पराङ्मुखम् ॥५१
अथोत्क्रुष्टं तदा हृष्टैः सर्वैर्देवैरुदायुधैः ।
संहतानि च तूर्याणि प्रावाद्यन्त ह्यनेकशः ॥ ५२
एवमन्योन्यसंयुक्तं युद्धमासीत्सुदारुणम् ।
देवानां दानवानां च मांसशोणितकर्दमम् ॥५३
अनयो देवलोकस्य सहसैवाभ्यदृश्यत ।
तथाहि दानवा घोरा विनिघ्नन्ति दिवौकसः ॥५४
ततस्तूर्यप्रणादाश्च भेरीणां च महास्वनाः ।
बभूवुर्दानवेन्द्राणां सिंहनादाश्च दारुणाः ॥ ५५
अथ दैत्यबलाद्घोरान्निष्पपात महाबलः ।
दानवो महिषो नाम प्रगृह्य विपुलं गिरिम् ॥५६
ते तं घनैरिवादित्यं दृष्ट्वा संपरिवारितम् ।
तमुद्यतगिरिं राजन्व्यद्रवन्त दिवौकसः ॥ ५७
अथाभिद्रुत्य महिषो देवांश्चिक्षेप तं गिरिम् ।
'महाकायं महाराज सतोयमिव तोयदम् ॥' ५८
पतता तेन गिरिणा देवसैन्यस्य पार्थिव ।
भीमरूपेण निहतमयुतं प्रापतद्भुवि ॥ ५९
अथ तैर्दानवैः सार्धं महिषस्त्रासयन्सुरान् ।
अभ्यद्रवद्रणे तूर्णं सिंहः क्षुद्रमृगानिव ॥ ६०
तमापतन्तं महिषं दृष्ट्वा सेन्द्रा दिवौकसः ।
व्यद्रवन्त रणे भीता विकीर्णायुधकेतनाः ॥ ६१
ततः स महिषः क्रुद्धस्तूर्णं रुद्ररथं ययौ ।
अभिद्रुत्य च जग्राह रुद्रस्य रथकूबरम् ॥ ६२
यदा रुद्ररथं क्रुद्धो महिषः सहसा गतः ।
रेसतू रोदसी गाढं मुमुहुश्च महर्षयः ॥ ६३
अनदंश्च महाकाया दैत्या जलधरोपमाः ।
आसीच्च निश्चितं तेषां जितमस्माभिरित्युत ॥६४
तथाभूते तु भगवानाहूय गुहमात्मजम् ।
'दौरात्म्यं पश्य पुत्र त्वं दानवस्य दुरात्मनः ।
जहि शीघ्रं दुराचारं द्रष्टुमिच्छामि ते बलम् ॥६५
इत्युक्त्वा भगवान्स्कन्दं परिपूज्य महेश्वरः ।
अयोजयन्निग्रहार्थं महिषस्य गतायुषः ।'
ससार च तदा स्कन्दं मृत्युं तस्य दुरात्मनः ६६
महिषोऽपि रथं दृष्ट्वा रौद्रं रुद्रस्य चानदत् ।
देवान्संत्रासयंश्चापि दैत्यांश्चापि प्रहर्षयन् ॥ ६७
ततस्तस्मिन्भये घोरे देवानां समुपस्थिते ।
आजगाम महासेनः क्रोधात्सूर्य इव ज्वलन् ॥६८
लोहिताम्बरसंवीतो लोहितस्रग्विभूषणः ।
लोहिताश्वो महाबाहुर्हिरण्यकवचः प्रभुः ॥ ६९
रथमादित्यसंकाशमास्थितः कनकप्रभम् ।
तं दृष्ट्वा दैत्यसेना सा व्यद्रवत्सहसा रणे ॥ ७०
स चापि तां प्रज्वलितां महिषस्य विदारिणीम् ।
मुमोच शक्तिं राजेन्द्र महासेनो महाबलः ॥ ७१
सा मुक्ताऽभ्यहरत्तस्य महिषस्य शिरो महत् ।

कूबरं धूःप्रदेशम् ॥ ६२ ॥ रेसतुः शब्दं चक्रतुः । रोदसी द्यावाभूमी ॥ ६३ ॥ द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥

पपात भिन्ने शिरसि महिषस्त्यक्तजीवितः ॥ ७२
पतता शिरसा तेन द्वारं षोडशयोजनम् ।
पर्वताभेन पिहितं तदाऽगम्यं ततोऽभवत् ।
उत्तराः कुरवस्तेन गच्छन्त्यद्य यथासुखम् ॥ ७३
क्षिप्ताक्षिप्ता तु सा शक्तिर्हत्वा शत्रून्सहस्रशः ।
स्कन्दहस्तमनुप्राप्ता दृश्यते देवदानवैः ॥ ७४
प्रायः शरैर्विनिहता महासेनेन धीमता ।
शेषा दैत्यगणा घोरा भीतास्त्रस्ता दुरासदैः ।
स्कन्दपारिषदैर्हत्वा भक्षिताश्च सहस्रशः ॥ ७५
दानवान्भक्षयन्तस्ते प्रपिबन्तश्च शोणितम् ।
क्षणान्निर्दानवं सर्वमकार्षुर्भृशहर्षिताः ॥ ७६
तमांसीव यथा सूर्यो वृक्षानग्निर्घनान्खगः ।
तथा स्कन्दोऽजयच्छत्रून्स्वेन वीर्येण कीर्तिमान् ॥ ७७
संपूज्यमानस्त्रिदशैरभिवाद्य महेश्वरम् ।
शुशुभे कृत्तिकापुत्रः प्रकीर्णांशुरिवांशुमान् ॥ ७८
नष्टशत्रुर्यदा स्कन्दः प्रयातस्तु महेश्वरम् ।
तदाऽब्रवीन्महासेनं परिष्वज्य पुरंदरः ॥ ७९
ब्रह्मदत्तवरः स्कन्द त्वयाऽयं महिषो हतः ।
'अजय्यो युधि देवानां दानवः स महाबलः ॥' ८०
देवास्तृणसमा यस्य बभूवुर्जयतांवर ।
सोऽयं त्वया महाबाहो शमितो देवकण्टकः ॥ ८१
शतं महिषतुल्यानां दानवानां त्वया रणे ।
निहतं देवशत्रूणां यैर्वयं पूर्वतापिताः ॥ ८२
तावकैर्भक्षिताश्चान्ये दानवाः शतसङ्घशः ।
अजेयस्त्वं रणेऽरीणामुमापतिरिव प्रभुः ॥ ८३
एतत्ते प्रथमं देव ख्यातं कर्म भविष्यति ।
त्रिषु लोकेषु कीर्तिश्च तवाक्षय्या भविष्यति ।
वशगाश्च भविष्यन्ति सुरास्तव महाभुज ॥ ८४
महासेनमेवमुक्त्वा निवृत्तः सह दैवतैः ।
अनुज्ञातो भगवता त्र्यम्बकेण शचीपतिः ॥ ८५
गतो भद्रवटं रुद्रो निवृत्ताश्च दिवौकसः ।
उक्ताश्च देवा रुद्रेण स्कन्दं पश्यत मामिव ॥ ८६
स हत्वा दानवगणान्पूज्यमानो महर्षिभिः ।
एकाह्नैवाजयत्सर्वं त्रैलोक्यं वह्निनन्दनः ॥ ८७
स्कन्दस्य य इदं विप्रः पठेज्जन्म समाहितः ।
'शृणुयाद्ब्राह्मणेभ्यो यः श्रावयेद्वा विचेतनम् ॥ ८८
धनमायुर्यशो दीप्तिं पुत्राञ्शत्रुजयं तथा ।'
स पुष्टिमिह संप्राप्य स्कन्दसालोक्यमाप्नुयात् ॥ ८९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥

## त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥

मार्कण्डेयेन युधिष्ठिराय स्कन्दनाम्नां कीर्तनम् ॥ १ ॥

युधिष्ठिर उवाच ।
भगवञ्श्रोतुमिच्छामि नामानि च महात्मनः ।
त्रिषु लोकेषु यान्यस्य विख्यातानि द्विजोत्तम ॥ १
वैशंपायन उवाच ।
इत्युक्तः पाण्डवेयेन महात्मा ऋषिसन्निधौ ।
उवाच भगवांस्तत्र मार्कण्डेयो महातपाः ॥ २
आग्नेयश्चैव स्कन्दश्च दीप्तकीर्तिरनामयः ।
मयूरकेतुर्धर्मात्मा भूतेशो महिषार्दनः ॥ ३
कामजित्कामदः कान्तः सत्यवाग्भुवनेश्वरः ।
शिशुः शीघ्रः शुचिश्चण्डो दीप्तवर्णः शुभाननः ॥ ४
अमोघस्त्वनघो रौद्रः प्रियश्चन्द्राननस्तथा ।
दीप्तशक्तिः प्रशान्तात्मा भद्रकुक्कुटमोहनः ॥ ५
षष्ठीप्रियश्च धर्मात्मा पवित्रो मातृवत्सलः ।
कन्याभर्ता विभक्तश्च स्वाहेयो रेवतीसुतः ॥ ६
प्रभुर्नेता विशाखश्च नैगमेयः सुदुश्चरः ।
सुव्रतो ललितश्चैव बालक्रीडनकप्रियः ॥ ७
खचारी ब्रह्मचारी च शूरः शरवणोद्भवः ।
विश्वामित्रप्रियश्चैव देवसेनाप्रियस्तथा ।
वासुदेवप्रियश्चैव प्रियः प्रियकृदेव तु ॥ ८

कामजित्पूर्णमनोरथः ॥ ४ ॥

नामान्येतानि दिव्यानि कार्तिकेयस्य यः पठेत्।
स्वर्गं कीर्तिं धनं चैव स लभेन्नात्र संशयः ॥ ९

मार्कण्डेय उवाच ।

स्तोष्यामि देवैर्ऋषिभिश्च जुष्टं
शक्त्या गुहं नामभिरप्रमेयम् ।
षडाननं शक्तिधरं सुवीरं
निबोध चैतानि कुरुप्रवीर ॥ १०

ब्रह्मण्यो वै ब्रह्मजो ब्रह्मविच्च
ब्रह्मेशयो ब्रह्मवतांवरिष्ठः ।
ब्रह्मप्रियो ब्राह्मणसर्वमन्त्री
त्वं ब्रह्मणां ब्राह्मणानां च नेता ॥ ११

स्वाहा स्वधा त्वं परमं पवित्रं
मन्त्रस्तुतस्त्वं प्रथितः षडर्चिः ।
संवत्सरस्त्वमृतवश्च षड्वै
मासार्धमासाश्च दिनं दिशश्च ॥ १२

त्वं पुष्कराक्षस्त्वरविन्दवक्त्रः
सहस्रचक्षोसि सहस्रबाहुः ।
त्वं लोकपालः परमं हविश्च
त्वं भावनः सर्वसुरासुराणाम् ॥ १३

त्वमेव सेनाधिपतिः प्रचण्डः
प्रभुर्विभुश्चाप्यथ शक्रजेता ।
सहस्रपात्त्वं धरणी त्वमेव
सहस्रतुष्टिश्च सहस्रभुक्च ॥ १४

सहस्रशीर्षस्त्वमनन्तरूपः ।
सहस्रपात्त्वं दशशक्तिधारी ।
गङ्गासुतस्त्वं स्वमतेन देव
स्वाहामहीकृत्तिकानां तथैव ॥ १५

त्वं क्रीडसे षण्मुख कुक्कुटेन
यथेष्टनानाविधकामरूपी ।
दीक्षाऽसि सोमो मरुतः सदैव
धर्मोऽसि वायुरचलेन्द्र इन्द्रः ॥ १६

सनातनानामपि शाश्वतस्त्वं
प्रभुः प्रभूणामपि चोग्रधन्वा ।
ऋतस्य कर्ता दितिजान्तकस्त्वं
जेता रिपूणां प्रवरः सुराणाम् ॥ १७

सूक्ष्मं तपस्तत्परमं त्वमेव
परावरज्ञोसि परावरस्त्वम् ।
धर्मस्य कामस्य परस्य चैव
त्वत्तेजसा कृत्स्नमिदं महात्मन् ॥ १८

व्याप्तं जगत्सर्वसुरप्रवीर
शक्त्या मया संस्तुत लोकनाथ ।
नमोस्तु ते द्वादशनेत्रबाहो
अतः परं वेद्मि गतिं न तेऽहम् ॥ १९

स्कन्दस्य य इदं विप्रः पठेज्जन्म समाहितः ।
श्रावयेद्ब्राह्मणेभ्यो यः शृणुयाद्वा द्विजेरितम्॥२०
धनमायुर्यशो दीप्तं पुत्राञ्शत्रुजयं तथा ।
स पुष्टितुष्टी संप्राप्य स्कन्दसालोक्यमाप्नुयात्२१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥

समाप्तं च मार्कण्डेयसमास्यापर्व ॥ ११ ॥

## (अथ द्रौपदीसत्यभामासंवादपर्व ॥ १२ ॥)

### चतुःस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥

सत्यभामया पतिवशीकरणोपायं पृष्टया द्रौपद्या तदुत्तरदानव्याजेन पतिव्रताधर्मकथनम् ॥ १ ॥

वैशंपायन उवाच ।
उपासीनेषु विप्रेषु पाण्डवेषु च भारत ।

जुष्टं सेवितम् ॥ १० ॥ ब्रह्मण्यो ब्राह्मणेषु साधुः । ब्रह्मजो वेदोक्तेन गर्भाधानादिकर्मणा जातः । ब्रह्मविद्वेदार्थज्ञाता । ब्रह्मे ब्रह्मणि कर्मब्रह्मरूपे शेते इति ब्रह्मेशयः । अदन्तत्वमार्षम् । कर्मब्रह्मनिष्ठावानित्यर्थः।ब्राह्मणसव्रतीति पाठे ब्राह्मणो ब्रह्मवित्तेन सह समानं व्रतमद्वेष्टृत्वादिरूपं यस्य स ब्राह्मणसव्रती॥११॥षडर्चिःषण्मुखत्वात्षड्जिह्वः ॥१२॥ त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥२३३॥

द्रौपदी सत्यभामा च विविशाते तदा समम् ॥ १
'प्रविश्य चाश्रमं पुण्यमुभे ते परमस्त्रियौ ।'
जाहस्यमाने सुप्रीते सुखं तत्र निषीदतुः ॥ २
चिरस्य दृष्ट्वा राजेन्द्र तेऽन्योन्यस्य प्रियंवदे ।
कथयामासतुश्चित्राः कथाः कुरुयदूचिताः ॥ ३
अथाब्रवीत्सत्यभामा कृष्णस्य महिषी प्रिया ।
सात्राजिती याज्ञसेनीं रहसीदं सुमध्यमा ॥ ४
केन द्रौपदि वृत्तेन पाण्डवानधितिष्ठसि ।
लोकपालोपमान्वीरान्नूनं परमसंमतान् ॥ ५
कथं च वशगास्तुभ्यं न कुप्यन्ति च ते शुभे ।
तव वश्या हि सतत पाण्डवाः प्रियदर्शने ॥ ६
'न चान्योन्यमसूयन्ते कथं वा ते सुमध्यमे ।'
मुखप्रेक्षाश्च ते सर्वे तत्त्वमेतद्ब्रवीहि मे ॥ ७
व्रतचर्या तपो वाऽपि स्नानमन्त्रौषधानि वा ।
विद्यावीर्यं मूलवीर्यं जपहोमागदास्तथा ॥ ८
ममाद्याचक्ष्व पाञ्चालि यशस्यं भगवेतनम् ।
येन कृष्णे भवेन्नित्यं मम कृष्णो वशानुगः ॥ ९
एवमुक्त्वा सत्यभामा विरराम यशस्विनी ।
पतिव्रता महाभागा द्रौपदी प्रत्युवाच ताम् ॥ १०
असत्स्त्रीणां समाचरं सत्ये मामनुपृच्छसि ।
असदाचरिते मार्गे कथं स्यादनुकीर्तनम् ॥ ११
अनुप्रश्नः संशयो वा नैष त्वय्युपपद्यते ।
कथं ह्युपेता बुद्ध्या त्वं कृष्णस्य महिषी प्रिया ॥ १२
यदैव भर्ता जानीयान्मन्त्रमूलपरां स्त्रियम् ।
उद्विजेत तदैवास्याः सर्पाद्वेश्मगतादिव ॥ १३
उद्विग्नस्य कुतः शान्तिरशान्तस्य कुतः सुखम् ।
न जातु वशगो भर्ता स्त्रियाः स्यान्मन्त्रकारणात् ॥
किमत्र प्रहिताश्चापि गदाः परमदारुणाः ।
मूलप्रवादैर्हि विषं प्रयच्छन्ति जिघांसवः ॥ १५
जिह्वया यानि पुरुषस्त्वचा वाऽप्युपसेवते ।
तत्र चूर्णानि दत्तानि हन्युः क्षिप्रमसंशयम् ॥ १६
जलोदरसमायुक्ताः श्वित्रिणः पलितास्तथा ।
अपुमांसः कृताः स्त्रीभिर्जडान्धबधिरास्तथा ॥ १७
पापानुगास्तु पापास्ताः पतीनुपसृजन्त्युत ।
न जातु विप्रियं भर्तुः स्त्रिया कार्यं कथंचन ॥ १८
वर्ताम्यहं तु यां वृत्तिं पाण्डवेषु महात्मसु ।
तां सर्वां शृणु मे सत्यां सत्यभामे यशस्विनि ॥ १९
अहंकारं विहायाहं कामक्रोधौ च सर्वदा ।
सदारान्पाण्डवान्नित्यं प्रयतोपचराम्यहम् ॥ २०
प्रणयं प्रतिसंहृत्य निधायात्मानमात्मनि ।
शुश्रूषुर्निरभीमाना पतीनां चित्तरक्षिणी ॥ २१
दुर्व्याहृताच्छङ्कमाना दुस्थिताद्दुरवेक्षितात् ।
दुरासिताद्दुर्व्रजितादिङ्गिताध्यासितादपि ॥ २२
सूर्यवैश्वानरसमान्सोमकल्पान्महारथान् ।
सेवे चक्षुर्हणः पार्थानुग्रवीर्यप्रतापिनः ॥ २३
देवो मनुष्यो गन्धर्वो युवा चापि स्वलंकृतः ।
द्रव्यवानभिरूपो वा न मेऽन्यः पुरुषो मतः ॥ २४
न भुक्तवति न स्नाते नासंविष्टे च भर्तरि ।
न संविशामि नाश्नामि न स्नाये कर्म कुर्वती ॥ २५
क्षेत्राद्वनाद्वा ग्रामाद्वा भर्तारं गृहमागतम् ।
अभ्युत्थायाभिनन्दामि आसनेनोदकेन च ॥ २६
प्रसन्नभाण्डा मृष्टान्ना काले भोजनदायिनी ।
संयता गुप्तधान्या च सुसंमृष्टनिवेशना ॥ २७
अतिरस्कृतसंभाषा दुःस्त्रियो नानुसेवती ।
अनुकूलवती नित्यं भवाम्यनलसा सदा ॥ २८
अनर्म चापि हसितं द्वारि स्थानमभीक्ष्णशः ।

---

सममेकत्र । विविशाते तदाश्रममिति ध. पाठः ॥ १ ॥ जाहस्यमाने परस्परमतिशयेन हसन्त्यौ ॥ २ ॥ मूलवीर्यं मूलं अप्रच्युतं तारुण्यादि तद्वीर्यम् । अगदोऽञ्जनादिरौषधम् ॥ ८ ॥ भगदैवतमिति झ. पाठः । भगदैवतं सौभाग्यवर्धकं सौरव्रतादिकम् । वशानुग इच्छानुसारी ॥ ९ ॥ हे सत्ये अनुकीर्तनमुत्तरम् ॥ ११ ॥ जलोदरः उदररोगः। श्वित्रिणः कुष्ठवन्तः ॥ १७ ॥ उपसृजन्ति दोषैर्योजयन्ति ॥ १८ ॥ प्रणयं ईर्ष्याम् । आत्मानं चित्तम् । आत्मनि स्वस्मिन् । निरभिमाना दर्पहीना ॥ २१ ॥ इङ्गितं अभिप्रायः अध्यासितः क्षिप्तो यस्मिन् कटाक्षे तस्मात् इङ्गिताध्यासितात् ॥ २२ ॥ चक्षुर्हणः दृष्ट्वैव रिपून् घ्नन्ति तादृशान् । अभिसेवे शत्रुहणान्पार्थानिति क. ट. ध. पाठः ॥ २३ ॥ अभिरूपः सुन्दरः ॥ २४ ॥ अतिरस्कृतसंभाषा तिरस्कारशून्यवचना ॥ २८ ॥ अनर्म परिहासहीनम् । हसितं हासः । स्थानं स्थितिम् । अवस्करे तिरस्करोमि । किरतेरिदं रूपम् । निष्कु-

अवस्करे चिरस्थानं निष्कुटेषु च वर्जये ॥ २९
'अत्यालापमसन्तोषं परव्यापारसंकथाः ।'
अतिहासातिरोषौ च क्रोधस्थानं च वर्जये ॥ ३०
निरताऽहं सदा सत्ये पापानां च विवर्जने ।
सर्वथा भर्तुरहितं न ममेष्टं कथंचन ॥ ३१
यदा प्रवसते भर्ता कुटुम्बार्थेन केनचित् ।
सुमनोवर्णकापेता भवामि व्रतचारिणी ॥ ३२
यच्च भर्ता न पिबति यच्च भर्ता न सेवते ।
यच्च नाश्नाति मे भर्ता सर्वं तद्वर्जयाम्यहम् ॥३३
यथोपदेशं नियता वर्तमाना वराङ्गने ।
स्वलंकृता सुप्रयता भर्तुः प्रियहिते रता ॥ ३४
ये च धर्माः कुटुम्बेषु श्वश्र्वा मे कथिताः पुरा ।
'अनुतिष्ठामि तान्सत्ये नित्यकालमतन्द्रिता॥३५
भिक्षाबलिश्राद्धविधिस्थालीपाकाश्च पर्वसु ।
मान्यानां मानसत्कारा ये चान्ये विदिता मम॥
तान्सर्वाननुवर्तामि दिवारात्रमतन्द्रिता ।
विनयान्नियमांश्चैव सदा सर्वात्मना श्रिता ॥ ३७
मृदून्सतः सत्यशीलान्सत्यधर्मानुपालिनः ।
आशीविषानिव क्रुद्धान्पतीन्परिचराम्यहम् ॥३८
पत्याश्रयो हि मे धर्मो मतः स्त्रीणां सनातनः ।
स देवः सा गतिर्नान्या तस्य का विप्रियं चरेत्३९
अहं पतीन्नातिशये नात्यश्ने नातिभूषये ।
नापि श्वश्रूं परिवदे सर्वदा परियन्त्रिता ॥ ४०
अवधानेन सुभगे नित्योत्थिततयैव च ।
भर्तारो वशगा मह्यं गुरुशुश्रूषयैव च ॥ ४१
नित्यमार्यामहं कुन्तीं वीरसूं सत्यवादिनीम् ।
स्वयं परिचराम्येतां पानाच्छादनभोजनैः ॥ ४२
नैतामतिशये जातु वस्त्रभूषणभोजनैः ।
न वदे चाप्यतिवाचा तां पृथां पृथिवीसमाम् ॥४३
अष्टावग्रे ब्राह्मणानां सहस्राणि स्म नित्यदा ।
भुञ्जते रुक्मपात्रीषु युधिष्ठिरनिवेशने ॥ ४४
अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः ।
त्रिंशद्दासीक एकैको यान्बिभर्ति युधिष्ठिरः ॥४५
दशान्यानि सहस्राणि येषामन्नं सुसंस्कृतम् ।
ह्रियते रुक्मपात्रीभिर्यतीनामूर्ध्वरेतसाम् ॥ ४६
तान्सर्वानग्रहारेण ब्राह्मणान्वेदवादिनः ।
यथार्हं पूजयामि स्म पानाच्छादनभोजनैः ॥ ४७
शतं दासीसहस्राणि कौन्तेयस्य महात्मनः ।
कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलंकृताः ४८
महार्हमाल्याभरणाः सुवर्णाश्चन्दनोक्षिताः ।
मणीन्हेम च बिभ्रत्यो नृत्तगीतविशारदाः ॥४९
तासां नाम च रूपं च भोजनाच्छादनानि च ।
सर्वासामेव वेदाहं कर्म चैव कृताकृतम् ॥ ५०
शतं दासीसहस्राणि कुन्तीपुत्रस्य धीमतः ।
पात्रीहस्ता दिवारात्रमतिथीन्भोजयन्त्युत ॥ ५१
शतमश्वसहस्राणि दशनागायुतानि च ।
युधिष्ठिरस्यानुयात्रमिन्द्रप्रस्थनिवासिनः ॥ ५२
एतदासीत्तदा राज्ञो यन्महीं पर्यपालयत् ।
येषां सङ्ख्याविधिं चैव प्रदिशामि शृणोमि च ५३
अन्तःपुराणां सर्वेषां भृत्यानां चैव सर्वशः ।
आगोपालाविपालेभ्यः सर्वं वेद कृताकृतम् ॥५४
सर्वं राज्ञः समुदयमायं च व्ययमेव च ।
एकाऽहं वेद्मि कल्याणि पाण्डवानां यशस्विनि ॥
मयि सर्वं समासज्य कुटुम्बं भरतर्षभाः ।
उपासनरताः सर्वे घटयन्ति वरानने ॥ ५६
तमहं भारमासक्तमनाधृष्यं दुरात्मभिः ।
सुखं सर्वं परित्यज्य रात्र्यहानि घटामि वै ॥५७
अधृष्यं वरुणस्येव निधिपूर्णमिवोदधिम् ।
एकाहं वेद्मि कोशं वै पतीनां धर्मचारिणाम् ५८
अनिशायां निशायां च विहाय क्षुत्पिपासयोः ।
आराधयन्त्याः कौरव्यांस्तुल्या रात्रिरहश्च मे ५९
प्रथमं प्रतिबुध्यामि चरमं संविशामि च ।
नित्यकालमहं सत्ये एतत्संवननं मम ॥ ६०
एतज्जानाम्यहं कर्तुं भर्तृसंवननं महत् ।

टेषु गृहारामेषु ॥ २९ ॥ सुमनोवर्णकापेता पुष्पैरनुलेपनैश्च वर्जिता ॥ ३२ ॥ मानः पूजा । सत्कार आदरः । ३६ ॥ नातिशये नातिक्रमामि । न परिवदे न निन्दामि ॥ ४० ॥ अवधानेन अप्रमादेन । मह्यं मम ॥४१॥ अग्रहारेण वैश्वदेवान्ते प्रथमदेयेनान्नेन ॥ ४७ ॥ अनुयात्रं स्वैरयात्रायामपि परिवारभूतम् ॥५२॥ वेद वेद्मि ॥५४॥ संवननं वशीकरणम् ॥६०॥

असत्स्त्रीणां समाचारं नाहं कुर्यां न कामये ॥ ६१
वैशंपायन उवाच ।
तच्छ्रुत्वा धर्मसहितं व्याहृतं कृष्णया तदा ।
उवाच सत्या सत्कृत्य पाञ्चालीं धर्मचारिणीं ६२
अभिपन्नाऽस्मि पाञ्चालि याज्ञसेनि क्षमस्व मे ।
कामकारः सखीनां हि सोपहासं प्रभाषितम् ॥ ६३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीसत्यभामासंवादपर्वणि चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥

## पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥

द्रौपद्या सत्यभामांप्रति पतिवशीकरणोपायोपदेशव्याजेन पतिव्रताधर्मकथनम् ॥ १ ॥

द्रौपद्युवाच ।
इमं तु ते मार्गमपेतदोषं
वक्ष्यामि चित्तग्रहणाय भर्तुः ।
अस्मिन्यथावत्सखि वर्तमाना
भर्तारमाच्छेत्स्यसि कामिनीभ्यः ॥ १
नैतादृशं दैवतमस्ति किंचि-
त्सर्वेषु लोकेषु सदेवकेषु ।
यथा पतिस्तस्य तु सर्वकामा
लभ्याः प्रसादे कुपितश्च हन्यात् ॥ २
तस्मादपत्यं विविधाश्च भोगाः
शय्यासनान्यद्भुतदर्शनानि ।
वस्त्राणि माल्यानि तथैव गन्धाः
स्वर्गश्च लोको विपुला च कीर्तिः ॥ ३
सुखं सुखेनेह न जातु लभ्यं
दुःखेन साध्वी लभते सुखानि ।
सा कृष्णमाराधय सौहृदेन
प्रेम्णा च नित्यं प्रतिकर्मणा च ॥ ४
स्नानासनैश्चारुभिरग्र्यमाल्यै-
र्दाक्षिण्ययोगैर्विविधैश्च गन्धैः ।
अस्याः प्रियोऽस्मीति यथा विदित्वा
त्वामेव संश्लिष्यति सर्वभावैः ॥ ५
श्रुत्वा स्वरं द्वारगतस्य भर्तुः
प्रत्युत्थिता तिष्ठ गृहस्य मध्ये ।
दृष्ट्वा प्रविष्टं त्वरिताऽऽसनेन
पाद्येन चैनं प्रतिपूजयस्व ॥ ६
संप्रेषितायामथ चैव दास्या-
मुत्थाय सर्वं स्वयमेव कार्यम् ।
जानातु कृष्णस्तव भावमेतं
सर्वात्मना मां भजतीति सत्ये ॥ ७
त्वत्संनिधौ यत्कथयेत्पतिस्ते
यद्यप्यगुह्यं परिरक्षितव्यम् ।
काचित्सपत्नी तव वासुदेवं
प्रत्यादिशेत्तेन भवेद्विरागः ॥ ८
प्रियांश्च रम्यांश्च हितांश्च भर्तु-
स्तान्भोजयेथा विविधैरुपायैः ।
द्वेष्यैरुपेक्ष्यैरहितैश्च तस्य
भिद्यस्व नित्यं कुहकोद्धतैश्च ॥ ९
मदं प्रमादं पुरुषेषु हित्वा
संयच्छ मानं प्रतिगृह्य वाचम् ।
प्रद्युम्नसाम्बावपि ते कुमारौ
नोपासितव्यौ रहिते कदाचित् ॥ १०
महाकुलीनाभिरपापिकाभिः
स्त्रीभिः सतीभिस्तव सख्यमस्तु ।
चण्डाश्च शौण्डाश्च महाशनाश्च
चोराश्च दुष्टाश्चपलाश्च वर्ज्याः ॥ ११

अभिपन्ना प्रार्थयाना ॥ ६३ ॥ चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥

आच्छेत्स्यसि वलाद्धरिष्यसि । कामिनीभ्यः सपत्नीभ्यः । भर्तारमाकर्षसीति थ. पाठः ॥ १ ॥ प्रतिकर्मणा कायक्लेशेन ॥ ४ ॥ संश्लिष्यति तद्विधस्त्वेति झ. पाठः ॥ ५ ॥ न भवेद्विकार इति ट. पाठः ॥ ८ ॥ तदप्रमादं पुरुषेषु कृत्वेति ध. पाठः । नैवं प्रमाणं कुहकेषु कुर्या इति थ. पाठः । रहिते विजने ॥ १० ॥ चण्डाः क्रूराः । शौण्डाः पराभिभवसमर्थाः ।

एतद्यशस्यं भगवेतनं च
स्वार्थं तदा शत्रुनिबर्हणं च ।
महार्हमाल्याभरणाङ्गरागा
भर्तारमाराधय पुण्यगन्धैः ॥ १२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीसत्यभामासंवादपर्वणि पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥

## षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥

प्रियोक्तिभिर्द्रौपदीं परिसान्त्वितवत्या सत्यभामया सह श्रीकृष्णेन स्वपुरंप्रति गमनम् ॥ १ ॥

वैशंपायन उवाच ।
मार्कण्डेयादिभिर्विप्रैः पाण्डवैश्च महात्मभिः ।
कथाभिरनुकूलाभिः सह स्थित्वा जनार्दनः ॥ १
ततस्तैः संविदं कृत्वा यथावन्मधुसूदनः ।
आरुरुक्षू रथं सत्यामाह्वयामास भारत ॥ २
सत्यभामा ततस्तत्र स्वजित्वा द्रुपदात्मजाम् ।
उवाच वचनं हृद्यं यथाभावं समाहितम् ॥ ३
कृष्णे माभूत्तवोत्कण्ठा मा व्यथा मा प्रजागरः ।
भर्तृभिर्देवसंकाशैर्जितां प्राप्स्यसि मेदिनीम् ॥ ४
न ह्येवं शीलसंपन्ना नैवं पूजितलक्षणाः ।
प्राप्नुवन्ति चिरं क्लेशं यथा त्वमसितेक्षणे ॥ ५
अवश्यं च त्वया भूमिरियं निहतकण्टका ।
भर्तृभिः सह भोक्तव्या निर्द्वन्द्वेति श्रुतं मया ॥ ६
धार्तराष्ट्रवधं कृत्वा वैराणि प्रतियात्य च ।
युधिष्ठिरस्थां पृथिवीं द्रष्टासि द्रुपदात्मजे ॥ ७
यास्ताः प्रव्राजमानां त्वां प्राहसन्दर्पमोहिताः ।
ताः क्षिप्रं हतसंकल्पा द्रक्ष्यसि त्वं कुरुस्त्रियः ॥ ८
तव दुःखोपपन्नाया यैराचरितमप्रियम् ।
विद्धि संप्रस्थितान्सर्वांस्तान्कृष्णे यमसादनम् ॥ ९
पुत्रस्ते प्रतिविन्ध्यश्च सुतसोमस्तथाविधः ।
श्रुतकर्माऽर्जुनिश्चैव शतानीकश्च नाकुलिः ॥ १०
सहदेवाच्च यो जातः श्रुतसेनस्तवात्मजः ।
सर्वे कुशलिनो वीराः कृतास्त्राश्च सुतास्तव ॥ ११
अभिमन्युरिव प्रीता द्वारवत्यां रता भृशम् ।
त्वमिवैषां सुभद्रा च प्रीत्या सर्वात्मना स्थिता ॥ १२
प्रीयते तव निर्द्वन्द्वा तेभ्यश्च विगतज्वरा ।
दुःखिता तेन दुःखेन सुखेन सुखिता तथा ॥ १३
भजेत्सर्वात्मना चैव प्रद्युम्नजननी तथा ।
भानुप्रभृतिभिश्चैनान्विशिनष्टि च केशवः ॥ १४
भोजनाच्छादने चैषां नित्यं मे श्वशुरः स्थितः ।
रामप्रभृतयः सर्वे भजन्त्यन्धकवृष्णयः ॥ १५
तुल्यो हि प्रणयस्तेषां प्रद्युम्नस्य च भामिनि ।
एवमादि प्रियं सत्यं हृद्यमुक्त्वा मनोनुगम् ॥ १६
गमनाय मनश्चक्रे वासुदेवरथं प्रति ।
तां कृष्णां कृष्णमहिषी चकाराभिप्रदक्षिणम् ॥ १७
आरुरोह रथं शौरेः सत्यभामाऽथ भामिनी ।
स्मयित्वा तु यदुश्रेष्ठो द्रौपदीं परिसान्त्व्य च ।
उपावर्त्य ततः शीघ्रैर्हयैः प्रायात्परंतपः ॥ १८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीसत्यभामासंवादपर्वणि षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥

### समाप्तमिदं द्रौपदीसत्यभामासंवादपर्व ॥ १२ ॥

महाशनाः बहुभुजः । दुष्टाः द्वेषाद्याक्रान्ताः । स्त्रियो वर्ज्या इति शेषः ॥ ११ ॥ भगदैवतमिति झ. पाठः । भगदैवतं भाग्यकरम् ॥ १२ ॥ पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥
संविदं संभाषाम् ॥ २ ॥ स्वजित्वा आश्लिष्य ॥ ३ ॥ कृष्णे हे द्रौपदि ॥ ४ ॥ निर्द्वन्द्वा निष्प्रतिपक्षा ॥ ६ ॥ प्रणयः स्नेहः ॥ १६ ॥ उपावर्त्य पाण्डवानिति शेषः ॥ १८ ॥ षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥

# (अथ घोषयात्रापर्व ॥ १३ ॥)

## सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥

कस्माच्चिद्ब्राह्मणात्पाण्डववृत्तान्तं श्रुतवता धृतराष्ट्रेण पाण्डवान्प्रति परिशोचनम् ॥ १ ॥ तथा पाण्डवपराक्रमानुसरणेन स्वपुत्राणां भाविवधनिर्धारणपूर्वकं तान्प्रति परिशोचनम् ॥ २ ॥

जनमेजय उवाच ।

एवं वने वर्तमाना नराग्र्याः
शीतोष्णवातातपकर्शिताङ्गाः ।
सरस्तदासाद्य वनं च पुण्यं
ततः परं किमकुर्वन्त पार्थाः ॥ १

वैशंपायन उवाच ।

सरस्तदासाद्य तु पाण्डुपुत्रा
जनं समुत्सृज्य विधाय चेष्टम् ।
वनानि रम्याण्यथ पर्वतांश्च
नदीप्रदेशांश्च तदा विचेरुः ॥ २

तथा वने तान्वसतः प्रवीरान्
स्वाध्यायवन्तश्च तपोधनाश्च ।
अभ्याययुर्वेदविदः पुराणा-
स्तान्पूजयामासुरथो नराग्र्याः ॥ ३

ततः कदाचित्कुशलः कथासु
विप्रोऽभ्यगच्छद्भुवि कौरवेयान् ।
स तैः समेत्याथ यदृच्छयैव
वैचित्रवीर्यं नृपमभ्यगच्छत् ॥ ४

अथोपविष्टः प्रतिसत्कृतश्च
वृद्धेन राज्ञा कुरुसत्तमेन ।
प्रचोदितः संकथयांबभूव
धर्मानिलेन्द्रप्रभवान्यमौ च ॥ ५

कृशांश्च वातातपकर्शिताङ्गान्
दुःखस्य चोग्रस्य मुखे प्रपन्नान् ।
तां चाप्यनाथामिव वीरनाथां
कृष्णां परिक्लेशगुणेन युक्ताम् ॥ ६

ततः कथास्तस्य निशम्य राजा
वैचित्रवीर्यः कृपयाऽभितप्तः ।
वने तथा पार्थिवपुत्रपौत्रा-
ञ्श्रुत्वा तथा दुःखनदीं प्रपन्नान् ॥ ७

प्रोवाच दैन्याभिहतान्तरात्मा
निश्वासवातोपहतस्तदानीम् ।
वाचं कथंचित्स्थिरतामुपेत्य
तत्सर्वमात्मप्रभवं विचिन्त्य ॥ ८

कथंनु सत्यः शुचिरार्यवृत्तः
श्रेष्ठः सुतानां मम धर्मराजः ।
अजातशत्रुः पृथिवीतले स
शेते पुरा राङ्कवकूटशायी ॥ ९

प्रबोध्यते मागधसूतपुत्रै-
र्नित्यं स्तुवद्भिः स्वयमिन्द्रकल्पः ।
पतत्रिसङ्घैः स जघन्यरात्रे
प्रबोध्यते नूनमिलातलस्थः ॥ १०

कथंनु वातातपकर्शिताङ्गो
वृकोदरः कोपपरिप्लुताङ्गः ।
शेते पृथिव्यामतथोचिताङ्गः
कृष्णासमक्षं वसुधातलस्थः ॥ ११

तथाऽर्जुनः सुकुमारो मनस्वी
वशे स्थितो धर्मसुतस्य राज्ञः ।
विदूयमानैरिव सर्वगात्रै-
र्ध्रुवं न शेते वसतीरमर्षात् ॥ १२

यमौ च कृष्णां च युधिष्ठिरं च
भीमं च दृष्ट्वा सुखविप्रयुक्तान् ।
विनिःश्वसन्सर्प इवोग्रतेजा
ध्रुवं न शेते वसतीरमर्षात् ॥ १३

तथा यमौ चाप्यसुखौ सुखार्हौ
समृद्धरूपावमरौ दिवीव ।

सरो द्वैतवनस्थम् ॥ १ ॥ जनं समुदायम् ॥ २ ॥ वने द्वैतवने ॥ ३ ॥ नृपं धृतराष्ट्रम् ॥ ४ ॥ रङ्कोर्मृगविशेषस्य लोम- राशिमयीतूलिका राङ्कवकूटम् ॥ ९ ॥ उग्रतेजा अर्जुनः ॥ १३ ॥

प्रजागरस्थौ ध्रुवमप्रशान्तौ
क्रोधेन सत्येन च वार्यमाणौ ॥ १४

समीरणेनाथ समो बलेन
समीरणस्यैव सुतो बलीयान् ।
स धर्मपाशेन सितोऽग्रजेन
ध्रुवं विनिःश्वस्य सहत्यमर्षम् ॥ १५

स चापि भूमौ परिवर्तमानो
वधं सुतानां मम काङ्क्षमाणः ।
सत्येन धर्मेण च वार्यमाणः
कालं प्रतीक्षत्यधिको रणेऽन्यैः ॥ १६

अजातशत्रौ तु जिते निकृत्या
दुःशासनो यत्परुषाण्यवोचत् ।
तानि प्रविष्टानि वृकोदराङ्गं
दहन्ति कक्षाग्निरिवेन्धनानि ॥ १७

न पापकं ध्यास्यति धर्मपुत्रो
धनंजयश्चाप्यनुवर्त्स्यते तम् ।
अरण्यवासेन विवर्धते तु
भीमस्य कोपोऽग्निरिवानिलेन ॥ १८

स तेन कोपेन विदीर्यमाणः
करं करेणाभिनिपीड्य वीरः ।
विनिःश्वसत्युष्णमतीव घोरं
दहन्निवेमां मम पुत्रसेनाम् ॥ १९

गाण्डीवधन्वा च वृकोदरश्च
संरम्भिणावन्तककालकल्पौ ।
न शेषयेतां युधि शत्रुसेनां
शरान्किरन्तावशनिप्रकाशान् ॥ २०

दुर्योधनः शकुनिः सूतपुत्रो
दुःशासनश्चापि सुमन्दचेताः ।
मधु प्रपश्यन्ति न तु प्रपातं
वृकोदरं चैव धनंजयं च ॥ २१

शुभाशुभं कर्म नरो हि कृत्वा
प्रतीक्षते चेत्स फलं विपाके ।
स तेन युज्यत्यवशः फलेन
मोक्षः कथं स्यात्पुरुषस्य तस्मात् ॥ २२

क्षेत्रे सुकृष्टे ह्युपिते च बीजे
देवे च वर्षत्यृतुकालयुक्तम् ।
न स्यात्फलं तस्य कुतः प्रसिद्धि-
रन्यत्र दैवादिति नास्ति हेतुः ॥ २३

कृतं मताक्षेण यथा न साधु
साधुप्रवृत्तेन च पाण्डवेन ।
मया च दुष्पुत्रवशानुगेन
कृतः कुरूणामयमन्तकालः ॥ २४

ध्रुवं प्रशाम्यत्यसमीरितोऽग्नि-
र्ध्रुवं प्रजास्यत्युत गर्भिणी या ।
ध्रुवं दिनादौ रजनीप्रणाश-
स्तथा क्षपादौ च दिनप्रणाशः ॥ २५

कृते च कस्मान्न परे च कुर्यु-
र्दत्ते च दद्युः पुरुषाः कथंचित् ।
प्राप्यार्थकालं च भवेदनर्थः
कथंचन स्यादिति तत्कुतः स्यात् ॥ २६

कथं न भिद्येत न च स्रवेत
न च प्रसिच्येदिति रक्षितव्यम् ।
अरक्ष्यमाणं शतधा प्रकीर्ये-
द्ध्रुवं न नाशोऽस्ति कृतस्य लोके ॥ २७

गतो ह्यरण्यादपि शक्रलोकं
धनंजयः पश्यत वीर्यमस्य ।
अस्त्राणि दिव्यानि चतुर्विधानि
ज्ञात्वा पुनर्लोकमिमं प्रपन्नः ॥ २८

स्वर्गं हि गत्वा सशरीर एव
को मानुषः पुनरागन्तुमिच्छेत् ।
अन्यत्र कालोपहताननेका-
न्समीक्षमाणस्तु कुरून्मुमूर्षून् ॥ २९

प्रजागरस्थौ भुवि शयाते इति शेषः ॥ १४ ॥ अन्यैः अन्येभ्यः अधिकः ॥ १६ ॥ उपिते न्युप्ते । एवं मच्चित्ते दुर्योधनादीनां च चित्ते वृद्धहितोपदेशो वृथा भवतीति भावः ॥ २३ ॥ मताक्षेण शकुनिना पाण्डवेन च तदानीमेव तान् अनिघ्नता ॥ २४ ॥ प्रजास्यति अपत्यं जनयिष्यति । क्षपादौ रात्र्यादौ । एतस्य पापस्य फलं अपरिहार्यमिति भावः ॥ २५ ॥ सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥

धनुर्ग्राहश्चार्जुनः सव्यसाची
धनुश्च तद्गाण्डिवं भीमवेगम् ।
अस्त्राणि दिव्यानि च तानि तस्य
त्रयस्य तेजः प्रसहेत कोऽत्र ॥ ३०

निशम्य तद्वचनं पार्थिवस्य
दुर्योधनं रहिते सौबलोऽथ ।
अबोधयत्कर्णमुपेत्य सर्वं
स चाप्यहृष्टोऽभवदल्पचेताः ॥ ३१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥

## अष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥

कर्णशकुनिभ्यां दुर्योधनंप्रति स्ववैभवप्रदर्शनेन पाण्डवानां दुःखजननाय द्वैतवनगमनचोदना ॥ १ ॥

वैशंपायन उवाच ।
धृतराष्ट्रस्य तद्वाक्यं निशम्य शकुनिस्तदा ।
दुर्योधनमिदं काले कर्णेन सहितोऽब्रवीत् ॥ १
प्रव्राज्य पाण्डवान्वीरान्स्वेन वीर्येण भारत ।
भुङ्क्ष्वेमां पृथिवीमेको दिवि शम्बरहा यथा ॥ २
'तवाद्य पृथिवी राजन्नखिला सागराम्बरा ।
सपर्वतवनाकारा सहस्थावरजङ्गमा ॥' ३
प्राच्याश्च दाक्षिणात्याश्च प्रतीच्योदीच्यवासिनः ।
कृताः करप्रदाः सर्वे राजानस्ते नराधिप ॥ ४
या हि सा दीप्यमानेव पाण्डवान्भजते पुरा ।
साऽद्य लक्ष्मीस्त्वया राजन्नवाप्ता भ्रातृभिः सह ॥५
इन्द्रप्रस्थगते यां तां दीप्यमानां युधिष्ठिरे ।
अपश्याम श्रियं राजन्सुचिरं शोककर्शिताः ॥ ६
सा तु बुद्धिबलेनेयं राज्ञस्तस्मात्तथाविधात् ।
त्वयाक्षिप्ता महाबाहो दीप्यमानेव दृश्यते ॥ ७
तथैव तव राजेन्द्र राजानः परवीरहन् ।
शासनेऽधिष्ठिताः सर्वे किं कुर्म इति वादिनः ॥८
ते वयं पृथिवी राजन्निखिला सागराम्बरा ।
सपर्वतवना देवी सग्रामनगराकरा ॥ ९
नानावनोद्देशवती पत्तनैरुपशोभिता ।
'नानाजनपदाकीर्णा स्फीतराष्ट्रा महाबला ॥'१०
नन्द्यमानो द्विजै राजन्भासि नक्षत्रराडिव ।
पौरुषाद्दिवि देवेषु भ्राजसे रश्मिवानिव ॥ ११
रुद्रैरिव यमो राजा मरुद्भिरिव वासवः ।
कुरुभिस्त्वं वृतो राजन्भासि नक्षत्रराडिव ॥ १२
यैः स्म ते नाद्रियेताज्ञा न च ये शासने स्थिताः
पश्यामस्तान्श्रिया हीनान्पाण्डवान्वनवासिनः ॥
श्रूयते हि महाराज सरो द्वैतवनं प्रति ।
वसन्तः पाण्डवाः सार्धं ब्राह्मणैर्वनवासिभिः ॥१४
स प्रयाहि महाराज श्रिया परमया युतः ।
तापयन्पाण्डुपुत्रांस्त्वं रश्मिवानिव तेजसा ॥ १५
स्थितो राज्ये च्युतान्राज्याच्छ्रियाहीनाञ्श्रियावृतः
असमृद्धान्समृद्धार्थः पश्य पाण्डुसुतान्नृप ॥ १६
महाभिजनसंपन्नं भद्रे महति संस्थितम् ।
पाण्डवास्त्वाऽभिवीक्षन्तु ययातिमिव नाहुषम् ॥१७
यां श्रियं सुहृदश्चैव दुर्हृदश्च विशांपते ।
पश्यन्ति पौरुषैर्दीप्तां सा समर्था भवत्युत ॥ १८
समस्थो विषमस्थान्हि दुर्हृदो योऽभिवीक्षते ।
जगतीस्थानिवाद्रिस्थः किमतः परमं सुखम् ॥१९
न पुत्रधनलाभेन न राज्येनापि विन्दति ।
प्रीतिं नृपतिशार्दूल याममित्राघदर्शनात् ॥ २०
किंनु तस्य सुखं न स्यादाश्रमे यो धनंजयम् ।
अभिवीक्षेत सिद्धार्थो वल्कलाजिनवाससम् ॥२१
सुवाससो हि ते भार्या वल्कलाजिनसंवृताम् ।
पश्यन्तु दुःखितां कृष्णां सा च निर्विद्यतां पुनः ॥
विनिन्दतां तथाऽऽत्मानं जीवितं च धनच्युतम् ।

प्रतीच्या उदीच्याश्च देशास्तद्वासिनः । ते त्वया ॥ ४ ॥ नाद्रियेत नादृता ॥ १३ ॥ त्वा त्वाम् ॥ १७ ॥ समर्था सुहृदां हर्षं शत्रूणां च शोकं दातुमिति शेषः ॥ १८ ॥ अघं दुःखम् ॥ २० ॥ निर्विद्यतां जीवितादपि विरक्ता भवतु ॥ २२ ॥ अष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥

'दाराणां ते श्रियं दृष्ट्वा दीप्तामद्य जनाधिप॥'२३
न तथा हि सभामध्ये तस्या भवितुमर्हति ।
वैमनस्यं यथा दृष्ट्वा तव भार्याः स्वलंकृताः ॥२४

वैशंपायन उवाच ।
एवमुक्त्वा तु राजानं कर्णः शकुनिना सह ।
तूष्णीं बभूवतुरुभौ वाक्यान्ते जनमेजय ॥ २५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि अष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥

## एकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥

कर्णशकुन्यादिभिर्द्वैतवनगमने घोषयात्राया उपायत्वनिर्धारणम् ॥ १ ॥

वैशंपायन उवाच ।
कर्णस्य वचनं श्रुत्वा राजा दुर्योधनस्ततः ।
हृष्टो भूत्वा पुनर्दीनो राधेयमिदमब्रवीत् ॥ १
ब्रवीषि यदिदं कर्ण सर्वं मनसि मे स्थितम् ।
न त्वभ्यनुज्ञां लप्स्यामि गमने यत्र पाण्डवाः॥२
परिदेवति तान्वीरान्धृतराष्ट्रो महीपतिः ।
मन्यतेऽभ्यधिकांश्चापि तपोयोगेन पाण्डवान्॥३
अथवाऽप्यनुबुध्येत नृपोऽस्माकं चिकीर्षितम् ।
एतामप्यायतिं रक्षन्नाभ्यनुज्ञातुमर्हति ॥ ४
न हि द्वैतवने किंचिद्विद्यतेऽन्यत्प्रयोजनम् ।
उन्माथनमृते तेषां वनस्थानामपि द्विषाम् ॥ ५
जानासि हि यथा क्षत्ता द्यूतकाल उपस्थिते ।
अब्रवीद्यच्च मां त्वां च सौबलं वचनं तदा ॥ ६
तानि सर्वाणि वाक्यानि यच्चान्यत्परिदेवितम् ।
विचिन्त्य निश्चयं गच्छे गमनायेतराय वा ॥ ७
ममापि हि महान्हर्षो यदहं भीमफल्गुनौ ।
क्लिष्टावरण्ये पश्येयं कृष्णया सहिताविति ॥ ८
न तथा ह्याप्नुयां प्रीतिमवाप्य वसुधामिमाम् ।
दृष्ट्वा यथा पाण्डुसुतान्वल्कलाजिनवाससः ॥ ९
किंनु स्यादधिकं तस्माद्यदहं द्रुपदात्मजाम् ।
द्रौपदीं कर्ण पश्येयं काषायवसनां वने ॥ १०
यदि मां धर्मराजश्च भीमसेनश्च पाण्डवः ।
युक्तं परमया लक्ष्म्या पश्येतां जीवितं भवेत्॥११
उपायं न तु पश्यामि येन गच्छेम तद्वनम् ।
यथा चाभ्यनुजानीयाद्गच्छन्तं मां महीपतिः॥१२
स सौबलेन सहितस्तथा दुःशासनेन च ।
उपायं पश्य निपुणं येन गच्छेम तद्वनम् ॥ १३
अहमप्यनुगच्छामि गमनायेतराय च ।
कल्यमेव गमिष्यामि समीपं पार्थिवस्य ह ॥ १४
मयि तत्रोपविष्टे तु भीष्मे च कुरुसत्तमे ।
उपायो यो भवेद्दृष्टस्तं ब्रूयाः सहसौबलः ॥ १५
ततो भीष्मस्य राज्ञश्च निशम्य गमनं प्रति ।
व्यवसायं करिष्येऽहमनुनीय पितामहम् ॥ १६
तथेत्युक्त्वा तु ते सर्वे जग्मुरावसथान्प्रति ।
व्युषितायां रजन्यां तु कर्णो राजानमभ्ययात्॥१७
ततो दुर्योधनं कर्णः प्रहसन्निदमब्रवीत् ।
उपायः परिदृष्टोऽयं तं निबोध जनेश्वर ॥ १८
घोषा द्वैतवने सर्वे त्वत्प्रतीक्षा नराधिप ।
घोषयात्रापदेशेन गमिष्यामो न संशयः ॥ १९
उचितं हि सदा गन्तुं घोषयात्रां विशांपते ।
एवं चेत्त्वां पिता राजन्समनुज्ञातुमर्हति ॥ २०
तथा कथयमानौ तु घोषयात्राविनिश्चयम् ।
गान्धारराजः शकुनिरित्युवाच हसन्निव ॥ २१
उपायोऽयं मया दृष्टो गमनाय निरामयः ।
अनुज्ञास्यति नो राजा चोदयिष्यति चाप्युत॥२२

आयतिमुत्तरकालम् ॥ ४ ॥ इतरायावस्थानाय ॥ ७ ॥
लक्ष्म्या उपेतं पश्येतां चेज्जीवितं युक्तमिति संबन्धः ॥ ११ ॥
अहमप्यद्य निश्चित्य इति झ. पाठः । कल्यं प्रातः ॥ १४ ॥
वचो भीष्मस्य इति झ. पाठः ॥ १५ ॥ घोषा गोव्रजाः॥१९॥
अयमुपायो घोषयात्रैव ॥ २२ ॥

घोषा द्वैतवने सर्वे त्वत्प्रतीक्षा नराधिप ।
घोषयात्रापदेशेन गमिष्यामः सरः प्रति ॥ २३
ततः प्रहसिताः सर्वे तेऽन्योन्यस्य तलान्ददुः ।
तदेव च विनिश्चित्य ददृशुः कुरुसत्तमम् ॥ २४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि एकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥

## चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥

दुर्योधनेन घोषयात्राव्याजेनानुजादिभिः सह द्वैतवनंप्रति गमनम् ॥ १ ॥

वैशंपायन उवाच ।
धृतराष्ट्रं ततः सर्वे ददृशुर्जनमेजय ।
दृष्ट्वा सुखमथो राज्ञः पृष्टा राज्ञा च भारत ॥ १
ततस्तैर्विहितः पूर्वं संगवो नाम वल्लवः ।
समीपस्थास्तदा गावो धृतराष्ट्रे न्यवेदयत् ॥ २
अनन्तरं च राधेयः शकुनिश्च विशांपते ।
आहतुः पार्थिवश्रेष्ठं धृतराष्ट्रं जनाधिपम् ॥ ३
रमणीयेषु देशेषु घोषाः संप्रति कौरव ।
स्मारणे समयः प्राप्तो वत्सानामपि चाङ्कनम् ॥ ४
मृगया चोचिता राजन्नस्मिन्काले सुतस्य ते ।
दुर्योधनस्य गमनं त्वमनुज्ञातुमर्हसि ॥ ५
धृतराष्ट्र उवाच ।
मृगया शोभना तात गवां हि समवेक्षणम् ।
विस्रम्भस्तु न गन्तव्यो वल्लवानामिति स्मरे ॥ ६
ते तु तत्र नरव्याघ्राः समीप इति नः श्रुतम् ।
अतो नाभ्यनुजानामि गमनं तत्र वः स्वयम् ॥ ७
छद्मना निर्जितास्ते तु कर्शिताश्च महावने ।
तपोनित्याश्च राधेय समर्थाश्च महारथाः ॥ ८
धर्मराजो न संक्रुध्येद्भीमसेनस्त्वमर्षणः ।
यज्ञसेनस्य दुहिता तेज एव तु केवलम् ॥ ९
यूयं चाप्यपराध्येयुर्दर्पमोहसमन्विताः ।
ततो विनिर्दहेयुस्ते तपसा हि समन्विताः ॥ १०
अथवा सायुधा वीरा मन्युनाऽभिपरिप्लुताः ।
सहिता बद्धनिस्त्रिंशा दहेयुः शस्त्रतेजसा ॥ ११
अथ यूयं बहुत्वात्तान्नारभध्वं कथंचन ।
अनार्यं परमं तत्स्यादशक्यं तच्च वै मतम् ॥ १२
उषितो हि महाबाहुरिन्द्रलोके धनंजयः ।
दिव्यान्यस्त्राण्यवाप्याथ ततः प्रत्यागतो वनं १३
अकृतास्त्रेण पृथिवी जिता बीभत्सुना पुरा ।
किं पुनः स कृतास्त्रोऽद्य न हन्याद्वो महारथः १४
अथवा मद्वचः श्रुत्वा तत्र यत्ता भविष्यथ ।
उद्विग्नवासा विस्रब्धा दुःखं तत्र गमिष्यथ ॥ १५
अथवा सैनिकाः केचिदपकुर्युर्युधिष्ठिरे ।
तदबुद्धिकृतं कर्म दोषमुत्पादयेच्च वः ॥ १६
तस्मादन्ये नरा यान्तु स्मारणायाप्तकारिणः ।
न स्वयं तत्र गमनं रोचये तव भारत ॥ १७
शकुनिरुवाच ।
धर्मज्ञः पाण्डवो ज्येष्ठः प्रतिज्ञातं च संसदि ।
तेन द्वादशवर्षाणि वस्तव्यानीति भारत ॥ १८
अनुवृत्ताश्च तं सर्वे पाण्डवा धर्मचारिणः ।
युधिष्ठिरस्तु कौन्तेयो न नः कोपं करिष्यति १९
मृगयां चैव नो गन्तुमिच्छा संवर्धते भृशम् ।
स्मारणं तु चिकीर्षामो न तु पाण्डवदर्शनम् ॥ २०
न चानार्यसमाचारः कश्चित्तत्र भविष्यति ।
न च तत्र गमिष्यामो यत्र तेषां प्रतिश्रयः ॥ २१
वैशंपायन उवाच ।
एवमुक्तः शकुनिना धृतराष्ट्रो जनेश्वरः ।
दुर्योधनं सहामात्यमनुजज्ञे न कामतः ॥ २२
अनुज्ञातस्तु गान्धारिः कर्णेन सहितस्तदा ।
निर्ययौ भरतश्रेष्ठो बलेन महता वृतः ॥ २३

तलान् हस्ततलानि ॥ २४ ॥ एकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥

समङ्गो नाम इति झ. पाठः ॥ २ ॥ स्मारणे स्मरणहेतौ कर्मणि गवां संख्यापूर्वकं वयोवर्णजातिनाम्नां लेखने ॥ ४ ॥ ते पाण्डवाः ॥ ७ ॥ तेजोऽग्निरेव ॥ ९ ॥

दुःशासनेन च तथा सौबलेन च धीमता ।
संवृतो भ्रातृभिश्चान्यैः स्त्रीभिश्चापि सहस्रशः २४
तं निर्यान्तं महाबाहुं द्रष्टुं द्वैतवनं सरः ।
पौराश्चानुययुः सर्वे सहदारा वनं च तत् ॥ २५
अष्टौ रथसहस्राणि त्रीणि नागायुतानि च ।
पत्तयो बहुसाहस्रा हयाश्च नवतिः शताः ॥ २६
शकटापणवेशाश्च वणिजो वन्दिनस्तथा ।
नराश्च मृगयाशीलाः शतशोऽथ सहस्रशः ॥२७
ततः प्रयाणे नृपतेः सुमहानभवत्स्वनः ।
प्रावृषीव महावायोरुत्थितस्य विशांपते ॥ २८
गव्यूतिमात्रे न्यवसद्राजा दुर्योधनस्तदा ।
प्रयातो वाहनैः सर्वैस्ततो द्वैतवनं सरः ॥ २९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥

## एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥

द्वैतवने सरोऽभितः क्रीडास्थाननिर्माणायाज्ञप्तानां दुर्योधनभृत्यानां पूर्वमेव तत्रागतैर्गन्धर्वैः प्रतिवारणम् ॥ १ ॥ भृत्यैर्गन्धर्वकृतनिवारणं निवेदितेन दुर्योधनेन तेषामुत्सारणाय सेनाप्रेषणम् ॥ २ ॥ गन्धर्वैः परुषभाषणैर्भीषितैर्भटैर्दुर्योधनंप्रति तन्निवेदनम् ॥ ३ ॥

वैशंपायन उवाच ।
अथ दुर्योधनो राजा तत्रतत्र वने वसन् ।
जगाम घोषानभितस्तत्र चक्रे निवेशनम् ॥ १
रमणीये समाज्ञाते सोदके समहीरुहे ।
देशे सर्वगुणोपेते चक्रुरावसथान्नराः ॥ २
तथैव तत्समीपस्थान्पृथगावसथान्बहून् ।
कर्णस्य शकुनेश्चैव भ्रातॄणां चैव सर्वशः ॥ ३
पश्यन्तस्ते तदा गावः शतशोऽथ सहस्रशः ।
अङ्कैर्लक्षैश्च ताः सर्वा लक्षयामास पार्थिवः ॥ ४
अङ्कयामास वत्सांश्च जज्ञे चोपसृतांस्त्वपि ।
बालवत्साश्च या गावः कालयामास ता अपि॥५
अथ स स्मारणं कृत्वा लक्षयित्वा त्रिहायनान् ।
वृतो गोपालकैः प्रीतो व्याहरत्कुरुनन्दनः ॥ ६
स च पौरजनः सर्वः सैनिकाश्च सहस्रशः ।
यथोपजोषं चिक्रीडुर्वने तस्मिन्यथाऽमराः ॥ ७
ततोऽध्वगमनाच्छ्रान्तं कुशला नृत्यवादितैः ।
धार्तराष्ट्रमुपातिष्ठन्कन्याश्चैव स्वलंकृताः ॥ ८
स स्त्रीगणवृतो राजा प्रहृष्टः प्रददौ वसु ।
तेभ्यो यथार्हमन्नानि पानानि विविधानि च ॥९
ततस्ते सहिताः सर्वे तरक्षून्महिषान्मृगान् ।
गवयर्क्षवराहांश्च समन्तात्पर्यवारयन् ॥ १०
स ताञ्छरैर्विनिर्भिद्य गजांश्च सुबहून्वने ।
रमणीयेषु देशेषु ग्राहयामास वै मृगान् ॥ ११
गोरसानुपयुञ्जान उपभोगांश्च भारत ।
पश्यन्स रमणीयानि वनान्युपवनानि च ॥ १२
मत्तभ्रमरजुष्टानि बर्हिणाभिरुतानि च ।
अगच्छदानुपूर्व्येण पुण्यं द्वैतवनं सरः ॥ १३
मत्तभ्रमरसंजुष्टं नीलकण्ठरवाकुलम् ।
सप्तच्छदसमाकीर्णं पुन्नागबकुलैर्युतम् ॥ १४
ऋद्ध्या परमया युक्तो महेन्द्र इव वज्रभृत् ।
यदृच्छया च तत्रस्थो धर्मपुत्रो युधिष्ठिरः ॥ १५
ईजे राजर्षियज्ञेन साद्यस्केन विशांपते ।
दिव्येन विधिना चैव वन्येन कुरुसत्तम ॥ १६
'विद्वद्भिः सहितो धीमान्ब्राह्मणैर्वनवासिभिः ।'
कृत्वा निवेशमभितः सरसस्तस्य कौरव ।
द्रौपद्या सहितो धीमान्धर्मपत्न्या नराधिपः ॥१७

वेशो वेश्याजनाश्रयः ॥ २७ ॥ गव्यूतिः क्रोशद्वयम् ॥ २९ ॥ चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥

स ददर्श तदा गावः इति झ. पाठः । अङ्कैश्चिह्नैः । लक्षैः संख्यानैः । लक्षा नपुंसि संख्यायामिति मेदिनी ॥ ४ ॥ जज्ञे ज्ञातवान् । उपसृतान् दमनार्हान् वत्सतरान्समीपागतान्वा कालयामास संख्यातवान् ॥ ५ ॥ त्रिहायनांस्त्रिवर्षान्वृषान् । व्याहरत् विजहार ॥ ६ ॥ यथोपजोषं यथारुचि ॥ ७ ॥ साद्यस्केन एकाहसाध्येन ॥ १६ ॥

ततो दुर्योधनः प्रेष्यानादिदेश सहानुजः ।
आक्रीडावसथाञ्शीघ्रं कुरुध्वं सरसोऽभितः ॥ १८
ते तथेत्येव कौरव्यमुक्त्वा वचनकारिणः ।
चिकीर्षन्तस्तदाक्रीडाञ्जग्मुर्द्वैतवनं सरः ॥ १९
सेनाग्र्यं धार्तराष्ट्रस्य प्राप्तं द्वैतवनं सरः ॥ २०
प्रविशन्तं वनद्वारि गन्धर्वाः समवारयन् ।
तत्र गन्धर्वराजो वै पूर्वमेव विशांपते ।
कुबेरभवनाद्राजन्नाजगाम गणावृतः ॥ २१
गणैरप्सरसां चैव त्रिदशानां तथाऽऽत्मजैः ।
विहारशीलैः क्रीडार्थं तेन तत्संवृतं सरः ॥ २२
तेन तत्संवृतं दृष्ट्वा ते राजपरिचारकाः ।
प्रतिजग्मुस्ततो राजन्यत्र दुर्योधनो नृपः ॥ २३
स तु तेषां वचः श्रुत्वा सैनिकान्युद्धदुर्मदान् ।
प्रेषयामास कौरव्य उत्सारयत तानिति ॥ २४
तस्य तद्वचनं श्रुत्वा राज्ञः सेनाग्रयायिनः ।
सरो द्वैतवनं गत्वा गन्धर्वानिदमब्रुवन् ॥ २५
राजा दुर्योधनो नाम धृतराष्ट्रसुतो बली ।
विक्रीडिषुरिहायाति तदर्थमपसर्पत ॥ २६
एवमुक्तास्तु गन्धर्वाः प्रहसन्तो विशांपते ।
प्रत्यब्रुवंस्तान्पुरुषानिदं हि परुषं वचः ॥ २७
न चेतयति वो राजा मन्दबुद्धिः सुयोधनः ।
योऽस्मानाज्ञापयत्येवं वश्यानिव दिवौकसः ॥ २८
यूयं मुमूर्षवश्चापि मन्दप्रज्ञा न संशयः ।
ये तस्य वचनादेवमस्मान्ब्रूथ विचेतसः ॥ २९
गच्छध्वं त्वरिताः सर्वे यत्र राजा स कौरवः ।
न चेदद्यैव गच्छध्वं धर्मराजनिवेशनम् ॥ ३०
एवमुक्तास्तु गन्धर्वै राज्ञः सेनाग्रयायिनः ।
संप्राद्रवन्यतो राजा धृतराष्ट्रसुतोऽभवत् ॥ ३१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥

## द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥

गन्धर्वैःसह कौरवाणामायोधनम् ॥ १ ॥ चित्रसेनादिभिर्विरथीकृतेन कर्णेन रणाङ्गणात्पलायनम् ॥ २ ॥

वैशंपायन उवाच ।
ततस्ते सहिताः सर्वे दुर्योधनमुपागमन् ।
अब्रुवंश्च महाराज यदूचुः कौरवं प्रति ॥ १
गन्धर्वैर्वारिते सैन्ये धार्तराष्ट्रः प्रतापवान् ।
अमर्षपूर्णः सैन्यानि प्रत्यभाषत भारत ॥ २
शास्तैनानधर्मज्ञान्मम विप्रियकारिणः ।
यदि प्रक्रीडते सर्वैर्देवैः सह शचीपतिः ।
'वयमत्र यथा प्रीताः क्रीडिष्यामो निरङ्कुशं ॥' ३
दुर्योधनवचः श्रुत्वा धार्तराष्ट्रा महाबलाः ।
सर्व एवाभिसन्नद्धा योधाश्चापि सहस्रशः ॥ ४
ततः प्रमथ्य सर्वांस्तांस्तद्वनं विविशुर्बलात् ।
सिंहनादेन महता पूरयन्तो दिशो दश ॥ ५
ततोऽपरैरवार्यन्त गन्धर्वैः कुरुसैनिकाः ।
'साम्नैव तत्र विक्रान्ता मा साहसमिति प्रभो' ६
ते वार्यमाणा गन्धर्वैः साम्नैव वसुधाधिप ।
ताननादृत्य गन्धर्वांस्तद्वनं विविशुर्महत् ॥ ७
यदा वाचा न तिष्ठन्ति धार्तराष्ट्राः सराजकाः ।
ततस्ते खेचराः सर्वे चित्रसेने न्यवेदयन् ॥ ८
गन्धर्वराजस्तान्सर्वानब्रवीत्कौरवान्प्रति ।
अनार्याञ्शासतेत्येतांश्चित्रसेनोऽत्यमर्षणः ॥ ९
अनुज्ञाताश्च गन्धर्वाश्चित्रसेनेन भारत ।
प्रगृहीतायुधाः सर्वे धार्तराष्ट्रानभिद्रवन् ॥ १०
तान्दृष्ट्वाऽऽपततः शीघ्रान्गन्धर्वानुद्यतायुधान् ।
प्राद्रवंस्ते दिशः सर्वे धार्तराष्ट्रस्य पश्यतः ॥ ११
तान्दृष्ट्वा द्रवतः सर्वान्धार्तराष्ट्रान्पराङ्मुखान् ।
राधेयस्तु तदा वीरो नासीत्तत्र पराङ्मुखः ॥ १२
आपतन्तीं तु संप्रेक्ष्य गन्धर्वाणां महाचमूम् ।
महता शरवर्षेण राधेयः प्रत्यवारयत् ॥ १३

आत्मजैर्जयन्तादिभिः सहेति शेषः ॥ २२ ॥

एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥

क्षुरप्रैर्विशिखैर्भल्लैर्वत्सदन्तैस्तथाऽऽयसैः ।
गन्धर्वाञ्शतशोऽभिघ्नँल्लघुत्वात्सूतनन्दनः ॥ १४
पातयन्नुत्तमाङ्गानि गन्धर्वाणां महारथः ।
क्षणेन व्यधमत्सर्वां चित्रसेनस्य वाहिनीम् ॥ १५
ते वध्यमाना गन्धर्वाः सूतपुत्रेण धीमता ।
भूय एवाभ्यवर्तन्त शतशोऽथ सहस्रशः ॥ १६
गन्धर्वभूता पृथिवी क्षणेन समपद्यत ।
आपतद्भिर्महावेगैश्चित्रसेनस्य सैनिकैः ॥ १७
अथ दुर्योधनो राजा शकुनिश्चापि सौबलः ।
दुःशासनो विकर्णश्च ये चान्ये धृतराष्ट्रजाः ।
न्यहनंस्तत्तदा सैन्यं रथैर्गरुडनिःस्वनैः ॥ १८
सैन्यमायोधितं दृष्ट्वा कर्णो राजन्न मृष्यत ॥ १९
महता रथसङ्घेन रथचारेण चाप्युत ।
वैकर्तनं परीप्सन्तो गन्धर्वाः प्रत्यवारयन् ।
ततः संन्यपतन्सर्वे गन्धर्वाः कौरवं प्रति ॥ २०
तदा सुतुमुलं युद्धमभवद्रोमहर्षणम् ।
ततस्ते मृदवोऽभूवन्गन्धर्वाः शरपीडिताः ॥ २१
उच्चुक्रुशुश्च कौरव्या गन्धर्वान्प्रेक्ष्य पीडितान् ॥ २२
गन्धर्वांस्त्रासितान्दृष्ट्वा चित्रसेनो ह्यमर्षणः ।
उत्पपातासनात्क्रुद्धो वधे तेषां समाहितः ॥ २३
ततो मायास्त्रमास्थाय युयुधे चित्रमार्गवित् ।
'वियत्संछादयामास न ववौ तत्र मारुतः ॥ २४
हस्त्यारोहा हताः पेतुर्हस्तिभिः सह भारत ।
हयारोहाः सह हयै रथैश्च रथिनस्तदा ॥ २५
पत्तयश्च तथा पेतुर्विशस्ताः शरवृष्टिभिः ।'
तयाऽमुह्यन्त कौरव्याश्चित्रसेनस्य मायया ॥ २६
एकैको हि तदा योधो धार्तराष्ट्रस्य भारत ।
पर्यवार्यत गन्धर्वैर्दशभिर्दशभिर्युधि ॥ २७
ततः संपीड्यमानास्ते बलेन महता तदा ।
प्राद्रवन्त रणे भीता यत्र राजा युधिष्ठिरः ॥ २८
भज्यमानेष्वनीकेषु धार्तराष्ट्रेषु सर्वशः ।
कर्णो वैकर्तनो राजंस्तस्थौ गिरिरिवाचलः ॥ २९
दुर्योधनश्च तेजस्वी शकुनिश्चापि सौबलः ।
गन्धर्वान्योधयामासुः समरे भृशविक्षताः ॥ ३०
सर्व एव तु गन्धर्वाः शतशोऽथ सहस्रशः ।
जिघांसमानाः संरब्धाः कर्णमभ्यद्रवन्रणे ॥ ३१
असिभिः पट्टिसैः शूलैर्गदाभिश्च महाबलाः ।
सूतपुत्रं जिघांसन्तः समन्तात्पर्यवारयन् ॥ ३२
अन्येऽस्य युगमच्छिन्दन्ध्वजमन्ये न्यपातयन् ।
ईषामन्ये हयानन्ये सूतमन्ये न्यपातयन् ॥ ३३
अन्ये च्छत्रं वरूथं च बन्धुरं च तथा परे ।
'अन्ये संचूर्णयामासुश्छत्रे चाक्षौ तथा परे ॥' ३४
गन्धर्वा बहुसाहस्रास्तिलशो व्यधमन्रथम् ॥ ३५
ततो रथादवप्लुत्य सूतपुत्रोऽसिचर्मभृत् ।
'अंसावलम्बितधनुर्धावमानो महाबलः ।'
विकर्णरथमास्थाय मोक्षायाश्वानचोदयत् ॥ ३६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥

---

## त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥

चित्ररथेन रणे पराजितस्य दुर्योधनस्य बन्धनपूर्वकं स्वरथारोपणम् ॥ १ ॥ इतरैर्गन्धर्वैर्दुर्योधनभ्रातॄणां तद्दाराणां च बन्धनम् ॥ २ ॥ दुर्योधनामात्यादिभिर्युधिष्ठिराय तन्निवेदने भीमेन तदनुमोदनम् ॥ ३ ॥

वैशंपायन उवाच ।
गन्धर्वैस्तु महाराज भग्ने कर्णे महारथे ।
संप्राद्रवच्चमूः सर्वा धार्तराष्ट्रस्य पश्यतः ॥ १
तान्दृष्ट्वा द्रवतः सर्वान्धार्तराष्ट्रान्पराङ्मुखान् ।
दुर्योधनो महाराजो नासीत्तत्र पराङ्मुखः ॥ २
तामापतन्तीं संप्रेक्ष्य गन्धर्वाणां महाचमूम् ।
महता शरवर्षेण सोऽभ्यवर्षदरिंदमः ॥ ३
अचिन्त्य शरवर्षं तु गन्धर्वास्तस्य तं रथम् ।

---

भूयश्च योधयामासुः कृत्वा कर्णमथाग्रतः । महता इति झ. पाठः । न मृष्यत नामृष्यत । अडभाव आर्षः ॥ १९ ॥ वरूथं रथगुप्तिम् । बन्धुरं रथबन्धनानि ॥ ३४ ॥ द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥

दुर्योधनं जिघांसन्तः समन्तात्पर्यवारयन् ॥ ४
युगमीषां वरूथं च तथैव ध्वजसारथी ।
अश्वांस्त्रिवेणुमक्षं च तिलशो व्यधमञ्छरैः ॥ ५
दुर्योधनं चित्रसेनो विरथं पतितं भुवि ।
अभिद्रुत्य महाबाहुर्जीवग्राहमथाग्रहीत् ॥ ६
'तस्य बाहू महाराज बद्ध्वा रज्वा महारथम् ।
आरोप्य स महाबाहुश्चित्रसेनो ननाद ह ॥' ७
तस्मिन्गृहीते राजेन्द्र स्थितं दुःशासनं रथे ।
पर्यगृह्णन्त गन्धर्वाः परिवार्य समन्ततः ॥ ८
विविंशतिं चित्रसेनमादायान्ये विदुद्रुवुः ।
विन्दानुविन्दावपरे राजदारांश्च सर्वशः ॥ ९
सेनास्तु धार्तराष्ट्रस्य गन्धर्वैः समभिद्रुताः ।
पूर्वं प्रभग्नैः सहिताः पाण्डवानभ्ययुस्तदा ॥ १०
शकटापणवेशाश्च यानयुग्यं च सर्वशः ।
शरणं पाण्डवाञ्जग्मुर्ह्रियमाणे महीपतौ ॥ ११
सैनिका ऊचुः ।
प्रियदर्शी महाबाहो धार्तराष्ट्रो महाबलः ।
गन्धर्वैर्ह्रियते राजा पार्थास्तमनुधावत ॥ १२
दुःशासनो दुर्विषहो दुर्मुखो दुर्जयस्तथा ।
बद्ध्वा ह्रियन्ते गन्धर्वै राजदाराश्च सर्वशः ॥ १३
इति दुर्योधनामात्याः क्रोशन्तो राजगृद्धिनः ।
आर्ता दीनास्ततः सर्वे युधिष्ठिरमुपागमन् ॥ १४
तांस्तथा व्यथितान्दीनान्भिक्षमाणान्युधिष्ठिरम् ।
वृद्धान्दुर्योधनामात्यान्भीमसेनोऽभ्यभाषत ॥ १५
महता हि प्रयत्नेन संनह्य गजवाजिभिः ।
अन्यथा वर्तमानानामर्थो जातोऽयमन्यथा ॥ १६
अस्माभिर्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितम् ॥ १७
दुर्मन्त्रितमिदं तावद्राज्ञो दुर्द्यूतदेविनः ।
'दीनान्दुर्योधनस्यास्मान्द्रष्टुकामस्य दुर्मतेः ॥'१८
द्वेष्टारमन्ये क्लीबस्य घातयन्तीति नः श्रुतम् ।
इदं कृतं नः प्रत्यक्षं गन्धर्वैरतिमानुषम् ॥ १९
दिष्ट्या लोके पुमानस्ति कश्चिदस्मत्प्रिये स्थितः ।
येनास्माकं हृतो भार आसीनानां सुखावहः॥२०
शीतवातातपसहांस्तपसा चैव कर्शितान् ।
समस्थो विषमस्थान्हि द्रष्टुमिच्छति दुर्मतिः ॥२१
अधर्मचारिणस्तस्य कौरव्यस्य दुरात्मनः ।
ये शीलमनुवर्तन्ति ते पश्यन्ति पराभवम् ॥ २२
अधर्मो हि कृतस्तेन येनैतदुपलक्षितम् ।
अनृशंसास्तु कौन्तेयास्तत्प्रत्यक्षं ब्रवीमि वः॥२३
एवं ब्रुवाणं कौन्तेयं भीमसेनमपस्वरम् ।
न कालः परुषस्यायमिति राजाऽभ्यभाषत ॥२४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥

## चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥

भीमेन युधिष्ठिरंप्रति दुर्योधनकृतापनयानुस्मारणपूर्वकं तद्विमोचनस्यानौचित्यप्रतिपादने युधिष्ठिरेण पुनस्तंप्रति तच्चोदनायामर्जुनेन तत्प्रतिज्ञानम् ॥ १ ॥

युधिष्ठिर उवाच ।
अस्मानभिगतांस्तात भयार्ताञ्छरणैषिणः ।
कौरवान्विषमप्राप्तान्कथं ब्रूयास्त्वमीदृशम् ॥ १
भवन्ति भेदा ज्ञातीनां कलहाश्च वृकोदर ।
प्रसक्तानि च वैराणि ज्ञातिधर्मो न नश्यति ॥२
यदा तु कश्चिज्ज्ञातीनां बाह्यः प्रार्थयते कुलम् ।
न मर्षयन्ति तत्सन्तो बाह्येनाभिप्रधर्षणम् ॥ ३
जानात्येष हि दुर्बुद्धिरस्मानिह चिरोषितान् ।
स एवं परिभूयास्मानकार्षीदिदमप्रियम् ॥ ४
दुर्योधनस्य ग्रहणाद्गन्धर्वेण बलाद्रणे ।

जीवग्राहं जीवन्तमेव गृहीत्वेति णमुलन्तम् । कषादित्वाद- ग्रहीदित्यनुप्रयोगः ॥ ६ ॥ राज्ञो युधिष्ठिरस्य ॥ १८ ॥ क्लीबस्य अशक्तत्वात् ॥ १९ ॥ येनैतदुपशिक्षितम् इति झ.

पाठः ॥ २३ ॥ अपस्वरं क्रोधेन विकलवर्णं यथा स्यात्तथा ब्रुवाणम् ॥ २४ ॥ त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥

स्त्रीणां बाह्याभिमर्शाच्च हतं भवति नः कुलम् ॥५
शरणं च प्रपन्नानां त्राणार्थं च कुलस्य च ।
उत्तिष्ठध्वं नरव्याघ्राः सज्जीभवत मा चिरम् ॥ ६
अर्जुनश्च यमौ चैव त्वं च भीमापराजितः ।
मोक्षयध्वं नरव्याघ्रा ह्रियमाणं सुयोधनम् ॥ ७
एते रथा नरव्याघ्राः सर्वशस्त्रसमन्विताः ।
धृतराष्ट्रस्य पुत्राणां विमलाः काञ्चनध्वजाः ॥ ८
सखनानधिरोहध्वं नित्यसज्जानिमान्रथान् ।
इन्द्रसेनादिभिः सूतैः कृतशस्त्रैरधिष्ठितान् ॥ ९
एतानास्थाय वै यत्ता गन्धर्वान्योद्धुमाहवे ।
सुयोधनस्य मोक्षाय प्रयतध्वमतन्द्रिताः ॥ १०
'परैः परिभवे प्राप्ते वयं पञ्चोत्तरं शतम् ।
परस्परविरोधे तु वयं पञ्चैव ते शतम् ॥' ११
य एव कश्चिद्राजन्यः शरणार्थमिहागतम् ।
परं शक्त्याभिरक्षेत किं पुनस्त्वं वृकोदर ॥ १२
'एवमुक्तस्तु कौन्तेयः पुनर्वाक्यमभाषत ।
कोपसंरक्तनयनः पूर्ववैरमनुस्मरन् ॥ १३
पुरा जतुगृहेऽनेन दग्धुमस्मान्युधिष्ठिर ।
दुर्बुद्धिर्हि कृता वीर तदा दैवेन रक्षिताः ॥ १४
कालकूटविषं तीक्ष्णं भोजने मम भारत ।
उप्त्वा गङ्गां लतापाशैर्बद्ध्वा च प्राक्षिपत्प्रभो ॥१५
रसातलं च संप्राप्य तदा वासुकिमञ्जसा ।
तत्र दृष्ट्वा तु राजेन्द्र पुनः प्राप्तो महीतलम् ॥१६
द्यूतकालेऽपि कौन्तेय वृजिनानि कृतानि वै ।
द्रौपद्याश्च परामर्शः केशग्रहणमेव च ।
वस्त्रापहरणं चैव सभामध्ये कृतानि वै ॥ १७
राज्यं चाच्छिद्य राजेन्द्र उक्तवान्परुषाणि नः ।
पुरा कृतानां पापानां फलं भुङ्क्ते सुयोधनः ॥१८
अस्माभिरेव कर्तव्यं धार्तराष्ट्रस्य निग्रहम् ।
अन्येन तु कृतं तद्धि मैत्र्यमस्माकमिच्छता ।
उपकारी तु गन्धर्वो मा राजन्विमना भव ॥१९

वैशंपायन उवाच ।
एतस्मिन्नन्तरे राजंश्चित्रसेनेन वै हृतः ।
विललाप सुदुःखार्तो नीयमानः सुयोधनः ॥२०
युधिष्ठिर महाबाहो सर्वधर्मभृतांवर ।
सपुत्रान्सहदारांश्च गन्धर्वेण हृतान्बलात् ॥ २१
पाण्डुपुत्र महाबाहो कौरवाणां यशस्कर ।
सर्वधर्मभृतां श्रेष्ठ गन्धर्वेण हृतं बलात् ।
रक्षस्व पुरुषव्याघ्र युधिष्ठिर महायशः ॥ २२
भ्रातरं ते महाबाहो बद्ध्वा नयति मामयम् ।
दुश्शासनं दुर्विषहं दुर्मुखं दुर्जयं तथा ॥ २३
बद्ध्वा हरन्ति गन्धर्वा अस्मान्दारांश्च सर्वशः ।
अनुधावत मां क्षिप्रं रक्षध्वं पुरुषोत्तमाः ॥ २४
यमौ मामनुधावेतां रक्षार्थं मम सायुधौ ।
कुरुवंशस्य सुमहद्यशः प्राप्तमीदृशम् ।
व्यपोहयध्वं गन्धर्वाञ्जित्वा वीर्येण पाण्डवाः ॥२५
एवं विलपमानस्य कौरवस्यार्तया गिरा ।
श्रुत्वा विलापं संभ्रान्तो घृणयाऽभिपरिप्लुतः २६
युधिष्ठिरः पुनर्वाक्यं भीमसेनमथाब्रवीत् ।
सुयोधनस्य मोक्षाय प्रयतध्वमतन्द्रिताः ॥' २७
क इवार्यो दयेत्प्राणानभिधावेति चोदितः ।
प्राञ्जलिं शरणापन्नं दृष्ट्वा शत्रुमपि ध्रुवम् ॥ २८
वरप्रदानं राज्यं च पुत्रजन्म च पाण्डवाः ।
शत्रोश्च मोक्षणं क्लेशात्त्रीणि चैकं च तत्समम् ॥२९
न ह्यस्त्यधिकमेतस्माद्यदापन्नः सुयोधनः ।
त्वद्बाहुबलमाश्रित्य जीवितं परिमार्गते ॥ ३०
स्वयमेव प्रधावेयं यदि न स्याद्वृकोदर ।
विततो मे क्रतुर्वीर न हि मेऽत्र विचारणा ॥३१
साम्नैव तु यथा भीम मोक्षयेथाः सुयोधनम् ।
तथा सर्वैरुपायैस्त्वं यतेथाः कुरुनन्दन ॥ ३२
न साम्ना प्रतिपद्येत यदि गन्धर्वराडसौ ।
पराक्रमेण मृदुना मोक्षयेथाः सुयोधनम् ॥ ३३
अथासौ मृदुयुद्धेन न मुञ्चेद्भीम कौरवान् ।

क इवार्यो नयेत्प्राणान् इति थ. पाठः । क इहार्यो भवेत्त्राणं इति झ. पाठः । अभिधाव याहीति चोदित आर्यः प्राणान् दयेत् । स्वप्राणेषु दयां कुर्यादित्यर्थः ॥ २८ ॥ चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥

सर्वोपायैर्विमोच्यास्ते निगृह्य परिपन्थिनः ॥ ३४
एतावद्धि मया शक्यं संदेष्टुं वै वृकोदर ।
वैताने कर्मणि तते वर्तमाने च भारत ।
'वरप्रदानं सुमहद्याचकस्य प्रकीर्तितम् ॥' ३५
वैशंपायन उवाच ।
अजातशत्रोर्वचनं तच्छ्रुत्वा तु धनंजयः ।
प्रतिजज्ञे गुरोर्वाक्यं कौरवाणां विमोक्षणम् ॥ ३६
अर्जुन उवाच ।
यदि साम्ना न मोक्ष्यन्ति गन्धर्वा धृतराष्ट्रजान् ।
अद्य गन्धर्वराजस्य भूमिः पास्यति शोणितम् ॥ ३७
अर्जुनस्य तु तां श्रुत्वा प्रतिज्ञां सत्यवादिनः ।
कौरवाणां तदा राजन्पुनः प्रत्यागतं मनः ॥ ३८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥

## पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥

भीमादीनां चतुर्णां चित्रसेनादिभिर्गन्धर्वैर्युद्धम् ॥ १ ॥

वैशंपायन उवाच ।
युधिष्ठिरवचः श्रुत्वा भीमसेनपुरोगमाः ।
प्रहृष्टवदनाः सर्वे समुत्तस्थुर्नरर्षभाः ॥ १
अभेद्यानि ततः सर्वे समनह्यन्त भारत ।
जाम्बूनदविचित्राणि कवचानि महारथाः ।
आयुधानि च दिव्यानि विविधानि समादधुः २
ते दंशिता रथैः सर्वे ध्वजिनः सशरासनाः ।
पाण्डवाः प्रत्यदृश्यन्त ज्वलिता इव पावकाः ॥ ३
तान्रथान्साधुसंपन्नान्संयुक्ताञ्जवनैर्हयैः ।
आस्थाय रथशार्दूलाः शीघ्रमेव ययुस्ततः ॥ ४
ततः कौरवसैन्यानां प्रादुरासीन्महास्वनः ।
प्रयातान्सहितान्दृष्ट्वा पाण्डुपुत्रान्महारथान् ॥ ५
जितकाशिनश्च खचरास्त्वरिताश्च महारथाः ।
क्षणेनैव वने तस्मिन्समाजग्मुरभीतवत् ॥ ६
न्यवर्तन्त ततः सर्वे गन्धर्वा जितकाशिनः ।
दृष्ट्वा रथगतान्वीरान्पाण्डवांश्चतुरो रणे ॥ ७
तांस्तु विभ्राजितान्दृष्ट्वा लोकपालानिवोद्यतान् ।
व्यूढानीका व्यतिष्ठन्त गन्धमादनवासिनः ॥ ८
राज्ञस्तु वचनं श्रुत्वा धर्मपुत्रस्य धीमतः ।
क्रमेण मृदुना युद्धमुपक्रान्तं च भारत ॥ ९
न तु गन्धर्वराजस्य सैनिका मन्दचेतसः ।
शक्यन्ते मृदुना श्रेयः प्रतिपादयितुं तदा ॥ १०
ततस्तान्युधि दुर्धर्षान्सव्यसाची परंतपः ।
सान्त्वपूर्वमिदं वाक्यमुवाच खचरान्रणे ॥ ११
नैतद्गन्धर्वराजस्य युक्तं कर्म जुगुप्सितम् ।
परदाराभिमर्शश्च मानुषैश्च समागमः ॥ १२
उत्सृजध्वं महावीर्यान्धृतराष्ट्रसुतानिमान् ।
दारांश्चैषां प्रमुञ्चध्वं धर्मराजस्य शासनात् ॥ १३
त एवमुक्ता गन्धर्वाः पाण्डवेन यशस्विना ।
उत्स्मयन्तस्तदा पार्थमिदं वचनमब्रुवन् ॥ १४
एकस्यैव वयं तात कुर्याम वचनं भुवि ।
यस्य शासनमाज्ञाय चरामो विगतज्वराः ॥ १५
तेनैकेन यथादिष्टं तथा वर्ताम भारत ।
न शास्ता विद्यतेऽस्माकमन्यस्तस्मात्सुरेश्वरात् ॥ १६
एवमुक्तः स गन्धर्वैः कुन्तीपुत्रो धनंजयः ।
गन्धर्वान्पुनरेवैतान्वचनं प्रत्यभाषत ॥ १७
यदि साम्ना न मुञ्चध्वं गन्धर्वा धृतराष्ट्रजान् ।
मोक्षयिष्यामि विक्रम्य स्वयमेव सुयोधनम् ॥ १८
एवमुक्त्वा ततः पार्थः सव्यसाची धनंजयः ।
ससर्ज निशितान्बाणान्खचरान्खचरान्प्रति ॥ १९
तथैव शरवर्षेण गन्धर्वास्ते बलोत्कटाः ।
पाण्डवानभ्यवर्तन्त पाण्डवाश्च दिवौकसः ॥ २०

दंशिताः सन्नद्धाः ॥ ३ ॥ श्रेयः कल्याणम् । प्रतिपादयितुं प्रापयितुम् ॥ १० ॥ खचरान् गगनगमनान् । खचरान् गन्धर्वान् ॥ १९ ॥ पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥

ततः सुतुमुलं युद्धं गन्धर्वाणां तरस्विनाम् । बभूव भीमवेगानां पाण्डवानां च भारत ॥ २१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥

## षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥

अर्जुनेन मायाशक्त्याऽन्तर्धानेन युध्यते चित्रसेनायास्त्रप्रयोगे सति तेनार्जुनंप्रति स्वस्य सखित्वकथनम् ॥ १ ॥ ततोऽर्जुनेनास्त्रोपसंहारे भीमादीनां युद्धोपरमपूर्वकं तेन सह संलापः ॥ २ ॥

वैशंपायन उवाच ।
ततो दिव्यास्त्रसंपन्ना गन्धर्वा हेममालिनः ।
विसृजन्तः शरान्दीप्तान्समन्तात्पर्यवारयन् ॥ १
चतुरः पाण्डवान्वीरान्गन्धर्वाश्च सहस्रशः ।
रणे संन्यपतन्राजंस्तदद्भुतमिवाभवत् ॥ २
यथा कर्णस्य च रथो धार्तराष्ट्रस्य चोभयोः ।
गन्धर्वैः शतशश्छिन्नौ तथा तेषां प्रचक्रिरे ॥ ३
तान्समापततो राजन्गधर्वाञ्छतशो रणे ।
प्रत्यगृह्णन्नरव्याघ्राः शरवर्षैरनेकशः ॥ ४
ते कीर्यमाणाः खगमाः शरवर्षैः समन्ततः ।
न शेकुः पाण्डुपुत्राणां समीपे परिवर्तितुम् ॥ ५
अभिक्रुद्धानभिक्रुद्धो गन्धर्वानर्जुनस्तदा ।
लक्षयित्वाऽथ दिव्यानि महास्त्राण्युपचक्रमे ॥ ६
सहस्राणां सहस्राणि प्राहिणोद्यमसादनम् ।
अजेयानर्जुनः सङ्ख्ये गन्धर्वाणां बलोत्कटः ॥ ७
तथा भीमो महेष्वासः संयुगे बलिनांवरः ।
गन्धर्वाञ्शतशो राजञ्जघान निशितैः शरैः ॥ ८
माद्रीपुत्रावपि तथा युध्यमानौ बलोत्कटौ ।
परिगृह्याग्रतो राजञ्जघ्नतुः शतशः परान् ॥ ९
ते वध्यमाना गन्धर्वा दिव्यैरस्त्रैर्महारथैः ।
उत्पेतुः खमुपादाय धृतराष्ट्रसुतांस्ततः ॥ १०
स तानुत्पतितान्दृष्ट्वा कुन्तीपुत्रो धनंजयः ।
महता शरजालेन समन्तात्पर्यवारयत् ॥ ११
ते बद्धाः शरजालेन शकुन्ता इव पञ्जरे ।
ववर्षुरर्जुनं क्रोधाद्गदाशक्त्यृष्टिवृष्टिभिः ॥ १२
गदाशक्त्यृष्टिवृष्टीस्ता निहत्य परमास्त्रवित् ।
गात्राणि चाहनद्भल्लैर्गन्धर्वाणां धनंजयः ॥ १३
शिरोभिः प्रपतद्भिश्च चरणैर्बाहुभिस्तथा ।
अश्मवृष्टिरिवाभाति परेषामभवद्भयम् ॥ १४
ते वध्यमाना गन्धर्वाः पाण्डवेन महात्मना ।
भूमिष्ठमन्तरिक्षस्थाः शरवर्षैरवाकिरन् ॥ १५
तेषां तु शरवर्षाणि सव्यसाची परंतपः ।
अस्त्रैः संवार्य तेजस्वी गन्धर्वान्प्रत्यविध्यत ॥ १६
स्थूणाकर्णेन्द्रजालं च सौरं चापि तथाऽर्जुनः ।
आग्नेयं चापि सौम्यं च ससर्ज कुरुनन्दनः ॥ १७
ते दह्यमाना गन्धर्वाः कुन्तीपुत्रस्य सायकैः ।
दैतेया इव शक्रेण विषादमगमन्परम् ॥ १८
ऊर्ध्वमाक्रममाणाश्च शरजालेन वारिताः ।
विसर्पमाणा भल्लैश्च वार्यन्ते सव्यसाचिना ॥ १९
गन्धर्वांस्त्रासितान्दृष्ट्वा कुन्तीपुत्रेण भारत ।
चित्रसेनो गदां गृह्य सव्यसाचिनमाद्रवत् ॥ २०
तस्याभिपततस्तूर्णं गदाहस्तस्य संयुगे ।
गदां सर्वायसीं पार्थः शरैश्चिच्छेद सप्तधा ॥ २१
स गदां बहुधा दृष्ट्वा कृत्तां बाणैस्तरस्विना ।
संवृत्य विद्यया्ऽऽत्मानं योधयामास पाण्डवं २२
अस्त्राणि तस्य दिव्यानि संप्रयुक्तानि सर्वशः ।
दिव्यैरस्त्रैस्तदा वीरः पर्यवारयदर्जुनः ॥ २३
स वार्यमाणस्तैरस्त्रैरर्जुनेन महात्मना ।
गन्धर्वराजो बलवान्मायया्ऽन्तर्हितस्तदा ॥ २४
अन्तर्हितं तमालक्ष्य प्रहरन्तमथार्जुनः ।
ताडयामास खचरैर्दिव्यास्त्रप्रतिमन्त्रितैः ॥ २५
अन्तर्धानवधं चास्य चक्रे क्रुद्धोऽर्जुनस्तदा ।

---

तथा तेषां चतुर्णामपि रथान् छन्नान् प्रचक्रिरे गन्धर्वाः ॥ ३ ॥ गृह्य गृहीत्वा ॥ २० ॥ संवृत्य आच्छाद्य । विद्यया अदर्शनशक्त्या ॥ २२ ॥ षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥

सर्वोपायैर्विमोच्यास्ते निगृह्य परिपन्थिनः ॥ ३४
एतावद्धि मया शक्यं संदेष्टुं वै वृकोदर ।
वैताने कर्मणि तते वर्तमाने च भारत ।
'वरप्रदानं सुमहद्याचकस्य प्रकीर्तितम् ॥' ३५
वैशंपायन उवाच ।
अजातशत्रोर्वचनं तच्छ्रुत्वा तु धनंजयः ।
प्रतिजज्ञे गुरोर्वाक्यं कौरवाणां विमोक्षणम् ॥ ३६
अर्जुन उवाच ।
यदि साम्ना न मोक्ष्यन्ति गन्धर्वा धृतराष्ट्रजान् ।
अद्य गन्धर्वराजस्य भूमिः पास्यति शोणितम् ॥ ३७
अर्जुनस्य तु तां श्रुत्वा प्रतिज्ञां सत्यवादिनः ।
कौरवाणां तदा राजन्पुनः प्रत्यागतं मनः ॥ ३८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥

## पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥

भीमादीनां चतुर्णां चित्रसेनादिभिर्गन्धर्वैर्युद्धम् ॥ १ ॥

वैशंपायन उवाच ।
युधिष्ठिरवचः श्रुत्वा भीमसेनपुरोगमाः ।
प्रहृष्टवदनाः सर्वे समुत्तस्थुर्नरर्षभाः ॥ १
अभेद्यानि ततः सर्वे समनह्यन्त भारत ।
जाम्बूनदविचित्राणि कवचानि महारथाः ।
आयुधानि च दिव्यानि विविधानि समादधुः २
ते दंशिता रथैः सर्वे ध्वजिनः सशरासनाः ।
पाण्डवाः प्रत्यदृश्यन्त ज्वलिता इव पावकाः ॥ ३
तान्रथान्साधुसंपन्नान्संयुक्ताञ्जवनैर्हयैः ।
आस्थाय रथशार्दूलाः शीघ्रमेव ययुस्ततः ॥ ४
ततः कौरवसैन्यानां प्रादुरासीन्महास्वनः ।
प्रयातान्सहितान्दृष्ट्वा पाण्डुपुत्रान्महारथान् ॥ ५
जितकाशिनश्च खचरास्त्वरिताश्च महारथाः ।
क्षणेनैव वने तस्मिन्समाजग्मुरभीतवत् ॥ ६
न्यवर्तन्त ततः सर्वे गन्धर्वा जितकाशिनः ।
दृष्ट्वा रथगतान्वीरान्पाण्डवांश्चतुरो रणे ॥ ७
तांस्तु विभ्राजितान्दृष्ट्वा लोकपालानिवोद्यतान् ।
व्यूढानीका व्यतिष्ठन्त गन्धमादनवासिनः ॥ ८
राज्ञस्तु वचनं श्रुत्वा धर्मपुत्रस्य धीमतः ।
क्रमेण मृदुना युद्धमुपक्रान्तं च भारत ॥ ९
न तु गन्धर्वराजस्य सैनिका मन्दचेतसः ।
शक्यन्ते मृदुना श्रेयः प्रतिपादयितुं तदा ॥ १०
ततस्तान्युधि दुर्धर्षान्सव्यसाची परंतपः ।
सान्त्वपूर्वमिदं वाक्यमुवाच खचरान्रणे ॥ ११
नैतद्गन्धर्वराजस्य युक्तं कर्म जुगुप्सितम् ।
परदाराभिमर्शश्च मानुषैश्च समागमः ॥ १२
उत्सृजध्वं महावीर्यान्धृतराष्ट्रसुतानिमान् ।
दारांश्चैषां प्रमुञ्चध्वं धर्मराजस्य शासनात् ॥ १३
त एवमुक्ता गन्धर्वाः पाण्डवेन यशस्विना ।
उत्स्मयन्तस्तदा पार्थमिदं वचनमब्रुवन् ॥ १४
एकस्यैव वयं तात कुर्याम वचनं भुवि ।
यस्य शासनमाज्ञाय चरामो विगतज्वराः ॥ १५
तेनैकेन यथादिष्टं तथा वर्ताम भारत ।
न शास्ता विद्यतेऽस्माकमन्यस्तस्मात्सुरेश्वरात् ॥ १६
एवमुक्तः स गन्धर्वैः कुन्तीपुत्रो धनंजयः ।
गन्धर्वान्पुनरेवैतान्वचनं प्रत्यभाषत ॥ १७
यदि साम्ना न मुञ्चध्वं गन्धर्वा धृतराष्ट्रजान् ।
मोक्षयिष्यामि विक्रम्य स्वयमेव सुयोधनम् ॥ १८
एवमुक्त्वा ततः पार्थः सव्यसाची धनंजयः ।
ससर्ज निशितान्बाणान्खचरान्खचरान्प्रति ॥ १९
तथैव शरवर्षेण गन्धर्वास्ते बलोत्कटाः ।
पाण्डवानभ्यवर्तन्त पाण्डवाश्च दिवौकसः ॥ २०

दंशिताः सन्नद्धाः ॥ ३ ॥ श्रेयः कल्याणम् । प्रतिपादयितुं प्रापयितुम् ॥ १० ॥ खचरान् गगनगमनान् । खचरान् गन्धर्वान् ॥ १९ ॥ पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥

ततः सुतुमुलं युद्धं गन्धर्वाणां तरस्विनाम् । बभूव भीमवेगानां पाण्डवानां च भारत ॥ २१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥

## षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥

अर्जुनेन मायाशक्त्याऽन्तर्धानेन युध्यते चित्रसेनायास्त्रप्रयोगे सति तेनार्जुनंप्रति स्वस्य सखित्वकथनम् ॥ १ ॥ ततोऽर्जुनेनास्त्रोपसंहारे भीमादीनां युद्धोपरमपूर्वकं तेन सह संलापः ॥ २ ॥

वैशंपायन उवाच ।
ततो दिव्यास्त्रसंपन्ना गन्धर्वा हेममालिनः ।
विसृजन्तः शरान्दीप्तान्समन्तात्पर्यवारयन् ॥ १
चतुरः पाण्डवान्वीरान्गन्धर्वाश्च सहस्रशः ।
रणे संन्यपतन्राजंस्तदद्भुतमिवाभवत् ॥ २
यथा कर्णस्य च रथो धार्तराष्ट्रस्य चोभयोः ।
गन्धर्वैः शतशश्छिन्नौ तथा तेषां प्रचक्रिरे ॥ ३
तान्समापततो राजन्गधर्वाञ्छतशो रणे ।
प्रत्यगृह्णन्नरव्याघ्राः शरवर्षैरनेकशः ॥ ४
ते कीर्यमाणाः खगमाः शरवर्षैः समन्ततः ।
न शेकुः पाण्डुपुत्राणां समीपे परिवर्तितुम् ॥ ५
अभिक्रुद्धानभिक्रुद्धो गन्धर्वानर्जुनस्तदा ।
लक्षयित्वाऽथ दिव्यानि महास्त्राण्युपचक्रमे ॥ ६
सहस्राणां सहस्राणि प्राहिणोद्यमसादनम् ।
अजेयानर्जुनः सङ्ख्ये गन्धर्वाणां बलोत्कटः ॥ ७
तथा भीमो महेष्वासः संयुगे बलिनांवरः ।
गन्धर्वाञ्शतशो राजञ्जघान निशितैः शरैः ॥ ८
माद्रीपुत्रावपि तथा युध्यमानौ बलोत्कटौ ।
परिगृह्याग्रतो राजञ्जघ्नतुः शतशः परान् ॥ ९
ते वध्यमाना गन्धर्वा दिव्यैरस्त्रैर्महारथैः ।
उत्पेतुः खमुपादाय धृतराष्ट्रसुतांस्ततः ॥ १०
स तानुत्पतितान्दृष्ट्वा कुन्तीपुत्रो धनंजयः ।
महता शरजालेन समन्तात्पर्यवारयत् ॥ ११
ते बद्धाः शरजालेन शकुन्ता इव पञ्जरे ।
ववर्षुरर्जुनं क्रोधाद्गदाशक्त्यृष्टिवृष्टिभिः ॥ १२
गदाशक्त्यृष्टिवृष्टीस्ता निहत्य परमास्त्रवित् ।
गात्राणि चाहनद्भल्लैर्गन्धर्वाणां धनंजयः ॥ १३
शिरोभिः प्रपतद्भिश्च चरणैर्बाहुभिस्तथा ।
अश्मवृष्टिरिवाभाति परेषामभवद्भयम् ॥ १४
ते वध्यमाना गन्धर्वाः पाण्डवेन महात्मना ।
भूमिष्ठमन्तरिक्षस्थाः शरवर्षैरवाकिरन् ॥ १५
तेषां तु शरवर्षाणि सव्यसाची परंतपः ।
अस्त्रैः संवार्य तेजस्वी गन्धर्वान्प्रत्यविध्यत ॥१६
स्थूणाकर्णेन्द्रजालं च सौरं चापि तथाऽर्जुनः ।
आग्नेयं चापि सौम्यं च ससर्ज कुरुनन्दनः ॥१७
ते दह्यमाना गन्धर्वाः कुन्तीपुत्रस्य सायकैः ।
दैतेया इव शक्रेण विषादमगमन्परम् ॥ १८
ऊर्ध्वमाक्रममाणाश्च शरजालेन वारिताः ।
विसर्पमाणा भल्लैश्च वार्यन्ते सव्यसाचिना ॥१९
गन्धर्वास्त्रासितान्दृष्ट्वा कुन्तीपुत्रेण भारत ।
चित्रसेनो गदां गृह्य सव्यसाचिनमाद्रवत् ॥२०
तस्याभिपततस्तूर्णं गदाहस्तस्य संयुगे ।
गदां सर्वायसीं पार्थः शरैश्चिच्छेद सप्तधा ॥ २१
स गदां बहुधा दृष्ट्वा कृत्तां बाणैस्तरस्विना ।
संवृत्य विद्ययाऽऽत्मानं योधयामास पाण्डवं २२
अस्त्राणि तस्य दिव्यानि संप्रयुक्तानि सर्वशः ।
दिव्यैरस्त्रैस्तदा वीरः पर्यवारयदर्जुनः ॥ २३
स वार्यमाणस्तैरस्त्रैरर्जुनेन महात्मना ।
गन्धर्वराजो बलवान्मायया‌ऽन्तर्हितस्तदा ॥ २४
अन्तर्हितं तमालक्ष्य प्रहरन्तमथार्जुनः ।
ताडयामास खचरैर्दिव्यास्त्रप्रतिमन्त्रितैः ॥ २५
अन्तर्धानवधं चास्य चक्रे क्रुद्धोऽर्जुनस्तदा ।

तथा तेषां चतुर्णामपि रथान् छन्नान् प्रचक्रिरे गन्धर्वाः ॥ ३ ॥ गृह्य गृहीत्वा ॥ २० ॥ संवृत्य आच्छाद्य । विद्यया अदर्शनशक्त्या ॥ २२ ॥ षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥

शब्दवेधं समाश्रित्य बहुरूपो धनंजयः ॥ २६
स वध्यमानस्तैरस्त्रैरर्जुनेन महात्मना ।
ततोऽस्य दर्शयामास तदाऽऽत्मानं प्रियः सखा ॥
चित्रसेनस्तथोवाच सखायं युधि विद्धि माम् ।
चित्रसेनमथालक्ष्य सखायमिति विस्मितः ॥ २८
संजहारास्त्रमथ तत्प्रसृष्टं पाण्डवर्षभः ॥ २९
दृष्ट्वा तु पाण्डवाः सर्वे संहृतास्त्रं धनंजयम् ।
संजह्रुः प्रद्रुतानश्वाञ्शरवेगान्धनूंषि च ॥ ३०
चित्रसेनश्च भीमश्च सव्यसाची यमावपि ।
पृष्ट्वा कौशलमन्योन्यं रथेष्वेवावतस्थिरे ॥ ३१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥

---

## सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥

चित्रसेनेनार्जुनंप्रति दुर्योधनबन्धने कारणाभिधानपूर्वकं युधिष्ठिरसमीपगमनम् ॥ १ ॥ युधिष्ठिरेण गन्धर्वैर्दुर्योधनादीनां बन्धाद्विमोचनम् ॥ २ ॥ ततो दुर्योधनेन स्वपुरंप्रति प्रस्थानम् ॥ ३ ॥

वैशंपायन उवाच ।
ततोऽर्जुनश्चित्रसेनं प्रहसन्निदमब्रवीत् ।
मध्ये गन्धर्वसैन्यानां महेष्वासो महाद्युतिः ॥ १
किं ते व्यवसितं वीर कौरवाणां विनिग्रहे ।
किमर्थं च सदारोऽयं निगृहीतः सुयोधनः ॥ २
चित्रसेन उवाच ।
विदितोऽयमभिप्रायस्तत्रस्थेन दुरात्मनः ।
इन्द्रेण धार्तराष्ट्रस्य सकर्णस्य धनंजय ॥ ३
वनस्थान्भवतो ज्ञात्वा क्लिश्यमानाननर्हवत् ।
समस्थो विषमस्थांस्तान्द्रक्ष्यामीत्यनवस्थितान् ॥ ४
इमेऽवहसितुं प्राप्ता द्रौपदीं च यशस्विनीम् ।
ज्ञात्वा चिकीर्षितं चैषां मामुवाच सुरेश्वरः ॥ ५
गच्छ दुर्योधनं बद्ध्वा सहामात्यमिहानय ।
धनंजयश्च ते रक्ष्यः सह भ्रातृभिराहवे ॥ ६
स च प्रियः सखा तुभ्यं शिष्यश्च तव पाण्डवः ।
वचनाद्देवराजस्य ततोऽस्मीहागतो द्रुतम् ॥ ७
अयं दुरात्मा बद्धश्च गमिष्यामि सुरालयम् ।
नेष्याम्येनं दुरात्मानं पाकशासनशासनात् ॥ ८
अर्जुन उवाच ।
उत्सृज्यतां चित्रसेन भ्राताऽस्माकं सुयोधनः ।
धर्मराजस्य संदेशान्मम चेदिच्छसि प्रियम् ॥ ९
चित्रसेन उवाच ।
पापोऽयं नित्यसंदुष्टो न विमोक्षणमर्हति ।
प्रलब्धा धर्मराजस्य कृष्णायाश्च धनंजय ॥ १०
नेदं चिकीर्षितं तस्य कुन्तीपुत्रो युधिष्ठिरः ।
जानाति धर्मराजो हि श्रुत्वा कुरु यथेच्छसि ॥ ११
वैशंपायन उवाच ।
ते सर्व एव राजानमभिजग्मुर्युधिष्ठिरम् ।
अभिगम्य च तत्सर्वं शशंसुस्तस्य चेष्टितम् ॥ १२
अजातशत्रुस्तच्छ्रुत्वा गन्धर्वस्य वचस्तदा ।
मोक्षयामास तान्सर्वान्गन्धर्वान्प्रशशंस च ॥ १३
'चित्रसेनस्तदा वाक्यमुवाच प्रौढया गिरा ।
मुञ्चध्वं सानुजामात्यं सदारं च सुयोधनम् ॥ १४
गन्धर्वास्तु वचः श्रुत्वा चित्रसेनस्य वै द्रुतम् ।
राजानं मोचयामासुर्बद्धं निगडबन्धनैः ॥ १५
सदारं सानुगामात्यं बालजालमयेन ये ।
लुठन्तश्चापि ते सर्वे युधिष्ठिरसमीपतः ॥ १६
पतिता लज्जिताश्चैव तस्थुश्चाधोमुखास्तदा ।
युधिष्ठिरोपि दयया तान्समीक्ष्य तथागतान् ॥ १७
दिष्ट्या भवद्भिर्बलिभिः शक्तैः सर्वैर्न हिंसितः ।
दुर्वृत्तो धार्तराष्ट्रोऽयं सामात्यज्ञातिबान्धवः ॥ १८
उपकारो महांस्तात कृतोऽयं मम खेचर ।
कुलं न परिभूतं मे मोक्षेणास्य दुरात्मनः ॥ १९

प्रलब्धा वञ्चकः ॥ १० ॥ इदं मदुक्तं समस्थो विषमस्थांस्तान् द्रक्ष्यामीति ॥ ११ ॥ युधिष्ठिरोपीति । गन्धर्वान्प्रत्युवाचेति शेषः ॥ १७ ॥

आज्ञापयध्वमिष्टानि प्रीतं मां दर्शनेन वः ।
प्राप्य सर्वानभिप्रायांस्ततो व्रजत मा चिरम् ॥२०
अनुज्ञातास्तु गन्धर्वाः पाण्डुपुत्रेण धीमता ।
सहाप्सरोभिः संहृष्टाश्चित्रसेनमुखा ययुः ॥ २१
'देवलोकं ततो गत्वा गन्धर्वैः सहितस्तदा ।
न्यवेदयच्च तत्सर्वं चित्रसेनः शतक्रतोः ॥' २२
देवराडपि गन्धर्वान्मृतांस्तान्समजीवयत् ।
दिव्येनामृतवर्षेण ये हताः कौरवैर्युधि ॥ २३
ज्ञातींस्तानवमुच्याथ राजदारांश्च सर्वशः ।
कृत्वा च दुष्करं कर्म प्रीतियुक्ताश्च पाण्डवाः २४
सस्त्रीकुमारैः कुरुभिः पूज्यमाना महारथाः ।
बभ्राजिरे महात्मानः क्रतुमध्ये यथाऽग्नयः ॥ २५
ततो दुर्योधनं मुक्तं भ्रातृभिः सहितस्तदा ।
युधिष्ठिरस्तु प्रणयादिदं वचनमब्रवीत् ॥ २६
मा स्म तात पुनः कार्षीरीदृशं साहसं क्वचित् ।
न हि साहसकर्तारः सुखमेधन्ति भारत ॥ २७
स्वस्तिमान्सहितः सर्वैर्भ्रातृभिः कुरुनन्दन ।
गृहान्व्रज यथाकामं वैमनस्यं च मा कृथाः॥२८
वैशंपायन उवाच ।
पाण्डवेनाभ्यनुज्ञातो राजा दुर्योधनस्तदा ।
अभिवाद्य धर्मपुत्रं गतेन्द्रिय इवातुरः ।
विदीर्यमाणो व्रीडावाञ्जगाम नगरं प्रति ॥ २९
तस्मिन्गते कौरवेये कुन्तीपुत्रो युधिष्ठिरः ।
भ्रातृभिः सहितो वीरः पूज्यमानो द्विजातिभिः॥
तपोधनैश्च तैः सर्वैर्वृतः शक्र इवामरैः ।
तथा द्वैतवने तस्मिन्विजहार मुदा युतः ॥ ३१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥

---

## अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४८ ॥

दुर्योधनेन मध्येमार्गं क्वचन रमणीये देशे सेनाद्विसंनिवेशनपूर्वकमवस्थानम् ॥ १ ॥ तत्र समागतेन गन्धर्वकृते बन्धनमोचने अपरिजानता कर्णेन भ्रमात्तस्य गन्धर्वजेतृत्वेन रूपेण प्रशंसनम् ॥ २ ॥

जनमेजय उवाच ।
शत्रुभिर्जितबद्धस्य पाण्डवैश्च महात्मभिः ।
मोक्षितस्य युधा पश्चान्मानिनः सुदुरात्मनः ॥ १
कत्थनस्यावलिप्तस्य गर्वितस्य च नित्यशः ।
सदा च पौरुषौदार्यैः पाण्डवानवमन्यतः ॥ २
दुर्योधनस्य पापस्य नित्याहंकारवादिनः ।
प्रवेशो हास्तिनपुरे दुष्करः प्रतिभाति मे ॥ ३
तस्य लज्जान्वितस्यैव शोकव्याकुलचेतसः ।
प्रवेशं विस्तरेण त्वं वैशंपायन कीर्तय ॥ ४
वैशंपायन उवाच ।
धर्मराजनिसृष्टस्तु धार्तराष्ट्रः सुयोधनः ।
लज्जयाऽधोमुखः सीदन्नुपासर्पत्सुदुःखितः ॥ ५
स्वपुरं प्रययौ राजा चतुरङ्गबलानुगः ।
शोकोपहतया बुद्ध्या चिन्तयानः पराभवम् ॥ ६
विमुच्य पथि यानानि देशे सुयवसोदके ।
सन्निविष्टः शुभे रम्ये भूमिभागे यथेप्सितम् ।
हस्त्यश्वरथपादातं यथास्थानं न्यवेशयत् ॥ ७
अथोपविष्टं राजानं पर्यङ्के ज्वलनप्रभे ।
उपप्लुतं यथा सोमं राहुणा रात्रिसंक्षये ।
उपागम्याब्रवीत्कर्णो दुर्योधनमिदं तदा ॥ ८
दिष्ट्या जीवसि गान्धारे दिष्ट्या नः संगमः पुनः।
दिष्ट्या त्वया जिताश्चैव गन्धर्वाः कामरूपिणः ९
दिष्ट्या समग्रान्पश्यामि भ्रातॄंस्ते कुरुनन्दन ।
विजिगीषून्रणे युक्तान्निर्जितारीन्महारथान् ॥ १०
अहं त्वभिद्रुतः सर्वैर्गन्धर्वैः पश्यतस्तव ।
नाशक्नुवं स्थापयितुं दीर्यमाणां च वाहिनीम् ।
शरक्षताङ्गश्च भृशं व्यपयातोऽभिपीडितः ॥ ११
इदं त्वत्यद्भुतं मन्ये यद्युष्मानिह भारत ।

वैमनस्यं वैरं केनचित्सह मा कृथाः मा कुरु ॥ २८ ॥ सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥

कत्थनस्यात्मस्तुतिपरस्य ॥ २ ॥ अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४८ ॥

अरिष्टानक्षतांश्चापि सदारबलवाहनान् ।
विमुक्तान्संप्रपश्यामि युद्धात्तस्मादमानुषात् ॥१२
नैतस्य कर्ता लोकेऽस्मिन्पुमान्विद्यति भारत ।
यत्कृतं ते महाराज सह भ्रातृभिराहवे ॥ १३
एवमुक्तस्तु कर्णेन राजा दुर्योधनस्तदा ।
उवाचावाक्शिरा राजन्बाष्पगद्गदया गिरा ॥ १४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४८ ॥

## एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥

दुर्योधनेन कर्णंप्रति युद्धे सानुजस्य स्वस्य गन्धर्वैर्बन्धनस्य युधिष्ठिरचोदनया भीमादिभिर्गन्धर्वाणां रणे पराजयस्य च कथनम् ॥ १ ॥

दुर्योधन उवाच ।
अजानतस्ते राधेय नाभ्यसूयाम्यहं वचः ।
जानासि त्वं जिताञ्शत्रून्गन्धर्वांस्तेजसा मया १
आयोधितास्तु गन्धर्वाः सुचिरं सोदरैर्मम ।
मया सह महाबाहो कृतश्चोभयतः क्षयः ॥ २
मायाधिकास्त्वयुध्यन्त यदा शूरा वियद्गताः ।
तदा नो न समं युद्धमभवत्खेचरैः सह ॥ ३
पराजयं च प्राप्ताः स्मो रणे बन्धनमेव च ।
सभृत्यामात्यपुत्राश्च सदारबलवाहनाः ।
उच्चैराकाशमार्गेण ह्रियमाणाः सुदुःखिताः ॥ ४
अथ नः सैनिकाः केचिदमात्याश्च महारथाः ।
उपगम्याब्रुवन्दीनाः पाण्डवाञ्शरणप्रदान् ॥ ५
एष दुर्योधनो राजा धार्तराष्ट्रः सहानुजः ।
सामात्यदारो ह्रियते गन्धर्वैर्दिवमाश्रितैः ॥ ६
तं मोक्षयत भद्रं वः सहदारं नराधिपम् ।
परामर्शो मा भविष्यत्कुरुदारेषु सर्वशः ।
'इत्यब्रुवन्नणान्मुक्ता धर्मराजमुपागताः ॥' ७
एवमुक्ते तु धर्मात्मा ज्येष्ठः पाण्डुसुतस्तदा ।
प्रसाद्य सोदरान्सर्वानाज्ञापयत मोक्षणे ॥ ८
अथागम्य तमुद्देशं पाण्डवाः पुरुषर्षभाः ।
सान्त्वपूर्वमयाचन्त शक्ताः सन्तो महारथाः ॥९
यदा चास्मान्न मुमुचुर्गन्धर्वाः सान्त्विता अपि ।
'आकाशचारिणो वीरा नदन्तो जलदा इव॥'१०
ततोऽर्जुनश्च भीमश्च यमजौ च बलोत्कटौ ।
मुमुचुः शरवर्षाणि गन्धर्वान्प्रत्यनेकशः ॥ ११
अथ सर्वे रणं मुक्त्वा प्रयाताः खेचरा दिवम् ।
अस्मानेवाभिकर्षन्तो दीनान्मुदितमानसाः ॥१२
ततः समन्तात्पश्यामः शरजालेन वेष्टितम् ।
अमानुषाणि चास्त्राणि प्रयुञ्जानं धनंजयम् ॥१३
समावृता दिशो दृष्ट्वा पाण्डवेन शितैः शरैः ।
धनंजयसखाऽऽत्मानं दर्शयामास वै तदा ॥१४
चित्रसेनः पाण्डवेन समाश्लिष्य परस्परम् ।
कुशलं परिपप्रच्छ तैः पृष्टश्चाप्यनामयम् ॥ १५
ते समेत्य तथाऽन्योन्यं सन्नाहान्विप्रमुच्य च ।
एकीभूतास्ततो वीरा गन्धर्वाः सह पाण्डवैः॥१६
'परस्परं समागम्य प्रीत्या परमया युतौ ।'
अपूजयेतामन्योन्यं चित्रसेनधनंजयौ ॥ १७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥

## पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५० ॥

दुर्योधनेन कर्णंप्रति स्वबन्धनविषये चित्रसेनार्जुनसंवादप्रकारकथनपूर्वकं युधिष्ठिरात्स्वस्य बन्धमोचनकथनम् ॥ १ ॥ तथा प्रायोपवेशने निजाध्यवसायकथनपूर्वकं दुःशासनंप्रति राज्यपालनविधानम् ॥ २ ॥ कर्णेन दुर्योधनंप्रति प्रायोपवेशनान्निवर्तनाय सान्त्वोक्तिः ॥ ३ ॥

दुर्योधन उवाच ।
चित्रसेनं समागम्य प्रहसन्नर्जुनस्तदा ।

नाभ्यसूयामि दोषवदिति न मन्ये ॥ १ ॥

एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥

इदं वचनमक्लीबमब्रवीत्परवीरहा ॥ १
भ्रातॄनर्हसि मे वीर मोक्तुं गन्धर्वसत्तम ।
अनर्हधर्षणा ह्रीमे जीवमानेषु पाण्डुषु ॥ २
एवमुक्तस्तु गन्धर्वः पाण्डवेन महात्मना ।
उवाच यत्कर्ण वयं मन्त्रयन्तो विनिर्गताः ॥ ३
'स्थितोराज्ये च्युतान्स्थानाच्छ्रियाहीनांश्रियावृतः'
द्रष्टास्मि निःसुखान्वीरान्सदारान्पाण्डवानिति॥४
तस्मिन्नुच्चार्यमाणे तु गन्धर्वेण वचस्तथा ।
भूमेर्विवरमन्वैच्छं प्रवेष्टुं व्रीडयाऽन्वितः ॥ ५
युधिष्ठिरमथागम्य गन्धर्वाः सह पाण्डवैः ।
अस्मद्दुर्मन्त्रितं तस्मै बद्धांश्चास्मान्न्यवेदयन् ॥ ६
स्त्रीसमक्षमहं दीनो बद्धः शत्रुवशं गतः ।
युधिष्ठिरस्योपहृतः किंनु दुःखमतः परम् ॥ ७
ये मे निराकृता नित्यं रिपुर्येषामहं सदा ।
तैर्मोक्षितोऽहं दुर्बुद्धिर्दत्तं तैरेव जीवितम् ॥ ८
प्राप्तः स्यां यद्यहं वीर वधं तस्मिन्महारणे ।
श्रेयस्तद्भविता मह्यं नैवंभूतस्य जीवितम् ॥ ९
भवेद्यशः पृथिव्यां मे ख्यातं गन्धर्वतो वधात् ।
प्राप्ताश्च पुण्यलोकाः स्युर्महेन्द्रसदनेऽक्षयाः ॥१०
यत्त्वद्य मे व्यवसितं तच्छृणुध्वं नरर्षभाः ।
इह प्रायमुपासिष्ये यूयं व्रजत वै गृहान् ।
भ्रातरश्चैव मे सर्वे यान्त्वद्य स्वपुरं प्रति ॥ ११
कर्णप्रभृतयश्चैव सुहृदो बान्धवाश्च ये ।
दुःशासनं पुरस्कृत्य प्रयान्त्वद्य पुरं प्रति ॥ १२
न ह्यहं संप्रयास्यामि पुरं शत्रुनिराकृतः ।
शत्रुमानापहो भूत्वा सुहृदां मानकृत्तथा ॥ १३
'कामं रणशिरस्यद्य शत्रुभिर्वै विमानितः ।'
स सुहृच्छोकदो जातः शत्रूणां हर्षवर्धनः ।
वारणाह्वयमासाद्य किं वक्ष्यामि जनाधिपम्॥१४
भीष्मद्रोणौ कृपद्रौणी विदुरः संजयस्तथा ।
वाह्लीकः सौमदत्तिश्च ये चान्ये वृद्धसंमताः॥१५
ब्राह्मणाः श्रेणिमुख्याश्च तथोदासीनवृत्तयः ।
किं मां वक्ष्यंति किं चापि प्रतिवक्ष्यामि तानहं १६
रिपूणां शिरसि स्थित्वा तथा विक्रम्य चोरसि ।
आत्मदोषात्परिभ्रष्टः कथं वक्ष्यामि तानहम् १७
दुर्विनीताः श्रियं प्राप्य विद्यामैश्वर्यमेव च ।
तिष्ठन्ति न चिरं भद्रे यथाऽहं मदगर्वितः ॥ १८
अहो वत यथेदं मे कष्टं दुश्चरितं कृतम् ।
स्वयं दुर्बुद्धिना मोहाद्येन प्राप्तोसि संशयम् ॥१९
तस्मात्प्रायमुपासिष्ये न हि शक्ष्यामि जीवितुम् ।
चेतयानो हि को जीवेत्कृच्छ्राच्छत्रुभिरुद्धृतः २०
शत्रुभिश्चावहसितो मानी पौरुषवर्जितः ।
पाण्डवैर्विक्रमाढ्यैश्च सावमानमवेक्षितः ॥ २१
वैशंपायन उवाच ।
एवं चिन्तापरिगतो दुःशासनमथाब्रवीत् ।
दुःशासन निबोधेदं वचनं मम भारत ॥ २२
प्रतीच्छ त्वं मया दत्तमभिषेकं नृपो भव ।
प्रशाधि पृथिवीं स्फीतां कर्णसौबलपालिताम्॥२३
भ्रातॄन्पालय विस्रब्धं मरुतो वृत्रहा यथा ।
बान्धवाश्चोपजीवन्तु देवा इव शतक्रतुम् ॥ २४
ब्राह्मणेषु सदा वृत्तिं कुर्वीथाश्चाप्रमादतः ।
बन्धूनां सुहृदां चैव भवेथास्त्वं गतिः सदा ॥ २५
ज्ञातींश्चाप्यनुपश्येथा विष्णुर्देवगणान्यथा ।
गुरवः पालनीयास्ते गच्छ पालय मेदिनीम् ॥ २६
नन्दयन्सुहृदः सर्वाञ्शात्रवांश्चावभर्त्सयन् ।
कण्ठे चैनं परिष्वज्य गम्यतामित्युवाच ह ॥२७
तस्य तद्वचनं श्रुत्वा दीनो दुःशासनोऽब्रवीत् ।
अश्रुकण्ठः सुदुःखार्तः प्राञ्जलिः प्रणिपत्य च॥२८
सगद्गदमिदं वाक्यं भ्रातरं ज्येष्ठमात्मनः ।
प्रसीदेत्यपतद्भूमौ दूयमानेन चेतसा ॥ २९
दुःखितः पादयोस्तस्य नेत्रजं जलमुत्सृजन् ।
उक्तवांश्च नरव्याघ्रो नैतदेवं भविष्यति ॥ ३०
विदीर्येत्सकला भूमिर्द्यौश्चापि शकलीभवेत् ।
रविरात्मप्रभां जह्यात्सोमः शीतांशुतां त्यजेत् ३१

एवंभूतस्य जीवितं न श्रेय इति संबन्धः ॥ ९ ॥ श्रेणिमुख्याः शिल्पिसंघातमुख्याः प्रकृतय इत्यर्थः ॥ १६ ॥

विस्रब्धं सविश्वासं यथा स्यात्तथा ॥ २४ ॥ कर्ण चैनं परिष्वज्येति ध. पाठः ॥ २७ ॥

वायुः शैघ्र्यमथो जह्याद्धिमवांश्च हिमं त्यजेत् ।
शुष्येत्तोयं समुद्रेषु वह्निरप्युष्णतां त्यजेत् ॥ ३२
न चाहं त्वदृते राजन्प्रशासेयं वसुंधराम् ।
पुनःपुनः प्रसीदेति वाक्यं चेदमुवाच ह ॥ ३३
'शत्रूणां शोककृद्राजन्सुहृदां शोकनाशनः ।'
त्वमेव नः कुले राजा भविष्यसि शतं समाः ॥३४
एवमुक्त्वा स राजानं सुस्वरं प्ररुरोद ह ।
पादौ संस्पृश्य मानार्हौ भ्रातुर्ज्येष्ठस्य भारत ॥३५
तथा तौ दुःखितौ दृष्ट्वा दुःशासनसुयोधनौ ।
अभिगम्य व्यथाविष्टः कर्णस्तौ प्रत्यभाषत ॥ ३६
विषीदथः किं कौरव्यौ बालिश्यात्प्राकृताविव ।
न शोकः शोचमानस्य विनिवर्तेत कर्हिचित् ॥ ३७
यदा च शोचतः शोको व्यसनं नापकर्षति ।
सामर्थ्यं किं ततः शोके शोचमानौ प्रपश्यथः ॥३८
धृतिं गृह्णीतं मा शत्रूञ्शोचन्तौ नन्दयिष्यथः ।
कर्तव्यं हि कृतं राजन्पाण्डवैस्तव मोक्षणम् ॥३९
नित्यमेव प्रियं कार्यं राज्ञो विषयवासिभिः ।
पाल्यमानास्त्वया ते हि निवसन्ति गतज्वराः ४०
नार्हस्येवंगते मन्युं कर्तुं प्राकृतवत्स्वयम् ।
विषण्णास्तव सोदर्यास्त्वयि प्रायं समास्थिते ॥४१
'तदलं दुःखितानेतान्कर्तुं सर्वान्नराधिप ।'
उत्तिष्ठ व्रज भद्रं ते समाश्वासय सोदरान् ॥४२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५० ॥

## एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५१ ॥

कर्णेन बहुधा प्रार्थनेपि दुर्योधनेन प्रायोपवेशाध्यवसायादपरावर्तनम् ॥ १ ॥

कर्ण उवाच ।
राजन्नद्यावगच्छामि तवैव लघुसत्वताम् ।
'अल्पत्वं च तथा बुद्धेः कार्याणामविवेकिताम् ॥'१
किमत्र चित्रं धर्मज्ञ मोक्षितः पाण्डवैरसि ।
सद्यो वशं समापन्नः शत्रूणां शत्रुकर्शन ॥ २
सेनाजीवैश्च कौरव्य तथा विषयवासिभिः ।
अज्ञातैर्यदि वा ज्ञातैः कर्तव्यं नृपतेः प्रियम् ॥ ३
प्रायः प्रधानाः पुरुषाः क्षोभयित्वाऽरिवाहिनीम् ।
निगृह्यन्ते च युद्धेषु मोक्ष्यन्ते च स्वसैनिकैः ॥ ४
सेनाजीवाश्च ये राज्ञां विषये सन्ति मानवाः ।
तैः संगम्य नृपार्थाय यतितव्यं यथातथम् ॥ ५
यद्येवं पाण्डवै राजन्भवद्विषयवासिभिः ।
यदृच्छया मोक्षितोऽसि तत्र का परिदेवना ॥ ६
न चैतत्साधु यद्राजन्पाण्डवास्त्वां नृपोत्तमम् ।
स्वसेनया संप्रयान्तं नानुयान्ति स्म पृष्ठतः ॥ ७
शूराश्च बलवन्तश्च संयुगेष्वपलायिनः ।
भवतस्ते सभायां वै प्रेष्यतां पूर्वमागताः ॥ ८
पाण्डवेयानि रत्नानि त्वमद्याप्युपभुञ्जसे ।
सत्वस्थान्पाण्डवान्पश्य न ते प्रायमुपाविशन् ॥९
'तदलं ते महाबाहो विषादं कर्तुमीदृशम् ।'
उत्तिष्ठ राजन्भद्रं ते न चिन्तां कर्तुमर्हसि ॥ १०
अवश्यमेव नृपते राज्ञो विषयवासिभिः ।
प्रियाण्याचरितव्यानि तत्र का परिदेवना ॥ ११
मद्वाक्यमेतद्राजेन्द्र यद्येवं न करिष्यसि ।
स्थास्यामीह भवत्पादौ शुश्रूषन्नरिमर्दन ॥ १२
नोत्सहे जीवितुमहं त्वद्विहीनो नरर्षभः ।
प्रायोपविष्टस्तु तथा राज्ञां हास्यो भविष्यसि ॥१३
वैशंपायन उवाच ।
एवमुक्तस्तु कर्णेन राजा दुर्योधनस्तदा ।
नैवोत्थातुं मनश्चक्रे स्वर्गाय कृतनिश्चयः ॥ १४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५१ ॥

हिमवांश्च परिप्लवेत् इति थ. पाठः । परिव्रजेत् इति झ. पाठः ॥ ३२ ॥ यदि शोकेन व्यसनं नश्येत्तर्हि स कर्तव्यः नतु तत्तथास्ति अतः शोको न कर्तव्य इत्यर्थः ॥ ३८ ॥ पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५० ॥

भवतस्ते सहाया वै इति झ. पाठः ॥ ८ ॥ एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५१ ॥

## द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥

शकुन्यादिभिर्बहुधा परिसान्त्वनेपि दुर्योधनेन प्रायोपवेशनिश्चयादनिवर्तने पातालवासिभिर्दैत्यदानवैस्तदानयनाय जपहोमादिना कृत्यासर्जनम् ॥ १ ॥ तया कृत्यया प्रायोपविष्टस्य दुर्योधनस्य पातालंप्रत्यानयनम् ॥ २ ॥

वैशंपायन उवाच ।
प्रायोपविष्टं राजानं दुर्योधनममर्षणम् ।
उवाच सान्त्वयन्राजञ्शकुनिः सौबलस्तदा ॥ १
सम्यगुक्तं हि कर्णेन तच्छ्रुतं कौरव त्वया ।
मया हृतां श्रियं स्फीतां तां मोहादपहासि किम् ॥ २
त्वमबुद्ध्या नृपवर प्राणानुत्स्रष्टुमिच्छसि ।
अद्य वाऽप्यवगच्छामि न वृद्धाः सेवितास्त्वया ॥ ३
यः समुत्पतितं हर्षं दैन्यं वा न नियच्छति ।
स नश्यति श्रियं प्राप्य पात्रमाममिवाम्भसि ॥ ४
अतिभीरुं मृदुं क्लीबं दीर्घसूत्रं प्रमादिनम् ।
व्यसनाद्विषयाक्रान्तं न भजन्ति नृपं श्रिताः ॥ ५
सत्कृतस्य हि ते शोको विपरीते कथं भवेत् ।
मा कृतं शोभनं पार्थैः शोकमालम्ब्य नाशय ॥ ६
यत्र हर्षस्त्वया कार्यः सत्कर्तव्याश्च पाण्डवाः ।
तत्र शोचसि राजेन्द्र विपरीतमिदं तव ॥ ७
प्रसीद मा त्यजात्मानं तुष्टश्च सुकृतं स्मर ।
प्रयच्छ राज्यं पार्थानां यशो धर्ममवाप्नुहि ।
क्रियामेतां समाज्ञाय कृतघ्नो न भविष्यसि ॥ ८
सौभ्रात्रं पाण्डवैः कृत्वा समवस्थाप्य चैव तान् ।
पित्र्यं राज्यं प्रयच्छैषां ततः सुखमवाप्स्यसि ॥ ९
वैशंपायन उवाच ।
शकुनेस्तु वचः श्रुत्वा दुःशासनमवेक्ष्य च ।
पादयोः पतितं वीरं विक्लवं भ्रातृसौहृदात् ॥ १०
बाहुभ्यां साधुजाताभ्यां दुःशासनमरिंदमम् ।
उत्थाप्य संपरिष्वज्य प्रीत्याऽजिघ्रत मूर्धनि ॥ ११
कर्णसौबलयोश्चापि संश्रुत्य वचनान्यसौ ।
निर्वेदं परमं गत्वा राजा दुर्योधनस्तदा ।
व्रीडयाऽभिपरीतात्मा नैराश्यमगमत्परम् ॥ १२
सुहृदां चैव तच्छ्रुत्वा समन्युरिदमब्रवीत् ।
न धर्मधनसौख्येन नैश्वर्येण न चाज्ञया ॥ १३
नैव भोगैश्च मे कार्यं मा विहन्यत गच्छत ।
निश्चितेयं मम मतिः स्थिता प्रायोपवेशने ॥ १४
गच्छध्वं नगरं सर्वे पूज्याश्च गुरवो मम ।
त एवमुक्ताः प्रत्यूचू राजानमरिमर्दनम् ॥ १५
या गतिस्तव राजेन्द्र साऽस्माकमपि भारत ।
कथं वा संप्रवेक्ष्यामस्त्वद्विहीनाः पुरं वयम् ॥ १६
वैशंपायन उवाच ।
स सुहृद्भिरमात्यैश्च भ्रातृभिः स्वजनेन च ।
बहुप्रकारमप्युक्तो निश्चयान्न व्यचाल्यत ॥ १७
दर्भास्तरणमास्तीर्य निश्चयाद्धृतराष्ट्रजः ।
संस्पृश्यापः शुचिर्भूत्वा भूतले समुपस्थितः ॥ १८
कुशचीराम्बरधरः परं नियममास्थितः ।
वाग्यतो राजशार्दूलः स स्वर्गगतिकाम्यया ॥ १९
मनसोपचितिं कृत्वा निरस्य च बहिःक्रियाः ।
'तस्थौ प्रायोपवेशेऽथ मतिं कृत्वा सुनिश्चयाम् ॥' २०
अथ तं निश्चयं तस्य बुद्ध्वा दैतेयदानवाः ।
पातालवासिनो रौद्राः पूर्वं देवैर्विनिर्जिताः ॥ २१
ते स्वपक्षक्षयं तं तु ज्ञात्वा दुर्योधनस्य वै ।
आह्वानाय तदा चक्रुः कर्म वैतानसंभवम् ॥ २२
बृहस्पत्युशनोक्तैश्च मन्त्रैर्मन्त्रविशारदाः ।

---

पात्रं मृत्पात्रम् । आममपक्वम् ॥ ४ ॥ क्लीबं सामर्थ्यहीनम् । दीर्घसूत्रं चिरकारिणम् । प्रमादिनमनवहितम् । व्यसनात् द्यूतपानमृगयादिरूपात् । विषयैः स्त्र्यादिभिराक्रान्तम् । त्वं तु तेषां मध्ये प्रमादी विषयाक्रान्तश्चेति भावः ॥ ५ ॥ पार्थैः कृतं मा नाशयेति संबन्धः ॥ ६ ॥ आत्मानं शरीरं मा त्यज ॥ ८ ॥ विक्लवं म्लानम् ॥ १० ॥ निर्वेदं जीविते वैराग्यम् । नैराश्यं राज्यलाभे इति शेषः ॥ १२ ॥ समन्युः दैन्यवान् । धर्मेण धनेन सौख्येन वा न मम कार्यमिति संबन्धः । धर्मधनाभ्यां यत्सौख्यं तेन वा ॥ १३ ॥ मा विहन्यत मम संकल्पं मा नाशयत ॥ १४ ॥ वाग्यतो मौनी ॥ १९ ॥ मनसा उप समीपे चितिं दाहार्थं काष्ठसंचयं कृत्वा संकल्प्य अवश्यं मर्तव्यमिति निश्चित्येत्यर्थः । बहिःक्रियाः स्नानपानाद्याः ॥ २० ॥ वैतानसंभवमग्निविस्तारसाध्यं नवकुण्ड्यादिविधानम् ॥ २२ ॥

अथर्ववेदप्रोक्तैश्च याश्चौपनिषदाः क्रियाः ।
मन्त्रजप्यसमायुक्तास्तास्तदा समवर्तयन् ॥ २३
जुह्वत्यग्नौ हविः क्षीरं मन्त्रवत्सुसमाहिताः ।
ब्राह्मणा वेदवेदाङ्गपारगाः सुदृढव्रताः ॥ २४
'अध्वर्यवो दानवानां कर्म प्रावर्तयंस्ततः ॥' २५
कर्मसिद्धौ तदा तत्र जृम्भमाणा महाद्भुता ।
कृत्या समुत्थिता राजन्किं करोमीति चाब्रवीत् २६
आहुर्दैत्याश्च तां तत्र सुप्रीतेनान्तरात्मना ।
प्रायोपविष्टं राजानं धार्तराष्ट्रमिहानय ॥ २७
तथेति च प्रतिश्रुत्य सा कृत्या प्रययौ तदा ।
निमेषादगमच्चापि यत्र राजा सुयोधनः ॥ २८
समादाय च राजानं प्रविवेश रसातलम् ।
दानवानां मुहूर्ताच्च पुरतस्तं न्यवेदयत् ॥ २९
तमानीतं नृपं दृष्ट्वा रात्रौ संगत्य दानवाः ।
प्रहृष्टमनसः सर्वे किंचिदुत्फुल्ललोचनाः ॥ ३०
'दृढमेनं परिष्वज्य दृष्ट्वा च कुशलं तदा ।'
साभिमानमिदं वाक्यं दुर्योधनमथाब्रुवन् ॥ ३१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥

## त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५३ ॥

पातालवासिभिर्दैत्यदानवैर्दुर्योधनंप्रति हेतूपन्यासपूर्वकं प्रायोपवेशननिश्चयान्निवर्तनम् ॥ १ ॥ पुनः कृत्यया दुर्योधनस्य पूर्वस्थानंप्रत्यानयनम् ॥ २ ॥ परेद्युः कर्णादिप्रार्थनया दुर्योधनेन सर्वैः सह स्वपुरंप्रत्यागमनम् ॥ ३ ॥

दानवा ऊचुः ।
भोः सुयोधन राजेन्द्र भरतानां कुलोद्वह ।
शूरैः परिवृतो नित्यं तथैव च महात्मभिः ॥ १
अकार्षीः साहसमिदं कस्मात्प्रायोपवेशनम् ।
आत्मत्यागी ह्यधो याति वाच्यतां चायशस्करीम्॥
न हि कार्यविरुद्धेषु बहुपापेषु कर्मसु ।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ ३
नियच्छैनां मतिं राजन्धर्मार्थसुखनाशिनीम् ।
यशःप्रतापवीर्यघ्नीं शत्रूणां हर्षवर्धनीम् ॥ ४
श्रूयतां तु प्रभो तत्त्वं दिव्यतां चात्मनो नृप ।
निर्माणं च शरीरस्य ततो धैर्यमवाप्नुहि ॥ ५
पुरा त्वं तपसाऽस्माभिर्लब्धो राजन्महेश्वरात् ।
पूर्वकायश्च ते सर्वो निर्मितो वज्रसंचयैः ॥ ६
अस्त्रैरभेद्यः शस्त्रैश्चाप्यधःकायश्च तेऽनघ ।
कृतः पुष्पमयो देव्या रूपतस्त्रीमनोहरः ॥ ७
एवमीश्वरसंयुक्तस्तव देहो नृपोत्तम ।
देव्या च राजशार्दूल दिव्यस्त्वं हि न मानुषः ॥८
क्षत्रियाश्च महावीर्या भगदत्तपुरोगमाः ।
दिव्यास्त्रविदुषः शूराः क्षपयिष्यन्ति ते रिपून् ॥९
तदलं ते विषादेन भयं तव न विद्यते ।
सहायार्थं च ते वीराः संभूता भुवि दानवाः ॥१०
भीष्मद्रोणकृपादींश्च प्रवेक्ष्यन्त्यपरेऽसुराः ।
यैराविष्टा घृणां त्यक्त्वा योत्स्यन्ते तव वैरिभिः ११
नैव पुत्रान्न च भ्रातॄन्न पितॄन्न च बान्धवान् ।
नैव शिष्यान्न च ज्ञातीन्न बालान्स्थविरान्न च ।
युधि संप्रहरिष्यन्तो मोक्ष्यन्ति कुरुसत्तम ॥ १२
निःस्नेहा दानवाविष्टाः समाक्रान्तेऽन्तरात्मनि ।
प्रहरिष्यन्ति बन्धुभ्यः स्नेहमुत्सृज्य दूरतः ॥ १३
हृष्टाः पुरुषशार्दूलाः कलुषीकृतमानसाः ।
अनभिज्ञातमूलाश्च दैवाच्च विधिनिर्मितात् ।
व्याभाषमाणाश्चान्योन्यं न मे जीवन्विमोक्ष्यसे ॥
सर्वे शस्त्रास्त्रमोक्षेण पौरुषे समवस्थिताः ।

उपनिषदि आरण्यके प्रोक्ताः औपनिषदाः । समवर्तयन् संप्रावर्तयन् दैतेयदानवा इति पूर्वेण संबन्धः ॥ २३ ॥ कृत्या आज्ञाकरी देवता ॥ २६ ॥ द्विपञ्चाशदधिकद्विशततमोऽध्यायः २५२
कार्यविरुद्धेषु शत्रुजयविरुद्धेषु । पापेषु आत्महत्यादिषु ॥ ३ ॥ नियच्छ त्यजेत्यर्थः ॥ ४ ॥ पूर्वकायः नाभेरुपरि ॥ ६ ॥ घृणां कृपाम् ॥ ११ ॥ अन्तरात्मनि चित्ते समाक्रान्ते दानवैरेव ॥ १३ ॥ दैवाददृष्टात् । विधिनिर्मितात् पूर्वकर्मकृतात् । अविज्ञानविमूढाश्चेति झ. पाठः । अविज्ञानं कार्याकार्यविज्ञानाभावस्तेन विमूढा । न विमोक्ष्यसे इति व्याभाषमाणाः विरुद्धमाभाषन्तः ॥ १४ ॥

श्लाघमानाः कुरुश्रेष्ठ करिष्यन्ति जनक्षयम् ॥ १५
तेपि पञ्च महात्मानः प्रतियोत्स्यन्ति पाण्डवाः ।
वधं चैषां करिष्यन्ति दैवयुक्ता महाबलाः ॥ १६
दैत्यरक्षोगणाश्चैव संभूताः क्षत्रयोनिषु ।
योत्स्यन्ति युधि विक्रम्य शत्रुभिस्तव पार्थिव ॥१७
गदाभिर्मुसलैः शूलैः शस्त्रैरुच्चावचैस्तथा ।
'प्रहरिष्यन्ति ते वीरास्तवारिषु महाबलाः ॥' १८
यच्च तेऽन्तर्गतं वीर भयमर्जुनसंभवम् ।
तत्रापि विहितोऽस्माभिर्वधोपायोऽर्जुनस्य वै ॥१९
हतस्य नरकस्यात्मा कर्णमूर्तिमुपाश्रितः ।
तद्वैरं संस्मरन्वीर योत्स्यते केशवार्जुनौ ॥ २०
स ते विक्रमशौण्डीरो रणे पार्थं विजेष्यति ।
कर्णः प्रहरतांश्रेष्ठः सर्वांश्चारीन्महारथः ॥ २१
ज्ञात्वैतच्छद्मना वज्री रक्षार्थं सव्यसाचिनः ।
कुण्डले कवचं चैव कर्णस्यापहरिष्यति ॥ २२
तस्मादस्माभिरप्यत्र दैत्याः शतसहस्रशः ।
नियुक्ता राक्षसाश्चैव ये ते संशप्तका इति ।
प्रख्यातास्तेऽर्जुनं वीरं युधि हिंस्यन्ति मा शुचः२३
असपत्ना त्वया हीयं भोक्तव्या वसुधा नृप ।
मा विषादं गमस्तस्मान्नैतत्त्वय्युपपद्यते ॥ २४
विनष्टे त्वयि चास्माकं पक्षो हीयेत कौरव ।
गच्छ वीर न ते बुद्धिरन्या कार्या कथंचन ।
त्वमस्माकं गतिर्नित्यं देवतानां च पाण्डवाः ॥२५
वैशंपायन उवाच ।
एवमुक्त्वा परिष्वज्य दैत्यास्तं राजकुञ्जरम् ।
समाश्वास्य च दुर्धर्षं पुत्रवद्दानवर्षभाः ॥ २६
स्थिरां कृत्वा बुद्धिमस्य प्रियाण्युक्त्वा च भारत ।
गम्यतामित्यनुज्ञाय जयमाप्नुहि चेत्यथ ॥ २७
तैर्विसृष्टं महाबाहुं कृत्या सैवानयत्पुरः ।
तमेव देशं यत्रासौ तदा प्रायमुपाविशत् ॥ २८
प्रतिनिक्षिप्य तं वीरं कृत्या समभिपूज्य च ।
अनुज्ञाता च राज्ञा सा तत्रैवान्तरधीयत ॥ २९
गतायामथ तस्यां तु राजा दुर्योधनस्तदा ।
स्वप्नभूतमिदं सर्वमचिन्तयत भारत ॥ ३०
'संमृश्य तानि वाक्यानि दानवोक्तानि दुर्मतेः ।'
विजेष्यामि रणे पाण्डूनिति चास्याभवन्मतिः॥ ३१
कर्णं संशप्तकांश्चैव पार्थस्यामित्रघातिनः ।
अमन्यत वधे युक्तान्समर्थांश्च सुयोधनः ॥ ३२
एवमाशा दृढा तस्य धार्तराष्ट्रस्य दुर्मतेः ।
विनिर्जये पाण्डवानामभवद्भरतर्षभ ॥ ३३
कर्णोऽप्याविष्टचित्तात्मा नरकस्यान्तरात्मना ।
अर्जुनस्य वधे क्रूरां करोति स तदा मतिम् ॥ ३४
संशप्तकाश्च ते वीरा राक्षसाविष्टचेतसः ।
रजस्तमोभ्यामाक्रान्ताः फाल्गुनस्य वधैषिणः ३५
भीष्मद्रोणकृपाद्याश्च दानवाक्रान्तचेतसः ।
न तथा पाण्डुपुत्राणां स्नेहवन्तोऽभवंस्तदा ॥ ३६
न चाचचक्षे कस्मैचिदेतद्राजा सुयोधनः ।
'कृत्ययाऽऽनाय्यकथितं यदस्य निशि दानवैः' ॥
दुर्योधनं निशान्ते च कर्णो वैकर्तनोऽब्रवीत् ।
स्मयन्निवाञ्जलिं कृत्वा पार्थिवं हेतुमद्वचः ॥ ३८
न मृतो जयते शत्रूञ्जीवन्भद्राणि पश्यति ।
मृतस्य भद्राणि कुतः कौरवेय कुतो जयः ॥ ३९
न कालोऽद्य विषादस्य भयस्य मरणस्य वा ।
परिष्वज्याब्रवीच्चैनं भुजाभ्यां स महाभुजः ॥ ४०
उत्तिष्ठ राजन्किं शेषे कस्माच्छोचसि शत्रुहन् ।
शत्रून्प्रताप्य वीर्येण स कथं मर्तुमर्हसि ॥ ४१
अथवा ते भयं जातं दृष्ट्वाऽर्जुनपराक्रमम् ।
सत्यं ते प्रतिजानामि वधिष्यामि रणेऽर्जुनम् ॥ ४२
गते त्रयोदशे वर्षे सत्येनायुधमालभे ।
आनयिष्याम्यहं पार्थान्वशं तव जनाधिप ॥ ४३
एवमुक्तस्तु कर्णेन दैत्यानां वचनात्तथा ।
प्रणिपातेन चाप्येषामुदतिष्ठत्सुयोधनः ॥ ४४
दैत्यानां तद्वचः श्रुत्वा हृदि कृत्वा स्थिरां मतिम् ।
ततो मनुजशार्दूलो योजयामास वाहिनीम् ।

विक्रमे शत्रुजये । शौण्डीरः समर्थः ॥ २१ ॥ जयमाप्नुहि चेत्युक्त्वेति शेषः । अथ तैर्विसृष्टमिति संबन्धः ॥ २७ ॥

अन्तरात्मना मनसा ॥ ३४ ॥ पाण्डुपुत्राणामुपरीति शेषः ॥ ३६ ॥ एषां दुःशासनादीनाम् ॥ ४४ ॥

रथनागाश्वकलिलां पदातिजनसंकुलाम् ॥ ४५
गङ्गौघप्रतिमा चास्य प्रयाणे शुशुभे चमूः ॥ ४६
श्वेतच्छत्रैः पताकाभिश्चामरैश्च सुपाण्डुरैः ।
रथैर्नागैः पदातैश्च शुशुभेऽतीव संकुला ॥ ४७
व्यपेताभ्रघने काले द्यौरिवासीत्तु शारदी ।
'हंसपङ्क्तिसमाकीर्णा भ्रमत्सारसशोभिता ॥' ४८
जयाशीर्भिर्द्विजेन्द्रैः स स्तूयमानोऽधिराजवत् ।
गृह्णन्नञ्जलिमालाश्च धार्तराष्ट्रो जनाधिपः ॥ ४९
सुयोधनो ययावग्रे श्रिया परमया ज्वलन् ।
कर्णेन सार्धं राजेन्द्र सौबलेन च देविना ॥ ५०
दुःशासनादयश्चास्य भ्रातरः सर्वे एव ते ।
भूरिश्रवाः सोमदत्तो महाराजश्च बाह्लिकः ॥ ५१
रथैर्नानाविधाकारैर्हयैर्गजवरैस्तथा ।
प्रयान्तं नृपसिंहं तमनुजग्मुः कुरूद्वहाः ॥ ५२
'प्रहृष्टमनसः सर्वे दुर्योधनपुरोगमाः ॥'
कालेनाल्पेन राजेन्द्र स्वपुरं विविशुस्तदा ॥ ५३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५३ ॥

---

## चतुःपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५४ ॥

भीष्मेण दुर्योधनंप्रति पाण्डवप्रशंसनपूर्वकं तैःसह सन्धिविधानम् ॥ १ ॥ तथा कर्णस्य गर्हणम् ॥ २ ॥ दुर्योधनानुमत्या कर्णेन दिग्विजयाय निर्गमनम् ॥ ३ ॥

जनमेजय उवाच ।
एवं गतेषु पार्थेषु वने तस्मिन्महात्मसु ।
धार्तराष्ट्रा महेष्वासाः किमकुर्वत सत्तमाः ॥ १
कर्णो वैकर्तनश्चैव शकुनिश्च महाबलः ।
भीष्मद्रोणकृपाश्चैव तन्मे शंसितुमर्हसि ॥ २
वैशंपायन उवाच ।
एवं गतेषु पार्थेषु विसृष्टे च सुयोधने ।
आगते हास्तिनपुरं मोक्षिते पाण्डुनन्दनैः ।
भीष्मोऽब्रवीन्महाराज धार्तराष्ट्रमिदं वचः ॥ ३
उक्तं तात मया पूर्वं गच्छतस्ते तपोवनम् ।
वचनं ते न रुचितं मम तन्न कृतं च ते ॥ ४
ततः प्राप्तं त्वया वीर ग्रहणं शत्रुभिर्बलात् ।
मोक्षितश्चासि धर्मज्ञैः पाण्डवैर्न च लज्जसे ॥ ५
प्रत्यक्षं तव गान्धारे ससैन्यस्य विशांपते ।
सूतपुत्रोऽपयाद्भीतो गन्धर्वाणां तदा रणात् ॥ ६
क्रोशतस्तव राजेन्द्र ससैन्यस्य नृपात्मज ।
'व्यपायात्पृष्ठतस्तस्मात्प्रेक्षमाणः पुनःपुनः ॥' ७
दृष्टस्ते विक्रमश्चैव पाण्डवानां महात्मनाम् ।
कर्णस्य च महाबाहो सूतपुत्रस्य दुर्मतेः ॥ ८
न चापि पादभाक्कर्णः पाण्डवानां महात्मनाम् ।
धनुर्वेदे च शौर्ये च धर्मे वा धर्मवत्सल ॥ ९
तस्मादहं क्षमं मन्ये पाण्डवैस्तैर्महात्मभिः ।
सन्धिं सन्धिविदांश्रेष्ठ कुलस्यास्य विवृद्धये ॥ १०
एवमुक्तश्च भीष्मेण धार्तराष्ट्रो जनेश्वरः ।
प्रहस्य सहसा राजन्विप्रतस्थे ससौबलः ॥ ११
तं तु प्रस्थितमाज्ञाय कर्णदुःशासनादयः ।
अनुजग्मुर्महेष्वासा धार्तराष्ट्रं महाबलम् ॥ १२
तांस्तु संप्रस्थितान्दृष्ट्वा भीष्मः कुरुपितामहः ।
लज्जया व्रीडितो राजञ्जगाम स्वं निवेशनम् ॥ १३
गते भीष्मे महाराज धार्तराष्ट्रो जनेश्वरः ।
पुनरागम्य तं देशममन्त्रयत मन्त्रिभिः ॥ १४
किमस्माकं भवेच्छ्रेयः किं कार्यमवशिष्यते ।
कथं च सुकृतं तत्स्यान्मन्त्रयामास भारत ॥ १५
[*कर्ण उवाच ।
दुर्योधन निबोधेदं यत्त्वां वक्ष्यामि कौरव ।
भीष्मोऽस्मान्निन्दति सदा पाण्डवांश्च प्रशंसति ॥ १६

---

व्यपेतः अभ्रघनः मेघविस्तारो यस्मिन् शरदीत्यर्थः ॥ ४८ ॥ अधिराजा सार्वभौमो युधिष्ठिरस्तद्वत् ॥ ४९ ॥ देविना द्यूतरतेन ॥ ५० ॥ त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५३ ॥

अपयात् अपायात् पलायितः ॥ ६ ॥ संधिं क्षमं युक्तं मन्ये ॥ १० ॥ मन्त्रयामोऽद्य यद्धितमिति झ. ध. पाठः ॥ १५ ॥

---

* एतदादिः सार्धोऽध्यायो झ. पुस्तकएव दृश्यते ॥

त्वद्द्वेषाच्च महाबाहो मामपि द्वेष्टुमर्हति ।
विगर्हते च मां नित्यं त्वत्समीपे नरेश्वर ॥ १७
सोऽहं भीष्मवचस्तद्वै न मृष्यामीह भारत ।
त्वत्समक्षं यदुक्तं च भीष्मेणामित्रकर्शन ॥ १८
पाण्डवानां यशो राजंस्तव निन्दां च भारत ।
अनुजानीहि मां राजन्सभृत्यबलवाहनम् ॥ १९
जेष्यामि पृथिवीं राजन्सशैलवनकाननाम् ।
जिता च पाण्डवैर्भूमिश्चतुर्भिर्बलशालिभिः ॥ २०
तामहं ते विजेष्यामि एक एव न संशयः ।
संपश्यतु सुदुर्बुद्धिर्भीष्मः कुरुकुलाधमः ॥ २१
अनिन्द्यं निन्दते यो हि अप्रशंस्यं प्रशंसति ।
स पश्यतु बलं मेऽद्य आत्मानं तु विगर्हतु ॥ २२
अनुजानीहि मां राजन्ध्रुवो हि विजयस्तव ।
प्रतिजानामि ते सत्यं राजन्नायुधमालभे ॥ २३
तच्छ्रुत्वा तु वचो राजन्कर्णस्य भरतर्षभ ।
प्रीत्या परमया युक्तः कर्णमाह नराधिपः ॥ २४
धन्योस्म्यनुगृहीतोस्मि यस्य मे त्वं महाबलः ।
हितेषु वर्तसे नित्यं सफलं जन्म चाद्य मे ॥ २५
यदा च मन्यसे वीर सर्वशत्रुनिबर्हणम् ।
तदा निर्गच्छ भद्रं ते ह्यनुशाधि च मामिति ॥ २६
एवमुक्तस्तदा कर्णो धार्तराष्ट्रेण धीमता ।
सर्वमाज्ञापयामास प्रायात्रिकमरिंदम ॥ २७
प्रययौ च महेष्वासो नक्षत्रे शुभदैवते ।
शुभे तिथौ मुहूर्ते च पूज्यमानो द्विजातिभिः ॥ २८
मङ्गलैश्च शुभैः स्नातो वाग्भिश्चापि प्रपूजितः ।
नादयन्रथघोषेण त्रैलोक्यं सचराचरम् ॥ २९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि चतुःपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५४ ॥

## पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५५ ॥

दिग्विजयार्थं गतेन कर्णेन सकलराजवशीकरणपूर्वकं पुनर्हास्तिनपुरंप्रत्यागमनम् ॥ १ ॥

वैशंपायन उवाच ।
ततः कर्णो महेष्वासो बलेन महता वृतः ।
द्रुपदस्य पुरं रम्यं रुरोध भरतर्षभ ॥ १
युद्धेन महता चैनं चक्रे वीरं वशानुगम् ।
सुवर्णं रजतं चापि रत्नानि विविधानि च ।
करं च दापयामास द्रुपदं नृपसत्तम ॥ २
तं विनिर्जित्य राजेन्द्र राजानस्तस्य येऽनुगाः ।
तान्सर्वान्वशगांश्चक्रे करं चैनानदापयत् ॥ ३
अथोत्तरां दिशं गत्वा वशे चक्रे नराधिपान् ।
भगदत्तं च निर्जित्य राधेयो गिरिमारुहत् ॥ ४
हिमवन्तं महाशैलं युध्यमानश्च शत्रुभिः ।
प्रययौ च दिशः सर्वान्नृपतीन्वशमानयत् ॥ ५
स हैमवतिकाञ्जित्वा करं सर्वानदापयत् ।
नेपालविषये ये च राजानस्तानवाजयत् ॥ ६
अवतीर्य ततः शैलात्पूर्वां दिशमभिद्रुतः ।
अङ्गान्वङ्गान्कलिङ्गांश्च शुण्डिकान्मिथिलानथ ॥ ७
मागधान्कर्कखण्डांश्च निवेश्य विषयेऽऽत्मनः ।
आवशीरांश्च योध्यांश्च अहिक्षत्रांश्च सोऽजयत् ॥ ८
पूर्वां दिशं विनिर्जित्य वत्सभूमिं तथाऽगमत् ॥ ९
वत्सभूमिं विनिर्जित्य केवलां मृत्तिकावतीम् ।
मोहनं पत्तनं चैव त्रिपुरीं कोसलां तथा ॥ १०
एतान्सर्वान्विनिर्जित्य करमादाय सर्वशः ।
दक्षिणां दिशमास्थाय कर्णो जित्वा महारथान् ।
रुक्मिणं दाक्षिणात्येषु योधयामास सूतजः ॥ ११
स युद्धं तुमुलं कृत्वा रुक्मी प्रोवाच सूतजम् ।
प्रीतोस्मि तव राजेन्द्र विक्रमेण बलेन च ॥ १२
न ते विघ्नं करिष्यामि प्रतिज्ञां समपालयम् ।
प्रीत्या चाहं प्रयच्छामि हिरण्यं यावदिच्छसि ॥ १३

प्रायात्रिकं प्रयातुं राज्ञोऽपेक्षितं शकटापणवीथ्यादि ॥ २७ ॥ मङ्गलैः मङ्गलद्रव्यैः सुगन्धतैलादिभिः स्नातः । शुभैर्नीराजनादिभिः प्रययौ इति संबन्धः ॥ २९ ॥

चतुष्पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५४ ॥

मुण्डिकान्मिथिलानिति ख. पाठः ॥ ७ ॥ प्रतिज्ञां क्षत्रधर्मं समपालयं पालितवानस्मि । क्षत्रधर्मावेक्षयैव त्वया सह युद्धं

समेत्य रुक्मिणा कर्णः पाण्ड्यं शैलं च सोगमत् १४
स केवलं रणे चैव नीलं चापि महीपतिम् ।
वेणुदारिसुतं चैव ये चान्ये नृपसत्तमाः ।
दक्षिणस्यां दिशि नृपान्करान्सर्वानदापयत् ॥१५
शैशुपालिं ततो गत्वा विजिग्ये सूतनन्दनः ।
पार्श्वस्थांश्चापि नृपतीन्वशे चक्रे महाबलः ॥ १६
आवन्त्यांश्च वशे कृत्वा साम्ना च भरतर्षभ ।
वृष्णिभिः सह संगम्य पश्चिमामपि निर्जयत् ॥ १७
वारुणीं दिशमागम्य यावनान्बर्बरांस्तथा ।
नृपान्पश्चिमभूमिस्थान्दापयामास वै करान् ॥ १८
विजित्य पृथिवीं सर्वां सपूर्वापरदक्षिणाम् ।
सम्लेच्छाटविकान्वीरः सपर्वतनिवासिनः ॥ १९
भद्रान्रोहितकांश्चैव आग्नेयान्मालवानपि ।
गणान्सर्वान्विनिर्जित्य नीतिकृत्प्रहसन्निव ॥ २०
शशकान्यवनांश्चैव विजिग्ये सूतनन्दनः ।
नग्नजित्प्रमुखांश्चैव गणाञ्जित्वा महारथान् ॥ २१
एवं स पृथिवीं सर्वां वशे कृत्वा महारथः ।
विजित्य पुरुषव्याघ्रो नागसाह्वयमागमत् ॥ २२
तमागतं महेष्वासं धार्तराष्ट्रो जनाधिपः ।
प्रत्युद्गत्य महाराज सभ्रातृपितृबान्धवः ॥ २३
अर्चयामास विधिना कर्णमाहवशोभिनम् ।
आश्रावयच्च तत्कर्म प्रीयमाणो जनेश्वरः ॥ २४
यन्न भीष्मान्न च द्रोणान्न कृपान्न च बाह्लिकात् ।
प्राप्तवानस्मि भद्रं ते त्वत्तः प्राप्तं मया हि तत् ॥ २५
बहुना च किमुक्तेन शृणु कर्ण वचो मम ।
सनाथोस्मि महाबाहो त्वया नाथेन सत्तम ॥ २६
न हि ते पाण्डवाः सर्वे कलामर्हन्ति षोडशीम् ।
अन्ये वा पुरुषव्याघ्र राजानोऽभ्युदितोदिताः ॥२७
स भवान्धृतराष्ट्रं तं गान्धारीं च यशस्विनीम् ।
पश्य कर्ण महेष्वास अदितिं वज्रभृद्यथा ॥ २८
ततो हलहलाशब्दः प्रादुरासीद्विशांपते ।
हाहाकाराश्च बहवो नगरे नागसाह्वये ॥ २९
केचिदेनं प्रशंसन्ति निन्दन्ति स्म तथा परे ।
तूष्णीमासंस्तथा चान्ये नृपास्तत्र जनाधिप ॥ ३०
एवं विजित्य राजेन्द्र कर्णः शस्त्रभृतांवरः ।
सपर्वतवनाकाशां ससमुद्रां सनिष्कुटाम् ॥ ३१
देशैरुच्चावचैः पूर्णां पत्तनैर्नगरैरपि ।
द्वीपैश्चानूपसंपूर्णैः पृथिवीं पृथिवीपते ॥ ३२
कालेन नातिदीर्घेण वशे कृत्वा तु पार्थिवान् ।
अक्षयं धनमादाय सूतजो नृपमभ्ययात् ॥ ३३
प्रविश्य च गृहं राजन्नभ्यन्तरमरिंदम ।
गान्धारीसहितं वीरो धृतराष्ट्रं ददर्श सः ॥ ३४
पुत्रवच्च नरव्याघ्र पादौ जग्राह धर्मवित् ।
धृतराष्ट्रेण चाश्लिष्य प्रेम्णा चापि विसर्जितः ॥३५
तदाप्रभृति राजा च शकुनिश्चापि सौबलः ।
जानाते निर्जितान्पार्थान्कर्णेन युधि भारत ॥ ३६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५५ ॥

## षट्पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५६ ॥

दुर्योधनेन राजसूययाजनं प्रार्थितैर्ब्राह्मणैर्हेतूक्त्या तन्निषेधनपूर्वकं तंप्रति यज्ञान्तरकरणनियोजनम् ॥ १ ॥

वैशंपायन उवाच ।
जित्वा तु पृथिवीं राजन्सूतपुत्रो जनाधिप ।
अब्रवीत्परवीरघ्नो दुर्योधनमिदं वचः ॥ १
दुर्योधन निबोधेदं यत्त्वां वक्ष्यामि कौरव ।
श्रुत्वा वाचं तथा सर्वं कर्तुमर्हस्यरिंदम ॥ २
तवाद्य पृथिवी वीर निःसपत्ना नृपोत्तम ।
तां पालय यथा शक्रो हतशत्रुर्महामनाः ॥ ३
वैशंपायन उवाच ।

कृतं न त्वज्जिगीषयेति भावः ॥ १३ ॥ शैलं श्रीशैलम् ॥ १४ ॥ आग्नेयान्मालवानिति ख. पाठः ॥ २० ॥ तत्कर्म कर्णविजयं पुरे उद्घोषयामास ॥ २४ ॥ अभ्युदितेभ्योपि उदिताः श्रेष्ठतमाः ॥ २७ ॥ आकाशः पर्वतवनयोरन्तरालम् । सस्याद्युत्पत्तिभूमिमित्यर्थः ॥ ३१ ॥ अनूपं सर्वतोजलं तेन संपूर्णैः ॥ ३२ ॥ पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५५ ॥

एवमुक्तस्तु कर्णेन कर्णं राजाऽब्रवीत्पुनः ।
न किंचिद्दुर्लभं तस्य यस्य त्वं पुरुषर्षभ ॥ ४
सहायश्चानुरक्तश्च मदर्थं च समुद्यतः ।
अभिप्रायस्तु मे कश्चित्तं वै शृणु यथातथम् ॥ ५
राजसूयं पाण्डवस्य दृष्ट्वा क्रतुवरं तदा ।
मम स्पृहा समुत्पन्ना तां संपादय सूतज ॥ ६
एवमुक्तस्ततः कर्णो राजानमिदमब्रवीत् ।
तवाद्य पृथिवीपाला वश्याः सर्वे नृपोत्तम ॥ ७
आहूयन्तां द्विजवराः संभाराश्च यथाविधि ।
संभ्रियन्तां कुरुश्रेष्ठ यज्ञोपकरणानि च ॥ ८
ऋत्विजश्च समाहूता यथोक्तं वेदपारगाः ।
क्रियां कुर्वन्तु ते राजन्यथाशास्त्रमरिंदम ॥ ९
बह्वन्नपानसंयुक्तः सुसमृद्धगुणान्वितः ।
प्रवर्ततां महायज्ञस्तवापि भरतर्षभ ॥ १०
एवमुक्तस्तु कर्णेन धार्तराष्ट्रो विशांपते ।
पुरोहितं समानाय्य वचनं चेदमब्रवीत् ॥ ११
राजसूयं क्रतुश्रेष्ठं समाप्तवरदक्षिणम् ।
आहरस्व यथाशास्त्रं यथान्यायं यथाक्रमम् ॥ १२
स एवमुक्तो नृपतिमुवाच द्विजसत्तमः ॥ १३
'ब्राह्मणैः सहितो राजन्ये तत्रासन्समागताः ।'
न स शक्यः क्रतुश्रेष्ठो जीवमाने युधिष्ठिरे ।
आहर्तुं कौरवश्रेष्ठ कुले तव नृपोत्तम ॥ १४
दीर्घायुर्जीवति च ते धृतराष्ट्रः पिता नृप ।
अतश्चापि विरुद्धस्ते क्रतुरेष नृपोत्तम ॥ १५
अस्ति त्वन्यन्महत्सत्रं राजसूयसमं प्रभो ।
तेन त्वं यज राजेन्द्र शृणु चेदं वचो मम ॥ १६
य इमे पृथिवीपालाः करदास्तव पार्थिव ।
ते करान्संप्रयच्छन्तु सुवर्णं च कृताकृतम् ॥ १७
तेन ते क्रियतामद्य लाङ्गलं नृपसत्तम ।
यज्ञवाटस्य ते भूमिः कृष्यतां तेन भारत ॥ १८
तत्र यज्ञो नृपश्रेष्ठ प्रभूतान्नः सुसंस्कृतः ।
प्रवर्ततां यथान्यायं सर्वतो ह्यनिवारितः ॥ १९
एष ते वैष्णवो नाम यज्ञः सत्पुरुषोचितः ।
एतेन नेष्टवान्कश्चिद्दृते विष्णुं पुरातनम् ॥ २०
राजसूयं क्रतुश्रेष्ठं स्पर्धत्येष महाक्रतुः ।
अस्माकं रोचते चैव श्रेयश्च तव भारत ॥ २१
निर्विघ्नश्च भवत्येष सफला स्यात्स्पृहा तव ।
'तस्मादेष महाबाहो तव यज्ञः प्रवर्तताम् ॥' २२
एवमुक्तस्तु तैर्विप्रैर्धार्तराष्ट्रो महीपतिः ।
कर्णं च सौबलं चैव भ्रातॄंश्चैवेदमब्रवीत् ॥ २३
रोचते मे वचः कृत्स्नं ब्राह्मणानां न संशयः ।
रोचते यदि युष्माकं तस्मात्प्रब्रूत माचिरम् ॥ २४
एवमुक्तास्तु ते सर्वे तथेत्यूचुर्नराधिपम् ।
संदिदेश ततो राजा व्यापारस्थान्यथाक्रमम् ॥ २५
हलस्य करणे चापि व्यादिष्टाः सर्वशिल्पिनः ।
यथोक्तं च नृपश्रेष्ठ कृतं सर्वं यथाक्रमम् ॥ २६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि षट्पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५६ ॥

## सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५७ ॥

दुर्योधनेन यज्ञसमापनानन्तरं सबहुमानं प्राहुणिकविप्रनृपप्रेषणपूर्वकं निजनगरप्रवेशनम् ॥ १ ॥

वैशंपायन उवाच ।
ततस्तु शिल्पिनः सर्वे कृतमूचुर्नराधिपम् ।
विदुरश्च महाप्राज्ञो धृतराष्ट्रे न्यवेदयत् ॥ १
सज्जं क्रतुवरं राजन्कालप्राप्तं च भारत ।
सौवर्णं च कृतं सर्वं लाङ्गलं च महाधनम् ॥ २
एतच्छ्रुत्वा नृपश्रेष्ठो धृतराष्ट्रो विशांपते ।
आज्ञापयामास नृपः क्रतुराजप्रवर्तनम् ॥ ३
ततः प्रववृते यज्ञः प्रभूतार्थः सुसंस्कृतः ।
दीक्षितश्चापि गान्धारिर्यथाशास्त्रं यथाक्रमम् ॥ ४
प्रहृष्टो धृतराष्ट्रश्च विदुरश्च महायशाः ।

कृतं घटितमलंकारादिरूपम् । अकृतमन्यत् ॥ १७ ॥
व्यापारस्थान् शिल्पिनः ॥ २५ ॥

षट्पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५६ ॥

भीष्मो द्रोणः कृपः कर्णो गान्धारी च यशस्विनी ५
निमन्त्रणार्थं दूतांश्च प्रेषयामास शीघ्रगान् ।
पार्थिवानां च राजेन्द्र ब्राह्मणानां तथैव च ॥ ६
ते प्रयाता यथोद्दिष्टा दूतास्त्वरितवाहनाः ।
तत्र कंचित्प्रयान्तं तु दूतं दुःशासनोऽब्रवीत् ॥ ७
गच्छ द्वैतवनं शीघ्रं पाण्डवान्पापपूरुषान् ।
निमन्त्रय यथान्यायं विप्रांस्तस्मिन्वने तदा ॥ ८
स गत्वा पाण्डवान्सर्वानुवाचाभिप्रणम्य च ।
दुर्योधनो महाराज यजते नृपसत्तमः ॥ ९
स्ववीर्यार्जितमर्थौघमवाप्य कुरुसत्तमः ।
तत्र गच्छन्ति राजानो ब्राह्मणाश्च ततस्ततः ॥ १०
अहं तु प्रेषितो राजन्कौरवेण महात्मना ।
आमन्त्रयति वो राजा धार्तराष्ट्रो जनेश्वरः ।
मनोभिलषितं राज्ञस्तं क्रतुं द्रष्टुमर्हथ ॥ ११
ततो युधिष्ठिरो राजा तच्छ्रुत्वा दूतभाषितम् ।
अब्रवीन्नृपशार्दूलो दिष्ट्या राजा सुयोधनः ।
यजते क्रतुमुख्येन पूर्वेषां कीर्तिवर्धनः ॥ १२
वयमप्युपयास्यामो न त्विदानीं कथंचन ।
समयः परिपाल्यो नो यावद्वर्षं त्रयोदशम् ॥ १३
श्रुत्वैतद्धर्मराजस्य भीमो वचनमब्रवीत् ।
तदा तु नृपतिर्गन्ता धर्मराजो युधिष्ठिरः ॥ १४
अस्त्रशस्त्रप्रदीप्तेऽग्नौ यदा तं पातयिष्यति ।
वर्षात्त्रयोदशादूर्ध्वं रणसत्रे नराधिपः ॥ १५
यदा क्रोधहविर्मोक्ता धार्तराष्ट्रेषु पाण्डवः ।
आगन्तारस्तदा स्मेति वाच्यस्ते स सुयोधनः ॥ १६
शेषास्तु पाण्डवा राजन्नैवोचुः किंचिदप्रियम् ।
दूतश्चापि यथावृत्तं धार्तराष्ट्रे न्यवेदयत् ॥ १७
अथाजग्मुर्नरश्रेष्ठा नानाजनपदेश्वराः ।
ब्राह्मणाश्च महाभाग धार्तराष्ट्रपुरं प्रति ॥ १८
ते त्वर्चिता यथाशास्त्रं यथाविधि यथाक्रमम् ।
मुदा परमया युक्ताः प्रीताश्चापि नरेश्वराः ॥ १९
धृतराष्ट्रोऽपि राजेन्द्र संवृतः सर्वकौरवैः ।
हर्षेण महता युक्तो विदुरं प्रत्यभाषत ॥ २०
यथा सुखी जनः सर्वः क्षत्तः स्यादन्नसंयुतः ।
तुष्येत्तु यज्ञसदने तथा नीतिर्विधीयताम् ॥ २१
विदुरस्तु तदाज्ञाय सर्ववर्णानरिंदम ।
यथा प्रमाणतो विद्वान्पूजयामास धर्मवित् ॥ २२
भक्ष्यपेयान्नपानेन माल्यैश्चापि सुगन्धिभिः ।
वासोभिर्विविधैश्चैव योजयामास हृष्टवत् ॥ २३
कृत्वा ह्यवभृथं वीरो यथाशास्त्रं यथाक्रमम् ।
सान्त्वयित्वा च राजेन्द्रो दत्त्वा च विविधं वसु ।
विसर्जयामास नृपान्ब्राह्मणांश्च सहस्रशः ॥ २४
विसृज्य च नृपान्सर्वान्भ्रातृभिः परिवारितः ।
विवेश हास्तिनपुरं सहितः कर्णसौबलैः ॥ २५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५७ ॥

## अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५८ ॥

दुर्योधनसभायां कर्णेनार्जुनवधप्रतिज्ञानम् ॥ १ ॥ चारमुखात्पाण्डवैस्तच्छ्रवणम् ॥ २ ॥

वैशंपायन उवाच ।
प्रविशन्तं महाराज सूतास्तुष्टुवुरच्युतम् ।
जनाश्चापि महेष्वासं तुष्टुवू राजसत्तमम् ॥ १
लाजैश्चन्दनचूर्णैश्च विकीर्य च जनास्ततः ।
ऊचुर्दिष्ट्या नृपाविघ्नः समाप्तोयं क्रतुस्तव ॥ २
अपरे त्वब्रुवंस्तत्र वादिकास्तं महीपतिम् ।
यौधिष्ठिरस्य यज्ञस्य न समो ह्येष ते क्रतुः ॥ ३
नैव तस्य क्रतोरेष कलामर्हति षोडशीम् ।
एवं तत्राब्रुवन्केचिद्वातिकास्तं जनेश्वरम् ॥ ४
सुहृदस्त्वब्रुवंस्तत्र अति सर्वानयं क्रतुः ।

कर्णसौबलैः सौबलाद्यैः ॥ २५ ॥ सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५७ ॥
मागधाश्च महेष्वासं नागराश्च सहस्रशः । इति क. थ.

पाठः ॥ १ ॥ वादिकाः कृतानुवादिनो भूतविशेषाः । वातिकास्तमिति झ. पाठः । वातिकाः वातरोगोपहतचेतस उचितभाषणानभिज्ञाः ॥ ३ ॥

'प्रवर्तितो ह्ययं राज्ञा धार्तराष्ट्रेण धीमता ॥' ५
ययातिर्नहुषश्चापि मान्धाता भरतस्तथा ।
क्रतुमेनं समाहृत्य पूताः सर्वे दिवं गताः ॥ ६
एता वाचः शुभाः शृण्वन्सुहृदां भरतर्षभ ।
प्रविवेश पुरं हृष्टः स्ववेश्म च नराधिपः ॥ ७
अभिवाद्य ततः पादान्मतापित्रोर्विशांपते ।
भीष्मद्रोणकृपादीनां विदुरस्य च धीमतः ॥ ८
अभिवादितः कनीयोभिर्भ्रातृभिर्भ्रातृनन्दनः ।
निषसादासने मुख्ये भ्रातृभिः परिवारितः ॥ ९
तमुत्थाय महाराजं सूतपुत्रोऽब्रवीद्वचः ।
दिष्ट्या ते भरतश्रेष्ठ समाप्तोऽयं महाक्रतुः ॥ १०
हतेषु युधि पार्थेषु राजसूये तथा त्वया ।
आहृतेऽहं नरश्रेष्ठ त्वां सभाजयिता पुनः ॥ ११
तमब्रवीन्महाराजो धार्तराष्ट्रो महायशाः ॥ १२
सत्यमेतत्त्वयोक्तं हि पाण्डवेषु दुरात्मसु ।
निहतेषु नरश्रेष्ठ प्राप्ते चापि महाक्रतौ ।
राजसूये पुनर्वीर त्वमेवं वर्धयिष्यसि ॥ १३
एवमुक्त्वा महाराज कर्णमाश्लिष्य भारत ।
राजसूयं क्रतुश्रेष्ठं चिन्तयामास कौरवः ॥ १४
सोऽब्रवीत्कौरवांश्चापि पार्श्वस्थान्नृपसत्तमः ।
'राधेयसौबलादीन्वै धार्तराष्ट्रो महीपतिः ॥' १५
कदा तु तं क्रतुवरं राजसूयं महाधनम् ।
निहत्य पाण्डवान्सर्वानाहरिष्यामि कौरवाः॥१६
तमब्रवीत्तदा कर्णः शृणु मे राजकुञ्जर ।
पादौ न धावये तावद्यावन्न निहतोऽर्जुनः ॥१७
कीलालजं न खादेयं करिष्ये चासुरव्रतम् ।
नास्तीति नैव वक्ष्यामि याचितो येन केनचित् १८
अथोत्कुष्टं महेष्वासैर्धार्तराष्ट्रैर्महारथैः ।
प्रतिज्ञाते फल्गुनस्य वधे कर्णेन संयुगे ॥ १९
विजितांश्चाप्यमन्यन्त पाण्डवान्धृतराष्ट्रजाः ।
'तदा प्रतिज्ञामारुह्य सूतपुत्रेण भाषिते ॥' २०
दुर्योधनोऽपि राजेन्द्र विसृज्य नरपुङ्गवान् ।
प्रविवेश गृहं श्रीमान्यथा चैत्ररथं प्रभुः ॥ २१
तेऽपि सर्वे महेष्वासा जग्मुर्वेश्मानि भारत ।
'स्वानिस्वानि महाराज भीष्मद्रोणादयो नृप॥'२२
पाण्डवाश्च महेष्वासा दूतवाक्यप्रचोदिताः ।
चिन्तयन्तस्तमेवार्थं नालभन्त सुखं क्वचित् ॥२३
भूयश्च चारै राजेन्द्र प्रवृत्तिरुपपादिता ।
प्रतिज्ञा सूतपुत्रस्य विजयस्य वधं प्रति ॥ २४
एतच्छ्रुत्वा धर्मसुतः समुद्विग्नो नराधिप ।
'अधोमुखश्चिरं तस्थौ किं कार्यमिति चिन्तयन्॥'
अभेद्यकवचं मत्वा कर्णमद्भुतविक्रमम् ।
अनुस्मरंश्च संक्लेशान्न शान्तिमुपजग्मिवान् ॥ २६
तस्य चिन्तापरीतस्य बुद्धिर्जज्ञे महात्मनः ।
बहुव्यालमृगाकीर्णं त्यक्तुं द्वैतवनं वनम् ॥ २७
धार्तराष्ट्रोऽपि नृपतिः प्रशशास वसुंधराम् ।
भ्रातृभिः सहितो वीरैर्भीष्मद्रोणकृपैस्तथा ॥२८
संगम्य सूतपुत्रेण कर्णेनाहवशोभिना ।
'सततं प्रीयमाणो वै देविना सौबलेन च॥'२९
दुर्योधनः प्रिये नित्यं वर्तमानो महीभृताम् ।
पूजयामास विप्रेन्द्रान्क्रतुभिर्भूरिदक्षिणैः ॥ ३०
भ्रातॄणां च प्रियं राजन्स चकार परंतपः ।
निश्चित्य मनसा वीरो दत्तभुक्तफलं धनम् ॥३१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५८ ॥

समाप्तं च घोषयात्रापर्व ॥ १३ ॥

---

सभाजयिता पूजयिष्यामि ॥ ११ ॥ धावये परेणेति शेषः ॥ १७ ॥ कीलालजं मांसम् । असुरं सुरारहितं च व्रतं स्वनियमं करिष्ये । मद्यं मांसं च त्यक्ष्ये इत्यर्थः ॥ १८ ॥ उत्कुष्टं उच्चैः शब्दः कृतः ॥ १९ ॥ अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५८ ॥

# (अथ मृगस्वप्नोद्भवपर्व ॥ १४ ॥)

## एकोनषष्ट्यधिकद्विशततमोऽध्यायः ॥ २५९ ॥

पाण्डवनिहतभूयिष्ठैर्मृगैर्युधिष्ठिरंप्रति स्वप्ने स्थानान्तरगमनेन स्वकुशलशेषीकरणप्रार्थना ॥ १ ॥ युधिष्ठिरेण भ्रातृषु स्वीयस्वप्नदर्शनकथनपूर्वकं पुनः काम्यकवनंप्रति गमनम् ॥ २ ॥

जनमेजय उवाच ।
दुर्योधनं मोक्षयित्वा पाण्डुपुत्रा महाबलाः ।
किमकार्षुर्वने तस्मिंस्तन्ममाख्यातुमर्हसि ॥ १
वैशंपायन उवाच ।
ततः शयानं कौन्तेयं रात्रौ द्वैतवने मृगाः ।
स्वप्नान्ते दर्शयामासुर्बाष्पकण्ठा युधिष्ठिरम् ॥ २
तानब्रवीत्स राजेन्द्रो वेपमानान्कृताञ्जलीन् ।
ब्रूत यद्वक्तुकामाः स्थ के भवन्तः किमिष्यते ॥ ३
एवमुक्ताः पाण्डवेन कौन्तेयेन यशस्विना ।
प्रत्यब्रुवन्मृगास्तत्र हतशेषा युधिष्ठिरम् ॥ ४
वयं मृगा द्वैतवने हतशिष्टास्तु भारत ।
नोत्सीदेम महाराज क्रियतां वासपर्ययः ॥ ५
भवन्तो भ्रातरः शूराः सर्व एवास्त्रकोविदाः ।
कुलान्यल्पावशिष्टानि कृतवन्तो वनौकसाम् ॥ ६
बीजभूता वयं केचिदवशिष्टा महामते ।
विवर्धेमहि राजेन्द्र प्रसादात्ते युधिष्ठिर ॥ ७
तान्वेपमानान्वित्रस्तान्बीजमात्रावशेषितान् ।
मृगान्दृष्ट्वा सुदुःखार्तो धर्मराजो युधिष्ठिरः ॥ ८
तांस्तथेत्यब्रवीद्राजा सर्वभूतहिते रतः ।
यथा भवन्तो ब्रुवते करिष्यामि च तत्तथा ॥ ९
इत्येवं प्रतिबुद्धः स रात्र्यन्ते राजसत्तमः ।
अब्रवीत्सहितान्भ्रातॄन्दयापन्नो मृगान्प्रति ॥ १०
उक्तो रात्रौ मृगैरस्मि स्वप्नान्ते हतशेषितैः ।
तनुभूताः स्म भद्रं ते दया नः क्रियतामिति ११
ते सत्यमाहुः कर्तव्या दयाऽस्माभिर्वनौकसाम् ।
साष्टमासं हि नो वर्षं यदेनानुपयुंक्ष्महे ॥ १२
पुनर्बहुमृगं रम्यं काम्यकं काननोत्तमम् ।
मरुभूमेः शिरःस्थानं तृणबिन्दुसरः प्रति ।
तत्रेमां वसतिं शिष्टां विहरन्तो रमेमहि ॥ १३
वैशंपायन उवाच ।
ततस्ते पाण्डवाः शीघ्रं प्रययुर्धर्मकोविदाः ॥ १४
ब्राह्मणैः सहिता राजन्ये च तत्र सहोषिताः ।
इन्द्रसेनादिभिश्चैव प्रेष्यैरनुगतास्तदा ॥ १५
ते यात्वा सुसुखैर्मार्गैः स्वन्नैः शुचिजलान्वितैः ।
ददृशुः काम्यकं पुण्यमाश्रमं तापसान्वितम् ॥ १६
विविशुस्ते स्म कौरव्या वृता विप्रर्षभैस्तदा ।
तद्वनं भरतश्रेष्ठाः स्वर्गं सुकृतिनो यथा ॥ १७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि मृगस्वप्नोद्भवपर्वणि एकोनषष्ट्यधिकद्विशततमोऽध्यायः ॥ २५९ ॥

समाप्तं च मृगस्वप्नोद्भवपर्व ॥ १५ ॥

---

# (अथ व्रीहिद्रौणिकपर्व ॥ १५ ॥)

## षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥

कदाचन काम्यकवनवासिनः पाण्डवानुपागतेन व्यासेन युधिष्ठिरंप्रति दानप्रशंसनम् ॥ १ ॥

वैशंपायन उवाच ।
वने निवसतां तेषां पाण्डवानां महात्मनाम् ।
वर्षाण्येकादशातीयुः कृच्छ्रेण भरतर्षभ ॥ १
फलमूलाशनास्ते हि सुखार्हा दुःखमुत्तमम् ।

---

वासस्य पर्ययः वैपरीत्यं नात्र वस्तव्यमित्यर्थः ॥ ५ ॥

प्राप्तकालमनुध्यान्तः सेहिरे वरपूरुषाः ॥ २
युधिष्ठिरस्तु राजर्षिरात्मकर्मापराधजम् ।
चिन्तयन्स महाबाहुर्भ्रातॄणां दुःखमुत्तमम् ॥ ३
न सुष्वाप सुखं राजा हृदि शल्यैरिवार्पितैः ।
दौरात्म्यमनुपश्यंस्तत्काले द्यूतोद्भवस्य हि ॥ ४
संस्मरन्परुषा वाचः सूतपुत्रस्य पाण्डवः ।
निःश्वासपरमो दीनो दध्रे कोपविषं महत् ॥ ५
अर्जुनो यमजौ चोभौ द्रौपदी च यशस्विनी ।
स च भीमो महातेजाः सर्वेषामुत्तमो बले ॥ ६
'चिरस्य जातं धर्मज्ञं सासूयमिव ते तदा ।'
युधिष्ठिरमुदीक्षन्तः सेहुर्दुःखमनुत्तमम् ॥ ७
अवशिष्टं त्वल्पकालं मन्वानाः पुरुषर्षभाः ।
वपुरन्यदिवाकार्षुरुत्साहामर्षचेष्टितैः ॥ ८
कस्यचित्त्वथ कालस्य व्यासः सत्यवतीसुतः ।
आजगाम महायोगी पाण्डवानवलोककः ॥ ९
तमागतमभिप्रेक्ष्य कुन्तीपुत्रो युधिष्ठिरः ।
प्रत्युद्गम्य महात्मानं प्रत्यगृह्णाद्यथाविधि ॥ १०
तमासीनमुपासीनः शुश्रूषुर्नियतेन्द्रियः ।
तोषयामास शौचेन व्यासं पाण्डवनन्दनः ॥ ११
तानवेक्ष्य कृशान्पौत्रान्वने वन्येन जीवतः ।
महर्षिरनुकम्पार्थमब्रवीद्बाष्पगद्गदम् ॥ १२
युधिष्ठिर महाबाहो शृणु धर्मभृतांवर ।
नातप्ततपसो लोके प्राप्नुवन्ति महत्सुखम् ।
सुखदुःखे हि पुरुषः पर्यायेणोपसेवते ॥ १३
नात्यन्तमसुखं कश्चित्प्राप्नोति पुरुषर्षभ ।
प्रज्ञावांस्त्वेव पुरुषः संयुक्तः परया धिया ॥ १४
उदयास्तमयज्ञो हि न हृष्यति न शोचति ।
सुखमापतितं विन्दन्दुःखमापतितं सहन् ॥ १५
कालप्राप्तमुपासीत सस्यानामिव कर्षकः ।
तपसो हि परं नास्ति तपसा विन्दते महत् ॥ १६
नासाध्यं तपसः किंचिदिति बुध्यस्व भारत ।
सत्यमार्जवमक्रोधः संविभागो दमः शमः ॥ १७
अनसूयाऽविहिंसा च शौचमिन्द्रियसंयमः ।
साधनानि महाराज नराणां पुण्यकर्मणाम् ॥ १८
अधर्मरुचयो मूढास्तिर्यग्गतिपरायणाः ।
कृच्छ्रां योनिमनुप्राप्ता न सुखं विन्दते जनाः ॥१९
इह यत्क्रियते कर्म तत्परत्रोपभुज्यते ।
'मूलसिक्तस्य वृक्षस्य फलं शाखासु दृश्यते ।'
तस्माच्छरीरं युञ्जीत तपसा नियमेन च ॥ २०
यथाशक्ति प्रयच्छेत संपूज्याभिप्रणम्य च ।
काले प्राप्ते च हृष्टात्मा राजन्विगतमत्सरः ॥ २१
सत्यवादी लभेतायुरनायासमथार्जवम् ।
अक्रोधनोऽनसूयश्च निर्वृतिं लभते पराम् ॥ २२
दान्तः शमपरः शश्वत्परिक्लेशं न विन्दति ।
न च तप्यति दान्तात्मा दृष्ट्वा परगतां श्रियम् ॥२३
संविभक्ता च दाता च भोगवान्सुखवान्नरः ।
भवत्यहिंसकश्चैव परमारोग्यमश्नुते ॥ २४
मान्यं मानयिता जन्म कुले महति विन्दति ।
'विन्दते सुखमत्यर्थमिह लोके परत्र च ।'
व्यसनैर्न तु संयोगं प्राप्नोति विजितेन्द्रियः ॥ २५
शुभानुशयबुद्धिर्हि संयुक्तः कालधर्मणा ।
प्रादुर्भवति तद्योगात्कल्याणमतिरेव सः ॥ २६
युधिष्ठिर उवाच ।
भगवन्दानधर्माणां तपसो वा महामुने ।
किंस्विद्बहुगुणं प्रेत्य किं वा दुष्करमुच्यते ॥ २७
व्यास उवाच ।
दानान्न दुष्करं तात पृथिव्यामस्ति किंचन ।
अर्थे च महती तृष्णा स च दुःखेन लभ्यते ॥२८
'राजन्प्रत्यक्षमेवैतद्दृश्यते लोकसाक्षिकम् ।'
परित्यज्य प्रियान्प्राणान्प्रविशन्ति रणाजिरम् ।

---

ध्यान्तः ध्यायन्तः ॥ २ ॥ द्यूतोद्भवस्य द्यूतहेतोः शकुन्यादेः ॥ ४ ॥ अवलोककोऽवलोकितुकामः ॥ ९ ॥ नह्यनन्तं सुखं कश्चित् इति झ. पाठः ॥ १४ ॥ तपसा ज्ञानेन । महद्ब्रह्म ॥ १६ ॥ काले दानकाले ॥ २१ ॥ अनायासं क्लेशपरिहारम् । निर्वृतिं सुखम् । परां मोक्षाख्याम् ॥ २२ ॥ संविभक्ता अन्नादेर्विभागकर्ता । दाता धनादेः ॥ २४ ॥ शुभमेवानुशेते शुभपक्षपातिनी बुद्धिर्यस्य । कालधर्मेण मरणेन ॥ २६ ॥ दानजानां धर्माणाम् । तपसः कायक्लेशकृतस्य कृच्छ्रादेः । एतयोर्मध्ये प्रेत्य मृत्वा किं बहुगुणं किं परलोके श्रेष्ठमित्यर्थः ॥ २७ ॥

तथैव प्रतिपद्यन्ते समुद्रमटवीं तथा ॥ २९
कृषिगोरक्ष्यमित्येके प्रतिपद्यन्ति मानवाः ।
पुरुषाः प्रेष्यतामेके निर्गच्छन्ति धनार्थिनः ॥ ३०
तस्माद्दुःखार्जितस्यैव परित्यागः सुदुष्करः ।
सुदुष्करतरं दानं तस्माद्दानं मतं मम ॥ ३१
विशेषस्त्वत्र विज्ञेयो न्यायेनोपार्जितं धनम् ।
पात्रे काले च देशे च प्रयतः प्रतिपादयेत् ॥ ३२
अन्यायात्समुपात्तेन दानधर्मौ धनेन यः ।
कुरुते न स कर्तारं त्रायते महतो भयात् ॥ ३३
पात्रे दानं स्वल्पमपि काले दत्तं युधिष्ठिर ।
मनसा हि विशुद्धेन प्रेत्यानन्तफलं स्मृतम् ॥ ३४
'श्रद्धा धर्मानुगा देवी पावनी विश्वधारिणी ।
सवित्री प्रसवित्री च संसारार्णवतारिणी ॥ ३५
श्रद्धया धार्यते धर्मो महद्भिर्नार्थदर्शिभिः ।
सधना अपि राजानो निःश्रद्धा नरकं गताः ॥ ३६
निष्किंचनाश्च मुनयः श्रद्धावन्तो दिवं गताः ।
देशे काले च पात्रे च मुद्गलः श्रद्धयाऽन्वितः ।
व्रीहिद्रोणं प्रदायाथ परं पदमवाप्तवान् ॥' ३७
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
व्रीहिद्रोणपरित्यागाद्यत्फलं प्राप मुद्गलः ॥ ३८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि व्रीहिद्रौणिकपर्वणि षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥

## एकषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६१ ॥

मुद्गलचित्तपरीक्षणाय दुर्वाससा षट्कृत्वो याचनेप्यविकृतमनसा तेन तदातदाऽन्नदानेन तत्तोषणम् ॥ १ ॥ तन्महिम्ना सविमानेन देवदूतेन सशरीरस्यैव मुद्गलस्य स्वर्गप्रत्याह्वानम् ॥ २ ॥ मुद्गलेन तंप्रति स्वर्गस्वरूपनिरूपणप्रार्थना ॥ ३ ॥

युधिष्ठिर उवाच ।
व्रीहिद्रोणः परित्यक्तः कथं तेन महात्मना ।
कस्मै दत्तश्च भगवन्विधिना केन चात्थ मे ॥ १
प्रत्यक्षधर्मा भगवान्यस्य तुष्टो हि कर्मभिः ।
सफलं तस्य जन्माहं मन्ये सद्धर्मचारिणः ॥ २
व्यास उवाच ।
शिलोञ्छवृत्तिर्धर्मात्मा मुद्गलः संयतेन्द्रियः ।
आसीद्राजन्कुरुक्षेत्रे सत्यवागनसूयकः ॥ ३
अतिथिव्रती क्रियावांश्च कापोतीं वृत्तिमास्थितः ।
सत्रमिष्टीकृतं नाम समुपास्ते महातपाः ॥ ४
सपुत्रदारो हि मुनिः पक्षाहारो बभूव ह ।
कपोतवृत्त्या पक्षेण व्रीहिद्रोणमुपार्जयत् ॥ ५
दर्शं च पौर्णमासं च कुर्वन्विगतमत्सरः ।
देवतातिथिशेषेण कुरुते देहयापनम् ॥ ६
तत्रेन्द्रः सहितो देवैः साक्षात्त्रिभुवनेश्वरः ।
प्रत्यगृह्णान्महाराज भागं पर्वणिपर्वणि ॥ ७
स पर्वकालं कृत्वा तु मुनिवृत्त्या समन्वितः ।
अतिथिभ्यो ददावन्नं प्रहृष्टेनान्तरात्मना ॥ ८
व्रीहिद्रोणस्य तत्प्रीत्या ददतोऽन्नं महात्मनः ।
ऋषेर्मात्सर्यहीनस्य वर्धत्यतिथिदर्शनात् ॥ ९
तच्छतान्यपि भुञ्जन्ति ब्राह्मणानां मनीषिणाम् ।
मुनेस्त्यागविशुद्ध्या तु तदन्नं वृद्धिमृच्छति ॥ १०
तं तु शुश्राव धर्मिष्ठं मुद्गलं संशितव्रतम् ।
दुर्वासा नृप दिग्वासास्तमथाभ्याजगाम ह ॥ ११
बिभ्रच्चानियतं वेषमुन्मत्त इव पाण्डव ।
विकचः परुषा वाचो व्याहरन्विविधा मुनिः ॥ १२
अभिगम्याथ तं विप्रमुवाच मुनिसत्तमः ।
अन्नार्थिनमनुप्राप्तं विद्धि मां मुनिसत्तम ॥ १३

---

दुःखार्जितस्य धनस्येति शेषः । मतं श्रेष्ठत्वेन ॥ ३१ ॥ द्रोणो मानविशेषस्तन्मिता व्रीहयस्तेषां दानात् ॥ ३८ ॥ षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥

प्रत्यक्षधर्मो नृणां धर्मस्य वेत्ता । भगवान् ईश्वरः ॥ २ ॥ उञ्छः कणश आदानं कणिशाद्यर्जनं शिलमिति यादवः । ते उभे वृत्तिर्जीवनं यस्य स शिलोञ्छवृत्तिः ॥ ३ ॥ कापोतीं वृत्तिं अल्पसंग्रहरूपाम् । इष्टीकृतं इष्टिभिरेव निर्वर्त्यं नतु पश्वादिना सत्रं यज्ञम् ॥ ४ ॥ व्रीहिद्रोणमात्रं यदा सिध्यति तदा ददाति तदा च दीयमानं तद्वर्धति वर्धते ॥ ९ ॥ ऋच्छति प्राप्नोति ॥ १० ॥ विकचः हसन्मुण्डो वा ॥ १२ ॥

स्वागतं तेऽस्त्विति मुनिं मुद्गलः प्रत्यभाषत ।
पाद्यमाचमनीयं च प्रतिवेद्यान्नमुत्तमम् ॥ १४
प्रादात्स तपसोपात्तं क्षुधितायातिथिप्रियः ।
उन्मत्ताय परां श्रद्धामास्थाय स धृतव्रतः ॥ १५
ततस्तदन्नं रसवत्स एव क्षुधयाऽन्वितः ।
बुभुजे कृत्स्नमुन्मत्तः प्रादात्तस्मै च मुद्गलः ॥१६
भुक्त्वा चान्नं ततः सर्वमुच्छिष्टेनात्मनस्ततः ।
अथाङ्गं लिलिपेऽन्नेन यथागतमगाच्च सः ॥ १७
'तेनैवात्मानमालिप्य हसन्गायन्प्रधावति ।
नृत्यते धावते चैव बुद्ध्या तत्क्रोशते तथा ॥'१८
एवं द्वितीये संप्राप्ते पर्वकाले मनीषिणः ।
आगम्य बुभुजे सर्वमन्नमुञ्छोपजीविनः ॥ १९
निराहारस्तु स मुनिरुञ्छमार्जयते पुनः ।
न चैनं विक्रियां नेतुमशकन्मुद्गलं क्षुधा ॥ २०
न क्रोधो न च मात्सर्यं नावमानो न संभ्रमः ।
सपुत्रदारमुञ्छन्तमाविवेश द्विजोत्तमम् ॥ २१
तथा तमुञ्छधर्माणं दुर्वासा मुनिसत्तमम् ।
उपतस्थे यथाकालं षट्कृत्वः कृतनिश्चयः ॥ २२
न चास्य मनसः कश्चिद्विकारो दृश्यते मुनेः ।
शुद्धसत्वस्य शुद्धं स ददृशे निर्मलं मनः ॥ २३
तमुवाच ततः प्रीतः स मुनिर्मुद्गलं तदा ।
त्वत्समो नास्ति लोकेऽस्मिन्दाता मात्सर्यवर्जितः॥
क्षुद्धर्मसंज्ञां प्रणुदत्यादत्ते धैर्यमेव च ।
विषयानुसारिणी जिह्वा कर्षत्येव रसान्प्रति ॥ २५
आहारप्रभवाः प्राणा मनो दुर्निग्रहं चलम् ।
मनसश्चेन्द्रियाणां चाप्यैकाग्र्यं निश्चितं तपः ॥ २६
श्रमेणोपार्जितं त्यक्तं न च दुःखेन चेतसा ।
तत्सर्वं भवता साधो यथावदुपपादितम् ॥ २७
प्रीताः स्मोऽनुगृहीताश्च समेत्य भवता सह ।
इन्द्रियाभिजयो धैर्यं संविभागो दमः शमः ।
दया सत्यं च धर्मश्च त्वयि सर्वं प्रतिष्ठितम् ॥ २८
'लोकाः समस्ता धर्मेण धार्यन्ते सचराचराः ।
धर्मोपि धार्यते येन धृतियुक्त त्वयाऽऽत्मना ॥ २९
विशुद्धसत्वसंपन्नो न त्वदन्योस्ति कश्चन ।'
जितास्ते कर्मभिर्लोकाः प्राप्तोसि परमां गतिम् ॥३०
अहो दानं विघुष्टं ते सुमहत्स्वर्गवासिभिः ।
सशरीरो भवान्गन्ता स्वर्गं सुचरितव्रत ॥ ३१
इत्येवं वदतस्तस्य तदा दुर्वाससो मुनेः ।
देवदूतो विमानेन मुद्गलं प्रत्युपस्थितः ॥ ३२
हंससारसयुक्तेन किङ्किणीजालमालिना ।
कामगेन विचित्रेण दिव्यगन्धवता तथा ॥ ३३
उवाच चैनं विप्रर्षिं विमानं कर्मभिर्जितम् ।
समुपारोह संसिद्धिं प्राप्तोसि परमां मुने ॥ ३४
तमेवंवादिनमृषिर्देवदूतमुवाच ह ।
इच्छामि भवता प्रोक्तान्गुणान्स्वर्गनिवासिनां ३५
के गुणास्तत्र वसतां किं तपः कश्च निश्चयः ।
स्वर्गे तत्र सुखं किं च दोषो वा देवदूतक ॥३६
सतां साप्तपदं मित्रमाहुः सन्तः कुलोचिताः ।
मित्रतां च पुरस्कृत्य पृच्छामि त्वामहं विभो ॥ ३७
यदत्र तथ्यं पथ्यं च तद्ब्रवीह्यविचारयन् ।
श्रुत्वा तथा करिष्यामि व्यवसायं गिरा तव ॥ ३८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि व्रीहिद्रौणिकपर्वणि एकषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६१ ॥

---

## द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२ ॥

देवदूतात्स्वर्गसुखस्यास्थिरतां परिजानता मुद्गलेन स्वर्गानभिरोचनपूर्वकं देवदूतस्य स्वर्गंप्रति प्रस्थापनम् ॥ १ ॥ व्यासेन युधिष्ठिरंप्रति मुद्गलोपाख्यानकथनपूर्वकं स्वाश्रमंप्रति गमनम् ॥ २ ॥

देवदूत उवाच ।
महर्षेऽकार्यबुद्धिस्त्वं यः स्वर्गसुखमुत्तमम् ।

द्वितीये पक्षे ॥ १९ ॥ क्षुत् क्षुधा ॥ २५ ॥ त्यक्तुं दुःखं शुद्धेन चेतसा इति ख. झ. ध. पाठः ॥ २७ ॥ व्यवसायं निश्चयम् ॥ ३८ ॥ एकषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६१ ॥

संप्राप्तं प्रतिपत्तव्यं विमृशस्त्वबुधो यथा ॥ १
उपरिष्टादयं लोको योऽयं स्वरिति संज्ञितः ।
ऊर्ध्वगः सत्पथः शश्वद्देवयानचरो मुने ॥ २
नातप्ततपसः पुंसो नामहायज्ञयाजिनः ।
नानृता नास्तिकाश्चैव तत्र गच्छन्ति मुद्गल ॥ ३
धर्मात्मानो जितात्मानः शान्ता दान्ता विमत्सराः
दानधर्मरताः पुंसः शूराश्चाहितलक्षणाः ॥ ४
तत्र गच्छन्ति धर्माग्र्यं कृत्वा शमदमात्मकम् ।
लोकान्पुण्यकृतां ब्रह्मन्सद्भिराचरितान्नृभिः ॥ ५
देवाः साध्यास्तथा विश्वे तथैव च महर्षयः ।
यामा धामाश्च मौद्गल्य गन्धर्वाप्सरसस्तथा ॥ ६
एषां देवनिकायानां पृथक्पृथगनेकशः ।
भास्वन्तः कामसंपन्ना लोकास्तेजोमयाः शुभाः ७
त्रयस्त्रिंशत्सहस्राणि योजनानि हिरण्मयः ।
मेरुः पर्वतराड्यत्र देवोद्यानानि मुद्गल ॥ ८
'नन्दनान्यतिरम्याणि तत्रोद्यानानि मुद्गल ।
सर्वकामफलैर्वृक्षैः शोभितानि समन्ततः ॥' ९
नन्दनादीनि पुण्यानि विहाराः पुण्यकर्मणाम् ।
न क्षुत्पिपासे न ग्लानिर्न शीतोष्णे भयं तथा १०
बीभत्समशुभं वाऽपि रोगो वा तत्र कश्चन ।
मनोज्ञाः सर्वतो गन्धाः सुखस्पर्शाश्च सर्वशः ११
शब्दाः श्रुतिमनोग्राह्याः सर्वतस्तत्र वै मुने ।
न शोको न जरा तत्र नायासपरिदेवने ॥ १२
ईदृशः स मुने लोकः स्वकर्मफलहेतुकः ।
सुकृतैस्तत्र पुरुषाः संभवन्त्यात्मकर्मभिः ॥ १३
तैजसानि शरीराणि भवन्त्यत्रोपपद्यताम् ।
कर्मजान्येव मौद्गल्य न मातृपितृजान्युत ॥ १४
न संस्वेदो न दौर्गन्ध्यं पुरीषं मूत्रमेव च ।
तेषां न च रजोवस्त्रं बाधते तत्र वै मुने ॥ १५
न म्लायन्ति स्रजस्तेषां दिव्यगन्धा मनोरमाः ।
समूह्यन्ते विमानैश्च ब्रह्मन्नेवंविधा हि ते ॥ १६
ईर्ष्याशोकक्लमापेता मोहमात्सर्यवर्जिताः ।
सुखं स्वर्गजितस्तत्र वर्तयन्ते महामुने ॥ १७
तेषां तथाविधानां तु लोकानां मुनिपुङ्गव ।
उपर्युपरि शक्रस्य लोका दिव्या गुणान्विताः १८
परतो ब्रह्मणस्तस्य लोकस्तेजोमयः शुभः ।
यत्र यान्त्यृषयो ब्रह्मन्पूताः स्वैः कर्मभिः शुभैः ॥
ऋभवो नाम तत्रान्ये देवानामपि देवताः ।
तेषां लोकाः परतरे यान्यजन्तीह देवताः ॥ २०
स्वयंप्रभास्ते भास्वन्तो लोकाः कामदुघाः परे ।
न तेषां स्त्रीकृतस्तापो न भोगैश्वर्यमत्सरः ॥ २१
न वर्तयन्त्याहुतिभिस्ते नाप्यमृतभोजनाः ।
तथा दिव्यशरीरास्ते न च विग्रहमूर्तयः ॥ २२
नासुखाः सुखकामास्ते देवदेवाः सनातनाः ।
न कल्पपरिवर्तेषु परिवर्तन्ति ते तथा ॥ २३
जरा मृत्युः कुतस्तेषां हर्षः प्रीतिः सुखं न च ।
न दुःखं न सुखं चापि रागद्वेषौ कुतो मुने॥२४
देवानामपि मौद्गल्य काङ्क्षिता सा गतिः परा ।
दुष्प्रापा परमा सिद्धिरगम्या कामगोचरैः ॥ २५
त्रयस्त्रिंशदिमे लोकाः शेषा लोका मनीषिभिः ।
गम्यन्ते नियमैः श्रेष्ठैर्दानैर्वा विधिपूर्वकैः ॥ २६
सेयं दानकृता व्युष्टिरनुप्राप्ता सुखं त्वया ।
तां भुङ्क्ष्व सुकृतैर्लब्धां तपसा द्योतितप्रभः ॥ २७
एतत्स्वर्गसुखं विप्र लोका नानाविधास्तथा ।
गुणाः स्वर्गस्य प्रोक्तास्ते दोषानपि निबोध मे २८
कृतस्य कर्मणस्तत्र भुज्यते यत्फलं दिवि ।
न चान्यत्क्रियते कर्म मूलच्छेदेन भुज्यते ॥ २९
सोऽत्र दोषो मम मतस्तस्यान्ते पतनं च यत् ।
सुखव्याप्तमनस्कानां पतनं यच्च मुद्गल ॥ ३०
असंतोषः परीतापो दृष्ट्वा दीप्ततराः श्रियः ।
यद्भवत्यवरे स्थाने स्थितानां तत्सुदुष्करम् ॥ ३१
संज्ञामोहश्च पततां रजसा च प्रधर्षणम् ।
प्रम्लानेषु च माल्येषु ततः पिपतिषोर्भयम् ॥ ३२
आब्रह्मभवनादेते दोषा मौद्गल्य दारुणाः ।

---

उपरिष्टाच्च स्वर्लोकः इति ख. झ. पाठः ॥ २ ॥ पुंसः पुमांसः ॥ ३ ॥ शूराश्चाहवलक्षणाः इति ख. झ. पाठः ॥ ४ ॥ यामा धामाश्च गणविशेषाः ॥ ६ ॥ देवानां निकाया आलया येषु तेषां देवनिकायानाम् ॥ ७ ॥ उपपद्यतामुपगच्छताम् ॥ १४ ॥ त्रयस्त्रिंशदिमे देवा येषां लोका इति ख. झ. पाठः ॥ २६ ॥ व्युष्टिः संपत्तिः ॥ २७ ॥

नाकलोके सुकृतिनां गुणास्त्वयुतशो नृणाम् ॥ ३३
अयं त्वन्यो गुणः श्रेष्ठश्च्युतानां स्वर्गतो मुने ।
शुभानुशययोगेन मनुष्येषूपजायते ॥ ३४
तत्रापि स महाभागः कुले महति जायते ।
न चेत्संबुध्यते तत्र गच्छत्यधमतां ततः ॥ ३५
इह यत्क्रियते कर्म तत्परत्रोपभुज्यते ।
कर्मभूमिरियं ब्रह्मन्फलभूमिरसौ मता ॥ ३६
[मुद्गल उवाच ।
महान्तस्तु अमी दोषास्त्वया स्वर्गस्य कीर्तिताः ।
निर्दोष एव यस्त्वन्यो लोकं तं प्रवदस्व मे ॥ ३७
देवदूत उवाच ।
ब्रह्मणः सदनादूर्ध्वं तद्विष्णोः परमं पदम् ।
शुद्धं सनातनं ज्योतिः परं ब्रह्मेति यद्विदुः ॥ ३८
न तत्र विप्र गच्छन्ति पुरुषा विषयात्मकाः ।
दम्भलोभमहाक्रोधमोहद्रोहैरभिद्रुताः ॥ ३९
निर्ममा निरहंकारा निर्द्वन्द्वाः संयतेन्द्रियाः ।
ध्यानयोगपराश्चैव तत्र गच्छन्ति मानवाः ॥]४०
एतत्ते सर्वमाख्यतं यन्मां पृच्छसि मुद्गल ।
तवानुकम्पया साधो साधु गच्छाम माचिरम् ४१
व्यास उवाच ।
एतच्छ्रुत्वा तु मौद्गल्यो वाक्यं विममृशे धिया ।
विमृश्य च मुनिश्रेष्ठो देवदूतमुवाचह ॥ ४२
देवदूत नमस्तेऽस्तु गच्छ तात यथासुखम् ।
महादोषेण मे कार्यं न स्वर्गेण सुखेन वा ॥ ४३
पतनान्ते महादुःखं परितापः सुदारुणः ।
स्वर्गभाजः पतन्तीह तस्मात्स्वर्गं न कामये ॥४४
यत्र गत्वा न शोचन्ति न व्यथन्ति चलन्ति वा ।
तदहं स्थानमत्यन्तं मार्गयिष्यामि केवलम् ॥४५
इत्युक्त्वा स मुनिर्वाक्यं देवदूतं विसृज्य तम् ।
शिलोञ्छवृत्तिमुत्सृज्य शममातिष्ठदुत्तमम् ॥ ४६
तुल्यनिन्दास्तुतिर्भूत्वा समलोष्टाश्मकाञ्चनः ।
ज्ञानयोगेन शुद्धेन ध्याननित्यो बभूव ह ॥ ४७
'निगृहीतेन्द्रियग्रामः समयोजयदात्मनि ।
युक्तचित्तं यथाऽऽत्मानं युयोज परमेश्वरे ॥' ४८
ध्यानयोगाद्बलं लब्ध्वा प्राप्य बुद्धिमनुत्तमाम् ।
जगाम शाश्वतीं सिद्धिं परां निर्वाणलक्षणाम् ४९
तस्मात्त्वमपि कौन्तेय न शोकं कर्तुमर्हसि ।
राज्यात्स्फीतात्परिभ्रष्टस्तपसा तदवाप्स्यसि ॥५०
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
पर्यायेणोपसर्पन्ते नरं नेमिमरा इव ॥ ५१
पितृपैतामहं राज्यं प्राप्स्यस्यमितविक्रम ।
वर्षात्त्रयोदशादूर्ध्वं व्येतु ते मानसो ज्वरः ॥ ५२
वैशंपायन उवाच ।
स एवमुक्त्वा भगवान्व्यासः पाण्डवनन्दनम् ।
जगाम तपसे धीमान्पुनरेवाश्रमं प्रति ॥ ५३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि व्रीहिद्रौणिकपर्वणि द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२ ॥

समाप्तं व्रीहिद्रौणिकपर्व ॥ १५ ॥

---

# (अथ द्रौपदीहरणपर्व ॥ १६ ॥)*

## त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६३ ॥

कादाचन शिष्यायुतसहितेन दुर्वाससा दुर्योधनगृहंप्रति गमनम् ॥ १ ॥ दुर्योधनेन स्वपरिचर्यासंतुष्टं तंप्रति ब्राह्मणादीनां द्रौपद्याश्च भोजनावसाने भोजनाय पाण्डवान्प्रति गमनप्रार्थना ॥ २ ॥ दुर्वाससा तस्मै तद्वरदानपूर्वकं पाण्डवान्प्रति प्रस्थानम् ॥ ३ ॥

जनमेजय उवाच ।
वसत्स्वेवं वने तेषु पाण्डवेषु महात्मसु ।

नेमिं चक्रधाराम् । अराः नाभिनेमिसंधानदारूणि ॥ ५१ ॥

द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२ ॥

* इतः परं दुर्वासउपाख्यानात्मकमध्यायद्वयं झ. पुस्तकएव दृश्यते ।

रममाणेषु चित्राभिः कथाभिर्मुनिभिः सह ॥ १
सूर्यदत्ताक्षयान्नेन कृष्णाया भोजनावधि ।
ब्राह्मणांस्तर्पमाणेषु ये चान्नार्थमुपागताः ।
आरण्यानां मृगाणां च मांसैर्नानाविधैरपि ॥ २
धार्तराष्ट्रा दुरात्मानः सर्वे दुर्योधनादयः ।
कथं तेष्वन्ववर्तन्त पापाचारा महामुने ॥ ३
दुःशासनस्य कर्णस्य शकुनेश्च मते स्थिताः ।
एतदाचक्ष्व भगवन्वैशंपायन पृच्छतः ॥ ४

वैशंपायन उवाच ।

श्रुत्वा तेषां तथा वृत्तिं नगरे वसतामिव ।
दुर्योधनो महाराज तेषु पापमरोचयत् ॥ ५
तथा तैर्निकृतिप्रज्ञैः कर्णदुःशासनादिभिः ।
नानोपायैरघं तेषु चिन्तयत्सु दुरात्मसु ॥ ६
अभ्यागच्छत्स धर्मात्मा तपस्वी सुमहायशाः ।
शिष्यायुतसमोपेतो दुर्वासा नाम कामतः ॥ ७
तमागतमभिप्रेक्ष्य मुनिं परमकोपनम् ।
दुर्योधनो विनीतात्मा प्रश्रयेण दमेन च ।
सहितो भ्रातृभिः श्रीमानातिथ्येन न्यमन्त्रयत् ॥८
विधिवत्पूजयामास स्वयं किंकरवत्स्थितः ।
अहानि कतिचित्तत्र तस्थौ स मुनिसत्तमः ॥ ९
तं च पर्यचरद्राजा दिवारात्रमतन्द्रितः ।
दुर्योधनो महाराज शापात्तस्य विशङ्कितः ॥ १०
क्षुधितोऽस्मि ददस्वान्नं शीघ्रं मम नराधिप ।
इत्युक्त्वा गच्छति स्नातुं प्रत्यागच्छति वै चिरात् ११
न भोक्ष्याम्यद्य मे नास्ति क्षुधेत्युक्त्वैत्यदर्शनम् ।
अकस्मादेत्य च ब्रूते भोजयास्मांस्त्वरान्वितः ॥ १२
कदाचिच्च निशीथे स उत्थाय निकृतौ स्थितः ।
पूर्ववत्कारयित्वाऽन्नं न भुङ्क्ते गर्हयन्स सः ॥ १३
वर्तमाने तथा तस्मिन्यदा दुर्योधनो नृपः ।
विकृतिं नैति न क्रोधं तदा तुष्टोऽभवन्मुनिः ॥ १४
आह चैनं दुराधर्षो वरदोऽस्मीति भारत ॥ १५
वरं वरय भद्रं ते यत्ते मनसि वर्तते ।
मयि प्रीते तु यद्धर्म्यं नालभ्यं विद्यते तव ॥ १६

वैशंपायन उवाच ।

एतच्छ्रुत्वा वचस्तस्य महर्षेर्भावितात्मनः ।
अमन्यत पुनर्जातमात्मानं स सुयोधनः ॥ १७
प्रागेव मन्त्रितं चासीत्कर्णदुःशासनादिभिः ।
याचनीयं मुनेस्तुष्टादिति निश्चित्य दुर्मतिः ॥१८
अतिहर्षान्वितो राजन्वरमेनमयाचत ।
शिष्यैः सह मम ब्रह्मन्यथा जातोऽतिथिर्भवान् ॥
अस्मत्कुले महाराजो ज्येष्ठः श्रेष्ठो युधिष्ठिरः ।
वने वसति धर्मात्मा भ्रातृभिः परिवारितः ।
गुणवाञ्शीलसंपन्नस्तस्य त्वमतिथिर्भव ॥ २०
यदा च राजपुत्री सा सुकुमारी यशस्विनी ।
भोजयित्वा द्विजान्सर्वान्पतींश्च वरवर्णिनी ॥२१
विश्रान्ता च स्वयं भुक्त्वा सुखासीना भवेद्यदा ।
तदा त्वं तत्र गच्छेथा यद्यनुग्राह्यता मयि ॥ २२
तथा करिष्ये त्वत्प्रीत्येत्येवमुक्त्वा सुयोधनम् ।
दुर्वासा अपि विप्रेन्द्रो यथागतमगात्ततः ॥ २३
कृतार्थमपि चात्मानं तदा मेने सुयोधनः ।
करेण च करं गृह्य कर्णस्य मुदितो भृशम् ॥२४
कर्णोपि भ्रातृसहितमित्युवाच नृपं मुदा ।
दिष्ट्या कामः सुसंवृत्तो दिष्ट्या कौरव वर्धसे ।
दिष्ट्या ते शत्रवो मग्ना दुस्तरे व्यसनार्णवे ॥२५
दुर्वासःक्रोधजे वह्नौ पतिताः पाण्डुनन्दनाः ।
स्वैरेव ते महापापैर्गता वै दुस्तरं तमः ॥ २६

वैशंपायन उवाच ।

इत्थं ते निकृतिप्रज्ञा राजन्दुर्योधनादयः ।
हसन्तः प्रीतमनसो जग्मुः स्वंस्वं निकेतनम् २७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीहरणपर्वणि त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६३ ॥

---

अघं दुःखम् ॥ ६ ॥ धर्म्यं धर्मादनपेतम् ॥ १६ ॥ | त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६३ ॥

## चतुःषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६४ ॥

दुर्वाससा दुर्योधनप्रार्थनासफलीकरणायाकाले पाण्डवान्प्रत्यन्नयाचनम् ॥ १ ॥ तथा युधिष्ठिरानुमत्या शिष्यायुतेन सह स्नानाय नदींप्रति गमनम् ॥ २ ॥ अत्रान्तरे द्रौपदीप्रार्थनया श्रीकृष्णेन तत्समीपागमनम् ॥ ३ ॥ तया निवेदितदुर्वासोवृत्तान्तेन तेन स्वीयक्षुन्निवृत्तये द्रौपदींप्रत्यन्नयाचनम् ॥ ४ ॥ तयाऽन्नस्य शेषाभावे निवेदितेऽन्नस्थालीमानाय्य तत्कण्ठलग्नशाकपुलाकभक्षणेन सशिष्यस्य दुर्वाससस्तृप्तिजननम् ॥ ५ ॥ ततो भोजनाय भीमेनाह्वाने लज्जितस्य दुर्वाससो भयाच्छिष्यैः सह पलायनम् ॥ ६ ॥

वैशंपायन उवाच ।
ततः कदाचिद्दुर्वासाः सुखासीनांस्तु पाण्डवान् ।
भुक्त्वा चावस्थितां कृष्णां ज्ञात्वा तस्मिन्वने मुनिः ।
अभ्यागच्छत्परिवृतः शिष्यैरयुतसंमितैः ॥ १
दृष्ट्वा यान्तं तमतिथिं स च राजा युधिष्ठिरः ।
जगामाभिमुखः श्रीमान्सह भ्रातृभिरच्युतः ॥ २
तस्मै बद्ध्वाञ्जलिं सम्यगुपवेश्य वरासने ।
विधिवत्पूजयित्वा तमातिथ्येन न्यमन्त्रयत् ।
आह्निकं भगवन्कृत्वा शीघ्रमेहीति चाब्रवीत् ॥ ३
जगाम च मुनिः सोपि स्नातुं शिष्यैः सहानघः ।
भोजयेत्सहशिष्यं मां कथमित्यविचिन्तयन् ॥ ४
न्यमज्जत्सलिले चापि मुनिसङ्घः समाहितः ॥ ५
एतस्मिन्नन्तरे राजन्द्रौपदी योषितां वरा ।
चिन्तामवाप परमामन्नहेतोः पतिव्रता ॥ ६
सा चिन्तयन्ती च यदा नान्नहेतुमविन्दत ।
मनसा चिन्तयामास कृष्णं कंसनिषूदनम् ॥ ७
कृष्णकृष्ण महाबाहो देवकीनन्दनाव्यय ।
वासुदेव जगन्नाथ प्रणतार्तिविनाशन ॥ ८
विश्वात्मन्विश्वजनक विश्वहर्तः प्रभोऽव्यय ।
प्रपन्नपाल गोपाल प्रजापाल परात्पर ।
आकूतीनां च चित्तीनां प्रवर्तक नताऽस्मि ते ॥ ९
वरेण्य वरदानन्त अगतीनां गतिप्रद ।
पुराणपुरुष प्राणमनोवृत्त्याद्यगोचर ॥ १०
सर्वाध्यक्ष पराध्यक्ष त्वामहं शरणं गता ।
पाहि मां कृपया देव शरणागतवत्सल ॥ ११
नीलोत्पलदलश्याम पद्मगर्भारुणेक्षण ।
पीताम्बरपरीधान लसत्कौस्तुभभूषण ॥ १२
त्वमादिरन्तो भूतानां त्वमेव च परायणम् ।
परात्परतरं ज्योतिर्विश्वात्मा सर्वतोमुखः ॥ १३
त्वामेवाहुः परं बीजं निधानं सर्वसंपदाम् ।
त्वया नाथेन देवेश सर्वापद्भ्यो भयं न हि ॥ १४
दुःशासनादहं पूर्वं सभायां मोचिता यथा ।
तथैव संकटादस्मान्मामुद्धर्तुमिहार्हसि ॥ १५

वैशंपायन उवाच ।
एवं स्तुतस्तदा देवः कृष्णया भक्तवत्सलः ।
द्रौपद्याः संकटं ज्ञात्वा देवदेवो जगत्पतिः ॥ १६
पार्श्वस्थां शयने त्यक्त्वा रुक्मिणीं केशवः प्रभुः ।
तत्राजगाम त्वरितो ह्यचिन्त्यगतिरीश्वरः ॥ १७
ततस्तां द्रौपदी दृष्ट्वा प्रणम्य परया मुदा ।
अब्रवीद्वासुदेवाय मुनेरागमनादिकम् ॥ १८
ततस्तामब्रवीत्कृष्णः क्षुधितोस्मि भृशातुरः ।
शीघ्रं भोजय मां कृष्णे पश्चात्सर्वं करिष्यसि ॥ १९
निशम्य तद्वचः कृष्णा लज्जिता वाक्यमब्रवीत् ।
स्थाल्यां भास्करदत्तायामन्नं मद्भोजनावधि ॥ २०
भुक्तवत्यस्म्यहं देव तस्मादन्नं न विद्यते ।
ततः प्रोवाच भगवान्कृष्णां कमललोचनः ॥ २१
कृष्णे न नर्मकालोऽयं क्षुच्छ्रमेणातुरे मयि ।
शीघ्रं गच्छ मम स्थालीमानयित्वा प्रदर्शय ॥ २२
इति निर्बन्धतः स्थालीमानाय्य स यदूद्वहः ।
स्थाल्याः कण्ठेऽथ संलग्नं शाकान्नं वीक्ष्य केशवः ॥ २३
उपयुज्याब्रवीदेनामनेन हरिरीश्वरः ।
विश्वात्मा प्रीयतां देवस्तुष्टश्चास्त्विति यज्ञभुक् ॥ २४
आकारय मुनीञ्शीघ्रं भोजनायेति चाब्रवीत् ।
भीमसेनं महाबाहुः कृष्णः क्लेशविनाशनः ॥ २५

एतस्मिन्नन्तरे काले ॥ ६ ॥ आकूतीनां चित्तीनां चेति चेतोवृत्तिविशेषाणाम् ॥ ९ ॥ सहदेवं महाबाहुरिति झ. पाठः ॥ २५ ॥

ततो जगाम त्वरितो भीमसेनो महायशाः ।
आकारितुं तु तान्सर्वान्भोजनार्थं नृपोत्तम ।
स्नातुं गतान्देवनद्यां दुर्वासःप्रभृतीन्मुनीन् ॥ २६
ते चावतीर्णाः सलिले कृतवन्तोऽघमर्षणम् ।
दृष्ट्वोद्गारान्सान्नरसांस्तृप्त्या परमया युताः ।
उत्तीर्य सलिलात्तस्माद्दृष्टवन्तः परस्परम् ॥ २७
दुर्वाससमभिप्रेक्ष्य ते सर्वे मुनयोऽब्रुवन् ।
राज्ञा हि कारयित्वाऽन्नं वयं स्नातुं समागताः॥२८
आकण्ठतृप्ता विप्रर्षे किंस्विद्भुञ्जामहे वयम् ।
वृथा पाकः कृतोऽस्माभिस्तत्र किं करवामहे ॥२९
दुर्वासा उवाच ।
वृथा पाकेन राजर्षेरपराधः कृतो महान् ।
माऽस्मानधाक्षुर्दृष्ट्वैव पाण्डवाः क्रूरचक्षुषा ॥ ३०
स्मृत्वाऽनुभावं राजर्षेरम्बरीषस्य धीमतः ।
बिभेमि सुतरां विप्रा हरिपादाश्रयाज्जनात् ॥३१
पाण्डवाश्च महात्मानः सर्वे धर्मपरायणाः ।
शूराश्च कृतविद्याश्च व्रतिनस्तपसि स्थिताः ॥ ३२
सदाचाररता नित्यं वासुदेवपरायणाः ।
क्रुद्धास्ते निर्दहेयुर्वै तूलराशिमिवानलः ।
तत एतानपृष्ट्वैव शिष्याः शीघ्रं पलायत ॥ ३३
वैशंपायन उवाच ।
इत्युक्तास्ते द्विजाः सर्वे मुनिना गुरुणा तदा ।
पाण्डवेभ्यो भृशं भीता दुद्रुवुस्ते दिशो दश ३४
भीमसेनो देवनद्यामपश्यन्मुनिसत्तमान् ।
तीर्थेष्वितस्ततस्तस्या विचचार गवेषयन् ॥ ३५
तत्रस्थेभ्यस्तापसेभ्यः श्रुत्वा तांश्चैव विद्रुतान् ।
युधिष्ठिरमथाभ्येत्य तं वृत्तान्तं न्यवेदयत् ॥ ३६
ततस्ते पाण्डवाः सर्वे प्रत्यागमनकाङ्क्षिणः ।
प्रतीक्षन्तः कियत्कालं जितात्मानोऽवतस्थिरे॥३७
निशीथेऽभ्येत्य चाकस्मादस्मान्स च्छलयिष्यति ।
कथं च निस्तरेमास्मात्कृच्छ्राद्दैवोपसादितात् ३८
इति चिन्तापरान्दृष्ट्वा निःश्वसन्तो मुहुर्मुहुः ।
उवाच वचनं श्रीमान्कृष्णः प्रत्यक्षतां गतः ॥३९
भवतामापदं ज्ञात्वा ऋषेः परमकोपनात् ।
द्रौपद्या चिन्तितः पार्था अहं सत्वरमागतः॥४०
न भयं विद्यते तस्माद्दृषेर्दुर्वाससोऽल्पकम् ।
तेजसा भवतां भीतः पूर्वमेव पलायितः ॥ ४१
धर्मनित्यास्तु ये केचिन्न ते सीदन्ति कर्हिचित् ।
आपृच्छे वो गमिष्यामि नियतं भद्रमस्तु वः ४२
वैशंपायन उवाच ।
श्रुत्वेरितं केशवस्य बभूवुः स्वस्थमानसाः ।
द्रौपद्या सहिताः पार्थास्तमूचुर्विगतज्वराः ॥४३
त्वया नाथेन गोविन्द दुस्तरामापदं विभो ।
तीर्णाः प्लवमिवासाद्य मज्जमाना महार्णवे ॥ ४४
स्वस्ति साधय भद्रं ते इत्याज्ञातो ययौ पुरीम्४५
पाण्डवाश्च महाभाग द्रौपद्या सहिताः प्रभो ।
ऊषुः प्रहृष्टमनसो विहरन्तो वनाद्वनम् ।
इति तेऽभिहितं राजन्यत्पृष्टोऽहमिह त्वया ॥४६
एवंविधान्यलीकानि धार्तराष्ट्रैर्दुरात्मभिः ।
पाण्डवेषु वनस्थेषु प्रयुक्तानि वृथाऽभवन् ॥ ४७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीहरणपर्वणि चतुःषष्टयधिकद्विशततमोऽध्यायः ॥ २६४ ॥

---

## पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६५ ॥

पञ्चस्वपि पाण्डवेषु मृगयार्थं गतेषु सपरिजनेन सैन्धवेन मार्गवशात्तदाश्रमाभिगमनम् ॥ १ ॥ तत्र द्रौपदीदर्शनक्षुभितहृदा जयद्रथेन तत्तत्वजिज्ञासया तन्निकटं प्रति कोटिकाश्यस्य प्रेषणम् ॥ २ ॥

वैशंपायन उवाच ।
तस्मिन्बहुमृगेऽरण्ये अटमाना महारथाः ।
काम्यके भरतश्रेष्ठा विजहुस्ते यथामराः ॥ १
प्रेक्षमाणा बहुविधान्वनोद्देशान्समन्ततः ।

सहदेवो महायशा इति झ. पाठः ॥ २६ ॥ सहदेवो देवनद्यामिति झ. पाठः ॥ ३५ ॥ अलीकान्यहितानि ॥ ४७ ॥

चतुःषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६४ ॥

यथर्तुकालरम्याश्च वनराजीः सुपुष्पिताः ॥ २
पाण्डवा मृगयाशीलाश्चरन्तस्तन्महद्वनम् ।
विजह्रुरिन्द्रप्रतिमाः कंचित्कालमरिंदमाः ॥ ३
ततस्ते यौगपद्येन ययुः सर्वे चतुर्दिशम् ।
मृगयां पुरुषव्याघ्रा ब्राह्मणार्थे परंतपाः ॥ ४
द्रौपदीमाश्रमे न्यस्य तृणबिन्दोरनुज्ञया ।
महर्षेर्दीप्ततपसो धौम्यस्य च पुरोधसः ॥ ५
ततस्तु राजा सिंधूनां वार्धक्षत्रिर्महायशाः ।
विवाहकामः साल्वेयान्प्रयातः सोऽभवत्तदा ॥ ६
महता परिबर्हेण राजयोग्येन संवृतः ।
राजभिर्बहुभिः सार्धमुपायात्काम्यकं च सः ॥ ७
तत्रापश्यत्प्रियां भार्यां पाण्डवानां यशस्विनीम् ।
तिष्ठन्तीमाश्रमद्वारि द्रौपदीं निर्जने वने ॥ ८
विभ्राजमानां वपुषा बिभ्रतीं रूपमुत्तमम् ।
भ्राजयन्तीं वनोद्देशं नीलाभ्रमिव विद्युतम् ॥ ९
अप्सरा देवकन्या वा माया वा देवनिर्मिता ।
इति कृत्वाञ्जलिं सर्वे ददृशुस्तामनिन्दिताम् ॥ १०
ततः स राजा सिन्धूनां वार्धक्षत्रिर्जयद्रथः ।
विस्मितस्त्वनवद्याङ्गीं दृष्ट्वा तां दुष्टमानसः ॥ ११
स कोटिकाश्यं राजानमब्रवीत्काममोहितः ।
कस्य त्वेषाऽनवद्याङ्गी यदि वाऽपि न मानुषी ॥ १२
विवाहार्थो न मे कश्चिदिमां दृष्ट्वाऽतिसुन्दरीम् ।
एतामेवाहमादाय गमिष्यामि स्वमालयम् ॥ १३
गच्छ जानीहि सौम्येमां कस्य वाऽत्र कुतोपि वा ।
किमर्थमागता सुभ्रूरिदं कण्टकितं वनम् ॥ १४
अपि नाम वरारोहा मामेषा लोकसुन्दरी ।
भजेदद्यायतापाङ्गी सुदती तनुमध्यमा ॥ १५
अप्यहं कृतकामः स्यामिमां प्राप्य वरस्त्रियम् ।
गच्छ जानीहि को न्वस्या नाथ इत्येव कोटिक १६
स कोटिकाश्यस्तच्छ्रुत्वा रथात्प्रस्कन्द्य कुण्डली ।
उपेत्य पप्रच्छ तदा क्रोष्टा व्याघ्रवधूमिव ॥ १७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीहरणपर्वणि पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६५ ॥

## षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६६ ॥

जयद्रथचोदनया कोटिकाश्येन द्रौपदींप्रति तत्पितृभर्तृकुलादिप्रश्नः ॥ १ ॥

कोटिक उवाच ।
का त्वं कदम्बस्य विनम्य शाखां
किमाश्रमे तिष्ठसि शोभमाना ।
देदीप्यमानाऽग्निशिखेव नक्तं
व्याधूयमाना पवनेन सुभ्रूः ॥ १
अतीव रूपेण समन्विता त्वं
न चाप्यरण्येषु बिभेषि किंनु ।
देवी नु यक्षी यदि दानवी वा
वराप्सरा दैत्यवराङ्गना वा ॥ २
वपुष्मती वोरगराजकन्या
वनेचरी वा क्षणदाचरस्त्री ।
त्वं देवराज्ञो वरुणस्य पत्नी
यमस्य सोमस्य धनेश्वरस्य ॥ ३
धातुर्विधातुः सवितुर्विभोर्वा
शक्रस्य वा त्वं सदनात्प्रपन्ना ।
न ह्येव नः पृच्छसि ये वयं स्म
न चापि जानीम तवेह नाथम् ॥ ४
वयं हि मानं तव वर्धयन्तः
पृच्छाम भद्रे प्रभवं प्रभुं च ।
आचक्ष्व बन्धूंश्च पतिं कुलं च
जातिं च यच्चेह करोषि कार्यम् ॥ ५

परिबर्हेण परिच्छदेन ॥ ७ ॥ नीलाभ्रं नीलमेघम् ॥ ९ ॥
पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६५ ॥
धातुः प्रजापतेः सरस्वती वा । विधातुः कश्यपस्य रुद्रस्य वा । अदितिः पार्वती वा । विभोर्विष्णोर्लक्ष्मीर्वा ॥ ४ ॥ प्रभवं पितरम् । प्रभुं महान्तम् । प्रभवं सुवं चेति ध. पाठः ॥ ५ ॥

अहं तु राज्ञः सुरथस्य पुत्रो
यं कोटिकाश्येति विदुर्मनुष्याः ।
'वश्येन्द्रियः सत्यरतिर्वरोरु
वृद्धोपसेवी गुरुपूजकश्च ॥' ६
असौ तु यस्तिष्ठति काञ्चनाङ्गे
रथे हुतोऽग्निश्चयने यथैव ।
त्रिगर्तराजः कमलायताक्षः
क्षेमंकरो नाम स एष वीरः ॥ ७
अस्मात्परस्त्वेष महाधनुष्मा-
न्पुत्रः कुलिन्दाधिपतेर्वरिष्ठः ।
निरीक्षते त्वां विपुलायताक्षः
सुपुष्पितः पर्वतवासनित्यः ॥ ८
असौ तु यः पुष्करिणीसमीपे
श्यामो युवा तिष्ठति दर्शनीयः ।
इक्ष्वाकुराजः सुबलस्य पुत्रः
स एव हन्ता द्विषतां सुगात्रि ॥ ९
यस्यानुयात्रं ध्वजिनः प्रयान्ति
सौवीरका द्वादशराजपुत्राः ।
शोणाश्वयुक्तेषु रथेषु सर्वे
मखेषु दीप्ता इव हव्यवाहाः ॥ १०
अङ्गारकः कुञ्जरो गुप्तकश्च
शत्रुंजयः संजयसुप्रवृद्धौ ।
प्रभंकरोऽथ भ्रमरो रविश्च
शूरः प्रतापः कुहनश्च नाम ॥ ११
यं षट्सहस्रा रथिनोऽनुयान्ति
नागा हयाश्चैव पदातिनश्च ।
जयद्रथो नाम यदि श्रुतस्ते
सौवीरराजः सुभगे स एषः ॥ १२
तस्यापरे भ्रातरोऽदीनसत्वा
बलाहकानीकविदारणाद्याः ।
सौवीरवीराः प्रवरा युवानो
राजानमेते बलिनोऽनुयान्ति ॥ १३
एतैः सहायैरुपयाति राजा
मरुद्गणैरिन्द्र इवाभिगुप्तः ।
अजानतां ख्यापय नः सुकेशि
कस्यासि भार्या दुहिता च कस्य ॥ १४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीहरणपर्वणि षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६६ ॥

---

## सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७ ॥

कोटिकाश्यंप्रति द्रौपद्या जननादिस्वीयवृत्तान्तकथनम् ॥ १ ॥

वैशंपायन उवाच ।
अथाब्रवीद्द्रौपदी राजपुत्री
पृष्टा शिवीनां प्रवरेण तेन ।
अवेक्ष्य मन्दं प्रविमुच्य शाखां
संगृह्णती कौशिकमुत्तरीयम् ॥ १
बुद्ध्याऽभिजानामि नरेन्द्रपुत्र
न मादृशी त्वामभिभाष्टुमर्हति ।
न त्वेह वक्ताऽस्ति तवेह वाक्य-
मन्यो नरो वाऽप्यथवाऽपि नारी ॥ २
एका ह्यहं संप्रति तेन वाचं
ददानि वै भद्र निबोध चेदम् ।
अहं ह्यरण्ये कथमेकमेका
त्वामालपेयं निरता स्वधर्मे ॥ ३
जानामि च त्वां सुरथस्य पुत्रं
यं कोटिकाश्येति विदुर्मनुष्याः ।
तस्मादहं शैब्य तथैव तुभ्य-
माख्यामि बन्धून्प्रथितं कुलं च ॥ ४

---

चयने इष्टकोचये ॥ ७ ॥ पदातिनः पद्भ्यां अतितुं सततं गन्तुं शीलं येषां ते पदातयः ॥ १२ ॥ षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६६ ॥

अभिभाष्टुं अभिभाषितुम् । त्वामपि द्रष्टुमर्हति ध. पाठः ॥ २ ॥ तेन कारणेन ॥ ३ ॥

अपत्यमस्मि द्रुपदस्य राज्ञः
कृष्णेति मां शैब्य विदुर्मनुष्याः ।
साऽहं वृणे पञ्च जनान्पतित्वे
ये खाण्डवप्रस्थगताः श्रुतास्ते ॥ ५
युधिष्ठिरो भीमसेनार्जुनौ च
माद्र्याश्च पुत्रौ पुरुषप्रवीरौ ।
ते मां निवेश्येह दिशश्चतस्रो
विभज्य पार्था मृगयां प्रयाताः ॥ ६
प्राचीं राजा दक्षिणां भीमसेनो
जयः प्रतीचीं यमजावुदीचीम् ।
मन्ये तु तेषां रथसत्तमानां
कालो बहुः प्राप्त इहोपयातुम् ॥ ७
संमानिता यास्यथ तैर्यथेष्टं
विमुच्य वाहानवरोहयध्वम् ।
प्रियातिथिर्धर्मसुतो महात्मा
प्रीतो भविष्यत्यभिवीक्ष्य युष्मान् ॥ ८
एतावदुक्त्वा द्रुपदात्मजा सा
शैब्यात्मजं चन्द्रमुखी प्रतीता ।
विवेश तां पर्णशालां प्रशस्तां
संचिन्त्य तेषामतिथिस्वधर्मम् ॥ ९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीहरणपर्वणि सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७ ॥

## अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥

कोटिकाश्याद्द्रौपदीतत्त्वं विदितवता जयद्रथेन द्रौपदीमेत्य स्वभार्यात्वयाचना ॥ १ ॥

वैशंपायन उवाच ।
तथाऽऽसीनेषु सर्वेषु तेषु राजसु भारत ।
'कोटिकाख्यो जगामाशु सिन्धुराजनिवेशनम् ॥ १
यदुक्तं कृष्णया सार्धं तत्सर्वं प्रत्यवेदयत् ।
कोटिकाश्यवचः श्रुत्वा शैब्यं सौवीरकोऽब्रवीत् २
यदा वाचं व्याहरन्त्यामस्यां मे रमते मनः ।
सीमन्तिनीनां मुख्यायां विनिवृत्तः कथं भवान् ३
एतां दृष्ट्वा स्त्रियो मेऽन्या यथा शाखामृगस्त्रियः ।
प्रतिभान्ति महाबाहो सत्यमेतद्ब्रवीमि ते ॥ ४
दर्शनादेव हि मनस्तया मेऽपहृतं भृशम् ।
तां समाचक्ष्व कल्याणीं यदि स्याच्छैब्य मानुषी॥५
कोटिक उवाच ।
एषा वै द्रौपदी कृष्णा राजपुत्री यशस्विनी ।
पञ्चानां पाण्डुपुत्राणां महिषी संमता भृशम् ॥ ६
सर्वेषां चैव पार्थानां प्रिया बहुमता सती ।
तया समेत्य सौवीर सौवीराभिमुखो व्रज ॥ ७
वैशंपायन उवाच ।
एवमुक्तः प्रत्युवाच पश्यामि द्रौपदीमिति ।
पतिः सौवीरसिन्धूनां दुष्टभावो जयद्रथः ॥ ८
स प्रविश्याश्रमं पुण्यं सिंहगोष्ठं वृको यथा ।
आत्मना सप्तमः कृष्णामिदं वचनमब्रवीत् ॥ ९
कुशलं ते वरारोहे भर्तारस्तेऽप्यनामयाः ।
येषां कुशलकामासि तेऽपि कच्चिदनामयाः ॥ १०
द्रौपद्युवाच ।
अपि ते कुशलं राजन्राष्ट्रे कोशे बले तथा ।
कच्चिदेकः शिबीनाढ्यान्सौवीरान्सह सिन्धुभिः ।
अनुतिष्ठसि धर्मेण ये चान्ये विदितास्त्वया॥ ११
कौरव्यः कुशली राजा कुन्तीपुत्रो युधिष्ठिरः ।
अहं च भ्रातरश्चास्य यांश्चान्यान्परिपृच्छसि ॥ १२
पाद्यं प्रतिगृहाणेदमासनं च नृपात्मज ।
मृगान्विता मृगीश्चैव प्रातराशं ददानि ते ॥ १३
ऐणेयान्पृषतान्न्यङ्कून्हरिणाञ्शरभाञ्शशान् ।
ऋक्षान्रुरूञ्शम्बरांश्च गवयांश्च मृगान्बहून् ॥ १४

जयोऽर्जुनः ॥ ७ ॥ सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥२६७॥
सौवीरको जयद्रथः ॥ ७ ॥ यदास्यां मे मनो रमते तदा भवान्कथं विनिवृत्त इति योज्यम् ॥३॥ सिंहगोष्ठं गोष्ठमिव गोष्ठं स्थानम् ॥ ९ ॥ अनुतिष्ठसि पालयसि । विदिता लब्धाः ॥११॥

वराहान्महिषांश्चैव याश्चान्या मृगजातयः ।
प्रदास्यति स्वयं तुभ्यं कुन्तीपुत्रो युधिष्ठिरः ॥ १५
जयद्रथ उवाच ।
कुशलं प्रातराशस्य सर्वं मे दित्सितं त्वया ।
एहि मे रथमारोह सुखमाप्नुहि केवलम् ॥ १६
गतश्रीकान्हृतराज्यान्कृपणान्गतचेतसः ।
अरण्यवासिनः पार्थान्नानुरोद्धुं त्वमर्हसि ॥ १७
नैव प्राज्ञा गतश्रीकं भर्तारमुपयुञ्जते ।
युञ्जानमनुयुञ्जीत न श्रियः संक्षये वसेत् ॥ १८
श्रिया विहीना राष्ट्राच्च विनष्टाः शाश्वतीः समाः ।
अलं ते पाण्डुपुत्राणां भक्त्या क्लेशमुपासितुम् १९
भार्या मे भव सुश्रोणि त्यजैनान्सुखमाप्नुहि ।
अखिलान्सिन्धुसौवीरानाप्नुहि त्वं मया सह २०
वैशंपायन उवाच ।
इत्युक्ता सिन्धुराजेन वाक्यं हृदयकम्पनम् ।
कृष्णा तस्मादपाक्रामद्देशात्सभ्रुकुटीमुखी ॥ २१
अवमत्यास्य तद्वाक्यमाक्षिप्य च सुमध्यमा ।
मैवमित्यब्रवीत्कृष्णा लज्जस्वेति च सैन्धवम् २२
सा काङ्क्षमाणा भर्तॄणामुपयातमनिन्दिता ।
विलम्बयामास परं वाक्यैर्वाक्यानि युञ्जती ॥ २३
'द्रौपद्युवाच ।
नैवं वद महाबाहो न्याय्यं त्वं न च मन्यसे ।
पाण्डूनां धार्तराष्ट्राणां स्वसा चैव कनीयसी २४
दुश्शला नाम तस्यास्त्वं भर्ता राजकुलोद्वह ।
मम भ्राता च न्याय्येन त्वया रक्ष्या महारथ २५
धर्मिष्ठानां कुले जातो न धर्मं त्वमवेक्षसे ।
इत्युक्तः सिन्धुराजोथ वाक्यमुत्तरमब्रवीत् ॥ २६
राज्ञां धर्मं न जानीषे स्त्रियो रत्नानि चैव हि ।
साधारणानि लोकेऽस्मिन्प्रवदन्ति मनीषिणः २७
स्वसा च स्वस्त्रिया चैव भ्रातृभार्या तथैव च ।
सुखं गृह्णन्ति राजानस्ताश्च तत्र नृपोद्भवाः ॥'२८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीहरणपर्वणि अष्टषष्टयधिकद्विशततमोऽध्यायः ॥ २६८ ॥

---

## एकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥

द्रौपद्या स्वाभिलाषिणो जयद्रथस्य गर्हणम् ॥ १ ॥ तथा बलात्स्ववस्त्रान्तकर्षिणस्तस्याक्षेपादधःपातनपूर्वकं स्वयमेव तद्रथारोहणम् ॥ २ ॥

वैशंपायन उवाच ।
सरोषरागोपहतेन वल्गुना
सरागनेत्रेण नतोन्नतभ्रुवा ।
मुखेन विस्फूर्य सुवीरराष्ट्रपं
ततोऽब्रवीत्तं द्रुपदात्मजा पुनः ॥ १
यशस्विनस्तीक्ष्णविषान्महारथा-
नभिब्रुवन्मूढ न लज्जसे कथम् ।
महेन्द्रकल्पान्निरतान्स्वकर्मसु
स्थितान्समूहेष्वपि यक्षरक्षसाम् ॥ २
न किंचिदार्याः प्रवदन्ति पापं
वनेचरं वा गृहमेधिनं वा ।
तपस्विनं संपरिपूर्णविद्यं
भजन्ति चैवं सुनराः सुवीर ॥ ३
अहं तु मन्ये तव नास्ति कश्चि-
देतादृशे क्षत्रियसंनिवेशे ।
यस्त्वद्य पातालमुखे पतन्तं
पाणौ गृहीत्वा प्रतिसंहरेत ॥ ४

श्रियः संक्षये सतीति शेषः । हीनलक्ष्मीके इत्यर्थः ॥ १८ ॥ समाः संवत्सरान् ॥ १९ ॥ विलोभयामास परमिति झ. पाठः ॥ २३ ॥ अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥
रोषेण रागो रक्तिमा तेन सहितं सरोषरागं तदुपहतं च म्लानं च तेन । वल्गुना सुन्दरेण । नते स्वभावत उन्नते क्रोधेन भ्रुवौ यस्यास्तथा । विस्फूर्य फूत्कारं कृत्वा । सरोषवाचोपहितेनेति ध. पाठः ॥ १ ॥ अभि अभिक्रम्य ब्रुवन् । स्थितानचलान् । यक्षादिभिरप्यजेयानित्यर्थः ॥ २ ॥ भषन्ति हैवं सुनराः सुवीरेति झ. पाठः ॥ ३ ॥ क्षत्रियसंनिवेशे नृपसमाजे । पातालमुखे महागर्ते । प्रतिसंहरेत् प्रतिषेधेत ॥ ४ ॥

नागं प्रभिन्नं गिरिकूटकल्प-
मुपत्यकां हैमवतीं चरन्तम् ।
दण्डीव यूथादपसेधसि त्वं
यो जेतुमाशंससि धर्मराजम् ॥ ५

बाल्यात्प्रसुप्तस्य महाबलस्य
सिंहस्य पक्ष्माणि मुखाल्लुनासि ।
पदा समाहत्य पलायमानः
क्रुद्धं यदा द्रक्ष्यसि भीमसेनम् ॥ ६

महाबलं घोरतरं प्रवृद्धं
जातं हरिं पर्वतकन्दरेषु ।
प्रसुप्तमुग्रं प्रपदेन हंसि
यः क्रुद्धमायोत्स्यसि जिष्णुमुग्रम् ॥ ७

कृष्णोरगौ तीक्ष्णमुखौ द्विजिह्वौ
मत्तः पदा क्रामसि पुच्छदेशे ।
यः पाण्डवाभ्यां पुरुषोत्तमाभ्यां
जघन्यजाभ्यां प्रयुयुत्ससे त्वम् ॥ ८

यथा च वेणुः कदली नलो वा
फलन्त्यभावाय न भूतयेऽऽत्मनः ।
तथैव मां तैः परिरक्ष्यमाणा-
मादास्यसे कर्कटकीव गर्भम् ॥ ९

जयद्रथ उवाच ।

जानामि कृष्णे विदितं ममैत-
द्यथाविधास्ते नरदेवपुत्राः ।
न त्वेवमेतेन विभीषणेन
शक्या वयं त्रासयितुं त्वयाऽद्य ॥ १०

वयं पुनः सप्तदशेषु कृष्णे
कुलेषु सर्वेऽनवमेषु जाताः ।
षड्भ्यो गुणेभ्योऽभ्यधिका विहीना-
न्मन्यामहे द्रौपदि पाण्डुपुत्रान् ॥ ११

सा क्षिप्रमातिष्ठ गजं रथं वा
न वाक्यमात्रेण वयं हि शक्याः ।
आशंस वा त्वं कृपणं वदन्ती
सौवीरराजस्य पुनः प्रसादम् ॥ १२

द्रौपद्युवाच ।

महाबला किंत्विह दुर्बलेव
सौवीरराजस्य मताऽहमस्मि ।
नाहं प्रमाथादिह संप्रतीता
सौवीरराजं कृपणं वदेयम् ॥ १३

यस्या हि कृष्णौ पदवीं चरेतां
समास्थितावेकरथे समेतौ ।
इन्द्रोऽपि तां नापहरेत्कथंचि-
न्मनुष्यमात्रः कृपणः कुतोऽन्यः ॥ १४

यथा किरीटी परवीरघाती
निघ्नन्रथस्थो द्विषतां मनांसि ।
मदन्तरे त्वद्ध्वजिनीं प्रवेष्टा
कक्षं दहन्नग्निरिवोष्णगेषु ॥ १५

जनार्दनः सान्धकवृष्णिवीरो
महेष्वासाः केकयाश्चापि सर्वे ।
एते हि सर्वे मम राजपुत्राः
प्रहृष्टरूपाः पदवीं चरेयुः ॥ १६

मौर्वीविसृष्टाः स्तनयित्नुघोषा
गाण्डीवमुक्तास्त्वतिवेगवन्तः ।
हस्तं समाहत्य धनंजयस्य
भीमाः शब्दं घोरतरं नदन्ति ॥ १७

---

उपत्यकामद्रिसमीपभूमिम् । दण्डी दण्डमात्रायुधो यूथात्समूहादपसेधसि अपकर्षसि ॥ ५ ॥ बाल्यात् मौढ्यात् पक्ष्माणि मुखोपरिस्थकेशान् । पदा समाहत्य लुनासि छिनत्सि ॥ ६ ॥ वेण्वादयः फलिता एव नश्यन्ति। कर्कटी च परिणतगर्भा नश्यतीति लोकप्रसिद्धम् ॥ ९ ॥ विभीषणेन भयप्रदर्शनेन ॥ १० ॥ सप्तदश अष्टौ कर्माणि नवशक्त्यादयश्च नित्यं सन्ति येषु तानि सप्तदशानि । नित्ययोगे मत्वर्थीयोर्शआद्यच् । अनवमेषु अनीचेषु । षड्गुणाः शौर्यतेजोधृतिदाक्षिण्यदानैश्वर्याणि ॥ ११ ॥ शक्याः निवारितुमिति शेषः । पुनरिति पाण्डवपराजयानन्तरम् । त्वं मत्प्रसादं आशंस प्रार्थय ॥ १२ ॥ प्रमाथात् निग्रहात् । प्रतीता प्रख्याता । सभायां वस्त्रराशिप्रदानेन भगवदनुग्रहीतत्वात् । महाबलाः किंत्विह दुर्बला वा सौवीरराजस्य सुताहमस्मि । साहं प्रमादादिह संप्रभीतेति ध. पाठः ॥ १३ ॥ कृष्णौ वासुदेवार्जुनौ ॥ १४ ॥ मदन्तरे मन्निमित्तम् । प्रवेष्टा प्रकर्षेण वेष्टयिष्यति । उष्णगेषु निदाघेषु ॥ १५ ॥ गाण्डीवमुक्ताः शरा इति शेषः ॥ १७ ॥

गाण्डीवमुक्तांश्च महाशरौघान्
पतङ्गसङ्घानिव शीघ्रवेगान् ।
यदा द्रष्टास्यर्जुनं वीर्यशालिनं
तदा स्वबुद्धिं प्रतिनिन्दितासि ॥ १८

सशङ्खघोषः सतलत्रघोषो
गाण्डीवधन्वा मुहुरुद्वहंश्च ।
यदा शरानर्पयिता तवोरसि
तदा मनस्ते किमिवाभविष्यत् ॥ १९

गदाहस्तं भीममभिद्रवन्तं
माद्रीपुत्रौ संपतन्तौ दिशश्च ।
अमर्षजं क्रोधविषं वमन्तौ
दृष्ट्वा चिरं तापमुपैष्यसेऽधम ॥ २०

यथा वाऽहं नातिचरे कथंचि-
त्पतीन्महार्हान्मनसाऽपि जातु ।
तेनाद्य सत्येन वशीकृतं त्वां
द्रष्टासि पार्थैः परिकृष्यमाणम् ॥ २१

न संभ्रमं गन्तुमहं हि शक्ष्ये
त्वया नृशंसेन विकृष्यमाणा ।
समागताऽहं हि कुरुप्रवीरैः
पुनर्वनं काम्यकमागताऽस्मि ॥ २२

वैशंपायन उवाच ।

'इत्येवमुक्तस्तु स सिन्धुनाथ-
स्तां द्रौपदीमाह विशालनेत्राम् ।
आरुह्यतामाशु रथं मदीयं
मा त्वां बलाद्द्रौपदि कर्षयेहम् ॥' २३

सा ताननुप्रेक्ष्य विशालनेत्रा
जिघृक्षमाणानवभर्त्सयन्ती ।
प्रोवाच मा मा स्पृशतेति भीता
धौम्यं प्रचुक्रोश पुरोहितं सा ॥ २४

जग्राह तामुत्तरवस्त्रदेशे
जयद्रथस्तं समवाक्षिपत्सा ।
तया समाक्षिप्ततनुः स पापः
पपात शाखीव निकृत्तमूलः ॥ २५

प्रगृह्यमाणा तु महाजवेन
मुहुर्विनिःश्वस्य च राजपुत्री ।
सा मृष्यमाणा रथमारुरोह
धौम्यस्य पादावभिवाद्य कृष्णा ॥ २६

धौम्य उवाच ।

नेयं शक्या त्वया नेतुमविजित्य महारथान् ।
धर्मं क्षत्रस्य पौराणमवेक्षस्व जयद्रथ ॥ २७

क्षुद्रं कृत्वा फलं पापं त्वं प्राप्स्यसि न संशयः ।
आसाद्य पाण्डवान्वीरान्धर्मराजपुरोगमान् ॥ २८

वैशंपायन उवाच ।

इत्युक्त्वा ह्रियमाणां तां राजपुत्रीं यशस्विनीम् ।
अन्वगच्छत्तदा धौम्यः पदातिगणमध्यगः ॥२९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीहरणपर्वणि एकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥

---

## सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥

मृगयागतैः पाण्डवैर्दुर्निमित्तदर्शनाद्विपदाशङ्कया सत्वरं स्वाश्रमाभिगमनम् ॥ १ ॥ तदा दास्या द्रौपदीवृत्तान्तावगमेन जयद्रथपथानुगतैस्तदवलोकनेन कोपात्समुत्क्रोशनम् ॥ २ ॥

वैशंपायन उवाच ।

ततो दिशः संपरिवृत्य पार्था
मृगान्वराहान्महिषांश्च हत्वा ।
धनुर्धराः श्रेष्ठतमाः पृथिव्यां
पृथक्चरन्तः सहिता बभूवुः ॥ १

ततो मृगव्यालजनानुकीर्णं
महावनं तद्विहगोपघुष्टम् ।
भ्रातॄंश्च तानभ्यवदद्युधिष्ठिरः
श्रुत्वा गिरो व्याहरतां मृगाणाम् ॥ २

---

अभविष्यत् भविष्यतीत्यर्थे व्यत्ययेन लङ् ॥ १९ ॥ एकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥

मृगव्यालगणानुकीर्णं इति झ. पाठः ॥ २ ॥

आदित्यदीप्तां दिशमभ्युपेत्य
मृगा द्विजाः क्रूरमिमे वदन्ति ।
आयासमुग्रं प्रतिवेदयन्तो
महाभयं शत्रुभिर्वाऽवमानम् ॥ ३
क्षिप्रं निवर्तध्वमलं मृगैर्नो
मनो हि मे दूयति दह्यते च ।
बुद्धिं समाच्छाद्य च मे समन्यु-
रुद्धूयते प्राणपतिः शरीरे ॥ ४
सरः सुपर्णेन हृतोरगेन्द्र-
मराजकं राष्ट्रमिवेह शान्तम् ।
एवंविधं मे प्रतिभाति काम्यकं
शौण्डैर्यथा पीतसुरश्च कुम्भः ॥ ५
ते सैन्धवैरत्यनिलोग्रवेगै-
र्महाजवैर्वाजिभिरुह्यमानाः ।
युक्तैर्बृहद्भिः सुरथैर्नृवीरा-
स्तदाश्रमायाभिमुखा बभूवुः ॥ ६
तेषां तु गोमायुरनल्पघोषो
निवर्ततां वाममुपेत्य पार्श्वम् ।
प्रव्याहरत्तत्प्रविमृश्य राजा
प्रोवाच भीमं च धनंजयं च ॥ ७
यथा वदत्येष विहीनयोनिः
सालावृको वाममुपेत्य पार्श्वम् ।
सुव्यक्तमस्मानवमत्य पापैः
कृतोऽभिमर्दः कुरुभिः प्रसह्य ॥ ८
एत्याथ ते तद्वनमाविशन्तो
महत्यरण्ये मृगयां चरित्वा ।
बालामपश्यन्त तदा रुदन्तीं
धात्रेयिकां प्रेष्यवधूं प्रियायाः ॥ ९
तामिन्द्रसेनस्त्वरितोऽभिसृत्य
रथादवप्लुत्य ततोऽभ्यधावत् ।
प्रोवाच चैनां वचनं नरेन्द्र
धात्रेयिकामार्ततरस्तदानीम् ॥ १०
किं रोदिषि त्वं पतिता धरण्यां
किं ते मुखं शुष्यति दीनवर्णम् ।
कच्चिन्न पापैः सुनृशंसकृद्भिः
प्रमाथिता द्रौपदी राजपुत्री ।
'गतेष्वरण्यं हि सुतेषु पाण्डोः
कच्चित्परैर्नोपकृतं वनेऽस्मिन् ॥ ११
पर्याकुला साधु समीक्ष्य सूत-
मभ्यापतन्तं द्रुतमिन्द्रसेनम् ।
उरो घ्नती कष्टतरं तदानी-
मुच्चैः प्रचुक्रोश हृतेति देवी ॥' १२
इन्द्रसेन उवाच ।
अनिन्द्यरूपा तु विशालनेत्रा
शरीरतुल्या कुरुपुङ्गवानाम् ।
'केनात्मनाशाय यदापनीता
छिद्रं समासाद्य नरेन्द्रपत्नी ॥' १३
यद्येव देवीं पृथिवीं प्रविष्टा
दिवं प्रपन्नाऽप्यथवा समुद्रम् ।
तस्या गमिष्यन्ति पदे हि पार्था-
स्तथा हि संतप्यति धर्मराजः ॥ १४
को हीदृशानामरिमर्दनानां
क्लेशक्षमाणामपराजितानाम् ।
प्राणैः समामिष्टतमां जिहीर्षे-
दनुत्तमं रत्नमिव प्रमूढः ॥ १५
न बुध्यते नाथवतीमिहाद्य
बहिश्चरं हृदयं पाण्डवानाम् ।
कस्याद्य कायं प्रतिभिद्य घोरा
महीं प्रवेक्ष्यन्ति शिताः शराग्र्याः ॥ १६
मा त्वं शुचस्तां प्रति भीरु विद्धि
यथाऽद्य कृष्णा पुनरेष्यतीति ।
निहत्य सर्वान्द्विषतः समग्रा-
न्पार्थाः समेष्यन्त्यथ याज्ञसेन्या ॥ १७

महावनं शत्रुभिर्वाध्यमानं इति झ. पाठः ॥ ३ ॥ समाच्छाद्य मोहयित्वा । समन्युः दैन्यसहितः । प्राणानां आध्यात्मिकानामिन्द्रियाणां पतिर्मुख्यः प्राणः ॥ ४ ॥ सैन्धवैः सिन्धुदेशजैर्वाजिभिरश्वैः । सुरथैः शोभनरथैः ॥ ६ ॥ प्रेष्यवधूं दासीम् ॥ ९ ॥

अथाब्रवीच्चारुमुखं प्रमृज्य
धात्रेयिका सारथिमिन्द्रसेनम् ।
जयद्रथेनापहृता प्रमथ्य
पञ्चेन्द्रकल्पान्परिभूय कृष्णा ॥ १८

तिष्ठन्ति वर्त्मानि नवान्यमूनि
वृक्षाश्च न म्लान्ति तथैव भग्नाः ।
आवर्तयध्वं ह्यनुयात शीघ्रं
न दूरयातैव हि राजपुत्री ॥ १९

सन्नह्यध्वं सर्व एवेन्द्रकल्पा
महान्ति चारूणि च दंशनानि ।
गृह्णीत चापानि महाधनानि
शरांश्च शीघ्रं पदवीं व्रजध्वम् ॥ २०

पुरा हि निर्भर्त्सनदण्डमोहिता
प्रमूढचित्ता वदनेन शुष्यता ।
ददाति कस्मैचिदनर्हते तनुं
वराज्यपूर्णामिव भस्मनि स्रुचम् ॥ २१

पुरा तुषाग्नाविव हूयते हविः
पुरा श्मशाने स्रगिवापविद्ध्यते ।
पुरा च सोमोऽध्वरगोऽवलिह्यते
शुना यथा विप्रजने प्रमोहिते ॥ २२

'पुरा हि पार्थाश्च दृतौ च कापिली
प्रसिच्यते क्षीरधारा यतध्वम् ।'
महत्यरण्ये मृगयां चरित्वा
पुरा सृगालो नलिनीं विगाहते ॥ २३

'पुरा हि मन्त्राहुतिपूजितायां
हुताग्निवेद्यां बलिभुङ्लिीयते ।
श्रुतिं च सम्यक्प्रसृतां महाध्वरे
ग्राम्यो जनो यद्वदसौ न नाशयेत् ॥' २४

मा वः प्रियायाः सुनसं सुलोचनं
चन्द्रप्रभाच्छं वदनं प्रसन्नम् ।
स्पृश्याच्छुभं कश्चिदकृत्यकारी
श्वा वै पुरोडाशमिवाध्वरस्थम् ॥ २५

एतानि वर्त्मान्यनुयात शीघ्रं
मा वः कालः क्षिप्रमिहात्यगाद्वै ॥ २६

'शीघ्रं प्रधावध्वमितो नरेन्द्रा
यावन्न दूरं व्रजतीति पापः ।
प्रत्याहरध्वं द्विषतां सकाशा-
ल्लक्ष्मीमिव स्वां दयितां नृसिंहाः ॥' २७

युधिष्ठिर उवाच ।
भद्रे प्रतिक्राम नियच्छ वाचं
माऽस्मत्सकाशे परुषाण्यवोचः ।
राजानो वा यदि वा राजपुत्रा
बलेन मत्ताः पञ्चतां प्राप्नुवन्ति ॥ २८

वैशंपायन उवाच ।
एतावदुक्त्वा प्रययुर्हि शीघ्रं
तान्येव वर्त्मान्यनुवर्तमानाः ।
मुहुर्मुहुर्व्यालवदुच्छ्वसन्तो
ज्यां विक्षिपन्तश्च महाधनुर्भ्यः ॥ २९

ततोऽपश्यंस्तस्य सैन्यस्य रेणु-
मुद्धूतं वै वाजिखुरप्रणुन्नम् ।
पदातीनां मध्यगतं च धौम्यं
विक्रोशन्तं भीम पार्थेत्यभीक्ष्णम् ॥ ३०

ते सान्त्व्य धौम्यं परिदीनसत्वाः
सुखं भवानेत्विति राजपुत्राः ।
श्येना यथैवामिषसंप्रयुक्ता
जवेन तत्सैन्यमथाभ्यधावन् ॥ ३१

तेषां महेन्द्रोपमविक्रमाणां
संरब्धानां धर्षणाद्याज्ञसेन्याः ।
क्रोधः प्रजज्वाल जयद्रथं च
दृष्ट्वा प्रियां तस्य रथे स्थितां च ॥ ३२

प्रचुक्रुशुश्चाप्यथ सिन्धुराजं
वृकोदरश्चैव धनंजयश्च ।
यमौ च राजा च महाधनुर्धरा-
स्ततो दिशः संमुमुहुः परेषाम् ॥ ३३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीहरणपर्वणि सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥

---

पुरा यावदनर्हते तनुं न ददाति तावच्छीघ्रमनुयातेत्युत्तरेण संबन्धः ॥ २१ ॥ प्रतिक्राम दूरे भव । परुषाणि अनर्हते तनुं ददातीत्यादीनि ॥ २८ ॥ धर्षणात् पराभवात् ॥ ३२ ॥ सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥

## एकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१ ॥

द्रौपद्या जयद्रथंप्रति तत्तल्लक्षणप्रदर्शनपूर्वकं युधिष्ठिरादिनिर्देशः ॥ १ ॥

वैशंपायन उवाच ।
ततो घोरतरः शब्दो वने समभवत्तदा ।
भीमसेनार्जुनौ दृष्ट्वा क्षत्रियाणाममर्षिणाम् ॥ १
तेषां ध्वजाग्राण्यभिवीक्ष्य राजा
स्वयं दुरात्मा कुरुपुङ्गवानाम् ।
जयद्रथो याज्ञसेनीमुवाच
रथे स्थितां भानुमतीं हतौजाः ॥ २
आयान्तीमे पञ्च रथा महान्तो
मन्ये च कृष्णे पतयस्तवैते ।
सा जानती ख्यापय नः सुकेशि
परंपरं पाण्डवानां रथस्थम् ॥ ३
द्रौपद्युवाच ।
किं ते ज्ञातैर्मूढ महाधनुर्धरै-
रनायुष्यं कर्म कृत्वाऽतिघोरम् ।
एते वीराः पतयो मे समेता
न वः शेषः कश्चिदिहास्ति युद्धे ॥ ४
आख्यातव्यं त्वेव सर्वं मुमूर्षो-
र्मया तुभ्यं पृष्टया धर्म एषः ।
न मे व्यथा विद्यते त्वद्भयं वा
संपश्यन्त्याः सानुजं धर्मराजम् ॥ ५
यस्य ध्वजाग्रे नदतो मृदङ्गौ
नन्दोपनन्दौ मधुरौ सुयुक्तौ ।
एनं स्वधर्मार्थविनिश्चयज्ञं
सदा जनाः कृत्यवन्तोऽनुयान्ति ॥ ६
य एष जाम्बूनदशुद्धगौरः
प्रचण्डघोणस्तनुरायताक्षः ।
एतं कुरुश्रेष्ठतमं वदन्ति
युधिष्ठिरं धर्मसुतं पतिं मे ॥ ७
अप्येष शत्रोः शरणागतस्य
दद्यात्प्राणान्धर्मचारी नृवीरः ।
परैह्येनं मूढ जवेन भूतये
त्वमात्मनः प्राञ्जलिर्न्यस्तशस्त्रः ॥ ८
अथाप्येनं पश्यसि यं रथस्थं
महाभुजं सालमिव प्रवृद्धम् ।
संदष्टौष्ठं भ्रुकुटीसंहतभ्रुवं
वृकोदरो नाम पतिर्ममैषः ॥ ९
आजानेया बलिनः साधुदान्ता
महाबलाः शूरमुदावहन्ति ।
एतस्य कर्माण्यतिमानुषाणि
भीमेति शब्दोऽस्य ततः पृथिव्याम् ॥ १०
नास्यापराद्धाः शेषमवाप्नुवन्ति
नायं वैरं विस्मरते कदाचित् ।
वैरस्यान्तं संविधायोपयाति
पश्चाच्छान्तिं न च तत्पप्यतीव ॥ ११
धनुर्धराग्र्यो धृतिमान्यशस्वी
जितेन्द्रियो वृद्धसेवी नृवीरः ।
भ्राता च शिष्यश्च युधिष्ठिरस्य
धनंजयो नाम पतिर्ममैषः ॥ १२
यो वै न कामान्न भयान्न लोभा-
त्त्यजेद्धर्मं न नृशंसं च कुर्यात् ।
स एष वैश्वानरतुल्यतेजाः
कुन्तीसुतः शत्रुसहः प्रमाथी ॥ १३
यः सर्वधर्मार्थविनिश्चयज्ञो
भयार्तानां भयहर्ता मनीषी ।
'बन्धुप्रियः शस्त्रभृतां वरिष्ठो
महाहवेष्वप्रतिवार्यवीर्यः ॥' १४
यस्योत्तमं रूपमाहुः पृथिव्यां
यं पाण्डवाः परिरक्षन्ति सर्वे ।
प्राणैर्गरीयांसमनुव्रतं वै
स एष वीरो नकुलः पतिर्मे ॥ १५

अनायुष्यमायुर्नाशकम् ॥ ४ ॥ परैहि शरणं गच्छ । एनं धर्मराजम् ॥ ८ ॥ आजानेयाः अश्वविशेषाः ॥ १० ॥ अपराद्धाः अपराधवन्तः ॥ ११ ॥

यः खङ्गयोधी लघुचित्रहस्तो
महांश्च धीमान्सहदेवोऽद्वितीयः ।
यस्याद्य कर्म द्रक्ष्यसे मूढसत्व
शतक्रतोर्वा दैत्यसेनासु सङ्ख्ये ॥ १६
शूरः कृतास्त्रो मतिमान्मनस्वी
प्रियंकरो धर्मसुतस्य राज्ञः ।
हुताशचन्द्रार्कसमानतेजा
जघन्यजः पाण्डवानां प्रियश्च ॥ १७
बुद्ध्या समो यस्य नरो न विद्यते
वक्ता तथा सत्सु विनिश्चयज्ञः ।
स एष शूरो नित्यममर्षणश्च
धीमान्प्राज्ञः सहदेवः पतिर्मे ॥ १८
त्यजेत्प्राणान्प्रविशेद्धव्यवाहं
न त्वेवैष व्याहरेद्धर्मबाह्यम् ।
सदा मनस्वी क्षत्रधर्मे रतश्च
कुन्त्याः प्राणैरिष्टतमो नृवीरः ॥ १९
विशीर्यन्तीं नावमिवार्णवान्ते
रत्नाभिपूर्णां मकरस्य पृष्ठे ।
सेनां तवेमां हतसर्वयोधां
विक्षोभितां द्रक्ष्यसि पाण्डुपुत्रैः ॥ २०
इत्येते वै कथिताः पाण्डुपुत्रा
यांस्त्वं मोहादवमत्य प्रवृत्तः ।
यद्येतेभ्यो मुच्यसे रिष्टदेहः
पुनर्जन्म प्राप्स्यसे जीवितं च ॥ २१
वैशंपायन उवाच ।
ततः पार्थाः पञ्च पञ्चेन्द्रकल्पा-
स्त्यक्त्वा त्रस्तान्प्राञ्जलींस्तान्पदातीन् ।
यथाऽनीकं शरवर्षान्धकारं
चक्रुः क्रुद्धाः सर्वतस्ते निगृह्य ॥ २२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीहरणपर्वणि एकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१ ॥

---

## द्विसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७२ ॥

युधिष्ठिरादीनां जयद्रथादिभिरायोधनम् ॥ १ ॥ जयद्रथेन भीमादिभिः स्वसहायानां निधने द्रौपदीविमोचनपूर्वकं पलायनम् ॥ २ ॥ भीमार्जुनाभ्यां परुषोक्तिपूर्वकं तदनुधावनम् ॥ ३ ॥

वैशंपायन उवाच ।
संतिष्ठध्वं प्रहरत तूर्णं विपरिधावत ।
इति स्म सैन्धवो राजा चोदयामास तान्नृपान् १
ततो घोरतमः शब्दो रणे समभवत्तदा ।
भीमार्जुनयमान्दृष्ट्वा सैन्यानां सयुधिष्ठिरान् ॥ २
शिबिसिंधुत्रिगर्तानां विषादश्चाप्यजायत ।
तान्दृष्ट्वा पुरुषव्याघ्रान्व्याघ्रानिव बलोत्कटान्॥३
हेमबिन्दुं महोत्सेधां सर्वशैक्यायसीं गदाम् ।
प्रगृह्याभ्यद्रवद्भीमः सैन्धवं कालचोदितम् ॥ ४
तदन्तरमथावृत्य कोटिकाश्योऽभ्यहारयत् ।
महता रथवंशेन परिवार्य वृकोदरम् ॥ ५
शक्तितोमरनाराचैर्वीरबाहुप्रचोदितैः ।
कीर्यमाणोपि बहुभिर्न स्म भीमोऽभ्यकम्पत ॥६
गजं तु सगजारोहं पदातींश्च चतुर्दश ।
जघान गदया भीमः सैन्धवध्वजिनीमुखे ॥ ७
पार्थः पञ्चशताञ्शूरान्पार्वतीयान्महारथान् ।
परीप्समानः सौवीरं जघान ध्वजिनीमुखे ॥ ८
राजा स्वयं सुवीराणां प्रवराणां प्रहारिणाम् ।
निमेषमात्रेण शतं जघान समरे तदा ॥ ९
ददृशे नकुलस्तत्र रथात्प्रस्कन्द्य खङ्गधृत् ।
शिरांसि पादरक्षाणां बीजवत्प्रवपन्मुहुः ॥ १०
सहदेवस्तु संयाय रथेन गजयोधिनः ।
पातयामास नाराचैर्द्रुमेभ्य इव बर्हिणः ॥ ११
ततस्त्रिगर्तः सधनुरवतीर्य महारथात् ।

---

मूढसत्व मूढबुद्धे । शतक्रतोर्वा शतक्रतोरिव ॥ १६ ॥ एकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१ ॥

अन्तरं अभ्यहारयत् भीमजयद्रथयोर्मध्ये प्रवेशेन व्यवधानं कृतवान् । रथवंशेन रथवर्गेण ॥ ५ ॥

गदया चतुरो वाहांस्त्राज्ञस्तस्य तदाऽवधीत् ॥ १२
तमथाभ्यागतं राजा पदातिं कुन्तिनन्दनः ।
अर्धचन्द्रेण बाणेन विव्याधोरसि धर्मराट् ॥ १३
स भिन्नहृदयो वीरो वक्त्राच्छोणितमुद्वमन् ।
पपाताभिमुखं प्राप्तश्छिन्नमूल इव द्रुमः ॥ १४
इन्द्रसेनद्वितीयस्तु रथात्प्रस्कन्द्य धर्मराट् ।
हताश्वः सहदेवस्य प्रतिपेदे महारथम् ॥ १५
नकुलं त्वभिसंवार्य क्षेमंकरमहामुखौ ।
उभावुभयतस्तीक्ष्णैः शरवर्षैरवर्षताम् ॥ १६
तौ शरैरभिवर्षन्तौ जीमूताविव वार्षिकौ ।
एकैकेन विपाठेन जघ्ने माद्रवतीसुतः ॥ १७
त्रिगर्तराजः सुरथस्तस्याथ गजधूर्गतः ।
रथमाक्षेपयामास गजेन गजयानवित् ॥ १८
नकुलस्त्वपभीस्तस्माद्रथाच्चर्मासिपाणिमान् ।
उद्भ्राम्य स्थानमास्थाय तस्थौ गिरिरिवाचलः ॥ १९
सुरथस्तं गजवरं वधाय नकुलस्य तु ।
प्रेषयामास सक्रोधमत्युच्छ्रितकरं ततः ॥ २०
नकुलस्तस्य नागस्य समीपपरिवर्तिनः ।
सविषाणं भुजं मूले खड्गेन निरकृन्तत ॥ २१
स विनद्य महानादं गजः किङ्किणिभूषणः ।
पतन्नवाक्शिरा भूमौ हस्त्यारोहमपोथयत् ॥ २२
स तत्कर्म महत्कृत्वा शूरो माद्रवतीसुतः ।
भीमसेनरथं प्राप्य शर्म लेभे महारथः ॥ २३
भीमस्त्वापततो राज्ञः कोटिकाश्यस्य संगरे ।
सूतस्य नुदतो वाहान्क्षुरेणापाहरच्छिरः ॥ २४
न बुबोध हतं सूतं स राजा बाहुशालिना ।
तस्याश्वा व्यद्रवन्सङ्ख्ये हतसूतास्ततस्ततः ॥ २५
विरथं हतसूतं तं भीमः प्रहरतांवरः ।
जघान तलयुक्तेन प्रासेनाभ्येत्य पाण्डवः ॥ २६
द्वादशानां तु सर्वेषां सौवीराणां धनंजयः ।
चकर्त निशितैर्भल्लैर्धनूंषि च शिरांसि च ॥ २७
शिबीनिक्ष्वाकुमुख्यांश्च त्रिगर्तान्सैन्धवानपि ।
जघानातिरथः सङ्ख्ये बाणगोचरमागतान् ॥ २८
सूदिताः प्रत्यदृश्यन्त बहवः सव्यसाचिना ।
सपताकाश्च मातङ्गाः सध्वजाश्च महारथाः ॥ २९
प्रच्छाद्य पृथिवीं तस्थुः सर्वमायोधनं प्रति ।
शरीराण्यशिरस्कानि विदेहानि शिरांसि च ॥ ३०
श्वगृध्रकङ्ककाकोलभासगोमायुवायसाः ।
अतृप्यंस्तत्र वीराणां हतानां मांसशोणितैः ॥ ३१
'एवं तीक्ष्णशरज्वालैर्गाण्डीवानिलचोदितैः ।
सेनेन्धनं ददाहाशु सरोषः पार्थपावकः ॥ ३२
चक्राणां पतितानां च युगानां च महीपते ।
तूणीराणां पताकानां ध्वजानां च रथैः सह ॥ ३३
ईषाणामनुकर्षाणां त्रिवेणूनां तथैव च ।
अक्षाणामथ योक्त्राणां प्रतोदानां च राशयः ॥ ३४
शिरसां पतितानां च कुण्डलोष्णीषधारिणाम् ।
भुजानां मकुटानां च हाराणामङ्गदैः सह ॥ ३५
छत्राणां व्यजनानां च चर्मणां वर्मणां तथा ।
छिन्नानां कार्मुकाणां च पट्टसानां तथैव च ॥ ३६
शक्तीनामथ खड्गानां दण्डानां सह तोमरैः ।
राशयश्चात्र दृश्यन्ते तत्रतत्र विशांपते ॥ ३७
पतितैश्चैव मातङ्गैः सयोधैः पर्वतोपमैः ।
हयैर्द्विधाकृतैः सार्धं सादिभिः सायुधैस्तथा ॥ ३८
विप्रविद्धै रथैश्चैव निहतैश्च पदातिभिः ।
अगम्यरूपा पृथिवी मांसशोणितकर्दमा ॥' ३९
हतेषु तेषु वीरेषु सिन्धुराजो जयद्रथः ।
विमुच्य कृष्णां संत्रस्तः पलायनपरोऽभवत् ॥ ४०
स तस्मिन्संकुले सैन्ये द्रौपदीमवतार्य ताम् ।
प्राणप्रेप्सुरुपाधावद्वनं तत्र नराधमः ॥ ४१
द्रौपदीं धर्मराजस्तु दृष्ट्वा धौम्यपुरस्कृताम् ।
माद्रीपुत्रेण वीरेण रथमारोपयत्तदा ॥ ४२
ततस्तद्विद्रुतं सैन्यमपयाते जयद्रथे ।
आदिश्यादिश्य नाराचैराजघान वृकोदरः ॥ ४३
सव्यसाची तु तं दृष्ट्वा पलायन्तं जयद्रथम् ।
वारयामास निघ्नन्तं भीमं सैन्धवसैनिकान् ॥ ४४

क्षेमंकरसुमालवौ इति क. पाठः । क्षेमंकरमहामलौ इति थ. ध. पाठः ॥ १६ ॥ सविषाणं भुजं सदन्तं शुण्डादण्डम् । मूले गण्डप्रदेशे ॥ २१ ॥ तलयुक्तेन मुष्टियुक्तेन ॥ २६ ॥

अर्जुन उवाच ।
यस्यापचारात्प्राप्तोऽयमस्मान्क्लेशो दुरासदः ।
तमस्मिन्समरोद्देशे न पश्यामि जयद्रथम् ॥ ४५
'मूढं नैकृतिकं दुष्टं द्रौपद्याः क्लेशकारिणम् ।'
तमेवान्विष भद्रं ते किं ते योधैर्निपातितैः ।
अनामिषमिदं कर्म कथं वा मन्यते भवान् ॥ ४६
वैशंपायन उवाच ।
इत्युक्तो भीमसेनस्तु गुडाकेशेन धीमता ।
युधिष्ठिरमभिप्रेत्य वाग्मी वचनमब्रवीत् ॥ ४७
हतप्रवीरा रिपवो भूयिष्ठं विद्रुता दिशः ।
गृहीत्वा द्रौपदीं राजन्निवर्ततु भवानितः ॥ ४८
यमाभ्यां सह राजेन्द्र धौम्येन च महात्मना ।
प्राप्याश्रमपदं राजन्द्रौपदीं परिसान्त्वय ॥ ४९
न हि मे मोक्ष्यते जीवन्मूढः सैन्धवको नृपः ।
पातालतलसंस्थोऽपि यदि शक्रोऽस्य सारथिः ॥ ५०
युधिष्ठिर उवाच ।
न हन्तव्यो महाबाहो दुरात्माऽपि स सैन्धवः ।
दुःशलामभिसंस्मृत्य गान्धारीं च यशस्विनीम् ५१
वैशंपायन उवाच ।
तच्छ्रुत्वा द्रौपदी भीममुवाच व्याकुलेन्द्रिया ।
कुपिता ह्रीमती प्राज्ञा पती भीमार्जुनावुभौ ॥ ५२
कर्तव्यं चेत्प्रियं मह्यं वध्यः स पुरुषाधमः ।
सैन्धवापसदः पापो दुर्मतिः कुलपांसनः ॥ ५३
भार्याभिहर्ता वैरी यो यश्च राज्यहरो रिपुः ।
याचमानोऽपि संग्रामे न मोक्तव्यः कथंचन ॥ ५४
इत्युक्तौ तौ नरव्याघ्रौ ययतुर्यत्र सैन्धवः ।
राजा निववृते कृष्णामादाय सपुरोहितः ॥ ५५
स प्रविश्याश्रमपदमपविद्धबृसीकटम् ।
मार्कण्डेयादिभिर्विप्रैरनुकीर्णं ददर्श ह ॥ ५६
द्रौपदीमनुशोचद्भिर्ब्राह्मणैस्तैः समाहितैः ।
समेयाय महाप्राज्ञः सभार्यो भ्रातृमध्यगः ॥ ५७
ते स्म तं मुदिता दृष्ट्वा पुनरप्यागतं नृपम् ।
जित्वा तान्सिन्धुसौवीरान्द्रौपदीं चाहृतां पुनः ५८
स तैः परिवृतो राजा तत्रैवोपविवेश ह ।
प्रविवेशाश्रमं कृष्णा यमाभ्यां सह भामिनी ॥ ५९
भीमसेनार्जुनौ चापि श्रुत्वा क्रोशगतं रिपुम् ।
स्वयमश्वांस्तुदन्तौ तौ जवेनैवाभ्यधावताम् ॥ ६०
इदमत्यद्भुतं चात्र चकारातिरथोऽर्जुनः ।
क्रोशमात्रगतानश्वान्सैन्धवस्य जघान यत् ॥ ६१
स हि दिव्यास्त्रसंपन्नः कृच्छ्रकालेऽप्यसंभ्रमः ।
अकरोद्दुष्करं कर्म शरैरस्त्रानुमन्त्रितैः ॥ ६२
ततोऽभ्यधावतां वीरावुभौ भीमधनंजयौ ।
हताश्वं सैन्धवं भीतमेकं व्याकुलचेतसम् ॥ ६३
सैन्धवस्तु हतान्दृष्ट्वा तथाऽश्वान्स्वान्सुदुःखितः ।
'रथात्प्रस्कन्द्य पद्भ्यां वै पलायनपरोऽभवत् ॥'६४
दृष्ट्वा विक्रमकर्माणि कुर्वाणं च धनंजयम् ।
पलायनकृतोत्साहः प्राद्रवद्येन वै वनम् ॥ ६५
सैन्धवं त्वभिसंप्रेक्ष्य पराक्रान्तं पलायने ।
अनुयाय महाबाहुः फल्गुनो वाक्यमब्रवीत् ॥ ६६
अनेन वीर्येण कथं स्त्रियं प्रार्थयसे बलात् ।
राजपुत्र निवर्तस्व न ते युक्तं पलायनम् ॥ ६७
कथं ह्यनुचरान्हित्वा शत्रुमध्ये पलायसे ।
इत्युच्यमानः पार्थेन सैन्धवो न न्यवर्तत ॥ ६८
तिष्ठतिष्ठेति तं भीमः सहसाऽभ्यद्रवद्बली ।
मा वधीरिति पार्थस्तं दयावान्प्रत्यभाषत ॥ ६९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीहरणपर्वणि द्विसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७२ ॥

समाप्तं च द्रौपदीहरणपर्व ॥ १६ ॥

---

अन्विष अन्विच्छ ॥ ४६ ॥ दुःशलां दुर्योधनभगिनीम् ॥ ५१ ॥ अपविद्धा इतस्ततो विशीर्णा बृसः ऋषीणामासनानि ॥ ५६ ॥ विक्रमयुक्तानि कर्माणि ॥ ६५ ॥ द्विसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७२ ॥

# ( अथ जयद्रथविमोक्षणपर्व ॥ १७ ॥ )

## त्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥

भीमेन केशग्रहणेन निपातितस्य जयद्रथस्य मूर्ध्नि पादप्रहारपूर्वकं क्षुरप्रेण पञ्चचूडीनिर्माणम् ॥ १ ॥ भीमेन बन्धनपूर्वकमानीतस्य तस्य युधिष्ठिरेण मोचनम् ॥ २ ॥ जयद्रथेन तपःप्रसादितान्महादेवादर्जुनवर्जमेकस्मिन्दिने पाण्डवजयरूपवराऽऽदानम् ॥ ३ ॥

वैशंपायन उवाच ।
जयद्रथस्तु संप्रेक्ष्य भ्रातरावुद्यतायुधौ ।
प्राधावत्तूर्णमव्यग्रो जीवितेप्सुः सुदुःखितः ॥ १
'लताभिः संवृते कक्षे किरीटं रत्नभास्वरम् ।
अपविध्य प्रधावन्तं निलीयन्तं वनान्तरे ॥ २
भीमसेनस्तु तं कक्षे लीयमानं भयाकुलम् ।
मार्गमाणोऽवतीर्याशु रथाद्रत्नविभूषितात् ।'
अभिद्रुत्य निजग्राह केशपक्षे ह्यमर्षणः ॥ ३
समुद्यम्य च तं भीमो निष्पिपेष महीतले ।
गले गृहीत्वा राजानं पातयामास चैव ह ॥ ४
पुनः स जीवमानस्य तस्योत्पतितुमिच्छतः ।
पदा मूर्ध्नि महाबाहुः प्राहरद्विलपिष्यतः ॥ ५
तस्य जानू ददौ भीमो जघ्ने चैनमरत्निना ।
स मोहमगमद्राजा प्रहारवरपीडितः ॥ ६
सरोषं भीमसेनं तु वारयामास फल्गुनः ।
दुःशलायाः कृते राजा यत्त्वामाहेति कौरव ॥ ७
भीम उवाच ।
नायं पापसमाचारो मत्तो जीवितुमर्हति ।
कृष्णायास्तदनर्हायाः परिक्लेष्टा नराधमः ॥ ८
किंनु शक्यं मया कर्तुं यद्राजा सततं घृणी ।
त्वं च बालिशया बुद्ध्या सदैवास्मान्प्रबाधसे ॥ ९
एवमुक्त्वा सटास्तस्य पञ्च चक्रे वृकोदरः ।
अर्धचन्द्रेण बाणेन किंचिदब्रुवतस्तदा ॥ १०
विकल्पयित्वा राजानं ततः प्राह वृकोदरः ।
जीवितुं चेच्छसे मूढ हेतुं मे गदतः शृणु ॥ ११
दासोस्मीति त्वया वाच्यं संसत्सु च सभासु च ।
एवं चेज्जीवितं दद्यामेष युद्धजितो विधिः ॥ १२
एवमस्त्विति तं राजा कृच्छ्रमाणो जयद्रथः ।
प्रोवाच पुरुषव्याघ्रं भीममाहवशोभिनम् ॥ १३
तत एनं विचेष्टन्तं बद्ध्वा पार्थो वृकोदरः ।
रथमारोपयामास विसंज्ञं पांसुकुण्ठितम् ॥ १४
ततस्तं रथमास्थाय भीमः पार्थानुगस्तदा ।
अभ्यमाश्रममध्यस्थमभ्यगच्छद्युधिष्ठिरम् ॥ १५
दर्शयामास भीमस्तु तदवस्थं जयद्रथम् ।
तं राजा प्राहसद्दृष्ट्वा मुच्यतामिति चाब्रवीत् ॥ १६
राजानं चाब्रवीद्भीमो द्रौपद्यै कथयेति वै ।
दासभावं गतो ह्येष पाण्डूनां पापचेतनः ॥ १७
तमुवाच च ततो ज्येष्ठो भ्राता सप्रणयं वचः ।
मुञ्चेममधमाचारं प्रमाणा यदि ते वयम् ॥ १८
द्रौपदी चाब्रवीद्भीममभिप्रेक्ष्य युधिष्ठिरम् ।
दासोऽयं मुच्यतां राज्ञस्त्वया पञ्चशिखः कृतः ॥ १९
'एवमुक्तः स भीमस्तु भ्रात्रा चैव च कृष्णया ।
मुमोच तं महापापं जयद्रथमचेतनम् ॥' २०
स मुक्तोऽभ्येत्य राजानमभिवाद्य युधिष्ठिरम् ।
ववन्दे विह्वलो राजा तांश्च वृद्धान्मुनींस्तदा ॥ २१
तमुवाच घृणी राजा धर्मपुत्रो युधिष्ठिरः ।
तथा जयद्रथं दृष्ट्वा गृहीतं सव्यसाचिना ॥ २२
अदासो गच्छ मुक्तोसि मैवं कार्षीः पुनः क्वचित् ।
स्त्रीकामुक धिगस्तु त्वां क्षुद्रः क्षत्रसहायवान् ॥ २३
एवंविधं हि कः कुर्यात्त्वदन्यः पुरुषाधमः ।
'कर्म धर्मविरुद्धं वै लोकदुष्टं च दुर्मते ॥' २४
गतसत्त्वमिव ज्ञात्वा कर्तारमशुभस्य तम् ।
संप्रेक्ष्य भरतश्रेष्ठः कृपां चक्रे नराधिपः ॥ २५
धर्मे ते वर्धतां बुद्धिर्मा चाधर्मे मनः कृथाः ।

घृणी दयावान् । बालिशया स्वल्पया । बाधसे शत्रुं हन्तुं न ददासि ॥ ९ ॥ सटाः जटाः केशसंनिवेशे मध्ये मध्ये पञ्चसु स्थानेषु अर्धचन्द्रेण बाणेन क्षौरवद्वापयामासेत्यर्थः ॥ १० ॥ विकत्थयित्वा राजानमिति झ. पाठः ॥ ११ ॥

साश्वः सरथपादातः स्वस्ति गच्छ जयद्रथ ॥ २६
एवमुक्तस्तु सव्रीडं तूष्णीं किंचिदवाङ्मुखः ।
जगाम राजा दुःखार्तो गङ्गाद्वाराय भारत ॥ २७
स देवं शरणं गत्वा विरूपाक्षमुमापतिम् ।
तपश्चचार विपुलं तस्य प्रीतो वृषध्वजः ॥ २८
बलिं स्वयं प्रत्यगृह्णात्प्रीयमाणस्त्रिलोचनः ।
वरं चास्मै ददौ देवः स जग्राह च तच्छृणु ॥ २९
समस्तान्सरथान्पञ्च जयेयं युधि पाण्डवान् ।
इति राजाऽब्रवीद्देवं नेति देवस्तमब्रवीत् ॥ ३०
अजय्यांश्चाप्यवध्यांश्च वारयिष्यसि तान्युधि ।
ऋतेऽर्जुनं महाबाहुं नरं नाम सुरेश्वरम् ॥ ३१
बदर्यां तप्ततपसं नारायणसहायकम् ।
अजितं सर्वलोकानां देवैरपि दुरासदम् ॥ ३२
मया दत्तं पाशुपतं दिव्यमप्रतिमं शरम् ।
अवाप लोकपालेभ्यो वज्रादीन्स महाशरान् ॥ ३३
देवदेवो ह्यनन्तात्मा विष्णुः सुरगुरुः प्रभुः ।
प्रधानपुरुषोऽव्यक्तो विश्वात्मा विश्वमूर्तिमान् ३४
युगान्तकाले संप्राप्ते कालाग्निर्दहते जगत् ।
सपर्वतार्णवद्वीपं सशैलवनकाननम् ।
निर्दहन्नागलोकांश्च पातालतलचारिणः ॥ ३५
अथान्तरिक्षे सुमहन्नानावर्णाः पयोधराः ।
घोरस्वरा विनदिनस्तडिन्मालावलम्बिनः ।
समुत्तिष्ठन्दिशः सर्वा विवर्षन्तः समन्ततः ॥ ३६
ततोऽग्निं शमयामासुः संवर्ताग्निनियामकाः ।
अक्षमात्रैश्च धाराभिस्तिष्ठन्त्यापूर्य सर्वशः ॥ ३७
एकार्णवे तदा तस्मिन्नुपशान्तचराचरे ।
नष्टचन्द्रार्कपवने ग्रहनक्षत्रवर्जिते ।
चतुर्युगसहस्रान्ते सलिलेनाप्लुता मही ॥ ३८
ततो नारायणाख्यस्तु सहस्राक्षः सहस्रपात् ।
सहस्रशीर्षा पुरुषः सुषुप्सुकामस्त्वतीन्द्रियः ॥ ३९
फणासहस्रविकटं शेषं पर्यङ्कभोगिनम् ।
सहस्रमिव तिग्मांशुसंघातममितद्युतिम् ।
कुन्देन्दुहारगोक्षीरमृणालकुमुदप्रभम् ॥ ४०
तत्रासौ भगवान्देवः स्वपञ्जलनिधौ तदा ।
नैशेन तमसा व्याप्तां स्वां रात्रिं कुरुते विभुः ॥ ४१
सत्वोद्रेकात्प्रबुद्धस्तु शून्यं लोकमपश्यत ।
इमं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति ॥ ४२
आपो नारास्तत्तनव इत्यपां नाम शुश्रुमः ।
अयनं तेन चैवास्ते तेन नारायणः स्मृतः ॥ ४३
प्रध्यानसमकालं तु प्रजाहेतोः सनातनः ।
ध्यातमात्रे तु भगवन्नाभ्यां पद्मः समुत्थितः ॥ ४४
ततश्चतुर्मुखो ब्रह्मा नाभिपद्माद्विनिःसृतः ।
तत्रोपविष्टः सहसा ब्रह्मा लोकपितामहः ॥ ४५
शून्यं दृष्ट्वा जगत्कृत्स्नं मानसानात्मनः समान् ।
ततो मरीचिप्रमुखान्महर्षीनसृजन्नव ॥ ४६
तेऽसृजन्सर्वभूतानि त्रसानि स्थावराणि च ।
यक्षराक्षसभूतानि पिशाचोरगमानुषान् ॥ ४७
सृजते ब्रह्ममूर्तिस्तु रक्षते पौरुषी तनुः ।
रौद्री भावेन शमयेत्तिस्रोऽवस्थाः प्रजापतेः ॥ ४८
न श्रुतं ते सिन्धुपते विष्णोरद्भुतकर्मणः ।
कथ्यमानानि मुनिभिर्ब्राह्मणैर्वेदपारगैः ॥ ४९
जलेन समनुप्राप्ते सर्वतः पृथिवीतले ।
तदा चैकार्णवे तस्मिन्नेकाकाशे प्रभुश्चरन् ॥ ५०
निशायामिव खद्योतः प्रावृट्काले समन्ततः ।
प्रतिष्ठानाय पृथिवीं मार्गमाणस्तदाऽभवत् ॥ ५१
जले निमग्नां गां दृष्ट्वा चोद्धर्तुं मनसेच्छति ।
किंनु रूपमहं कृत्वा सलिलादुद्धरे महीम् ॥ ५२
एवं संचिन्त्य मनसा दृष्ट्वा दिव्येन चक्षुषा ।

---

बलिं उपहारम् ॥ २९ ॥ महाबाहुं देवैरपि दुरासदम् इति ध. पाठः ॥ ३१ ॥ शृणाति हिनस्तीति शरमस्त्रम् ॥ ३३ ॥ नारायणसहायस्याजेयत्वं वक्तुं नारायणमाहात्म्यमेवाह देवदेव इत्यादिना ॥ ३४ ॥ कालाग्निरूपो नारायणो निर्दहते ॥ ३५ ॥ विनदिनः गर्जन्तः । समुत्तिष्ठन् समुदतिष्ठन् । उत्तिष्ठन्तीत्यर्थः ॥ ३६ ॥ शमयामासुः पयोधरा इति प्रपूर्वेणान्वयः । अक्षमात्रैः रथाक्षमात्राभिः स्थूलाभिः । सामान्ये नपुंसकम् ॥ ३७ ॥

अध्यतिष्ठदिति शेषः ॥ ४० ॥ नारायणपदं निर्वक्ति आप इति । नराज्जाता नाराः तत्तनवः नारायणस्यैव तनवः नाराः आपः अयनं निवासस्थानं यस्य ॥ ४३ ॥ तस्मिंश्च पद्मे पितामह उपविष्ट इति क्रमभङ्गेन योज्यम् ॥ ४५ ॥ त्रसानि जंगमानि ॥ ४७ ॥ हे सिन्धुपते । ते तव श्रुतं श्रवणं नास्ति । यतो विष्णोरद्भुतकर्मणः कथ्यमानानि कर्माणि न वेत्सीति शेषः ॥ ४९ ॥

जलक्रीडाभिरुचितं वाराहं रूपमस्मरत् ॥ ५३
कृत्वा वराहवपुषं वाङ्मयं वेदसंमितम् ।
दशयोजनविस्तीर्णमायतं शतयोजनम् ॥ ५४
महापर्वतवर्ष्माभं तीक्ष्णदंष्ट्रं प्रदीप्तिमत् ।
महामेघौघनिर्घोषं नीलजीमूतसन्निभम् ॥ ५५
भूत्वा यज्ञवराहो वै अपः संप्राविशत्प्रभुः ।
दंष्ट्रेणैकेन चोद्धृत्य स्वे स्थाने न्यविशन्महीम् ॥ ५६
पुनरेव महाबाहुरपूर्वां तनुमाश्रितः ।
नरस्य कृत्वाऽर्धतनुं सिंहस्यार्धतनुं प्रभुः ॥ ५७
दैत्येन्द्रस्य सभां गत्वा पाणिं संस्पृश्य पाणिना ।
दैत्यानामादिपुरुषः सुरारिर्दितिनन्दनः ॥ ५८
दृष्ट्वा चापूर्ववपुषं क्रोधात्संरक्तलोचनः ।
शूलोद्यतकरः स्रग्वी हिरण्यकशिपुस्तदा ॥ ५९
मेघस्तनितनिर्घोषो नीलाभ्रचयसन्निभः ।
देवारिर्दितिजो वीरो नृसिंहं समुपाद्रवत् ॥ ६०
समुत्पत्य ततस्तीक्ष्णैर्मृगेन्द्रेण बलीयसा ।
नारसिंहेन वपुषा दारितः करजैर्भृशम् ॥ ६१
एवं निहत्य भगवान्दैत्येन्द्रं रिपुघातिनम् ।
भूयोऽन्यः पुण्डरीकाक्षः प्रभुर्लोकहिताय च ।
कश्यपस्यात्मजः श्रीमानदित्या गर्भधारितः ॥ ६२
पूर्णे वर्षसहस्रे तु प्रसूता गर्भमुत्तमम् ॥ ६३
दुर्दिनाम्भोदसदृशो दीप्ताक्षो वामनाकृतिः ।
दण्डी कमण्डलुधरः श्रीवत्सोरसि भूषितः ।
जटी यज्ञोपवीती च भगवान्बालरूपधृक् ॥ ६४
यज्ञवाटं गतः श्रीमान्दानवेन्द्रस्य वै तदा ।
बृहस्पतिसहायोऽसौ प्रविष्टो बलिनो मखे ॥ ६५
तं दृष्ट्वा वामनतनुं प्रहृष्टो बलिरब्रवीत् ।
प्रीतोस्मि दर्शने विप्र ब्रूहि त्वं किं ददानि ते ॥ ६६
एवमुक्तस्तु बलिना वामनः प्रत्युवाच ह ॥ ६७
स्वस्तीत्युक्त्वा बलिं देवः स्मयमानोऽभ्यभाषत ।
मेदिनीं दानवपते देहि मे विक्रमत्रयम् ॥ ६८
बलिर्ददौ प्रसन्नात्मा विप्रायामिततेजसे ।
ततो दिव्याद्भुततमं रूपं विक्रमतो हरेः ॥ ६९
विक्रमैस्त्रिभिरक्षोभ्यो जहाराशु स मेदिनीम् ।
ददौ शक्राय च महीं विष्णुर्देवः सनातनः ॥ ७०
एष ते वामनो नाम प्रादुर्भावः प्रकीर्तितः ।
तेन देवाः प्रादुरासन्वैष्णवं चोच्यते जगत् ॥ ७१
असतां निग्रहार्थाय धर्मसंरक्षणाय च ।
अवतीर्णो मनुष्याणामजायत यदुक्षये ।
स एवं भगवान्विष्णुः कृष्णेति परिकीर्त्यते ॥ ७२
अनाद्यन्तमजं देवं प्रभुं लोकनमस्कृतम् ।
यं देवं विदुषो गान्ति तस्य कर्माणि सैन्धव ॥ ७३
यमाहुरजितं कृष्णं शङ्खचक्रगदाधरम् ।
श्रीवत्सधारिणं देवं पीतकौशेयवाससम् ॥ ७४
प्रधानं सोऽस्त्रविदुषां तेन कृष्णेन रक्ष्यते ॥ ७५
सहायः पुण्डरीकाक्षः श्रीमानतुलविक्रमः ।
समानस्यन्दने पार्थमास्थाय परवीरहा ॥ ७६
न शक्यते तेन जेतुं त्रिदशैरपि दुःसहः ।
कः पुनर्मानुषो भावो रणे पार्थं विजेष्यति ॥ ७७
तमेकं वर्जयित्वा तु सर्वं यौधिष्ठिरं बलम् ।
चतुरः पाण्डवान्राजन्दिनैकं जेष्यसे रिपून् ॥ ७८
'तस्मात्त्वं पार्थरहितान्पाण्डवान्वारयिष्यसि ।
एतद्धि पुरुषव्याघ्र मया दत्तो वरस्तव ॥' ७९
वैशंपायन उवाच ।
इत्येवमुक्त्वा नृपतिं सर्वपापहरो हरः ।
उमापतिः पशुपतिर्यज्ञहा त्रिपुरार्दनः ॥ ८०
वामनैर्विकटैः कुब्जैरुग्रश्रवणदर्शनैः ।
वृतः पारिषदैर्घोरैर्नानाप्रहरणोद्यतैः ॥ ८१

---

जलक्रीडायामभिरुचितं प्रीतिर्यस्य ॥ ५३ ॥ वराहवपुषमात्मानमिति शेषः । वाङ्मयं चतुर्वेदमयम् । वेदसंमितं वेदप्रमितयज्ञरूपम् ॥ ५४ ॥ वर्ष्म शरीरम् ॥ ५५ ॥ दंष्ट्रेण दंष्ट्रया न्यविशत् न्यवेशयत् ॥ ५६ ॥ गर्भे धारितः गर्भधारितः ॥ ६२ ॥ दुर्दिनं प्रावृद्दिनं तत्र भवोऽम्भोदः कृष्णमेघस्तत्सदृशः । श्रीवत्सेनोरसि भूषित इत्यर्थः ॥ ६४ ॥ वाटं स्थानम् । बलिनो बलेः । अयमिकारान्त इन्नन्तश्च शब्दो दृश्यते ॥ ६५ ॥ दिव्यं च तदद्भुततमं च रूपं बभूवेति शेषः ॥ ६९ ॥ अवतीर्णोऽवतरणं कुर्वन्नजायत आविर्भूतः । यदुक्षये यदूनां गृहे ॥ ७२ ॥ तस्य कर्माणि विदुषो विद्वांसः गान्ति गायन्ति ॥ ७३ ॥ सोऽर्जुनः अस्त्रविदुषां प्रधानं श्रेष्ठः यं अजितमाहुस्तेन कृष्णेन रक्ष्यते ॥ ७५ ॥ तेन कृष्णसहायत्वेन हेतुना । भावः पूज्यतमः । भावः पूज्यतमे लोके इत्यनेकार्थः ॥ ७७ ॥ दिनैकमेकदिनमेव न सर्वदा ॥ ७८ ॥

त्र्यम्बको राजशार्दूल भगनेत्रनिपातनः ।
उमासहायो भगवांस्तत्रैवान्तरधीयत ॥ ८२
एवमुक्तस्तु नृपतिः स्वमेव भवनं ययौ ।
पाण्डवाश्च वने तस्मिन्न्यवसन्काम्यके तथा ॥ ८३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि जयद्रथविमोक्षणपर्वणि त्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥

समाप्तं च जयद्रथविमोक्षणपर्व ॥ १७ ॥

# (अथ रामोपाख्यानपर्व ॥ १८ ॥)

## चतुःसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७४ ॥

युधिष्ठिरेण मार्कण्डेयंप्रति स्वसमानदुःखिसत्ताप्रश्नः ॥ १ ॥

जनमेजय उवाच ।
एवं हृतायां कृष्णायां प्राप्य क्लेशमनुत्तमम् ।
अत ऊर्ध्वं नरव्याघ्राः किमकुर्वत पाण्डवाः ॥ १
वैशंपायन उवाच ।
एवं कृष्णां मोक्षयित्वा विनिर्जित्य जयद्रथम् ।
आसांचक्रे मुनिगणैर्धर्मराजो युधिष्ठिरः ॥ २
तेषां मध्ये महर्षीणां शृण्वतामनुशोचताम् ।
मार्कण्डेयमिदं वाक्यमब्रवीत्पाण्डुनन्दनः ॥ ३
भगवन्देवर्षीणां त्वं ख्यातो भूतभविष्यवित् ।
संशयं परिपृच्छामि छिन्धि मे हृदि संस्थितम् ॥ ४
द्रुपदस्य सुता ह्येषा वेदिमध्यात्समुत्थिता ।
अयोनिजा महाभागा स्नुषा पाण्डोर्महात्मनः ॥ ५
मन्ये कालश्च भगवान्दैवं च दुरतिक्रमम् ।
भवितव्यं च भूतानां यस्य नास्ति व्यतिक्रमः ॥ ६
कथं हि पत्नीमस्माकं धर्मज्ञां धर्मचारिणीम् ।
संस्पृशेदीदृशो भावः शुचिं स्तैन्यमिवानृतम् ॥ ७
न हि पापं कृतं किंचित्कर्म वा निन्दितं क्वचित् ।
द्रौपद्या ब्राह्मणेष्वेव धर्मः सुचरितो महान् ॥ ८
तां जहार बलाद्राजा मूढबुद्धिर्जयद्रथः ।
तस्याः संहरणात्पापः शिरसः केशवापनम् ॥ ९
पराजयं च संग्रामे ससहायः समाप्तवान् ।
प्रत्याहृता तथाऽस्माभिर्हत्वा तत्सैन्धवं बलम् ॥ १०
तद्दारहरणं प्राप्तमस्माभिरवितर्कितम् ।
दुःखश्चायं वने वासो मृगयायां च जीविका ॥ ११
हिंसा च मृगजातीनां वनौकोभिर्वनौकसाम् ।
ज्ञातिभिर्विप्रवासश्च मिथ्याव्यवसितैरियम् ॥ १२
अस्ति नूनं मया कश्चिदल्पभाग्यतरो नरः ।
भवता दृष्टपूर्वो वा श्रुतपूर्वोऽपि वा क्वचित् ॥ १३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि चतुःसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७४ ॥

## पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५ ॥

मार्कण्डेयेन युधिष्ठिरंप्रति रामोपाख्यानकथनारम्भः ॥ १ ॥ तत्र रामाद्युत्पत्तिकथनपूर्वकं रावणोत्पत्त्युपोद्घाततया कुबेरोत्पत्तिकथनम् ॥ २ ॥

मार्कण्डेय उवाच ।
प्राप्तमप्रतिमं दुःखं रामेण भरतर्षभ ।
रक्षसा जानकी तस्य हृता भार्या बलीयसा ॥ १
आश्रमाद्राक्षसेन्द्रेण रावणेन दुरात्मना ।

जयद्रथोऽपि मन्दात्मा स्वमेवेति झ. पाठः ॥ ८३ ॥ त्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥
दैवं च विधिनिर्मितमिति झ. ध. पाठः । तत्र दैवं धर्माधर्मौ विधिः सदसत्कर्मणी ताभ्यां निर्मितम् ॥ ६ ॥ ईदृशो भावः परेण हरणम् ॥ ७ ॥ मिथ्याव्यवसितैः वृथातापसवेषधरैः । इयं हिंसा क्रियत इति शेषः ॥ १२ ॥ मया सम इति शेषः ॥ १३ ॥ चतुःसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥
रावणेन विहायसा इति थ. ध. पाठः ॥ २ ॥

मायामास्थाय तरसा हत्वा गृध्रं जटायुषम् ॥ २
प्रत्याजहार तां रामः सुग्रीवबलमाश्रितः ।
बद्ध्वा सेतुं समुद्रस्य दग्ध्वा लङ्कां शितैः शरैः ॥ ३
युधिष्ठिर उवाच ।
कस्मिन्नामः कुले जातः किंवीर्यः किंपराक्रमः ।
रावणः कस्य पुत्रो वा किं वैरं तस्य तेन ह ॥ ४
एतन्मे भगवन्सर्वं सम्यगाख्यातुमर्हसि ।
'त्वया प्रत्यक्षतो दृष्टं यथा सर्वमशेषतः ।'
श्रोतुमिच्छामि चरितं रामस्याक्लिष्टकर्मणः ॥ ५
मार्कण्डेय उवाच ।
अजो नामाभवद्राजा महानिक्ष्वाकुवंशजः ।
तस्य पुत्रो दशरथः शश्वत्स्वाध्यायवाञ्छुचिः ॥ ६
अभवंस्तस्य चत्वारः पुत्रा धर्मार्थकोविदाः ।
रामलक्ष्मणशत्रुघ्ना भरतश्च महाबलः ॥ ७
रामस्य माता कौसल्या कैकेयी भरतस्य तु ।
सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रायाः परंतपौ ॥ ८
विदेहराजो जनकः सीता तस्यात्मजा विभो ।
यां चकार स्वयं त्वष्टा रामस्य महिषीं प्रियाम् ॥ ९
एतद्रामस्य ते जन्म सीतायाश्च प्रकीर्तितम् ।
रावणस्यापि ते जन्म व्याख्यास्यामि जनेश्वर ॥ १०
पितामहो रावणस्य साक्षाद्देवः प्रजापतिः ।
स्वयंभूः सर्वलोकानां प्रभुः स्रष्टा महातपाः ॥ ११
पुलस्त्यो नाम तस्यासीन्मानसो दयितः सुतः ।
तस्य वैश्रवणो नाम गवि पुत्रोऽभवत्प्रभुः ॥ १२
पितरं स समुत्सृज्य पितामहमुपस्थितः ।
तस्य कोपात्पिता राजन्ससर्जात्मानमात्मना ॥ १३
स जज्ञे विश्रवा नाम तस्यात्मार्धेन वै द्विजः ।
प्रतीकाराय सक्रोधस्ततो वैश्रवणस्य वै ॥ १४
पितामहस्तु प्रीतात्मा ददौ वैश्रवणस्य ह ।
अमरत्वं धनेशत्वं लोकपालत्वमेव च ॥ १५
ईशानेन तथा सख्यं पुत्रं च नलकूबरम् ।
राजधानीनिवेशं च लङ्कां रक्षोगणान्विताम् ॥ १६
विमानं पुष्पकं नाम कामगं च ददौ प्रभुः ।
यक्षाणामाधिपत्यं च राजराजत्वमेव च ॥ १७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५ ॥

---

## षट्सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७६ ॥

मुनिवरेण विश्रवसा भार्यात्रये रावणादीनामुत्पादनम् ॥ १ ॥ सानुजेन रावणेन तपस्तोषितस्य ब्रह्मणो वरात्पुष्पकापहरणपूर्वकं कुबेरस्य निष्कासनेन लङ्कायां निवासः ॥ २ ॥

मार्कण्डेय उवाच ।
पुलस्त्यस्य तु यः क्रोधादर्धदेहोऽभवन्मुनिः ।
विश्रवा नाम सक्रोधः स वैश्रवणमैक्षत ॥ १
बुबुधे तं तु सक्रोधं पितरं राक्षसेश्वरः ।
कुबेरस्तत्प्रसादार्थं यतते स सदा नृप ॥ २
स राजराजो लङ्कायां न्यवसन्नरवाहनः ।
राक्षसीः प्रददौ तिस्रः पितुर्वै परिचारिकाः ॥ ३
ताः सदा तं महात्मानं संतोषयितुमुद्यताः ।
ऋषिं भरतशार्दूल नृत्यगीतविशारदाः ॥ ४
पुष्पोत्कटा च राका च मालिनी च विशांपते ।
अन्योन्यस्पर्धया राजञ्श्रेयस्कामाः सुमध्यमाः ॥ ५
स तासां भगवांस्तुष्टो महात्मा प्रददौ वरान् ।
लोकपालोपमान्पुत्रानेकैकस्या यथेप्सितान् ॥ ६
पुष्पोत्कटायां जज्ञाते द्वौ पुत्रौ राक्षसेश्वरौ ।
कुम्भकर्णदशग्रीवौ बलेनाप्रतिमौ भुवि ॥ ७
मालिनी जनयामास पुत्रमेकं विभीषणम् ।

---

त्वष्टा यो राममहिषीं इति थ. ध. पाठः । त्वष्टा प्रजापतिः स्वयमेव संकल्पेन चकार नतु मैथुनद्वारा । अयोनिजामित्यर्थः ॥ ९ ॥ गवि गोसंज्ञायां भार्यायाम् ॥ १२ ॥ तस्य वैश्रवणस्य कोपात् मां त्यक्त्वा मत्पितरं सेवत इत्यतिज्वलनात् । वैश्रवणं बाधितुं पुलस्त्यएव योगबलेन विश्रवःसंज्ञं देहान्तरं चक्रे इत्यर्थः ॥ १३ ॥ पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५ ॥

पितरं विश्रवसम् । राक्षसेश्वरः कुबेरो रक्षःपुरीनायकत्वात् ॥ २ ॥ पुष्पोत्कटा बलाका च इति ध. पाठः ॥ ५ ॥

राकायां मिथुनं जज्ञे खरः शूर्पणखा तथा ॥ ८
विभीषणस्तु रूपेण सर्वेभ्योऽभ्यधिकोऽभवत् ।
स बभूव महाभागो धर्मगोप्ता क्रियारतिः ॥ ९
दशग्रीवस्तु सर्वेषां श्रेष्ठो राक्षसपुङ्गवः ।
महोत्साहो महावीर्यो महासत्वपराक्रमः ॥ १०
कुम्भकर्णो बलेनासीत्सर्वेभ्योऽभ्यधिको युधि ।
मायावी रणशौण्डश्च रौद्रश्च रजनीचरः ॥ ११
खरो धनुषि विक्रान्तो ब्रह्मद्विट् पिशिताशनः ।
सिद्धविघ्नकरी चापि रौद्री शूर्पणखा तदा ॥ १२
सर्वे वेदविदः शूराः सर्वे सुचरितव्रताः ।
ऊषुः पित्रा सह रता गन्धमादनपर्वते ॥ १३
ततो वैश्रवणं तत्र ददृशुर्नरवाहनम् ।
पित्रा सार्धं समासीनमृद्ध्या परमया युतम् ॥ १४
जातामर्षास्ततस्ते तु तपसे धृतनिश्चयाः ।
ब्रह्माणं तोषयामासुर्घोरेण तपसा तदा ॥ १५
अतिष्ठदेकपादेन सहस्रं परिवत्सरान् ।
वायुभक्षो दशग्रीवः पञ्चाग्निः सुसमाहितः ॥ १६
अधःशायी कुम्भकर्णो यताहारो यतव्रतः ।
विभीषणः शीर्णपर्णमेकमभ्यवहारयन् ॥ १७
उपवासरतिर्धीमान्सदा जप्यपरायणः ।
तमेव कालमातिष्ठत्तीव्रं तप उदारधीः ॥ १८
खरः शूर्पणखा चैव तेषां वै तप्यतां तपः ।
परिचर्यां च रक्षां च चक्रतुर्हृष्टमानसौ ॥ १९
पूर्णे वर्षसहस्रे तु शिरश्छित्त्वा दशाननः ।
जुहोत्यग्नौ दुराधर्षस्तेनातुष्यज्जगत्प्रभुः ॥ २०
ततो ब्रह्मा स्वयं गत्वा तपसस्तान्न्यवारयत् ।
प्रलोभ्य वरदानेन सर्वानेव पृथक्पृथक् ॥ २१
ब्रह्मोवाच ।
प्रीतोऽस्मि वो निवर्तध्वं वरान्वृणुत पुत्रकाः ।
यद्यदिष्टमृते त्वेकममरत्वं तथाऽस्तु तत् ॥ २२
यद्यदग्नौ हुतं सर्वं शिरस्ते महदीप्सया ।
तथैव तानि ते देहे भविष्यन्ति यथेप्सया ॥ २३
वैरूप्यं च न ते देहे कामरूपधरस्तथा ।
भविष्यसि रणेऽरीणां विजेता न च संशयः ॥ २४
रावण उवाच ।
गन्धर्वदेवासुरतो यक्षराक्षसतस्तथा ।
सर्पकिंनरभूतेभ्यो न मे भूयात्पराभवः ॥ २५
ब्रह्मोवाच ।
य एते कीर्तिताः सर्वे न तेभ्योस्ति भयं तव ।
ऋते मनुष्याद्भद्रं ते तथा तद्विहितं मया ॥ २६
मार्कण्डेय उवाच ।
एवमुक्तो दशग्रीवस्तुष्टः समभवत्तदा ।
अवमेने हि दुर्बुद्धिर्मनुष्यान्पुरुषादकः ॥ २७
कुम्भकर्णमथोवाच तथैव प्रपितामहः ।
'वरं वृणीष्व भद्रं ते प्रीतोस्मीति पुनःपुनः ।'
स वव्रे महतीं निद्रां तमसा ग्रस्तचेतनः ॥ २८
तथा भविष्यतीत्युक्त्वा विभीषणमुवाच ह ।
वरं वृणीष्व पुत्र त्वं प्रीतोऽस्मीति पुनःपुनः ॥ २९
विभीषण उवाच ।
परमापद्गतस्यापि नाधर्मे मे मतिर्भवेत् ।
अशिक्षितं च भगवन्ब्रह्मास्त्रं प्रतिभातु मे ॥ ३०
ब्रह्मोवाच ।
यस्माद्राक्षसयोनौ ते जातस्यामित्रकर्शन ।
नाधर्मे धीयते बुद्धिरमरत्वं ददानि ते ॥ ३१
मार्कण्डेय उवाच ।
राक्षसस्तु वरं लब्ध्वा दशग्रीवो विशांपते ।
लङ्कायाश्च्यावयामास युधि जित्वा धनेश्वरम् ॥ ३२
हित्वा स भगवाँल्लङ्कामाविशद्गन्धमादनम् ।
गन्धर्वयक्षानुगतो रक्षःकिंपुरुषैः सह ॥ ३३
विमानं पुष्पकं तस्य जहाराक्रम्य रावणः ।
शशाप तं वैश्रवणो न त्वामेतद्वहिष्यति ॥ ३४
यस्तु त्वां समरे हन्ता तमेवैतद्वहिष्यति ।
अवमत्य गुरुं मां च क्षिप्रं त्वं नभविष्यसि ॥ ३५
विभीषणस्तु धर्मात्मा सतां मार्गमनुस्मरन् ।
अन्वगच्छन्महाराज श्रिया परमया युतः ॥ ३६

पित्रा विश्रवसा ॥ १३ ॥ पञ्चदिक्षु चत्वार एकः सूर्य इति पञ्चानामग्नीनां मध्यगः पञ्चाग्निः ॥ १६ ॥ विभीषणस्तपोऽतिष्ठदित्युत्तरेणान्वयः ॥ १७ ॥ महदीप्सया श्रेष्ठपदापेक्षया ॥ २३ ॥ नभविष्यसि मरिष्यसि ॥ ३५ ॥ अन्वगच्छत् कुबेरमिति

तस्मै स भगवांस्तुष्टो भ्राता भ्रात्रे धनेश्वरः ।
सैनापत्यं ददौ धीमान्यक्षराक्षससेनयोः ॥ ३७
राक्षसाः पुरुषादाश्च पिशाचाश्च महाबलाः ।
सर्वे समेत्य राजानमभ्यषिञ्चन्दशाननम् ॥ ३८
दशग्रीवश्च दैत्यानां दानवानां बलोत्कटः ।
आक्रम्य रत्नान्यहरत्कामरूपी विहंगमः ॥ ३९
रावयामास लोकान्यत्तस्माद्रावण उच्यते ।
दशग्रीवः कामबलो देवानां भयमादधत् ॥ ४०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि षट्सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७६ ॥

## सप्तसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७७ ॥

रावणोपद्रितदेवगणप्रार्थितेन ब्रह्मणा श्रीहरे रामत्वेन प्रादुर्भावनिवेदनपूर्वकं तान्प्रति तत्साहाय्यार्थं वानरादिभावेन जननचोदना ॥ १ ॥

मार्कण्डेय उवाच ।
ततो ब्रह्मर्षयः सर्वे सिद्धा देवर्षयस्तथा ।
हव्यवाहं पुरस्कृत्य ब्रह्माणं शरणं गताः ॥ १
अग्निरुवाच ।
योसौ विश्रवसः पुत्रो दशग्रीवो महाबलः ।
अवध्यो वरदानेन कृतो भगवता पुरा ॥ २
स बाधते प्रजाः सर्वा विप्रकारैर्महाबलः ।
ततो नस्त्रातु भगवान्नान्यस्त्राता हि विद्यते ॥ ३
ब्रह्मोवाच ।
न स देवासुरैः शक्यो युद्धे जेतुं विभावसो ।
विहितं तत्र यत्कार्यमभितस्तस्य निग्रहः ॥ ४
तदर्थमवतीर्णोऽसौ मन्नियोगाच्चतुर्भुजः ।
विष्णुः प्रहरतां श्रेष्ठः स तत्कर्म करिष्यति ॥ ५
मार्कण्डेय उवाच ।
पितामहस्ततस्तेषां संनिधौ शक्रमब्रवीत् ।
सर्वैर्देवगणैः सार्धं संभव त्वं महीतले ॥ ६
विष्णोः सहायानृक्षीषु वानरीषु च सर्वशः ।
जनयध्वं सुतान्वीरान्कामरूपबलान्वितान् ॥ ७
'ते यथोक्ता भगवता तत्प्रतिश्रुत्य शासनम् ।
ससृजुर्देवगन्धर्वाः पुत्रान्वानररूपिणः ॥' ८
ततो भागानुभागेन देवगन्धर्वदानवाः ।
अवतर्तुं महीं सर्वे मन्त्रयामासुरञ्जसा ॥ ९
'अवतेरुर्महीं स्वर्गादंशैश्च सहिताः सुराः ।
ऋषयश्च महात्मानः सिद्धाश्च सह किन्नरैः ।
चारणाश्चासृजन्घोरान्वानरान्वनचारिणः ॥ १०
यस्य देवस्य यद्रूपं वेषस्तेजश्च यद्विधम् ।
अजायन्त समास्तेन तस्य तस्य सुतास्तदा ॥' ११
तेषां समक्षं गन्धर्वीं दुन्दुभीं नाम नामतः ।
शशास वरदो देवो गच्छ कार्यार्थसिद्धये ॥ १२
पितामहवचः श्रुत्वा गन्धर्वी दुन्दुभी ततः ।
मन्थरा मानुषे लोके कुब्जा समभवत्तदा ॥ १३
शक्रप्रभृतयश्चैव सर्वे ते सुरसत्तमाः ।
वानरर्क्षवरस्त्रीषु जनयामासुरात्मजान् ॥ १४
तेऽन्ववर्तन्पितॄन्सर्वे यशसा च बलेन च ।
भेत्तारो गिरिशृङ्गाणां सालतालशिलायुधाः ॥ १५
वज्रसंहननाः सर्वे सर्वेऽमोघबलास्तथा ।
कामवीर्यबलाश्चैव सर्वे बुद्धिविशारदाः ॥ १६
नागायुतसमप्राणा वायुवेगसमा जवे ।
यथेच्छविनिपाताश्च केचिदत्र वनौकसः ॥ १७
एवं विधाय तत्सर्वं भगवाँल्लोकभावनः ।
मन्थरां बोधयामास यद्यत्कार्यं त्वया तथा ॥ १८

शेषः ॥ ३६ ॥ रत्नानि जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते । विहंगमः खेचरः ॥ ३९ ॥ रावयामास हिंसार्थस्य रुडो रूपमिदम् ॥ ४० ॥ षट्सप्तत्यधिकद्विशततमोऽध्यायः॥२७६॥

विप्रकारैर्विविधैः प्रकारैः ॥ ३ ॥ ओजसा तेजसा युक्ता-न्यशसा इति थ. ध. पाठः ॥ १५ ॥ वज्रसंहननाः वज्रवद्दृढाङ्गाः ॥ १६ ॥ यत्रेच्छकनिवासाश्च इति ख. झ. पाठः । यत्रेच्छा तत्रैव निवासो येषां ते यत्रेच्छकनिवासाः ॥ १७ ॥ यद्यत्कार्यं कैकेयीप्रलोभनं रामप्रव्राजनादि च ॥ १८ ॥

सा तद्वचः समाज्ञाय तथा चक्रे मनोजवा । इतश्चेतश्च गच्छन्ती वैरसंधुक्षणे रता ॥ १९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि सप्तसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७७ ॥

## अष्टसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७८ ॥

रामेण स्वस्य यौवराज्याभिषेचनोद्युक्ते दशरथे मन्थराबोधितायाः कैकेय्या वचनात्सीतालक्ष्मणाभ्यां सह वनगमनम् ॥ १ ॥ तथा लक्ष्मणकरेण शूर्पणखावैरूप्यकरणपूर्वकं खरादिहननम् ॥ २ ॥ ततः क्रुद्धेन रावणेन रामविप्रचिकीर्षया मारीचसमीपंप्रति गमनम् ॥ ३ ॥

युधिष्ठिर उवाच ।
उक्तं भगवता जन्म रामादीनां पृथक्पृथक् ।
प्रस्थानकारणं ब्रह्मञ्श्रोतुमिच्छामि कथ्यताम् ॥ १
कथं दाशरथी वीरौ भ्रातरौ रामलक्ष्मणौ ।
प्रस्थापितौ वने ब्रह्मन्मैथिली च यशस्विनी ॥ २
मार्कण्डेय उवाच ।
जातपुत्रो दशरथः प्रीतिमानभवन्नृप ।
क्रियारतिर्धर्मरतः सततं वृद्धसेविता ॥ ३
क्रमेण चास्य ते पुत्रा व्यवर्धन्त महौजसः ।
वेदेषु सरहस्येषु धनुर्वेदेषु पारगाः ॥ ४
चरितब्रह्मचर्यास्ते कृतदाराश्च पार्थिव ।
दृष्ट्वा रामं दशरथः प्रीतिमानभवत्सुखी ॥ ५
ज्येष्ठो रामोऽभवत्तेषां रमयामास हि प्रजाः ।
मनोहरतया धीमान्पितुर्हृदयनन्दनः ॥ ६
ततः स राजा मतिमान्मत्वाऽऽत्मानं वयोधिकम् ।
मन्त्रयामास सचिवैर्मन्त्रज्ञैश्च पुरोहितैः ॥ ७
अभिषेकाय रामस्य यौवराज्येन भारत ।
प्राप्तकालं च ते सर्वे मेनिरे मन्त्रिसत्तमाः ॥ ८
लोहिताक्षं महाबाहुं मत्तमातङ्गगामिनम् ।
कम्बुग्रीवं महोरस्कं नीलकुञ्चितमूर्धजम् ॥ ९
दीप्यमानं श्रिया वीरं शक्रादनवरं बले ।
पारगं सर्वधर्माणां बृहस्पतिसमं मतौ ॥ १०
सर्वानुरक्तप्रकृतिं सर्वविद्याविशारदम् ।
जितेन्द्रियममित्राणामपि दृष्टिमनोहरम् ॥ ११
नियन्तारमसाधूनां गोप्तारं धर्मचारिणाम् ।
धृतिमन्तमनाधृष्यं जेतारमपराजितम् ॥ १२
पुत्रं राजा दशरथः कौसल्यानन्दवर्धनम् ।
संदृश्य परमां प्रीतिमगच्छत्कुलनन्दनम् ॥ १३
चिन्तयंश्च महातेजा गुणान्रामस्य वीर्यवान् ।
अभ्यभाषत भद्रं ते प्रीयमाणः पुरोहितम् ॥ १४
अद्य पुष्यो निशि ब्रह्मन्पुण्यं योगमुपैष्यति ।
संभाराः संभ्रियन्तां मे रामश्चोपनिमन्त्र्यताम् ॥ १५
'श्व एव पुष्यो भविता यत्र रामः सुतो मया ।
यौवराज्येऽभिषेक्तव्यः पौरेषु सह मन्त्रिभिः ॥' १६
इति तद्राजवचनं प्रतिश्रुत्याथ मन्थरा ।
कैकेयीमभिगम्येदं काले वचनमब्रवीत् ॥ १७
अद्य कैकेयि दौर्भाग्यं राज्ञा ते ख्यापितं महत् ।
आशीविषस्त्वां संक्रुद्धश्छन्नो दशति दुर्भगे ॥ १८
सुभगा खलु कौसल्या यस्याः पुत्रोऽभिषेक्ष्यते ।
कुतो हि तव सौभाग्यं यस्याः पुत्रो न राज्यभाक् ॥
सा तद्वचनमाज्ञाय सर्वाभरणभूषिता ।
वेदी विलग्नमध्येव बिभ्रती रूपमुत्तमम् ॥ २०
विविक्ते पतिमासाद्य हसन्तीव शुचिस्मिता ।
राजानं तर्जयन्तीव मधुरं वाक्यमब्रवीत् ॥ २१
सत्यप्रतिज्ञ यन्मे त्वं काममेकं विसृष्टवान् ।
उपाकुरुष्व तद्राजंस्तस्मान्मुञ्चस्व संकटात् ।
'तदद्य कुरु सत्यं मे वरं वरद भूपते ॥' २२

संधुक्षणे दीपने ॥ १९ ॥ सप्तसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७७ ॥

रामपदं निर्वक्ति ज्येष्ठ इति ॥ ६ ॥ सर्वशः अनुरक्ताः प्रकृतयः प्रजा यस्मिंस्तं सर्वानुरक्तप्रकृतिम् ॥ ११ ॥ भद्रं ते इति युधिष्ठिरं प्रति आशीर्वचनम् । पुरोहितं वसिष्ठम् ॥ १४ ॥ अद्य पुण्या तिथिर्ब्रह्मन्पुष्ययोगमुपैष्यतीति ध. पाठः ॥ १५ ॥ प्रणयं व्यञ्जयन्तीव इति झ. पाठः ॥ २१ ॥ कामं वरं उपाकुरुष्व देहि । संकटात् कष्टात् ॥ २२ ॥

राजोवाच ।
वरं ददानि ते हन्त तद्गृहाण यदिच्छसि ।
अवध्यो वध्यतां कोद्य वध्यः कोऽद्य विमुच्यतां२३
धनं ददानि कस्याद्य ह्रियतां कस्य वा पुनः ।
ब्राह्मणस्वादिहान्यत्र यत्किंचिद्वित्तमस्ति मे ॥२४
पृथिव्यां राजराजोस्मि चातुर्वर्ण्यस्य रक्षिता ।
यस्तेऽभिलषितः कामो ब्रूहि कल्याणि माचिरं २५
सा तद्वचनमाज्ञाय परिगृह्य नराधिपम् ।
आत्मनो बलमाज्ञाय तत एनमुवाच ह ॥ २६
आभिषेचनिकं यत्ते रामार्थमुपकल्पितम् ।
भरतस्तदवाप्नोतु वनं गच्छतु राघवः ॥ २७
'नव पञ्च च वर्षाणि दण्डकारण्यमाश्रितः ।
चीराजिनजटाधारी रामो भवतु तापसः ॥' २८
स तं राजा वरं श्रुत्वा विप्रियं दारुणोदयम् ।
दुःखार्तो भरतश्रेष्ठ न किंचिद्व्याजहार ह ॥ २९
ततस्तथोक्तं पितरं रामो विज्ञाय वीर्यवान् ।
वनं प्रतस्थे धर्मात्मा राजा सत्यो भवत्विति ३०
तमन्वगच्छल्लक्ष्मीवान्धनुष्माँल्लक्ष्मणस्तदा ।
सीता च भार्या भद्रं ते वैदेही जनकात्मजा ३१
ततो वनं गते रामे राजा दशरथस्तदा ।
समयुज्यत देहस्य कालपर्यायधर्मणा ॥ ३२
रामं तु गतमाज्ञाय राजानं च तथागतम् ।
अनार्या भरतं देवी कैकेयी वाक्यमब्रवीत् ॥३३
गतो दशरथः स्वर्गं वनस्थौ रामलक्ष्मणौ ।
गृहाण राज्यं विपुलं क्षेमं निहतकण्टकम् ॥ ३४
तामुवाच स धर्मात्मा नृशंसं बत ते कृतम् ।
पतिं हत्वा कुलं चेदमुत्साद्य धनलुब्धया ॥ ३५
अयशः पातयित्वा मे मूर्ध्नि त्वं कुलपांसने ।
सकामा भव मे मातरित्युक्त्वा प्ररुरोद ह ॥३६
स चारित्रं विशोध्याथ सर्वप्रकृतिसन्निधौ ।
अन्वयाद्भ्रातरं रामं विनिवर्तनलालसः ॥ ३७
कौसल्यां च सुमित्रां च कैकेयीं च सुदुःखितः ।
अग्रे प्रस्थाप्य यानैः स शत्रुघ्नसहितो ययौ ॥३८
वसिष्ठवामदेवाभ्यां विप्रैश्चान्यैः सहस्रशः ।
पौरजानपदैः सार्धं रामानयनकाङ्क्षया ॥ ३९
ददर्श चित्रकूटस्थं स रामं सहलक्ष्मणम् ।
तापसानामलंकारं धारयन्तं धनुर्धरम् ॥ ४०
'उवाच प्राञ्जलिर्भूत्वा प्रणिपत्य रघूत्तमम् ।
शशंस मरणं राज्ञः सोऽनाथांश्चापि कोसलान्४१
नाथ त्वं प्रतिपद्यस्व स्वराज्यमिति चोक्तवान् ॥
स तस्य वचनं श्रुत्वा रामः परमदुःखितः ।
चकार देवकल्पस्य पितुः स्नात्वोदकक्रियाम् ४३
अब्रवीत्स तदा रामो भ्रातरं भ्रातृवत्सलम् ।
पादुके मे भविष्येते राज्यगोप्त्र्यौ परंतप ।
एवमस्त्विति तं प्राह भरतः प्रणतस्तदा ॥' ४४
विसर्जितः स रामेण पितुर्वचनकारिणा ।
नन्दिग्रामेऽकरोद्राज्यं पुरस्कृत्यास्य पादुके ॥४५
रामस्तु पुनराशङ्क्य पौरजानपदागमम् ।
प्रविवेश महारण्यं शरभङ्गाश्रमं प्रति ॥ ४६
सत्कृत्य शरभङ्गं स दण्डकारण्यमाश्रितः ।
नदीं गोदावरीं रम्यामाश्रित्य न्यवसत्तदा ॥४७
वसतस्तस्य रामस्य ततः शूर्पणखाकृतम् ।
खरेणासीन्महद्वैरं जनस्थाननिवासिना ॥ ४८
रक्षार्थं तापसानां तु राघवो धर्मवत्सलः ।
चतुर्दशसहस्राणि जघान भुवि राक्षसान् ॥ ४९
दूषणं च खरं चैव निहत्य सुमहाबलौ ।
चक्रे क्षेमं पुनर्धीमान्धर्मारण्यं स राघवः ॥ ५०
हतेषु तेषु रक्षःसु ततः शूर्पणखा पुनः ।
ययौ निकृत्तनासोष्ठी लङ्कां भ्रातुर्निवेशनम् ॥५१
ततो रावणमभ्येत्य राक्षसी दुःखमूर्च्छिता ।
पपात पादयोर्भ्रातुः संशुष्करुधिरानना ॥ ५२
तां तथा विकृतां दृष्ट्वा रावणः क्रोधमूर्च्छितः ।
उत्पपातासनात्क्रुद्धो दन्तैर्दन्तानुपस्पृशन् ॥ ५३
स्वानमात्यान्विसृज्याथ विविक्ते तामुवाच सः ।

कालपर्यायधर्मणा मृत्युना ॥ ३२ ॥ आनाय्य भरतं देवी इति झ. पाठः ॥ ३३ ॥ चारित्र्यं विशोध्य इदं कैकेय्यैव कृतं नतु मयेति प्रदर्श्य ॥ ३७ ॥

केनास्येवं कृता भद्रे मामचिन्त्यावमत्य च ॥५४
कः शूलं तीक्ष्णमासाद्य सर्वगात्रेषु सेवते ।
कः शिरस्यग्निमाधाय विश्वस्तः स्वपते सुखम् ॥५५
आशीविषं घोरतरं पादेन स्पृशतीह कः ।
सिंहं केसरिणं मत्तः स्पृष्ट्वा दंष्ट्रासु तिष्ठति ॥५६
इत्येवं ब्रुवतस्तस्य नेत्रेभ्यस्तेजसोऽर्चिषः ।
निश्चेरुर्दह्यतो रात्रौ वृक्षस्येव स्वरन्ध्रतः ॥ ५७
तस्य तत्सर्वमाचख्यौ भगिनी रामविक्रमम् ।
खरदूषणसंयुक्तं राक्षसानां पराभवम् ॥ ५८
'ततो ज्ञातिवधं श्रुत्वा रावणः कालचोदितः ।
रामस्य वधमाकाङ्क्षन्मारीचं मनसागमत् ॥' ५९
स निश्चित्य ततः कृत्यं सागरं लवणाकरम् ।
ऊर्ध्वमाचक्रमे राजा विधाय नगरे विधिम् ॥६०
त्रिकूटं समतिक्रम्य कालपर्वतमेव च ।
ददर्श मकरावासं गम्भीरोदं महोदधिम् ॥ ६१
तमतीत्याथ गोकर्णमभ्यगच्छद्दशाननः ।
दयितं स्थानमव्यग्रं शूलपाणेर्महात्मनः ॥ ६२
तत्राभ्यगच्छन्मारीचं पूर्वामात्यं दशाननः ।
पुरा रामभयादेव तापसं प्रियजीवितम् ॥ ६३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि अष्टसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७८ ॥

---

## एकोनाशीत्यधिकद्विशततमोऽध्यायः ॥ २७९ ॥

रावणेन भिक्षुवेषधारणपूर्वकं मारीचेन मृगरूपधारिणा सह रामाश्रमाभिगमनम् ॥ १ ॥ मृगग्रहणाय सीताचोदनया तदनुधाविना रामेण राक्षसबुद्ध्या मृगहननम् ॥ २ ॥ म्रियमाणस्य मारीचस्य हासीते लक्ष्मणेति रामस्वरसमानस्वरश्रवणेन विषण्णायाः सीतायाः परुषभाषणश्रवणाल्लक्ष्मणेन राममार्गानुसरणम् ॥ ३ ॥ अत्रान्तरे रावणेन निजरूपधारणपूर्वकं सीतापहरणम् ॥ ४ ॥

मार्कण्डेय उवाच ।
मारीचस्त्वथ संभ्रान्तो दृष्ट्वा रावणमागतम् ।
पूजयामास सत्कारैः फलमूलादिभिस्ततः ॥ १
विश्रान्तं चैनमासीनमन्वासीनः स राक्षसः ।
उवाच प्रश्रितं वाक्यं वाक्यज्ञो वाक्यकोविदम् २
न ते प्रकृतिमान्वर्णः कच्चित्क्षेमं पुरे तव ।
कच्चित्प्रकृतयः सर्वा भजन्ते त्वां यथा पुरा ॥ ३
किमिहागमने चापि कार्यं ते राक्षसेश्वर ।
कृतमित्येव तद्विद्धि यद्यपि स्यात्सुदुष्करम् ॥ ४
शशंस रावणस्तस्मै तत्सर्वं रामचेष्टितम् ।
समासेनैव कार्याणि क्रोधामर्षसमन्वितः ॥ ५
मारीचस्त्वब्रवीच्छ्रुत्वा समासेनैव रावणम् ।
अलं ते राममासाद्य वीर्यज्ञो ह्यस्मि तस्य वै ॥ ६
बाणवेगं हि कस्तस्य शक्तः सोढुं महात्मनः ।
प्रव्रज्यायां हि मे हेतुः स एव पुरुषर्षभः ।
विनाशमुखमेतत्ते केनाख्यातं दुरात्मना ॥ ७
तमुवाचाथ सक्रोधो रावणः परिभर्त्सयन् ।
अकुर्वतोऽस्मद्वचनं स्यान्मृत्युरपि ते ध्रुवम् ॥ ८
मारीचश्चिन्तयामास विशिष्टान्मरणं वरम् ।
अवश्यं मरणे प्राप्ते करिष्याम्यस्य यन्मतम् ॥ ९
ततस्तं प्रत्युवाचाथ मारीचो रक्षसांवरम् ।
किं ते साह्यं मया कार्यं करिष्याम्यवशोपि तत् ॥
तमब्रवीद्दशग्रीवो गच्छ सीतां प्रलोभय ।
रत्नशृङ्गो मृगो भूत्वा रत्नचित्रतनूरुहः ॥ ११
ध्रुवं सीता समालक्ष्य त्वां रामं चोदयिष्यति ।
अपक्रान्ते च काकुत्स्थे सीता वश्या भविष्यति ॥
तामादायापनेष्यामि ततः स नभविष्यति ।
भार्यावियोगाद्दुर्बुद्धिरेतत्साह्यं कुरुष्व मे ॥ १३

---

सिंहं हिंस्रम् । केसरिणं सटावन्तं मृगराजम् ॥ ५६ ॥ तस्य स्रोतोभ्य इति झ. पाठः । स्रोतोभ्यश्चक्षुरादिरन्ध्रेभ्यः । तेजसोर्चिषोऽग्नेर्ज्वालाः ॥ ५७ ॥ खरदूषणसंयुक्तं तत्पराभवसहितम् ॥ ५८ ॥ विधिं रक्षाम् ॥ ६० ॥ अष्टसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७८ ॥

राममासाद्यालं रामं नैवासादयेरित्यर्थः ॥ ६ ॥

इत्येवमुक्तो मारीचः कृत्वोदकमथात्मनः ।
रावणं पुरतो यान्तमन्वगच्छत्सुदुःखितः ॥ १४
ततस्तस्याश्रमं गत्वा रामस्याक्लिष्टकर्मणः ।
चक्रतुस्तद्यथा सर्वमुभौ यत्पूर्वमन्त्रितम् ॥ १५
रावणस्तु यतिर्भूत्वा मुण्डः कुण्डी त्रिदण्डधृत् ।
मृगश्च भूत्वा मारीचस्तं देशमुपजग्मतुः ॥ १६
दर्शयामास मारीचो वैदेहीं मृगरूपधृत् ।
चोदयामास तस्यार्थे सा रामं विधिचोदिता १७
रामस्तस्याः प्रियं कुर्वन्धनुरादाय सत्वरः ।
रक्षार्थे लक्ष्मणं न्यस्य प्रययौ मृगलिप्सया ॥ १८
स धन्वी बद्धतूणीरः खड्गगोधाङ्गुलित्रवान् ।
अन्वधावन्मृगं रामो रुद्रस्तारामृगं यथा ॥ १९
सोऽन्तर्हितः पुनस्तस्य दर्शनं राक्षसो व्रजन् ।
चकर्ष महदध्वानं रामस्तं बुबुधे ततः ॥ २०
निशाचरं विदित्वा तं राघवः प्रतिभानवान् ।
अमोघं शरमादाय जघान मृगरूपिणम् ॥ २१
स रामबाणाभिहतः कृत्वा रामस्वरं तदा ।
हा सीते लक्ष्मणेत्येवं चुक्रोशार्तस्वरेण ह ॥ २२
शुश्राव तस्य वैदेही ततस्तां करुणां गिरम् ।
सा प्राधावत्ततः सीता तामुवाचाथ लक्ष्मणः॥२३
अलं ते शङ्कया भीरु को रामं प्रहरिष्यति ।
मुहूर्ताद्द्रक्ष्यसे रामं भर्तारं त्वं शुचिस्मितम् ॥२४
इत्युक्ता सा प्ररुदती पर्यशङ्कत लक्ष्मणम् ।
हता वै स्त्रीस्वभावेन शुद्धचारित्रभूषणा ॥ २५
सा तं परुषमारब्धा वक्तुं साध्वी पतिव्रता ।
नैष कामो भवेन्मूढ यं त्वं प्रार्थयसे हृदा ॥ २६
अप्यहं शस्त्रमादाय हन्यामात्मानमात्मना ।
पतेयं गिरिशृङ्गाद्वा विशेयं वा हुताशनम् ॥ २७
रामं भर्तारमुत्सृज्य न त्वहं त्वां कथञ्चन ।
निहीनमुपतिष्ठेयं शार्दूली क्रोष्टुकं यथा ॥ २८

एतादृशं वचः श्रुत्वा लक्ष्मणः प्रियराघवः ।
पिधाय कर्णौ सद्वृत्तः प्रस्थितो येन राघवः ॥२९
स रामस्य पदं गृह्य प्रससार धनुर्धरः ।
अवीक्षमाणो बिम्बोष्ठीं प्रययौ लक्ष्मणस्तदा ॥३०
एतस्मिन्नन्तरे रक्षो रावणः प्रत्यदृश्यत ।
अभव्यो भव्यरूपेण भस्मच्छन्न इवानलः ॥ ३१
यतिवेषप्रतिच्छन्नो जिहीर्षुस्तामनिन्दिताम् ।
'उपागच्छत्स वैदेहीं रावणः पापनिश्चयः ॥' ३२
सा तमालक्ष्य संप्राप्तं धर्मज्ञा जनकात्मजा ।
निमन्त्रयामास तदा फलमूलाशनादिभिः ॥ ३३
अवमत्य ततः सर्वं स्वं रूपं प्रत्यपद्यत ।
सान्त्वयामास वैदेहीं कामी राक्षसपुङ्गवः ॥ ३४
सीते राक्षसराजोऽहं रावणो नाम विश्रुतः ।
मम लङ्कापुरी नाम्ना रम्या पारे महोदधेः ॥ ३५
तत्र त्वं नरनारीषु शोभिष्यसि मया सह ।
भार्या मे भव सुश्रोणि तापसं त्यज राघवम् ३६
एवमादीनि वाक्यानि श्रुत्वा तस्याथ जानकी ।
पिधाय कर्णौ सुश्रोणी मैवमित्यब्रवीद्वचः ॥ ३७
प्रपतेद्द्यौः सनक्षत्रा पृथिवी शकलीभवेत् ।
'शुष्येत्तोयनिधौ तोयं चन्द्रः शीतांशुतां त्यजेत् ॥
उष्णांशुत्वमथो जह्यादादित्यो वह्निरुष्णताम् ।'
त्यक्त्वा शैत्यं भजेन्नाहं त्यजेयं रघुनन्दनम् ॥३९
कथं हि भिन्नकरटं पद्मिनं वनगोचरम् ।
उपस्थाय महानागं करेणुः सूकरं स्पृशेत् ॥ ४०
कथं हि पीत्वा माध्वीकं पीत्वा च मधुमाधवीम् ।
लोभं सौवीरके कुर्यान्नारी काचिदिति स्मरे ४१
इति सा तं समाभाष्य प्रविवेशाश्रमं ततः ।
क्रोधात्प्रस्फुरमाणौष्ठी विधुन्वाना करौ मुहुः ४२
तामभिद्रुत्य सुश्रोणीं रावणः प्रत्यषेधयत् ॥ ४३

---

उदकमौर्ध्वदेहिकम् ॥ १४ ॥ गोधा ज्याघातवारणं अङ्गुलित्रं च तद्वान् । तारामृगं तारारूपं मृगम् । प्रजापतिः स्वां दुहितरं मृगो भूत्वा जगाम तस्य रुद्रः शिरोऽच्छिनत्तदेतन्मृगशीर्षं नाम नक्षत्रम् ॥ १९ ॥ पर्यशङ्कत लक्ष्मणो मय्यभिलाषवानिति शङ्कामकरोत् ॥ २५ ॥ नैव कालो ह्ययं मूढेति

क. थ. ध. पाठः ॥ २६ ॥ भिन्नकरटं भिन्नगण्डस्थलं मत्तम् । करेणुर्हस्तिनी ॥ ४० ॥ माध्वीकं मधुपुष्पजं मद्यम् । मधुमाधवीं क्षौद्रजां सुराम् । सौवीरं काञ्जिकम् ॥ ४१ ॥ एकोननवत्यधिकद्विशततमोऽध्यायः ॥ १७९ ॥

भर्त्सयित्वा तु रूक्षेण स्वरेण गतचेतनाम् ।
मूर्धजेषु निजग्राह ऊर्ध्वमाचक्रमे ततः ॥ ४४
तां ददर्श ततो गृध्रो जटायुर्गिरिगोचरः ।
रुदतीं रामरामेति ह्रियमाणां तपस्विनीम् ॥ ४५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि एकोनाशीत्यधिकद्विशततमोऽध्यायः ॥ २७९ ॥

## अशीत्यधिकद्विशततमोऽध्यायः ॥ २८० ॥

सीतामादाय गच्छता रावणेन निरोधकस्य जटायुषो युद्धे हननपूर्वकं लङ्काप्रवेशः ॥ १ ॥ मृगहननपूर्वकं प्रतिनिवृत्तेन रामेण मध्येमार्गं संगतस्य लक्ष्मणस्य विजने सीतात्यजनेन हेतुना गर्हणपूर्वकं स्वावासगमनम् ॥ २ ॥ सीतान्वेषिणा सलक्ष्मणेन रामेण मार्गे स्वग्राहिणः कबन्धस्य वधः ॥ ३ ॥ कबन्धदेहान्निर्गतेन गन्धर्वेण रामंप्रति पम्पातटे सुग्रीवंप्रति गमनचोदना ॥ ४ ॥

मार्कण्डेय उवाच ।
सखा दशरथस्यासीज्जटायुररुणात्मजः ।
गृध्रराजो महावीरः संपातिर्यस्य सोदरः ॥ १
स ददर्श तदा सीतां रावणाङ्कगतां स्नुषाम् ।
सक्रोधोऽभ्यद्रवत्पक्षी रावणं राक्षसेश्वरम् ॥ २
अथैनमब्रवीद्गृध्रो मुञ्चमुञ्चेति मैथिलीम् ।
म्रियमाणे मयि कथं हरिष्यसि निशाचर ॥ ३
न हि मे मोक्ष्यसे जीवन्यदि नोत्सृजसे वधूम् ।
उक्त्वैवं राक्षसेन्द्रं तं चकर्त नखरैर्भृशम् ॥ ४
पक्षतुण्डप्रहारैश्च शतशो जर्जरीकृतम् ।
चक्षार रुधिरं भूरि गिरिः प्रस्रवणैरिव ॥ ५
स वध्यमानो गृध्रेण रामप्रियहितैषिणा ।
खड्गमादाय चिच्छेद भुजौ तस्य पतत्रिणः ॥ ६
निहत्य गृध्रराजं स भिन्नाभ्रशिखरोपमम् ।
ऊर्ध्वमाचक्रमे सीतां गृहीत्वाऽङ्केन राक्षसः ॥ ७
यत्रयत्र तु वैदेही पश्यत्याश्रममण्डलम् ।
सरो वा सरितो वाऽपि तत्र मुञ्चति भूषणम् ॥ ८
सा ददर्श गिरिप्रस्थे पञ्च वानरपुङ्गवान् ।
तत्र वासो महद्दिव्यमुत्ससर्ज मनस्विनी ॥ ९
तत्तेषां वानरेन्द्राणां पपात पवनोद्धतम् ।
मध्ये सुपीतं पञ्चानां विद्युन्मेघान्तरे यथा ॥ १०
अचिरेणातिचक्राम खेचरः खे चरन्निव ।
ददर्शाथ पुरीं रम्यां बहुद्वारां मनोरमाम् ॥ ११
प्राकारवप्रसंबाधां निर्मितां विश्वकर्मणा ।
प्रविवेश पुरीं लङ्कां ससीतो राक्षसेश्वरः ॥ १२
एवं हृतायां वैदेह्यां रामो हत्वा महामृगम् ।
निवृत्तो ददृशे दूराद्भ्रातरं लक्ष्मणं तदा ॥ १३
कथमुत्सृज्य वैदेहीं वने राक्षससेविते ।
इति तं भ्रातरं दृष्ट्वा प्राप्तोऽसीति व्यगर्हयत् ॥ १४
मृगरूपधरेणाथ रक्षसा सोपकर्षणम् ।
भ्रातुरागमनं चैव चिन्तयन्पर्यतप्यत ॥ १५
गर्हयन्नेव रामस्तु त्वरितस्तं समासदत् ।
अपि जीवति वैदेहीमिति पश्यामि लक्ष्मण ॥ १६
तस्य तत्सर्वमाचख्यौ सीताया लक्ष्मणो वचः ।
यदुक्तवत्यसदृशं वैदेही पश्चिमं वचः ॥ १७
दह्यमानेन तु हृदा रामोऽभ्यपतदाश्रमम् ।
स ददर्श तदा गृध्रं निहतं पर्वतोपमम् ॥ १८
राक्षसं शङ्कमानस्तं विकृष्य बलवद्धनुः ।
अभ्यधावत काकुत्स्थस्ततस्तं सहलक्ष्मणः ॥ १९
स तावुवाच तेजस्वी सहितौ रामलक्ष्मणौ ।
गृध्रराजोस्मि भद्रं वां सखा दशरथस्य वै ॥ २०
तस्य तद्वचनं श्रुत्वा संगृह्य धनुषी शुभे ।
कोयं पितरमस्माकं नाम्नाऽऽहेत्यूचतुश्च तौ ॥ २१
ततो ददृशतुस्तौ तं छिन्नपक्षद्वयं खगम् ।

म्रियमाणे जीवति ॥ ३ ॥ नखरैः नखैः ॥ ४ ॥ चक्षार सुस्राव ॥ ५ ॥ अङ्केन उत्सङ्गेन ॥ ७ ॥ गिरिप्रस्थे पर्वतशिखरे ॥ ९ ॥ प्राकारः परिधिभित्तिः वप्रस्तद्बाह्यं वेणुमयं दुर्गं ताभ्यां संबाधा दुर्गमा ॥ १२ ॥ कथं प्राप्तोसीति संबन्धः ॥ १४ ॥ वां युवयोः ॥ २० ॥ आह ब्रूते ॥ २१ ॥

तयोः शशंस गृध्रस्तु सीतार्थे रावणाद्वधम् ॥२२
अपृच्छद्राघवो गृध्रं रावणः कां दिशं गतः ।
तस्य गृध्रः शिरःकम्पैराचचक्षे ममार च ॥ २३
दक्षिणामिति काकुत्स्थो विदित्वाऽस्य तदिङ्गितम् ।
संस्कारं लम्भयामास सखायं पूजयन्पितुः ॥२४
ततो दृष्ट्वाऽऽश्रमपदं व्यपविद्धबृसीकटम् ।
विध्वस्तकलशं शून्यं गोमायुशतसंकुलम् ॥ २५
दुःखशोकसमाविष्टौ वैदेहीहरणार्दितौ ।
जग्मतुर्दण्डकारण्यं दक्षिणेन परंतपौ ॥ २६
वने महति तस्मिंस्तु रामः सौमित्रिणा सह ।
ददर्श मृगयूथानि द्रवमाणानि सर्वशः ॥ २७
शब्दं च घोरं सत्वानां दावाग्नेरिव वर्धतः ।
अपश्येतां मुहूर्ताच्च कबन्धं घोरदर्शनम् ॥ २८
मेघपर्वतसंकाशं सालस्कन्धं महाभुजम् ।
उरोगतविशालाक्षं महोदरमहामुखम् ॥ २९
यदृच्छयाथ तद्रक्षः करे जग्राह लक्ष्मणम् ।
विषादमगमत्सद्यः सौमित्रिरथ भारत ॥ ३०
स राममभिसंप्रेक्ष्य कृष्यते येन तन्मुखम् ।
विषण्णश्चाब्रवीद्रामं पश्यावस्थामिमां मम ॥ ३१
हरणं चैव वैदेह्या मम चायमुपप्लवः ।
राज्यभ्रंशश्च भवतस्तातस्य मरणं तथा ॥ ३२
नाहं त्वां सह वैदेह्या समेतं कोसलागतम् ।
द्रक्ष्यामि प्रथिते राज्ये पितृपैतामहे स्थितम् ॥३३
द्रक्ष्यन्त्यार्यस्य धन्या ये कुशलाजशमीदलैः ।
अभिषिक्तस्य वदनं सोमं शान्तघनं यथा ॥ ३४
एवं बहुविधं धीमान्विललाप स लक्ष्मणः ।
तमुवाचाथ काकुत्स्थः संभ्रमेष्वप्यसंभ्रमः ॥ ३५
मा विषीद नरव्याघ्र नैष कश्चिन्मयि स्थिते ।
'शक्तो धर्षयितुं वीर सुमित्रानन्दवर्धन ।'
छिन्ध्यस्य दक्षिणं बाहुं छिन्नः सव्यो मया भुजः ॥
इत्येवं वदता तस्य भुजो रामेण पातितः ।
खड्गेन भृशतीक्ष्णेन निकृत्तस्तिलकाण्डवत् ॥ ३७
ततोऽस्य दक्षिणं बाहुं खड्गेनाजघ्निवान्बली ।
सौमित्रिरपि संप्रेक्ष्य भ्रातरं राघवं स्थितम् ॥ ३८
पुनर्जघान पार्श्वे वै तद्रक्षो लक्ष्मणो भृशम् ।
गतासुरपतद्भूमौ कबन्धः सुमहांस्ततः ॥ ३९
तस्य देहाद्विनिःसृत्य पुरुषो दिव्यदर्शनः ।
ददृशे दिवमास्थाय दिवि सूर्य इव ज्वलन् ॥ ४०
पप्रच्छ रामस्तं वाग्मी कस्त्वं प्रब्रूहि पृच्छतः ।
कामया किमिदं चित्रमाश्चर्यं प्रतिभाति मे ॥ ४१
तस्याचचक्षे गन्धर्वो विश्वावसुरहं नृप ।
प्राप्तो ब्राह्मणशापेन योनिं राक्षससेविताम् ॥ ४२
रावणेन हृता सीता लङ्कायां संनिवेशिता ।
सुग्रीवमभिगच्छस्व स ते साह्यं करिष्यति ॥ ४३
एषा पम्पा शिवजला हंसकारण्डवायुता ।
ऋश्यमूकस्य शैलस्य संनिकर्षे तटाकिनी ॥ ४४
वसते तत्र सुग्रीवश्चतुर्भिः सचिवैः सह ।
भ्राता वानरराजस्य वालिनो हेममालिनः ॥ ४५
तेन त्वं सहसंगम्य दुःखमूलं निवेदय ।
समानशीलो भवतः साहाय्यं स करिष्यति ॥४६
एतावच्छक्यमस्माभिर्वक्तुं द्रष्टासि जानकीम् ।
ध्रुवं वानरराजस्य विदितो रावणालयः ॥ ४७
इत्युक्त्वाऽन्तर्हितो दिव्यः पुरुषः स महाप्रभः ।
विस्मयं जग्मतुश्चोभौ प्रवीरौ रामलक्ष्मणौ ॥ ४८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि अशीत्यधिकद्विशततमोऽध्यायः ॥ २८० ॥

---

उरसि नेत्रे उदरे मुखं च यस्य । कबन्धः शीर्षहीनः पुमान् ॥ २९ ॥ येन यतस्तन्मुखं ततः कृष्यते ॥ ३१ ॥ कामया इच्छया ॥ ४१ ॥ पम्पा नामतः । तटाकिनी सरसी ॥ ४४ ॥ अशीत्यधिकद्विशततमोऽध्यायः ॥ २८० ॥

## एकाशीत्यधिकद्विशततमोऽध्यायः ॥ २८१ ॥

रामेण सुग्रीवेण सख्यकरणपूर्वकं वालिहननम् ॥ १ ॥ रावणेनाशोकवने सीतानिवेशनपूर्वकं तद्वशीकरणाय राक्षसीनां नियोजनम् ॥ २ ॥ तत्र त्रिजटया रामरावणयोरिष्टानिष्टसूचकस्वदृष्टस्वाप्नप्रकारकथनेन सीतायाः परिसान्त्वनम् ॥ ३ ॥

मार्कण्डेय उवाच ।
ततोऽविदूरे नलिनीं प्रभूतकमलोत्पलाम् ।
सीताहरणदुःखार्तः पम्पां रामः समासदत् ॥ १
मारुतेन सुशीतेन सुखेनामृतगन्धिना ।
सेव्यमानो वने तस्मिञ्जगाम मनसा प्रियाम् ॥२
विललाप स राजेन्द्रस्तत्र कान्तामनुस्मरन् ।
कामबाणाभिसंतप्तं सौमित्रिस्तमथाब्रवीत् ॥ ३
न त्वामेवंविधो भावः स्प्रष्टुमर्हति मानद ।
आत्मवन्तमिव व्याधिः पुरुषं वृद्धसेविनम् ॥ ४
प्रवृत्तिरुपलब्धा ते वैदेह्या रावणस्य च ।
तां त्वं पुरुषकारेण बुद्ध्या चैवोपपादय ॥ ५
अभिगच्छाव सुग्रीवं शैलस्थं हरिपुङ्गवम् ।
मयि शिष्ये च भृत्ये च सहाये च समाश्वस॥६
एवं बहुविधैर्वाक्यैर्लक्ष्मणेन स राघवः ।
उक्तः प्रकृतिमापेदे कार्ये चानन्तरोऽभवत् ॥ ७
निषेव्य वारि पम्पायास्तर्पयित्वा पितॄनपि ।
प्रतस्थतुरुभौ वीरौ भ्रातरौ रामलक्ष्मणौ ॥ ८
तावृश्यमूकमभ्येत्य बहुमूलफलद्रुमम् ।
गिर्यग्रे वानरान्पञ्च वीरौ ददृशतुस्तदा ॥ ९
सुग्रीवः प्रेषयामास सचिवं वानरं तयोः ।
बुद्धिमन्तं हनूमन्तं हिमवन्तमिव स्थितम् ॥ १०
तेन संभाष्य पूर्वं तौ सुग्रीवमभिजग्मतुः ।
सख्यं वानरराजेन चक्रे रामस्तदा नृप ॥ ११
'ततः सीतां हृतां श्रुत्वा सुग्रीवो वालिना कृतम् ।
दुःखमाख्यातवान्सर्वं रामायामिततेजसे ॥' १२
तद्वासो दर्शयामास तस्य कार्ये निवेदिते ।
वानराणां तु यत्सीता ह्रियमाणा व्यपासृजत्१३
तत्प्रत्ययकरं लब्ध्वा सुग्रीवं प्लवगाधिपम् ।
पृथिव्यां वानरैश्वर्ये स्वयं रामोऽभ्यषेचयत् ॥१४
प्रतिजज्ञे च काकुत्स्थः समरे वालिनो वधम् ।
सुग्रीवश्चापि वैदेह्याः पुनरानयनं नृप ॥ १५
इत्येवं समयं कृत्वा विश्वास्य च परस्परम् ।
अभ्येत्य सर्वे किष्किन्धां तस्थुर्युद्धाभिकाङ्क्षिणः ॥
सुग्रीवः प्राप्य किष्किन्धां ननादौघनिभस्वनः ।
नास्य तन्ममृषे वाली तारा तं प्रत्यषेधयत् ॥१७
यथा नदति सुग्रीवो बलवानेष वानरः ।
मन्ये चाश्रयवान्प्राप्तो न त्वं निष्क्रान्तुमर्हसि१८
हेममाली ततो वाली तारां ताराधिपाननाम् ।
प्रोवाच वचनं वाग्मी तां वानरपतिः पतिः ॥१९
सर्वभूतरुतज्ञा त्वं पश्य बुद्ध्या समन्विता ।
केन चाश्रयवान्प्राप्तो ममैष भ्रातृगन्धिकः ॥२०
चिन्तयित्वा मुहूर्तं तु तारा ताराधिपप्रभा ।
पतिमित्यब्रवीत्प्राज्ञा शृणु सर्वं कपीश्वर ॥ २१
हृतदारो महासत्त्वो रामो दशरथात्मजः ।
तुल्यारिमित्रतां प्राप्तः सुग्रीवेण धनुर्धरः ॥ २२
भ्राता चास्य महाबाहुः सौमित्रिरपराजितः ।
लक्ष्मणो नाम मेधावी स्थितः कार्यार्थसिद्धये २३
मैन्दश्च द्विविदश्चापि हनूमांश्चानिलात्मजः ।
जाम्बवानृक्षराजश्च सुग्रीवसचिवाः स्थिताः ॥२४
सर्व एते महात्मानो बुद्धिमन्तो महाबलाः ।
अलं तव विनाशाय रामवीर्यव्यपाश्रयाः ॥ २५
तस्यास्तदाक्षिप्य वचो हितमुक्तं कपीश्वरः ।
पर्यशङ्कत तामीर्षुः सुग्रीवगतमानसाम् ॥ २६
तारां परुषमुक्त्वा तु निर्जगाम गुहामुखात् ।
स्थितं माल्यवतोऽभ्याशे सुग्रीवं सोऽभ्यभाषत २७
असकृत्त्वं मया क्लीब निर्जितो जीवितप्रियः ।

अविदूरे समीपे । नलिनीं पुष्करिणीम् ॥ १ ॥ अमृतगन्धिनाऽमृतसदृशेन ॥ २ ॥ उपपादय सफलीकुरु ॥ ५ ॥ अनन्तरः संलग्नः ॥ ७ ॥ ऋश्यमूकं पर्वतम् ॥ ९ ॥ ओघो जनवृन्दस्तन्निभः स्वनो यस्य ॥ १७ ॥ आश्रयवान् परबलाश्रितः ॥ १८ ॥ ईर्षुरीर्ष्यालुः ॥ २६ ॥

मुक्तो गच्छसि दुर्बुद्धे कथंकारं रणे पुनः ॥ २८
इत्युक्तः प्राह सुग्रीवो भ्रातरं हेतुमद्वचः ।
प्राप्तकालममित्रघ्नं रामं सम्बोधयन्निव ॥ २९
हृतराज्यस्य मे राजन्हृतदारस्य च त्वया ।
किं मे जीवितसामर्थ्यमिति विद्धि समागतम् ३०
एवमुक्त्वा बहुविधं ततस्तौ सन्निपेततुः ।
समरे वालिसुग्रीवौ सालतालशिलायुधौ ॥ ३१
उभौ जघ्नतुरन्योन्यमुभौ भूमौ निपेततुः ।
उभौ ववल्गतुश्चित्रं मुष्टिभिश्च निजघ्नतुः ॥ ३२
उभौ रुधिरसंसिक्तौ नखदन्तपरिक्षतौ ।
शुशुभाते तदा वीरौ पुष्पिताविव किंशुकौ ॥३३
न विशेषस्तयोर्युद्धे यदा कश्चन दृश्यते ।
सुग्रीवस्य तदा मालां हनुमान्कण्ठ आसजत् ३४
स मालया तदा वीरः शुशुभे कण्ठसक्तया ।
श्रीमानिव महाशैलो मलयो मेघमालया ॥ ३५
कृतचिह्नं तु सुग्रीवं रामो दृष्ट्वा महाधनुः ।
विचकर्ष धनुःश्रेष्ठं वालिमुद्दिश्य लक्ष्यन् ॥ ३६
विष्फारस्तस्य धनुषो यन्त्रस्येव तदा बभौ ।
वितत्रास तदा वाली शरेणाभिहतो हृदि ॥ ३७
स भिन्नहृदयो वाली वक्त्राच्छोणितमुद्वमन् ।
ददर्शावस्थितं रामं ततः सौमित्रिणा सह ॥ ३८
गर्हयित्वा स काकुत्स्थं पपात भुवि मूर्च्छितः ।
तारा ददर्श तं भूमौ तारापतिमिव च्युतम् ॥ ३९
हते वालिनि सुग्रीवः किष्किन्धां प्रत्यपद्यत ।
तां च तारापतिमुखीं तारां निपतितेश्वराम् ॥४०
रामस्तु चतुरो मासान्पृष्ठे माल्यवतः शुभे ।
निवासमकरोद्धीमान्सुग्रीवेणाभ्युपस्थितः ॥ ४१
रावणोऽपि पुरीं गत्वा लङ्कां कामबलात्कृतः ।
सीतां निवेशयामास भवने नन्दनोपमे ॥ ४२
अशोकवनिकाभ्याशे तापसाश्रमसन्निभे ।
भर्तृस्मरणतन्वङ्गी तापसीवेषधारिणी ॥ ४३

उपवासतपःशीला ततः सा पृथुलेक्षणा ।
उवास दुःखवसतिं फलमूलकृताशना ॥ ४४
दिदेश राक्षसीस्तत्र रक्षणे राक्षसाधिपः ।
प्रासासिशूलपरशुमुद्गरालातधारिणीः ॥ ४५
द्व्यक्षीं त्र्यक्षीं ललाटाक्षीं दीर्घजिह्वामजिह्विकाम् ।
त्रिस्तनीमेकपादां च त्रिजटामेकलोचनाम् ॥४६
एताश्चान्याश्च दीप्ताक्ष्यः करभोत्कटमूर्धजाः ।
परिवार्यासते सीतां दिवारात्रमतन्द्रिताः ॥ ४७
तास्तु तामायतापाङ्गीं पिशाच्यो दारुणस्वराः ।
तर्जयन्ति सदा रौद्राः परुषव्यञ्जनस्वराः ॥ ४८
खादाम पाटयामैनां तिलशः प्रविभज्य ताम् ।
येयं भर्तारमस्माकमवमत्येह जीवति ॥ ४९
इत्येवं परिभर्त्सन्तीस्त्रासयानाः पुनः पुनः ।
भर्तृशोकसमाविष्टा निःश्वस्येदमुवाच ताः ॥ ५०
आर्याः खादत मां शीघ्रं न मे लोभोऽस्ति जीविते ।
विना तं पुण्डरीकाक्षं नीलकुञ्चितमूर्धजम् ॥५१
अद्यैवाहं निराहारा जीवितप्रियवर्जिता ।
शोषयिष्यामि गात्राणि वह्नी तलगता यथा॥५२
न त्वन्यमभिगच्छेयं पुमांसं राघवादृते ।
इति जानीत सत्यं मे क्रियतां यदनन्तरम् ॥५३
तस्यास्तद्वचनं श्रुत्वा राक्षस्यस्ताः खरस्वनाः ।
आख्यातुं राक्षसेन्द्राय जग्मुस्तत्सर्वमादितः ॥५४
गतासु तासु सर्वासु त्रिजटा नाम राक्षसी ।
सान्त्वयामास वैदेहीं धर्मज्ञा प्रियवादिनी ॥५५
सीते वक्ष्यामि ते किंचिद्विश्वासं कुरु मे सखि ।
भयं त्वं त्यज वामोरु शृणु चेदं वचो मम ॥५६
अविन्ध्यो नाम मेधावी वृद्धो राक्षसपुङ्गवः ।
स रामस्य हितान्वेषी त्वदर्थे मामचूचुदत् ॥५७
सीता मद्वचनाद्वाच्या समाश्वास्य प्रसाद्य च ।
भर्ता ते कुशली रामो लक्ष्मणानुगतो बली ॥५८
सख्यं वानरराजेन शक्रप्रतिमतेजसा ।

मुक्तो गच्छसि दुर्बुद्धे कथं घोरे रणे पुनरिति क. पाठः । मुक्तो ज्ञातिरिति ज्ञात्वा का त्वरा मरणे पुनः इति झ. पाठः ॥ २८ ॥ जीवितसामर्थ्यं जीवनस्य श्लाघ्यत्वम् ॥ ३० ॥

करभोत्कटमूर्धजाः उष्ट्रसदृशकेश्यः ॥ ४७ ॥ परुषव्यञ्जनस्वरात्मकाः शब्दा यासां ताः ॥ ४८ ॥ व्याली तालगता यथेति ख. झ. पाठः ॥ ५२ ॥

कृतवान्राघवः श्रीमांस्त्वदर्थे च समुद्यतः ॥ ५९
मा च ते भूद्भयं भीरु रावणाल्लोकगर्हितात् ।
नलकूबरशापेन रक्षिता ह्यसि नन्दिनि ॥ ६०
शप्तो ह्येष पुरा पापो वधूं रम्भां परामृशन् ।
न शक्नोत्यवशां नारीमुपैतुमजितेन्द्रियः ॥ ६१
क्षिप्रमेष्यति ते भर्ता सुग्रीवेणाभिरक्षितः ।
सौमित्रिसहितो धीमांस्त्वां चेतो मोक्षयिष्यति॥
स्वप्ना हि सुमहाघोरा दृष्टा मेऽनिष्टदर्शनाः ।
विनाशायास्य दुर्बुद्धेः पौलस्त्यस्य कुलस्य च ६३
दारुणो ह्येष दुष्टात्मा क्षुद्रकर्मा निशाचरः ।
स्वभावाच्छीलदोषेण सर्वेषां भयवर्धनः ॥ ६४
स्पर्धते सर्वदेवैर्यः कालोपहतचेतनः ।
मया विनाशलिङ्गानि स्वप्ने दृष्टानि तस्य वै ॥ ६५
तैलाभिषिक्तो विकचो मज्जन्पङ्के दशाननः ।
असकृत्खरयुक्ते तु रथे नृत्यन्निव स्थितः ॥ ६६
कुम्भकर्णादयश्चेमे नग्नाः पतितमूर्धजाः ।
गच्छन्ति दक्षिणामाशां रक्तमाल्यानुलेपनाः ६७
श्वेतातपत्रः सोष्णीषः शुक्लमाल्यानुलेपनः ।
श्वेतपर्वतमारूढ एक एव विभीषणः ॥ ६८
सचिवाश्चास्य चत्वारः शुक्लमाल्यानुलेपनाः ।
श्वेतपर्वतमारूढा मोक्ष्यन्तेऽस्मान्महाभयात् ॥६९
रामस्यास्त्रेण पृथिवी परिक्षिप्ता ससागरा ।
यशसा पृथिवीं कृत्स्नां पूरयिष्यति ते पतिः ७०
हस्तिसक्थिसमारूढो भुञ्जानो मधुपायसम् ।
लक्ष्मणश्च मया दृष्टो दिधक्षुः सर्वतो दिशम् ७१
रुदती रुधिरार्द्राङ्गी व्याघ्रेण परिरक्षिता ।
असकृत्त्वं मया दृष्टा गच्छन्ती दिशमुत्तराम् ॥ ७२
हर्षमेष्यसि वैदेहि क्षिप्रं भर्त्रा समन्विता ।
राघवेण सह भ्रात्रा सीते त्वमचिरादिव ॥ ७३
इत्येतन्मृगशावाक्षी तच्छ्रुत्वा त्रिजटावचः ।
बभूवाशावती बाला पुनर्भर्तृसमागमे ॥ ७४
तावदभ्यागता रौद्र्यः पिशाच्यस्ताः सुदारुणाः ।
ददृशुस्तां त्रिजटया सहासीनां यथापुरम् ॥ ७५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि एकाशीत्यधिकद्विशततमोऽध्यायः ॥ २८१ ॥

---

## द्व्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८२ ॥

रावणेन सीतासमीपमेत्य बहुधा प्रलोभनेऽप्यविकृतमानसया तया प्रत्याख्याने स्वावासंप्रति गमनम् ॥ १ ॥

मार्कण्डेय उवाच ।
ततस्तां भर्तृशोकार्तां दीनां मलिनवाससम् ।
मणिशेषाभ्यलंकारां रुदतीं च पतिव्रताम् ॥ १
राक्षसीभिरुपास्यन्तीं समासीनां शिलातले ।
रावणः कामबाणार्तो ददर्शोपससर्प च ॥ २
देवदानवगन्धर्वयक्षकिंपुरुषैर्युधि ।
अजितोऽशोकवनिकां ययौ कन्दर्पपीडितः ॥ ३
दिव्याम्बरधरः श्रीमान्सुमृष्टमणिकुण्डलः ।
विचित्रमाल्यमुकुटो वसन्त इव मूर्तिमान् ॥ ४
न कल्पवृक्षसदृशो यत्नादपि विभूषितः ।
श्मशानचैत्यद्रुमवद्भूषितोऽपि भयंकरः ॥ ५
स तस्यास्तनुमध्यायाः समीपे रजनीचरः ।
ददृशे रोहिणीमेत्य शनैश्चर इव ग्रहः ॥ ६
स तामामन्त्र्य सुश्रोणीं पुष्पकेतुशराहतः ।
इदमित्यब्रवीद्वाक्यं त्रस्तां रौहीमिवाबलाम् ॥ ७
सीते पर्याप्तमेतावत्कृतो भर्तुरनुग्रहः ।
प्रसादं कुरु तन्वङ्गि क्रियतां परिकर्म ते ॥ ८
भजस्व मां वरारोहे महार्हाभरणाम्बरा ।
भव मे सर्वनारीणामुत्तमा वरवर्णिनी ॥ ९
सन्ति मे देवकन्याश्च गन्धर्वाणां च योषितः ।
सन्ति दानवकन्याश्च दैत्यानां चापि योषितः ।
'तासामद्य विशालाक्षि सर्वासां मे भवोत्तमा ॥'

---

वधूं स्नुषाम् ॥ ६१ ॥ परिक्षिप्ता व्याप्ता ॥ ७० ॥ एकाशीत्यधिकद्विशततमोऽध्यायः ॥ २८१ ॥

उपास्यन्तीमुपास्यमानाम् ॥ २ ॥ रौहीं हरिणीम् ॥ ७ ॥ परिकर्म वस्त्राभरणादिना प्रसाधनम् ॥ ८ ॥

चतुर्दश पिशाचीनां कोट्यो मे वचने स्थिताः ।
द्विस्तावत्पुरुषादानां रक्षसां भीमकर्मणाम् ॥ ११
ततो मे त्रिगुणा यक्षा ये मद्वचनकारिणः ।
केचिदेव धनाध्यक्षं भ्रातरं मे समाश्रिताः ॥ १२
गन्धर्वाप्सरसो भद्रे मामापानगतं सदा ।
उपतिष्ठन्ति वामोरु यथैव भ्रातरं मम ॥ १३
पुत्रोऽहमपि विप्रर्षेः साक्षाद्विश्रवसो मुनेः ।
पञ्चमो लोकपालानामिति मे प्रथितं यशः ॥ १४
दिव्यानि भक्ष्यभोज्यानि पानानि विविधानि च
यथैव त्रिदशेशस्य तथैव मम भामिनि ॥ १५
क्षीयतां दुष्कृतं कर्म वनवासकृतं तव ।
भार्या मे भव सुश्रोणि यथा मण्डोदरी तथा १६
इत्युक्ता तेन वैदेही परिवृत्य शुभानना ।
तृणमन्तरतः कृत्वा तमुवाच निशाचरम् ॥ १७
अशिवेनातिवामोरूरजस्रं नेत्रवारिणा ।
स्तनावपतितौ बाला संहताविभिवर्षती ॥ १८
'व्यवस्थाप्य कथंचित्सा विषादादतिमोहिता ।'
उवाच वाक्यं तं क्षुद्रं वैदेही पतिदेवता ॥ १९
असकृद्वदतो वाक्यमीदृशं राक्षसेश्वर ।
विषादयुक्तमेतत्ते मया श्रुतमभाग्यया ।
तद्भद्रमुख भद्रं ते मानसं विनिवर्त्यताम् ॥ २०

परदाराऽस्म्यलभ्या च सततं च पतिव्रता ।
न चैवौपयिकी भार्या मानुषी तव राक्षस ॥ २१
विवशां धर्षयित्वा च कां त्वं प्रीतिमवाप्स्यसि ।
प्रजापतिसमो विप्रो ब्रह्मयोनिः पिता तव ।
न च पालयसे धर्मं लोकपालसमः कथम् ॥ २२
भ्रातरं राजराजं तं महेश्वरसखं प्रभुम् ।
धनेश्वरं व्यपदिशन्कथं त्विह न लज्जसे ॥ २३
इत्युक्त्वा प्रारुदत्सीता कम्पयन्ती पयोधरौ ।
शिरोधरां च तन्वङ्गी मुखं प्रच्छाद्य वाससा ॥ २४
तस्या रुदत्या भामिन्या दीर्घा वेणी सुसंयता ।
ददृशे स्वसिता स्निग्धा काली व्यालीव मूर्धनि ॥
श्रुत्वा तद्रावणो वाक्यं सीतयोक्तं सुनिष्ठुरम् ।
प्रत्याख्यातोऽपि दुर्मेधाः पुनरेवाब्रवीद्वचः ॥२६
काममङ्गानि मे सीते दुनोतु मकरध्वजः ।
न त्वामकामां सुश्रोणीं समेष्ये चारुहासिनीं ॥२७
किंतु शक्यं मया कर्तुं यत्त्वमद्यापि मानुषम् ।
आहारभूतमस्माकं राममेवानुरुध्यसे ॥ २८
इत्युक्त्वा तामनिन्द्याङ्गीं स राक्षसमहेश्वरः ।
तत्रैवान्तर्हितो भूत्वा जगामाभिमतां दिशम् २९
राक्षसीभिः परिवृता वैदेही शोककर्शिता ।
सेव्यमाना त्रिजटया तत्रैव न्यवसत्तदा ॥ ३०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि द्व्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८२ ॥

## त्र्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८३ ॥

रामेण शरदागमेऽपि विषयासक्तस्य स्वानुपसर्पिणं सुग्रीवंप्रति लक्ष्मणप्रेषणम् ॥ १ ॥ सुग्रीवेण सह रामान्तिकमागतेन लक्ष्मणेन तंप्रति सीतान्वेषणाय सुग्रीवकृतवानरप्रेषणनिवेदनम् ॥ २ ॥ ततो लङ्कापुरात्प्रतिनिवृत्तेन हनुमताऽङ्गदादिभिः सह मधुवनभङ्गपूर्वकं रामाय सीतावृत्तान्तादिनिवेदनपूर्वकं तद्दत्तचूडामणिदानम् ॥ ३ ॥

मार्कण्डेय उवाच ।
राघवः सहसौमित्रिः सुग्रीवेणाभिपालितः ।
वसन्माल्यवतः पृष्ठे ददर्श विमलं नभः ॥ १
स दृष्ट्वा विमले व्योम्नि निर्मलं शशलक्षणम् ।
ग्रहनक्षत्रताराभिरनुयान्तममित्रहा ॥ २

कुमुदोत्पलपद्मानां गन्धमादाय वायुना ।
महीधरस्थः शीतेन सहसा प्रतिबोधितः ॥ ३
प्रभाते लक्ष्मणं वीरमभ्यभाषत दुर्मनाः ।
सीतां संस्मृत्य धर्मात्मा रुद्धां राक्षसवेश्मनि ॥४
गच्छ लक्ष्मण जानीहि किष्किंधायां कपीश्वरम् ।

विनिवर्त्यतां मत्त इति शेषः ॥ २० ॥ औपयिकी उपयोगार्हा ॥ २१ ॥ द्व्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८२ ॥

प्रमत्तं ग्राम्यधर्मेषु कृतघ्नं स्वार्थपण्डितम् ॥ ५
योऽसौ कुलाधमो मूढो मया राज्येऽभिषेचितः ।
सर्ववानरगोपुच्छा यमृक्षाश्च भजन्ति वै ॥ ६
यदर्थं निहतो वाली मया रघुकुलोद्वह ।
त्वया सह महाबाहो किष्किन्धोपवने तदा ॥ ७
कृतघ्नं तमहं मन्ये वानरापशदं भुवि ।
यो मामेवंगतो मूढो न जानीतेऽद्य लक्ष्मण ॥ ८
असौ मन्ये न जानीते समयप्रतिपालनम् ।
कृतोपकारं मां नूनमवमत्याल्पया धिया ॥ ९
यदि तावदनुद्युक्तः शेते कामसुखात्मकः ।
नेतव्यो वालिमार्गेण सर्वभूतगतिं त्वया ॥ १०
अथापि घटतेऽस्माकमर्थे वानरपुङ्गवः ।
तमादायैव काकुत्स्थ त्वरावान्भव माचिरम् ॥ ११
इत्युक्तो लक्ष्मणो भ्रात्रा गुरुवाक्यहिते रतः ।
प्रतस्थे रुचिरं गृह्य समार्गणगुणं धनुः ॥ १२
किष्किन्धाद्वारमासाद्य प्रविवेशानिवारितः ।
सक्रोध इति तं मत्वा राजा प्रत्युद्ययौ हरिः ॥ १३
तं सदारो विनीतात्मा सुग्रीवः प्लवगाधिपः ।
पूजया प्रतिजग्राह प्रीयमाणस्तदर्हया ॥ १४
तमब्रवीद्रामवचः सौमित्रिरकुतोभयः ।
स तत्सर्वमशेषेण श्रुत्वा प्रह्वः कृताञ्जलिः ॥ १५
सभृत्यदारो राजेन्द्र सुग्रीवो वानराधिपः ।
इदमाह वचः प्रीतो लक्ष्मणं नरकुञ्जरम् ॥ १६
नास्मि लक्ष्मण दुर्मेधा नाकृतज्ञो न निर्घृणः ।
श्रूयतां यः प्रयत्नो मे सीतापर्येषणे कृतः ॥ १७
दिशः प्रस्थापिताः सर्वे विनीता हरयो मया ।
सर्वेषां च कृतः कालो मासेऽभ्यागमने पुनः ॥ १८
यैरियं सवना साद्रिः सपुरा सागराम्बरा ।
विचेतव्या मही वीर सग्रामनगराकरा ॥ १९
स मासः पञ्चरात्रेण पूर्णो भवितुमर्हति ।
ततः श्रोष्यसि रामेण सहितः सुमहत्प्रियम् ॥ २०
इत्युक्तो लक्ष्मणस्तेन वानरेन्द्रेण धीमता ।
त्यक्त्वा रोषमदीनात्मा सुग्रीवं प्रत्यपूजयत् ॥ २१
स रामं सहसुग्रीवो माल्यवत्पृष्ठमास्थितम् ।
अभिगम्योदयं तस्य कार्यस्य प्रत्यवेदयत् ॥ २२
इत्येवं वानरेन्द्रास्ते समाजग्मुः सहस्रशः ।
दिशस्तिस्रो विचित्याथ न तु ये दक्षिणां गताः ॥
आचख्युस्तत्र रामाय महीं सागरमेखलाम् ।
विचितां न तु वैदेह्या दर्शनं रावणस्य वा ॥ २४
गतास्तु दक्षिणामाशां ये वै वानरपुङ्गवाः ।
आशावांस्तेषु काकुत्स्थः प्राणानार्तोऽभ्यधारयत् ॥
द्विमासोपरमे काले व्यतीते प्लवगास्ततः ।
सुग्रीवमभिगम्येदं त्वरिता वाक्यमब्रुवन् ॥ २६
रक्षितं वालिना यत्तत्स्फीतं मधुवनं महत् ।
त्वया च प्लवगश्रेष्ठ तद्भुङ्क्ते पवनात्मजः ॥ २७
वालिपुत्रोऽङ्गदश्चैव ये चान्ये प्लवगर्षभाः ।
विचेतुं दक्षिणामाशां राजन्प्रस्थापितास्त्वया २८
तेषामपनयं श्रुत्वा मेने स कृतकृत्यताम् ।
कृतार्थानां हि भृत्यानामेतद्भवति चेष्टितम् ॥ २९
स तद्रामाय मेधावी शशंस प्लवगर्षभः ।
रामश्चाप्यनुमानेन मेने दृष्टां तु मैथिलीम् ॥ ३०
हनुमत्प्रमुखाश्चापि विश्रान्तास्ते प्लवङ्गमाः ।
अभिजग्मुर्हरीन्द्रं तं रामलक्ष्मणसन्निधौ ॥ ३१
गतिं च मुखवर्णं च दृष्ट्वा रामो हनूमतः ।
अगमत्प्रत्ययं भूयो दृष्टा सीतेति भारत ॥ ३२
हनूमत्प्रमुखास्ते तु वानराः पूर्णमानसाः ।
प्रणेमुर्विधिवद्रामं सुग्रीवं लक्ष्मणं तथा ॥ ३३
तानुवाचागतान्रामः प्रगृह्य सशरं धनुः ।
अपि मां जीवयिष्यध्वमपि वः कृतकृत्यता ॥ ३४
अपि राज्यमयोध्यायां कारयिष्याम्यहं पुनः ।
निहत्य समरे शत्रूनाहृत्य जनकात्मजाम् ॥ ३५
अमोक्षयित्वा वैदेहीमहत्वा च रणे रिपून् ।
हृतदारोऽवधूतश्च नाहं जीवितुमुत्सहे ॥ ३६
इत्युक्तवचनं रामं प्रत्युवाचानिलात्मजः ।

---

ग्राम्यधर्मेषु मैथुनादिषु निमित्तभूतेषु । प्रमत्तमसावधानम् ॥ ५ ॥ गुरोर्वाक्ये हिते च रतस्तत्परः ॥ १२ ॥ द्वयोर्मा-सयोरुपरमः समाप्तिर्यस्मिंस्तस्मिन्काले ॥ २६ ॥ कारयिष्यामि स्वार्थे णिच् ॥ ३५ ॥

प्रियमाख्यामि ते राम दृष्टा सा जानकी मया ३७
विचित्य दक्षिणामाशां सपर्वतवनाकराम् ।
श्रान्ताः काले व्यतीते स्म दृष्टवन्तो महागुहां ३८
प्रविशामो वयं तां तु बहुयोजनमायताम् ।
अन्धकारां सुविपिनां गहनां कीटसेविताम् ॥३९
गत्वा सुमहदध्वानमादित्यस्य प्रभां ततः ।
दृष्टवन्तः स्म तत्रैव भवनं दिव्यमन्तरा ॥ ४०
मयस्य किल दैत्यस्य तदा सद्मेश्म राघव ।
तत्र प्रभावती नाम तपोऽतप्यत तापसी ॥ ४१
तया दत्तानि भोज्यानि पानानि विविधानि च ।
भुक्त्वा लब्धबलाः सन्तस्तयोक्तेन पथा ततः ४२
निर्याय तस्मादुद्देशात्पश्यामो लवणाम्भसः ।
समीपे सह्यमलयौ दर्दुरं च महागिरिम् ॥ ४३
ततो मलयमारुह्य पश्यन्तो वरुणालयम् ।
विषण्णा व्यथिताः खिन्ना निराशा जीविते भृशम्
अनेकशतविस्तीर्णं योजनानां महोदधिम् ।
तिमिनक्रझषावासं चिन्तयन्तः सुदुःखिताः ॥ ४५
तत्रानशनसंकल्पं कृत्वाऽऽसीना वयं तदा ।
ततः कथान्ते गृध्रस्य जटायोरभवत्कथा ॥ ४६
ततः पर्वतशृङ्गाभं घोररूपं भयावहम् ।
पक्षिणं दृष्टवन्तः स्म वैनतेयमिवापरम् ॥ ४७
सोऽस्मानतर्कयद्भोक्तुमथाभ्येत्य वचोऽब्रवीत् ।
भोः क एष मम भ्रातुर्जटायोः कुरुते कथाम् ॥४८
संपातिर्नाम तस्याहं ज्येष्ठो भ्राता खगाधिपः ।
अन्योन्यस्पर्धया रूढावावामादित्यसत्पदम् ॥४९
ततो दग्धाविमौ पक्षौ न दग्धौ तु जटायुषः ।
तस्मान्मे चिरदृष्टः स भ्राता गृध्रपतिः प्रियः ५०
निर्दग्धपक्षः पतितो ह्यहमस्मिन्महागिरौ ।
'द्रष्टुं वीरं न शक्नोमि भ्रातरं वै जटायुषम् ॥'५१
तस्यैवं वदतोऽस्माभिर्हतो भ्राता निवेदितः ।
व्यसनं भवतश्चेदं संक्षेपाद्वै निवेदितम् ॥ ५२
स सम्पातिस्तदा राजञ्श्रुत्वा सुमहदप्रियम् ।
विषण्णचेताः पप्रच्छ पुनरस्मानरिंदम ॥ ५३

कः स रामः कथं सीता जटायुश्च कथं हतः ।
इच्छामि सर्वमेवैतच्छ्रोतुं प्लवगसत्तमाः ॥ ५४
तस्याहं सर्वमेवैतद्भवतो व्यसनागमम् ।
प्रायोपवेशने चैव हेतुं विस्तरशोऽब्रुवम् ॥ ५५
सोऽस्मानाश्वासयामास वाक्येनानेन पक्षिराट् ।
रावणो विदितो मह्यं लङ्का चास्य महापुरी ॥५६
दृष्टा पारे समुद्रस्य त्रिकूटगिरिकन्दरे ।
भवित्री तत्र वैदेही न मेऽस्त्यत्र विचारणा ॥५७
इति तस्य वचः श्रुत्वा वयमुत्थाय सत्वराः ।
सागरक्रमणे मन्त्रं मन्त्रयामः परंतप ॥ ५८
नाध्यवास्यद्यदा कश्चित्सागरस्य विलङ्घनम् ।
ततः पितरमाविश्य पुप्लुवेऽहं महार्णवम् ।
शतयोजनविस्तीर्णं निहत्य जलराक्षसीम् ॥ ५९
तत्र सीता मया दृष्टा रावणान्तःपुरे सती ।
उपवासतपःशीला भर्तृदर्शनलालसा ।
जटिला मलदिग्धाङ्गी कृशा दीना तपस्विनी ॥६०
निमित्तैस्तामहं सीतामुपलभ्य पृथग्विधैः ।
उपसृत्याब्रवं चार्यामभिगम्य रहोगताम् ॥ ६१
सीते रामस्य दूतोऽहं वानरो मारुतात्मजः ।
त्वद्दर्शनमभिप्रेप्सुरिह प्राप्तो विहायसा ॥ ६२
राजपुत्रौ कुशलिनौ भ्रातरौ रामलक्ष्मणौ ।
सर्वशाखामृगेन्द्रेण सुग्रीवेणाभिपालितौ ॥ ६३
कुशलं त्वाब्रवीद्रामः सीते सौमित्रिणा सह ।
सखिभावाच्च सुग्रीवः कुशलं त्वाऽनुपृच्छति ॥६४
क्षिप्रमेष्यति ते भर्ता सर्वशाखामृगैः सह ।
प्रत्ययं कुरु मे देवि वानरोऽस्मि न राक्षसः ॥६५
मुहूर्तमिव च ध्यात्वा सीता मां प्रत्युवाच ह ।
अवैमि त्वां हनूमन्तमविन्ध्यवचनादहम् ॥ ६६
अविन्ध्यो हि महाबाहो राक्षसो वृद्धसंमतः ।
कथितस्तेन सुग्रीवस्त्वद्विधैः सचिवैर्वृतः ॥ ६७
गम्यतामिति चोक्त्वा मां सीता प्रादादिमं मणिम् ।
धारिता येन वैदेही कालमेतमनिन्दिता ॥ ६८

सत्पदं गतवन्ताविति शेषः ॥ ४९ ॥ धारिता जीवनं प्रापिता ॥ ६८ ॥ त्र्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८३ ॥

प्रत्ययार्थं कथां चेमां कथयामास जानकी ।
क्षिप्तामिषीकां काकाय चित्रकूटे महागिरौ ॥६९
भवता पुरुषव्याघ्र प्रत्यभिज्ञानकारणात् ।
'एकाक्षिविकलः काकः सुदुष्टात्मा कृतश्च वै ।।'७०
ग्राहयित्वाऽहमात्मानं ततो दग्ध्वा च तां पुरीम् ।
संप्राप्त इति तं रामः प्रियवादिनमार्चयत् ॥ ७१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि त्र्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८३ ॥

## चतुरशीत्यधिकद्विशततमोऽध्यायः ॥ २८४ ॥

वानरसेनापतिभिः स्वस्वसैन्यैः सह रामसुग्रीवोपासनम् ॥ १ ॥ वानरसेनाभिः सह सागरतीरमुपागतेन रामेण सेनानां सागरतरणाय समुद्राराधनार्थं नियमेन दर्भसंस्तरे शयनम् ॥ २ ॥ सागरेण रामंप्रति स्वप्ने स्वात्मप्रदर्शनपूर्वकं नलेन सेतुनिर्मापणचोदना ॥ ३ ॥ रामेण शरणार्थिनो विभीषणस्य लङ्काराज्येऽभिषेचनपूर्वकं सेतुमार्गेण सैन्यैः सह लङ्कागमनम् ॥ ४ ॥

मार्कण्डेय उवाच ।
ततस्तत्रैव रामस्य समासीनस्य तैः सह ।
समाजग्मुः कपिश्रेष्ठाः सुग्रीववचनात्तदा ॥ १
वृतः कोटिसहस्रेण वानराणां तरस्विनाम् ।
श्वशुरो वालिनः श्रीमान्सुषेणो राममभ्ययात् ॥ २
कोटीशतवृतो वाऽपि गजो गवय एव च ।
वानरेन्द्रौ महावीर्यौ पृथक्पृथगदृश्यताम् ॥ ३
षष्टिकोटिसहस्राणि प्रकर्षन्प्रत्यदृश्यत ।
गोलाङ्गूलो महाराज गवाक्षो भीमदर्शनः ॥ ४
गन्धमादनवासी तु प्रथितो गन्धमादनः ।
कोटीशतसहस्राणि हरीणां समकर्षत ॥ ५
पनसो नाम मेधावी वानरः सुमहाबलः ।
कोटीर्दश द्वादश च त्रिंशत्पञ्च प्रकर्षति ॥ ६
श्रीमान्दधिमुखो नाम हरिवृद्धोऽतिवीर्यवान् ।
प्रचकर्ष महासैन्यं हरीणां भीमतेजसाम् ॥ ७
कृष्णानां मुखपुण्ड्राणामृक्षाणां भीमकर्मणाम् ।
कोटीशतसहस्रेण जाम्बवान्प्रत्यदृश्यत ॥ ८
एते चान्ये च बहवो हरियूथपयूथपाः ।
असङ्ख्येया महाराज समीयू रामकारणात् ॥ ९
गिरिकूटनिभाङ्गानां सिंहानामिव गर्जताम् ।
श्रूयते तुमुलः शब्दस्तत्रतत्र प्रधावताम् ॥ १०
गिरिकूटनिभाः केचित्केचिन्महिषसन्निभाः ।
शरदभ्रप्रतीकाशाः केचिद्धिङ्गुलकाननाः ॥ ११
उत्पतन्तः पतन्तश्च प्लवमानाश्च वानराः ।
उद्धुन्वन्तोऽपरे रेणून्समाजग्मुः समन्ततः ॥ १२
स वानरमहासैन्यः पूर्णसागरसन्निभः ।
निवेशमकरोत्तत्र सुग्रीवानुमते तदा ॥ १३
ततस्तेषु हरीन्द्रेषु समावृत्तेषु सर्वशः ।
तिथौ प्रशस्ते नक्षत्रे मुहूर्ते चाभिपूजिते ॥ १४
तेन व्यूढेन सैन्येन लोकानुद्वर्तयन्निव ।
प्रययौ राघवः श्रीमान्सुग्रीवसहितस्तदा ॥ १५
मुखमासीत्तु सैन्यस्य हनूमान्मारुतात्मजः ।
जघनं पालयामास सौमित्रिरकुतोभयः ॥ १६
बद्धगोधाङ्गुलित्राणौ राघवौ तत्र जग्मतुः ।
वृतौ हरिमहामात्रैश्चन्द्रसूर्यौ ग्रहैरिव ॥ १७
प्रबभौ हरिसैन्यं तत्सालतालशिलायुधम् ।
सुमहच्छालिभवनं यथा सूर्योदयं प्रति ॥ १८
नलनीलाङ्गदक्राथमैन्दद्विविदपालिता ।
ययौ सुमहती सेना राघवस्यार्थसिद्धये ॥ १९
विविधेषु प्रशस्तेषु बहुमूलफलेषु च ।
प्रभूतमधुमांसेषु वारिमत्सु शिवेषु च ॥ २०
निवसन्ती निराबाधा तथैव गिरिसानुषु ।
उपायाद्धरिसेना सा क्षारोदमथ सागरम् ॥ २१
द्वितीयसागरनिभं तद्बलं बहुलध्वजम् ।

मुखे पुण्ड्रस्तिलकं येषां ते। ललाटे ऊर्ध्वपुण्ड्राकारेण चिह्नेन चिह्नितानाम् ॥ ८ ॥ शिरीषकुसुमाभानां सिंहानामिति ध. पाठः ॥ १० ॥ शालिभिर्भातीति शालिभं तच्च तद्वनं पक्वशालिभवनं तद्वत्पीतवर्णमित्यर्थः ॥ १८ ॥

वेलावनं समासाद्य निवासमकरोत्तदा ॥ २२
ततो दाशरथिः श्रीमान्सुग्रीवं प्रत्यभाषत ।
मध्ये वानरमुख्यानां प्राप्तकालमिदं वचः ॥ २३
उपायः को नु भवतां मतः सागरलङ्घने ।
इयं हि महती सेना सागरश्चातिदुस्तरः ॥ २४
तत्रान्ये व्याहरन्ति स्म वानराः पटुमानिनः ।
समर्था लङ्घने सिन्धोर्न तत्कृत्स्नस्य वानराः ॥ २५
केचिन्नौभिर्व्यवस्यन्ति केचिच्च विविधैः प्लवैः ।
नेति रामस्तु तान्सर्वान्सान्त्वयन्प्रत्यभाषत ॥ २६
शतयोजनविस्तारं न शक्ताः सर्ववानराः ।
क्रान्तुं तोयनिधिं वीरा नैषा वो नैष्ठिकी मतिः ॥ २७
नावो न सन्ति सेनाया बह्व्यस्तारयितुं तथा ।
वणिजामुपघातं च कथमस्मद्विधश्चरेत् ॥ २८
विस्तीर्णं चैव नः सैन्यं हन्याच्छिद्रेण वै परः ।
प्लवोडुपप्रतारश्च नैवात्र मम रोचते ॥ २९
अहं त्विमं जलनिधिं समारप्स्याम्युपायतः ।
प्रतिशेष्याम्युपवसन्दर्शयिष्यति मां ततः ॥ ३०
न चेद्दर्शयिता मार्गं धक्ष्याम्येनमहं ततः ।
महास्त्रैरप्रतिहतैरत्यग्निपवनोज्ज्वलैः ॥ ३१
इत्युक्त्वा सहसौमित्रिरुपस्पृश्याथ राघवः ।
प्रतिशिश्ये जलनिधिं विधिवत्कुशसंस्तरे ॥ ३२
सागरस्तु ततः स्वप्ने दर्शयामास राघवम् ।
देवो नदनदीभर्ता श्रीमान्यादोगणैर्वृतः ॥ ३३
कौसल्यामातरित्येवमाभाष्य मधुरं वचः ।
इदमित्याह रत्नानामाकरैः शतशो वृतः ॥ ३४
ब्रूहि किं ते करोम्यत्र साहाय्यं पुरुषर्षभ ।
ऐक्ष्वाको ह्यस्मि ते ज्ञाती राम सत्यपराक्रम ।
एवमुक्तः समुद्रेण रामो वाक्यमथाब्रवीत् ॥ ३५
मार्गमिच्छामि सैन्यस्य दत्तं नदनदीपते ।
येन गत्वा दशग्रीवं हन्याम कुलपांसनम् ।
'राक्षसं सानुबन्धं तं मम भार्यापहारिणम् ॥' ३६
यद्येवं याचतो मार्गं न प्रदास्यति मे भवान् ।
शरैस्त्वां शोषयिष्यामि दिव्यास्त्रप्रतिमन्त्रितैः ॥ ३७
इत्येवं ब्रुवतः श्रुत्वा रामस्य वरुणालयः ।
उवाच व्यथितो वाक्यमिति बद्धाञ्जलिः स्थितः ॥ ३८
नेच्छामि प्रतिघातं ते नास्मि विघ्नकरस्तव ।
शृणु चेदं वचो राम श्रुत्वा कर्तव्यमाचर ॥ ३९
यदि दास्यामि ते मार्गं सैन्यस्य व्रजतोऽऽज्ञया ।
अन्येऽप्याज्ञापयिष्यन्ति मामेवं धनुषो बलात् ॥ ४०
अस्ति त्वत्र नलो नाम वानरः शिल्पिसंमतः ।
त्वष्टुः काकुत्स्थ तनयो बलवान्विश्वकर्मणः ॥ ४१
स यत्काष्ठं तृणं वाऽपि शिलां वा क्षेप्स्यते मयि ।
सर्वं तद्धारयिष्यामि स ते सेतुर्भविष्यति ॥ ४२
इत्युक्त्वाऽन्तर्हिते तस्मिन्रामो नलमुवाच ह ।
कुरु सेतुं समुद्रे त्वं शक्तो ह्यसि मतो मम ॥ ४३
तेनोपायेन काकुत्स्थः सेतुबन्धमकारयत् ।
दशयोजनविस्तारमायतं शतयोजनम् ॥ ४४
नलसेतुरिति ख्यातो योऽद्यापि प्रथितो भुवि ।
रामस्याज्ञां पुरस्कृत्य धार्यते गिरिसंनिभः ॥ ४५
तत्रस्थं स तु धर्मात्मा समागच्छद्विभीषणः ।
भ्राता वै राक्षसेन्द्रस्य चतुर्भिः सचिवैः सह ॥ ४६
प्रतिजग्राह रामस्तं स्वागतेन महामनाः ।
सुग्रीवस्य तु शङ्काऽभूत्प्रणिधिः स्यादिति स्म ह ॥ ४७
राघवः सत्यचेष्टाभिः सम्यक्च चरितेङ्गितैः ।
यदा तत्त्वेन तुष्टोऽभूत्तत एनमपूजयत् ॥ ४८
सर्वराक्षसराज्ये चाप्यभ्यषिञ्चद्विभीषणम् ।
चक्रे च मन्त्रसचिवं सुहृदं लक्ष्मणस्य च ॥ ४९
विभीषणमते चैव सोऽत्यक्रामन्महार्णवम् ।
ससैन्यः सेतुना तेन मार्गेणैव नराधिपः ॥ ५०
ततो गत्वा समासाद्य लङ्कोद्यानान्यनेकशः ।
भेदयामास कपिभिर्महान्ति च बहूनि च ॥ ५१
तत्रास्तां रावणामात्यौ राक्षसौ शुकसारणौ ।
चरौ वानररूपेण तौ जग्राह विभीषणः ॥ ५२

प्लवः अलाबुघटादिमयं तरणसाधनम् । उडुपं क्षुद्रनौका ताभ्यां प्रतारस्तरणम् ॥ २९ ॥ समारप्स्यामि आराधयिष्यामि ॥ ३० ॥ मधुरं वच इदं शृण्वित्याहेति शेषेण योज्यम् ॥ ३४ ॥ आज्ञयेति च्छेदः । पूर्वरूपमार्षम् ॥ ४० ॥ प्रणिधिश्छलकृत् गुप्तचारो वा ॥ ४७ ॥ मासेनैव नराधिप इति झ. पाठः ॥ ५० ॥ चतुरशीत्यधिकद्विशततमोऽध्यायः ॥ २८४ ॥

प्रतिपन्नौ यदा रूपं राक्षसं तौ निशाचरौ ।
दर्शयित्वा ततः सैन्यं रामः पश्चादवासृजत् ॥ ५३
निवेश्योपवने सैन्यं स शूरः प्राज्यवानरम् ।
प्रेषयामास दूत्येन रावणस्य ततोऽङ्गदम् ॥ ५४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि चतुरशीत्यधिकद्विशततमोऽध्यायः ॥ २८४ ॥

## पञ्चाशीत्यधिकद्विशततमोऽध्यायः ॥ २८५ ॥

अङ्गदेन रावणाय रामसंदेशनिवेदनपूर्वकं पुना रामसमीपागमनम् ॥ १ ॥ वानरै रामाज्ञया लङ्काप्राकारादिविभेदनपूर्वकं राक्षसैः सह योधनम् ॥ २ ॥ ततो रामेण स्वसेनानामवहारः ॥ ३ ॥

मार्कण्डेय उवाच ।
प्रभूतान्नोदके तस्मिन्बहुमूलफले वने ।
सेनां निवेश्य काकुत्स्थो विधिवत्पर्यरक्षत ॥ १
रावणः संविधं चक्रे लङ्कायां शास्त्रनिर्मिताम् ।
प्रकृत्यैव दुराधर्षा दृढप्राकारतोरणा ॥ २
अगाधतोयाः परिखा मीननक्रसमाकुलाः ।
बभूवुः सप्त दुर्धर्षाः खादिरैः शङ्कुभिश्चिताः ॥ ३
कर्णाटयन्त्रा दुर्धर्षा बभूवुः सहुडोपलाः ।
साशीविषघटायोधाः ससर्जरसपांसवः ॥ ४
मुसलालातनाराचतोमरासिपरश्वधैः ।
अन्विताश्च शतघ्नीभिः समधूच्छिष्टमुद्गराः ॥ ५
पुरद्वारेषु सर्वेषु गुल्माः स्थावरजङ्गमाः ।
बभूवुः पत्तिबहुलाः प्रभूतगजवाजिनः ॥ ६
अङ्गदस्त्वथ लङ्काया द्वारदेशमुपागतः ।
विदितो राक्षसेन्द्रस्य प्रविवेश गतव्यथः ॥ ७
मध्ये राक्षसकोटीनां बह्वीनां सुमहाबलः ।
शुशुभे मेघमालाभिरादित्य इव संवृतः ॥ ८
स समासाद्य पौलस्त्यममात्यैरभिसंवृतम् ।
रामसंदेशमामन्त्र्य वाग्मी वक्तुं प्रचक्रमे ॥ ९
आह त्वां राघवो राजन्कोसलेन्द्रो महायशाः ।
प्राप्तकालमिदं वाक्यं तदादत्स्व सुदुर्मते ॥ १०
अकृतात्मानमासाद्य राजानमनये रतम् ।
विनश्यन्त्यनयाविष्टा देशाश्च नगराणि च ॥ ११
त्वयैकेनापराद्धं मे सीतामाहरता बलात् ।
वधायानपराद्धानामन्येषां तद्भविष्यति ॥ १२
ये त्वया बलदर्पाभ्यामाविष्टेन वनेचराः ।
ऋषयो हिंसिताः पूर्वं देवाश्चाप्यवमानिताः ॥ १३
राजर्षयश्च निहता रुदत्यश्चाहृताः स्त्रियः ।
तदिदं समनुप्राप्तं फलं तस्यानयस्य ते ॥ १४
हन्तास्मि त्वां सहामात्यैर्युध्यस्व पुरुषो भव ।
पश्य मे धनुषो वीर्यं मानुषस्य निशाचर ॥ १५
मुच्यतां जानकी सीता न मे मोक्ष्यसि कर्हिचित् ।
अराक्षसमिमं लोकं कर्तास्मि निशितैः शरैः ॥ १६
इति तस्य ब्रुवाणस्य दूतस्य परुषं वचः ।
श्रुत्वा न ममृषे राजा रावणः क्रोधमूर्च्छितः ॥ १७
इङ्गितज्ञास्ततो भर्तुश्चत्वारो रजनीचराः ।
चतुर्ष्वङ्गेषु जगृहुः शार्दूलमिव पक्षिणः ॥ १८
तांस्तथाङ्गेषु संसक्तानङ्गदो रजनीचरान् ।
आदायैव खमुत्पत्य प्रासादतलमाविशत् ॥ १९
वेगेनोत्पततस्तस्य पेतुस्ते रजनीचराः ।
भुवि संभिन्नहृदयाः प्रहारवरपीडिताः ॥ २०
संसक्तो हर्म्यशिखरात्तस्मात्पुनरवापतत् ।
लङ्घयित्वा पुरीं लङ्कां सुवेलस्य समीपतः ॥ २१
कोसलेन्द्रमथागम्य सर्वमावेद्य वानरः ।
विशश्राम स तेजस्वी राघवेणाभिनन्दितः ॥ २२
ततः सर्वाभिसारेण हरीणां वातरंहसाम् ।

संविधं सम्यग्विध्यन्त्यनया तां यात्रादिसंपत्तिम् ॥ २ ॥ सहुडाः सोपलाश्च । हुडं मूत्राद्युत्सर्जनार्थं शङ्गम् । उपलाः प्रक्षेप्या गोलकाः । कपाटयन्त्रदुर्धर्षा इति झ. पाठः ॥ ४ ॥ समधूच्छिष्टमुद्गराः मधूच्छिष्टं क्षौद्रं मधु ॥ ५ ॥ गुल्माः गुप्तोपवेशनस्थानानि ॥६॥ गतव्यथो निर्भयः ॥ ७ ॥ आमन्त्र्य हेरावण इति संबोध्य ॥ ९ ॥ तदादत्स्व कुरुष्व चेति झ. पाठः ॥ १० ॥ सर्वाभिसारः युगपत्सर्वेषामभिसारो यत्नस्तेन ॥२३॥

भेदयामास लङ्कायाः प्राकारं रघुनन्दनः ॥ २३
विभीषणर्क्षाधिपती पुरस्कृत्याथ लक्ष्मणः ।
दक्षिणं नगरद्वारमवामृद्गद्दुरासदम् ॥ २४
करभारुणगात्राणां हरीणां युद्धशालिनाम् ।
कोटीशतसहस्रेण लङ्कामभ्यपतत्तदा ॥ २५
प्रलम्बबाहूरुकरजङ्घान्तरविलम्बिनाम् ।
ऋक्षाणां धूम्रवर्णानां तिस्रः कोट्यो व्यवस्थिताः ॥
उत्पतद्भिः पतद्भिश्च निपतद्भिश्च वानरैः ।
नादृश्यत तदा सूर्यो रजसा नाशितप्रभः ॥ २७
शालिप्रसूनसदृशैः शिरीषकुसुमप्रभैः ।
तरुणादित्यसदृशैः शणगौरैश्च वानरैः ॥ २८
प्राकारं ददृशुस्ते तु समन्तात्कपिलीकृतम् ।
राक्षसा विस्मिता राजन्सस्त्रीवृद्धाः समन्ततः ॥ २९
बिभिदुस्ते मणिस्तम्भान्कर्णाट्टशिखराणि च ।
भग्नोन्मथितशृङ्गाणि यन्त्राणि च विचिक्षिपुः ॥ ३०
परिगृह्य शतघ्नीश्च सचक्राः सगुडोपलाः ।
चिक्षिपुर्भुजवेगेन लङ्कामध्ये महास्वनाः ॥ ३१
प्राकारस्थाश्च ये केचिन्निशाचरगणास्तथा ।
प्रदुद्रुवुस्ते शतशः कपिभिः समभिद्रुताः ॥ ३२
ततस्तु राजवचनाद्राक्षसाः कामरूपिणः ।
निर्ययुर्विकृताकाराः सहस्रशतसङ्घशः ॥ ३३
शस्त्रवर्षाणि वर्षन्तो द्रावयित्वा वनौकसः ।
प्राकारं शोभयन्तस्ते परं विस्मयमास्थिताः ॥ ३४
स माषराशिसदृशैर्बभूव क्षणदाचरैः ।
कृतो निर्वानरो भूयः प्राकारो भीमदर्शनैः ॥३५
पेतुः शूलविभिन्नाङ्गा बहवो वानरर्षभाः ।
स्तम्भतोरणभग्नाश्च पेतुस्तत्र निशाचराः ॥ ३६
केशाकेश्यभवद्युद्धं रक्षसां वानरैः सह ।
नखैर्दन्तैश्च वीराणां खादतां वै परस्परम् ॥ ३७
निष्टनन्तो ह्युभयतस्तत्र वानरराक्षसाः ।
हता निपतिता भूमौ न मुञ्चन्ति परस्परम्॥ ३८
रामस्तु शरजालानि ववर्ष जलदो यथा ।
तानि लङ्कां समासाद्य जघ्नुस्तान्रजनीचरान् ॥३९
सौमित्रिरपि नाराचैर्दृढधन्वा जितक्लमः ।
आदिश्यादिश्य दुर्गस्थान्पातयामास राक्षसान् ॥
ततः प्रत्यवहारोऽभूत्सैन्यानां राघवाज्ञया ।
कृते विमर्दे लङ्कायां लब्धलक्ष्यो जयोत्तरः ॥४१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि पञ्चाशीत्यधिकद्विशततमोऽध्यायः ॥ २८५ ॥

---

## षडशीत्यधिकद्विशततमोऽध्यायः ॥ २८६ ॥

रामलक्ष्मणादीनां रावणेन्द्रजिदादिभिः सह द्वन्द्वयुद्धम् ॥ १ ॥

मार्कण्डेय उवाच ।
ततो निविशमानांस्तान्सैनिकान्रावणानुगाः ।
अभिजग्मुर्गणाऽनेके पिशाचक्षुद्ररक्षसाम् ॥ १
पर्वणः पतनो जम्भः खरः क्रोधवशो हरिः ।
प्ररुजश्चारुजश्चैव प्रघसश्चैवमादयः ॥ २
ततोऽभिपततां तेषामदृश्यानां दुरात्मनाम् ।
अन्तर्धानवधं तज्ज्ञश्चकार स विभीषणः ॥ ३
ते दृश्यमाना हरिभिर्बलिभिर्दूरपातिभिः ।
निहताः सर्वशो राजन्महीं जग्मुर्गतासवः ॥ ४
अमृष्यमाणः सबलो रावणो निर्ययावथ ।

---

ऋक्षाधिपतिर्जाम्बवान् ॥ २४ ॥ करभो मणिबन्धादिकनिष्ठान्तं हस्तप्रदेशस्तद्वदरुणाः ॥ २५ ॥ शणो गोणीसूत्रोपादानवीरुत् ॥ २८ ॥ कर्णस्तिर्यग्यानं तेन प्रकारेण यत्पाषाणादिविस्तरेण क्रियते तत्तद्गृहविशेषं कर्णाट्टमिति वदन्ति ॥ ३० ॥ स्तम्भतः स्तम्भैर्वानरोपात्तैः । रणे भग्ना रणभग्नाः ॥ ३६ ॥ केशाकेशि अन्योन्यं केशेषु गृहीत्वा प्रवृत्तम् ॥ ३७ ॥ निष्टनन्तः शब्दं-कुर्वन्तः ॥ ३८ ॥ आदिश्य संमुखीकृत्येत्यर्थः ॥ ४० ॥ प्रत्यवहारः शिबिरंप्रति गमनम् । लब्धा आयुधैः प्राप्ता लक्ष्या वेध्या यस्मिन्नवन्ध्यप्रहार इतियावत् । जयोत्तरो जयोत्कर्षवान् ॥ ४१ ॥ पञ्चाशीत्यधिकद्विशततमोऽध्यायः ॥ २८५ ॥

गणा अनेके इति च्छेदः ॥ १ ॥ अन्तर्धानवधमन्तर्धानशक्तेर्नाशम् ॥ ३ ॥

राक्षसानां बलैर्घोरैः पिशाचानां च संवृतः ॥ ५
युद्धशास्त्रविधानज्ञ उशना इव चापरः ।
व्यूह्य चौशनसं व्यूहं हरीनभ्यवहारयत् ॥ ६
राघवस्तु विनिर्यान्तं व्यूढानीकं दशाननम् ।
बार्हस्पत्यं विधिं कृत्वा प्रतिव्यूह्य ह्यदृश्यत ॥ ७
समेत्य युयुधे तत्र ततो रामेण रावणः ।
युयुधे लक्ष्मणश्चापि तथैवेन्द्रजिता सह ॥ ८
विरूपाक्षेण सुग्रीवस्तारेण च निखर्वटः ।
पौण्ड्रेण च नलस्तत्र पटुशः पनसेन च ॥ ९
विषह्यं यं हि यो मेने स स तेन समेयिवान् ।
युयुधे युद्धवेलायां स्वबाहुबलमाश्रितः ॥ १०
स संप्रहारो ववृधे भीरूणां भयवर्धनः ।
रोमसंहर्षणो घोरः पुरा देवासुरे यथा ॥ ११
रावणो राममानर्च्छच्छक्तिशूलासिवृष्टिभिः ।
निशितैरायसैस्तीक्ष्णै रावणं चापि राघवः ॥ १२
तथैवेन्द्रजितं यत्तं लक्ष्मणो मर्मभेदिभिः ।
इन्द्रजिच्चापि सौमित्रिं बिभेद बहुभिः शरैः ॥ १३
विभीषणः प्रहस्तं च प्रहस्तश्च विभीषणम् ।
खगपत्रैः शरैस्तीक्ष्णैरभ्यवर्षद्गतव्यथः ॥ १४
तेषां बलवतामासीन्महास्त्राणां समागमः ।
विव्यथुः सकला येन त्रयो लोकाश्चराचराः ॥ १५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि रामोख्यानपर्वणि षडशीत्यधिकद्विशततमोऽध्यायः ॥ २८६ ॥

## सप्ताशीत्यधिकद्विशततमोऽध्यायः ॥ २८७ ॥

**विभीषणहनुमद्भ्यां प्रहस्तधूम्राक्षवधश्रवणनिर्विण्णेन रावणेन युद्धाय कुम्भकर्णप्रेषणम् ॥ १ ॥**

मार्कण्डेय उवाच ।
ततः प्रहस्तः सहसा समभ्येत्य विभीषणम् ।
गदया ताडयामास विनद्य रणकर्कशम् ॥ १
स तयाऽभिहतो धीमान्गदया भीमवेगया ।
नाकम्पत महाबाहुर्हिमवानिव सुस्थिरः ॥ २
ततः प्रगृह्य विपुलां शतघण्टां विभीषणः ।
अनुमन्त्र्य महाशक्तिं चिक्षेपास्य शिरः प्रति ॥ ३
पतन्त्या स तया वेगाद्राक्षसोऽशनिवेगया ।
हृतोत्तमाङ्गो ददृशे वातरुग्ण इव द्रुमः ॥ ४
तं दृष्ट्वा निहतं सङ्ख्ये प्रहस्तं क्षणदाचरम् ।
अभिदुद्राव धूम्राक्षो वेगेन महता कपीन् ॥ ५
तस्य मेघोपमं सैन्यमापतद्भीमदर्शनम् ।
दृष्ट्वैव सहसा दीर्णा रणे वानरपुङ्गवाः ॥ ६
ततस्तान्सहसा दीर्णान्दृष्ट्वा वानरपुङ्गवान् ।
निर्ययौ कपिशार्दूलो हनूमान्मारुतात्मजः ॥ ७
तं दृष्ट्वाऽवस्थितं सङ्ख्ये हरयः पवनात्मजम् ।
महत्या त्वरया राजन्संन्यवर्तन्त सर्वशः ॥ ८
ततः शब्दो महनासीत्तुमुलो रोमहर्षणः ।
रामरावणसैन्यानामन्योन्यमभिधावताम् ॥ ९
तस्मिन्प्रवृत्ते संग्रामे घोरे रुधिरकर्दमे ।
धूम्राक्षः कपिसैन्यं तद्द्रावयामास पत्रिभिः ॥१०
तं स रक्षोमहामात्रमापतन्तं सपत्नजित् ।
प्रतिजग्राह हनुमांस्तरसा पवनात्मजः ॥ ११
तयोर्युद्धमभूद्धोरं हरिराक्षसवीरयोः ।
जिगीषतोर्युधाऽन्योन्यमिन्द्रप्रह्लादयोरिव ॥ १२
गदाभिः परिघैश्चैव राक्षसो जघ्निवान्कपिम् ।
कपिश्च जघ्निवान्रक्षः सस्कन्धविटपैर्द्रुमैः ॥ १३
ततस्तमतिकोपेन साश्वं सरथसारथिम् ।
धूम्राक्षमवधीत्क्रुद्धो हनूमान्मारुतात्मजः ॥ १४
ततस्तं निहतं दृष्ट्वा धूम्राक्षं राक्षसोत्तमम् ।
हरयो जातविस्रम्भा जघ्नुरन्ये च सैनिकान् ॥१५
ते वध्यमाना हरिभिर्बलिभिर्जितकाशिभिः ।
राक्षसा भग्नसंकल्पा लङ्कामभ्यपतन्भयात् ॥ १६
तेऽभिपत्य पुरं भग्ना हतशेषा निशाचराः ।

हरीन् वानरान् । अभ्यवहारयदावेष्टितवान् ॥ ६ ॥ आनर्च्छ- दपीडयत् ॥ १२ ॥ षडशीत्यधिकद्विशततमोऽध्यायः ॥२८६॥

रक्षोमहामात्रं रक्षःश्रेष्ठम् ॥ ११ ॥

सर्वं राज्ञे यथावृत्तं रावणाय न्यवेदयन् ॥ १७
श्रुत्वा तु रावणस्तेभ्यः प्रहस्तं निहतं युधि ।
धूम्राक्षं च महेष्वासं ससैन्यं सहराक्षसैः ॥ १८
सुदीर्घमिव निःश्वस्य समुत्पत्य वरासनात् ।
उवाच कुम्भकर्णस्य कर्मकालोऽयमागतः ॥ १९
इत्येवमुक्त्वा विविधैर्वादित्रैः सुमहास्वनैः ।
शयानमतिनिद्रालुं कुम्भकर्णमबोधयत् ॥ २०
प्रबोध्य महता चैनं यत्नेनाऽऽगतसाध्वसः ।
स्वस्थमासीनमव्यग्रं विनिद्रं राक्षसाधिपः ।
ततोऽब्रवीद्दशग्रीवः कुम्भकर्णं महाबलम् ॥ २१
धन्योसि यस्य ते निद्रा कुम्भकर्णेयमीदृशी ।
य इदं दारुणं कालं न जानीषे महाभयम् ॥२२
एष तीर्त्वाऽर्णवं रामः सेतुना हरिभिः सह ।
अवमत्येह नः सर्वान्करोति कदनं महत् ॥ २३
मया त्वपहृता भार्या सीता नामास्य जानकी ।
तां नेतुं स इहायातो बद्ध्वा सेतुं महार्णवे ॥ २४
तेन चैव प्रहस्तादिर्महान्नः स्वजनो हतः ।
तस्य नान्यो निहन्ताऽस्ति त्वामृते शत्रुकर्शन ॥२५
स दंशितोऽभिनिर्याहि त्वमद्य बलिनांवर ।
रामादीन्समरे सर्वाञ्जहि शत्रूनरिंदम ॥ २६
दूषणावरजौ चैव वज्रवेगप्रमाथिनौ ।
तौ त्वां बलेन महता सहितावनुयास्यतः ॥ २७
इत्युक्त्वा राक्षसपतिः कुम्भकर्णं तरस्विनम् ।
संदिदेशेतिकर्तव्ये वज्रवेगप्रमाथिनौ ॥ २८
तथेत्युक्त्वा तु तौ वीरौ रावणं दूषणानुजौ ।
कुम्भकर्णं पुरस्कृत्य तूर्णं निर्ययतुः पुरात् ॥ २९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि सप्ताशीत्यधिकद्विशततमोऽध्यायः ॥ २८७ ॥

---

## अष्टाशीत्यधिकद्विशततमोऽध्यायः ॥ २८८ ॥

लक्ष्मणेन कुम्भकर्णवधः ॥ १ ॥ हनुमन्नीलाभ्यां वज्रवेगप्रमाथिनोर्वधः ॥ २ ॥

मार्कण्डेय उवाच ।
ततो निर्याय स्वपुरात्कुम्भकर्णः सहानुगः ।
अपश्यत्कपिसैन्यं तज्जितकाश्यग्रतः स्थितम् ॥ १
स वीक्षमाणस्तत्सैन्यं रामदर्शनकाङ्क्षया ।
अपश्यच्चापि सौमित्रिं धनुष्पाणिं व्यवस्थितम् २
तमभ्येत्याशु हरयः परिवव्रुः समन्ततः ।
'शैलवृक्षायुधा नादानमुञ्चन्भीषणास्ततः ॥' ३
अभ्यघ्नंश्च महाकायैर्बहुभिर्जगतीरुहैः ।
करजैरतुदंश्चान्ये विहाय भयमुत्तमम् ॥ ४
बहुधा युध्यमानास्ते युद्धमार्गैः प्लवंगमाः ।
नानाप्रहरणैर्भीमै राक्षसेन्द्रमताडयन् ॥ ५
स ताड्यमानः प्रहसन्भक्षयामास वानरान् ।
बलं चण्डबलाख्यं च वज्रबाहुं च वानरम् ॥ ६
तद्दृष्ट्वा व्यथनं कर्म कुम्भकर्णस्य रक्षसः ।
उदक्रोशन्परित्रस्तास्तारप्रभृतयस्तदा ॥ ७
तानुच्चैः क्रोशतः सैन्याञ्श्रुत्वा स हरियूथपान् ।
अभिदुद्राव सुग्रीवः कुम्भकर्णमपेतभीः ॥ ८
ततो निपत्य वेगेन कुम्भकर्णं महामनाः ।
सालेन जघ्निवान्मूर्ध्नि बलेन कपिकुञ्जरः ॥ ९
स महात्मा महावेगः कुम्भकर्णस्य मूर्धनि ।
बिभेद सालं सुग्रीवो न चैवाव्यथयत्कपिः ॥१०
ततो विनद्य सहसा सालस्पर्शविबोधितः ।
दोर्भ्यामादाय सुग्रीवं कुम्भकर्णोऽहरद्बलात् ॥११
ह्रियमाणं तु सुग्रीवं कुम्भकर्णेन रक्षसा ।
अवेक्ष्याभ्यद्रवद्वीरः सौमित्रिर्मित्रनन्दनः ॥ १२
सोऽभिपत्य महावेगं रुक्मपुङ्खं महाशरम् ।
प्राहिणोत्कुम्भकर्णाय लक्ष्मणः परवीरहा ॥ १३
स तस्य देहावरणं भित्त्वा देहं च सायकः ।

---

आगतसाध्वसः जातभयः ॥ २१ ॥ सप्ताशीत्यधिकद्विशतत-मोऽध्यायः ॥ २८७ ॥

जितकाशि दृढमुष्टि । काशिर्मुष्टिः प्रकाशनादिति यास्कः ॥ १ ॥

जगाम दारयन्भूमिं रुधिरेण समुक्षितः ॥ १४
तथा स भिन्नहृदयः समुत्सृज्य कपीश्वरम् ।
'वेगेन महताऽऽविष्टस्तिष्ठतिष्ठेति चाब्रवीत् ॥ १५
कुम्भकर्णो महेष्वासः प्रगृहीतशिलायुधः ।
अभिदुद्राव सौमित्रिमुद्यम्य महतीं शिलाम् ॥ १६
तस्याभिपततस्तूर्णं क्षुराभ्यामुच्छ्रितौ करौ ।
चिच्छेद निशिताग्राभ्यां स बभूव चतुर्भुजः ॥ १७
तानप्यस्य भुजान्सर्वान्प्रगृहीतशिलायुधान् ।
क्षुरैश्चिच्छेद लघ्वस्त्रं सौमित्रिः प्रतिदर्शयन् ॥ १८
स बभूवातिकायश्च बहुपादशिरोभुजः ।
तं ब्रह्मास्त्रेण सौमित्रिर्ददाराद्रिचयोपमम् ॥ १९
स पपात महावीर्यो दिव्यास्त्राभिहतो रणे ।
महाशनिविनिर्दग्धः पादपोऽङ्कुरवानिव ॥ २०
तं दृष्ट्वा वृत्रसंकाशं कुम्भकर्णं तरस्विनम् ।
गतासुं पतितं भूमौ राक्षसाः प्राद्रवन्भयात् ॥ २१
तथा तान्द्रवतो योधान्दृष्ट्वा तौ दूषणानुजौ ।
अवस्थाप्याथ सौमित्रिं संक्रुद्धावभ्यधावताम् ॥२२
तावाद्रवन्तौ संक्रुद्धौ वज्रवेगप्रमाथिनौ ।
अभिजग्राह सौमित्रिर्विनद्योभौ पतत्रिभिः ॥ २३
ततः सुतुमुलं युद्धमभवद्रोमहर्षणम् ।
दूषणानुजयोः पार्थ लक्ष्मणस्य च धीमतः ॥ २४
महता शरवर्षेण राक्षसौ सोऽभ्यवर्षत ।
तं चापि वीरौ संक्रुद्धावुभौ तौ समवर्षताम् ॥ २५
मुहूर्तमेवमभवद्वज्रवेगप्रमाथिनोः ।
सौमित्रेश्च महाबाहोः संप्रहारः सुदारुणः ॥ २६
अथाद्रिशृङ्गमादाय हनुमान्मारुतात्मजः ।
अभिद्रुत्याददे प्राणान्वज्रवेगस्य रक्षसः ॥ २७
नीलश्च महता ग्राव्णा दूषणावरजं हरिः ।
प्रमाथिनमभिद्रुत्य प्रममाथ महाबलः ॥ २८
ततः प्रावर्तत पुनः संग्रामः कटुकोदयः ।
रामरावणसैन्यानामन्योन्यमभिधावताम् ॥ २९
शतशो नैर्ऋतान्वन्या जघ्नुर्वन्यांश्च नैर्ऋताः ।
नैर्ऋतास्तत्र वध्यन्ते प्रायेण न तु वानराः ॥३०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि अष्टाशीत्यधिकद्विशततमोऽध्यायः ॥ २८८ ॥

---

## एकोननवत्यधिकद्विशततमोऽध्यायः ॥ २८९ ॥

लक्ष्मणेन्द्रजितोर्युद्धम् ॥ १ ॥ अङ्गदेनेन्द्रजिद्रथभङ्गे मायया तस्यान्तर्धाने च रामेणापि तत्रागमनम् ॥ २ ॥

मार्कण्डेय उवाच ।
ततः श्रुत्वा हतं सङ्ख्ये कुम्भकर्णं सहानुगम् ।
प्रहस्तं च महेष्वासं धूम्राक्षं चातितेजसम् ॥ १
पुत्रमिन्द्रजितं वीरं रावणः प्रत्यभाषत ।
जहि राममित्रघ्न सुग्रीवं च सलक्ष्मणम् ॥ २
त्वया हि मम सत्पुत्र यशो दीप्तमुपार्जितम् ।
जित्वा वज्रधरं सङ्ख्ये सहस्राक्षं शचीपतिम् ॥ ३
अन्तर्हितः प्रकाशो वा दिव्यैर्दत्तवरैः शरैः ।
जहि शत्रूनमित्रघ्न मम शस्त्रभृतांवर ॥ ४
रामलक्ष्मणसुग्रीवाः शरस्पर्शं न तेऽनघ ।
समर्थाः प्रतिसोढुं च कुतस्तदनुयायिनः ॥ ५
अगता या प्रहस्तेन कुम्भकर्णेन चानघ ।
खरस्यापचितिः सङ्ख्ये तां गच्छ त्वं महाभुज ॥६
त्वमद्य निशितैर्बाणैर्हत्वा शत्रून्ससैनिकान् ।
प्रतिनन्दय मां पुत्र पुरा जित्वेव वासवम् ॥ ७
इत्युक्तः स तथेत्युक्त्वा रथमास्थाय दंशितः ।
प्रययाविन्द्रजिद्राजंस्तूर्णमायोधनं प्रति ॥ ८
ततो विश्राव्य विस्पष्टं नाम राक्षसपुङ्गवः ।
आह्वयामास समरे लक्ष्मणं शुभलक्षणम् ॥ ९
तं लक्ष्मणोऽभ्यधावच्च प्रगृह्य सशरं धनुः ।
त्रासयंस्तलघोषेण सिंहः क्षुद्रमृगं यथा ॥ १०
तयोः समभवद्युद्धं सुमहज्जयगृद्धिनोः ।

वन्या वनेचरा वानराः ॥ ३० ॥

दिव्यास्त्रविदुषोस्तीव्रमन्योन्यस्पर्धिनोस्तदा ॥ ११
रावणिस्तु यदा नैनं विशेषयति सायकैः ।
ततो गुरुतरं यत्नमातिष्ठद्बलिनां वरः ॥ १२
तत एवं महावेगैरर्दयामास तोमरैः ।
तानागतान्स चिच्छेद सौमित्रिर्निशितैः शरैः॥ १३
ते निकृत्ताः शरैस्तीक्ष्णैर्न्यपतन्धरणीतले ।
'साधका रावणेराजौ शतशः शकलीकृताः ॥ १४
तमङ्गदो वालिसुतः श्रीमानुद्यम्य पादपम् ।
अभिद्रुत्य महावेगस्ताडयामास मूर्धनि ॥ १५
तस्येन्द्रजिदसंभ्रान्तः प्रासेनोरसि वीर्यवान् ।
प्रहर्तुमैच्छत्तं चास्य प्रासं चिच्छेद लक्ष्मणः ॥ १६
तमभ्याशगतं वीरमङ्गदं रावणात्मजः ।
गदयाऽताडयत्सव्ये पार्श्वे वानरपुङ्गवम् ॥ १७
तमचिन्त्य प्रहारं स बलवान्वालिनः सुतः ।
ससर्जेन्द्रजितः क्रोधात्सालस्कन्धं तथाङ्गदः॥ १८
सोऽङ्गदेन रुषोत्सृष्टो वधायेन्द्रजितस्तरुः ।
जघानेन्द्रजितः पार्थ रथं साश्वं ससारथिम् ॥ १९
ततो हताश्वात्प्रस्कन्द्य रथात्स हतसारथिः ।
तत्रैवान्तर्दधे राजन्मायया रावणात्मजः ॥ २०
अन्तर्हितं विदित्वा तं बहुमायं च राक्षसम् ।
रामस्तं देशमागम्य तत्सैन्यं पर्यरक्षत ॥ २१
स राममुद्दिश्य शरैस्ततो दत्तवरैस्तदा ।
विव्याध सर्वगात्रेषु लक्ष्मणं च महाबलम् ॥ २२
तमदृश्यं शरैः शूरौ माययाऽन्तर्हितं तदा ।
योधयामासतुरुभौ रावणिं रामलक्ष्मणौ ॥ २३
स रुषा सर्वगात्रेषु तयोः पुरुषसिंहयोः ।
व्यसृजत्सायकान्भूयः शतशोऽथ सहस्रशः ॥ २४
तमदृश्यं विचिन्वन्तः सृजन्तमनिशं शरान् ।
हरयो विविशुर्व्योम प्रगृह्य महतीः शिलाः ॥ २५
तांश्च तौ चाप्यदृश्यः स शरैर्विव्याध राक्षसः ।
स भृशं ताडयामास रावणिर्मायया वृतः ॥ २६
तौ शरैरर्दितौ वीरौ भ्रातरौ रामलक्ष्मणौ ।
पेततुर्गगनाद्भूमिं सूर्याचन्द्रमसाविव ॥ २७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि एकोननवत्यधिकद्विशततमोऽध्यायः ॥ २८९ ॥

---

## नवत्यधिकद्विशततमोऽध्यायः ॥ २९० ॥

इन्द्रजिच्छरजालबन्धेन मोहाधिगमपूर्वकं भूमौ पतितयो रामलक्ष्मणयोर्विभीषणेन प्रज्ञानास्त्रेण मोहापनोदनम् ॥ १ ॥ तथा सुग्रीवेण महौषध्या तयोर्विशल्यीकरणम् ॥ २ ॥ ततो रामादीनां नेत्रेषु कुबेरदूतानीतजलमार्जनेनातीन्द्रियवस्तुदर्शनशक्त्युदयः ॥ ३ ॥ ततः पुनरुपागतस्येन्द्रजितो लक्ष्मणेन वधः ॥ ४ ॥ ततः पुत्रवधामर्षेण सीतावधोद्यतस्य रावणस्याविन्ध्याख्येन वृद्धामात्येन साम्ना ततो विनिवर्तनम् ॥ ५ ॥

मार्कण्डेय उवाच ।
तावुभौ पतितौ दृष्ट्वा भ्रातरौ रामलक्ष्मणौ ।
बबन्ध रावणिर्भूयः शरैर्दत्तवरैस्तदा ॥ १
तौ वीरौ शरजालेन बद्धाविन्द्रजिता रणे ।
रेजतुः पुरुषव्याघ्रौ शकुन्ताविव पञ्जरे ॥ २
दृष्ट्वा निपतितौ भूमौ सर्वाङ्गेषु शराचितौ ।
सुग्रीवः कपिभिः सार्धं परिवार्योपतस्थिवान् ॥ ३
सुषेणमैन्दद्विविदैः कुमुदेनाङ्गदेन च ।
हनुमन्नीलतारैश्च नलेन च कपीश्वरः ॥ ४
ततस्तं देशमागम्य कृतकर्मा विभीषणः ।
बोधयामास तौ वीरौ प्रज्ञास्त्रेण प्रमोहितौ ॥ ५
विशल्यौ चापि सुग्रीवः क्षणेनैतौ चकार ह ।
विशल्यया महौषध्या दिव्यमन्त्रप्रयुक्तया ॥ ६
तौ लब्धसंज्ञौ नृवरौ विशल्यावुदतिष्ठताम् ।
उभौ गतक्लमौ चास्तां क्षणेनैतौ महारथौ ॥ ७
ततो विभीषणः पार्थ राममिक्ष्वाकुनन्दनम् ।

---

ससर्ज उत्सृष्टवान् । सालस्कन्धं महास्कन्धं तरुम् ॥ १८॥ तान् हरीन् । तौ च रामलक्ष्मणौ ॥ २६ ॥

एकोननवत्यधिकद्विशततमोऽध्यायः ॥ २८९ ॥

उवाच विज्वरं दृष्ट्वा कृताञ्जलिरिदं वचः ॥ ८
अयमम्भो गृहीत्वा तु राजराजस्य शासनात् ।
गुह्यकोऽभ्यागतः श्वेतात्त्वत्सकाशमरिंदम ॥ ९
इदमम्भः कुबेरस्ते महाराज प्रयच्छति ।
अन्तर्हितानां भूतानां दर्शनार्थं परंतप ॥ १०
अनेन मृष्टनयनो भूतान्यन्तर्हितान्युत ।
भवान्द्रक्ष्यति यस्मै च भवानेतत्प्रदास्यति ॥ ११
तथेति रामस्तद्वारि प्रतिगृह्याभिसंस्कृतम् ।
चकार नेत्रयोः शौचं लक्ष्मणश्च महामनाः ॥ १२
सुग्रीवजाम्बवन्तौ च हनुमानङ्गदस्तथा ।
मैन्दद्विविदनीलाश्च प्रायः प्लवगसत्तमाः ॥ १३
तथा समभवच्चापि यदुवाच विभीषणः ।
क्षणेनातीन्द्रियाण्येषां चक्षूंष्यासन्युधिष्ठिर ॥ १४
इन्द्रजित्कृतकर्मा तु पित्रे कर्म तदाऽऽत्मनः ।
निवेद्य पुनरागच्छत्त्वरयाऽऽजिशिरःप्रति ॥ १५
तमागतं तु संक्रुद्धं पुनरेव युयुत्सया ।
अभिदुद्राव सौमित्रिर्विभीषणमते स्थितः ॥ १६
अकृताह्निकमेवैनं जिघांसुर्जितकाशिनम् ।
शरैर्जघान संक्रुद्धः कृतसंज्ञोऽथ लक्ष्मणः ॥ १७
तयोः समभवद्युद्धं तदाऽन्योन्यं जिगीषतोः ।
अतीव चित्रमाश्चर्यं शक्रप्रह्लादयोरिव ॥ १८
अविध्यदिन्द्रजित्तीक्ष्णैः सौमित्रिं मर्मभेदिभिः ।
सौमित्रिश्चानलस्पर्शैरविध्यद्रावणिं शरैः ॥ १९
सौमित्रिशरसंस्पर्शाद्रावणिः क्रोधमूर्च्छितः ।
असृजल्लक्ष्मणायाष्टौ शरानाशीविषोपमान् ॥ २०
तस्येषून्पावकस्पर्शैः सौमित्रिः पत्रिभिस्त्रिभिः ।
'वारयामास नाराचैः सौमित्रिर्मित्रनन्दनः ॥ २१
असृजल्लक्ष्मणश्चाष्टौ राक्षसाय शरान्पुनः ।'
तथा तं न्यहनद्वीरस्तन्मे निगदतः शृणु ॥ २२
एकेनास्य धनुष्मन्तं बाहुं देहादपातयत् ।
द्वितीयेन तु बाणेन भुजमन्यमपातयत् ॥ २३
तृतीयेन तु बाणेन शितधारेण भास्वता ।
जहार सुनसं चापि शिरो ज्वलितकुण्डलम् ॥ २४
विनिकृत्तभुजस्कन्धः कबन्धाकृतिदर्शनः ।
'पपात वसुधायां तु छिन्नमूल इव द्रुमः ॥' २५
तं हत्वा सूतमप्यस्त्रैर्जघान बलिनांवरः ।
लङ्कां प्रवेशयामासुस्तं रथं वाजिनस्तदा ॥ २६
ददर्श रावणस्तं च रथं पुत्रविनाकृतम् ।
स पुत्रं निहतं श्रुत्वा त्रासात्संभ्रान्तमानसः ।
रावणः शोकमोहार्तो वैदेहीं हन्तुमुद्यतः ॥ २७
अशोकवनिकास्थां तां रामदर्शनलालसाम् ।
खड्गमादाय दुष्टात्मा जवेनाभिपपात ह ॥ २८
तं दृष्ट्वा तस्य दुर्बुद्धेरविन्ध्यः पापनिश्चयम् ।
शमयामास संक्रुद्धं श्रूयतां येन हेतुना ॥ २९
महाराज्ये स्थितो दीप्ते न स्त्रियं हन्तुमर्हसि ।
हतैवैषा यदा स्त्री च बन्धनस्था च ते वशे ॥ ३०
न चैषा देहभेदेन हता स्यादिति मे मतिः ।
जहि भर्तारमेवास्या हते तस्मिन्हता भवेत् ॥ ३१
न हि ते विक्रमे तुल्यः साक्षादपि शतक्रतुः ।
असकृद्धि त्वया सेन्द्रास्त्रासितास्त्रिदशा युधि ॥ ३२
एवं बहुविधैर्वाक्यैरविन्ध्यो रावणं तदा ।
क्रुद्धं संशमयामास जगृहे च स तद्वचः ॥ ३३
निर्याणे स मतिं कृत्वा नियन्तारं क्षपाचरः ।
आज्ञापयामास तदा रथो मे कल्प्यतामिति ॥ ३४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि नवत्यधिकद्विशततमोऽध्यायः ॥ २९० ॥

---

अतीन्द्रियाण्यतीन्द्रियार्थग्राहकाणि ॥ १४ ॥ कृतसंज्ञः विभीषणेन संकेतितः ॥ १७ ॥ निधायासिं क्षपाचर इति झ. पाठः । निधाय बद्ध्वा । असिं खड्गम् ॥ ३४ ॥ नवत्यधिकद्विशततमोऽध्यायः ॥ २९० ॥

## एकनवत्यधिकद्विशततमोऽध्यायः ॥ २९१ ॥

इन्द्रजिद्वधक्रोधाद्रावणेन स्वयमेव युद्धाय रामंप्रत्यभियानम् ॥ १ ॥ तदा इन्द्रेण रामाय मातलिसनाथस्य निजरथस्य प्रेषणम् ॥ २ ॥ श्रीरामेण मायायोधिनो रावणस्य ब्रह्मास्त्रेण हननम् ॥ ३ ॥

मार्कण्डेय उवाच ।
ततः क्रुद्धो दशग्रीवः प्रिये पुत्रे निपातिते ।
निर्ययौ रथमास्थाय हेमरत्नविभूषितम् ॥ १
संवृतो राक्षसैर्घोरैर्विविधायुधपाणिभिः ।
अभिदुद्राव रामं स पोथयन्हरियूथपान् ॥ २
तमाद्रवन्तं संक्रुद्धं मैन्दनीलनलाङ्गदाः ।
हनूमाञ्जाम्बवांश्चैव ससैन्याः पर्यवारयन् ॥ ३
ते दशग्रीवसैन्यं तदृक्षवानरपुङ्गवाः ।
द्रुमैर्विध्वंसयांचक्रुर्दशग्रीवस्य पश्यतः ॥ ४
ततः स्वसैन्यमालोक्य वध्यमानमरातिभिः ।
मायावी चासृजन्मायां रावणो राक्षसाधिपः ॥ ५
तस्य देहविनिष्क्रान्ताः शतशोऽथ सहस्रशः ।
राक्षसाः प्रत्यदृश्यन्त शरशक्त्यृष्टिपाणयः ॥ ६
तान्रामो जघ्निवान्सर्वान्दिव्येनास्त्रेण राक्षसान् ।
अथ भूयोपि मायां स व्यदधाद्राक्षसाधिपः ॥ ७
कृत्वा रामस्य रूपाणि लक्ष्मणस्य च भारत ।
अभिदुद्राव रामं च लक्ष्मणं च दशाननः ॥ ८
ततस्ते राममर्च्छन्तो लक्ष्मणं च क्षपाचराः ।
अभिपेतुस्तदा रामं प्रगृहीतशरासनाः ॥ ९
तां दृष्ट्वा राक्षसेन्द्रस्य मायामिक्ष्वाकुनन्दनः ।
उवाच रामः सौमित्रिमसंभ्रान्तो बृहद्वचः ॥ १०
जहीमान्राक्षसान्पापानात्मनः प्रतिरूपकान् ।
इत्युक्त्वाऽभ्यहनद्रामो लक्ष्मणश्चात्मरूपकान् ११
ततो हर्यश्वयुक्तेन रथेनादित्यवर्चसा ।
उपतस्थे रणे रामं मातलिः शक्रसारथिः ॥ १२
मातलिरुवाच ।
अयं हर्यश्वयुग्जैत्रो मघोनः स्यन्दनोत्तमः ।
'त्वदर्थमिह संप्राप्तः संदेशाद्वै शतक्रतोः ॥' १३
अनेन शक्रः काकुत्स्थ समरे दैत्यदानवान् ।
शतशः पुरुषव्याघ्र रथोदारेण जघ्निवान् ॥ १४
तदनेन नरव्याघ्र मया यत्तेन संयुगे ।
स्यन्दनेन जहि क्षिप्रं रावणं मा चिरं कृथाः ॥ १५
इत्युक्तो राघवस्तथ्यं वचोऽशङ्कत मातलेः ।
मायैषा राक्षसस्येति तमुवाच विभीषणः ॥ १६
नेयं माया नरव्याघ्र रावणस्य दुरात्मनः ।
तदातिष्ठ रथं शीघ्रमिममैन्द्रं महाद्युते ॥ १७
ततः प्रहृष्टः काकुत्स्थस्तथेत्युक्त्वा विभीषणम् ।
रथेनाभिपपाताथ दशग्रीवं रुषाऽन्वितः ॥ १८
हाहाकृतानि भूतानि रावणे समभिद्रुते ।
सिंहनादाः सपटहा दिवि दिव्यास्तथाऽनदन् ॥ १९
[दशकन्धरराजसून्वोस्तथा युद्धमभून्महत् ।
अलब्धोपममन्यत्र तयोरेव तथाऽभवत् ॥] २०
स रामाय महाघोरं विससर्ज निशाचरः ।
शूलमिन्द्राशनिप्रख्यं ब्रह्मदण्डमिवोद्यतम् ॥ २१
तच्छूलं सत्वरं रामश्चिच्छेद निशितैः शरैः ।
तद्दृष्ट्वा दुष्करं कर्म रावणं भयमाविशत् ॥ २२
ततः क्रुद्धः ससर्जाशु दशग्रीवः शिताञ्छरान् ।
सहस्रायुतशो रामे शस्त्राणि विविधानि च ॥ २३
ततो भुशुण्डीः शूलानि मुसलानि परश्वधान् ।
शक्तीश्च विविधाकाराः शतघ्नीश्च शितान्क्षुरान् २४
तां मायां विविधां दृष्ट्वा दशग्रीवस्य रक्षसः ।
भयात्प्रदुद्रुवुः सर्वे वानराः सर्वतोदिशम् ॥ २५
ततः सुपत्रं सुमुखं हेमपुङ्खं शरोत्तमम् ।
तूणादादाय काकुत्स्थो ब्रह्मास्त्रेण युयोज ह ॥ २६
तं प्रेक्ष्य बाणं रामेण ब्रह्मास्त्रेणानुमन्त्रितम् ।
जहृषुर्देवगन्धर्वा दृष्ट्वा शक्रपुरोगमाः ॥ २७
अल्पावशेषमायुश्च ततोऽमन्यन्त रक्षसः ।
ब्रह्मास्त्रोदीरणाच्छत्रोर्देवदानवकिंनराः ॥ २८
ततः ससर्ज तं रामः शरमप्रतिमौजसम् ।

रामस्य रूपं कृत्वा लक्ष्मणमभिदुद्राव लक्ष्मणस्य रूपं कृत्वा राममिति योजना ॥ ८ ॥

रावणान्तकरं घोरं ब्रह्मदण्डमिवोद्यतम् ॥ २९
मुक्तमात्रेण रामेण दूराकृष्टेन भारत ।
स तेन राक्षसश्रेष्ठः सरथः साश्वसारथिः ।
प्रजज्वाल महाज्वालेनाग्निनाभिपरिप्लुतः ॥ ३०
ततः प्रहृष्टास्त्रिदशाः सहगन्धर्वचारणाः ।
निहतं रावणं दृष्ट्वा रामेणाक्लिष्टकर्मणा ॥ ३१
तत्यजुस्तं महाभागं पञ्चभूतानि रावणम् ।
भ्रंशितः सर्वलोकेषु स हि ब्रह्मास्त्रतेजसा ॥ ३२
शरीरधातवो ह्यस्य मांसं रुधिरमेव च ।
नेशुर्ब्रह्मास्त्रनिर्दग्धा न च भस्माप्यदृश्यत ॥ ३३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि एकनवत्यधिकद्विशततमोऽध्यायः ॥ २९१ ॥

## द्विनवत्यधिकद्विशततमोऽध्यायः ॥ २९२ ॥

रावणवधानन्तरमविन्ध्यनाम्ना राक्षसवृद्धेन रामसमीपंप्रति सीताया आनयनम् ॥ १ ॥ सीतया स्वशीलशङ्किनो रामस्यानङ्गीकारवचनश्रवणेन भूमौ पतनम् ॥ २ ॥ अन्तरिक्षगतैर्ब्रह्मादिभिः सीतायाः सौशील्यख्यापनपूर्वकं रामंप्रति तद्ग्रहणचोदना ॥ ३ ॥ रामेण सीतालक्ष्मणादिभिः सहायोध्यांप्रति प्रस्थानम् ॥ ४ ॥ दूत्येन भरतंप्रति हनुमत्प्रेषणपूर्वकं नन्दिग्राममागतेन रामेण भरतादिभिः सहायोध्यांप्रत्यागमनम् ॥ ५ ॥ वसिष्ठादिभिः सीतया सह राज्येऽभिषिक्तेन रामेण सुग्रीवविभीषणादीनां सबहुमानं स्वस्वपुरप्रेषणपूर्वकं प्रजापालनम् ॥ ६ ॥

मार्कण्डेय उवाच ।
स हत्वा रावणं क्षुद्रं राक्षसेन्द्रं सुरद्विषम् ।
बभूव हृष्टः ससुहृद्रामः सौमित्रिणा सह ॥ १
ततो हते दशग्रीवे देवाः सर्षिपुरोगमाः ।
आशीर्भिर्जययुक्ताभिरानर्चुस्तं महाभुजम् ॥ २
रामं कमलपत्राक्षं तुष्टुवुः सर्वदेवताः ।
गन्धर्वाः पुष्पवर्षैश्च वाग्भिश्च त्रिदशालयाः ॥ ३
पूजयित्वा रणे रामं प्रतिजग्मुर्यथागतम् ।
तन्महोत्सवसंकाशमासीदाकाशमच्युत ॥ ४
ततो हत्वा दशग्रीवं लङ्कां रामो महायशाः ।
विभीषणाय प्रददौ प्रभुः परपुरंजयः ॥ ५
ततः सीतां पुरस्कृत्य विभीषणपुरस्कृताम् ।
अविन्ध्यो नाम सुप्रज्ञो वृद्धामात्यो विनिर्ययौ ॥ ६
उवाच च महात्मानं काकुत्स्थं दैन्यमास्थितम् ।
प्रतीच्छ देवीं सद्वृत्तां महात्मञ्जानकीमिति ॥ ७
एतच्छ्रुत्वा वचस्तस्मादवतीर्य रथोत्तमात् ।
बाष्पेणापिहितां सीतां ददर्शेक्ष्वाकुनन्दनः ॥ ८
तां दृष्ट्वा चारुसर्वाङ्गीं यानस्थां शोककर्शिताम् ।
मलोपचितसर्वाङ्गीं जटिलां कृष्णवाससम् ॥ ९
उवाच रामो वैदेहीं परामर्शविशङ्कितः ।
'लक्षयित्वेङ्गितं सर्वं प्रियं तस्यै निवेद्य सः ॥' १०
गच्छ वैदेहि मुक्ता त्वं यत्कार्यं तन्मया कृतम् ।
मामासाद्य पतिं भद्रे न त्वं राक्षसवेश्मनि ।
जरां व्रजेथा इति मे निहतोसौ निशाचरः ॥ ११
कथं ह्यस्मद्विधो जातु जानन्धर्मविनिश्चयम् ।
परहस्तगतां नारीं मुहूर्तमपि धारयेत् ॥ १२
सुवृत्तामसुवृत्तां वाऽप्यहं त्वामद्य मैथिलि ।
नोत्सहे परिभोगाय श्वावलीढं हविर्यथा ॥ १३
ततः सा सहसा बाला तच्छ्रुत्वा दारुणं वचः ।
पपात देवी व्यथिता निकृत्ता कदली यथा ॥ १४
योप्यस्या हर्षसंभूतो मुखरागः पुराऽभवत् ।
क्षणेन स पुनर्नष्टो निःश्वासादिव दर्पणे ॥ १५
ततस्ते हरयः सर्वे तच्छ्रुत्वा रामभाषितम् ।
गतासुकल्पा निश्चेष्टा बभूवुः सहलक्ष्मणाः ॥ १६
ततो देवो विशुद्धात्मा विमानेन चतुर्मुखः ।
पद्मयोनिर्जगत्स्रष्टा दर्शयामास राघवम् ॥ १७
शक्रश्चाग्निश्च वायुश्च यमो वरुण एव च ।
यक्षाधिपश्च भगवांस्तथा सप्तर्षयोऽमलाः ॥ १८

पञ्चभूतानि तत्यजुर्मृत इत्यर्थः ॥ ३२ ॥ एकनवत्यधिकद्विशततमोऽध्यायः ॥ २९१ ॥

त्रिदशालयः स्वर्गस्तत्स्थाः ॥ ३ ॥

राजा दशरथश्चैव दिव्यभास्वरमूर्तिमान् ।
विमानेन महार्हेण हंसयुक्तेन भास्वता ॥ १९
ततोऽन्तरिक्षं तत्सर्वं देवगन्धर्वसंकुलम् ।
शुशुभे तारकाचित्रं शरदीव नभस्तलम् ॥ २०
तत उत्थाय वैदेही तेषां मध्ये यशस्विनी ।
उवाच वाक्यं कल्याणी रामं पृथुलवक्षसम् ॥ २१
राजपुत्र न ते कोपं करोमि विदिताहि मे ।
गतिः स्त्रीणां नराणां च शृणु चेदं वचो मम ॥ २२
अन्तश्चरति भूतानां मातरिश्वा सदागतिः ।
स मे विमुञ्चतु प्राणान्यदि पापं चराम्यहम् ॥ २३
अग्निरापस्तथाऽऽकाशं पृथिवी वायुरेव च ।
विमुञ्चन्तु मम प्राणान्यदि पापं चराम्यहम् ॥ २४
यथाऽहं त्वदृते वीर नान्यं स्वप्नेऽप्यचिन्तयम् ।
तथा मे देव निर्दिष्टस्त्वमेव हि पतिर्भव ॥ २५
ततोऽन्तरिक्षे वागासीत्सुभगा लोकसाक्षिणी ।
पुण्या संहर्षणी तेषां वानराणां महात्मनाम् ॥ २६
वायुरुवाच ।
भोभो राघव सत्यं वै वायुरस्मि सदागतिः ।
अपापा मैथिली राजन्संगच्छ सह भार्यया ॥ २७
अग्निरुवाच ।
अहमन्तःशरीरस्थो भूतानां रघुनन्दन ।
सुसूक्ष्ममपि काकुत्स्थ मैथिली नापराध्यति ॥ २८
वरुण उवाच ।
रसा वै मत्प्रसूता हि भूतदेहेषु राघव ।
अहं वै त्वां प्रब्रवीमि मैथिली प्रतिगृह्यताम् ॥ २९
यम उवाच ।
'धर्मोऽहमस्मि काकुत्स्थ साक्षी लोकस्य कर्मणाम् ।
शुभाशुभानां सीतेयमपापा प्रतिगृह्यताम् ॥' ३०
ब्रह्मोवाच ।
पुत्र नैतदिहाश्चर्यं त्वयि राजर्षिधर्मणि ।
साधो सद्वृत्त काकुत्स्थ शृणु चेदं वचो मम ॥ ३१
शत्रुरेष त्वया वीर देवगन्धर्वभोगिनाम् ।
यक्षाणां दानवानां च महर्षीणां च पातितः ३२
अवध्यः सर्वभूतानां मत्प्रसादात्पुराऽभवत् ।
कस्माच्चित्कारणात्पापः कंचित्कालमुपेक्षितः ॥ ३३
वधार्थमात्मनस्तेन हृता सीता दुरात्मना ।
नलकूबरशापेन रक्षा चास्याः कृता मया ॥ ३४
यदि ह्यकामामासेवेत्स्त्रियमन्यामपि ध्रुवम् ।
शतधाऽस्य फलेन्मूर्धा इत्युक्तः सोभवत्पुरा ॥ ३५
नात्र शङ्का त्वया कार्या प्रतीच्छेमां महामते ।
कृतं त्वया महत्कार्यं देवानाममितप्रभ ॥ ३६
दशरथ उवाच ।
प्रीतोस्मि वत्स भद्रं ते पिता दशरथोस्मि ते ।
अनुजानामि राज्यं च प्रशाधि पुरुषोत्तम ॥ ३७
राम उवाच ।
अभिवादये त्वां राजेन्द्र यदि त्वं जनको मम ।
गमिष्यामि पुरीं रम्यामयोध्यां शासनात्तव ॥ ३८
मार्कण्डेय उवाच ।
तमुवाच पिता भूयः प्रहृष्टो भरतर्षभ ।
गच्छायोध्यां प्रशाधि त्वं राम रक्तान्तलोचन ।
संपूर्णानीह वर्षाणि चतुर्दश महाद्युते ॥ ३९
ततो देवान्नमस्कृत्य सुहृद्भिरभिनन्दितः ।
महेन्द्र इव पौलोम्या भार्यया स समेयिवान् ॥ ४०
ततो वरं ददौ तस्मै ह्यविन्ध्याय परंतपः ।
त्रिजटां चार्थमानाभ्यां योजयामास राक्षसीम् ४१
तमुवाच ततो ब्रह्मा देवैः शक्रपुरोगमैः ।
कौसल्यामातरिष्टांस्ते वरानद्य ददानि कान् ॥ ४२
वव्रे रामः स्थितिं धर्मे शत्रुभिश्चापराजयम् ।
राक्षसैर्निहतानां च वानराणां समुद्भवम् ॥ ४३
ततस्ते ब्रह्मणा प्रोक्ते तथेति वचने तदा ।
समुत्तस्थुर्महाराज वानरा लब्धचेतसः ॥ ४४
सीता चापि महाभागा वरं हनुमते ददौ ।
रामकीर्त्या समं पुत्र जीवितं ते भविष्यति ॥ ४५
दिव्यास्त्वामुपभोगाश्च मत्प्रसादकृताः सदा ।
उपस्थास्यन्ति हनुमन्निति स्म हरिलोचन ॥ ४६
ततस्ते प्रेक्षमाणानां तेषामक्लिष्टकर्मणाम् ।
अन्तर्धानं ययुर्देवाः सर्वे शक्रपुरोगमाः ॥ ४७
दृष्ट्वा रामं तु जानक्या संगतं शक्रसारथिः ।

उवाच परमप्रीतसुहृन्मध्य इदं वचः ॥ ४८
देवगन्धर्वयक्षाणां मानुषासुरभोगिनाम् ।
अपनीतं त्वया दुःखमिदं सत्यपराक्रम ॥ ४९
सदेवासुरगन्धर्वा यक्षराक्षसपन्नगाः ।
कथयिष्यन्ति लोकास्त्वां यावद्भूमिर्धरिष्यति॥५०
इत्येवमुक्त्वाऽनुज्ञाप्य रामं शस्त्रभृतांवरम् ।
संपूज्यापाक्रमत्तेन रथेनादित्यवर्चसा ॥ ५१
ततः सीतां पुरस्कृत्य रामः सौमित्रिणा सह ।
सुग्रीवप्रमुखैश्चैव सहितः सर्ववानरैः ॥ ५२
विधाय रक्षां लङ्कायां विभीषणपुरस्कृतः ।
संततार पुनस्तेन सेतुना मकरालयम् ॥ ५३
पुष्पकेण विमानेन खेचरेण विराजता ।
कामगेन यथा मुख्यैरमात्यैः संवृतो वशी ॥ ५४
ततस्तीरे समुद्रस्य यत्र शिश्ये स पार्थिवः ।
तत्रैवोवास धर्मात्मा सहितः सर्ववानरैः ॥ ५५
अथैनान्राघवः काले समानीयाभिपूज्य च ।
विसर्जयामास तदा रत्नैः संतोष्य सर्वशः ॥ ५६
गतेषु वानरेन्द्रेषु गोपुच्छर्क्षेषु तेषु च ।
सुग्रीवसहितो रामः किष्किन्धां पुनरागमत्॥५७
विभीषणेनानुगतः सुग्रीवसहितस्तदा ।
पुष्पकेण विमानेन वैदेह्या दर्शयन्वनम् ॥ ५८
किष्किन्धां तु समासाद्य रामः प्रहरतांवरः ।
अङ्गदं कृतकर्माणं यौवराज्येऽभ्यषेचयत् ॥ ५९
ततस्तैरेव सहितो रामः सौमित्रिणा सह ।
यथागतेन मार्गेण प्रययौ स्वपुरं प्रति ॥ ६०
अयोध्यां स समासाद्य पुरीं राष्ट्रपतिस्ततः ।
भरताय हनूमन्तं दूतं प्रास्थापयद्द्रुतम् ॥ ६१
लक्षयित्वेङ्गितं सर्वं प्रियं तस्मै निवेद्य वै ।
वायुपुत्रे पुनः प्राप्ते नन्दिग्राममुपाविशत् ॥ ६२
स तत्र मलदिग्धाङ्गं भरतं चीरवाससम् ।
'नन्दिग्रामगतं रामः सशत्रुघ्नं सराघवः ।'
अग्रतः पादुके कृत्वा ददर्शासीनमासने ॥ ६३
समेत्य भरतेनाथ शत्रुघ्नेन च वीर्यवान् ।
राघवः सहसौमित्रिर्मुमुदे भरतर्षभ ॥ ६४
ततो भरतशत्रुघ्नौ समेतौ गुरुणा तदा ।
वैदेह्या दर्शनेनोभौ प्रहर्षं समवापतुः ॥ ६५
तस्मै तद्भरतो राज्यमागतायातिसत्कृतम् ।
न्यासं निर्यातयामास युक्तः परमया मुदा ॥ ६६
ततस्तं वैष्णवे शूरं नक्षत्रेऽभिजितेऽहनि ।
वसिष्ठो वामदेवश्च सहितावभ्यषिञ्चताम् ॥ ६७
सोभिषिक्तः कपिश्रेष्ठं सुग्रीवं ससुहृज्जनम् ।
विभीषणं च पौलस्त्यमन्वजानाद्गृहान्प्रति ॥ ६८
अभ्यर्च्य विविधै रत्नैः प्रीतियुक्तौ मुदा युतौ ।
समाधायेतिकर्तव्यं दुःखेन विससर्ज ह ॥ ६९
पुष्पकं च विमानं तत्पूजयित्वा स राघवः ।
प्रादाद्वैश्रवणायैव प्रीत्या स रघुनन्दनः ॥ ७०
ततो देवर्षिसहितः सरितं गोमतीमनु ।
शताश्वमेधानाजह्रे जारूथ्यान्स निरर्गलान् ॥ ७१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि द्विनवत्यधिकद्विशततमोऽध्यायः ॥ २९२ ॥

---

## त्रिनवत्यधिकद्विशततमोऽध्यायः ॥ २९३ ॥

मार्कण्डेयेन स्वस्यानुपमदुःखानुभवितृत्वबुद्ध्या शोचतो युधिष्ठिरस्य रामोपाख्यानकथनपूर्वकं हेतूपन्यासेन शोकापनोदनम् ॥ १ ॥

मार्कण्डेय उवाच ।
एवमेतन्महाबाहो रामेणामिततेजसा ।
प्राप्तं व्यसनमत्युग्रं वनवासकृतं पुरा ॥ १
मा शुचः पुरुषव्याघ्र क्षत्रियोसि परंतप ।

यत्र शिश्ये पूर्वं समुद्रप्रार्थनार्थं शयनं कृतवान् ॥ ५५ ॥ लक्षयित्वेङ्गितैः सर्वैरिति ध. पाठः ॥ ६२ ॥ गुरुणा रामेण ॥ ६५ ॥ वैष्णवे नक्षत्रे श्रवणे ॥ ६७ ॥ जारूथ्यान् त्रिगुण-दक्षिणानित्यर्जुनमिश्रः ॥ ७१ ॥ द्विनवत्यधिकद्विशततमोऽध्यायः ॥ २९२ ॥

बाहुवीर्याश्रये मार्गे वर्तसे दीप्तनिर्णये ॥ २
न हि ते वृजिनं किंचिद्दृश्यते परमण्वपि ।
अस्मिन्मार्गे निषीदेयुः सेन्द्रा अपि सुरासुराः ॥ ३
संहत्य निहतो वृत्रो मरुद्भिर्वज्रपाणिना ।
नमुचिश्चैव दुर्धर्षो दीर्घजिह्वा च राक्षसी ॥ ४
सहायवति सर्वार्थाः संतिष्ठन्तीह सर्वशः ।
किंनु तस्याजितं सङ्ख्ये यस्य भ्राता धनंजयः ॥ ५
अयं च बलिनांश्रेष्ठो भीमो भीमपराक्रमः ।
युवानौ च महेष्वासौ वीरौ माद्रवतीसुतौ ॥ ६
एभिः सहायैः कस्मात्त्वं विषीदसि परंतप ।
य इमे वज्रिणः सेनां जयेयुः समरुद्गणाम् ॥ ७
त्वमप्येभिर्महेष्वासैः सहायैर्देवरूपिभिः ।
विजेष्यसि रणे सर्वानमित्रान्भरतर्षभ ॥ ८
इतश्च त्वमिमां पश्य सैन्धवेन दुरात्मना ।
बलिना वीर्यमत्तेन हृतामेभिर्महात्मभिः ॥ ९
आनीतां द्रौपदीं कृष्णां कृत्वा कर्म सुदुष्करम् ।
जयद्रथं च राजानं विजितं वशमागतम् ॥ १०
असहायेन रामेण वैदेही पुनराहृता ।
हत्वा सङ्ख्ये दशग्रीवं राक्षसं भीमविक्रमम् ॥ ११
यस्य शाखामृगा मित्राण्यृक्षाः कालमुखास्तथा ।
जात्यन्तरगता राजन्नेतद्बुद्ध्याऽनुचिन्तय ॥ १२
तस्मात्सर्वं कुरुश्रेष्ठ मा शुचो भरतर्षभ ।
त्वद्विधा हि महात्मानो न शोचन्ति परंतप ॥ १३
वैशंपायन उवाच ।
एवमाश्वासितो राजा मार्कण्डेयेन धीमता ।
त्यक्त्वा दुःखमदीनात्मा पुनरप्येनमब्रवीत् ॥ १४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि त्रिनवत्यधिकद्विशततमोऽध्यायः ॥ २९३ ॥

समाप्तं च रामोपाख्यानपर्व ॥ १८ ॥

---

# (अथ पतिव्रतामाहात्म्यपर्व ॥ १९ ॥)

## चतुर्नवत्यधिकद्विशततमोऽध्यायः ॥ २९४ ॥

मार्कण्डेयेन युधिष्ठिरंप्रति सावित्र्युपाख्यानकथनारम्भः ॥ १ ॥ अश्वपतिनाम्नो मद्रराजस्य स्वीयव्रतचर्यासंतुष्टसावित्रीदेवीप्रसादात्सावित्रीनामककन्याजननम् ॥ २ ॥ यौवनस्थया तया पित्राज्ञया वृद्धामात्यैः सह राजर्षीणामाश्रमेषु स्वोचितवरान्वेषणम् ॥ ३ ॥

युधिष्ठिर उवाच ।
नात्मानमनुशोचामि नेमान्भ्रातॄन्महामुने ।
हरणं चापि राज्यस्य यथेमां द्रुपदात्मजाम् ॥ १
द्यूते दुरात्मभिः क्लिष्टाः कृष्णया तारिता वयम् ।
जयद्रथेन च पुनर्वनाच्चापि हृता बलात् ॥ २
अस्ति सीमन्तिनी काचिद्दृष्टपूर्वाऽपि वा श्रुता ।
पतिव्रता महाभागा यथेयं द्रुपदात्मजा ॥ ३
मार्कण्डेय उवाच ।
शृणु राजन्कुलस्त्रीणां महाभाग्यं युधिष्ठिर ।
सर्वमेतद्यथाप्राप्तं सावित्र्या राजकन्यया ॥ ४
आसीन्मद्रेषु धर्मात्मा राजा परमधार्मिकः ।
ब्रह्मण्यश्च महात्मा च सत्यसन्धो जितेन्द्रियः ॥ ५
यज्वा दानपतिर्दक्षः पौरजानपदप्रियः ।
पार्थिवोऽश्वपतिर्नाम सर्वभूतहिते रतः ॥ ६
क्षमावाननपत्यश्च सत्यवाग्विजितेन्द्रियः ।
अतिक्रान्तेन वयसा संतापमुपजग्मिवान् ॥ ७
अपत्योत्पादनार्थं च तीव्रं नियममास्थितः ।
काले परिमिताहारो ब्रह्मचारी जितेन्द्रियः ॥ ८
हुत्वा शतसहस्रं स सावित्र्या राजसत्तम ।
षष्ठेषष्ठे तदा काले बभूव मितभोजनः ॥ ९

---

दीप्तनिर्णये असंदिग्धे प्रत्यक्षफले ॥ २ ॥ त्रिनवत्यधिकद्विशततमोऽध्यायः ॥ २९३ ॥

सावित्र्या सावित्री सवितृकन्या तद्दैवत्यया ऋचा सा च। सोमो वधूयुरभवदित्यादिः। षष्ठेकाले अष्टधाविभक्तस्याह्नः षष्ठेंशे ॥ ९ ॥

एतेन नियमेनासीद्वर्षाण्यष्टादशैव तु ।
पूर्णे त्वष्टादशे वर्षे सावित्री तुष्टिमभ्यगात् ॥ १०
रूपिणी तु तदा राजन्दर्शयामास तं नृपम् ।
अग्निहोत्रात्समुत्थाय हर्षेण महताऽन्विता ॥ ११
उवाच चैनं वरदा वचनं पार्थिवं तदा ।
सा तमश्वपतिं राजन्सावित्री नियमे स्थितम् ॥ १२
ब्रह्मचर्येण शुद्धेन दमेन नियमेन च ।
सर्वात्मना च भक्त्या च तुष्टाऽस्मि तव पार्थिव ॥ १३
वरं वृणीष्वाश्वपते मद्रराज यदीप्सितम् ।
न प्रमादश्च धर्मेषु कर्तव्यस्ते कथंचन ॥ १४
अश्वपतिरुवाच ।
अपत्यार्थः समारम्भः कृतो धर्मेप्सया मया ।
पुत्रा मे बहवो देवि भवेयुः कुलभावनाः ॥ १५
तुष्टाऽसि यदि मे देवि वरमेतं वृणोम्यहम् ।
संतानं परमो धर्म इत्याहुर्मां द्विजातयः ॥ १६
सावित्र्युवाच ।
पूर्वमेव मया राजन्नभिप्रायमिमं तव ।
ज्ञात्वा पुत्रार्थमुक्तो वै भगवांस्ते पितामहः ॥ १७
प्रसादाच्चैव तस्मात्ते स्वयं विहितवत्यहम् ।
कन्या तेजस्विनी सौम्य क्षिप्रमेव भविष्यति ॥ १८
उत्तरं च न ते किंचिद्व्याहर्तव्यं कथंचन ।
पितामहनियोगेन तुष्टा ह्येतद्ब्रवीमि ते ॥ १९
स तथेति प्रतिज्ञाय सावित्र्या वचनं नृपः ।
प्रसादयामास पुनः क्षिप्रमेतद्भविष्यति ॥ २०
अन्तर्हितायां सावित्र्यां जगाम स्वपुरं नृपः ।
स्वराज्ये चावसद्वीरः प्रजा धर्मेण पालयन् ॥ २१
कस्मिंश्चित्तु गते काले स राजा नियतव्रतः ।
ज्येष्ठायां धर्मचारिण्यां महिष्यां गर्भमादधे ॥ २२
राजपुत्र्यास्तु गर्भः स मानव्या भरतर्षभ ।
व्यवर्धत तदा शुक्ले तारापतिरिवाम्बरे ॥ २३
प्राप्ते काले तु सुषुवे कन्यां राजीवलोचनाम् ।
क्रियाश्च तस्या मुदितश्चक्रे च नृपसत्तमः ॥ २४
सावित्र्या प्रीतया दत्ता सावित्र्या हुतया ह्यपि ।
सावित्रीत्येव नामास्याश्चक्रुर्विप्रास्तथा पिता ॥ २५
सा विग्रहवतीव श्रीर्व्यवर्धत नृपात्मजा ।
कालेन चापि सा कन्या यौवनस्था बभूव ह ॥ २६
तां सुमध्यां पृथुश्रोणीं प्रतिमां काञ्चनीमिव ।
प्राप्तेयं देवकन्येति दृष्ट्वा संमेनिरे जनाः ॥ २७
तां तु पद्मपलाशाक्षीं ज्वलन्तीमिव तेजसा ।
न कश्चिद्वरयामास तेजसा प्रतिवारितः ॥ २८
अथोपोष्य शिरःस्नाता देवतामभिगम्य सा ।
हुत्वाग्निं विधिवद्विप्रान्वाचयामास पर्वणि ॥ २९
ततः सुमनसः शेषाः प्रतिगृह्य महात्मनः ।
पितुः समीपमगमद्देवी श्रीरिव रूपिणी ॥ ३०
साऽभिवाद्य पितुः पादौ शेषाः पूर्वं निवेद्य च ।
कृताञ्जलिर्वरारोहा नृपतेः पार्श्वमास्थिता ॥ ३१
यौवनस्थां तु तां दृष्ट्वा स्वां सुतां देवरूपिणीम् ।
अयाच्यमानां च वरैर्नृपतिर्दुःखितोऽभवत् ॥ ३२
राजोवाच ।
पुत्रि प्रदानकालस्ते न च कश्चिद्वृणोति माम् ।
स्वयमन्विच्छ भर्तारं गुणैः सदृशमात्मनः ॥ ३३
प्रार्थितः पुरुषो यश्च स निवेद्यस्त्वया मम ।
विमृश्याहं प्रदास्यामि वरय त्वं यथेप्सितम् ॥ ३४
श्रुतं हि धर्मशास्त्रेषु पठ्यमानं द्विजातिभिः ।
तथा त्वमपि कल्याणि गदतो मे वचः शृणु ॥ ३५
अप्रदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः ।
मृते पितरि पुत्रश्च वाच्यो मातुररक्षिता ॥ ३६
इदं मे वचनं श्रुत्वा भर्तुरन्वेषणे त्वर ।
देवतानां यथा वाच्यो न भवेयं तथा कुरु ॥ ३७
एवमुक्त्वा दुहितरं तथा वृद्धांश्च मन्त्रिणः ।
व्यादिदेशानुयात्रं च गम्यतां चेत्यचोदयत् ॥ ३८

---

उत्तरं पुत्रार्थे प्रार्थनावचनम् ॥ १९ ॥ प्रतिज्ञायाङ्गीकृत्य ॥ २० ॥ मानव्या मनुपुत्र्याः ॥ २३ ॥ प्रतिवारितोऽभिभूतः ॥ २८ ॥ सुमनस इष्टदेवतायाः । शेषाः प्रसादपूर्वकं दत्तानि माल्यानि ॥ ३० ॥ अयाच्यमानां तु नरैरिति ध. पाठः॥३२॥ प्रार्थित इच्छितः ॥ ३४ ॥ वाच्यो निन्द्यः । अनुपयन् ऋतावगच्छन् ॥ ३६ ॥ अनुयात्रं यात्रोपकरणं वाहनादि ॥ ३८ ॥

चतुर्नवत्यधिकद्विशततमोऽध्यायः ॥ २९४ ॥

साऽभिवाद्य पितुः पादौ व्रीडितेव मनस्विनी ।
पितुर्वचनमाज्ञाय निर्जगामाविचारितम् ॥ ३९
सा हैमं रथमास्थाय स्थविरैः सचिवैर्वृता ।
तपोवनानि रम्याणि राजर्षीणां जगाम ह ॥ ४०
मान्यानां तत्र वृद्धानां कृत्वा पादाभिवादनम् ।
वनानि क्रमशस्तात सर्वाण्येवाभ्यगच्छत ॥ ४१
एवं तीर्थेषु सर्वेषु धनोत्सर्गं नृपात्मजा ।
कुर्वती द्विजमुख्यानां तंतं देशं जगाम ह ॥ ४२

॥ इति श्रीमन्महाभारते अरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि चतुर्नवत्यधिकद्विशततमोऽध्यायः ॥ २९४ ॥

---

## पञ्चनवत्यधिकद्विशततमोऽध्यायः ॥ २९५ ॥

मनसा स्वानुगुणनिर्धारणपूर्वकं वनादागतया सावित्र्या नारदेन सह संभाषमाणस्य पितुरन्तिकमेत्य तयोः पादाभिवादनम् ॥ १ ॥ नारदसंनिधौ पित्रा पृष्टया तया द्युमत्सेनसूनोः सत्यवतः पतित्वेन मनसा वरणकथनम् ॥ २ ॥ पित्रा नारदवचनात्तस्याल्पायुष्ट्वनिवेदनपूर्वकं वरान्तरवरणं चोदितयापि तया स्वाध्यवसायादनिवर्तनम् ॥ ३ ॥ राज्ञापि तस्या निर्बन्धान्नारदवचनाच्च तस्मा एव तस्या दानाध्यवसानम् ॥ ४ ॥

मार्कण्डेय उवाच ।
अथ मद्राधिपो राजा नारदेन समागतः ।
उपविष्टः सभामध्ये कथायोगेन भारत ॥ १
ततोऽभिगम्य तीर्थानि सर्वाण्येवाश्रमांस्तथा ।
आजगाम पितुर्वेश्म सावित्री सह मन्त्रिभिः ॥ २
नारदेन सहासीनं सा दृष्ट्वा पितरं शुभा ।
उभयोरेव शिरसा चक्रे पादाभिवादनम् ॥ ३
नारद उवाच ।
क्व गताऽभूत्सुतेयं ते कुतश्चैवागता नृप ।
किमर्थं युवतीं भद्र न चैनां संप्रयच्छसि ॥ ४
अश्वपतिरुवाच ।
कार्येण खल्वनेनैव प्रेषिताद्यैव चागता ।
एतस्याः शृणु देवर्षे भर्तारं योऽनया वृतः ॥ ५
मार्कण्डेय उवाच ।
सा ब्रूहि विस्तरेणेति पित्रा संचोदिता शुभा ।
तदैव तस्य वचनं प्रतिगृह्येदमब्रवीत् ॥ ६
आसीत्साल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः ।
द्युमत्सेन इति ख्यातः पश्चाचान्धो बभूव ह ॥ ७
विनष्टचक्षुषस्तस्य बालपुत्रस्य धीमतः ।
सामीप्येन हृतं राज्यं छिद्रेऽस्मिन्पूर्ववैरिणा ॥ ८
स बालवत्सया सार्धं भार्यया प्रस्थितो वनम् ।
महारण्यं गतश्चापि तपस्तेपे महाव्रतः ॥ ९
तस्य पुत्रः पुरे जातः संवृद्धश्च तपोवने ।
सत्यवाननुरूपो मे भर्तेति मनसा वृतः ॥ १०
नारद उवाच ।
अहो बत महत्पापं सावित्र्या नृपते कृतम् ।
अजानन्त्या यदनया गुणवान्सत्यवान्वृतः ॥ ११
सत्यं वदत्यस्य पिता सत्यं माता प्रभाषते ।
तथाऽस्य ब्राह्मणाश्चक्रुर्नामैतत्सत्यवानिति ॥ १२
बालस्याश्वाः प्रियाश्चास्य करोत्यश्वांश्च मृन्मयान् ।
चित्रेऽपि विलिखत्यश्वांश्चित्राश्व इति चोच्यते १३
राजोवाच ।
अपीदानीं स तेजस्वी बुद्धिमान्वा नृपात्मजः ।
क्षमावानपि वा शूरः सत्यवान्पितृवत्सलः ॥ १४
नारद उवाच ।
विवस्वानिव तेजस्वी बृहस्पतिसमो मतौ ।
महेन्द्र इव वीरश्च वसुधेव क्षमान्वितः ॥ १५
अश्वपतिरुवाच ।
अपि राजात्मजो दाता ब्रह्मण्यश्चापि सत्यवान् ।
रूपवानप्युदारो वाऽप्यथवा प्रियदर्शनः ॥ १६
नारद उवाच ।
सांकृते रन्तिदेवस्य स्वशक्त्या दानतः समः ।

---

कथायोगेन कथाप्रसङ्गेन ॥ १ ॥ सामीप्येन समीपवासिना । छिद्रे अन्धत्वे सति ॥ ८ ॥ सत्यवान्नामतः ॥ १० ॥ तेजस्वी प्रभाववान् ॥ १४ ॥ सांकृतेः संकृतिपुत्रस्य ॥ १७ ॥

ब्रह्मण्यः सत्यवादी च शिबिरौशीनरो यथा ॥ १७
ययातिरिव चोदारः सोमवत्प्रियदर्शनः ।
रूपेणान्यतमोऽश्विभ्यां द्युमत्सेनसुतो बली ॥ १८
'स वदान्यः स तेजस्वी धीमांश्चैव क्षमान्वितः ।'
स दान्तः स मृदुः शूरः स सत्यः संयतेन्द्रियः ।
सन्मैत्रः सोनसूयश्च स ह्रीमान्द्युतिमांश्च सः ॥ १९
नित्यशश्चार्जवं तस्मिन्धृतिस्तत्रैव च ध्रुवा ।
संक्षेपतस्तपोवृद्धैः शीलवृद्धैश्च कथ्यते ॥ २०
अश्वपतिरुवाच ।
गुणैरुपेतं सर्वैस्तं भगवन्प्रब्रवीषि मे ।
दोषानप्यस्य मे ब्रूहि यदि सन्तीह केचन ॥ २१
नारद उवाच ।
एक एवास्य दोषो हि गुणानाक्रम्य तिष्ठति ।
स च दोषः प्रयत्नेन न शक्यमतिवर्तितुम् ॥ २२
एको दोषोऽस्ति नान्योऽस्य सोद्यप्रभृति सत्यवान् ।
संवत्सरेण क्षीणायुर्देहन्यासं करिष्यति ॥ २३
राजोवाच ।
एहि सावित्रि गच्छस्व अन्यं वरय शोभने ।
तस्य दोषो महानेको गुणानाक्रम्य च स्थितः ॥ २४
यथा मे भगवानाह नारदो देवसत्कृतः ।
संवत्सरेण सोऽल्पायुर्देहन्यासं करिष्यति ॥ २५
सावित्र्युवाच ।
सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत् ॥ २६
दीर्घायुरथवाऽल्पायुः सगुणो निर्गुणोऽपि वा ।
सकृद्वृतो मया भर्ता न द्वितीयं वृणोम्यहम् ॥ २७
मनसा निश्चयं कृत्वा ततो वाचाऽभिधीयते ।
क्रियते कर्मणा पश्चात्प्रमाणं मे मनस्ततः ॥ २८
नारद उवाच ।
स्थिरा बुद्धिर्नरश्रेष्ठ सावित्र्या दुहितुस्तव ।
नैषा वारयितुं शक्या धर्मादस्मात्कथंचन ॥ २९
नान्यस्मिन्पुरुषे सन्ति ये सत्यवति वै गुणाः ।
प्रदानमेव तस्मान्मे रोचते दुहितुस्तव ॥ ३०
राजोवाच ।
अविचाल्यमेतदुक्तं तथ्यं च भवता वचः ।
करिष्याम्येतदेवं च गुरुर्हि भगवान्मम ॥ ३१
नारद उवाच ।
अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव ।
साधयिष्याम्यहं तावत्सर्वेषां भद्रमस्तु वः ॥ ३२
मार्कण्डेय उवाच ।
एवमुक्त्वा खमुत्पत्य नारदस्त्रिदिवं गतः ।
राजाऽपि दुहितुः सज्जं वैवाहिकमकारयत् ॥ ३३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि पञ्चनवत्यधिकद्विशततमोऽध्यायः ॥ २९५ ॥

## षण्णवत्यधिकद्विशततमोऽध्यायः ॥ २९६ ॥

अश्वपतिना राज्ञा द्युमत्सेनाश्रममेत्य सत्यवते स्वपुत्र्याः सावित्र्या दानेन वैवाहिकोत्सवनिर्वर्तनपूर्वकं स्वनगरागमनम् ॥ १ ॥

मार्कण्डेय उवाच ।
अथ कन्याप्रदाने स तमेवार्थं विचिन्तयन् ।
समानिन्ये च तत्सर्वं भाण्डं वैवाहिकं नृपः ॥ १
ततो वृद्धान्द्विजान्सर्वानृत्विक्सभ्यपुरोहितान् ।
समाहूय दिने पुण्ये प्रययौ सह कन्यया ॥ २
मेध्यारण्यं स गत्वा च द्युमत्सेनाश्रमं नृपः ।
पद्भ्यामेव द्विजैः सार्धं राजर्षिं तमुपागमत् ॥ ३
तत्रापश्यन्महाभागं सालवृक्षमुपाश्रितम् ।
कौश्यां बृस्यां समासीनं चक्षुर्हीनं नृपं तदा ॥ ४
स राजा तस्य राजर्षेः कृत्वा पूजां यथाऽर्हतः ।

आक्रम्य अभिभूय ॥ २२ ॥ अंशः काष्ठपाषाणादेः शकलः सकृन्निपतति । कृतस्य करणं नास्तीत्यर्थः ॥ २६ ॥ एतत् सावित्र्या वचनं अविचाल्यं भवता च तथ्यं उक्तम् ॥ ३१ ॥ साधयिष्यामि गमिष्यामि ॥ ३२ ॥ पञ्चनवत्यधिकद्विशततमोऽध्यायः ॥ २९५ ॥
वैवाहिकं भाण्डं विवाहोचितमुपकरणम् ॥ १ ॥ कौश्यां

वाचा सुनियतो भूत्वा चकारात्मनिवेदनम् ॥ ५
तस्यार्घ्यमासनं चैव गां चावेद्य स धर्मवित् ।
किमागमनमित्येवं राजा राजानमब्रवीत् ॥ ६
तस्य सर्वमभिप्रायमितिकर्तव्यतां च ताम् ।
सत्यवन्तं समुद्दिश्य सर्वमेव न्यवेदयत् ॥ ७
सावित्री नाम राजर्षे कन्येयं मम शोभना ।
तां स्वधर्मेण धर्मज्ञ स्नुषार्थे त्वं गृहाण मे ॥ ८
द्युमत्सेन उवाच ।
च्युताः स्म राज्याद्वनवासमाश्रिता-
श्चराम धर्मं नियतास्तपस्विनः ।
कथं त्वनर्हा वनवासमाश्रमे
सहिष्यति क्लेशमिमं सुता तव ॥ ९
अश्वपतिरुवाच ।
सुखं च दुःखं च भवाभवात्मकं
यदा विजानाति सुताऽहमेव च ।
न मद्विधे युज्यति वाक्यमीदृशं
विनिश्चयेनाभिगतोस्मि ते नृप ॥ १०
आशां नार्हसि मे हन्तुं सौहृदात्प्रणतस्य च ।
अभितश्चागतं प्रेम्णा प्रत्याख्यातुं न माऽर्हसि ११
अनुरूपो हि युक्तश्च त्वं ममाहं तवापि च ।
स्नुषां प्रतीच्छ मे कन्यां भार्यां सत्यवतस्ततः ॥१२
द्युमत्सेन उवाच ।
पूर्वमेवाभिलषितः संबन्धो मे त्वया सह ।
भ्रष्टराज्यस्त्वहमिति तत एतद्विचारितम् ॥ १३
अभिप्रायस्त्वयं यो मे पूर्वमेवाभिकाङ्क्षितः ।
स निर्वर्ततु मेऽद्यैव काङ्क्षितो ह्यसि मेऽतिथिः१४
ततः सर्वान्समानाय्य द्विजानाश्रमवासिनः ।
यथाविधि समुद्वाहं कारयामासतुर्नृपौ ॥ १५
दत्त्वा सोऽश्वपतिः कन्यां यथार्हं सपरिच्छदम् ।
ययौ स्वमेव भवनं युक्तः परमया मुदा ॥ १६
सत्यवानपि तां भार्यां लब्ध्वा सर्वगुणान्विताम् ।
मुमुदे सा च तं लब्ध्वा भर्तारं मनसेप्सितम्१७
गते पितरि सर्वाणि संन्यस्याभरणानि सा ।
जगृहे वल्कलान्येव वस्त्रं काषायमेव च ॥ १८
परिचारैर्गुणैश्चैव प्रश्रयेण दमेन च ।
सर्वकामक्रियाभिश्च सर्वेषां तुष्टिमादधे ॥ १९
श्वश्रूं शरीरसत्कारैः सर्वैराच्छादनादिभिः ।
श्वशुरं देवसत्कारैर्वाचःसंयमनेन च ॥ २०
तथैव प्रियवादेन नैपुणेन शमेन च ।
रहश्चैवोपचारेण भर्तारं पर्यतोषयत् ॥ २१
एवं तत्राश्रमे तेषां तदा निवसतां सताम् ।
कालस्तपस्यतां कश्चिदपाक्रामत भारत ॥ २२
सावित्र्या ग्लायमानायास्तिष्ठन्त्यास्तु दिवानिशम् ।
नारदेन यदुक्तं तद्वाक्यं मनसि वर्तते ॥ २३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि षण्णवत्यधिकद्विशततमोऽध्यायः ॥ २९६ ॥

## सप्तनवत्यधिकद्विशततमोऽध्यायः ॥ २९७ ॥

कदाचन नारदनिर्दिष्टे सत्यवतो मृतिदिवसे सावित्र्या परशुहस्तस्य वनंगच्छतो भर्तुरनुगमनम् ॥ १ ॥

मार्कण्डेय उवाच ।
ततः काले बहुतिथे व्यतिक्रान्ते कदाचन ।
प्राप्तः स कालो मर्तव्यं यत्र सत्यवता नृप ॥ १
गणयन्त्याश्च सावित्र्या दिवसेदिवसे गते ।
यद्वाक्यं नारदेनोक्तं वर्तते हृदि नित्यशः ॥ २
चतुर्थेऽहनि मर्तव्यमिति संचिन्त्य भामिनी ।

कुशमय्यां वृस्यामासने ॥ ४ ॥ आत्मनिवेदनमश्वपतिरहमिति ज्ञापनम् ॥ ५ ॥ भवाभवात्मकमुत्पत्तिविनाशात्मकम् । ते त्वां प्रति ॥ १० ॥ मा माम् ॥ ११ ॥ निर्वर्ततु निष्पद्यताम् ॥ १४ ॥ सपरिच्छदं पारिबर्हसहितम् ॥ १६ ॥ परिचारैः सेवनैः । गुणैः शीलसत्यादिभिः । प्रश्रयेण स्नेहेन । दमेन जितेन्द्रियतया । सर्वकामक्रियाभिः सर्वेषामिष्टसंपादनेन ॥ १९ ॥ षण्णवत्यधिकद्विशततमोऽध्यायः ॥ २९६ ॥

व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिताऽभवत् ॥ ३
'त्रयोदश्यां चोपवासं प्रतिपत्सु च पारणम् ।
आयुष्यं वर्धते भर्तुर्व्रतेनानेन भारत ॥' ४
तं श्रुत्वा नियमं तस्या भृशं दुःखान्वितो नृपः ।
उत्थाय वाक्यं सावित्रीमब्रवीत्परिसान्त्वयन् ॥ ५
अतितीव्रोऽयमारम्भस्त्वयाऽऽरब्धो नृपात्मजे ।
तिसृणां वसतीनां हि स्थानं परमदुश्चरम् ॥ ६

सावित्र्युवाच ।

न कार्यस्तात संतापः पारयिष्याम्यहं व्रतम् ।
व्यवसायकृतं हीदं व्यवसायश्च कारणम् ॥ ७

द्युमत्सेन उवाच ।

व्रतं भिन्धीति वक्तुं त्वां नास्मि शक्तः कथंचन ।
पारयस्वेति वचनं युक्तमस्मद्विधो वदेत् ॥ ८

मार्कण्डेय उवाच ।

एवमुक्त्वा द्युमत्सेनो विरराम महामनाः ।
तिष्ठन्ती चैव सावित्री काष्ठभूतेव लक्ष्यते ॥ ९
श्वोभूते भर्तृमरणे सावित्र्या भरतर्षभ ।
दुःखान्वितायास्तिष्ठन्त्याः सा रात्रिर्व्यत्यवर्तत १०
अद्य तद्दिवसं चेति हुत्वा दीप्तं हुताशनम् ।
युगमात्रोदिते सूर्ये कृत्वा पौर्वाह्णिकीः क्रियाः॥११
'व्रतं समाप्य सावित्री स्नात्वा शुद्धा यशस्विनी ।'
ततः सर्वान्द्विजान्वृद्धाञ्श्वश्रूं श्वशुरमेव च ।
अभिवाद्यानुपूर्व्येण प्राञ्जलिर्नियता स्थिता ॥ १२
अवैधव्याशिषस्ते तु सावित्र्यर्थं हिताः शुभाः ।
ऊचुस्तपस्विनः सर्वे तपोवननिवासिनः ॥ १३
एवमस्त्विति सावित्री ध्यानयोगपरायणा ।
मनसा ता गिरः सर्वाः प्रत्यगृह्णात्तपस्विनी ॥ १४
तं कालं तं मुहूर्तं च प्रतीक्षन्ती नृपात्मजा ।
यथोक्तं नारदवचश्चिन्तयन्ती सुदुःखिता ॥ १५
ततस्तु श्वश्रूश्वशुरावूचतुस्तां नृपात्मजाम् ।
एकान्तमास्थितां वाक्यं प्रीत्या भरतसत्तम ॥ १६
व्रतं यथोपदिष्टं तु तथा तत्पारितं त्वया ।
आहारकालः संप्राप्तः क्रियतां यदनन्तरम् ॥ १७

सावित्र्युवाच ।

अस्तं गते मयाऽऽदित्ये भोक्तव्यं कृतकामया ।
एष मे हृदि संकल्पः समयश्च कृतो मया ॥ १८

मार्कण्डेय उवाच ।

एवं संभाषमाणायाः सावित्र्या भोजनं प्रति ।
स्कन्धे परशुमादाय सत्यवान्प्रस्थितो वनम्॥ १९
सावित्री त्वाह भर्तारं नैकस्त्वं गन्तुमर्हसि ।
सह त्वया गमिष्यामि न हि त्वां हातुमुत्सहे ॥ २०

सत्यवानुवाच ।

वनं न गतपूर्वं ते दुःखः पन्थाश्च भामिनि ।
व्रतोपवासक्षामा च कथं पद्भ्यां गमिष्यसि ॥ २१

सावित्र्युवाच ।

उपवासान्न मे ग्लानिर्नास्ति चापि परिश्रमः ।
गमने च कृतोत्साहां प्रतिषेद्धुं न माऽर्हसि ॥ २२

सत्यवानुवाच ।

यदि ते गमनोत्साहः करिष्यामि तव प्रियम् ।
मम त्वामन्त्रय गुरून्न मां दोषः स्पृशेदयम् ॥ २३

मार्कण्डेय उवाच ।

साऽभिवाद्याब्रवीच्छ्वश्रूं श्वशुरं च महाव्रता ।
अयं गच्छति मे भर्ता फलाहारो महावनम् ॥ २४
इच्छेयमभ्यनुज्ञाता आर्यया श्वशुरेण ह ।
अनेन सह निर्गन्तुं न मेऽद्य विरहः क्षमः ॥ २५
गुर्वग्निहोत्रार्थकृते प्रस्थितश्च सुतस्तव ।
न निवार्यो निवार्यः स्यादन्यथा प्रस्थितो वनम् २६
संवत्सरः किंचिदूनो न निष्क्रान्ताऽहमाश्रमात् ।
वनं कुसुमितं द्रष्टुं परं कौतूहलं हि मे ॥ २७

द्युमत्सेन उवाच ।

यदा प्रभृति सावित्री पित्रा दत्ता स्नुषा मम ।
नानयाऽभ्यर्थनायुक्तमुक्तपूर्वं स्मराम्यहम् ॥ २८
तदेषा लभतां कामं यथाभिलषितं वधूः ।

---

वसतीनां स्थानं भोजनत्रयनिरोधः । उपवसतीत्यादौ वसतेस्तादर्थ्यदर्शनात् ॥ ६ ॥ पारयिष्यामि समापयिष्यामि । व्यवसायकृतमुद्योगकृतम् ॥ ७ ॥ युगं हस्तचतुष्कं तावदुदिते उपरि याते ॥ ११ ॥

अप्रमादश्च कर्तव्यः पुत्रि सत्यवतः पथि ॥ २९
मार्कण्डेय उवाच ।
उभाभ्यामभ्यनुज्ञाता सा जगाम यशस्विनी ।
सह भर्त्रा हसन्तीव हृदयेन विदूयता ॥ ३०
सा वनानि विचित्राणि रमणीयानि सर्वशः ।
मयूरगणजुष्टानि ददर्श विपुलेक्षणा ॥ ३१
नदीः पुण्यवहाश्चैव पुष्पितांश्च नगोत्तमान् ।
सत्यवानाह पश्येति सावित्रीं मधुरं वचः ॥ ३२
निरीक्षमाणा भर्तारं सर्वावस्थमनिन्दिता ।
मृतमेव हि तं मेने काले मुनिवचः स्मरन् ॥ ३३
अनुव्रजन्ती भर्तारं जगाम मृदुगामिनी ।
द्विधेव हृदयं कृत्वा तं च कालमवेक्षती ॥ ३४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि सप्तनवत्यधिकद्विशततमोऽध्यायः ॥ २९७ ॥

---

## अष्टनवत्यधिकद्विशततमोऽध्यायः ॥ २९८ ॥

सावित्र्या सह वनं प्रविष्टेन सत्यवता फलाहरणपूर्वकं काष्ठविपाटनम् ॥ १ ॥ तथा शिरोवेदनादूनतया काष्ठपाटनादुपरमपूर्वकं भार्योत्सङ्गे शिरोनिधानेन भूतले शयनम् ॥ २ ॥ ततः सत्यवतोऽसुहरणाय समागतं यमं दृष्टवत्या सावित्र्या साञ्जलिबन्धं तदागमनप्रयोजनप्रश्नः ॥ ३ ॥ यमेन तांप्रति तत्कथनपूर्वकं पाशबन्धनेन सत्यवतस्तदीयशरीरादपकर्षणपूर्वकं स्वलोकंप्रति प्रस्थानम् ॥ ४ ॥ तमनुगच्छन्त्याः सावित्र्याः स्तुतिवचनसंतुष्टेन यमेन तस्यै वरदानपूर्वकं बन्धविमोचनेन सत्यवतो विसर्जनम् ॥ ५ ॥ ततः पुनरुज्जीवितेन सत्यवता सावित्र्यासह पितुराश्रमंप्रति प्रस्थानम् ॥ ६ ॥

---

मार्कण्डेय उवाच ।
अथ भार्यासहायः स फलान्यादाय वीर्यवान् ।
कठिनं पूरयामास ततः काष्ठान्यपाटयत् ॥ १
तस्य पाटयतः काष्ठं स्वेदो वै समजायत ।
व्यायामेन च तेनास्य जज्ञे शिरसि वेदना ॥ २
सोऽभिगम्य प्रियां भार्यामुवाच श्रमपीडितः ।
व्यायामेन ममानेन जाता शिरसि वेदना ॥ ३
अङ्गानि चैव सावित्रि हृदयं दूयतीव च ।
अस्वस्थमिव चात्मानं लक्षये मितभाषिणि ॥ ४
शूलैरिव शिरो विद्धमिदं संलक्षयाम्यहम् ।
'भ्रमन्तीव दिशः सर्वाश्चक्रारूढं मनो मम ।'
तत्स्वप्तुमिच्छे कल्याणि न स्थातुं शक्तिरस्ति मे ॥ ५
सा समासाद्य सावित्री भर्तारमुपगम्य च ।
उत्सङ्गेऽस्य शिरः कृत्वा निषसाद महीतले ॥ ६
ततः सा नारदवचो विमृशन्ती तपस्विनी ।
तं मुहूर्तं क्षणं वेलां दिवसं च युयोज ह ॥ ७
'हन्त प्राप्तः स कालोऽयमिति चिन्तापरा सती ।'
मुहूर्तादेव चापश्यत्पुरुषं रक्तवाससम् ।
बद्धमौलिं वपुष्मन्तमादित्यसमतेजसम् ॥ ८
श्यामावदातं रक्ताक्षं पाशहस्तं भयावहम् ।
स्थितं सत्यवतः पार्श्वे निरीक्षन्तं तमेव च ॥ ९
तं दृष्ट्वा सहसोत्थाय भर्तुर्न्यस्य शनैः शिरः ।
कृताञ्जलिरुवाचार्ता हृदयेन प्रवेपती ॥ १०
दैवतं त्वाभिजानामि वपुरेतद्ध्यमानुषम् ।
कामया ब्रूहि देवेश कस्त्वं किंच चिकीर्षसि ११
यम उवाच ।
पतिव्रताऽसि सावित्रि तथैव च तपोन्विता ।
अतस्त्वामभिभाषामि विद्धि मां त्वं शुभे यमम् १२
अयं ते सत्यवान्भर्ता क्षीणायुः पार्थिवात्मजः ।
नेष्यामि तमहं बद्ध्वा विद्ध्येतन्मे चिकीर्षितं १३
सावित्र्युवाच ।
श्रूयते भगवन्दूतास्तवागच्छन्ति मानवान् ।
नेतुं किल भवान्कस्मादागतोसि स्वयं प्रभो ॥ १४
मार्कण्डेय उवाच ।
इत्युक्तः पितृराजस्तां भगवान्स्वचिकीर्षितम् ।
यथावत्सर्वमाख्यातुं तत्प्रियार्थं प्रचक्रमे ॥ १५

---

सर्वावस्थमतन्द्रिता इति क. थ. पाठः । स्मरन्निति व्यत्ययेन पुंस्त्वम् ॥ ३३ ॥ सप्तनवत्यधिकद्विशततमोऽध्यायः ॥ २९७ ॥

कठिनं स्थालीम् ॥ १ ॥ युयोज अनुचिन्तितवती ॥ ७ ॥ पुरुषं पीतवाससमिति क. थ. पाठः ॥ ८ ॥ कामया इच्छया ॥ ११ ॥

अयं च धर्मसंयुक्तो रूपवान्गुणसागरः ।
नार्हो मत्पुरुषैर्नेतुमतोऽस्मि स्वयमागतः ॥ १६
ततः सत्यवतः कायात्पाशबद्धं वशंगतम् ।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ॥ १७
ततः समुद्धृतप्राणं गतश्वासं हतप्रभम् ।
निर्विचेष्टं शरीरं तद्बभूवाप्रियदर्शनम् ॥ १८
यमस्तु तं ततो बद्ध्वा प्रयातो दक्षिणामुखः ।
सावित्री चैव दुःखार्ता यममेवान्वगच्छत ॥ १९
'भर्तुः शरीररक्षां च विधाय हि तपस्विनी ।
भर्तारमनुगच्छन्ती तथावस्थं सुमध्यमा ।'
नियमव्रतसंसिद्धा महाभागा पतिव्रता ॥ २०
यम उवाच ।
निवर्त गच्छ सावित्रि कुरुष्वास्यौर्ध्वदैहिकम् ।
कृतं भर्तुस्त्वयाऽऽनृण्यं यावद्गम्यं गतं त्वया २१
सावित्र्युवाच ।
यत्र मे नीयते भर्ता स्वयं वा यत्र गच्छति ।
मया च तत्र गन्तव्यमेष धर्मः सनातनः ॥ २२
तपसा गुरुभक्त्या च भर्तुः स्नेहाद्व्रतेन च ।
तव चैव प्रसादेन न मे प्रतिहता गतिः ॥ २३
प्राहुः साप्तपदं मैत्रं बुधास्तत्त्वार्थदर्शिनः ।
मित्रतां च पुरस्कृत्य किंचिद्वक्ष्यामि तच्छृणु २४
नानात्मवन्तस्तु वने चरन्ति
धर्मं च वासं च परिश्रमं च ।
विज्ञानतो धर्ममुदाहरन्ति
तस्मात्सन्तो धर्ममाहुः प्रधानम् ॥ २५
एकस्य धर्मेण सतां मतेन
सर्वे स्म तं मार्गमनुप्रपन्नाः ।
मा वै द्वितीयं मा तृतीयं च वाञ्छे
तस्मात्सन्तो धर्ममाहुः प्रधानम् ॥ २६
यम उवाच ।
निवर्त तुष्टोऽस्मि तवानया गिरा
स्वराक्षरव्यञ्जनहेतुयुक्तया ।
वरं वृणीष्वेह विनाऽस्य जीवितं
ददानि ते सर्वमनिन्दिते वरम् ॥ २७
सावित्र्युवाच ।
च्युतः स्वराज्याद्वनवासमाश्रितो
विनष्टचक्षुः श्वशुरो ममाश्रमे ।
स लब्धचक्षुर्बलवान्भवेन्नृप-
स्तव प्रसादाज्ज्वलनार्कसंनिभः ॥ २८
यम उवाच ।
ददानि तेऽहं तमनिन्दिते वरं
यथा त्वयोक्तं भविता च तत्तथा ।
तवाध्वना ग्लानिमिवोपलक्षये
निवर्त गच्छस्व न ते श्रमो भवेत् ॥ २९
सावित्र्युवाच ।
श्रमः कुतो भर्तृसमीपतो हि मे
यतो हि भर्ता मम सा गतिर्ध्रुवा ।
यतः पतिं नेष्यसि तत्र मे गतिः
सुरेश भूयश्च वचो निबोध मे ॥ ३०
सतां सकृत्संगतमीप्सितं परं
ततः परं मित्रमिति प्रचक्षते ।
न चाफलं सत्पुरुषेण संगतं
ततः सतां संनिवसेत्समागमे ॥ ३१
यम उवाच ।
मनोनुकूलं बुधबुद्धिवर्धनं
त्वया यदुक्तं वचनं हिताश्रयम् ।

---

अनात्मवन्तः अजितेन्द्रियाः । वने धर्मं यज्ञादिरूपं न चरन्ति । जितेन्द्रिया एव वने ग्रामे वा यज्ञादीन्स्त्रीसंबद्धान् धर्मान्कुर्वन्ति । तेन गृहस्थवानप्रस्थयोः संग्रहः । वासं गुरुकुलवासं ब्रह्मचर्यम् । परिश्रमं परित्यागरूपमाश्रमं संन्यासम् । विज्ञानतः चतुर्थ्यर्थे सार्वविभक्तिकस्तसिः । धर्मस्य फलं आत्मविज्ञानमित्यर्थः ॥ २५ ॥ एतेषामाश्रमधर्माणां समुच्चयं वारयति एकस्येति । चतुर्णामन्यतमस्यैकस्याश्रमस्य धर्मेण सतां मतेन दम्भादिरहितश्रद्धया सम्यगनुष्ठितेनेत्यर्थः । सर्वे तं मार्गं ज्ञानमार्गं प्रपन्नाः प्राप्ताः अतो धर्मं च वासं च प्रतिश्रयं चेति पाठक्रमापेक्षया द्वितीयं नैष्ठिकं गुरुकुलवासं दाराऽकरणरूपं तृतीयं पारिव्राज्यं दारादित्यागरूपं वा न वाञ्छे । ज्ञानहेतोः प्रधानभूतस्य धर्मस्याद्येपि सिद्धेरित्यर्थः । मद्भर्तुर्हरणेनावयोर्धर्मं मा नाशयेति भावः ॥ २६ ॥ निवर्त निवर्तस्व । स्वर उदात्तादिः । अक्षरमकारादि । व्यञ्जनं ककारादि । एतद्युक्तत्वेन वाक्यस्य शब्दतो निर्दोषत्वमुक्तम् । हेतुयुक्तत्वेन युक्तियुक्तत्वमप्युक्तम् ॥ २७ ॥

विना पुनः सत्यवतोस्य जीवितं
वरं द्वितीयं वरयस्व भामिनि ॥ ३२

सावित्र्युवाच ।

हृतं पुरा मे श्वशुरस्य धीमतः
स्वमेव राज्यं लभतां स पार्थिवः ।
जह्यात्स्वधर्मान्न च मे गुरुर्यथा
द्वितीयमेतद्वरयामि ते वरम् ॥ ३३

यम उवाच ।

स्वमेव राज्यं प्रतिपत्स्यतेऽचिरा-
न्न च स्वधर्मात्परिहीयते नृपः ।
कृतेन कामेन मया नृपात्मजे
निवर्त गच्छस्व न ते श्रमो भवेत् ॥ ३४

सावित्र्युवाच ।

प्रजास्त्वयैता नियमेन संयता
नियम्य चैता नयसे निकामया ।
ततो यमत्वं तव देव विश्रुतं
निबोध चेमां गिरमीरितां मया ॥ ३५

अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च सतां धर्मः सनातनः ॥ ३६
एवंप्रायश्च लोकोऽयं मनुष्याः शक्तिपेशलाः ।
सन्तस्त्वेवाप्यमित्रेषु दयां प्राप्तेषु कुर्वते ॥ ३७

यम उवाच ।

पिपासितस्येव भवेद्यथा पय-
स्तथा त्वया वाक्यमिदं समीरितम् ।
विना पुनः सत्यवतोऽस्य जीवितं
वरं वृणीष्वेह शुभे यदिच्छसि ॥ ३८

सावित्र्युवाच ।

ममानपत्यः पृथिवीपतिः पिता
भवेत्पितुः पुत्रशतं तथौरसम् ।
कुलस्य संतानकरं च यद्भवे-
त्तृतीयमेतद्वरयामि ते वरम् ॥ ३९

यम उवाच ।

कुलस्य संतानकरं सुवर्चसं
शतं सुतानां पितुरस्तु ते शुभे ।
कृतेन कामेन नराधिपात्मजे
निवर्त दूरं हि पथस्त्वमागता ॥ ४०

सावित्र्युवाच ।

न दूरमेतन्मम भर्तृसन्निधौ
मनो हि मे दूरतरं प्रधावति ।
अथ व्रजन्नेव गिरं समुद्यतां
मयोच्यमानां शृणु भूय एव च ॥ ४१
विवस्वतस्त्वं तनयः प्रतापवां-
स्ततो हि वैवस्वत उच्यसे बुधैः ।
समेन धर्मेण चरन्ति ताः प्रजा-
स्ततस्तवेहेश्वर धर्मराजता ॥ ४२

आत्मन्यपि न विश्वासस्तथा भवति सत्सु यः ।
तस्मात्सत्सु विशेषेण सर्वः प्रणयमिच्छति ॥ ४३
सौहृदात्सर्वभूतानां विश्वासो नाम जायते ।
तस्मात्सत्सु विशेषेण विश्वासं कुरुते जनः ॥ ४४

यम उवाच ।

उदाहृतं ते वचनं यदङ्गने
शुभे न तादृक् त्वदृते श्रुतं मया ।
अनेन तुष्टोस्मि विनाऽस्य जीवितं
वरं चतुर्थं वरयस्व गच्छ च ॥ ४५

सावित्र्युवाच ।

ममात्मजं सत्यवतस्तथौरसं
भवेदुभाभ्यामिह यत्कुलोद्वहम् ।
शतं सुतानां बलवीर्यशालिना-
मिदं चतुर्थं वरयामि ते वरम् ॥ ४६

यम उवाच ।

शतं सुतानां बलवीर्यशालिनां
भविष्यति प्रीतिकरं तवाबले ।

गुरुः श्वशुरः ॥ ३३ ॥ समेन शत्रुमित्रादितारतम्यहीनेन तव धर्मेण प्रशासनेन ताः प्रजाश्चरन्ति । त्वदाज्ञावशगा इत्यर्थः । अतएव तव नाम धर्मराज इति । धर्मेणैव राजते धर्मोऽस्य राजत इति वा ॥ ४२ ॥ लौकिकेष्वपि विश्वासं कुर्वन्निष्टसिद्धिं प्राप्नोति किमुत त्वयि धर्मराजे इत्याशयेनाह आत्मन्यपीति । सर्वः प्रणमते नर इति क. थ. पाठः ॥ ४३ ॥ ते त्वया ॥ ४५ ॥

परिश्रमस्ते न भवेन्नृपात्मजे
निवर्त दूरं हि पथस्त्वमागता ॥ ४७

सावित्र्युवाच ।

सतां सदा शाश्वतधर्मवृत्तिः
सन्तो न सीदन्ति न च व्यथन्ति ।
सतां सद्भिर्नाफलः संगमोस्ति
सद्भ्यो भयं नानुवर्तन्ति सन्तः ॥ ४८
सन्तो हि सत्येन नयन्ति सूर्यं
सन्तो भूमिं तपसा धारयन्ति ।
सन्तो गतिर्भूतभव्यस्य राज-
न्सतां मध्ये नावसीदन्ति सन्तः ॥ ४९
आर्यजुष्टमिदं वृत्तमिति विज्ञाय शाश्वतम् ।
सन्तः परार्थं कुर्वाणा नावेक्षन्ति प्रतिक्रियाः ॥५०
न च प्रसादः सत्पुरुषेषु मोघो
न चाप्यर्थो नश्यति नापि मानः ।
यस्मादेतन्नियतं सत्सु नित्यं
तस्मात्सन्तो रक्षितारो भवन्ति ॥ ५१

यम उवाच ।

यथायथा भाषसि धर्मसंहितं
मनोनुकूलं सुपदं महार्थवत् ।
तथातथा मे त्वयि भक्तिरुत्तमा
वरं वृणीष्वाप्रतिमं पतिव्रते ॥ ५२

सावित्र्युवाच ।

न तेऽपवर्गः सुकृताद्विना कृत-
स्तथा यथाऽन्येषु वरेषु मानद ।
वरं वृणे जीवतु सत्यवानयं
यथा मृता ह्येवमहं पतिं विना ॥ ५३
न कामये भर्तृविनाकृता सुखं
न कामये भर्तृविनाकृता दिवम् ।
न कामये भर्तृविनाकृता श्रियं
न भर्तृहीना व्यवसामि जीवितुम् ॥ ५४
वरातिसर्गः शतपुत्रता मम
त्वयैव दत्तो ह्रियते च मे पतिः ।
वरं वृणे जीवतु सत्यवानयं
तवैव सत्यं वचनं भविष्यति ॥ ५५

मार्कण्डेय उवाच ।

तथेत्युक्त्वा तु तं पाशं मुक्त्वा वैवस्वतो यमः ।
धर्मराजः प्रहृष्टात्मा सावित्रीमिदमब्रवीत् ॥ ५६
एष भद्रे मया मुक्तो भर्ता ते कुलनन्दिनि ।
'तोषितोऽहं त्वया साध्वि वाक्यैर्धर्मार्थसंहितैः'५७
अरोगस्तव नेयश्च सिद्धार्थः स भविष्यति ।
चतुर्वर्षशतायुश्च त्वया सार्धमवाप्स्यति ॥ ५८
इष्ट्वा यज्ञैश्च धर्मेण ख्यातिं लोके गमिष्यति ।
त्वयि पुत्रशतं चैव सत्यवाञ्जनयिष्यति ॥ ५९
ते चापि सर्वे राजानः क्षत्रियाः पुत्रपौत्रिणः ।
ख्यातास्त्वन्नामधेयाश्च भविष्यन्तीह शाश्वताः६०
पितुश्च ते पुत्रशतं भविता तव मातरि ।
मालव्यां मालवा नाम शाश्वताः पुत्रपौत्रिणः ।
भ्रातरस्ते भविष्यन्ति क्षत्रियास्त्रिदशोपमाः ॥ ६१
एवं तस्मै वरं दत्त्वा धर्मराजः प्रतापवान् ।
निवर्तयित्वा सावित्रीं स्वमेव भवनं ययौ ॥ ६२
सावित्र्यपि यमे याते भर्तारं प्रतिलभ्य च ।
जगाम तत्र यत्रास्या भर्तुः शावं कलेवरम् ॥ ६३
सा भूमौ प्रेक्ष्य भर्तारमुपसृत्योपगृह्य च ।
उत्सङ्गे शिर आरोप्य भूमावुपविवेश ह ॥ ६४

---

शाश्वतो धर्मः पत्युः सकाशादेवापत्योत्पादनं सतां मादृशानां दाराणां तत्रैव वृत्तिः । ननु गतायुषि पत्यौ कथं तत् स्यादित्यत आह संत इति । वरं दत्त्वा सन्तो न व्यथन्ति नापि सीदन्ति किंतु उक्तं निर्वहन्त्येवेत्यर्थः । अत्यन्ताशक्येऽर्थे कथं स्यादित्यत आह सतामिति । सतामशक्यमपि नास्ति । भयं चान्यस्य तेभ्यो नास्तीति तत्त्वतोहं निर्भयास्मीति भावः ॥ ४८ ॥ त्वयापि सत्यं स्वीयं रक्षणीयमित्याह सन्तो हीति । भूतभव्यस्य भूतस्य भविष्यस्य च ॥ ४९ ॥ एतत् त्रयं प्रसादोऽर्थो मानश्च । दरिद्रस्य प्रसादो नार्थाय । श्रीमतां प्रसादोऽर्थकृदपि न मानदः । सतां तु मानद इति । खले तु प्रसाद एव नास्ति । अतस्त्रयं त्वय्येव स्थितमिति त्वं रक्षितास्माकं भवेति भावः ॥ ५१ ॥ ते त्वत्तः । अपवर्गः पुत्रफलप्राप्तिः सुकृताद्विना समीचीनाद्दाम्पत्ययोगादृते क्षेत्रजादिपुत्रार्पणेन न कृतो निष्पादितो भवति । यथान्येषु वरेषु भर्तृषु मदयन्त्यां वसिष्ठस्येव न तद्वत् । यस्मादेवं तस्माद्वरं वृणे ॥ ५३ ॥ व्यवसामि शक्नोमि ॥ ५४ ॥ त्वन्नामधेयाः सावित्रा इति ॥ ६० ॥

संज्ञां च स पुनर्लब्ध्वा सावित्रीमभ्यभाषत ।
प्रोष्यागत इव प्रेम्णा पुनःपुनरुदीक्ष्य वै ॥ ६५
सुचिरं बत सुप्तोस्मि किमर्थं नावबोधितः ।
क्व चासौ पुरुषः श्यामो योसौ मां संचकर्ष ह ॥ ६६
सावित्र्युवाच ।
सुचिरं त्वं प्रसुप्तोसि ममाङ्के पुरुषर्षभ ।
गतः स भगवान्देवः प्रजासंयमनो यमः ॥ ६७
विश्रान्तोसि महाभाग विनिद्रश्च नृपात्मज ।
यदि शक्यं समुत्तिष्ठ विगाढां पश्य शर्वरीम् ॥ ६८
मार्कण्डेय उवाच ।
उपलभ्य ततः संज्ञां सुखसुप्त इवोत्थितः ।
दिशः सर्वा वनान्तांश्च निरीक्ष्योवाच सत्यवान् ॥
फलाहारोस्मि निष्क्रान्तस्त्वया सह सुमध्यमे ।
ततः पाटयतः काष्ठं शिरसो मे रुजाऽभवत् ॥ ७०
शिरोभितापसंतप्तः स्थातुं चिरमशक्नुवन् ।
तवोत्सङ्गे प्रसुप्तोस्मि इति सर्वं स्मरे शुभे ॥ ७१
त्वयोपगूढस्य च मे निद्रयाऽपहृतं मनः ।
ततोऽपश्यं तमो घोरं पुरुषं च महौजसम् ॥ ७२
तद्यदि त्वं विजानासि किं तद्ब्रूहि सुमध्यमे ।
स्वप्नो मे यदि वा दृष्टो यदि वा सत्यमेव तत् ॥ ७३
तमुवाचाथ सावित्री रजनी व्यवगाहते ।
श्वस्ते सर्वं यथावृत्तमाख्यास्यामि नृपात्मज ॥ ७४
उत्तिष्ठोत्तिष्ठ भद्रं ते पितरौ पश्य सुव्रत ।
विगाढा रजनी चेयं निवृत्तश्च दिवाकरः ॥ ७५
नक्तंचराश्चरन्त्येते हृष्टाः क्रूराभिभाषिणः ।
श्रूयन्ते पर्णशब्दाश्च मृगाणां चरतां वने ॥ ७६
एता घोरं शिवा नादान्दिशं दक्षिणपश्चिमाम् ।
आस्थाय विरुवन्त्युग्राः कम्पयन्त्यो मनो मम ७७
सत्यवानुवाच ।
वनं प्रतिभयाकारं घनेन तमसा वृतम् ।
न विज्ञास्यसि पन्थानं गन्तुं चैव न शक्ष्यसि ॥ ७८
सावित्र्युवाच ।
अस्मिन्नद्य वने दग्धे शुष्कवृक्षः स्थितो ज्वलन् ।
वायुना धम्यमानोत्र दृश्यतेऽग्निः क्वचित्क्वचित् ७९
ततोऽग्निमानयित्वेह ज्वालयिष्यामि सर्वतः ।
काष्ठानीमानि सन्तीह जहि संतापमात्मनः ॥ ८०
यदि नोत्सहसे गन्तुं सरुजं त्वां हि लक्षये ।
न च ज्ञास्यसि पन्थानं तमसा संवृते वने ॥ ८१
श्वः प्रभाते वने दृश्ये यास्यावोऽनुमते तव ।
वसावेह क्षपामेकां रुचितं यदि तेऽनघ ॥ ८२
सत्यवानुवाच ।
शिरोरुजा निवृत्ता मे स्वस्थान्यङ्गानि लक्षये ।
मातापितृभ्यामिच्छामि संयोगं त्वत्प्रसादजम् ८३
न कदाचिद्विकाले हि गतपूर्वोहमाश्रमात् ।
अनागतायां सन्ध्यायां माता मे प्ररुणद्धि माम् ८४
दिवाऽपि मयि निष्क्रान्ते सन्तप्येते गुरू मम ।
विचिनोति हि मां तातः सहैवाश्रमवासिभिः ८५
मात्रा पित्रा च सुभृशं दुःखिताभ्यामहं पुरा ।
उपालब्धश्च बहुशश्चिरेणागच्छसीति हि ॥ ८६
कात्ववस्था तयोरद्य मदर्थमिति चिन्तये ।
तयोरदृश्ये मयि च महद्दुःखं भविष्यति ॥ ८७
पुरा मामूचतुश्चैव रात्रावस्नायमाणकौ ।
भृशं सुदुःखितौ वृद्धौ बहुशः प्रीतिसंयुतौ ॥ ८८
त्वया हीनौ न जीवाव मुहूर्तमपि पुत्रक ।
यावद्धरिष्यसे पुत्र तावन्नौ जीवितं ध्रुवम् ॥ ८९
वृद्धयोरन्धयोर्दृष्टिस्त्वयि वंशः प्रतिष्ठितः ।
त्वयि पिण्डश्च कीर्तिश्च सन्तानश्चावयोरिति ॥ ९०
माता वृद्धा पिता वृद्धस्तयोर्यष्टिरहं किल ।
तौ रात्रौ मामपश्यन्तौ कामवस्थां गमिष्यतः ॥ ९१
निद्रायाश्चाभ्यसूयामि यस्या हेतोः पिता मम ।
माता च संशयं प्राप्ता मत्कृतेऽनपकारिणी ॥ ९२
अहं च संशयं प्राप्तः कृच्छ्रामापदमास्थितः ।
मातापितृभ्यां हि विना नाहं जीवितुमुत्सहे ॥ ९३
व्यक्तमाकुलया बुद्ध्या प्रज्ञाचक्षुः पिता मम ।
एकैकमस्यां वेलायां पृच्छत्याश्रमवासिनम् ॥ ९४
नात्मानमनुशोचामि यथाऽहं पितरं शुभे ।

अस्नायमाणकौ रुदन्तौ ॥ ८८ ॥ नौ आवयोः ॥ ८९ ॥ प्रज्ञाचक्षुरन्धः ॥ ९४ ॥

भर्तारं चाप्यनुगतां मातरं भृशदुःखिताम् ॥९५
मत्कृते न हि तावद्य सन्तापं परमेष्यतः ।
जीवन्तावनुजीवामि भर्तव्यौ तौ मयेति ह ॥ ९६
तयोः प्रियं मे कर्तव्यमिति जीवामि चाप्यहम् ।
'परमं दैवतं तौ मे पूजनीयौ सदा मया ।
तयोस्तु मे सदाऽस्त्येवं व्रतमेतत्पुरातनम् ॥' ९७
मार्कण्डेय उवाच ।
एवमुक्त्वा स धर्मात्मा गुरुभक्तो गुरुप्रियः ।
उच्छ्रित्य बाहू दुःखार्तः सुस्वरं प्ररुरोद ह ॥ ९८
ततोऽब्रवीत्तथा दृष्ट्वा भर्तारं शोककर्शितम् ।
प्रमृज्याश्रूणि पाणिभ्यां सावित्री धर्मचारिणी ९९
यदि मेऽस्ति तपस्तप्तं यदि दत्तं हुतं यदि ।
श्वश्रूश्वशुरभर्तॄणां मम पुण्याऽस्तु शर्वरी ॥ १००
न स्मराम्युक्तपूर्वं वै स्वैरेष्वप्यनृतां गिरम् ।
तेन सत्येन तावद्य ध्रियेतां श्वशुरौ मम ॥ १०१
सत्यवानुवाच ।
कामये दर्शनं पित्रोर्याहि सावित्रि माचिरम् ।
'अपिनाम गुरू तौ हि पश्येयं ध्रियमाणकौ॥'१०२
पुरा मातुः पितुर्वाऽपि यदि पश्यामि विप्रियम् ।
न जीविष्ये वरारोहे सत्येनात्मानमालभे ॥१०३
यदि धर्मे च ते बुद्धिर्मां चेज्जीवन्तमिच्छसि ।
मम प्रियं वा कर्तव्यं गच्छावाश्रममन्तिकात् १०४
मार्कण्डेय उवाच ।
सावित्री तत उत्थाय केशान्संयम्य भामिनी ।
पतिमुत्थापयामास बाहुभ्यां परिगृह्य वै ॥ १०५
उत्थाय सत्यवांश्चापि प्रमृज्याङ्गानि पाणिना ।
सर्वा दिशः समालोक्य कठिने दृष्टिमादधे ॥१०६
तमुवाचाथ सावित्री श्वः फलानि हरिष्यसि ।
योगक्षेमार्थमेतं ते नेष्यामि परशुं त्वहम् ॥१०७
कृत्वा कठिनभारं सा वृक्षशाखावलम्बिनम् ।
गृहीत्वा परशुं भर्तुः सकाशे पुनरागमत् ॥ १०८
वामे स्कन्धे तु वामोरूर्भर्तुर्बाहुं निवेश्य च ।
दक्षिणेन परिष्वज्य जगाम गजगामिनी ॥१०९
सत्यवानुवाच ।
अभ्यासगमनाद्भीरु पन्थानो विदिता मम ।
वृक्षान्तरालोकितया ज्योत्स्नया चापि लक्षये ११०
आगतौ स्वः पथा येन फलान्यवचितानि च ।
यथागतं शुभे गच्छ पन्थानं मा विचारय ॥ १११
पलाशखण्डे चैतस्मिन्पन्था व्यावर्तते द्विधा ।
तस्योत्तरेण यः पन्थास्तेन गच्छ त्वरस्व च ॥ ११२
स्वस्थोस्मि बलवानस्मि दिदृक्षुः पितरावुभौ ।
ब्रुवन्नेव त्वरायुक्तः सम्प्रायादाश्रमं प्रति ॥ ११३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि अष्टनवत्यधिकद्विशततमोऽध्यायः ॥ २९८ ॥

## एकोनत्रिशततमोऽध्यायः ॥ २९९ ॥

अकस्माच्चक्षुर्लाभतुष्टेनापि पुत्रानागमविषण्णेन द्युमत्सेनेन तत्रतत्र तदन्वेषणम् ॥ १ ॥ ऋषिगणेन शुभनिमित्तज्ञापनेन समाश्वासिते तस्मिन्सावित्र्यासह सत्यवता पितुराश्रमाभिगमनम् ॥ २ ॥ मुनिगणाय सावित्र्या वने वृत्तवृत्तान्तनिवेदनम् ॥ ३ ॥

मार्कण्डेय उवाच ।
एतस्मिन्नेव काले तु द्युमत्सेनो महाबलः ।
लब्धचक्षुः प्रसन्नायां दृष्ट्यां सर्वं ददर्श ह ॥ १
स सर्वानाश्रमान्गत्वा शैब्यया सह भार्यया ।
पुत्रहेतोः परामार्तिं जगाम भरतर्षभ ॥ २
तावाश्रमान्नदीश्चैव वनानि च सरांसि च ।
तस्यां निशि विचिन्वन्तौ दम्पती परिजग्मतुः ॥३
श्रुत्वा शब्दं तु यं कंचिदुन्मुखौ सुतशङ्कया ।
सावित्रीसहितोऽभ्येति सत्यवानित्यभाषताम् ॥४
भिन्नैश्च परुषैः पादैः सव्रणैः शोणितोक्षितैः ।

ध्रियेतां जीवेताम् । श्वशुरौ श्वश्रूश्वशुरौ ॥ १०१ ॥ कठिने फलपूर्णे पात्रे ॥ १०६ ॥ कृत्वा आच्छिद्य आदायेत्यर्थः ॥ १०८ ॥ जगाम मृदुगामिनी इति थ. पाठः ॥ १०९ ॥

अष्टनवत्यधिकद्विशततमोऽध्यायः ॥ २९८ ॥
भिन्नैर्विदीर्णैः । परुषैः कर्कशैः ॥ ५ ॥

कुशकण्टकविद्धाङ्गावुन्मत्ताविव धावतः ॥ ५
ततोऽभिसृत्य तैर्विप्रैः सर्वैराश्रमवासिभिः ।
परिवार्य समाश्वास्य तावानीतौ स्वमाश्रमम् ॥ ६
तत्र भार्यासहायः स वृतो वृद्धैस्तपोधनैः ।
आश्वासितोपि चित्रार्थैः पूर्वराजकथाश्रयैः ॥ ७
ततस्तौ पुनराश्वस्तौ वृद्धौ पुत्रदिदृक्षया ।
बाल्यवृत्तानि पुत्रस्य सावित्र्या दर्शनानि च ।
शोकं जग्मतुरन्योन्यं स्मरन्तौ भृशदुःखितौ ॥ ८
पुनरुक्त्वा च करुणां वाचं तौ शोककर्शितौ ।
हापुत्र हासाध्वि वधु क्वासिक्वासीत्यरोदताम् ।
ब्राह्मणः सत्यवाक्तेषामुवाचेदं तयोर्वचः ॥ ९
सुवर्चा उवाच ।
यथास्य भार्या सावित्री तपसा च दमेन च ।
आचारेण च संयुक्ता तथा जीवति सत्यवान् १०
गौतम उवाच ।
वेदाः साङ्गा मयाऽधीतास्तपो मे संचितं महत् ।
कौमारब्रह्मचर्यं च गुरवोऽग्निश्च तोषिताः ॥ ११
समाहितेन चीर्णानि सर्वाण्येव व्रतानि मे ।
वायुभक्षोपवासश्च कृतो मे विधिवत्सदा ॥ १२
अनेन तपसा वेद्मि सर्वं परचिकीर्षितम् ।
सत्यमेतन्निबोधध्वं ध्रियते सत्यवानिति ॥ १३
शिष्य उवाच ।
उपाध्यायस्य मे वक्त्राद्यथा वाक्यं विनिःसृतम् ।
नैव जातु भवेन्मिथ्या तथा जीवति सत्यवान् १४
ऋषय ऊचुः ।
यथाऽस्य भार्या सावित्री सर्वैरेव सुलक्षणैः ।
अवैधव्यकरैर्युक्ता तथा जीवति सत्यवान् ॥ १५
भारद्वाज उवाच ।
यथाऽस्य भार्या सावित्री तपसा च दमेन च ।
आचारेण च संयुक्ता तथा जीवति सत्यवान् ॥ १६
दाल्भ्य उवाच ।
यथा दृष्टिः प्रवृत्ता ते सावित्र्याश्च यथा व्रतम् ।
गताऽऽहारमकृत्वैव तथा जीवति सत्यवान् ॥ १७
आपस्तम्ब उवाच ।
यथा वदन्ति शान्तायां दिशि वै मृगपक्षिणः ।
पार्थिवीं चैव वृद्धिं ते तथा जीवति सत्यवान् ॥ १८
धौम्य उवाच ।
सर्वैर्गुणैरुपेतस्ते यथा पुत्रो जनप्रियः ।
दीर्घायुर्लक्षणोपेतस्तथा जीवति सत्यवान् ॥ १९
मार्कण्डेय उवाच ।
एवमाश्वासितस्तैस्तु सत्यवाग्भिस्तपस्विभिः ।
तांस्तान्विगणयन्सर्वांस्ततः स्थिर इवाभवत् ॥ २०
ततो मुहूर्तात्सावित्री भर्त्रा सत्यवता सह ।
आजगामाश्रमं रात्रौ प्रहृष्टा प्रविवेश ह ॥ २१
'दृष्ट्वा चोत्पतिताः सर्वे हर्षं जग्मुश्च ते द्विजाः ।
कण्ठं माता पिता चास्य समालिङ्ग्याभ्यरोदतां ॥'
ब्राह्मणा ऊचुः ।
पुत्रेण संगतं त्वां तु चक्षुष्मन्तं निरीक्ष्य च ।
सर्वे वयं वै पृच्छामो वृद्धिं वै पृथिवीपते ॥ २३
समागमेन पुत्रस्य सावित्र्या दर्शनेन च ।
चक्षुषश्चात्मनो लाभात्त्रिभिर्दिष्ट्या विवर्धसे ॥ २४
सर्वैरस्माभिरुक्तं यत्तथा तन्नात्र संशयः ।
भूयोभूयः समृद्धिस्ते क्षिप्रमेव भविष्यति ॥ २५
मार्कण्डेय उवाच ।
ततोऽग्निं तत्र संज्वाल्य द्विजास्ते सर्व एव हि ।
उपासांचक्रिरे पार्थ द्युमत्सेनं महीपतिम् ॥ २६
शैब्या च सत्यवांश्चैव सावित्री चैकतः स्थिताः ।
सर्वैस्तैरभ्यनुज्ञाता विशोकाः समुपाविशन् ॥ २७
ततो राज्ञा सहासीनाः सर्वे ते वनवासिनः ।
जातकौतूहलाः पार्थ पप्रच्छुर्नृपतेः सुतम् ॥ २८
प्रागेव नागतं कस्मात्सभार्येण त्वया विभो ।
विरात्रे चागतं कस्मात्कोनु बन्धस्तवाभवत् ॥ २९
संतापितः पिता माता वयं चैव नृपात्मज ।
कस्मादिति न जानीमस्तत्सर्वं वक्तुमर्हसि ॥ ३०

कुशलानि च यानि मे इति ध. पाठः ॥ १२ ॥ शान्तायां प्रसन्नायाम् ॥ १८ ॥ विरात्रे बहुरात्रे काले आगतं आगमनम् ॥ २९ ॥ एकोनत्रिशततमोऽध्यायः ॥ २९९ ॥

सत्यवानुवाच ।
पित्राऽहमभ्यनुज्ञातः सावित्रीसहितो गतः ।
अथ मेऽभूच्छिरोदुःखं वने काष्ठानि भिन्दतः ३१
सुप्तश्चाहं वेदनया चिरमित्युपलक्षये ।
तावत्कालं न च मया सुप्तपूर्वं कदाचन ॥ ३२
सर्वेषामेव भवतां संतापो मा भवेदिति ।
अतो विरात्रागमनं नान्यदस्तीह कारणम् ॥ ३३
गौतम उवाच ।
अकस्माच्चक्षुषः प्राप्तिर्द्युमत्सेनस्य ते पितुः ।
नास्य त्वं कारणं वेत्सि सावित्री वक्तुमर्हति ॥ ३४
श्रोतुमिच्छामि सावित्रि त्वं हि वेत्थ परावरम् ।
त्वां हि जानामि सावित्रि सावित्रीमिव तेजसा ३५
त्वमत्र हेतुं जानीषे तस्मात्सत्यं निरुच्यताम् ।
रहस्यं यदि ते नास्ति किंचिदत्र वदस्व नः ॥ ३६
सावित्र्युवाच ।
एवमेतद्यथा वेत्थ संकल्पो नान्यथा हि वः ।
न हि किंचिद्रहस्यं मे श्रूयतां तथ्यमेव यत् ॥ ३७
मृत्युर्मे पत्युराख्यातो नारदेन महात्मना ।
स चाद्य दिवसः प्राप्तस्ततो नैनं जहाम्यहम् ॥ ३८
सुप्तं चैनं यमः साक्षादुपागच्छत्सकिंकरः ।
स एनमनयद्बद्ध्वा दिशं पितृनिषेविताम् ॥ ३९
अस्तौषं तमहं देवं सत्येन वचसा विभुम् ।
पञ्च वै तेन मे दत्ता वराः शृणुत तान्मम ॥ ४०
चक्षुषी च स्वराज्यं च द्वौ वरौ श्वशुरस्य मे ।
लब्धं पितुः पुत्रशतं पुत्राणां चात्मनः शतम् ॥ ४१
चतुर्वर्षशतायुर्मे भर्ता लब्धश्च सत्यवान् ।
भर्तुर्हि जीवितार्थं तु मया चीर्णं त्विदं व्रतम् ॥ ४२
एतत्सर्वं मयाऽऽख्यातं कारणं विस्तरेण वः ।
यथावृत्तं सुखोदर्कमिदं दुःखं महन्मम ॥ ४३
ऋषय ऊचुः ।
निमज्ज्यमानं व्यसनैरभिद्रुतं
कुलं नरेन्द्रस्य तमोमये ह्रदे ।
त्वया सुशीलव्रतपुण्यया कुलं
समुद्धृतं साध्वि पुनः कुलीनया ॥ ४४
मार्कण्डेय उवाच ।
तथा प्रशस्य ह्यभिपूज्य चैव
वरस्त्रियं तामृषयः समागताः ।
नरेन्द्रमामन्त्र्य सपुत्रमञ्जसा
शिवेन जग्मुर्मुदिताः स्वमालयम् ॥ ४५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि एकोनत्रिशततमोऽध्यायः ॥ २९९ ॥

## त्रिशततमोऽध्यायः ॥ ३०० ॥

साल्वदेशीयैर्द्युमत्सेनंप्रति तन्मन्त्रिणा तच्छत्रुनिबर्हणनिवेदनपूर्वकं निजनगरंप्रत्यागमनप्रार्थना ॥ १ ॥ सभार्येण द्युमत्सेनेन सावित्रीसत्यवद्भ्यां सह मुनिगणाभिवादनादिपूर्वकं स्वपुरंप्रत्यागमनम् ॥ २ ॥

मार्कण्डेय उवाच ।
तस्यां रात्र्यां व्यतीतायामुदिते सूर्यमण्डले ।
कृतपौर्वाह्णिकाः सर्वे समेयुस्ते तपोधनाः ॥ १
तदेव सर्वं सावित्र्या महाभाग्यं महर्षयः ।
द्युमत्सेनाय नातृप्यन्कथयन्तः पुनः पुनः ॥ २
ततः प्रकृतयः सर्वाः साल्वेभ्योऽभ्यागता नृपम् ।
आचख्युर्निहतं चैव स्वेनामात्येन तं द्विषम् ॥ ३
तं मन्त्रिणा हतं श्रोच्य ससहायं सबान्धवम् ।
न्यवेदयन्यथावृत्तं विद्रुतं च द्विषद्बलम् ॥ ४
ऐकमत्यं च सर्वस्य जनस्य स्वं नृपं प्रति ।
सचक्षुर्वाऽप्यचक्षुर्वा स नो राजा भवत्विति ॥ ५
अनेन निश्चयेनेह वयं प्रस्थापिता नृप ।
प्राप्तानीमानि यानानि चतुरङ्गं च ते बलम् ॥ ६
प्रयाहि राजन्भद्रं ते घुष्टस्ते नगरे जयः ।
अध्यास्स्व चिररात्राय पितृपैतामहं पदम् ॥ ७
मार्कण्डेय उवाच ।
चक्षुष्मन्तं च तं दृष्ट्वा राजानं वपुषाऽन्वितम् ।

चिररात्राय बहुकालम् ॥ ७ ॥

मूर्ध्ना निपतिताः सर्वे विस्मयोत्फुल्ललोचनाः ॥ ८
ततोऽभिवाद्य तान्वृद्धान्द्विजानाश्रमवासिनः ।
तैश्चाभिपूजितः सर्वैः प्रययौ नगरं प्रति ॥ ९
शैब्या च सह सावित्र्या स्वास्तीर्णेन सुवर्चसा ।
नरयुक्तेन यानेन प्रययौ सेनया वृता ॥ १०
ततोऽभिषिषिचुः प्रीत्या द्युमत्सेनं पुरोहिताः ।
पुत्रं चास्य महात्मानं यौवराज्येऽभ्यषेचयन् ॥ ११
ततः कालेन महता सावित्र्याः कीर्तिवर्धनम् ।
तद्वै पुत्रशतं जज्ञे शूराणामनिवर्तिनाम् ॥ १२
भ्रातॄणां सोदराणां च तथैवास्याभवच्छतम् ।
मद्राधिपस्याश्वपतेर्मालव्यां सुमहाबलम् ॥ १३
एवमात्मा पिता माता श्वश्रूः श्वशुर एव च ।
भर्तुः कुलं च सावित्र्या सर्वं कृच्छ्रात्समुद्धृतं १४
तथैवैषा हि कल्याणी द्रौपदी शीलसंमता ।
तारयिष्यति वः सर्वान्सावित्रीव कुलाङ्गना ॥ १५
वैशंपायन उवाच ।
एवं स पाण्डवस्तेन अनुनीतो महात्मना ।
विशोको विज्वरो राजन्काम्यके न्यवसत्तदा ॥ १६
यश्चेदं शृणुयाद्भक्त्या सावित्र्याख्यानमुत्तमम् ।
स सुखी सर्वसिद्धार्थो न दुःखं प्राप्नुयान्नरः ॥ १७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि त्रिशततमोऽध्यायः ॥ ३०० ॥

समाप्तं चेदं पतिव्रतामाहात्म्यपर्व ॥ १९ ॥

---

## ( अथ कुण्डलाहरणपर्व ॥ २० ॥ )

### एकाधिकत्रिशततमोऽध्यायः ॥ ३०१ ॥

सूर्येण स्वप्ने कर्णंप्रति इन्द्रेण पाण्डवप्रियचिकीर्षया भाविकवचकुण्डलयाचनानिवेदनपूर्वकं तद्दानप्रतिषेधवचनम् ॥ १ ॥ कर्णेन सूर्यंप्रति हेतूक्तिपूर्वकमिन्द्राय तद्दानप्रतिज्ञानम् ॥ २ ॥

---

जनमेजय उवाच ।
यत्तत्तदा महद्ब्रह्मँल्लोमशो वाक्यमब्रवीत् ।
इन्द्रस्य वचनादेव पाण्डुपुत्रं युधिष्ठिरम् ॥ १
यच्चापि ते भयं तीव्रं न च कीर्तयसे क्वचित् ।
तच्चाप्यपहरिष्यामि धनंजय इतो गते ॥ २
किंनु तज्जपतांश्रेष्ठ कर्णं प्रति महद्भयम् ।
आसीन्न च स धर्मात्मा कथयामास कस्यचित् ॥
वैशंपायन उवाच ।
अहं ते राजशार्दूल कथयामि कथामिमाम् ।
पृच्छतो भरतश्रेष्ठ शुश्रूषस्व गिरं मम ॥ ४
द्वादशे समतिक्रान्ते वर्षे प्राप्ते त्रयोदशे ।
पाण्डूनां हितकृच्छक्रः कर्णं भिक्षितुमुद्यतः ॥ ५
अभिप्रायमथो ज्ञात्वा महेन्द्रस्य विभावसुः ।
कुण्डलार्थे महाराज सूर्यः कर्णमुपागतः ॥ ६
महार्हे शयने वीरं स्पर्द्ध्यास्तरणसंवृते ।
शयानमतिविश्वस्तं ब्रह्मण्यं सत्यवादिनम् ॥ ७
स्वप्नान्ते निशि राजेन्द्र दर्शयामास रश्मिवान् ।
कृपया परयाऽऽविष्टः पुत्रस्नेहाच्च भारत ॥ ८
ब्राह्मणो वेदविद्भूत्वा सूर्यो योगर्द्धिरूपवान् ।
हितार्थमब्रवीत्कर्णं सान्त्वपूर्वमिदं वचः ॥ ९
कर्ण मद्वचनं तात शृणु सत्यभृतांवर ।
ब्रुवतोऽद्य महाबाहो सौहृदात्परमं हितम् ॥ १०
उपायास्यति शक्रस्त्वां पाण्डवानां हितेप्सया ।
ब्राह्मणच्छद्मना कर्ण कुण्डलोपजिहीर्षया ॥ ११

---

सर्वसिद्धार्थो दीर्घमायुरवाप्नुयात् इति क. पाठः ॥ १७ ॥ त्रिशततमोऽध्यायः ॥ ३०० ॥
विभावसुः विशिष्टा भाः दीप्तिः सैव वसु धनं यस्य तादृशः सूर्यः ॥ ६ ॥ स्पर्ध्यं विमर्दसहं स्पृहणीयं वा ॥ ७ ॥ स्वप्नान्ते स्वप्नमध्ये ॥ ८ ॥ एकाधिकत्रिशततमोऽध्यायः ॥ ३०१ ॥

विदितं तेन शीलं ते सर्वस्य जगतस्तथा ।
यथा त्वं भिक्षितः सद्भिर्ददास्येव न याचसे १२
त्वं हि तात ददास्येव ब्राह्मणेभ्यः प्रयाचितम् ।
वित्तं यच्चान्यदप्याहुर्न प्रत्याख्यासि कस्यचित् ॥
त्वां तु चैवंविधं ज्ञात्वा स्वयं वै पाकशासनः ।
आगन्ता कुण्डलार्थाय कवचं चैव भिक्षितुम् ॥ १४
तस्मै प्रयाचमानाय न देये कुण्डले त्वया ।
अनुनेयः परं शक्त्या श्रेय एतद्धि ते परम् ॥ १५
कुण्डलार्थेऽब्रुवंस्तात कारणैर्बहुभिस्त्वया ।
अन्यैर्बहुविधैर्वित्तैः सन्निवार्यः पुनःपुनः ॥ १६
रत्नैः स्त्रीभिस्तथा गोभिर्धनैर्बहुविधैरपि ।
निदर्शनैश्च बहुभिः कुण्डलेप्सुः पुरंदरः ॥ १७
यदि दास्यसि कर्ण त्वं सहजे कुण्डले शुभे ।
आयुषः प्रक्षयं गत्वा मृत्योर्वशमुपैष्यसि ॥ १८
कवचेन समायुक्तः कुण्डलाभ्यां च मानद ।
अवध्यस्त्वं रणेऽरीणामिति विद्धि वचो मम ॥ १९
अमृतादुत्थितं ह्येतदुभयं रत्नसंमितम् ।
तस्माद्रक्ष्यं त्वया कर्ण जीवितं चेत्प्रियं तव ॥ २०
कर्ण उवाच ।
को मामेवं भवान्प्राह दर्शयन्सौहृदं परम् ।
कामया भगवन्ब्रूहि को भवान्द्विजवेषधृक् ॥ २१
ब्राह्मण उवाच ।
अहं तात सहस्रांशुः सौहृदात्त्वां निदर्शये ।
कुरुष्वैतद्वचो मे त्वमेतच्छ्रेयः परं हि ते ॥ २२
कर्ण उवाच ।
श्रेय एव ममात्यन्तं यस्य मे गोपतिः प्रभुः ।
प्रवक्ताऽद्य हितान्वेषी शृणु चेदं वचो मम ॥ २३
प्रसादये त्वां वरदं प्रणयाच्च ब्रवीम्यहम् ।
न निवार्यो व्रतादस्मादहं यद्यस्मि ते प्रियः ॥ २४
व्रतं वै मम लोकोऽयं वेत्ति कृत्स्नं विभावसो ।
यथाऽहं द्विजमुख्येभ्यो दद्यां प्राणानपि ध्रुवम् ॥ २५
यद्यागच्छति मां शक्रो ब्राह्मणच्छद्मना वृतः ।
हितार्थं पाण्डुपुत्राणां खेचरोत्तम भिक्षितुम् ॥ २६
दास्यामि विबुधश्रेष्ठ कुण्डले वर्म चोत्तमम् ।
न मे कीर्तिः प्रणश्येत त्रिषु लोकेषु विश्रुता ॥ २७
मद्विधस्यायशस्यं हि न युक्तं प्राणरक्षणम् ।
युक्तं हि यशसा युक्तं मरणं लोकसंमतम् ॥ २८
सोहमिन्द्राय दास्यामि कुण्डले सह वर्मणा ।
यदि मां बलवृत्रघ्नो भिक्षार्थमुपयास्यति ॥ २९
हितार्थं पाण्डुपुत्राणां कुण्डले मे प्रयाचितुम् ।
तन्मे कीर्तिकरं लोके तस्याकीर्तिर्भविष्यति ॥ ३०
वृणोमि कीर्तिं लोके हि जीवितेनापि भानुमन् ।
कीर्तिमानश्नुते स्वर्गं हीनकीर्तिस्तु नश्यति ॥ ३१
कीर्तिर्हि पुरुषं लोके संजीवयति मातृवत् ।
अकीर्तिर्जीवितं हन्ति जीवतोपि शरीरिणः ॥ ३२
अयं पुराणः श्लोको हि स्वयं गीतो विभावसो ।
धात्रा लोकेश्वर यथा कीर्तिरायुर्नरस्य ह ॥ ३३
पुरुषस्य परे लोके कीर्तिरेव परायणम् ।
इह लोके विशुद्धा च कीर्तिरायुर्विवर्धनी ॥ ३४
सोहं शरीरजे दत्त्वा कीर्तिं प्राप्स्यामि शाश्वतीम् ।
दत्त्वा च विधिवद्दानं ब्राह्मणेभ्यो यथाविधि ॥ ३५
हुत्वा शरीरं संग्रामे कृत्वा कर्म सुदुष्करम् ।
विजित्य च परानाजौ यशः प्राप्स्यामि केवलम् ३६
भीतानामभयं दत्त्वा संग्रामे जीवितार्थिनाम् ।
वृद्धान्बालान्द्विजातींश्च मोक्षयित्वा महाभयात् ३७
प्राप्स्यामि परमं लोके यशः स्वर्ग्यमनुत्तमम् ।
जीवितेनापि मे रक्ष्या कीर्तिस्तद्विद्धि मे व्रतम् ३८
सोहं दत्त्वा मघवते भिक्षामेतामनुत्तमाम् ।
ब्राह्मणच्छद्मिने देव लोके गन्ता परां गतिम् ३९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि एकाधिकत्रिशततमोऽध्यायः ॥ ३०१ ॥

## द्व्यधिकत्रिशततमोऽध्यायः ॥ ३०२ ॥

सूर्येण हेतुकथनपूर्वकं पुनरिन्द्राय कवचकुण्डलदानप्रतिषेधोक्तिः ॥ १ ॥

सूर्य उवाच ।
माऽहितं कर्ण कार्षीस्त्वमात्मनः सुहृदां तथा ।
पुत्राणामथ भार्याणामथो मातुरथो पितुः ॥ १
शरीरस्याविरोधेन प्राणिनां प्राणभृद्वर ।
इष्यते यशसः प्राप्तिः कीर्तिश्च त्रिदिवे स्थिरा ॥ २
यस्त्वं प्राणविरोधेन कीर्तिमिच्छसि शाश्वतीम् ।
सा ते प्राणान्समादाय गमिष्यति न संशयः ॥ ३
जीवतां कुरुते कार्यं पिता माता सुतास्तथा ।
ये चान्ये बान्धवाः केचिल्लोकेऽस्मिन्पुरुषर्षभ ॥ ४
राजानश्च नरव्याघ्र पौरुषेण निबोध तत् ।
कीर्तिश्च जीवतः साध्वी पुरुषस्य महाद्युते ॥ ५
मृतस्य कीर्त्या किं कार्यं भस्मीभूतस्य देहिनः ।
मृतः कीर्तिं न जानीते जीवन्कीर्तिं समश्नुते ॥ ६
मृतस्य कीर्तिर्मर्त्यस्य यथा माला गतायुषः ।
अहं तु त्वां ब्रवीम्येतद्भक्तोसीति हितेप्सया ॥ ७
भक्तिमन्तो हि मे रक्ष्या इत्येतेनापि हेतुना ।
भक्तोयं परया भक्त्या मामित्येव महाभुज ॥ ८
ममापि भक्तिरुत्पन्ना स त्वं कुरु वचो मम ।
अस्ति चात्र परं किंचिदध्यात्मं देवनिर्मितम् ।
अतश्च त्वां ब्रवीम्येतत्क्रियतामविशङ्कया ॥ ९
देवगुह्यं त्वया ज्ञातुं न शक्यं पुरुषर्षभ ।
तस्मान्नाख्यामि ते गुह्यं काले वेत्स्यति तद्भवान् ॥
पुनरुक्तं च वक्ष्यामि त्वं राधेय निबोध तत् ।
माऽस्मै ते कुण्डले दद्या भिक्षिते वज्रपाणिना ॥ ११
शोभसे कुण्डलाभ्यां च रुचिराभ्यां महाद्युते ।
विशाखयोर्मध्यगतः शशीव विमले दिवि ॥ १२
कीर्तिश्च जीवतः साध्वी पुरुषस्येति विद्धि तत् ।
प्रत्याख्येयस्त्वया तात कुण्डलार्थे सुरेश्वरः ॥ १३
'पाण्डवानां हिते युक्तो भिक्षन्ब्राह्मणवेषधृत् ।'
शक्या बहुविधैर्वाक्यैः कुण्डलेप्सा त्वयाऽनघ ।
विहन्तुं देवराजस्य हेतुयुक्तैः पुनःपुनः ॥ १४
उपपत्त्युपपन्नार्थैर्माधुर्यकृतभूषणैः ।
पुरंदरस्य कर्ण त्वं बुद्धिमेतामपानुद ॥ १५
त्वं हि नित्यं नरव्याघ्र स्पर्धसे सव्यसाचिना ।
सव्यसाची त्वया चेह युधि शूरः समेष्यति ॥ १६
न तु त्वामर्जुनः शक्तः कुण्डलाभ्यां समन्वितम् ।
विजेतुं युधि यद्यस्य स्वयमिन्द्रः शरो भवेत् ॥ १७
तस्मान्न देये शक्राय त्वयैते कुण्डले शुभे ।
संग्रामे यदि निर्जेतुं कर्ण कामयसेऽर्जुनम् ॥ १८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि द्व्यधिकत्रिशततमोऽध्यायः ॥ ३०२ ॥

---

## त्र्यधिकत्रिशततमोऽध्यायः ॥ ३०३ ॥

कर्णेन सूर्यंप्रति सानुनयं शक्राय कवचकुण्डलदानेऽभ्यनुज्ञाप्रार्थना ॥ १ ॥ सूर्येण कर्णंप्रति शक्राच्छक्तिग्रहणचोदनापूर्वकं कुण्डलादिदानाभ्यनुज्ञानम् ॥ २ ॥

कर्ण उवाच ।
भगवन्तमहं भक्तो यथा मां वेत्थ गोपते ।
तथा परमतिग्मांशो नास्त्यदेयं कथंचन ॥ १
न मे दारा न मे पुत्रा न चात्मा सुहृदो न च ।
तथेष्टा वै सदा भक्त्या यथा त्वं गोपते मम ॥ २
इष्टानां च महात्मानो भक्तानां च न संशयः ।

---

जीवतां पुत्रादीनां कार्यं प्रयोजनं परिष्वङ्गादिजं सुखं पित्रादिः कुरुते लभते ॥ ४ ॥ मां मम ॥ ८ ॥ विशाखयोः विशाखानक्षत्रस्य द्वे भास्वरे तारे तयोर्मध्ये गतः पूर्णचन्द्रः ॥ १२ ॥ विहन्तुं शक्येति संबन्धः ॥ १४ ॥ द्व्यधिकत्रिशततमोऽध्यायः ॥ ३०२ ॥

कुर्वन्ति भक्तिमिष्टां च जानीषे त्वं च भास्कर ॥ ३
इष्टो भक्तश्च मे कर्णो न चान्यद्दैवतं दिवि ।
जानीत इति वै कृत्वा भगवानाह मद्धितम् ॥ ४
भूयश्च शिरसा याचे प्रसाद्य च पुनःपुनः ।
इति ब्रवीमि तिग्मांशो त्वं तु मे क्षन्तुमर्हसि ॥ ५
बिभेमि न तथा मृत्योर्यथा बिभ्येऽनृतादहम् ।
विशेषेण द्विजातीनां सर्वेषां सर्वदा सताम् ॥ ६
प्रदाने जीवितस्यापि न मेऽत्रास्ति विचारणा ।
यच्च मामात्थ देव त्वं पाण्डवं फल्गुनं प्रति ॥ ७
व्येतु संतापजं दुःखं तव भास्कर मानसम् ।
अर्जुनप्रतिमं चैव विजेष्यामि रणेऽर्जुनम् ॥ ८
तवापि विदितं देव ममाप्यस्त्रबलं महत् ।
जामदग्न्यादुपात्तं यत्तथा द्रोणान्महात्मनः ॥ ९
इदं त्वमनुजानीहि सुरश्रेष्ठ व्रतं मम ।
भिक्षते वज्रिणे दद्यामपि जीवितमात्मनः ॥ १०
सूर्य उवाच ।
यदि तात ददास्येते वज्रिणे कुण्डले शुभे ।
त्वमप्येनमथो ब्रूया विजयार्थं महाबल ॥ ११
नियमेन प्रदद्यास्त्वं कुण्डले वै शतक्रतोः ।
अवध्यो ह्यसि भूतानां कुण्डलाभ्यां समन्वितः ॥
अर्जुनेन विनाशं हि तव दानवसूदनः ।
प्रार्थयानो रणे वत्स कुण्डले ते जिहीर्षति ॥ १२
स त्वमप्येनमाराध्य सूनृताभिः पुनः पुनः ।
अभ्यर्थयेथा देवेशममोघार्थं पुरंदरम् ॥ १४
अमोघां देहि मे शक्तिममित्रविनिबर्हिणीम् ।
दास्यामि ते सहस्राक्ष कुण्डले वर्म चोत्तमम् ॥ १५
इत्येव नियमेन त्वं दद्याः शक्राय कुण्डले ।
तया त्वं कर्ण संग्रामे हनिष्यसि रणे रिपून् ॥ १६
नाहत्वा हि महाबाहो शत्रूनेति करं पुनः ।
सा शक्तिर्देवराजस्य शतशोऽथ सहस्रशः ॥ १७
वैशंपायन उवाच ।
एवमुक्त्वा सहस्रांशुः सहसाऽन्तरधीयत ।
'कर्णस्तु बुबुधे राजन्स्वप्नान्ते प्रव्यथन्निव ॥ १८
प्रतिबुद्धस्तु राधेयः स्वप्नं संचिन्त्य भारत ।
चकार निश्चयं राजञ्शक्त्यर्थं वदतांवर ॥ १९
यदि मामिन्द्र आयाति कुण्डलार्थं परन्तप ।
शक्त्या तस्मै प्रदास्यामि कुण्डले वर्म चैव ह ॥ २०
स कृत्वा प्रातरुत्थाय कार्याणि भरतर्षभ ।
ब्राह्मणान्वाचयित्वा च यथाकार्यमुपाक्रमत् ॥ २१
विधिना राजशार्दूल मुहूर्तमजपत्तदा ।'
ततः सूर्याय जप्यान्ते कर्णः स्वप्नं न्यवेदयत् ॥ २२
यथा दृष्टं यथातत्त्वं यथोक्तमुभयोर्निशि ।
तत्सर्वमानुपूर्व्येण शशंसास्मै वृषस्तदा ॥ २३
तच्छ्रुत्वा भगवान्देवो भानुः स्वर्भानुसूदनः ।
उवाच तं तथेत्येव कर्णं सूर्यः स्मयन्निव ॥ २४
ततस्तत्त्वमिति ज्ञात्वा राधेयः परवीरहा ।
शक्तिमेवाभिकाङ्क्षन्वै वासवं प्रत्यपालयत् ॥ २५

॥ इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि त्र्यधिकत्रिशततमोऽध्यायः ॥ ३०३ ॥

---

## चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३०४ ॥

स्वावासे दुर्वाससमावासयता कुन्तिभोजेन तत्परिचर्यायै कुन्त्या नियोजनम् ॥ १ ॥

जनमेजय उवाच ।
किं तद्गुह्यं न चाख्यातं कर्णायेहोष्णरश्मिना ।
कीदृशे कुण्डले ते च कवचं चैव कीदृशम् ॥ १
कुतश्च कवचं तस्य कुण्डले चैव सत्तम ।
एतदिच्छाम्यहं श्रोतुं तन्मे ब्रूहि तपोधन ॥ २
वैशंपायन उवाच ।
अहं राजन्ब्रवीम्येतत्तस्य गुह्यं विभावसोः ।
यादृशे कुण्डले ते च कवचं चैव यादृशम् ॥ ३

अस्मै सूर्याय । वृषः कर्णः ॥ २३ ॥ स्वर्भानुसूदनः राहुदमनः ॥ २४ ॥ त्र्यधिकत्रिशततमोऽध्यायः ॥ ३०३ ॥

कुन्तिभोजं पुरा राजन्ब्राह्मणः पर्युपस्थितः ।
तिग्मतेजा महान्प्रांशुः श्मश्रुदण्डजटाधरः ॥ ४
दर्शनीयोऽनवद्याङ्गस्तेजसा प्रज्वलन्निव ।
मधुपिङ्गो मधुरवाक्तपःस्वाध्यायभूषणः ॥ ५
स राजानं कुन्तिभोजमब्रवीत्सुमहातपाः ।
भिक्षामिच्छामि वै भोक्तुं तव गेहे विमत्सर ॥ ६
न मे व्यलीकं कर्तव्यं त्वया वा तव चानुगैः ।
एवं वत्स्यामि ते गेहे यदि ते रोचतेऽनघ ॥ ७
यथाकामं च गच्छेयमागच्छेयं तथैव च ।
शय्यासने च मे राजन्नापराध्येत कश्चन ॥ ८
तमब्रवीत्कुन्तिभोजः प्रीतियुक्तमिदं वचः ।
एवमस्तु परं चेति पुनश्चैनमथाब्रवीत् ॥ ९
मम कन्या महाप्राज्ञ पृथा नाम यशस्विनी ।
शीलवृत्तान्विता साध्वी नियताऽनवमानिनी १०
उपस्थास्यति सा त्वां वै पूजयाऽनवमत्य च ।
तस्याश्च शीलवृत्तेन तुष्टिं समुपयास्यसि ॥ ११
एवमुक्त्वा तु तं विप्रमभिपूज्य यथाविधि ।
उवाच कन्यामभ्येत्य पृथां पृथुललोचनाम् ॥१२
अयं वत्से महाभागो ब्राह्मणो वस्तुमिच्छति ।
मम गेहे मया चास्य तथेत्येवं प्रतिश्रुतम् ॥ १३
त्वयि वत्से परायत्तं ब्राह्मणस्याभिराधनम् ।
तन्मे वाक्यममिथ्या त्वं कर्तुमर्हसि कर्हिचित् १४
अयं तपस्वी भगवान्स्वाध्यायनियतो द्विजः ।
यद्यद्ब्रूयान्महातेजास्तत्तद्देयममत्सरात् ॥ १५
ब्राह्मणा हि परं तेजो ब्राह्मणा हि परं तपः ।
ब्राह्मणानां नमस्कारैः सूर्यो दिवि विराजते ॥१६
अमानयन्हि दाण्डक्यो वातापिश्च महासुरः ।
निहतो ब्रह्मदण्डेन तालजङ्घस्तथैव च ।
'विन्ध्याद्रिश्च समुद्रश्च नहुषश्च विहिंसितः ॥'१७
सोयं वत्से महाभार आहितस्त्वयि सांप्रतम् ।
त्वं सदा नियता कुर्या ब्राह्मणस्याभिराधनम् १८
जानामि प्रणिधानं ते बाल्यात्प्रभृति नन्दिनि ।
ब्राह्मणेष्विह सर्वेषु गुरुबन्धुषु चैव ह ॥ १९
तथा प्रेष्येषु सर्वेषु मित्रसंबन्धिमातृषु ।
मयि चैव यथावत्त्वं सर्वमावृत्य वर्तसे ॥ २०
न ह्यतुष्टो जनोऽस्तीह पुरे चान्तःपुरे च ते ।
सम्यग्वृत्त्याऽनवद्याङ्गि तव भृत्यजनेष्वपि ॥ २१
संदेष्टव्यां तु मन्ये त्वां द्विजातिं कोपनं प्रति ।
पृथे बालेति कृत्वा वै सुता चासि ममेति च २२
वृष्णीनां च कुले जाता शूरस्य दयिता सुता ।
दत्ता प्रीतिमता मह्यं पित्रा बाला पुरा स्वयम् २३
वसुदेवस्य भगिनी सुतानां प्रवरा मम ।
अग्र्यमग्रे प्रतिज्ञाय तेनासि दुहिता मम ॥ २४
तादृशे हि कुले जाता कुले मम विवर्धिता ।
सुखात्सुखमनुप्राप्ता ह्रदाद्ध्रदमिवापगा ॥ २५
दौष्कुलेया विशेषेण कथंचित्प्रग्रहं गताः ।
बालभावाद्विकुर्वन्ति प्रायशः प्रमदाः शुभे ॥ २६
पृथे राजकुले जन्म रूपं चापि तवाद्भुतम् ।
तेन तेनासि संपन्ना समुपेता च भामिनि ॥ २७
सा त्वं दर्पं परित्यज्य दम्भं मानं च भामिनि ।
आराध्य वरदं विप्रं श्रेयसा योक्ष्यसे पृथे ॥ २८
एवं प्राप्स्यसि कल्याणि कल्याणमनघे ध्रुवम् ।
कोपिते च द्विजश्रेष्ठे कृत्स्नं दह्येत मे कुलम् ॥ २९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि चतुरधिकत्रिशततमोऽध्यायः ॥ ३०४ ॥

---

अनवमत्य अवमानमकृत्वा ॥ ११ ॥ वस्तुं वासं कर्तुम् ॥ १३ ॥ प्रणिधानं चित्तैकाग्र्यम् ॥ १९ ॥ आवृत्य व्याप्य ॥ २० ॥ अग्र्यं अग्रे देयं मया प्रथममपत्यं तुभ्यं देयमिति प्रतिज्ञातमित्यर्थः ॥ २४ ॥ ह्रदमिवागतेति झ. पाठः ॥ २५ ॥ दौष्कुलेयाः दुष्कुले जाताः । प्रग्रहं निर्बन्धं गताः प्राप्ताः विकुर्वन्ति दौष्ठ्यं कुर्वन्ति ॥ २६ ॥ चतुरधिकत्रिशततमोऽध्यायः ॥ ३०४ ॥

## पञ्चाधिकत्रिशततमोऽध्यायः ॥ ३०५ ॥

कुन्त्या सावधानं परिचर्यया दुर्वाससः परितोषणम् ॥ १ ॥

कुन्त्युवाच ।
ब्राह्मणं यन्त्रिता राजन्नुपस्थास्यामि पूजया ।
यथाप्रतिज्ञं राजेन्द्र न च मिथ्या ब्रवीम्यहम् ॥ १
एष चैव स्वभावो मे पूजयेयं द्विजानिति ।
तव चैव प्रियं कार्यं श्रेयश्च परमं मम ॥ २
यद्येवैष्यति सायाह्ने यदि प्रातरथो निशि ।
यद्यर्धरात्रे भगवान्न मे कोपं करिष्यति ॥ ३
लाभो ममैष राजेन्द्र यद्वै पूजयितुं द्विजान् ।
आदेशे तव तिष्ठन्ती हितं कुर्यां नरोत्तम ॥ ४
विस्रब्धो भव राजेन्द्र न व्यलीकं द्विजोत्तमः ।
वसन्प्राप्स्यति ते गेहे सत्यमेतद्ब्रवीमि ते ॥ ५
यत्प्रियं च द्विजस्यास्य हितं चैव तवानघ ।
यतिष्यामि तथा राजन्व्येतु ते मानसो ज्वरः ॥ ६
ब्राह्मणा हि महाभागाः पूजिताः पृथिवीपते ।
तारणाय समर्थाः स्युर्विपरीते वधाय च ॥ ७
साऽहमेतद्विजानन्ती तोषयिष्ये द्विजोत्तमम् ।
न मत्कृते व्यथां राजन्प्राप्स्यसि द्विजसत्तमात् ॥ ८
अपराधेऽपि राजेन्द्र राज्ञामश्रेयसे द्विजाः ।
भवन्ति च्यवनो यद्वत्सुकन्यायाः कृते पुरा ॥ ९
नियमेन परेणाहमुपस्थास्ये द्विजोत्तमम् ।
यथा त्वया नरेन्द्रेदं भाषितं ब्राह्मणं प्रति ॥ १०
एवं ब्रुवन्तीं बहुशः परिष्वज्य समर्थ्य च ।
इतिचेति च कर्तव्यं राजा सर्वमथादिशत् ॥ ११
एवमेतत्त्वया भद्रे कर्तव्यमविशङ्कया ।
मद्धितार्थं तथाऽऽत्मार्थं कुलार्थं चाप्यनिन्दिते ॥ १२
एवमुक्त्वा तु तां कन्यां कुन्तिभोजो महायशाः ।
पृथां परिददौ तस्मै द्विजाय द्विजवत्सलः ॥ १३
इयं ब्रह्मन्मम सुता बाला सुखविवर्धिता ।
अपराध्येत यत्किंचिन्न कार्यं हृदि तत्त्वया ॥ १४
द्विजातयो महाभागा वृद्धबालतपस्विषु ।
भवन्त्यक्रोधनाः प्रायो ह्यपराद्धेषु नित्यदा ॥ १५
सुमहत्यपराधेऽपि क्षान्तिः कार्या द्विजातिभिः ।
यथाशक्ति यथोत्साहं पूजा ग्राह्या द्विजोत्तम ॥ १६
तथेति ब्राह्मणेनोक्ते स राजा प्रीतमानसः ।
हंसचन्द्रांशुसंकाशं गृहमस्मै न्यवेदयत् ॥ १७
तत्राग्निशरणे क्लृप्तमासनं तस्य भानुमत् ।
आहारादि च सर्वं तत्तथैव प्रत्यवेदयत् ॥ १८
निक्षिप्य राजपुत्री तु तन्द्रीं मानं तथैव च ।
आतस्थे परमं यत्नं ब्राह्मणस्याभिराधने ॥ १९
तत्र सा ब्राह्मणं गत्वा पृथा शौचपरा सती ।
विधिवत्परिचारार्हं देववत्पर्यतोषयत् ॥ २०

॥ इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि पञ्चाधिकत्रिशततमोऽध्यायः ॥ ३०५ ॥

---

## षडधिकत्रिशततमोऽध्यायः ॥ ३०६ ॥

कुन्तीपरिचर्यासंतुष्टेन दुर्वाससा तांप्रति अभीप्सितार्थवरणचोदना ॥ १ ॥ तथा किंचिदप्यवृण्वन्त्यै तस्यै स्वयमेव सकलदेववशीकरणदक्षस्य मन्त्रस्योपदेशः ॥ २ ॥ ततस्तेन कुन्तिभोजामन्त्रणपूर्वकमन्तर्धानम् ॥ ३ ॥

वैशंपायन उवाच ।
सा तु कन्या महाराज ब्राह्मणं संशितव्रतम् ।
तोषयामास शुद्धेन मनसा संशितव्रता ॥ १
प्रातरेष्याम्यथेत्युक्त्वा कदाचिद्द्विजसत्तमः ।

यन्त्रिता नियमयुक्ता ॥ १ ॥ विस्रब्धो विश्वस्तः । व्यलीकमप्रियम् ॥ ५ ॥ अग्निशरणे अग्निगृहे ॥ १८ ॥ तन्द्रीं आलस्यम् ॥ १९ ॥ परिचारार्हं पूजार्हम् ॥ २० ॥ पञ्चाधिकत्रिशततमोऽध्यायः ॥ ३०५ ॥

तत आयाति राजेन्द्र सायं रात्रावथो पुनः ॥ २
तं च सर्वासु वेलासु भक्ष्यभोज्यप्रतिश्रयैः ।
पूजयामास सा कन्या वर्धमानैस्तु सर्वदा ॥ ३
अन्नादिसमुदाचारः शय्यासनकृतस्तथा ।
दिवसेदिवसे तस्य वर्धते न तु हीयते ॥ ४
निर्भर्त्सनापवादैश्च तथैवाप्रियया गिरा ।
ब्राह्मणस्य पृथा राजन्न चकाराप्रियं तदा ॥ ५
स्वप्नकाले पुनश्चैति न चैति बहुशो द्विजः ।
सुदुर्लभमपि ह्यन्नं दीयतामिति सोऽब्रवीत् ॥ ६
कृतमेव च तत्सर्वं यथा तस्मै न्यवेदयत् ।
शिष्यवत्पुत्रवच्चैव स्वसृवच्च सुसंयता ॥ ७
यथोपजोषं राजेन्द्र द्विजातिप्रवरस्य सा ।
प्रीतिमुत्पादयामास कन्यारत्नमनिन्दिता ॥ ८
तस्यास्तु शीलवृत्तेन तुतोष द्विजसत्तमः ।
अवधानेन भूयोऽस्याः परं यत्नमथाकरोत् ॥ ९
तां प्रभाते च सायं च पिता पप्रच्छ भारत ।
अपि तुष्यति ते पुत्रि ब्राह्मणः परिचर्यया ॥ १०
तं सा परममित्येव प्रत्युवाच यशस्विनी ।
ततः प्रीतिमवापाग्र्यां कुन्तिभोजो महामनाः॥११
ततः संवत्सरे पूर्णे यदाऽसौ जपतांवरः ।
नापश्यद्दुष्कृतं किंचित्पृथायाः सौहृदे रतः ॥ १२
ततः प्रीतमना भूत्वा स एनां ब्राह्मणोऽब्रवीत् ।
प्रीतोस्मि परमं भद्रे परिचारेण ते शुभे ॥ १३
वरान्वृणीष्व कल्याणि दुरापान्मानुषैरिह ।
यैस्त्वं सीमन्तिनीः सर्वा यशसाऽभिभविष्यसि१४

कुन्त्युवाच ।

कृतानि मम सर्वाणि यस्या मे वेदवित्तम ।
त्वं प्रसन्नः पिता चैव कृतं विप्र वरैर्मम ॥ १५

ब्राह्मण उवाच ।

यदि नेच्छसि मत्तस्त्वं वरं भद्रे शुचिस्मिते ।
इमं मन्त्रं गृहाण त्वमाह्वानाय दिवौकसाम् ॥ १६
यंयं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि ।
तेनतेन वशे भद्रे स्थातव्यं ते भविष्यति ॥ १७
अकामो वा सकामो वा स समेष्यति ते वशे ।
विबुधो मन्त्रसंभ्रान्तो वाक्यैर्भृत्य इवानतः ॥ १८

वैशंपायन उवाच ।

न शशाक द्वितीयं सा प्रत्याख्यातुमनिन्दिता ।
तं वै द्विजातिप्रवरं तदा शापभयान्नृप ॥ १९
ततस्तामनवद्याङ्गीं ग्राहयामास स द्विजः ।
मन्त्रग्रामं तदा राजन्नथर्वशिरसि श्रुतम् ॥ २०
तं प्रदाय तु राजेन्द्र कुन्तिभोजमुवाच ह ।
उषितोस्मि सुखं राजन्कन्यया परितोषितः ॥ २१
तव गेहे सुविहितः सदा सुप्रतिपूजितः ।
साधयिष्यामहे तावदित्युक्त्वाऽन्तरधीयत ॥ २२
स तु राजा द्विजं दृष्ट्वा तत्रैवान्तर्हितं तदा ।
बभूव विस्मयाविष्टः पृथां च समपूजयत् ॥ २३

॥ इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि षडधिकत्रिशततमोऽध्यायः ॥ ३०६ ॥

---

## सप्ताधिकत्रिशततमोऽध्यायः ॥ ३०७ ॥

कदाचन ऋतुस्नातया सूर्यमवलोकयन्त्या कुन्त्या दुर्वाससा दत्तमन्त्रपरीक्षणाय तदाह्वानम् ॥ १ ॥ मन्त्रबलादुपागतेन रविणा स्वेन सङ्गमनङ्गीकुर्वन्त्याः कुन्त्या विभीषिकापूर्वकं सङ्गायानुनयनम् ॥ २ ॥

वैशंपायन उवाच ।

गते तस्मिन्द्विजश्रेष्ठे कस्मिंश्चित्कालपर्यये ।
चिन्तयामास सा कन्या मन्त्रग्रामबलाबलम् ॥ १
अयं वै कीदृशस्तेन मम दत्तो महात्मना ।

प्रतिश्रयैः आश्रयैः शयनासनाद्यैः ॥ ३ ॥ अन्नादिना समुदाचारः समुपसर्पणम् ॥ ४ ॥ यथोपजोषं प्रियमनतिक्रम्य ॥ ८ ॥ शीलं शमादि । वृत्तं परिचर्या । अस्याः पृथायाः श्रेयोर्थं अवधानेन समाधिकाले यत्नमकरोत् । यत्नेन तस्याः कल्याणं चिन्तितवानित्यर्थः ॥ ९ ॥ द्वितीयं द्वितीयवारम् । न शशाक द्विजातिं सा इति थ. ध. पाठः ॥ १९ ॥ विहितः विशेषेण हितस्तृप्तः ॥ २२ ॥ षडधिकत्रिशततमोऽध्यायः ॥ ३०६ ॥

मन्त्रग्रामो बलं तस्य ज्ञास्ये नातिचिरादिति ॥ २
एवं संचिन्तयन्ती सा ददर्शर्तुं यदृच्छया ।
व्रीडिता साऽभवद्वाला कन्याभावे रजस्वला ॥ ३
ततो हर्म्यतलस्था सा महार्हशयनोचिता ।
प्राच्यां दिशि समुद्यन्तं ददर्शादित्यमण्डलम् ॥ ४
तत्र बद्धमनोदृष्टिरभवत्सा सुमध्यमा ।
न चातप्यत रूपेण भानोः सन्ध्यागतस्य सा ॥ ५
तस्या दृष्टिरभूद्दिव्या साऽपश्यद्दिव्यदर्शनम् ।
आमुक्तकवचं देवं कुण्डलाभ्यां विभूषितम् ॥ ६
तस्याः कौतूहलं त्वासीन्मन्त्रं प्रति नराधिप ।
आह्वानमकरोत्साऽथ तस्य देवस्य भामिनी ॥ ७
प्राणानुपस्पृश्य तदा ह्याजुहाव दिवाकरम् ।
आजगाम ततो राजंस्त्वरमाणो दिवाकरः ॥ ८
मधुपिङ्गो महाबाहुः कम्बुग्रीवो हसन्निव ।
अङ्गदी बद्धमुकुटो दिशः प्रज्वालयन्निव ॥ ९
योगात्कृत्वा द्विधाऽऽत्मानमाजगाम तताप च ।
आबभाषे ततः कुन्तीं साम्ना परमवल्गुना ॥ १०
आगतोस्मि वशं भद्रे तव मन्त्रबलात्कृतः ।
किं करोमि वशो राज्ञि ब्रूहि कर्ता तदस्मि ते ११

कुन्त्युवाच ।

गम्यतां भगवंस्तत्र यत एवागतो ह्यसि ।
कौतूहलात्समाहूतः प्रसीद भगवन्निति ॥ १२

सूर्य उवाच ।

गमिष्येऽहं यथा मा त्वं ब्रवीषि तनुमध्यमे ।
न तु देवं समाहूय न्याय्यं प्रेषयितुं वृथा ॥ १३
तवाभिसन्धिः सुभगे सूर्यात्पुत्रो भवेदिति ।
वीर्येणाप्रतिमो लोके कवची कुण्डलीति च ॥ १४
सा त्वमात्मप्रदानं वै कुरुष्व गजगामिनि ।
उत्पत्स्यति हि पुत्रस्ते यथासंकल्पमङ्गने ।
अथ गच्छाम्यहं भद्रे त्वया संगम्य सुस्मिते ॥ १५
यदि त्वं वचनं नाद्य करिष्यसि मम प्रियम् ।
शप्स्ये कन्येऽन्यथा क्रुद्धो ब्राह्मणं पितरं च ते ॥ १६
त्वत्कृते तान्प्रधक्ष्यामि सर्वानपि न संशयः ।
पितरं चैव ते मूढं यो न वेत्ति तवानयम् ॥ १७
तस्य च ब्राह्मणस्याद्य योसौ मन्त्रमदात्तव ।
शीलवृत्तमविज्ञाय धास्यामि विनयं परम् ॥ १८
एते हि विबुधाः सर्वे पुरंदरमुखा दिवि ।
त्वया प्रलब्धं पश्यन्ति स्मयन्त इव मां शुभे ॥ १९
पश्य चैनान्सुरगणान्दिव्यं चक्षुरिदं हि ते ।
पूर्वमेव मया दत्तं दृष्टवत्यसि येन माम् ॥ २०

वैशंपायन उवाच ।

ततोऽपश्यत्त्रिदशान्राजपुत्री
सर्वानेव स्वेषु धिष्ण्येषु खस्थान् ।
प्रभावन्तं भानुमन्तं महान्तं
यथाऽऽदित्यं रोचमानांस्तथैव ॥ २१
सा तान्दृष्ट्वा त्रिदशानेव बाला
सूर्यं देवी वचनं प्राह भीता ।
गच्छ त्वं वै गोपते स्वं विमानं
कन्याभावाद्दुःख एवापचारः ॥ २२
पिता माता गुरवश्चैव येऽन्ये
देहस्यास्य प्रभवन्ति प्रदाने ।
नाहं धर्मं लोपयिष्यामि लोके
स्त्रीणां वृत्तं पूज्यते देहरक्षा ॥ २३
मया मन्त्रबलं ज्ञातुमाहूतस्त्वं विभावसो ।
बाल्याद्बालेति तत्कृत्वा क्षन्तुमर्हसि मे विभो ॥ २४

सूर्य उवाच ।

बालेति कृत्वाऽनुनयं तवाहं
ददानि नान्यानुनयं लभेत ।
आत्मप्रदानं कुरु कुन्तिकन्ये
शान्तिस्तवैवं हि भवेच्च भीरु ॥ २५
न चापि गन्तुं युक्तं हि मया मिथ्याकृतेन वै ।
असमेत्य त्वया भीरु मन्त्राहूतेन भामिनि ॥ २६

---

ऋतुं रजः ॥ ३ ॥ प्राणान् इन्द्रियाणि चक्षुःश्रोत्रादीनि उपस्पृश्य । जलेन सम्यगाचम्येत्यर्थः ॥ ८ ॥ किं करोम्यवशो राज्ञि इति थ. ध. पाठः ॥ ११ ॥ यथाहं गमिष्ये तथा मा मां ब्रवीषि नतु तद्योग्यमित्याह नत्विति । वृथा प्रसादमप्राप्य ॥ १३ ॥ तवाभिसन्धिं सुभगे कुर्यां पुत्रः इति थ. ध. पाठः ॥ १४ ॥ ब्राह्मणं दुर्वाससम् ॥ १६ ॥ विनयं दण्डं धास्यामि धारयिष्यामि ॥ १८ ॥ अपचारोऽपराधः कृतः । व्रीडमानेव बालेति झ. पाठः ॥ २२ ॥ सप्ताधिकत्रिशततमोऽध्यायः ३०७

गमिष्याम्यनवद्याङ्गि लोके समवहास्यताम् ।
'गच्छेयमेव सुश्रोणि गतोऽहं वै निराकृतः ।'
सर्वेषां विबुधानां च वक्तव्यः स्यां तथा शुभे ॥२७
सा त्वं मया समागच्छ पुत्रं लप्स्यसि मादृशम् ।
विशिष्टा सर्वलोकेषु भविष्यसि न संशयः ॥ २८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि सप्ताधिकत्रिशततमोऽध्यायः ॥ ३०७ ॥

## अष्टाधिकत्रिशततमोऽध्यायः ॥ ३०८ ॥

कुन्त्या सङ्गमन्तरा दुश्शकानुनये भास्करे कृच्छ्रात्तदङ्गीकरणम् ॥ १ ॥ सूर्येण पुनः कन्यात्वलाभरूपवरदानपूर्वकं तस्यां गर्भाधानम् ॥ २ ॥

वैशंपायन उवाच ।
सा तु कन्या बहुविधं ब्रुवन्ती मधुरं वचः ।
अनुनेतुं सहस्रांशुं न शशाक मनस्विनी ॥ १
न शशाक यदा बाला प्रत्याख्यातुं तमोनुदम् ।
भीता शापात्ततो राजन्दध्यौ दीर्घमथान्तरम् ॥ २
अनागसः पितुः शापो ब्राह्मणस्य तथैव च ।
मन्निमित्तः कथं न स्यात्क्रुद्धाद्स्माद्विभावसोः ॥ ३
बालेनापि सता मोहाद्भृशं सापह्नवान्यपि ।
नाऽभ्यासादयितव्यानि तेजांसि च तपांसि च ॥४
साहमद्य भृशं भीता गृहीत्वा च करे भृशम् ।
कथं त्वकार्यं कुर्यां वै प्रदानं ह्यात्मनः स्वयम् ॥५
सा वै शापपरित्रस्ता बहु चिन्तयती हृदा ।
मोहेनाभिपरीताङ्गी स्मयमाना पुनःपुनः ॥ ६
तं देवमब्रवीद्भीता बन्धूनां राजसत्तम ।
व्रीडाविह्वलया वाचा शापत्रस्ता विशांपते ॥ ७
पिता मे ध्रियते देव माता चान्ये च बान्धवाः ।
न तेषु ध्रियमाणेषु विधिलोपो भवेदयम् ॥ ८
त्वया तु संगमो देव यदि स्याद्विधिवर्जितः ।
मन्निमित्तं कुलस्यास्य लोकेऽकीर्तिर्न संशयः ॥९
अथवा धर्ममेतं त्वं मन्यसे तपतांवर ।
ऋते प्रदानाद्बन्धुभ्यस्तव कामं करोम्यहम् ॥१०
आत्मप्रदानं दुर्धर्ष तव कृत्वा सती त्वहम् ।
त्वयि धर्मो यशश्चैव कीर्तिरायुश्च देहिनाम् ॥११
सूर्य उवाच ।
न ते पिता न ते माता गुरवो वा शुचिस्मिते ।
प्रभवन्ति प्रदाने ते भद्रं ते शृणु मे वचः ॥ १२
सर्वान्कामयते यस्मात्कनेर्धातोश्च भामिनि ।
तस्मात्कन्येह सुश्रोणी स्वतन्त्रा वरवर्णिनि ॥ १३
नाधर्मश्चरितः कश्चित्त्वया भवति भामिनि ।
अधर्मं कुत एवाहं वरेयं लोककाम्यया ॥ १४
अनावृताः स्त्रियः सर्वा नराश्च वरवर्णिनि ।
स्वभाव एष लोकानां विकारोऽन्य इति स्मृतः १५
सा मया सह संगम्य पुनः कन्या भविष्यसि ।
पुत्रश्च ते महाबाहुर्भविष्यति न संशयः ॥ १६
कुन्त्युवाच ।
यदि पुत्रो मम भवेत्त्वत्तः सर्वतमोनुद ।
कुण्डली कवची शूरो महाबाहुर्महाबलः ।
'अस्तु मे सङ्गमो देव अनेन समयेन ते ॥' १७
सूर्य उवाच ।
भविष्यति महाबाहुः कुण्डली दिव्यवर्मभृत् ।
उभयं चामृतमयं तस्य भद्रे भविष्यति ॥ १८

दध्यौ चिन्तितवती । अन्तरं कालम् ॥ २ ॥ बालेनाल्पवयसापि सता साधुना मोहाच्चित्तपारवश्यात् तेजांसि सूर्यादीनि तपांसि दुर्वासआदीनि नाभ्यासादयितव्यान्यत्यन्तं प्रत्यासत्तिविषयाणि न कर्तव्यानि ॥ ४ ॥ बन्धूनां बन्धुभ्य इत्यर्थः ॥ ७ ॥ ध्रियते जीवति ॥ ८ ॥ प्रभवन्ति स्वाम्यमर्हन्ति ॥ १२ ॥ कामयते सर्वानिति कन्येति कन्याशब्दनिर्वचनम् ॥ १३ ॥ तत्र हेतुः लोककाम्यया लोकप्रियया कामवत्तया ॥ १४ ॥ अन्यो विवाहनियमादिर्विकारः ॥ १५ ॥ अमृतमयं सहजं वर्म ॥ १८ ॥

कुन्त्युवाच ।
यद्येतदमृतादस्ति कुण्डले वर्म चोत्तमम् ।
मम पुत्रस्य यं वै त्वं मत्त उत्पादयिष्यसि ॥ १९
अस्तु मे सङ्गमो देव यथोक्तं भगवंस्त्वया ।
त्वद्वीर्यरूपसत्त्वौजा धर्मयुक्तो भवेत्स च ॥ २०
सूर्य उवाच ।
अदित्या कुण्डले राज्ञि दत्ते मे मत्तकाशिनि ।
तस्मै दास्यामि वामोरु वर्म चैवेदमुत्तमम् ॥ २१
कुन्त्युवाच ।
परमं भगवन्नेवं सङ्गमिष्ये त्वया सह ।
यदि पुत्रो भवेदेवं यथा वदसि गोपते ॥ २२
वैशंपायन उवाच ।
तथेत्युक्त्वा तु तां कुन्तीमाविवेश विहंगमः ।
स्वर्भानुशत्रुर्योगात्मा नाभ्यां पस्पर्श चैव ताम् २३
ततः सा विह्वलेवासीत्कन्या सूर्यस्य तेजसा ।
पपात चाथ सा देवी शयने मूढचेतना ॥ २४
सूर्य उवाच ।
साधयिष्यामि सुश्रोणि पुत्रं वै जनयिष्यसि ।
सर्वशस्त्रभृतांश्रेष्ठं कन्या चैव भविष्यसि ॥ २५
वैशंपायन उवाच ।
ततः सा व्रीडिता बाला तदा सूर्यमथाब्रवीत् ।
एवमस्त्विति राजेन्द्र प्रस्थितं भूरिवर्चसम् ॥ २६
इतिस्मोक्ता कुन्तिराजात्मजा सा
विवस्वन्तं याचमाना सलज्जा ।
तस्मिन्पुण्ये शयनीये पपात
मोहाविष्टा वेपमाना लतेव ॥ २७
तिग्मांशुस्तां तेजसा मोहयित्वा
योगेनाविश्यात्मसंस्थां चकार ।
न चैवैनां दूषयामास भानुः
संज्ञां लेभे भूय एवाथ बाला ॥ २८

॥ इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि अष्टाधिकत्रिशततमोऽध्यायः ॥ ३०८ ॥

## नवाधिकत्रिशततमोऽध्यायः ॥ ३०९ ॥

कतिपयकालातिपाते कर्णस्य सहजकवचकुण्डलधारणेन कुन्त्यां जननम् ॥ १ ॥ कुन्त्या धात्र्यासह मन्त्रपूर्वकं जातमात्रस्य गर्भस्य मञ्जूषायां निक्षेपपूर्वकमश्वनद्यां विसर्जनम् ॥ २ ॥ सगर्भाया मञ्जूषायाः क्रमेण चर्मण्वतीयमुनाद्वारा गङ्गायां प्लवनेन चम्पापुरीप्रवेशः ॥ ३ ॥

वैशंपायन उवाच ।
ततो गर्भः समभवत्पृथायाः पृथिवीपते ।
शुक्ले दशोत्तरे पक्षे तारापतिरिवाम्बरे ॥ १
सा बान्धवभयाद्बाला गर्भं तं विनिगूहती ।
धारयामास सुश्रोणी न चैनां बुबुधे जनः ॥ २
न हि तां वेद नार्यन्या काचिद्धात्रेयिकामृते ।
कन्यापुरगतां बालां निपुणां परिरक्षणे ॥ ३
ततः कालेन सा गर्भं सुषुवे वरवर्णिनी ।
कन्यैव तस्य देवस्य प्रसादादमरप्रभम् ॥ ४
तथैवाबद्धकवचं कनकोज्ज्वलकुण्डलम् ।
हर्यक्षं वृषभस्कन्धं यथास्य पितरं तथा ॥ ५
जातमात्रं च तं गर्भं धात्र्या संमन्त्र्य भामिनी ।
'उत्स्रष्टुकामा तं गर्भं कारयामास भारत ।
मञ्जूषां शिल्पिभिस्तूर्णं सुनद्धां सुप्रतिष्ठिताम् ॥६
प्लवैर्बहुविधैर्बद्धां प्लवनार्थं जले नृप ।
अजिनैर्मृदुभिश्चैवं संस्तीर्णशयनां तथा ॥' ७
मञ्जूषायां समाधाय स्वास्तीर्णायां समन्ततः ।
मधूच्छिष्टस्थितायां तं सुखायां रुदती तथा ।

प्रस्थितं संगमायोपक्रान्तम् ॥ २६ ॥ आत्मसंस्थां वचनवशाम् । एनां न दूषयामास । कन्यात्वस्थापनेनेति शेषः ॥ २८ ॥ अष्टाधिकत्रिशततमोऽध्यायः ॥ ३०८ ॥

दशोत्तरे एकादशे शुक्ले पक्षे प्रतिपदि चन्द्रइव बाल उद्भूतः । माघशुक्लप्रतिपदि कर्णनिषेकजन्मेत्यर्थः ॥ १ ॥ हर्यक्षं सिंहनेत्रम् ॥ ५ ॥ गर्भं प्रति संमन्त्र्येत्यध्याहारेणान्वयः ॥ ६ ॥ मधूच्छिष्टं सिक्थकम् । मयनमिति भाषायाम् । तेन स्थितायां सर्वतोलिप्तायां मञ्जूषायाम् । जलप्रवेशो न भवेदित्यर्थः ॥ ८ ॥

श्लक्ष्णायां सुपिधानायामश्वनद्यामवासृजत् ॥ ८
जानती चाप्यकर्तव्यं कन्याया गर्भधारणम् ।
पुत्रस्नेहेन सा राजन्करुणं पर्यदेवयत् ॥ ९
समुत्सृजन्ती मञ्जूषामश्वनद्यां तदा जले ।
उवाच रुदती कुन्ती यानि वाक्यानि तच्छृणु १०
स्वस्ति तेऽस्त्वान्तरिक्षेभ्यः पार्थिवेभ्यश्च पुत्रक ।
दिव्येभ्यश्चैव भूतेभ्यस्तथा तोयचराश्च ये ॥ ११
शिवास्ते सन्तु पन्थानो मा च ते परिपन्थिनः ।
आगताश्च तथा पुत्र भवन्त्वद्रोहचेतसः ॥ १२
पातु त्वां वरुणो राजा सलिले सलिलेश्वरः ।
अन्तरिक्षेऽन्तरिक्षस्थः पवनः सर्वगस्तथा ॥ १३
पिता त्वां पातु सर्वत्र तपनस्तपतांवरः ।
येन दत्तोसि मे पुत्र दिव्येन विधिना किल॥१४
आदित्या वसवो रुद्राः साध्या विश्वे च देवताः ।
मरुतश्च सहेन्द्रेण दिशश्च सदिगीश्वराः ॥ १५
रक्षन्तु त्वां सुराः सर्वे समेषु विषमेषु च ।
वेत्स्यामि त्वां विदेशेपि कवचेनाभिसूचितम् ॥१६
धन्यस्ते पुत्र जनको देवो भानुर्विभावसुः ।
यस्त्वां द्रक्ष्यति दिव्येन चक्षुषा वाहिनीगतम् १७
धन्या सा प्रमदा या त्वां पुत्रत्वे कल्पयिष्यति ।
यस्यास्त्वं तृषितः पुत्र स्तनं पास्यसि देवज ॥१८
कोनु स्वप्नस्तया दृष्टो या त्वामादित्यवर्चसम् ।
दिव्यवर्मसमायुक्तं दिव्यकुण्डलभूषितम् ॥ १९
पद्मायतविशालाक्षं पद्मताम्रदलोज्ज्वलम् ।
सुललाटं सुकेशान्तं पुत्रत्वे कल्पयिष्यति ॥ २०
धन्या द्रक्ष्यन्ति पुत्र त्वां भूमौ संसर्पमाणकम् ।
अव्यक्तकलवाक्यानि वदन्तं रेणुगुण्ठितम् ॥ २१
धन्या द्रक्ष्यन्ति पुत्र त्वां पुनर्यौवनगोचरम् ।
हिमवद्वनसंभूतं सिंहं केसरिणं यथा ॥ २२
एवं बहुविधं राजन्विलप्य करुणं पृथा ।
अवासृजत मञ्जूषामश्वनद्यां तदा जले ॥ २३
रुदती पुत्रशोकार्ता निशीथे कमलेक्षणा ।
धात्र्या सह पृथा राजन्पुत्रदर्शनलालसा ॥ २४
विसर्जयित्वा मञ्जूषां संबोधनभयात्पितुः ।
विवेश राजभवनं पुनः शोकातुरा ततः ॥ २५
मञ्जूषा त्वश्वनद्याः सा ययौ चर्मण्वतीं नदीम् ।
चर्मण्वत्याश्च यमुनां ततो गङ्गां जगाम ह ॥ २६
गङ्गायाः सूतविषयं चम्पामनुययौ पुरीम् ।
स मञ्जूषागतो गर्भस्तरङ्गैरुह्यमानकः ॥ २७
अमृतादुत्थितं दिव्यं तनुवर्म सकुण्डलम् ।
धारयामास तं गर्भं दैवं च विधिनिर्मितम् ॥२८
एतद्वृद्धं महाराज सूर्यस्यासीन्महात्मनः ।
स सूर्यसंभवो गर्भः कुन्त्या गर्भेण धारितः ॥' २९

॥ इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि नवाधिकत्रिशततमोऽध्यायः ॥ ३०९ ॥

---

## दशाधिकत्रिशततमोऽध्यायः ॥ ३१० ॥

स्नानाय भार्यया सह गङ्गां गतेनाधिरथनाम्ना सूतेन तत्रोत्प्लवमानायाः सगर्भमञ्जूषाया ग्रहणम् ॥ १ ॥ तथा मञ्जूषोद्घाटने दृष्टस्य गर्भस्य स्वपुत्रतया परिकल्पनेन नामकरणादिपूर्वकं प्रीत्या पोषणम् ॥ २ ॥ कर्णेन परशुरामादिभ्योऽस्त्रग्रहणपूर्वकं दुर्योधनेन सख्यकरणम् ॥ ३ ॥

वैशंपायन उवाच ।
एतस्मिन्नेव काले तु धृतराष्ट्रस्य वै सखा ।
सूतोऽधिरथ इत्येव सदारो जाह्नवीं ययौ ॥ १
तस्य भार्याऽभवद्राजन्रूपेणासदृशी भुवि ।
राधा नाम महाभागा न सा पुत्रमविन्दत ।
अपत्यार्थे परं यत्नमकरोच्च विशेषतः ॥ २

---

आगमाश्च तथा सन्तु दिव्येन विधिना तव इति थ. ध. पाठः । आगमाश्च तथा पान्तु इति क. पाठः ॥ १२ ॥ दैवं कर्तृ । गर्भे सकुण्डलं वर्म धारयामासेत्यन्वयः । गर्भं कवचकुण्डल-धारकं चकारेत्यर्थः । विधिना ईश्वरेण निर्मितम् ॥ २८ ॥ नवाधिकत्रिशततमोऽध्यायः ॥ ३०९ ॥

सा ददर्शाथ मञ्जूषामुह्यमानां यदृच्छया ।
दत्तरक्षाप्रतिसरामन्वालम्भनशोभनाम् ॥ ३
ऊर्मीतरङ्गैर्जाह्नव्याः समानीतामुपह्वरम् ।
'विवर्तमानां बहुशः पुनःपुनरितस्ततः ॥ ४
ततः सा वायुना राजन्स्रोतसा च बलीयसा ।
उपानीतो यतः सूतः सभार्यो जलमाश्रितः॥'५
सा तु कौतूहलात्प्राप्तां ग्राहयामास भामिनी ।
ततो निवेदयामास सूतस्याधिरथस्य वै ॥ ६
स तामुद्धृत्य मञ्जूषामुत्सार्य जलमन्तिकात् ।
यन्त्रैरुद्घाटयामास सोऽपश्यत्तत्र बालकम् ॥ ७
तरुणादित्यसंकाशं हेमवर्मधरं तथा ।
मृष्टकुण्डलयुक्तेन वदनेन विराजितम् ।
'परिम्लानमुखं बालं रुदन्तं क्षुधितं भृशम् ॥ ८
स तु तं परया लक्ष्म्या दृष्ट्वा युक्तं वरात्मजम् ।'
स सूतो भार्यया सार्धं विस्मयोत्फुल्ललोचनः ।
अङ्कमारोप्य तं बालं भार्यां वचनमब्रवीत् ॥ ९
इदमत्यद्भुतं भीरु यतो जातोस्मि भामिनि ।
दृष्टवान्देवगर्भोऽयं मन्येऽस्माकमुपागतः ॥ १०
अनपत्यस्य पुत्रोऽयं देवैर्दत्तो ध्रुवं मम ।
इत्युक्त्वा तं ददौ पुत्रं राधायै स महीपते ॥ ११
प्रतिजग्राह तं राधा विधिवद्दिव्यरूपिणम् ।
पुत्रं कमलगर्भाभं देवगर्भं श्रिया वृतम् ॥ १२
'स्तन्यं समस्रवच्चास्य दैवादित्यथ निश्चयः ।'
पुपोष चैनं विधिवद्ववृधे स च वीर्यवान् ।
ततःप्रभृति चाप्यन्ये प्राभवन्नौरसाः सुताः ॥ १३
नामकर्म च चक्रुस्ते कुण्डले तस्य दृश्यते ।
कर्ण इत्येव तं बालं दृष्ट्वा कर्णं सकुण्डलम् ॥' १४
वसुवर्मधरं दृष्ट्वा तं बालं हेमकुण्डलम् ।
नामास्य वसुषेणेति ततश्चक्रुर्द्विजातयः ॥ १५
एवं स सूतपुत्रत्वं जगामामितविक्रमः ।
वसुषेण इति ख्यातो वृष इत्येव च प्रभुः ॥ १६
सूतस्य ववृधेऽङ्गेषु ज्येष्ठः पुत्रः स वीर्यवान् ।
चारेण विदितश्चासीत्पृथया दिव्यवर्मभृत् ॥ १७
सूतस्त्वधिरथः पुत्रं विवृद्धं समयेन तम् ।
दृष्ट्वा प्रस्थापयामास पुरं वारणसाह्वयम् ॥ १८
तत्रोपसदनं चक्रे द्रोणस्येष्वस्त्रकर्मणि ।
सख्यं दुर्योधनेनैवमगमत्स च वीर्यवान् ॥ १९
द्रोणात्कृपाच्च रामाच्च सोऽस्त्रग्रामं चतुर्विधम् ।
लब्ध्वा लोकेऽभवत्ख्यातः परमेष्वासतां गतः २०
संधाय धार्तराष्ट्रेण पार्थानां विप्रिये रतः ।
योद्धुमाशंसते नित्यं फल्गुनेन महात्मना ॥ २१
सदा हि तस्य स्पर्धाऽऽसीदर्जुनेन विशांपते ।
अर्जुनस्य च कर्णेन यतो द्वन्द्वं बभूव ह ॥ २२
एतद्गुह्यं महाराज सूर्यस्यासीन्न संशयः ।
यः सूर्यसंभवः कर्णः कुर्यात्प्रतिकुले रतः ॥ २३
तं तु कुण्डलिनं दृष्ट्वा वर्मणा च समन्वितम् ।
अवध्यं समरे मत्वा पर्यतप्यद्युधिष्ठिरः ॥ २४
यदा च कर्णो राजेन्द्र भानुमन्तं दिवाकरम् ।
स्तौति मध्यंदिने प्राप्ते प्राञ्जलिः सलिलोत्थितः २५
तत्रैनमुपतिष्ठन्ति ब्राह्मणा धनहेतुना ।
नादेयं तस्य तत्काले किंचिदस्ति द्विजातिषु ॥ २६
तमिन्द्रो ब्राह्मणो भूत्वा भिक्षां देहीत्युपस्थितः ।
स्वागतं चेति राधेयस्तमथ प्रत्यभाषत ॥ २७

॥ इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि दशाधिकत्रिशततमोऽध्यायः ॥ ३१० ॥

---

दत्तो रक्षार्थं प्रतिसरो दूर्वाकङ्कणादिरूपो यस्यां ताम् । अन्वालम्भनं कुङ्कुमहरिद्रादानम् ॥ ३ ॥ उपह्वरं समीपम् ॥ ५ ॥ उत्सार्य परतो नीत्वा ॥ ७ ॥ वसुवर्म स्वर्णकवचम् ॥ १५ ॥ अङ्गेषु जनपदविशेषेषु ॥ १७ ॥ उपसदनं गुरूपसदनम् ॥ १९ ॥ परमेष्वासतां महाधनुर्धरताम् ॥ २० ॥ दशाधिकत्रिशततमोऽध्यायः ॥ ३१० ॥

## एकादशाधिकत्रिशततमोऽध्यायः ॥ ३११ ॥

इन्द्रेण ब्राह्मणवेषधारणेन कर्णंप्रति कवचकुण्डलयाचनम् ॥ १ ॥ तस्येन्द्रत्वं जानता कर्णेन तस्माच्छक्तिग्रहणपूर्वकं तस्मै कवचकुण्डलदानम् ॥ २ ॥

वैशंपायन उवाच ।
देवराजमनुप्राप्तं ब्राह्मणच्छद्मनाऽऽवृतम् ।
दृष्ट्वा स्वागतमित्याह न बुबोधास्य मानसम् ॥ १
हिरण्यकण्ठीः प्रमदा ग्रामान्वा बहुगोकुलान् ।
किं ददानीति तं विप्रमुवाचाधिरथिस्ततः ॥ २
ब्राह्मण उवाच ।
हिरण्यकण्ठ्यः प्रमदा यच्चान्यत्प्रीतिवर्धनम् ।
नाहं दत्तमिहेच्छामि तदर्थिभ्यः प्रदीयताम् ॥ ३
यदेतत्सहजं वर्म कुण्डले च तवानघ ।
एतदुत्कृत्य मे देहि यदि सत्यव्रतो भवान् ॥ ४
एतदिच्छाम्यहं भिक्षां त्वया दत्तां परंतप ।
एष मे सर्वलाभानां लाभः परमको मतः ॥ ५
कर्ण उवाच ।
अवनिं प्रमदा गाश्च निर्वापं बहुवार्षिकम् ।
तत्ते विप्र प्रदास्यामि न तु वर्म सकुण्डलम् ॥ ६
वैशंपायन उवाच ।
एवं बहुविधैर्वाक्यैर्याचमानः स तु द्विजः ।
कर्णेन भरतश्रेष्ठ नान्यं वरमयाचत ॥ ७
सान्त्वितश्च यथाशक्ति पूजितश्च यथाविधि ।
न चान्यं स द्विजश्रेष्ठः कामयामास वै वरम् ॥ ८
यदा नान्यं प्रवृणुते वरं वै द्विजसत्तमः ।
'विनाऽस्य सहजं वर्म कुण्डले च विशांपते ।'
तदैनमब्रवीद्भूयो राधेयः प्रहसन्निव ॥ ९
सहजं वर्म मे विप्र कुण्डले चामृतोद्भवे ।
तेनावध्योस्मि लोकेषु ततो नैतज्जहाम्यहम् ॥ १०
विशालं पृथिवीराज्यं क्षेमं निहतकण्टकम् ।
प्रतिगृह्णीष्व मत्तस्त्वं साधु ब्राह्मणपुङ्गव ॥ ११
कुण्डलाभ्यां विमुक्तोऽहं वर्मणा सहजेन च ।
दमनीयो भविष्यामि शत्रूणां द्विजसत्तम ॥ १२
वैशंपायन उवाच ।
यदन्यं न वरं वव्रे भगवान्पाकशासनः ।
ततः प्रहस्य कर्णस्तं पुनरित्यब्रवीद्वचः ॥ १३
विदितो देवदेवेश प्रागेवासि मम प्रभो ।
न तु न्याय्यं मया दातुं तव शक्र वृथा वरम् ॥ १४
त्वं हि देवेश्वरः साक्षात्त्वया देयो वरो मम ।
अन्येषां चैव भूतानामीश्वरो ह्यसि भूतकृत् ॥ १५
यदि दास्यामि ते देव कुण्डले कवचं तथा ।
वध्यतामुपयास्यामि त्वं च शक्रावहास्यताम् ॥ १६
तस्माद्विनिमयं कृत्वा कुण्डले वर्म चोत्तमम् ।
हरस्व शक्र कामं मे न दद्यामहमन्यथा ॥ १७
शक्र उवाच ।
विदितोऽहं रवेः पूर्वमायानेव तवान्तिकम् ।
तेन ते सर्वमाख्यातमेवमेतन्न संशयः ॥ १८
काममस्तु तथा तात तव कर्ण यथेच्छसि ।
वर्जयित्वा तु मे वज्रं प्रवृणीष्व यथेच्छसि ॥ १९
वैशंपायन उवाच ।
ततः कर्णः प्रहृष्टस्तु उपसंगम्य वासवम् ।
अमोघां शक्तिमभ्येत्य वव्रे सम्पूर्णमानसः ॥ २०
कर्ण उवाच ।
वर्मणा कुण्डलाभ्यां च शक्तिं मे देहि वासव ।
अमोघां शत्रुसङ्घानां घातिनीं पृतनामुखे ॥ २१
ततः सञ्चिन्त्य मनसा मुहूर्तमिव वासवः ।
शक्त्यर्थं पृथिवीपाल कर्णं वाक्यमथाब्रवीत् ॥ २२
कुण्डले मे प्रयच्छस्व वर्म चैव शरीरजम् ।
गृहाण कर्ण शक्तिं त्वमनेन समयेन च ॥ २३
अमोघा हन्ति शतशः शत्रून्मम करच्युता ।

यच्चान्यत्पादबन्धनम् इति ध. पाठः ॥ ३ ॥ अवनिं गृहार्थम् । निवापं न्युप्यते बीजमस्मिन्निति क्षेत्रम् । बहुवार्षिकं यावज्जीविकवृत्तिरूपम् ॥ ६ ॥ आयानेव आगच्छन्नेव ॥ १८ ॥

पुनश्च पाणिमभ्येति मम दैत्यान्विनिघ्नतः ॥२४
सेयं तव करप्राप्ता हत्वैकं रिपुमूर्जितम् ।
गर्जन्तं प्रतपन्तं च मामेवैष्यति सूतज ॥ २५

कर्ण उवाच ।

एकमेवाहमिच्छामि रिपुं हन्तुं महाहवे ।
गर्जन्तं प्रतपन्तं च यतो मम भयं भवेत् ॥ २६

इन्द्र उवाच ।

एकं हनिष्यसि रिपुं गर्जन्तं बलिनं रणे ।
त्वं तु यं प्रार्थयस्येकं रक्ष्यते स महात्मना ॥ २७
यमाहुर्वेदविद्वांसो वराहमपराजितम् ।
नारायणमचिन्त्यं च तेन कृष्णेन रक्ष्यते ॥ २८

कर्ण उवाच ।

'एवमेतद्यथाऽऽत्थ त्वं दानवानां निषूदन ।
वधिष्यामि रणे शत्रुं यो मे स्याता पुरस्सरः ॥'२९
एवमप्यस्तु भगवन्नेकवीरवधे मम ।
अमोघां देहि मे शक्तिं यथा हन्यां प्रतापिनम् ३०
उत्कृत्य तु प्रदास्यामि कुण्डले कवचं च ते ।
निकृत्तेषु तु गात्रेषु न मे बीभत्सता भवेत् ॥३१

इन्द्र उवाच ।

न ते बीभत्सता कर्ण भविष्यति कथञ्चन ।
व्रणश्चैव न गात्रेषु यस्त्वं नानृतमिच्छसि ॥ ३२
यादृशस्ते पितुर्वर्णस्तेजश्च वदतांवर ।
तादृशेनैव वर्णेन त्वं कर्ण भविता पुनः ॥ ३३
विद्यमानेषु शस्त्रेषु यद्यमोघामसंशये ।
प्रमत्तो मोक्ष्यसे चापि त्वय्येवैषा पतिष्यति ॥ ३४

कर्ण उवाच ।

संशयं परमं प्राप्य विमोक्ष्ये वासवीमिमाम् ।
यथा मामात्थ शक्र त्वं सत्यमेतद्ब्रवीमि ते ॥ ३५

वैशंपायन उवाच ।

ततः शक्तिं प्रज्वलितां प्रतिगृह्य विशांपते ।
शस्त्रं गृहीत्वा निशितं सर्वगात्राण्यकृन्तत ॥ ३६

ततो देवा मानवा दानवाश्च
निकृन्तन्तं कर्णमात्मानमेव ।
दृष्ट्वा सर्वे सिंहनादान्प्रणेदु-
र्न ह्यस्यासीन्मुखजो वै विकारः ॥ ३७
ततो दिव्या दुन्दुभयः प्रणेदुः
पपातोच्चैः पुष्पवर्षं च दिव्यम् ।
दृष्ट्वा कर्णं शस्त्रसंकृत्तगात्रं
मुहुश्चापि स्मयमानं नृवीरम् ॥ ३८
ततश्छित्त्वा कवचं दिव्यमङ्गा-
त्तथैवार्द्रं प्रददौ वासवाय ।
तथोत्कृत्य प्रददौ कुण्डले ते
कर्णात्तस्मात्कर्मणा तेन कर्णः ॥ ३९
'ततो देवो मुदितो वज्रपाणि-
र्दृष्ट्वा कर्णं शस्त्रनिकृत्तगात्रम् ।'
ततः शक्रः प्रहसन्वञ्चयित्वा
कर्णं लोके यशसा योजयित्वा ।
कृतं कार्यं पाण्डवानां हि मेने
ततः पश्चाद्दिवमेवोत्पपात ॥ ४०
श्रुत्वा कर्णं मुषितं धार्तराष्ट्रा
दीनाः सर्वे भग्नदर्पा इवासन् ।
तां चावस्थां गमितं सूतपुत्रं
श्रुत्वा पार्था जहृषुः काननस्थाः ॥ ४१

जनमेजय उवाच ।

क्वस्था वीराः पाण्डवास्ते बभूवुः
कुतश्चैते श्रुतवन्तः प्रियं तत् ।
किं वाऽकार्षुर्द्वादशेऽब्दे व्यतीते
तन्मे सर्वं भगवान्व्याकरोतु ॥ ४२

वैशंपायन उवाच ।

लब्ध्वा कृष्णां सैन्धवं द्रावयित्वा
विप्रैः सार्धं काम्यकादाश्रमात्ते ।
मार्कण्डेयाच्छ्रुतवन्तः पुराणं
देवर्षीणां चरितं विस्तरेण ॥ ४३

कृणाति हिनस्ति कृन्तति छिनत्ति वा अङ्गानीति कर्ण इत्यर्थः

॥ ३९ ॥ एकादशाधिकत्रिशततमोऽध्यायः ॥ ३११ ॥

'प्रत्याजग्मुः सरथाः सानुयात्राः
सर्वैः सार्धं सूतपौरोगवैस्ते ।
ततो ययुर्द्वैतवनं नृवीरा
निस्तीर्यैवं वनवासं समग्रम् ॥' ४४

॥ इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि एकादशाधिकत्रिशततमोऽध्यायः ॥ ३११ ॥

समाप्तं चेदं कुण्डलाहरणपर्व ॥ २० ॥

---

# (अथारणेयपर्व ॥ २१ ॥)

## द्वादशाधिकत्रिशततमोऽध्यायः ॥ ३१२ ॥

युधिष्ठिरादिभिः काम्यकवनात्पुनर्द्वैतवनंप्रत्यागमनम् ॥ १ ॥ तत्र केनचिन्मृगेण तरुसङ्घर्षवशात्स्वविषाणलग्नेन ब्राह्मणस्यारणिना सह पलायनम् ॥ २ ॥ ब्राह्मणप्रार्थनया तदानयनाय पाण्डवैस्तदनुधावनम् ॥ ३ ॥ ततस्तैः सुदूरं स्वापकर्षणपूर्वकमन्तर्हिते तस्मिन्श्रान्त्या वटमूले समुपवेशनम् ॥ ४ ॥

जनमेजय उवाच ।
एवं हृतायां भार्यायां प्राप्य क्लेशमनुत्तमम् ।
प्रतिपद्य ततः कृष्णां किमकुर्वत पाण्डवाः ॥ १
वैशंपायन उवाच ।
एवं हृतायां कृष्णायां प्राप्य क्लेशमनुत्तमम् ।
विहाय काम्यकं राजा सह भ्रातृभिरच्युतः ॥ २
पुनर्द्वैतवनं रम्यमाजगाम युधिष्ठिरः ।
स्वादुमूलफलं रम्यं विचित्रबहुपादपम् ॥ ३
अनुभुक्तफलाहाराः सर्व एव मिताशनाः ।
न्यवसन्पाण्डवास्तत्र कृष्णया सह भार्यया ॥ ४
वसन्द्वैतवने राजा कुन्तीपुत्रो युधिष्ठिरः ।
भीमसेनोऽर्जुनश्चैव माद्रीपुत्रौ च पाण्डवौ ॥ ५
ब्राह्मणार्थे पराक्रान्ता धर्मात्मानो यतव्रताः ।
क्लेशमार्च्छन्त विपुलं सुखोदर्कं परंतपाः ॥ ६
तस्मिन्प्रतिवसन्तस्ते यत्प्रापुः कुरुसत्तमाः ।
वने क्लेशं सुखोदर्कं तत्प्रवक्ष्यामि ते शृणु ॥ ७
अरणीसहितं भाण्डं ब्राह्मणस्य तपस्विनः ।
मृगस्य घर्षमाणस्य विषाणे समसज्जत ॥ ८
तदादाय गतो राजंस्त्वरमाणो महामृगः ।
आश्रमान्तरितः शीघ्रं प्लवमानो महाजवः ॥ ९
ह्रियमाणं तु तं दृष्ट्वा स विप्रः कुरुसत्तम ।
त्वरितोऽभ्यागमत्तत्र अग्निहोत्रपरीप्सया ।
'तेषां तु वसतां तत्र पाण्डवानां महारथम् ॥'१०
अजातशत्रुमासीनं भ्रातृभिः सहितं वने ।
आगम्य ब्राह्मणस्तूर्णं संतप्तश्चेदमब्रवीत् ॥ ११
अरणीसहितं भाण्डं समासक्तं वनस्पतौ ।
मृगस्य घर्षमाणस्य विषाणे समसज्जत ॥ १२
तमादाय गतो राजंस्त्वरमाणो महामृगः ।
आश्रमात्त्वरितः शीघ्रं प्लवमानो महाजवः ॥ १३
तस्य गत्वा पदं राजन्नासाद्य च महामृगम् ।
अग्निहोत्रं न लुप्येत तदानयत पाण्डवाः ॥ १४
ब्राह्मणस्य वचः श्रुत्वा सन्तप्तोऽथ युधिष्ठिरः ।
धनुरादाय कौन्तेयः प्राद्रवद्भ्रातृभिः सह ॥ १५
सन्नद्धा धन्विनः सर्वे प्राद्रवन्नरपुङ्गवाः ।
ब्राह्मणार्थे यतन्तस्ते शीघ्रमन्वगमन्मृगम् ॥ १६
कर्णिनालीकनाराचानुत्सृजन्तो महारथाः ।
नाविध्यन्पाण्डवास्तत्र पश्यन्तो मृगमन्तिकात् १७
तेषां प्रयतमानानां नादृश्यत महामृगः ।
अपश्यन्तो मृगं श्रान्ता दुःखं प्राप्ता मनस्विनः॥१८

---

अरणीसहितं मन्थं इति झ. पाठः । अरणी उत्तराधरेऽग्निमथनकाष्ठे ताभ्यां सहितं मन्थं निर्मथनदण्डम् ॥ ८ ॥

आश्रमान्तरितः आश्रमदूरगतः ॥ ९ ॥ पदं मार्गे चिह्नं गत्वा प्राप्य । तेनैव पथा तदानयत ॥ १४ ॥

शीतलच्छायमागम्य न्यग्रोधं गहने वने ।
क्षुत्पिपासापरीताङ्गाः पाण्डवाः समुपाविशन् ॥ १९
तेषां समुपविष्टानां नकुलो दुःखितस्तदा ।
अब्रवीद्भ्रातरं श्रेष्ठममर्षात्कुरुनन्दनम् ॥ २०
नास्मिन्कुले जातु ममज्ज धर्मो
न चालस्यादर्थलोपो बभूव ।
अनुत्तराः सर्वभूतेषु भूप
संप्राप्ताः स्मः संशयं किंनु राजन् ॥ २१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि आरणेयपर्वणि द्वादशाधिकत्रिशततमोऽध्यायः ॥ ३१२ ॥

---

## त्रयोदशाधिकत्रिशततमोऽध्यायः ॥ ३१३ ॥

पिपासितेषु पाण्डवेषु युधिष्ठिरनियोगाद्वृक्षाग्रमधिरूढेन नकुलेन नातिदूरे किंचित्सरोविलोकनम् ॥ १ ॥ पानीयानयनाय सरोगतेषु नकुलादिषु यक्षवचनावमत्या पानीयपानेन दीर्घनिद्राश्रवणादनागतेषु युधिष्ठिरेणापि तत्सरोगमनम् ॥२॥

युधिष्ठिर उवाच ।
नापदामस्ति मर्यादा न निमित्तं न कारणम् ।
धर्मस्तु विभजत्यर्थमुभयोः पुण्यपापयोः ॥ १
भीम उवाच ।
प्रातिकाम्यनयत्कृष्णां सभायां प्रेष्यवत्तदा ।
न मया निहतस्तत्र तेन प्राप्ताः स्म संशयम् ॥ २
अर्जुन उवाच ।
वाचस्तीक्ष्णास्थिभेदिन्यः सूतपुत्रेण भाषिताः ।
अतितीव्रा मया क्षान्तास्तेन प्राप्ताः स्म संशयं ॥ ३
सहदेव उवाच ।
शकुनिस्त्वां यदाऽजैषीदक्षद्यूतेन भारत ।
स मया न हतस्तत्र तेन प्राप्ताः स्म संशयम् ॥ ४
वैशंपायन उवाच ।
ततो युधिष्ठिरो राजा नकुलं वाक्यमब्रवीत् ।
आरुह्य वृक्षं माद्रेय निरीक्षस्व दिशो दश ॥ ५
पानीयमन्तिके पश्य वृक्षान्वाप्युदकाश्रयान् ।
एते हि भ्रातरः श्रान्तास्तव तात पिपासिताः ॥ ६
नकुलस्तु तथेत्युक्त्वा भ्रातुर्ज्येष्ठस्य शासनात् ।
तत उत्थाय मतिमाञ्शीघ्रमारुह्य पादपम् ।
अब्रवीद्भ्रातरं ज्येष्ठमभिवीक्ष्य समन्ततः ॥ ७
पश्यामि बहुलान्राजन्वृक्षानुदकसंश्रयान् ।
सारसानां च निर्ह्रादस्तत्रोदकमसंशयम् ॥ ८
ततोऽब्रवीत्सत्यधृतिः कुन्तीपुत्रो युधिष्ठिरः ।
गच्छ सौम्य ततः शीघ्रं तूर्णं पानीयमानय ॥ ९
नकुलस्तु तथेत्युक्त्वा भ्रातुर्ज्येष्ठस्य शासनात् ।
प्राद्रवद्यत्र पानीयं शीघ्रं चैवान्वपद्यत ॥ १०
स दृष्ट्वा विमलं तोयं सारसैः परिवारितम् ।
पातुकामस्ततो वाचमन्तरिक्षात्स शुश्रुवे ॥ ११
यक्ष उवाच ।
मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा तु माद्रेय ततः पिब हरस्व च ॥ १२
अनादृत्य तु तद्वाक्यं नकुलः सुपिपासितः ।
अपिबच्छीतलं तोयं पीत्वा च निपपात ह ॥ १३
चिरायमाणे नकुले कुन्तीपुत्रो युधिष्ठिरः ।
अब्रवीद्भ्रातरं वीरं सहदेवमरिंदमम् ॥ १४
भ्राता चिरायते तात सहदेव तवाग्रजः ।
तं चैवानय सोदर्यं पानीयं च त्वमानय ॥ १५
सहदेवस्तथेत्युक्त्वा तां दिशं प्रत्यपद्यत ।
ददर्श च हतं भूमौ भ्रातरं नकुलं तदा ॥ १६
भ्रातृशोकाभिसंतप्तस्तृषया च प्रपीडितः ।

---

धर्मो न ममज्ज धर्मलोपोऽर्थलोपश्च नाभूत् । आलस्यादित्युपचर्यते । त्वयि अनुत्तराः प्रतिवाक्यरहिताः सर्वभूतेषु कार्यार्थे उपस्थिते ओमित्येव वदामो नतु वाक्यान्तरमित्यर्थः । संशयं ब्राह्मणस्य कर्मलोपनिमित्तं दोषम् ॥ २१ ॥ द्वादशाधिकत्रिशततमोऽध्यायः ॥ ३१२ ॥

निमित्तं फलम् । धर्मः प्रारब्धरूपस्तु अर्थं फलं सुखदुःखरूपं विभजति ॥ १ ॥ प्रेष्यवत् प्रेष्यामिव ॥ २ ॥ साहसं जलपानरूपम् । परिग्रहो नियमः । यो मत्प्रश्नान्वदेत्स एवैतः पयः पिबेद्धरेद्वेति ॥ १२ ॥

अभिदुद्राव पानीयं ततो वागभ्यभाषत ॥ १७
मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा यथाकामं पिबस्व च हरस्व च ॥ १८
अनादृत्य तु तद्वाक्यं सहदेवः पिपासितः ।
अपिबच्छीतलं तोयं पीत्वा च निपपात ह ॥ १९
अथाब्रवीत्स विजयं कुन्तीपुत्रो युधिष्ठिरः ।
भ्रातरौ ते चिरगतौ बीभत्सो शत्रुकर्शन ॥ २०
तौ चैवानय भद्रं ते पानीयं च त्वमानय ।
त्वं हि नस्तात सर्वेषां दुःखितानामपाश्रयः ॥ २१
एवमुक्तो गुडाकेशः प्रगृह्य सशरं धनुः ।
आमुक्तखड्गो मेधावी तत्सरः प्रत्यपद्यत ॥ २२
यतः पुरुषशार्दूलौ पानीयहरणे गतौ ।
तौ ददर्श हतौ तत्र भ्रातरौ श्वेतवाहनः ॥ २३
'विगतासू नरव्याघ्रौ शयानौ वसुधातले ।'
प्रसुप्ताविव तौ दृष्ट्वा नरसिंहः सुदुःखितः ।
धनुरुद्यम्य कौन्तेयो व्यलोकयत तद्वनम् ॥ २४
नापश्यत्तत्र किंचित्स भूतमस्मिन्महावने ।
सव्यसाची पिपासार्तः पानीयं सोभ्यधावत ॥ २५
अभिधावंस्ततो वाचमन्तरिक्षात्स शुश्रुवे ।
यत्त्वमिच्छसि पानीयं नैतच्छक्यं बलात्त्वया ॥२६
कौन्तेय यदि वै प्रश्नान्मयोक्तान्प्रतिवक्ष्यसि ।
ततः पास्यसि पानीयं हरिष्यसि च भारत ॥२७
वारितस्त्वब्रवीत्पार्थो दृश्यमानो निवारय ।
यावद्बाणैर्विनिर्भिन्नः पुनर्नैवं वदिष्यसि ॥ २८
एवमुक्त्वा ततः पार्थः शरैरस्त्रानुमन्त्रितैः ।
प्रववर्ष दिशः कृत्स्नाः शब्दवेधं च दर्शयन् ।
कर्णिनालीकनाराचानुत्सृजन्भरतर्षभः ॥ २९
स त्वमोघानिषून्मुक्त्वा तृष्णयाऽभिप्रपीडितः ।
अनेकैरिषुसंघातैरन्तरिक्षे ववर्ष ह ॥ ३०
यक्ष उवाच ।
किं विधानेन ते पार्थ प्रश्नानुक्त्वा पयः पिब ।
अनुक्त्वा च पिबन्प्रश्नान्पीत्वैव नभविष्यसि ३१
स च मोघानिषून्दृष्ट्वा तृष्णया च प्रपीडितः ।
अवज्ञायैव तां वाचं पीत्वैव निपपात ह ॥ ३२
अथाब्रवीद्भीमसेनं कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च बीभत्सुश्च परंतप ॥ ३३
चिरंगतास्तोयहेतोर्न चागच्छन्ति भारत ।
तांश्चैवानय भद्रं ते पानीयं च त्वमानय ॥ ३४
भीमसेनस्तथेत्युक्त्वा तं देशं प्रत्यपद्यत ।
यत्र ते पुरुषव्याघ्रा भ्रातरोस्य निपातिताः ॥ ३५
तान्दृष्ट्वा दुःखितो भीमस्तृषया च प्रपीडितः ।
अमन्यत महाबाहुः कर्म तद्यक्षरक्षसाम् ॥ ३६
स चिन्तयामास तदा योद्धव्यं ध्रुवमद्य मे ।
पास्यामि तावत्पानीयमिति पार्थो वृकोदरः ॥ ३७
ततोऽभ्यधावत्पानीयं पिपासुः पुरुषर्षभः ॥ ३८
यक्ष उवाच ।
मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व च ॥ ३९
एवमुक्तस्तदा भीमो यक्षेणामिततेजसा ।
अनुक्त्वैव तु तान्प्रश्नान्पीत्वैव निपपात ह ॥ ४०
ततः कुन्तीसुतो राजा प्रचिन्त्य पुरुषर्षभः ।
'आत्मनाऽऽत्मानमन्विष्य विचारमकरोत्प्रभुः ४१
ततश्चिरगतान्भ्रातॄनथाऽऽज्ञाय युधिष्ठिरः ।
चिरायमाणान्बहुशः पुनःपुनरुवाचह ॥ ४२
किंस्विद्वनमिदं दग्धं किंस्विद्दृष्टो मृतो भवेत् ।
प्रहरन्तो महाभूतं शप्तास्तेनाथ तेऽपतन् ॥ ४३
न पश्यन्त्यथवा वीराः पानीयं यत्र ते गताः ।
अन्विच्छद्भिर्वने तोयं कालोऽयमतिपातितः ॥ ४४
किंनु तत्कारणं येन नायान्ति पुरुषर्षभाः ।
गच्छाम्येषां पदं द्रष्टुमिति कृत्वा युधिष्ठिरः ॥' ४५
समुत्थाय महाबुद्धिर्दह्यमानेन चेतसा ।
व्यपेतजननिर्घोषं प्रविवेश महावनम् ॥ ४६
रुरुभिश्च वराहैश्च पक्षिभिश्च निषेवितम् ।
नीलभास्वरवर्णैश्च पादपैरुपशोभितम् ॥ ४७
भ्रमरैरुपगीतं च पक्षिभिश्च समन्ततः ।
'मृदुशाड्वलसंकीर्णभूमिभागं मनोहरम् ॥' ४८

---

दृश्यमानो भूत्वेति शेषः ॥ २८ ॥

विधानेन यत्नेन । नभविष्यसि मरिष्यसि ॥ ३१ ॥

स गच्छन्कानने तस्मिन्हेमजालपरिष्कृतम् ।
ददर्श तत्सरः श्रीमान्विश्वकर्मकृतं यथा ॥ ४९
उपेतं नलिनीजालैः सिन्धुवारैः सचेतसैः ।
केतकैः करवीरैश्च पिप्पलैश्चैव संवृतम् ॥ ५०
'ततो धर्मसुतः श्रीमान्भ्रातृदर्शनलालसः ।'
श्रमार्तस्तदुपागम्य सरो दृष्ट्वाऽथ विस्मितः ॥ ५१

॥ इति श्रीमन्महाभारते अरण्यपर्वणि आरणेयपर्वणि त्रयोदशाधिकत्रिशततमोऽध्यायः ॥ ३१३ ॥

## चतुर्दशाधिकत्रिशततमोऽध्यायः ॥ ३१४ ॥

युधिष्ठिरेण सरस्तीरशायिनां भ्रातृणामवलोकनेन सकरुणं परिदेवनपूर्वकं पानीयपानाय प्रयतनम् ॥ १ ॥ तथा यक्षेण स्वीयप्रश्नानामुत्तरदानमन्तरा जलपानस्य दुश्शकत्वकथनेन तत्प्रतिषेधने तेषां समुचितोत्तरदानम् ॥ २ ॥ ततस्तुष्टेन यक्षेण भीमादीनां चतुर्णामुज्जीवनम् ॥ ३ ॥

वैशंपायन उवाच ।
स ददर्श हतान्भ्रातॄँल्लोकपालानिव च्युतान् ।
युगान्ते समनुप्राप्ते शक्रवैश्रवणोपमान् ॥ १
विनिकीर्णधनुर्बाणं दृष्ट्वा निहतमर्जुनम् ।
भीमसेनं यमौ चैव निर्विचेष्टान्गतायुषः ॥ २
स दीर्घमुष्णं निःश्वस्य शोकबाष्पपरिप्लुतः ।
तान्दृष्ट्वा पतितान्भ्रातॄन्सर्वांश्चिन्तासमन्वितः ।
धर्मपुत्रो महाबाहुर्विललाप सुविस्तरम् ॥ ३
ननु त्वया महाबाहो प्रतिज्ञातं वृकोदर ।
सुयोधनस्य भेत्स्यामि गदया सक्थिनी रणे ॥ ४
व्यर्थं तदद्य मे सर्वं त्वयि वीरे निपातिते ।
महात्मनि महाबाहो कुरूणां कीर्तिवर्धने ॥ ५
मनुष्यसंभवा वाचो विधर्मिण्यः प्रतिश्रुताः ।
भवतां दिव्यवाचस्तु ता भवन्तु कथं मृषा ॥ ६
देवाश्चापि यदाऽवोचन्सूतके त्वां धनंजय ।
सहस्राक्षादनवरः कुन्ति पुत्रस्तवेति वै ॥ ७
उत्तरे पारियात्रे च जगुर्भूतानि सर्वशः ।
विप्रनष्टां श्रियं चैषामाहर्ता पुनरोजसा ॥ ८
नास्य जेता रणे कश्चिदजेता नैष कस्यचित् ।
सोयं मृत्युवशं यातः कथं जिष्णुर्महाबलः ॥ ९
अयं ममाशां संहत्य शेते भूमौ धनंजयः ।
आश्रित्य यं वयं नाथं दुःखान्येतानि सेहिम ॥ १०
रणे प्रगल्भौ वीरौ च सदा शत्रुनिबर्हणौ ।
कथं रिपुवशं यातौ कुन्तीपुत्रौ महाबलौ ।
यौ सर्वास्त्राप्रतिहतौ भीमसेनधनंजयौ ॥ ११
अश्मसारमयं नूनं हृदयं मम दुर्हृदः ।
यमौ यदेतौ दृष्ट्वाऽद्य पतितौ नावदीर्यते ॥ १२
शास्त्रज्ञा देशकालज्ञास्तपोयुक्ताः क्रियान्विताः ।
अकृत्वा सदृशं कर्म किं शेध्वं पुरुषर्षभाः ॥ १३
अविक्षतशरीराश्चाप्यप्रमृष्टशरासनाः ।
असंज्ञा भुवि संगम्य किं शेध्वमपराजिताः ॥ १४
सानूनिवाद्रेः संसुप्तान्दृष्ट्वा भ्रातॄन्महामतिः ।
सुखं प्रसुप्तान्प्रस्विन्नः खिन्नः कष्टां दशां गतः ॥ १५
एवमेवेदमित्युक्त्वा धर्मात्मा स नरेश्वरः ।
शोकसागरमध्यस्थो दध्यौ कारणमाकुलः ॥ १६
इतिकर्तव्यतां चेति देशकालविभागवित् ।
नाभिपेदे महाबाहुश्चिन्तयानो महामतिः ॥ १७
अथ संस्तभ्य धर्मात्मा तदाऽऽत्मानं तपःसुतः ।
एवं विलप्य बहुधा धर्मपुत्रो युधिष्ठिरः ।
बुद्ध्या विचिन्तयामास वीराः केन निपातिताः ॥ १८
नैषां शस्त्रप्रहारोस्ति पदं नेहास्ति कस्यचित् ।
भूतं महदिदं मन्ये भ्रातरो येन मे हताः ॥ १९

---

हेमजालानि हेमवर्णानि केसराणि तैः परिष्कृतं मण्डितम् ॥ ४९ ॥ सिन्धुवारैर्जलजविशेषैः ॥ ५० ॥ त्रयोदशाधिकत्रिशततमोऽध्यायः ॥ ३१३ ॥

विधर्मिण्योऽनृताः ॥ ६ ॥ न कस्यचिदजेताऽपितु सर्वस्यैव जेता ॥ ९ ॥ आशां राज्याशाम् । संहत्य विनाश्य ॥ १० ॥ दध्यौ कारणं मरणहेतुं विचारितवान् ॥ १६ ॥ तपःसुतः धर्मपुत्रः ॥ १८ ॥

एकाग्रं चिन्तयिष्यामि पीत्वा वेत्स्यामि वा जलम्
'भ्रातॄणां व्यसनं घोरं सममेव महात्मनाम्।।'२०
स्यात्तु दुर्योधनेनेदमुपांशु परिकल्पितम् ।
गान्धारराजरचितं सततं जिह्मबुद्धिना ॥ २१
यस्य कार्यमकार्यं वा सममेव भवत्युत ।
कस्तस्य विश्वसेद्वीरो दुष्कृतेरकृतात्मनः ॥ २२
अथवा पुरुषैर्गूढैः प्रयोगोऽयं दुरात्मनः ।
भवेदिति महाबुद्धिर्बहुधा समचिन्तयत् ॥ २३
'आचार्यं किंनु वक्ष्यामि कृपं भीष्ममहं नु किम् ।
विदुरं किंनु वक्ष्यामि बृहस्पतिसमं नये ॥ २४
अम्बां च किंनु वक्ष्यामि सर्वदा दुःखभागिनीम् ।
दृष्ट्वा मां भ्रातृभिर्हीनं पृच्छन्तीं पुत्रगृद्धिनीम् ॥२५
यदा त्वं भ्रातृभिः सर्वैः शक्रतुल्यपराक्रमैः ।
सार्धं वनं गतो वीरैः कथमेकस्त्वमागतः॥' २६
कस्य किंनु विषेणेदमुदकं दूषितं यथा ।
मृतानामपि चैतेषां विकृतं नैव जायते ।
मुखवर्णाः प्रसन्ना मे भ्रातॄणामित्यचिन्तयत् २७
एकैकशश्चौघवलानिमान्पुरुषसत्तमान् ।
कोऽन्यः प्रतिसमासेत कालान्तकयमादृते ॥ २८
एतेन व्यवसायेन तत्तोयं व्यवगाढवान् ।
पातुकामश्च तत्तोयमन्तरिक्षात्स शुश्रुवे ॥ २९
यक्ष उवाच ।

अहं वकः शैवलमत्स्यभक्षो
नीता मया प्रेतवशं तवानुजाः ।
त्वं पञ्चमो भविता राजपुत्र
न चेत्प्रश्नान्पृच्छतो व्याकरोषि ॥ ३०

मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व च ॥३१
युधिष्ठिर उवाच ।
रुद्राणां वा वसूनां वा मरुतां वा प्रधानभाक् ।
पृच्छामि को भवान्देवो नैतच्छकुनिना कृतम्॥३२
हिमवान्पारियात्रश्च विन्ध्यो मलय एव च ।
चत्वारः पर्वताः केन पातिता भुवि तेजसा ॥ ३३
त्वयाऽतीव महत्कर्म कृतं च बलिनांवर ।
'विनिघ्नता महेष्वासांश्चतुरोपि ममात्मजान्॥'३४
यान्न देवा न गन्धर्वा नासुराश्च न राक्षसाः ।
विषहेरन्महायुद्धे कृतं ते तन्महाद्भुतम् ॥ ३५
न ते जानामि यत्कार्यं नाभिजानामि काङ्क्षितम् ।
कौतूहलं महज्जातं साध्वसं चागतं मम ॥ ३६
येनास्म्युद्विग्नहृदयः समुत्पन्नशिरोज्वरः ।
पृच्छामि भगवंस्तस्मात्को भवानिह तिष्ठति ॥३७
यक्ष उवाच ।
यक्षोऽहमस्मि भद्रं ते नास्मि पक्षी जलेचरः ।
मयैते निहताः सर्वे भ्रातरस्ते निवारिताः ॥ ३८
वैशंपायन उवाच ।
ततस्तामशिवां श्रुत्वा वाचं स परुषाक्षराम् ।
यक्षस्य ब्रुवतो राजन्नाकम्पत तदाऽऽस्थितः ॥३९
विरूपाक्षं महाकायं यक्षं तालसमुच्छ्रयम् ।
ज्वलनार्कप्रतीकाशमधृष्यं पर्वतोपमम् ॥ ४०
सेतुमाश्रित्य तिष्ठन्तं ददर्श भरतर्षभः ।
मेघगम्भीरनादेन तर्जयन्तं महास्वनम् ॥ ४१
'उवाच यक्षः कौन्तेयं भ्रातृशोकप्रपीडितम् ॥'४२
इमे ते भ्रातरो राजन्वार्यमाणा मयाऽसकृत् ।
बलात्तोयं जिहीर्षन्तस्ततो वै मृदिता मया ।
न पेयमुदकं राजन्प्राणानिह परीप्सता ॥ ४३
पार्थ मा साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व च ॥४४
युधिष्ठिर उवाच ।
न चाहं कामये यक्ष तव पूर्वपरिग्रहम् ॥ ४५
कामं नैतत्प्रशंसन्ति सन्तो हि पुरुषाः सदा ।
यदात्मना स्वमात्मानं प्रशंसेत्पुरुषर्षभ ।
यथाप्रज्ञं तु ते प्रश्नान्प्रतिवक्ष्यामि पृच्छ माम् ॥ ४६
यक्ष उवाच ।
किंस्विदादित्यमुन्नयति के च तस्याभितश्चराः ।

---

दुष्कृतेः पापकर्मणः ॥ २२ ॥ ओघवलान् महाप्रवाहवेगान् । प्रतिसमासेत प्रतियुध्येत् । कालेऽन्तं करोति यस्तादृशो यमः कालान्तकयमस्तस्मात् ॥ २८ ॥ प्रधानभाक् प्राधान्यभाक् ॥ ३२ ॥ अतीव ते महदितिपाठे ते तव ॥ ३४ ॥

कश्चैनमस्तं नयति कस्मिंश्च प्रतितिष्ठति ॥ ४७
युधिष्ठिर उवाच ।
ब्रह्मादित्यमुन्नयति देवास्तस्याभितश्चराः ।
धर्मश्चास्तं नयति च सत्ये च प्रतितिष्ठति ॥ ४८
यक्ष उवाच ।
केन स्विच्छ्रोत्रियो भवति केन स्विद्विन्दते महत् ।
केन स्विद्द्वितीयवान्भवति राजन्केन च बुद्धिमान्
युधिष्ठिर उवाच ।
श्रुतेन श्रोत्रियो भवति तपसा विन्दते महत् ।
धृत्या द्वितीयवान्भवति बुद्धिमान्वृद्धसेवया ॥५०
यक्ष उवाच ।
किं ब्राह्मणानां देवत्वं कश्च धर्मः सतामिव ।
कश्चैषां मानुषो भावः किमेषामसतामिव ॥ ५१
युधिष्ठिर उवाच ।
स्वाध्याय एषां देवत्वं तप एषां सतामिव ।
मरणं मानुषो भावः परिवादोऽसतामिव ॥ ५२
यक्ष उवाच ।
किं क्षत्रियाणां देवत्वं कश्च धर्मः सतामिव ।
कश्चैषां मानुषो भावः किमेषामसतामिव ॥ ५३
युधिष्ठिर उवाच ।
इष्वस्त्रमेषां देवत्वं यज्ञ एषां सतामिव ।
भयं वै मानुषो भावः परित्यागोऽसतामिव॥५४
यक्ष उवाच ।
किमेकं यज्ञियं साम किमेकं यज्ञियं यजुः ।
का चैषां वृणुते यज्ञं कां यज्ञो नातिवर्तते ॥ ५५
युधिष्ठिर उवाच ।
प्राणो वै यज्ञियं साम मनो वै यज्ञियं यजुः ।
ऋगेका वृणुते यज्ञं तां यज्ञो नातिवर्तते ॥ ५६
यक्ष उवाच ।
किंस्विदावपतां श्रेष्ठं किंस्विन्निवपतां वरम् ।
किंस्वित्प्रतिष्ठमानानां किंस्वित्प्रसवतां वरम् ॥५७
युधिष्ठिर उवाच ।
वर्षमावपतां श्रेष्ठं बीजं निवपतां वरम् ।
गावः प्रतिष्ठमानानां पुत्रः प्रसवतां वरः ॥ ५८
यक्ष उवाच ।
इन्द्रियार्थाननुभवन्बुद्धिमाँल्लोकपूजितः ।
संमतः सर्वभूतानामुच्छ्वसन्को न जीवति ॥ ५९
युधिष्ठिर उवाच ।
देवतातिथिभृत्यानां पितृणामात्मनश्च यः ।
न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥ ६०
यक्ष उवाच ।
किंस्विद्गुरुतरं भूमेः किंस्विदुच्चतरं च खात् ।
किंस्विच्छीघ्रतरं वायोः किंस्विद्बहुतरं तृणात् ६१
युधिष्ठिर उवाच ।
माता गुरुतरा भूमेः खात्पितोच्चतरस्तथा ।
मनः शीघ्रतरं वाताच्चिन्ता वहुतरी तृणात् ॥६२
यक्ष उवाच ।
किंस्वित्सुप्तं न निमिषति किंस्विज्जातं न चेङ्गते ।
कस्यस्विद्धृदयं नास्ति कास्विद्वेगेन वर्धते ॥ ६३
युधिष्ठिर उवाच ।
मत्स्यः सुप्तो न निमिषत्यण्डं जातं न चेङ्गते ।
अश्मनो हृदयं नास्ति नदी वेगेन वर्धते ॥ ६४
यक्ष उवाच ।
किंस्वित्प्रवसतो मित्रं किंस्विन्मित्रं गृहे सतः ।
आतुरस्य च किं मित्रं किंस्विन्मित्रं मरिष्यतः ६५
युधिष्ठिर उवाच ।
विद्या प्रवसतो मित्रं भार्या मित्रं गृहे सतः ।
आतुरस्य भिषङ्मित्रं दानं मित्रं मरिष्यतः ॥ ६६
यक्ष उवाच ।
कोऽतिथिः सर्वभूतानां किं स्विद्धर्मं सनातनम् ।

---

वेदास्तस्याभितश्चरा इति अधर्मस्तमस्तं नयतीति क. च. ध. पाठः ॥ ४८ ॥ केन द्वितीयो भवतीति ध. पाठः ॥ ४९ ॥ परित्याग आर्तानामिति शेषः । दानमेषां सतामिवेति क. पाठः ॥ ५४ ॥ का चैका वृश्चत इति क. ध. पाठः ॥ ५५॥ वागेका वृश्चतेऽयज्ञमिति क. पाठः ॥ ५६ ॥ न निर्वपति न प्रयच्छति देवतादिभ्यः ॥ ६० ॥ उक्तसाधनाशक्तेन मातापित्रोः शुश्रूषा मनोनिरोधस्तृणवत्तुच्छायाश्चिन्तायास्त्यागश्च कर्तव्य इत्याह किंस्विद्गुर्विति । वहुतरं नृणामिति ध. पाठः । बहुतरी तृणादिति ध. पाठः ॥ ६२ ॥ किंस्विज्जातं नचोपति इति झ. पाठः ॥ ६४ ॥ सार्थः प्रवसतो मित्रमिति झ. पाठः ॥ ६६ ॥

अमृतं किंस्विद्राजेन्द्र किंस्वित्सर्वमिदं जगत् ॥ ६७

युधिष्ठिर उवाच ।

अतिथिः सर्वभूतानामग्निः सोमो गवामृतम् ।
सनातनोऽमृतो धर्मो वायुः सर्वमिदं जगत् ॥ ६८

यक्ष उवाच ।

किंस्विदेको विचरते जातः को जायते पुनः ।
किंस्विद्धिमस्य भैषज्यं किंस्विदावपनं महत् ॥ ६९

युधिष्ठिर उवाच ।

सूर्य एको विचरते चन्द्रमा जायते पुनः ।
अग्निर्हिमस्य भैषज्यं भूमिरावपनं महत् ॥ ७०

यक्ष उवाच ।

किंस्विदेकपदं धर्म्यं किंस्विदेकपदं यशः ।
किंस्विदेकपदं स्वर्ग्यं किंस्विदेकपदं सुखम् ॥ ७१

युधिष्ठिर उवाच ।

दाक्ष्यमेकपदं धर्म्यं दानमेकपदं यशः ।
सत्यमेकपदं स्वर्ग्यं शीलमेकपदं सुखम् ॥ ७२

यक्ष उवाच ।

किंस्विदात्मा मनुष्यस्य किंस्विद्दैवकृतः सखा ।
उपजीवनं किंस्विदस्य किंस्विदस्य परायणम् ॥७३

युधिष्ठिर उवाच ।

पुत्र आत्मा मनुष्यस्य भार्या दैवकृतः सखा ।
उपजीवनं च पर्जन्यो दानमस्य परायणम् ॥ ७४

यक्ष उवाच ।

धन्यानामुत्तमं किंस्विद्धनानां स्यात्किमुत्तमम् ।
लाभानामुत्तमं किं स्यात्सुखानां स्यात्किमुत्तमं ७५

युधिष्ठिर उवाच ।

धन्यानामुत्तमं दाक्ष्यं धनानामुत्तमं श्रुतम् ।
लाभानां श्रेय आरोग्यं सुखानां तुष्टिरुत्तमा ॥७६

यक्ष उवाच ।

किंस्विद्धर्मपरं लोके कश्च धर्मः सदाफलः ।
किं नियम्य न शोचन्ति कैश्च सन्धिर्न जीर्यते ॥७७

युधिष्ठिर उवाच ।

आनृशंस्यं परं धर्मास्त्रेताधर्मः सदाफलः ।
मनो यम्य न शोचन्ति सन्धिः सद्भिर्न जीर्यते ७८

यक्ष उवाच ।

किंनु हित्वा प्रियो भवति किंनु हित्वा न शोचति ।
किंनु हित्वाऽर्थवान्भवति किंनु हित्वा सुखी भवेत्

युधिष्ठिर उवाच ।

मानं हित्वा प्रियो भवति क्रोधं हित्वा न शोचति ।
कामं हित्वाऽर्थवान्भवति लोभं हित्वा सुखी भवेत्

यक्ष उवाच ।

किमर्थं ब्राह्मणे दानं किमर्थं नटनर्तके ।
किमर्थं चैव भृत्येषु किमर्थं चैव राजसु ॥ ८१

युधिष्ठिर उवाच ।

धर्मार्थं ब्राह्मणे दानं यशोर्थं नटनर्तके ।
भृत्येषु सङ्ग्रहार्थं च भयार्थं चैव राजसु ॥ ८२

यक्ष उवाच ।

केन स्विदावृतो लोकः केन स्विन्न प्रकाशते ।
केन त्यजति मित्राणि केन स्वर्गं न गच्छति ॥८३

युधिष्ठिर उवाच ।

अज्ञानेनावृतो लोकस्तमसा न प्रकाशते ।
लोभात्त्यजति मित्राणि सङ्गात्स्वर्गं न गच्छति ८४

यक्ष उवाच ।

मृतः कथं स्यात्पुरुषः कथं राष्ट्रं मृतं भवेत् ।
श्राद्धं मृतं कथं वा स्यात्कथं यज्ञो मृतो भवेत् ८५

युधिष्ठिर उवाच ।

मृतो दरिद्रः पुरुषो मृतं राष्ट्रमराजकम् ।
मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः ॥ ८६

यक्ष उवाच ।

का दिक्किमुदकं पार्थ किमन्नं किंच वै विषम् ।
श्राद्धस्य कालमाख्याहि ततः पिब हरस्व च ८७

युधिष्ठिर उवाच ।

सन्तो दिग्जलमाकाशं गौरन्नं ब्राह्मणं विषम् ।

---

एकपदं एकमेव पर्यवसानस्थानम् । दाक्ष्ये कृत्स्नो धर्मः पर्यवसित इत्यर्थः । एवमुत्तरत्र ॥ ७० ॥ प्रार्थनाविषं इति

झ. पाठः ॥ ८७ ॥

श्राद्धस्य ब्राह्मणः कालः कथं वा यक्ष मन्यसे ८८
यक्ष उवाच ।
तपः किंलक्षणं प्रोक्तं को दमश्च प्रकीर्तितः ।
क्षमा च का परा प्रोक्ता का च ह्रीः परिकीर्तिता ॥
युधिष्ठिर उवाच ।
तपः स्वधर्मवर्तित्वं मनसो दमनं दमः ।
क्षमा द्वन्द्वसहिष्णुत्वं ह्रीरकार्यनिवर्तनम् ॥ ९०
यक्ष उवाच ।
किं ज्ञानं प्रोच्यते राजन्कः शमश्च प्रकीर्तितः ।
दया च का परा प्रोक्ता किं चार्जवमुदाहृतम् ९१
युधिष्ठिर उवाच ।
ज्ञानं तत्त्वार्थसम्बोधः शमश्चित्तप्रशान्तता ।
दया सर्वसुखैषित्वमार्जवं समचित्तता ॥ ९२
यक्ष उवाच ।
कः शत्रुर्दुर्जयः पुंसां कश्च व्याधिरनन्तकः ।
कीदृशश्च स्मृतः साधुरसाधुः कीदृशः स्मृतः ९३
युधिष्ठिर उवाच ।
क्रोधः सुदुर्जयः शत्रुर्लोभो व्याधिरनन्तकः ।
सर्वभूतहितः साधुरसाधुर्निर्दयः स्मृतः ॥ ९४
यक्ष उवाच ।
को मोहः प्रोच्यते राजन्कश्च मानः प्रकीर्तितः ।
किमालस्यं च विज्ञेयं कश्च शोकः प्रकीर्तितः ॥ ९५
युधिष्ठिर उवाच ।
मोहो हि धर्ममूढत्वं मानस्त्वात्माभिमानिता ।
धर्मनिष्क्रियताऽऽलस्यं शोकस्त्वज्ञानमुच्यते ॥ ९६
यक्ष उवाच ।
किं स्थैर्यमृषिभिः प्रोक्तं किं च धैर्यमुदाहृतम् ।
स्नानं च किं परं प्रोक्तं दानं च किमिहोच्यते ९७
युधिष्ठिर उवाच ।
स्वधर्मे स्थिरता स्थैर्यं धैर्यमिन्द्रियनिग्रहः ।
स्नानं मनोमलत्यागो दानं वै भूतरक्षणम् ॥ ९८
यक्ष उवाच ।
कः पण्डितः पुमाञ्ज्ञेयो नास्तिकः कश्च उच्यते ।
को मूर्खः कश्च कामः स्यात्को मत्सर इति स्मृतः ॥
युधिष्ठिर उवाच ।
धर्मज्ञः पण्डितो ज्ञेयो नास्तिको मूर्ख उच्यते ।
कामः संसारहेतुश्च हृत्तापो मत्सरः स्मृतः ॥ १००
यक्ष उवाच ।
कोऽहंकार इति प्रोक्तः कश्च दम्भः प्रकीर्तितः ।
किं तद्दैवं परं प्रोक्तं किं तत्पैशुन्यमुच्यते ॥ १०१
युधिष्ठिर उवाच ।
महाऽज्ञानमहंकारो दम्भो धर्मो ध्वजोच्छ्रयः ।
दैवं दानफलं प्रोक्तं पैशुन्यं परदूषणम् ॥ १०२
यक्ष उवाच ।
धर्मश्चार्थश्च कामश्च परस्परविरोधिनः ।
एषां नित्यविरुद्धानां कथमेकत्र संगमः ॥ १०३
युधिष्ठिर उवाच ।
यदा धर्मश्च भार्या च परस्परवशानुगौ ।
तदा धर्मार्थकामानां त्रयाणामपि संगमः ॥ १०४
यक्ष उवाच ।
अक्षयो नरकः केन प्राप्यते भरतर्षभ ।
एतन्मे पृच्छतः प्रश्नं तच्छीघ्रं वक्तुमर्हसि ॥ १०५
युधिष्ठिर उवाच ।
ब्राह्मणं स्वयमाहूय याचमानमकिंचनम् ।
पश्चान्नास्तीति यो ब्रूयात्सोक्षयं नरकं व्रजेत् ॥ १०६
वेदेषु धर्मशास्त्रेषु मिथ्या यो वै द्विजातिषु ।
देवेषु पितृधर्मेषु सोऽक्षयं नरकं व्रजेत् ॥ १०७
विद्यमाने धने लोभाद्दानभोगविवर्जितः ।
पश्चान्नास्तीति यो ब्रूयात्सोक्षयं नरकं व्रजेत् ॥ १०८
यक्ष उवाच ।
राजन्कुलेन वृत्तेन स्वाध्यायेन श्रुतेन वा ।
ब्राह्मण्यं केन भवति प्रब्रूह्येतत्सुनिश्चितम् ॥ १०९
युधिष्ठिर उवाच ।
शृणु यक्ष कुलं तात न स्वाध्यायो न च श्रुतम् ।
कारणं हि द्विजत्वे च वृत्तमेव न संशयः ॥ ११०
वृत्तं यत्नेन संरक्ष्यं ब्राह्मणेन विशेषतः ।

अक्षीणवृत्तो न क्षीणो वृत्ततस्तु हतो हतः ॥ १११
पठकाः पाठकाश्चैव ये चान्ये शास्त्रचिन्तकाः ।
सर्वे व्यसनिनो मूर्खा यः क्रियावान्स पण्डितः ॥
चतुर्वेदोऽपि दुर्वृत्तः स शूद्रादतिरिच्यते ।
योऽग्निहोत्रपरो दान्तः स ब्राह्मण इति स्मृतः ११३
यक्ष उवाच ।
प्रियवचनवादी किं लभते
विमृशितकार्यकरः किं लभते ।
बहुमित्रकरः किं लभते
धर्मे रतः किं लभते कथय ॥ ११४
युधिष्ठिर उवाच ।
प्रियवचनवादी प्रीयो भवति
विमृशितकार्यकरोऽधिकं जयति ।
बहुमित्रकरः सुखं वसते
यश्च धर्मरतः स गतिं लभते ॥ ११५
यक्ष उवाच ।
को मोदते किमाश्चर्यं कः पन्थाः का च वार्तिका।
वद मे चतुरः प्रश्नान्मृता जीवन्तु बान्धवाः ११६
युधिष्ठिर उवाच ।
पञ्चमेऽहनि षष्ठे वा शाकं पचति स्वे गृहे ।
अनृणी चाप्रवासी च स वारिचर मोदते ॥ ११७
अहन्यहनि भूतानि गच्छन्तीह यमालयम् ।
शेषाः स्थावरमिच्छन्ति किमाश्चर्यमतः परम् ॥११८
तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना
नैको मुनिर्यस्य मतं प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः ॥ ११९
पृथ्वी विभाण्डं गगनं पिधानं
सूर्याग्निना रात्रिदिवेन्धनेन ।
मासर्तुदर्वीपरिघट्टनेन
भूतानि कालः पचतीति वार्ता ॥ १२०

यक्ष उवाच ।
व्याख्याता मे त्वया प्रश्ना यथातत्वं परंतप ।
पुरुषं त्विदानीं व्याख्याहि यश्च सर्वधनी नरः १२१
युधिष्ठिर उवाच ।
दिवं स्पृशति भूमिं च शब्दः पुण्येन कर्मणा ।
यावत्स शब्दो भवति तावत्पुरुष उच्यते ॥१२२
तुल्ये प्रियाप्रिये यस्य सुखदुःखे तथैव च ।
अतीतानागते चोभे स वै पुरुष उच्यते ॥ १२३
'समत्वं यस्य सर्वेषु निस्पृहः शान्तमानसः ।
सुप्रसन्नः सदा योगी स वै सर्वधनी नरः ॥' १२४
यक्ष उवाच ।
व्याख्यातः पुरुषो राजन्यश्च सर्वधनी नरः ।
तस्मात्त्वमेकं भ्रातॄणां यमिच्छसि स जीवतु ॥१२५
युधिष्ठिर उवाच ।
श्यामो य एष रक्ताक्षो बृहत्साल इवोत्थितः ।
व्यूढोरस्को महाबाहुर्नकुलो यक्ष जीवतु ॥ १२६
यक्ष उवाच ।
प्रियस्ते भीमसेनोऽयमर्जुनो वः परायणम् ।
त्वं कस्मान्नकुलं राजन्सापत्नं जीवमिच्छसि १२७
यस्य नागसहस्रेण दशसङ्ख्येन वै बलम् ।
तुल्यं तं भीममुत्सृज्य नकुलं जीवमिच्छसि १२८
तथैनं मनुजाः प्राहुर्भीमसेनं प्रियं तव ।
अथ केनानुभावेन सापत्नं जीवमिच्छसि ॥ १२९
यस्य बाहुबलं सर्वे पाण्डवाः समुपासते ।
अर्जुनं तमपाहाय नकुलं जीवमिच्छसि ॥ १३०
युधिष्ठिर उवाच ।
धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मं न त्यजामि मा नो धर्मो हतोऽवधीत् ॥
आनृशंस्यं परो धर्मः परमार्थाच्च मे मतम् ।
आनृशंस्यं चिकीर्षामि नकुलो यक्ष जीवतु ॥१३२
धर्मशीलः सदा राजा इति मां मानवा विदुः ।

जीवं जीवन्तम् ॥ १२६ ॥ अनुभावेन नकुलगतसामर्थ्येन ॥ १२८ ॥ नः अस्मान्मावधीत् ॥ १३० ॥ आनृशंस्यं अवैषम्यम् । परमार्थात् सत्यात् ॥ १३१ ॥

स्वधर्मान्न चलिष्यामि नकुलो यक्ष जीवतु ॥ १३३
कुन्ती चैव तु माद्री च द्वे भार्ये तु पितुर्मम ।
उभे सपुत्रे स्यातां वै इति मे धीयते मतिः ॥ १३४
यथा कुन्ती तथा माद्री विशेषो नास्ति मे तयोः ।
मातृभ्यां सममिच्छामि नकुलो यक्ष जीवतु ॥ १३५
यक्ष उवाच ।
यस्य तेऽर्थाच्च कामाच्च आनृशंस्यं परं मतम् ।
तस्मात्ते भ्रातरः सर्वे जीवन्तु भरतर्षभ ॥ १३६

॥ इति श्रीमन्महाभारते अरण्यपर्वणि आरणेयपर्वणि चतुर्दशाधिकत्रिशततमोऽध्यायः ॥ ३१४ ॥

## पञ्चदशाधिकत्रिशततमोऽध्यायः ॥ ३१५ ॥

यक्षेण युधिष्ठिरंप्रति स्वस्वरूपप्रकाशनपूर्वकमरणिहरणादेः शीलशोधनाय स्वकृतत्वकथनेन तदभिमतवरप्रदानम् ॥ १ ॥

वैशंपायन उवाच ।
ततस्ते यक्षवचनादुदतिष्ठन्त पाण्डवाः ।
क्षुत्पिपासे च सर्वेषां क्षणेन व्यपगच्छताम् ॥ १
युधिष्ठिर उवाच ।
सरस्येकेन पादेन तिष्ठन्तमपराजितम् ।
पृच्छामि को भवान्देवो न मे यक्षो मतो भवान् ॥ २
वसूनां वा भवानेको रुद्राणामथवा भवान् ।
अथवा मरुतां श्रेष्ठो वज्री वा त्रिदशेश्वरः ॥ ३
मम हि भ्रातर इमे सहस्रशतयोधिनः ।
तं योधं न प्रपश्यामि येन सर्वे निपातिताः ॥ ४
सुखं प्रति प्रबुद्धानामिन्द्रियाण्युपलक्षये ।
स भवान्सुहृदोस्माकमथवा नः पिता भवान् ॥ ५
यक्ष उवाच ।
अहं ते जनकस्तात धर्मो मृदुपराक्रम ।
त्वां दिदृक्षुरनुप्राप्तो विद्धि मां भरतर्षभ ॥ ६
यशः सत्यं दमः शौचमार्जवं ह्रीरचापलम् ।
दानं तपो ब्रह्मचर्यमित्येतास्तनवो मम ॥ ७
अहिंसा समता शान्तिस्तपः शौचममत्सरः ।
द्वाराण्येतानि मे विद्धि प्रियो ह्यसि सुतो मम ॥ ८
दिष्ट्या पञ्चसु रक्तोसि दिष्ट्या ते षट्पदी जिता ।
द्वे पूर्वे मध्यमे द्वे च द्वे शान्ते सांपरायिके ॥ ९
धर्मोऽहमिति भद्रं ते जिज्ञासुस्त्वामिहागतः ।
आनृशंस्येन तुष्टोस्मि वरं दास्यामि तेऽनघ ॥ १०
वरं वृणीष्व राजेन्द्र दाता ह्यस्मि तवानघ ।
ये हि मे पुरुषा भक्ता न तेषामस्ति दुर्गतिः ॥ ११
युधिष्ठिर उवाच ।
अरणी तु हृता यस्य मृगेण वदतांवर ।
तस्याग्नयो न लुप्येरन्प्रथमोऽस्तु वरो मम ॥ १२
धर्म उवाच ।
आरणेयमिदं तस्य ब्राह्मणस्य हृतं मया ।
मृगवेषेण कौन्तेय जिज्ञासार्थं तवानघ ॥ १३
वैशंपायन उवाच ।
ददानीत्येव भगवानुत्तरं प्रत्यपद्यत ।
अन्यं वरय भद्रं ते वरं त्वममरोपम ॥ १४
युधिष्ठिर उवाच ।
वर्षाणि द्वादशारण्ये त्रयोदशमुपस्थितम् ।
तत्र नो नाभिजानीयुर्वसतो मनुजाः क्वचित् १५

---

धीयते निश्चिनुते ॥ १३३ ॥ यस्मात्ते पार्थ धर्माच्च इति थ. ध. पाठः ॥ १३५ ॥ चतुर्दशाधिकत्रिशततमोऽध्यायः ॥ ३१४ ॥

सुहृदः सुहृत् । छान्दसमदन्तत्वम् ॥ ५ ॥ पञ्चस्वात्मदर्शनसाधनेषु शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वेति श्रुत्युक्तेषु शमादिषु । दिष्ट्या पूर्वपुण्यवशाद्रक्तोसि तस्य फलं च षट्पदीजयः। पद्यन्ते प्राप्नुवन्ति देहिनमिति पदानि षडूर्मयो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येतीति श्रुत्युक्ताः। तेषां षण्णां पदानां समाहारः षट्पदी सा त्वया जिता । तेषु पदेषु द्वे पदे पूर्वे जातमात्रस्य ह्यशनायापिपासे प्रथमं भवतः। द्वे मध्ये शोकमोहौ । शोक इष्टवियोगजश्चित्तस्य संतापः। मोहोऽतिपापेन कार्याकार्यप्रतिसंधानशून्यत्वम् । एते मध्ये मध्यमे वयसि प्राप्नुतः । सांपरायिके जरामृत्यू उत्तरे वयस्युपतिष्ठतः । संपरायः परलोकस्तं प्रति नेतुमुदिते सांपरायिके ॥ ९ ॥ अरण्ये गतानीति शेषः । नोऽस्मान् ॥ १५ ॥

वैशंपायन उवाच ।
ददानीत्येव भगवानुत्तरं प्रत्यपद्यत ।
भूयश्चाश्वासयामास कौन्तेयं सत्यविक्रमम् ॥ १६
यद्यपि स्वेन रूपेण चरिष्यथ महीमिमाम् ।
न वो विज्ञास्यते कश्चित्त्रिषु लोकेषु भारत ॥ १७
वर्षं त्रयोदशमिदं मत्प्रसादात्कुरूद्वहाः ।
विराटनगरे गूढा अविज्ञाताश्चरिष्यथ ॥ १८
यद्वः संकल्पितं रूपं मनसा यस्य यादृशम् ।
तादृशं तादृशं सर्वे छन्दतो धारयिष्यथ ॥ १९
अरणीसहितं भाण्डं ब्राह्मणाय प्रयच्छत ।
जिज्ञासार्थं मया ह्येतदाहृतं मृगरूपिणा ॥ २०
प्रवृणीष्वापरं सौम्य वरमिष्टं ददानि ते ।
न तृप्यामि नरश्रेष्ठ प्रयच्छन्वै वरांस्तथा ॥ २१
तृतीयं गृह्यतां पुत्र वरमप्रतिमं महत् ।
त्वं हि मत्प्रभवो राजन्विदुरश्च ममांशजः ॥ २२
युधिष्ठिर उवाच ।
देवदेवो मया दृष्टो भवान्साक्षात्सनातनः ।
यं ददासि वरं तुष्टस्तं ग्रहीष्याम्यहं पितः ॥ २३
जयेयं लोभमोहौ च क्रोधं चाहं सदा विभो ।
दाने तपसि सत्ये च मनो मे सततं भवेत् ॥ २४
धर्म उवाच ।
उपपन्नो गुणैरेतैः स्वभावेनासि पाण्डव ।
भवान्धर्मः पुनश्चैव यथोक्तं ते भविष्यति ॥ २५
वैशंपायन उवाच ।
इत्युक्त्वान्तर्दधे धर्मो भगवाँल्लोकभावनः ।
समेताः पाण्डवाश्चैव सुखसुप्ता मनस्विनः ॥ २६
उपेत्य चाश्रमं वीराः सर्व एव गतक्लमाः ।
आरणेयं ददुस्तस्मै ब्राह्मणाय तपस्विने ॥ २७
इदं समुत्थानसमागतं मह-
त्पितुश्च पुत्रस्य च कीर्तिवर्धनम् ।
पठन्नरः स्याद्विजितेन्द्रियो वशी
सपुत्रपौत्रः शतवर्षभाग्भवेत् ॥ २८
न चाप्यधर्मे न सुहृद्विभेदने
परस्वहारे परदारमर्शने ।
कदर्यभावे न रमेन्मनः सदा
नृणां सदाख्यानमिदं विजानताम् ॥ २९

॥ इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां अरण्यपर्वणि आरणेयपर्वणि पञ्चदशाधिक-त्रिशततमोऽध्यायः ॥ ३१५ ॥

आरणेयपर्व समाप्तम् ॥ २१ ॥ समाप्तमिदमरण्यपर्व च ॥ ३ ॥

---

अतःपरं विराटपर्व भविष्यति ।
तस्यायमाद्यः श्लोकः ।
जनमेजय उवाच ।
कथं विराटनगरे मम पूर्वपितामहाः ।
अज्ञातवासमुषिता दुर्योधनभयार्दिताः ॥ १

छन्दत इच्छातः ॥ १९ ॥ आरणेयमरणीसंपुटम् ॥ २७ ॥ समुत्थानसमागतं भीमादीनां समुत्थानं च धर्मराजेन सह समागतं संमेलनं चेति समाहारः । पितुर्धर्मस्य । पुत्रस्य युधिष्ठिरस्य । चात् समागतमिति समासैकदेशभूतमप्यनुवर्तते ॥ २८ ॥ कदर्यभावे कार्पण्ये । सदाख्यानं शुभाख्यानम् ॥ २९ ॥ पञ्चदशाधिकत्रिशततमोऽध्यायः ॥ ३१५ ॥

इदं वनपर्व कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शकाब्दाः १८३० सन १९०९.

॥ श्रीः ॥

# श्रीमन्महाभारतम् ।

## सटिप्पणम् ।

## विराटपर्व ४.

---

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

**टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च**

अनेकेषां विदुषां साहाय्येन दाक्षिणात्यबहुकोशानुसारेण

संशोध्य

मुंबापुर्यां

जावजी दादाजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

---

शाके १८३० कीलकनामसंवत्सरे ।

श्रीः ।

# श्रीमन्महाभारतम् ।

## विराटपर्व ४ ।

### (अथ पाण्डवप्रवेशपर्व ॥ १ ॥)

#### प्रथमोऽध्यायः ॥ १ ॥

युधिष्ठिरेण ब्राह्मणाय मृगापहृतारणिभाण्डप्रत्यर्पणम् ॥ १ ॥ धौम्येन ब्राह्मणमध्ये दुर्योधनापनयादिकथनेन शोचतो युधिष्ठिरस्य दुःखानुभवविषये देवादिनिदर्शनप्रदर्शनेन परिसान्त्वनम् ॥ २ ॥ पाण्डवैः स्वसहचरब्राह्मणाभ्यनुज्ञानसंपादनेन तद्विसर्जनपूर्वकं धौम्येनसह मन्त्राय क्वचिदुपवेशनम् ॥ ३ ॥

*॥ श्रीवेदव्यासाय नमः ॥

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १
जनमेजय उवाच ।
कथं विराटनगरे मम पूर्वपितामहाः ।
अज्ञातवासमुषिता दुर्योधनभयार्दिताः ॥ १
पतिव्रता महाभागा सततं सुखभागिनी ।
द्रौपदी सा कथं ब्रह्मन्नज्ञाता दुःखिताऽवसत् ॥ २
ते च ब्राह्मणमुख्याश्च सूतपौरोगवैः सह ।
अज्ञातवासमुषिताः कथं च परिचारकाः ॥ ३
वैशंपायन उवाच ।
यथा विराटनगरे तव पूर्वपितामहाः ।
अज्ञातवासमुषितास्तावद्वक्ष्यामि तच्छृणु ॥ ४
तथा स तान्वराँल्लब्ध्वा धर्मराजो युधिष्ठिरः ।
गत्वाऽऽश्रमं ब्राह्मणेभ्य आचख्यौ वृत्तमात्मनः ॥ ५
कथयित्वा च तत्सर्वं ब्राह्मणेभ्यो युधिष्ठिरः ।
अरणीसहितं भाण्डं ब्राह्मणाय न्यवेदयत् ॥ ६
ततो युधिष्ठिरो राजा कुन्तीपुत्रो दृढव्रतः ।
समाहूयानुजान्सर्वानिति होवाच भारत ॥ ७
द्वादशेमानि वर्षाणि राष्ट्राद्विप्रोषिता वयम् ।
छद्मना हृतराज्याश्च निस्वाश्च बहुशः कृताः ॥ ८
उषिताश्च वने वासं यथा द्वादश वत्सरान् ।
अज्ञातचर्यां वत्स्यामश्छन्ना वर्षं त्रयोदशम् ॥ ९
वैशंपायन उवाच ।
धर्मेण तेऽभ्यनुज्ञाताः पाण्डवाः सत्यविक्रमाः ।
अज्ञातवासं वत्स्यन्तश्छन्ना वर्षं त्रयोदशम् ॥ १०
उपोपविश्य विद्वांसः स्नातकाः संशितव्रताः ।
ये तत्र ब्राह्मणा आसन्वनवाससहायिनः ।
ये च भक्ता वसन्ति स्म वनवासे तपस्विनः ॥ ११
तानब्रुवन्महात्मानो हृष्टाः प्राञ्जलयः स्थिताः ।
अभ्यनुज्ञापयिष्यन्तस्तान्प्रवासे धृतव्रताः ॥ १२
विदितं भवतां सर्वं धार्तराष्ट्रैर्यथा वयम् ।
छद्मना हृतराज्याश्च निस्वाश्च बहुशः कृताः ॥ १३
उषिताश्च वने वासं यथा द्वादशवत्सरान् ।
भवद्भिरेव सहिता वन्याहारा द्विजोत्तमाः ॥ १४
अज्ञातवाससमयं शेषं वर्षं त्रयोदशम् ।

* अयमध्यायो झ. पुस्तके वनपर्वान्तिमाध्यायतया वर्तते ।

तद्वत्स्यामो वयं छन्नास्तदनुज्ञातुमर्हथ ॥ १५
सुयोधनश्च दुष्टात्मा कर्णश्च सहसौबलः ।
जानन्तो विषमं कुर्युरस्मास्वत्यन्तवैरिणः ॥ १६
युक्तचाराश्च यत्ताश्च दाये स्वस्य जनस्य च ।
दुरात्मनां हि कस्तेषां विश्वासं गन्तुमर्हति ॥ १७
अपि नस्तद्भवेद्भूयो यद्वयं ब्राह्मणैः सह ।
समस्तेषु च राष्ट्रेषु स्वराज्यस्था भवेम हि ॥ १८
इत्युक्त्वा दुःखशोकार्तः शुचिर्धर्मसुतस्तदा ।
संमूर्च्छितोऽभवद्राजा साश्रुकण्ठो युधिष्ठिरः ॥१९
तमथाश्वासयन्सर्वे ब्राह्मणा भ्रातृभिः सह ॥ २०
प्रबुध्य दुःखमोहार्तो धौम्यं धर्मभृतांवरम् ।
प्रावेक्षत तदा राजा साश्रुकण्ठो युधिष्ठिरः ॥२१
अथ धौम्योऽब्रवीद्वाक्यं महार्थं नृपतिं तदा ।
आश्वासयंस्तं स नृपं भ्रातृंश्च ब्राह्मणैः सह ॥२२
राजन्विद्वान्भवान्दान्तः सत्यसन्धो जितेन्द्रियः ।
नैवंविधाः प्रमुह्यन्ति धीराः कस्यांचिदापदि ॥ २३
देवैरप्यापदः प्राप्तारछन्नैश्च बहुभिस्तदा ।
तत्रतत्र सपत्नानां निग्रहार्थं महात्मभिः ॥ २४
दितिपुत्रैर्हृते राज्ये देवराजः सुदुःखितः ।
ब्रह्माणं तोषयिष्यंश्च ब्रह्मरूपं विधाय च ॥ २५
इन्द्रेण निषधं प्राप्य गिरिप्रस्थाह्वये पुरे ।
छन्नेनोष्य कृतं कर्म द्विषतां बलनिग्रहे ॥ २६
प्रसादाद्ब्रह्मणो राजन्दितेः पुत्रान्महाबलान् ।
निर्जित्य तरसा शत्रून्पुनर्लोकाञ्जुगोप च ॥ २७
विष्णुनाऽश्मगिरिं प्राप्य तदा दित्यां निवत्स्यता ।
गर्भे वधार्थं दैत्यानामज्ञातेनोषितं चिरम् ॥ २८
प्रोष्य वामनरूपेण च्छन्नेन ब्रह्मचारिणा ।
बलेर्यथा हृतं राज्यं विक्रमैस्तच्च ते श्रुतम् ॥ २९
और्वेण वसता छन्नमूरौ ब्रह्मर्षिणा तदा ।
यत्कृतं तात लोकेषु तच्च सर्वं श्रुतं त्वया ॥ ३०
प्रच्छन्नेनापि सर्वत्र हरिणा वृत्रनिग्रहे ।
वज्रं प्रविश्य शक्रस्य यत्कृतं तच्च ते श्रुतम् ॥ ३१
हुताशनेन यच्चापः प्रविश्य च्छन्नमूषितम् ।
विबुधानां हि यत्कर्म कृतं तच्चापि ते श्रुतम् ॥ ३२

यथा विवस्वता तात छन्नेनोत्तमतेजसा ।
निर्दग्धाः शत्रवः सर्वे वसता गवि वर्षशः ॥ ३३
विष्णुना वसता चात्र गृहे दशरथस्य वै ।
दशग्रीवो हतश्छन्नं संयुगे भीमकर्मणा ॥ ३४
एवमेते महात्मानः प्रच्छन्नास्तत्रतत्र हि ।
अजयञ्छात्रवान्मुख्यांस्तथा त्वमपि जेष्यसि ॥३५
वैशंपायन उवाच ।
इति धौम्येन धर्मज्ञो वाक्यैः स परिहर्षितः ।
शान्तबुद्धिः पुनर्भूत्वा व्यष्टम्भत युधिष्ठिरः ॥३६
अथाब्रवीन्महाबाहुर्भीमसेनो महाबलः ।
राजानं बलिनां श्रेष्ठो गिरा संपरिहर्षयन् ॥ ३७
अवेक्षय महाराज तव गाण्डीवधन्वना ।
धर्मार्थपरया बुद्ध्या न किंचित्साहसं कृतम् ॥ ३८
सहदेवो मया नित्यं नकुलश्च निवारितौ ।
शक्तौ विध्वंसने तेषां शत्रुघ्नौ भीमविक्रमौ ॥ ३९
न वयं वर्त्म हास्यामो यस्मिन्योक्ष्यति नो भवान् ।
तद्विधत्तां भवान्सर्वं क्षिप्रं जेष्यामहे परान् ॥ ४०
इत्युक्तो भीमसेनेन धर्मराजो युधिष्ठिरः ।
सुखोपविष्टो विद्वद्भिस्तापसैः संशितव्रतैः ॥ ४१
ये तद्भक्त्याऽभवंस्तस्मिन्वनवासे तपस्विनः ।
तानब्रवीन्महाप्राज्ञः शिष्टान्राजा कृताञ्जलिः ।
अभ्यनुज्ञापयिष्यन्वै तस्मिन्वासे धृतव्रतः ॥ ४२
विदितं भवतां सर्वं धार्तराष्ट्रैर्यथा वयम् ।
संमन्त्र्याहृतराज्याश्च निस्स्वाश्च बहुशः कृताः ।
उषिताः स्मो वने कृच्छ्रं तथा वर्षाणि द्वादश ॥४३
अज्ञातचर्यासमयं शेषं वर्षं त्रयोदशम् ।
तद्वत्स्यामः क्वचिच्छन्नास्तदनुज्ञातुमर्हथ ॥ ४४
इत्युक्ता धर्मराजेन ब्राह्मणाः परमाशिषः ।
प्रयुज्यापृच्छ्य भरतान्यथास्वं प्रययुर्गृहान् ॥ ४५
सर्वे वेदविदो मुख्या यतयो मुनयस्तदा ।
आशीरुक्त्वा यथान्यायं पुनर्दर्शनकाङ्क्षिणः ॥४६
ते तु भृत्याश्च दूताश्च शिल्पिनः परिचारकाः ।
अनुज्ञाप्य यथान्यायं पुनर्दर्शनकाङ्क्षिणः ॥ ४७

सह धौम्येन विद्वांसस्तथा ते पञ्च पाण्डवाः ।
उत्थाय प्रययुर्वीराः कृष्णामादाय भारत ॥ ४८
क्रोशमात्रमतिक्रम्य तस्माद्वासाभिनिमित्ततः ।
श्वोभूते मनुजव्याघ्राश्छन्नवासार्थमुद्यताः ॥ ४९
पृथक् शास्त्रविदः सर्वे सर्वे मन्त्रविशारदाः ।
सन्धिविग्रहतत्त्वज्ञा मन्त्राय समुपाविशन् ॥ ५०

॥ इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

युधिष्ठिरेण भ्रातृभिः सह मन्त्रणेन विराटनगरे निवासनिर्धारणम् ॥१॥ तथा स्वस्य यतिवेषपरिग्रहेण विराटसभास्तारी-भवनकथनम् ॥ २ ॥

वैशंपायन उवाच ।
निवृत्तवनवासास्ते सत्यसन्धा मनस्विनः ।
अकुर्वत पुनर्मन्त्रं सह धौम्येन पाण्डवाः ॥ १
अथाब्रवीद्धर्मराजः कुन्तीपुत्रो युधिष्ठिरः ।
भ्रातॄन्कृष्णां च संप्रेक्ष्य धौम्यं च कुरुनन्दनः ॥ २
द्वादशेमानि वर्षाणि राज्याद्विप्रोषिता वयम् ।
त्रयोदशोऽयं संप्राप्तः कृच्छ्रात्परमदुर्वसः ।
स साधु कौन्तेय इतो वासमर्जुन रोचय ॥ ३
त्रयोदशमिदं प्राप्तं क्वनु वत्स्यामहेऽर्जुन ।
अबुद्धा धार्तराष्ट्रैश्च समग्राः सह कृष्णया ॥ ४
अर्जुन उवाच ।
तस्यैव वरदानेन धर्मस्य मनुजाधिप ।
अज्ञाता विचरिष्यामो नराणां भरतर्षभ ॥ ५
यानि राष्ट्राणि वासाय कीर्तयिष्यामि कानिचित् ।
रमणीयानि गुप्तानि तेषां किंचित्तु रोचय ॥ ६
रम्या जनपदाः सन्ति बहवस्त्वभितः कुरून् ।
पाञ्चालाश्चैव मत्स्याश्च साल्ववैदेहबाह्लिकाः ।
दशार्णाः शूरसेनाश्च कलिङ्गा मागधा अपि ॥ ७
विराटनगरं चापि श्रूयते शत्रुसूदन ।
रमणीयं जनाकीर्णं सुभिक्षं स्फीतमेव च ॥ ८
नानाराष्ट्राणि चान्यानि श्रूयन्ते सुबहूनि च ।
यत्र ते रोचते राजंस्तत्र गच्छामहे वयम् ॥ ९
कतमस्मिञ्जनपदे महाराज निवत्स्यसि ।
मा विषादे मनः कार्यं राज्यभ्रंश इति क्वचित् १०
युधिष्ठिर उवाच ।
एवमेतन्महाबाहो यथा स भगवान्प्रभुः ।
अब्रवीत्सर्वभूतेशस्तथैतन्न तदन्यथा ॥ ११
अवश्यं त्वेव वासार्थं रमणीयं शिवं सुखम् ।
संमन्त्र्य सहितैः सर्वैर्द्रष्टव्यमकुतोभयम् ॥ १२
मात्स्यो विराटो बलवानभिरक्तोथ पाण्डवान् ।
धर्मशीलो वदान्यश्च वृद्धः सत्स्वपि संमतः ॥ १३
गुणवाँल्लोकविख्यातो दृढभक्तिर्जितेन्द्रियः ।
तत्र मे रोचते पार्थ मत्स्यराजान्तिकेऽनघ ॥ १४
विराटनगरे तात मासान्द्वादशसंमितान् ।
कुर्वन्तस्तस्य कर्माणि वसामो यदि रोचते ॥ १५
यानियानि च कर्माणि तस्य शक्ष्यामहे वयम् ।
कर्तुं यो यत्स तत्कर्म ब्रवीतु कुरुनन्दन ॥ १६
अर्जुन उवाच ।
नरदेव कथं कर्म तस्य राष्ट्रे करिष्यसि ।
मनुजेन्द्र विराटस्य रंस्यसे केन कर्मणा ॥ १७
अक्लिष्टवेषधारी च धार्मिको ह्यनसूयकः ।
न तवाभ्युचितं कर्म नृशंसं नापि कैतवम् ॥ १८
सत्यवागसि याज्ञीको लोभक्रोधविवर्जितः ।
मृदुर्वदान्यो ह्रीमांश्च धार्मिकः सत्यविक्रमः ॥ १९
स राजंस्तपसा क्लिष्टः कथं तस्य करिष्यसि ।
न दुःखमुचितं किंचिद्राजन्पापमतेर्यथा ।
स इमामापदं प्राप्य कथं घोरां तरिष्यसि ॥ २०
वैशंपायन उवाच ।
अर्जुनेनैवमुक्तस्तु प्रत्युवाच युधिष्ठिरः ।
शृणु त्वं यत्करिष्यामि कर्म वै कुरुनन्दन ॥ २१
विराटं समनुप्राप्य राजानं मात्स्यनन्दनम् ।
सभास्तारो भविष्यामि विराटस्येति मे मतिः २२

कङ्को नाम ब्रुवाणोऽहं मताक्षः साधुदेविता ।
वैडूर्यान्काञ्चनान्दान्तान्स्फाटिकान्राजतानपि२३
कृष्णाक्षाँल्लोहिताक्षांश्च निवप्स्यामि मनोरमान् ।
अरिष्टान्राजगोलिङ्गान्दर्शनीयान्सुवर्चसः ॥ २४
लोहिताश्वाश्मगर्भाश्च सन्ति तात धनानि मे ।
दर्शनीयाः सभानन्दाः कुशलैः साधुनिष्ठिताः२५
अप्येतान्पाणिना स्पृष्ट्वा संप्रहृष्यन्ति मानवाः२६
तान्विकीर्य समे देशे रमणीये विपांसुले ।
देविष्यामि यथाकामं स विहारो भविष्यति ॥२७
कङ्को नाम्ना परिव्राट् च विराटस्य सभासदः ।
ज्योतिषे शकुनज्ञाने निमित्ते चाक्षकौशले ।
ब्राह्मे वेदे मयाऽधीते वेदाङ्गेषु च सर्वशः ॥ २८
धर्मकामार्थमोक्षेषु नीतिशास्त्रेषु पारगः ।
पृष्टोऽहं कथयिष्यामि राज्ञः प्रियतमं वचः ॥२९
आसं युधिष्ठिरस्याहं पुरा प्राणसमः सखा ।
इति वक्ष्यामि राजानं यदि मामनुयोक्ष्यते ॥ ३०
विराटनगरे छन्न एवं युक्तः सदा वसे ।
इत्येवं मे प्रतिज्ञातं विचरिष्याम्यहं यथा ॥ ३१

॥ इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः ॥ ३ ॥

भीमेन युधिष्ठिरंप्रति स्वस्य सूदवेषपरिग्रहेण विराटभवने निवासकथनम् ॥ १ ॥ अर्जुनेन युधिष्ठिरंप्रति स्वेन नपुंसकवेषपरिग्रहेण राजकन्यानाटनादिकथनम् ॥ २ ॥

वैशंपायन उवाच ।
एवं निर्दिश्य चात्मानं निश्वसन्नुष्णमार्तिजम् ।
विमुञ्चन्नश्रु नेत्राभ्यां भीमसेनमुवाच ह ॥ १
भीमसेन कथं कर्म मात्स्यराष्ट्रे करिष्यसि ।
हत्वा क्रोधवशांस्तत्र पर्वते गन्धमादने ॥ २
यक्षान्क्रोधाभिताम्राक्षाद्राक्षसांश्चापि पौरुषात् ।
प्रादाः पाञ्चालकन्यायै पद्मानि सुबहून्यपि ॥ ३
बकं राक्षसराजानं भीषणं पुरुषादकम् ।
जघ्निवानसि कौन्तेय ब्राह्मणार्थमरिन्दम ।
क्षेमा चाभयसंवीता सैकचक्रा त्वया कृता ॥ ४
हिडिम्बं च महावीर्यं किर्मीरं चैव राक्षसम् ।
त्वया हत्वा महाबाहो वनं निष्कण्टकं कृतम् ॥५
आपदं चापि संप्राप्ता द्रौपदी चारुहासिनी ।
जटासुरवधं कृत्वा वयं च परिमोक्षिताः ॥ ६
मत्स्यराजान्तिके तात वीर्यपूर्णोऽत्यमर्षणः ।
वृकोदर विराटस्य बलीयान्दुर्बलीयसः ।
समीपे नगरे तस्य वत्स्यसे केन कर्मणा ॥ ७
भीम उवाच ।
सूदोऽहं वललो नाम्ना सूपकारो नराधिप ।
उपस्थास्यामि राजानं विराटमिति रोचये ॥ ८
रसान्नानाविधांश्चापि स्वादूंश्च मधुरांस्तथा ।
सूपांश्चापि करिष्यामि कुशलोस्मि महानसे ॥ ९
कृतपूर्वाणि यान्यस्य व्यञ्जनानि सुशिक्षितैः ।
तान्यप्यभिभविष्यामि प्रीतिं संजनयन्नहम् ॥ १०
पूर्वमप्राशितांस्तेन कर्ता रसगुणान्वितान् ।
स्वादु व्यञ्जनमास्वाद्य मात्स्यः प्रीतो भविष्यति ॥
आहरिष्यामि दारूणां पाटितानां शतंशतम् ।
राजा कर्माणि मे दृष्ट्वा न मां परिभविष्यति १२
ये च तस्य महामल्लाः समरेष्वपराजिताः ।
कृतप्रतापा बहुशो राज्ञः प्रत्यायिता बले ॥ १३
रङ्गोपजीविनः सर्वे परेषां च भयावहाः ।
तानहं निहनिष्यामि रतिं राज्ञः प्रवर्तयन् ॥ १४
न च तान्युध्यमानोऽहं नयिष्ये यमसादनम् ।
तथा तान्निहनिष्यामि जीविष्यन्ति यथाऽऽतुराः॥
वृषो वा महिषो वापि नागो वा षाष्टिहायनः ।
सिंहो व्याघ्रो ग्रहीतव्यो भविष्यति न संशयः ॥
तान्सर्वान्दुर्ग्रहानन्यैराशीविषविषोपमान् ।
बलादहं ग्रहीष्यामि मत्स्यराजस्य पश्यतः ॥ १७
आरालिका वा सूदा वा येऽस्य युक्ता महानसे ।
तानहं प्रीणयिष्यामि मनुष्यान्स्वेन कर्मणा ॥१८

आरालिको गोविकर्ता सूपकर्ता नियोधकः ।
आसं युधिष्ठिरस्याहमिति वक्ष्यामि मानवान् १९
आत्मानमात्मना रक्षंश्चरिष्यामि विशांपते ।
इत्येवं च प्रतिज्ञातं विचरिष्याम्यहं यथा ।
विराटनगरे च्छन्नो विराटस्य समीपतः ॥ २०
युधिष्ठिर उवाच ।
अग्निर्ब्राह्मणरूपेण प्रच्छन्नोऽन्नमयाचत ।
महाशनं ब्राह्मणं मां प्रभुश्चार्जुन खाण्डवे ॥ २१
संशुश्रुवे च धर्मात्मा यस्तमर्थं चकार ह ।
तस्मै ब्राह्मणरूपाय हुताशाय महायशाः ।
विजित्यैकरथेनेन्द्रं हत्वा पन्नगराक्षसान् ॥ २२
यस्तु देवान्मनुष्यांश्च सर्वानेकरथोऽजयत् ।
स भीमधन्वा श्वेताश्वः पाण्डवः किं करिष्यति ॥
आशीविषसमस्पर्शो नागानामिव वासुकिः ।
दृष्टीविष इवाहीनामग्निस्तेजस्विनामिव ॥ २४
समुद्र इव सिन्धूनां शैलानां हिमवानिव ।
महेन्द्र इव देवानां दानवानां बलिर्यथा ॥ २५
सुप्रतीको गजेन्द्राणां युग्यानां तुरगो यथा ।
कुबेर इव यक्षाणां मृगाणां केसरी यथा ॥ २६
राक्षसानां दशग्रीवो दैत्यानामिव शम्बरः ।
रुद्राणामिव कापाली विष्णुर्बलवतामिव ॥ २७
रोषामर्षसमायुक्तो भुजङ्गानां च तक्षकः ।
वायुवेगबलोद्भूतो गरुडः पततामिव ॥ २८
तपतामिव चादित्यः प्रजानां ब्राह्मणो यथा ।
ह्रदानामिव पातालं पर्जन्यो नर्दतामिव ॥ २९
आयुधानां वरो वज्रः ककुद्मांश्च गवां वरः ।
धृतराष्ट्रश्च नागानां हस्तिष्वैरावतो यथा ॥ ३०
पुत्रः प्रियाणामधिको भार्या च सुहृदां वरा ।
गिरीणां प्रवरो मेरुर्देवानां मधुसूदनः ।
ग्रहाणां प्रवरश्चन्द्रः सरसां मानसो यथा ॥ ३१
यथैतानि विशिष्टानि स्वस्यां जात्यां वृकोदर ।
एवं युवा गुडाकेशः श्रेष्ठः सर्वधनुष्मताम् ॥ ३२
सोयमिन्द्रादनवमो वासुदेवाच्च भारत ।
उषित्वा पञ्च वर्षाणि सहस्राक्षस्य वेश्मनि ।
ब्रह्मचारी व्रते युक्तः सर्वशस्त्रभृतांवरः ॥ ३३
अवाप चास्त्रमस्त्रज्ञः सर्वज्ञः सर्वसंमतः ।
क्षिप्रं चाशु विचित्रं च ध्रुवं च वदतां वरः ॥ ३४
अनुज्ञातः सुरेन्द्रेण पुनः प्रत्यागतो महीम् ।
धार्तराष्ट्रविनाशाय पाण्डवानां जयाय च ॥ ३५
यं मन्ये द्वादशं रुद्रमादित्यानां त्रयोदशम् ।
वसूनां नवमं मन्ये गिरीणामष्टमः स्मृतः ॥ ३६
यस्य दीर्घौ समौ बाहू ज्याघातेन किणीकृतौ ।
दक्षिणश्चैव सव्यश्च बाहू अनडुहो यथा ॥ ३७
तलाङ्गुलित्राभ्युचितौ नागराजकरोपमौ ।
पीनौ परिघसङ्काशौ मृदुताम्रतलौ शुभौ ॥ ३८
श्यामो युवा गुडाकेशो दर्शनीयश्च पाण्डवः ।
गाण्डीवधन्वा श्वेताश्वः किरीटी वानरध्वजः ३९
किंरूपधारी किंकर्मा किंचेष्टः किंपरायणः ।
बीभत्सुर्भीमधन्वा च किं करिष्यति चार्जुनः ।
कुन्तीपुत्रो विराटस्य रमते केन कर्मणा ॥ ४०
अर्जुन उवाच ।
इमौ किणीकृतौ बाहू ज्याघाततलपीडनात् ।
नित्यं कञ्चुकसंछन्नौ नान्यथा गोप्तुमुत्सहे ॥ ४१
किं तु कार्यवशादेतदाचरिष्यामि कुत्सितम् ॥४२
बाहू मे भरतश्रेष्ठ महालाञ्छनलक्षितौ ।
ज्याघातेन महान्तौ मे गूहितुं नान्यथोत्सहे ४३
उभौ कम्बू प्रतीमुच्य कुण्डले परिपातुके ।
वेणीकृतशिरा भूत्वा भविष्यामि बृहन्नला ॥ ४४
पठन्नाख्यायिकां नाम स्त्रीभावेन पुनः पुनः ।
प्रजानां समुदाचारं बहुनर्मकृतं वदन् ।
रमयिष्यामि राजानमन्यं चान्तःपुरे जनम् ॥ ४५
नृत्तं गीतं च वादित्रं दिव्यं च विविधं तथा ।
शिक्षयिष्याम्यहं राजन्विराटनगरे स्त्रियः ॥ ४६
स्त्रीभावसमुदाचारान्नृत्तगीतकथाश्रयैः ।
छादयिष्यामि राजेन्द्र माययाऽऽत्मानमात्मना ॥
युधिष्ठिरस्य गेहेऽस्मिन्द्रौपद्याः परिचारिका ।
उषिताऽसीति वक्ष्यामि धर्मराजस्य संमता ॥४८

उर्वश्याश्चापि शापेन प्राप्तोऽसि नृप षण्डताम् ।
शक्रप्रसादान्मुक्तोऽहं वर्षादूर्ध्वं त्रयोदशात् ।
इत्येतन्मे प्रतिज्ञातं विचरिष्याम्यहं यथा ॥ ४९
एतेन विधिना छन्नः कृतकेन यथा नलः ।
विहरिष्यामि राजेन्द्र विराटस्य पुरे सुखम् ॥५०

युधिष्ठिर उवाच ।
वासुदेवसमो लोके यशसा विक्रमेण च ।
सोयं राज्ये विराटस्य भवने भरतर्षभः ॥ ५१
मेरुः प्रच्छादित इव वसन्वज्रेण मुष्टिना ।
आख्याता षण्डकोस्मीति प्रतिज्ञातं हि पातकं ५२

॥ इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

युधिष्ठिरंप्रति नकुलेन विराटनगरे अश्वपालकतया स्वस्य निवासकथनम् ॥ १ ॥ सहदेवेन गोपालकतया स्वस्य निवासकथनम् ॥ २ ॥ द्रौपद्या सैरन्ध्रीभावेन स्वस्य निवासकथनम् ॥ ३ ॥

वैशंपायन उवाच ।
इत्येवमुक्त्वा पुरुषप्रवीर-
स्तथार्जुनो धर्मभृतां वरिष्ठः ।
वाक्यं तथासौ विरराम भूयो
नृपोऽपरं भ्रातरमाबभाषे ॥ १
किंकर्मा किंसमाचारो नकुलोयं भविष्यति ।
सुकुमारश्च शूरश्च दर्शनीयः सुखोचितः ॥ २
अदुःखार्हश्च बालश्च लालितश्चापि नित्यशः ।
सोयमार्तश्च शान्तश्च किं नु रोचयताम्त्विह ॥ ३
किं त्वं नकुल कुर्वाणस्तस्य तात चरिष्यसि ।
कर्म तत्त्वं समाचक्ष्व राज्ये तस्य महीपतेः ॥ ४
नकुल उवाच ।
अश्वाध्यक्षो भविष्यामि विराटस्येति मे मतिः ।
दामग्रन्थीति नाम्नाऽहं कर्मैतत्सुप्रियं मम ॥ ५
दामग्रन्थी परिज्ञातः कुशलो दामकर्मणि ।
न मां परिभविष्यन्ति जना जात्विह कर्हिचित्॥
कुशलोस्म्यश्वशिक्षायां तथैवाश्वचिकित्सने ।
प्रियाश्च सततं मेऽश्वाः कुरुराज यथा तव ॥ ७
न मां परिभविष्यन्ति किशोरा वडवास्तथा ।
न दुष्टाश्च भविष्यन्ति पृष्ठे धुरि च मद्गताः ॥ ८
द्रक्ष्यन्ति ये च मां केचिद्विराटनगरे जनाः ।
तेभ्य एवं प्रवक्ष्यामि विहरिष्याम्यहं यथा ॥ ९
पाण्डवेन ह्यहं तात अश्वेष्वधिकृतः पुरा ।
इति तस्य पुरे छन्नश्चरिष्यामि महीपते ।
इत्येतद्वः प्रतिज्ञातं विहरिष्याम्यहं यथा ॥ १०
वैशंपायन उवाच ।
नकुलेनैवमुक्तस्तु धर्मराजोऽब्रवीद्वचः ।
बृहस्पतिसमो बुद्ध्या नयेनोशनसा समः ॥ ११
मन्त्रैर्नानाविधैर्नीतः पथ्येषु परिनिष्ठितः ।
सुप्रणीतः सुमार्गस्थो राजतन्त्रमवाप यः ॥ १२
न चास्य स्खलितं किंचिद्ददृशुस्तद्विदो जनाः ।
सुनीतिज्ञश्च शूरश्च सर्वमन्त्रविशारदः ॥ १३
अधिको मातुरस्माकं कुन्त्याः प्रियतमः सदा ।
सहदेव कथं कर्म तस्य राज्ञः करिष्यसि ।
किं वा त्वं तात कुर्वाणः प्रच्छन्नो विचरिष्यसि १४
सहदेव उवाच ।
गोसङ्ख्याता भविष्यामि विराटस्येति रोचये ।
प्रतिभोक्ता च दोग्धा च सङ्ख्यानकुशलो गवाम्।
तन्त्रीपालेति मे नाम स्वयं प्रोक्तं भविष्यति॥ १५
अरोगा बहुलाः पुष्टाः क्षीरवत्यो बहुप्रजाः ।
निष्पन्नसत्त्वाः सुभृता ह्यपेतज्वरकिल्बिषाः॥ १६
नष्टचोरभया नित्यं व्याधिव्याघ्रविवर्जिताः ।
गावः सुसहिता राजन्निरुद्विग्ना निरामयाः ॥१७
भविष्यन्ति मया गुप्ता विराटनगरे तदा ।
निपुणत्वं चरिष्यामि प्रीतिरत्र परा हि मे ॥ १८
अहं हि भवता गोषु प्रहितः सततं पुरा ।
तत्र मे कौशलं सर्वमनुबद्धं विशांपते ॥ १९
लक्षणं चरितं चैव गवां यच्चापि मङ्गलम् ।

सत्सर्वं मे सुविदितमन्यच्चापि विशांपते ॥ २०
वृषभानपि जानामि राजन्पूजितलक्षणान् ।
येषां मूत्रमुपाघ्राय अपि वन्ध्या प्रसूयते ॥ २१
सोऽहमेवं चरिष्यामि प्रीतिरत्र परा हि मे ।
विराटनगरे गूढो रंस्येऽहं तेन कर्मणा ॥ २२
तोषयिष्ये च राजानं मा भूच्चिन्ता तवानघ ।
न च मां वेत्स्यति परस्तत्ते रोचतु पार्थिव ।
इत्येतद्वः प्रतिज्ञातं विचरिष्याम्यहं यथा ॥ २३
युधिष्ठिर उवाच ।
केनात्र कर्मणा कृष्णा द्रौपदी विचरिष्यति ।
न हि किंचिद्विजानाति कर्म कर्तुं यथा स्त्रियः २४
माल्यगन्धानलङ्कारान्वस्त्राणि विविधानि च ।
एतान्येवाभिजानाति यथाजाता च भामिनी २५
पतिव्रता महाभागा कथं नु विचरिष्यति ।
इयं तु नः प्रिया भार्या प्राणेभ्योपि गरीयसी ॥ २६
मातेव परिपाल्या च पूज्या ज्येष्ठा स्वसेव च ।
सुकुमारी सुशीला च राजपुत्री यशस्विनी ।
कथं वत्स्यति कल्याणी विराटनगरे सती ॥ २७
द्रौपद्युवाच ।
अहं वत्स्यामि राजेन्द्र निर्वृतो भव पार्थिव ।
यथा ते मत्कृते शोको न भवेन्नृपते शृणु ।
यथा तु मां न जानन्ति यत्करिष्याम्यहं प्रभो ॥२८
छन्ना वत्स्याम्यहं यन्मां न विजानन्ति केचन ।
वृत्तं तच्च समाख्यास्ये शर्म तेस्तु विशांपते ॥२९
सैरन्ध्रीजातिसंपन्ना नाम्नाऽहं व्रतचारिणी ।
भविष्यामि महाराज विराटस्येति मे मतिः ॥ ३०
सैरन्ध्र्यो रक्षिताः स्त्रीणां भुजिष्याः सन्ति भारत ।
एकपत्न्यः स्त्रियश्चैता इति लोकस्य निश्चयः ॥ ३१
साऽहं ब्रुवाणा सैरन्ध्री कुशला केशकर्मणि ।
प्रमदाहरिका लोके पुरुषाणां प्रवासिनाम् ॥ ३२
युधिष्ठिरस्य वै गेहे द्रौपद्याः परिचारिका ।
उषिताऽस्मीति वक्ष्यामि पृष्टा राज्ञा च भारत ।
आत्मगुप्ता चरिष्यामि यन्मां त्वं परिपृच्छसि ॥३३
नाहं तत्र भविष्यामि दुर्भरा राजवेश्मनि ।
कृत्वा चैव सदा रक्षां व्रतेनैव नराधिप ॥ ३४
सुदेष्णां प्रत्युपस्थास्ये राजभार्यां यशस्विनीम् ।
सा रक्षिष्यति मां प्राप्तां मा ते भूद्दुःखमीदृशम् ॥३५
अथ गुप्ता चरिष्यामि युष्माभिस्तत्र तस्थुषी ।
इत्येवं वः प्रतिज्ञातं विहरिष्याम्यहं यथा ॥ ३६
युधिष्ठिर उवाच ।
यथा नो दुर्हृदः पापा भवन्ति सुखिनः पुनः ।
कुर्यास्तथा त्वं कल्याणि लक्षयेयुर्न ते जनाः ॥ ३७
कल्याणं भाषसे कृष्णे यथा कौलेयकी तथा ।
न पापमभिजानासि साध्वी साधुव्रते स्थिता ॥३८

॥ इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ॥ ५ ॥

पाण्डवैरिन्द्रसेनादीन्प्रति द्वारकादिगमनचोदना ॥ १ ॥ पाण्डवान्प्रति धौम्येन राजगृहवासप्रकारानुशासनम् ॥ २ ॥

युधिष्ठिर उवाच ।
कर्माण्युक्तानि युष्माभिर्यानि तानि चरिष्यथ ।
मम चापि यथा बुद्धिरुचिता हि विनिश्चयात् १
पुरोहितोऽयमस्माकमग्निहोत्राणि रक्षतु ।
सूतपौरोगवैः सार्धं द्रुपदस्य निवेशने ॥ २
इन्द्रसेनमुखाश्चेमे रथानादाय केवलान् ।
यान्तु द्वारवतीं शीघ्रमिति मे वर्तते मतिः ॥ ३
इमाश्च नार्यो द्रौपद्याः सर्वाश्च परिचारिकाः ।
पाञ्चालानेव गच्छन्तु सूतपौरोगवैः सह ॥ ४
सर्वैरपि च वक्तव्यं न प्राज्ञायन्त पाण्डवाः ।
अर्धरात्रे महात्मानो भिक्षादान्ब्राह्मणानपि ।
गता ह्यस्मानपाहाय सर्वे द्वैतवनादिति ॥ ५

प्रमदाहरिका वियुक्तजनभार्याश्वासनपरा ॥ ३२ ॥
कौलेयकी कुलीना ॥ ३८ ॥ चतुर्थोऽध्यायः ॥ ४ ॥

वैशंपायन उवाच ।
एवं तेऽन्योन्यमामन्त्र्य कर्माण्युक्त्वा पृथक्पृथक् ।
धौम्यमामन्त्रयामासुः स च तान्मन्त्रमब्रवीत् ॥ ६
तानन्वशात्स धर्मात्मा सर्वधर्मविशेषवित् ।
धौम्यः पुरोहितो राजन्पाण्डवान्पुरुषर्षभान् ॥ ७
धौम्य उवाच ।
विदितं वै यथा सर्वं लोके वृत्तमिदं नृप ।
विदिते चापि वक्तव्यं सुहृद्भिरनुरागतः ॥ ८
अतोऽहमभिवक्ष्यामि हेतुमात्रं निबोधत ।
हन्तेमां राजवसतिं राजपुत्रा ब्रवीमि वः ।
यथा राजकुलं प्राप्य चरन्प्रोष्य न रिष्यति ॥ ९
दुर्वासमेव कौरव्य जातेन कुरुवेश्मनि ।
अमानितेन मानार्हं गूढेन परिवत्सरम् ॥ १०
दिष्टद्वारो लभेद्रष्टुं राजस्वेषु न विश्वसेत् ।
न चानुशिष्याद्राजानमपृच्छन्तं कदाचन ॥ ११
तूष्णीं त्वेनमुपासीत काले समभिपूजयेत् ॥ १२
असूयन्ति हि राजानो जनाननृतवादिनः ।
तथैव चावमन्यन्ते मन्त्रिणं वादिनं मृषा ॥ १३
विदिते चास्य कुर्वीत कार्याणि सुलघून्यपि ।
एवं विचरतो राज्ञि न क्षतिर्जायते क्वचित् ॥ १४
पाण्डवाग्निरयं लोके सर्वशस्त्रमयो महान् ।
भर्ता गोप्ता च भूतानां राजा पुरुषविग्रहः ॥ १५
सर्वात्मना वर्तमानं यथा दोषो न संस्पृशेत् ।
राजानमुपतिष्ठन्तं तस्य वृत्तं निबोधत ॥ १६
क्षत्रियं चैव सर्पं च ब्राह्मणं च बहुश्रुतम् ।
नावमन्येत मेधावी कृशानपि कदाचन ॥ १७
एतत्त्रयं च पुरुषं निर्दहेदवमानितम् ।
राजा तस्माद्बुधैर्नित्यं पूजनीयः प्रयत्नतः ॥ १८
नातिवर्तेत मर्यादां पुरुषो राजसंमतः ।
व्यवहारं पुनर्लोके मर्यादां पण्डिता विदुः ॥ १९
न हि पुत्रं न नप्तारं न भ्रातरमरिन्दम ।
समतिक्रान्तमर्यादं पूजयन्ति नराधिपाः ॥ २०
गच्छन्नपि परां भूतिं भूमिपालनियोजितः ।
जात्यन्ध इव मन्येत मर्यादामनुचिन्तयन् ॥ २१
धृष्टो द्वारं सदा पश्यन्न च राजसु विश्वसेत् ।
तदेवासनमन्विच्छेद्यत्र नाभिलषेत्परः ॥ २२
यत्रोपविष्टः संकल्पं नोपहन्याद्बलीयसः ।
तदासनं राजकुले ईप्सेत पुरुषो वसन् ॥ २३
यथैनं यत्र चासीनं शङ्केयेद्दुष्टचारिणम् ।
न तत्रोपविशेज्जातु यो राजवसतिं वसेत् ॥ २४
स्वभूमौ काममासीत तिष्ठेद्वा राजसन्निधौ ।
न त्वेवासनमन्यस्य प्रार्थयेत कदाचन ॥ २५
परासनगतं ह्येनं परस्य परिचारकाः ।
परिषद्यपकर्षेयुः परिहास्येत शत्रुभिः ॥ २६
नित्यं विप्रतिषिद्धं तत्पुरस्तादासनं मतम् ।
अर्थार्थं हि यदा भृत्यो राजानमुपतिष्ठते ॥ २७
दक्षिणं वाऽथ वामं वा भागमाश्रित्य पण्डितः ।
तिष्ठेद्विनीतवद्राजन्न पुरस्तान्न पृष्ठतः ।
रक्षिणामात्तशस्त्राणां पश्चात्स्थानं विधीयते ॥ २८
मातृगोत्रे स्वगोत्रे वा नाम्ना शीलेन वा पुनः ।
संग्रहार्थं मनुष्याणां नित्यमाभाषिता भवेत् ॥ २९
पूज्यमानोपि यो राज्ञा नरो न प्रतिपूजयेत् ।
नैनमाराधयेज्जातु शास्ता शिष्यानिवालसान् ॥ ३०
नास्य युग्यं न पर्यङ्कं नासनं न रथं तथा ।
आरोहेत्संमतोऽस्मीति यो राजवसतिं वसेत् ॥ ३१
यो वै गृहेभ्यः प्रवसन्क्रियमाणमनुस्मरन् ।
उत्थाने नित्यसंकल्पो निस्तन्द्रीः संयतात्मवान् ३२
परीतः क्षुत्पिपासाभ्यां विहाय परिदेवनम् ।
दुःखेन सुखमन्विच्छेद्यो राजवसतिं वसेत् ॥ ३३
अन्येषु प्रेष्यमाणेषु पुरस्ताद्धीर उत्पतेत् ।
करिष्याम्यहमित्येव यः स राजसु सिध्यति ॥ ३४
उष्णे वा यदि वा शीते रात्रौ वा यदि वा दिवा ।
आदिष्टो न विकल्पेत यः स राजसु सिद्ध्यति ॥ ३५
नैव प्राप्तोऽवमन्येत सदाऽमात्यो विशारदः ।
मानं प्राप्तो न हृष्येत न व्यथेच्च विमानितः ।
ऋजुर्मृदुः सत्यवादो यः स राजसु सिद्ध्यति ॥ ३६

पाण्डवाग्निरिति पाण्डवेति छेदः । राजा पुरुषविग्रहोऽग्निरित्यन्वयः ॥ १५ ॥

नैव लाभाद्धर्षमियान्न व्यथेच्च विमानितः ।
समः पूर्णतुलेव स्याद्यो राजवसतिं वसेत् ॥ ३७
अल्पेच्छो धृतिमान्प्राज्ञश्छायेवानुगतः सदा ।
दक्षः प्रदक्षिणो धीरः स राजवसतिं वसेत् ॥३८
इतिहासपुराणज्ञः कुशलः सत्कथासु च ।
वदान्यः सत्यवाक्चापि यो राजवसतिं वसेत् ॥ ३९
न मिथो भाषितं राज्ञो मनुष्येषु प्रकाशयेत् ।
यं चासूयन्ति राजानः पुरुषं नो वदेच्च तम् ॥४०
नैषां कर्मसु संयुक्तो धनं किंचिदुपस्पृशेत् ।
प्राप्नुयादाददानो वा बन्धं वा वधमेव वा ॥ ४१
तुल्योपस्थितयोः पश्य मम चान्यस्य चोभयोः ।
अन्यं पुष्णाति मद्धीनमिति धीरो न मुह्यति ॥ ४२
श्रेयांसं हि परित्यज्य वैद्यं कर्मणिकर्मणि ।
पापीयांसं प्रकुर्वीरञ्शीलमेषां तथाविधम् ॥ ४३
नैषां दारेषु कुर्वीत प्राज्ञो मैत्रीं कथंचन ।
रक्षणं तु न सेवेत यो राजवसतिं वसेत् ॥ ४४
यदा ह्यभिसमीक्षेत प्रेष्यं स्त्रीभिः समागतम् ।
बुद्धिः परिभवेत्तस्य राजा शङ्केत वा पुनः ॥ ४५
शङ्कितस्य पुनः स्त्रीषु कस्य भृत्यस्य भूमिपः ।
जीवितं साधु मन्येत प्रकृतिस्थो बलात्कृतः ॥ ४६
हर्षवस्तुषु चाप्यत्र वर्तमानेषु केषु चित् ।
नातिगाढं प्रहृष्येत तान्येवास्यानुपूजयेत् ॥ ४७
हर्षाद्धि मन्दः पुरुषः स्वैरं कुर्वीत वैकृतम् ।
तदस्यान्तःपुरे वृत्तमीक्षां कुर्वीत भूमिपः ॥ ४८
अन्तःपुरगतं ह्येनं स्त्रियः क्लीबाश्च सर्वतः ।
वर्तमानं यथावच्च कुत्सयेयुरसंशयम् ॥ ४९
तस्माद्गम्भीरमात्मानं कृत्वा हर्षं नियम्य च ।
नित्यमन्तःपुरे राज्ञो न वृत्तं कीर्तयेद्बहिः ॥ ५०
यथा हि सुमहामन्त्रो भिद्यमानो हरेत्सुखम् ।
एवमन्तःपुरे वृत्तं श्रूयमाणं बहिर्भवेत् ॥ ५१
या तु वृत्तिरबाह्यानां बाह्यानामपि केवलम् ।
उभयेषां समस्तानां शृणु राजोपजीविनाम् ॥ ५२
न स्त्रियो जातु मन्येत बाह्ये वाभ्यन्तरेऽपि वा ।
अनुजीविनां नरेन्द्रस्तु सृजेद्धि सुमहद्भयम् ॥ ५३

मत्वाऽस्य प्रियमात्मानं राजरत्नानि राजवत् ।
अराजा राजयोग्यानि नोपयुञ्जीत पण्डितः ॥ ५४
अराजानं हि रत्नानि राजकान्तानि राजवत् ।
भुञ्जानं तं नरं राजा न तितिक्षेत जीवितम् ॥ ५५
तस्मादव्यक्तभोगेन भोक्तव्यं भूतिमिच्छता ।
तुल्यभोगं हि राजा तु भृत्यं कोपेन योजयेत् ॥ ५६
न चापत्येन संप्रीतिं राज्ञः कुर्वीत केनचित् ।
अधिक्षिप्तमनर्थं च द्वेष्यं च परिवर्जयेत् ॥ ५७
एतां हि सेवमानस्य नरसीमां चतुर्विधाम् ।
द्विधा विच्छिद्यते मूलं राजमूलोपसेविनः ॥ ५८
एतैस्तु विपरीता या नरसीमा नराधमैः ।
तथा कुर्वीत संसर्गं न विरोधं कथंचन ॥ ५९
बन्धुभिश्च नरेन्द्रस्य बलवद्भिश्च मानवैः ।
साधु मन्येत संसर्गं न विरोधं कथंचन ॥ ६०
ताभ्यां तु नरसीमाभ्यां विरुद्धस्याल्पतेजसः ।
प्रथमं छिद्यते मूलं द्वितीयं जायते भयम् ॥ ६१
उद्धतानां च यो वेषः कुहकानां च यो भवेत् ।
राजवेषं च विस्पष्टं सेवमानो न वर्धते ।
इतराभ्यां तु वेषाभ्यां परिहासेत बान्धवैः ॥ ६२
अपुंभिश्चैव पुंभिश्च स्त्रीभिः स्त्रीदर्शिभिर्नरैः ।
शक्ये सति न संभाषां जातु कुर्वीत कर्हिचित् ॥ ६३
प्रतिसंभाषमाणो हि त्रिभिरेतैरचेतनः ।
श्येनः पेशीमिवादत्ते पुरुषो भूतिमात्मनः ॥ ६४
ये च राज्ञाऽभिसत्कारं लभेरन्कारणादिव ।
तैश्च सामन्तदूतैश्च न संसज्येत कर्हिचित् ॥ ६५
न चान्याचरितां भूमिमसंदिष्टो महीपतेः ।
उपसेवेत मेधावी यो राजवसतिं वसेत् ॥ ६६
न च संदर्शने राज्ञां प्रबन्धमभिसंजपेत् ।
अपि चैतद्दरिद्राणां व्यलीकस्थानमुत्तमम् ॥ ६७
अर्थकामा च या नारी राजानं स्यादुपस्थिता ।
अनुजीवी तथायुक्तां निध्यायन्दुष्यते च सः ॥ ६८
तस्मान्नारीं न निध्यायेत्तथायुक्तां विचक्षणः ।
तथा क्षुतं च वातं च निष्ठीवं चाचरेच्छनैः ॥ ६९
न नर्मसु हसेज्जातु मूढवृत्तिर्हि सा स्मृता ।

प्रथमं छिद्यते निद्रा इति थ. ध. पाठः ॥ ६१ ॥

स्मितं तु मृदुपूर्वेण दर्शयीत प्रसादजम् ॥ ७०
न चाक्षौ न भ्रुजौ जातु न च वाक्यं समाक्षिपेत्।
न च तिर्यगवेक्षेत चक्षुर्भ्यां सम्यगाचरेत् ॥ ७१
भ्रुकुटिं च न कुर्वीत न चाङ्गुष्ठैर्लिखेन्महीम् ।
न च गाढं विजृम्भेत जातु राज्ञः समीपतः ॥७२
न प्रशंसेन्न चासूयेत्प्रियेषु च हितेषु च ।
स्तूयमानेषु वा तत्र दूष्यमानेषु वा पुनः ॥ ७३
अथ संदृश्यमानेषु प्रियेषु च हितेषु च ।
श्रूयमाणेषु वाक्येषु वर्णयेदमृतं यथा ॥ ७४
न राज्ञः प्रतिकूलानि सेवमानः सुखी भवेत् ।
पुत्रो वा यदि वा भ्राता यद्यप्यात्मसमो भवेत् ७५
अप्रमत्तो हि राजानं रञ्जयेच्छीलसंपदा ।
उत्थानेन तु मेधावी शौचेन विविधेन च ॥ ७६
स्नानं हि वस्त्रशुद्धिश्च शारीरं शौचमुच्यते ।
असक्तिः प्राकृतार्थेषु द्वितीयं शौचमुच्यते ॥ ७७
राजा भोजो विराट् सम्राट् क्षत्रियो भूपतिर्नृपः ।
य एतैः स्तूयते शब्दैः कस्तं नार्चितुमर्हति ॥ ७८
तस्माद्भक्त्या च युक्तः सन्सत्यवादी जितेन्द्रियः ।
मेधावी धृतिमान्प्राज्ञः संश्रयीत महीपतिम् ॥७९
कृतज्ञं प्राज्ञमक्षुद्रं दृढभक्तिं जितेन्द्रियम् ।
वर्धमानं स्थितं स्थाने संश्रयीत महीपतिम् ॥ ८०
एष वः समुदाचारः समुद्दिष्टो यथाविधि ।
यथार्थान्संप्रपत्स्यन्ते पार्थ राजोपजीविनः ॥ ८१
संवत्सरमिमं तावदेवंशीला बुभूषथः ।
ततः स्वविषयं प्राप्य यथाकामं चरिष्यथ ॥ ८२
वैशंपायन उवाच ।
तं तथेत्यब्रुवन्पार्थाः पितृकल्पं यशस्विनम् ।
प्रहृष्टाश्चाभिवाद्यैनमुपातिष्ठन्परंतपाः ॥ ८३
तेषां प्रतिष्ठमानानां मन्त्रांश्च ब्राह्मणोऽजपत् ।
भवाय राज्यलाभाय वीर्याय विजयाय च ॥ ८४
ततोऽब्रवीदसौ विप्रो वाचमाशीः प्रयुज्य च ।
स्वद्रव्यप्रतिलाभाय शत्रूणां मर्दनाय च ॥ ८५
स्वस्ति वोस्तु शिवः पन्था द्रक्ष्यामि पुनरागतान् ।
इत्युक्ता हृष्टमनसो गुरुणा तेन धीमता ।
युधिष्ठिरमुखाः सर्वे गन्तुं समुपचक्रमुः ॥ ८६

॥ इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः ॥ ६ ॥

पाण्डवैर्धौम्यविसर्जनपूर्वकं विराटनगरसमीपगमनम् ॥ १ ॥

वैशंपायन उवाच ।
तेऽग्निं प्रदक्षिणं कृत्वा ब्राह्मणं च पुरोहितम् ।
अभिवाद्य ततः सर्वे प्रस्थातुमुपचक्रमुः ॥ १
युधिष्ठिर उवाच ।
अनुशिष्टोसि भद्रं ते नैतद्वक्ताऽस्ति कश्चन ।
कुन्तीमृते मातरं नः पितरं च यशस्विनम् ॥ २
यदेवानन्तरं कार्यं तद्भवान्वक्तुमर्हति ।
तारणाय तु दुःखस्य प्रस्थानाय भवाय च ॥ ३
वैशंपायन उवाच ।
तेषां प्रतिष्ठमानानां धौम्यो मन्त्रानथाजपत् ।
सर्वविघ्नप्रशमनानर्थसिद्धिकरांस्तथा ।
ततः पावकमुज्ज्वाल्य मन्त्रहव्यपुरस्कृतम् ॥ ४
याज्ञसेनीं पुरस्कृत्य सर्व एव महारथाः ।
प्राद्रवन्सह धौम्येन बद्धशस्त्रा वनाद्वनम् ॥ ५
ते वीरा बद्धनिस्त्रिंशा धनुर्बाणकलापिनः ।
अगेच्छन्भीमधन्वानः काम्यकाद्यमुनां नदीम् ॥६
उत्तरेण दशार्णानां पाञ्चालान्दक्षिणेन तु ।
अन्तरेण यकृल्लोम्नः शूरसेनांश्च पाण्डवाः ॥ ७
ते तस्या दक्षिणं तीरमन्वगच्छन्पदातयः ।
ततः मत्यक्प्रयातास्ते संक्रामन्तो वनाद्वनम् ॥ ८
वसाना वनदुर्गेषु रमणीयेषु धन्विनः ।
पल्वलेषु च रम्येषु नदीनां संगमेषु च ॥ ९
द्रुमान्नानाविधाकारान्नानाविधलताकुलान् ।
कुसुमाढ्यान्मनःकान्ताञ्शुभगन्धान्मनोरमान् १०

पार्था निरीक्षमाणाश्च तान्द्रुमान्पुष्पशालिनः ।
जिघ्रन्तः पुष्पगन्धांश्च फलगन्धान्मनोरमान् ॥ ११
विध्यन्तो मृगजातानि महेष्वासा महाबलाः ।
उषित्वा द्वादशसमा वने परपुरंजयाः ।
लुब्धान्ब्रुवाणा मात्स्यस्य विषयं प्राविशंस्तदा १२
तत्र धौम्यं महेष्वासाः पाण्डवेया व्यसर्जयन् ।
अग्निहोत्रं परिचरन्सोऽबुद्धोऽवसदाश्रमे ॥ १३
ततस्तेषु प्रयातेषु पाण्डवेषु महात्मसु ।
इन्द्रसेनमुखाश्चैव यथोक्तं प्राप्य निर्वृताः ।
रथानश्वांश्च रक्षन्तः सुखमूषुः सुसंवृताः ॥ १४
ततो जनपदं प्राप्य कृष्णा राजानमब्रवीत् ॥ १५
पश्यैकपद्यो दृश्यन्ते क्षेत्रे गोष्ठं समाश्रिताः ।
वृक्षांश्चोपवनोपेतान्ग्रामाणां नगरस्य च ॥ १६
व्यक्तं दूरे विराटस्य राजधानी भविष्यति ।
वसामेहापरां रात्रिं बलवान्मे परिश्रमः ॥ १७
युधिष्ठिर उवाच ।
इमां कमलपत्राक्षीं द्रौपदीं माद्रिनन्दन ।
मुहूर्तं परिगृह्यैनां बाहुभ्यां नकुल व्रज ॥ १८
ततोऽदूरे विराटस्य नगरं भरतर्षभ ।
राजधान्यां निवत्स्यामः प्रमुक्तमिव नो वनम् १९
नकुल उवाच ।
पूर्वाह्णे मृगयां कृत्वा मया विद्धा मृगा वने ।
अटवी च मया दूरं धृता मृगवधेप्सुना ॥ २०
विषमा ह्यतिदुर्गा च वेगवत्परिधावता ।
सोहं घर्माभितप्तो वै नैनामादातुमुत्सहे ॥ २१
युधिष्ठिर उवाच ।
सहदेव त्वमादाय मुहूर्तं द्रौपदीं नय ।
राजधान्यां निवत्स्यामः सुमुक्तमिव नो वनम् ॥ २२
सहदेव उवाच ।
अहमप्यस्मि तृषितः क्षुधया परिपीडितः ।
परिश्रान्तश्च भद्रं ते नैनामादातुमुत्सहे ॥ २३
युधिष्ठिर उवाच ।
एहि वीर विशालाक्ष वीरसिंह इवार्जुन ।
इमां कमलपत्राक्षीं द्रौपदीं द्रुपदात्मजाम् ॥ २४
परिगृह्य मुहूर्तं त्वं बाहुभ्यां कुशलं व्रज ।
राजधान्यां निवत्स्यामः प्रमुक्तमिव नो वनम् २५
वैशंपायन उवाच ।
गुरोर्वचनमाज्ञाय संप्रहृष्टो जितेन्द्रियः ।
बाहुभ्यां परिगृह्याथ राजपुत्रीमनिन्दिताम् ।
प्रवव्राज महाबाहुरर्जुनः प्रियदर्शनाम् ॥ २६
जटिलो वल्कलधरः शरतूणीधनुर्धरः ।
स्कन्धे कृत्वा वरारोहां बालामायतलोचनाम् ।
आनीय नगराभ्याशमवातारयदर्जुनः ॥ २७

॥ इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

पाण्डवैर्वनमध्ये श्मशानसंनिहिते शमीवृक्षे स्वायुधनिक्षेपः ॥ १ ॥ तथा स्वेषां साङ्केतिकनामकल्पनेन विराटनगरपरिसरगमनम् ॥ २ ॥

वैशंपायन उवाच ।
स राजधानीं संप्राप्य पार्थिवोऽर्जुनमब्रवीत् ।
इमानि पुरुषव्याघ्र आयुधानि परंतप ।
कस्मिन्न्यासयितव्यानि गुप्तिश्चैषां कथं भवेत् ॥ १
सायुधा हि वयं तात प्रवेक्ष्यामः पुरं यदि ।
समुद्वेगं जनस्यास्य करिष्यामो न संशयः ॥ २
गाण्डीवं हि नरव्याघ्र त्रिषु लोकेषु विश्रुतम् ।
कथं नाविष्कृताः स्यामो धार्तराष्ट्रस्य मारिष ॥ ३
यदीदं धनुरादाय चरेम सजने पुरे ।
क्षिप्रं नः प्रतिजानीयुर्मनुष्या नात्र संशयः ॥ ४

आत्मनः लुब्धान्मृगयून्ब्रुवाणाः सन्तः प्राविशन्नित्यन्वयः ॥ १२ ॥ षष्ठोऽध्यायः ॥ ६ ॥

एकस्मिन्नपि विज्ञाते समयं नो व्यतीत्य च ।
भूयो द्वादशवर्षाणि प्रविशेम वनं वयम् ॥ ५
तस्मात्सर्वाणि शस्त्राणि प्रच्छाद्यान्यत्र यत्र वा ।
प्रविशेम पुरश्रेष्ठं तथा सम्यक्कृतं भवेत् ॥ ६
वैशंपायन उवाच ।
अजातशत्रोर्वचनं श्रुत्वा चैव महायशाः ।
उवाच धर्मपुत्रं तमर्जुनः परवीरहा ॥ ७
इयं वने मनुष्येन्द्र महती दृश्यते शमी ।
भीमशाखा दुरारोहा श्मशानस्य समीपतः ॥ ८
उत्पथे चापि जातेयं मनुष्यैर्न निषेव्यते ।
विपुलाऽऽकीर्णशाखा च वायसैरुपसेविता ॥ ९
स्नेहानुबद्धां पश्यामि दुरारोहामिमां शमीम् ॥ १०
समीपे च श्मशानस्य गृहं नास्य विशेषतः ।
समासज्यायुधान्यस्यां गच्छामो नगरं नृप ॥ ११
न चास्यां चारयिष्यन्ति मनुष्याः पार्थ केचन ॥
धनुर्भिः पुरुषं कृत्वा चर्मकेशास्थिसंवृतम् ।
उद्बन्धमिव कृत्वा च धनुर्ज्यापाशसंवृतम् ।
अस्मामायुधमासज्य गच्छाम नगरं वयम् ॥ १३
एवं परिहरिष्यन्ति मनुष्या वनचारिणः ।
अत्रैवं नावबुध्यन्ते मनुष्याः केचिदायुधम् ॥ १४
वैशंपायन उवाच ।
एवमुक्त्वा स राजानं धर्मात्मानं धनञ्जयः ।
प्रचक्रमे निधानाय शस्त्राणां भरतर्षभ ॥ १५
तानि सर्वाणि संनह्य पञ्च पञ्चाचलोपमाः ।
आयुधानि कलापांश्च निस्त्रिंशानतुलप्रभान् ॥ १६
ततो युधिष्ठिरो राजा सहदेवमुवाच ह ।
आरुह्येमां शमीं वीर निधत्स्वेहायुधानि नः ॥ १७
इति संदिश्य तं पार्थः पुनरेव धनञ्जयम् ।
अब्रवीदायुधानीह निधातुं भरतर्षभः ॥ १८
वैशंपायन उवाच ।
येन देवान्मनुष्यांश्च पिशाचोरगराक्षसान् ।
निवातकवचांश्चापि पौलोमांश्च परंतपः ।
कालकेयांश्च दुर्धर्षान्सर्वांश्चैकरथोऽजयत् ॥ १९
स्फीताञ्जनपदांश्चान्यानजयत्कुरुनन्दनः ।
तदुदग्रं महाघोरं सपत्नगणसूदनम् ।
अपज्यमकरोत्पार्थो गाण्डीवं च भयंकरम् ॥ २०
येन वीरः कुरुक्षेत्रमभ्यरक्षत्परंतपः ।
जृम्भिते च धनुःश्रेष्ठे न्यासार्थं नृपसत्तमः ॥ २१
धर्मपुत्रो महातेजाः सर्वलोकवशंकरम् ।
भुजङ्गभोगसदृशं मणिकाञ्चनभूषितम् ॥ २२
वित्रासनं दानवानां राक्षसानां च नित्यशः ।
धनूरत्नं महातेजा जृम्भयामास पाण्डवः ॥ २३
पाञ्चालान्येन संग्रामे भीमसेनोऽजयत्पुरा ।
प्रत्यषेधद्बहूनेकः सपत्नांश्चापि दिग्जये ॥ २४
निशम्य यस्य विष्फारं विद्रवन्ति रणे परे ।
पर्वतस्येव दीर्णस्य विस्फोटमशनेरिव ॥ २५
सैन्धवं येन राजानं जित्वा क्रुद्धः परामृशत् ।
येन क्रोधवशाञ्जघ्ने पर्वते गन्धमादने ॥ २६
दिव्यं सौगन्धिकं पुष्पं येनाजैषीत्स पाण्डवः ।
त्रिगर्तान्येन संग्रामे जित्वा त्रैगर्तमानयत् ॥ २७
इन्द्राशनिसमस्पर्शं वज्रहाटकभूषितम् ।
ज्यापाशं धनुषस्तस्य भीमसेनोऽवतारयत् ॥ २८
नकुलं पुनराहूय धर्मराजो युधिष्ठिरः ।
उवाच येन संग्रामे सर्वशत्रूञ्जिघांससि ॥ २९
सुराष्ट्राञ्जितवान्येन शार्ङ्गगाण्डीवसन्निभम् ।
सुवर्णविकृतं सारमिन्द्रायुधनिभं वरम् ॥ ३०
तवानुरूपं सुकृतं चापमेतदलङ्कृतम् ।
तद्ध्वंसयित्वा ज्यापाशं निधातुं धनुराहर ॥ ३१
वैशंपायन उवाच ।
अजयत्पश्चिमामाशां धनुषा येन पाण्डवः ।
माद्रीपुत्रो महाबाहुस्ताम्रास्यो मितभाषिता ॥ ३२
तस्य मौर्वीमपाकर्षच्छूरः संक्रन्दनो युधि ।
कुले नास्ति समो रूपे यस्येति नकुलः स्मृतः ॥ ३३
सहदेवं च संप्रेक्ष्य पुनर्धर्मसुतोऽब्रवीत् ।
कलिङ्गान्दाक्षिणात्यांश्च मागधांश्चाजिशोभनः ॥ ३४
येनैव शत्रून्समरे अधाक्षीररिमर्दन ।

गाण्डीवमभयंकरम् इति क. थ. ध. पाठः ॥ २० ॥

सप्तमोऽध्यायः ॥ ७ ॥

तत्स्रंसयित्वा ज्यापाशं निधातुं धनुराहर ॥ ३५
वैशंपायन उवाच ।
दक्षिणां दक्षिणाचारो दिशं येनाजयत्प्रभुः ।
अपज्यमकरोद्वीरः सहदेवस्तदायुधम् ॥ ३६
दीप्तान्खण्डांश्च सुदृढान्सुतीक्ष्णान्कनकत्सरून् ।
विविधान्क्षुरनाराचान्निस्त्रिंशांश्च शरानपि ।
आयुधानि कलापांश्च गदाश्च निदधुः सह ॥ ३७
अथाब्रवीद्धर्मराजः सहदेवं परन्तपः ।
आरुह्येमां शमीं वीर निधत्स्वेहायुधानि नः ॥३८
इदं गोमृगमभ्याशे गतसत्वमचेतनम् ।
एतदुत्कृत्य वै वीर धनूंषि परिवेष्टय ॥ ३९
एवमुक्तो महाबाहुः सहदेवो यथोक्तवत् ।
शमीमारुह्य त्वरितो धनूंषि परिवेष्टयत् ॥ ४०
शीतवातातपभयाद्वर्षत्राणाय दुर्जयः ।
तानि वीरो यथा जानन्निराबाधानि सर्वशः ।
पुनः पुनः सुसंवेष्ट्य कृत्वा सुकृतमावरम् ॥ ४१
यत्र चापश्यत स वै तिरोवर्षाणि वर्षति ।
तत्र तानि दृढैः पाशैः सुगाढं पर्यबन्धत ॥ ४२
ततः परमदूरस्थमुञ्छवृत्तिकलेवरम् ।
प्रायोपवेशनाच्छुष्कं स्नायुचर्मास्थिसंयुतम् ॥ ४३
तच्चानीय धनुर्मध्ये निबबन्धुश्च पाण्डवाः ।
उपायकुशलाः सर्वे प्रणदन्तः समब्रुवन् ॥ ४४
अस्य बद्धस्य दौर्गन्ध्यान्मनुष्या वनचारिणः ।
दूरात्परिहरिष्यन्ति सशवेयं शमी इति ॥ ४५
अथाब्रवीन्महाराजो धर्मात्मा स युधिष्ठिरः ।
रज्जुभिः सुकृतं प्राज्ञ विनिर्बध्नीहि पाण्डव ॥४६
यानि चात्र विशालानि रूढमूलानि मन्यसे ।
तेषामुपरि बध्नीहि इदं विप्रकलेवरम् ॥ ४७
वैशंपायन उवाच ।
तच्छ्रुत्वा सहदेवस्तु पर्यबध्नत तच्छवम् ॥ ४८
युधिष्ठिरः शुचिर्भूत्वा मनसाऽभिप्रणम्य च ।
ब्रह्माणमिन्द्रं वरदं कुबेरं वरुणानिलौ ॥ ४९
रुद्रं यमं च विष्णुं च सोमार्कौ धर्ममेव च ।
पृथिवीमन्तरिक्षं च दिशश्चोपदिशस्तथा ।
वसूंश्च मरुतश्चैव ज्वलनं चातितेजसम् ॥ ५०
दिवाचरा रात्रिचराणि वाऽपि
यानीह भूतान्यनुकीर्तितानि ।
तेभ्यो नमस्कृत्य च सुव्रतेभ्यः
प्रणम्य तेषां शरणं गतोऽहम् ॥ ५१
सर्वायुधानीह महाबलानि
न्यासं महादेवसमीपतो वै ।
न्यस्याम्यहं वायुसमीपतश्च
वनस्पतीनां च सपर्वतानाम् ॥ ५२
एष न्यासो मया दत्तः सोमसूर्यानिलान्तिके ।
मम पार्थस्य वा देयं पूर्णे वर्षे त्रयोदशे ॥ ५३
नेदं भीमे प्रदातव्यमयं क्रुद्धो वृकोदरः ।
आमर्षान्नित्यसंक्रुद्धो धृतराष्ट्रसुतान्प्रति ।
अपूर्णकाले प्रहरेत्क्रोधसंजातमत्सरः ॥ ५४
पुनः प्रवेशो नः स्यात्तु वनवासाय सर्वदा ।
समये परिपूर्णे तु धार्तराष्ट्रान्निहन्महे ॥ ५५
एष चार्थश्च धर्मश्च कामः कीर्तिरलं यशः ।
मदायत्तमिदं सर्वं जीवितं च न संशयः ॥ ५६
वैशंपायन उवाच ।
दैवतेभ्यो नमस्कृत्य शमीं कृत्वा प्रदक्षिणम् ।
नगरं गन्तुमायाताः सर्वे ते भ्रातरः सह ॥ ५७
आगोपालाविपालेभ्यः कर्षकेभ्यः परंतप ।
आजग्मुर्नगराभ्याशं दर्शयन्तः पुनःपुनः ॥ ५८
अशीतिशतवर्षेयं माताऽस्माकमिहान्तिके ।
बहुकालपरीणामा मृत्योस्तु वशमेयुषी ।
न चाग्निसंस्कारमियं प्रापिता कुलधर्मतः ॥ ५९
यः समासाद्यते कश्चित्तस्मिन्देशे यदृच्छया ।
तमेवमूचुर्धर्मज्ञाः कुलधर्मो न ईदृशः ॥ ६०
विश्रावयन्तस्ते हृष्टा दिशः सर्वा व्यनादयन् ।
स्वर्गतेयमिहास्माकं जननी शोकविह्वला ॥ ६१
वने विचरमाणानां लुब्धानां वनचारिणाम् ।
कुलधर्मोऽयमस्माकं पूर्वैराचरितः पुरा ॥ ६२
एवं ते सुकृतं कृत्वा समन्तादवघुष्य च ।
भीमसेनोऽर्जुनश्चैव माद्रीपुत्रावुभावपि ॥ ६३

युधिष्ठिरश्च कृष्णा च राजपत्नी सुमध्यमा ।
ततो यथासमाज्ञप्तं नगरं प्राविशंस्तदा ॥ ६४
मत्स्यराज्ञो विराटस्य समीपं वस्तुमञ्जसा ।
अज्ञातचर्यां चरितुं वर्षं राष्ट्रे त्रयोदशम् ॥ ६५
अतश्छन्नानि नामानि चक्रुरेषां युधिष्ठिरः ।
जयो जयेशो विजयो जयत्सेनो जयद्बलः ।
आपत्सु नामभिस्त्वेतैः समाह्वामः परस्परम् ६६
ततो यथाप्रतिज्ञाभिः प्राविशन्नगरं महत् ।
अज्ञातचर्यां वत्स्यन्तो राष्ट्रे वर्षं त्रयोदशम् ॥६७

॥ इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

विराटनगरं गच्छता युधिष्ठिरेण दुर्गायाः स्तवनम् ॥ १ ॥

[वैशंपायन उवाच[*] ।
विराटनगरं रम्यं गच्छमानो युधिष्ठिरः ।
अस्तुवन्मनसा देवीं दुर्गां त्रिभुवनेश्वरीम् ॥ १
यशोदागर्भसंभूतां नारायणवरप्रियाम् ।
नन्दगोपकुले जातां मङ्गल्यां कुलवर्धनीम् ॥ २
कंसविद्रावणकरीमसुराणां क्षयंकरीम् ।
शिलातटविनिक्षिप्तामाकाशं प्रति गामिनीम् ॥ ३
वासुदेवस्य भगिनीं दिव्यमाल्यविभूषिताम् ।
दिव्याम्बरधरां देवीं खड्गखेटकधारिणीम् ॥ ४
भारावतरणे पुण्ये ये स्मरन्ति सदा शिवाम् ।
तान्वै तारयते पापात्पङ्के गामिव दुर्बलाम् ॥ ५
स्तोतुं प्रचक्रमे भूयो विविधैः स्तोत्रसंभवैः ।
आमन्त्र्य दर्शनाकाङ्क्षी राजा देवीं सहानुजः ॥ ६
नमोस्तु वरदे कृष्णे कुमारि ब्रह्मचारिणि ।
बालार्कसदृशाकारे पूर्णचन्द्रनिभानने ॥ ७
चतुर्भुजे चतुर्वक्रे पीनश्रोणिपयोधरे ।
मयूरपिच्छवलये केयूराङ्गदधारिणि ॥ ८
भासि देवि यथा पद्मा नारायणपरिग्रहः ।
स्वरूपं ब्रह्मचर्यं च विशदं तव खेचरि ॥ ९
कृष्णच्छविसमा कृष्णा संकर्षणसमानना ।
बिभ्रती विपुलौ बाहू शक्रध्वजसमुच्छ्रयौ ॥ १०
पात्री च पङ्कजी घण्टी स्त्री विशुद्धा च या भुवि ।
पाशं धनुर्महाचक्रं विविधान्यायुधानि च ॥ ११
कुण्डलाभ्यां सुपूर्णाभ्यां कर्णाभ्यां च विभूषिता ।
चन्द्रविस्पर्धिना देवि मुखेन त्वं विराजसे ॥ १२
मुकुटेन विचित्रेण केशबन्धेन शोभिना ।
भुजङ्गाभोगवासेन श्रोणिसूत्रेण राजता ॥ १३
विभ्राजसे चाऽऽबद्धेन भोगेनेवेह मन्दरः ।
ध्वजेन शिखिपिच्छानामुच्छ्रितेन विराजसे ॥ १४
कौमारं व्रतमास्थाय त्रिदिवं पावितं त्वया ।
तेन त्वं स्तूयसे देवि त्रिदशैः पूज्यसेऽपि च ॥ १५
त्रैलोक्यरक्षणार्थाय महिषासुरनाशिनि ।
प्रसन्ना मे सुरश्रेष्ठे दयां कुरु शिवा भव ॥ १६
जया त्वं विजया चैव संग्रामे च जयप्रदा ।
ममापि विजयं देहि वरदा त्वं च सांप्रतम् ॥ १७
विन्ध्ये चैव नगश्रेष्ठे तव स्थानं हि शाश्वतम् ।
कालि कालि महाकालि शीधुमांसपशुप्रिये ॥ १८
कृतानुयात्रा भूतैस्त्वं वरदा कामचारिणी ।
भारावतारे ये च त्वां संस्मरिष्यन्ति मानवाः ॥ १९
प्रणमन्ति च ये त्वां हि प्रभाते तु नरा भुवि ।

शिलातटे कंसेनैव विनिक्षिप्ता सती आकाशं गता ताम् ॥ ३ ॥ स्तोत्रार्थमेव संभव उद्भवो येषां नाम्नां वरदे इत्यादीनां तैः । आमन्त्र्य संबोध्य ॥ ६ ॥ पद्मा लक्ष्मीः अतएव नारायणपरिग्रहो विष्णुकान्ता ॥ ९ ॥ कृष्णच्छविर्नीलमेघस्तेन समा अतएव कृष्णा । अष्टभुजामाह बिभ्रतीति । विपुलौ वराभयप्रदत्वेन ऊर्जितौ द्वौ बाहू ॥ १० ॥ तत एकः पात्री पात्रवान्पङ्कजी पङ्कजवान् घण्टी घण्टावान् पञ्चमः पाशं धनुर्महाचक्रं च बिभ्रतीति पूर्वेणान्वयः ॥ ११ ॥

[*] अयमध्यायो दाक्षिणात्यकोशेषु नोपलभ्यते झ. पुस्तकएव दृश्यते ।

न तेषां दुर्लभं किंचित्पुत्रतो धनतोपि वा ॥ २०
दुर्गात्तारयसे दुर्गे तत्त्वं दुर्गा स्मृता जनैः ।
कान्तारेष्ववसन्नानां मग्नानां च महार्णवे ।
दस्युभिर्वा निरुद्धानां त्वं गतिः परमा नृणाम् २१
जलप्रतरणे चैव कान्तारेष्वटवीषु च ।
ये स्मरन्ति महादेवि न च सीदन्ति ते नराः ॥२२
त्वं कीर्तिः श्रीर्धृतिः सिद्धिर्ह्रीर्विद्या संततिर्मतिः ।
संध्या रात्रिः प्रभा निद्रा ज्योत्स्ना कांतिःक्षमा दया
नृणां च बन्धनं मोहं पुत्रनाशं धनक्षयम् ।
व्याधिं मृत्युं भयं चैव पूजिता नाशयिष्यसि ॥२४
सोहं राज्यात्परिभ्रष्टः शरणं त्वां प्रपन्नवान् ।
प्रणतश्च यथा मूर्ध्ना तव देवि सुरेश्वरि ॥ २५
त्राहि मां पद्मपत्राक्षि सत्ये सत्या भवस्व नः ।
शरणं भव मे दुर्गे शरण्ये भक्तवत्सले ॥ २६
एवं स्तुता हि सा देवी दर्शयामास पाण्डवम् ।
उपगम्य तु राजानमिदं वचनमब्रवीत् ॥ २७
देव्युवाच ।
शृणु राजन्महाबाहो मदीयं वचनं प्रभो ।
भविष्यत्यचिरादेव संग्रामे विजयस्तव ॥ २८
मम प्रसादान्निर्जित्य हत्वा कौरववाहिनीम् ।
राज्यं निष्कण्टकं कृत्वा भोक्ष्यसे मेदिनीं पुनः २९
भ्रातृभिः सहितो राजन्प्रीतिं प्राप्स्यसि पुष्कलाम् ।
मत्प्रसादाच्च ते सौख्यमारोग्यं च भविष्यति ॥३०
ये च संकीर्तयिष्यन्ति लोके विगतकल्मषाः ।
तेषां तुष्टा प्रदास्यामि राज्यमायुर्वपुः सुतम् ॥ ३१
प्रवासे नगरे वाऽपि संग्रामे शत्रुसंकटे ।
अटव्यां दुर्गकान्तारे सागरे गहने गिरौ ॥ ३२
ये स्मरिष्यन्ति मां राजन्यथाऽहं भवता स्मृता ।
न तेषां दुर्लभं किंचिदस्मिँल्लोके भविष्यति ॥ ३३
इदं स्तोत्रवरं भक्त्या शृणुयाद्वा पठेत वा ।
तस्य सर्वाणि कार्याणि सिद्धिं यास्यन्ति पाण्डवाः ॥
मत्प्रसादाच्च वः सर्वान्विराटनगरे स्थितान् ।
न प्रज्ञास्यन्ति कुरवो नरा वा तन्निवासिनः ॥३५
इत्युक्त्वा वरदा देवी युधिष्ठिरमरिंदमम् ।
रक्षां कृत्वा च पाण्डूनां तत्रैवान्तरधीयत ॥] ३६

॥ इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः ॥ ९ ॥

युधिष्ठिरेण यतिवेषपरिग्रहेण विराटसभाप्रवेशः ॥ १ ॥ प्रत्युत्थानादिना सत्कृतेन युधिष्ठिरेण विराटभवने निवासः ॥२॥

वैशंपायन उवाच ।
ततस्तु ते पुण्यजलां शिवां शुभां
महर्षिगन्धर्वनिषेवितोदकाम् ।
त्रिलोककान्तामवतीर्य जाह्नवी-
मृषींश्च देवांश्च पितॄनतर्पयन् ॥ १
वरप्रदानं ह्यनुचिन्त्य पार्थिवो
हुत्वाऽग्निहोत्रं कृतजप्यमङ्गलः ।
दिशं तथैन्द्रीमभितः प्रपेदिवा-
न्कृताञ्जलिर्धर्ममुपाह्वयच्छनैः ॥ २
युधिष्ठिर उवाच ।
वरप्रदानं मम दत्तवान्पिता
प्रसन्नचेता वरदः प्रजापतिः ।
जलार्थिनो मे तृषितस्य सोदरा
मया प्रयुक्ता विविशुर्जलाशयम् ॥ ३
निपातिता यक्षवरेण ते वने
महाहवे वज्रभृतेव दानवाः ।
मया च गत्वा वरदो हि तोषितो
विवक्षता प्रश्नसमुच्चयं गुरुः ॥ ४

जलप्रतरणे जलप्रतरणकाले कान्तारे दुर्गममार्गे ॥ २२ ॥ निष्कण्टकं शत्रुशून्यम् ॥ २९ ॥ संकीर्तयिष्यन्ति इदं स्तोत्र-मिति शेषः ॥ ३१ ॥ अष्टमोऽध्यायः ॥ ८ ॥

स मे प्रसन्नो भगवान्वरं ददौ
परिष्वजंश्चाह तथैव सौहृदात् ।
वृणीष्व यद्वाञ्छसि पाण्डुनन्दन
स्थितोऽन्तरिक्षे वरदोऽस्मि पश्य माम् ॥ ५
स वै मयोक्तो वरदः पिता प्रभुः
सदैव मे धर्मरता मतिर्भवेत् ।
इमे च जीवन्तु ममानुजाः प्रभो
वयं स्वरूपं च जयं तथाऽऽप्नुमः ॥ ६
क्षमा च कीर्तिश्च यथेप्सितं भवे-
द्व्रतं तु सत्यं च समाप्तिरेव च ।
वरो ममैषोस्तु यथाऽनुकीर्तितो
न तन्मृषा देववृषो यथाऽब्रवीत् ॥ ७
वैशंपायन उवाच ।
इत्येवमुक्त्वा धर्मात्मा धर्ममेवानुचिन्तयन् ।
तदैव तत्प्रसादेन रूपमेवाभवत्स्वयम् ॥ ८
स वै द्विजातिस्तरुणस्त्रिदण्डभृ-
त्कमण्डलूष्णीषधरो व्यजायत ।
सुरक्तमाञ्जिष्ठवराम्बरः शिखी
पवित्रपाणिर्ददृशे तदाऽद्भुतम् ॥ ९
तथैव तेषामपि धर्मचारिणां
यथोचितार्हाभरणाम्बरस्रजः ।
क्षणेन राजन्नभवन्महात्मनां
प्रशस्तधर्माग्र्यफलाभिकाङ्क्षिणाम् ॥ १०
नवेन रूपेण विशांपतिर्युत-
स्त्वथर्ववरूपेण बभौ प्रतापवान् ।
निबद्धवैडूर्यसितान्सकाञ्चना-
न्नृपस्तथाऽक्षान्परिवेष्ठ्य वाससः ॥ ११
ततो विराटं प्रथमं युधिष्ठिरो
ददर्श दूरात्सुसमृद्धतेजसम् ।
अनन्ततेजोज्वलितं हुताशनं
दुरासदं तीक्ष्णविषं यथोरगम् ॥ १२
सभासदं प्राञ्जलिभिर्जनैर्वृतं
विचित्रनानाविधशस्त्रपाणिभिः ।
उपायनौघैः प्रविशद्भिराचितं
द्विजैश्च शिक्षाक्षरमन्त्रधारिभिः ॥ १३
गजैरुदीर्णं तुरगैश्च सङ्कुलं
मृगद्विपैः कुब्जगणैः समावृतम् ।
सितोच्छ्रितोष्णीषनिरुद्धमूर्धजं
विचित्रवैडूर्यविकारकुण्डलम् ।
विराटमायाच्च युधिष्ठिरस्तदा
बृहस्पतिः शक्रमिव त्रिविष्टपे ॥ १४
तमाव्रजन्तं प्रसमीक्ष्य पाण्डवं
विराटराजो मुदितेन चक्षुषा ।
पप्रच्छ चैनं स नराधिपो मुहु-
र्द्विजाश्च ये चास्य सभासदस्तदा ॥ १५
विराट उवाच ।
को वा विजानाति पुराऽस्य दर्शनं
युवा सभां योऽयमुपैति मामिकाम् ।
रूपेण सारेण विराजयन्महीं
श्रिया ह्ययं वैश्रवणो द्विजो यथा ॥ १६
मृगेन्द्रराड्वारणयूथपोपमः
प्रभात्ययं काञ्चनपर्वतो यथा ।
विराजते पावकसूर्यसन्निभं
सचन्द्रनक्षत्र इवांशुमान्ग्रहः ॥ १७
न दृश्यतेऽस्यानुचरो न कुञ्जरो
न चोष्णरश्म्यावरणं समुच्छ्रितम् ।
न कुण्डलं नाङ्गदमस्य न स्रजो
विचित्रिताङ्गश्च रथश्चतुर्युजः ॥ १८
क्षात्रं च रूपं हि बिभर्त्ययं भृशं
गजेन्द्रशार्दूलमहर्षभोपमः ।
अभ्यागतोऽस्माननलंकृतोपि सन्
विरोचते भानुरिवाचिरोदितः ॥ १९
विभात्ययं क्षत्रिय एव सर्वथा
विराट इत्येवमुवाच तं प्रति ।
ससागरान्तामयमद्य मेदिनीं
प्रशासितुं चार्हति वासवोपमः ॥ २०
नाक्षत्रियो नूनमयं भविष्यति
मूर्धाभिषिक्तः प्रतिभाति मां प्रति ।

वयश्च रूपं च बलं तथाऽऽप्नुयुरिति थ. ध. पाठः ॥ ६ ॥

तुल्यं हि रूपं प्रतिदृश्यतेऽस्य
गजस्य सिंहस्य तथर्षभस्य ॥ २१
यमेष कामं परिमार्गते द्विजः
स चास्य सर्वः क्रियतामसंशयम् ।
प्रियं च मे दर्शनमीदृशे जने
द्विजेषु मुख्येषु तथाऽतिथिष्वपि ॥ २२
धनेषु रत्नेष्वथ गोषु वेश्मसु
प्रकामतो मे विचरत्ववारितः ॥ २३

वैशंपायन उवाच ।

एवं ब्रुवाणस्तमनन्ततेजसं
विराजमानं सहसोत्थितो नृपः ।
अन्येन रूपेण समीपमागतं
त्रिदण्डकुण्ड्यङ्कुशशिक्यपाणिनम् ॥ २४
समुत्थिता सा हि सभा सपार्थिवा
सविप्रराजन्यविशा सशूद्रका ।
सभागतं प्रेक्ष्य तपन्तमर्चिषां
विनिःसृतं राहुमुखाद्यथा रविम् ॥ २५
स तेन पूर्वं जयतां भवानिह
द्विजातिनोक्तोऽभिमुखः कृताञ्जलिः ।
जयं जयार्हेण समेत्य वर्धितो
विराटराजो ह्यभिवादयच्च तम् ॥ २६
तमब्रवीत्प्राञ्जलिरेष पार्थिवो
विराटराजो मधुराक्षरं वचः ।
प्राप्तः कुतस्त्वं भगवन्किमिच्छसि
क्व यास्यसे किं करवाणि ते द्विज ॥ २७
श्रुतं च शीलं च कुलं च शंस मे
गोत्रं तथा नाम च देशमेव ते ।
सत्यप्रतिज्ञा हि भवन्ति साधवो
विशेषतः प्रव्रजिता द्विजातयः ॥ २८
यथाऽनुरूपं प्रचरामि ते त्वहं
न चावमन्ता न तवाभिभाषितम् ।
अपूजिता ह्यग्निसमा द्विजातयः
कुलं दहेयुः सविषा इवोरगाः ॥ २९
सर्वां च भूमिं तव दातुमुत्सहे
सदण्डकोशां विसृजामि ते पुरम् ।
कस्यासि राज्ञो विषयादिहागतः
किं कर्म चात्राचरसि द्विजोत्तम ॥ ३०

वैशंपायन उवाच ।

एवं ब्रुवाणं तमुवाच पार्थिवं
युधिष्ठिरो धर्ममवेक्ष्य चासकृत् ।
सत्यं वचः को न्विह वक्तुमुत्सहे-
द्यथाप्रतिज्ञं तु शृणुष्व पार्थिव ॥ ३१
श्रुतं च शीलं च कुलं च कर्म च
शृणुष्व मे जन्म च देशमेव च ।
गुरूपदेशान्नियमाच्च मे व्रतं
कुलक्रमार्थं पितृभिर्नियोजितम् ॥ ३२
द्विजो व्रतेनास्मि न च स्वतः प्रभो
संमुण्डितः प्रव्रजितस्त्रिदण्डभृत् ।
इदं शरीरं मम पश्य मानुषं
समावृतं पञ्चभिरेव धातुभिः ॥ ३३
ममेह पञ्चेन्द्रियगात्रदर्शिनो
वदन्ति पञ्चैव पितॄन्यथा श्रुतिः ।
मनुष्यजातित्वमचिन्तयन्नहं
न चास्मि तुल्यः पितृभिः स्वभावतः॥३४
कङ्को हि नाम्ना विषयं तवागतो
व्रती द्विजातिः स्वकृतेन कर्मणा ।
द्यूतप्रसङ्गादधनोऽस्मि राज-
न्सत्यप्रतिज्ञा व्रतिनश्चरामः ॥ ३५
युधिष्ठिरस्यापि सखाऽभवं पुरा
गृहप्रवेशी च शरीरमेव च ।
गृहे च तस्योषितवानहं सुखं
राजाऽसि तस्य स्वपुरेऽभवं पुरा ॥ ३६
ममाज्ञया तत्र विचेरुरङ्गना
मम प्रियार्थं दमयन्ति वाजिनः ।
मया कृतं तस्य पुरे तु यत्पुरा
न तत्कदाचित्कृतवाञ्जनोऽन्यथा ॥ ३७

नवमोऽध्यायः ॥ ९ ॥

अन्येन रूपेण यतिवेषेण आगतं दृष्ट्वेति शेषः ॥ २४ ॥

सोहं पुरा तस्य वयस्समः सखा
चरामि सर्वां वसुधां सुदुःखितः ।
न तु प्रशान्तिं क्वचिदाप्तवानहं
व्रतोपदेशान्नियमेन भारिकः ॥ ३८

वैयाघ्रपद्योसि नरेन्द्र गोत्रत-
स्तदेव सौख्यं मृगयामहे वयम् ।
कृतज्ञभावेन मयाऽनुकीर्तितं
युधिष्ठिरस्यात्मसमस्य चेष्टितम् ॥ ३९

इमं हि मोक्षाश्रममास्थितस्य मे
युधिष्ठिरस्तुल्यगुणो भवानपि ।
न मेऽस्ति माता न पिता न बान्धवा
न मेऽस्ति रूपं न रतिर्न सन्ततिः ॥ ४०

सुखं च दुःखं च हि तुल्यमद्य मे
प्रियाप्रिये तुल्यगते गतागते ।
मुक्तोस्मि कामाच्च धनाच्च सांप्रतं
त्वदाश्रये वस्तुमिहाभ्युपागतः ॥ ४१

संवत्सरेणेह समाप्यते त्विदं
मम व्रतं दुष्करकर्मकारिणः ।
ततो भवन्तं परितोष्य कर्मभिः
पुनर्व्रजिष्ये च कुतूहलं यतः ॥ ४२

अक्षान्निवप्तुं कुशलोस्म्यहं सदा
पराजितः शकुनिरुतानि चिन्तयन् ।
मृगद्विजानां च रुतानि चिन्तय-
न्निराश्रयः प्रव्रजितोस्मि भिक्षुकः ॥ ४३

वैशंपायन उवाच ।

तेनैवमुक्ते वचने नराधिपः
कृताञ्जलिः प्रव्रजितं विलोक्य च ।
अथाब्रवीद्धृष्टमनाः शुभाक्षरं
मनोनुगं सर्वसभागतं वचः ॥ ४४

ददामि ते हन्त वरं यदीप्सितं
प्रशाधि मत्स्यान्यदि मन्यते भवान् ।
प्रिया हि धूर्ता मम चाक्षकोविदा-
स्त्वं चापि देवो मम राज्यमर्हसि ॥ ४५

समानयानासनवस्त्रभोजनं
प्रभूतमाल्याभरणानुलेपनम् ।
स सार्वभौमोपम सर्वदाऽर्हसि
प्रियं हि मन्ये तव नित्यदर्शनम् ॥ ४६

ये त्वाऽभिधावेयुरनर्थपीडिता
द्विजातिमुख्या यदि वेतरे जनाः ।
सर्वाणि कार्याण्यहमर्थितस्त्वया
तेषां करिष्यामि न मेऽत्र संशयः ॥ ४७

ममान्तिके यश्च तवाप्रियं चरे-
त्प्रवासये तं परिचिन्त्य मानवम् ।
यच्चापि किंचिद्वसु विद्यते मम
प्रभुर्भवांस्तस्य वशी वसेह च ॥ ४८

युधिष्ठिर उवाच ।

अतोऽभिलाषः परमो न विद्यते
न मे जितं किंचन धारये धनम् ।
न भोजनं किंचन संस्पृशेयं
हविष्यभोजी निशि च क्षितीशयः ॥४९

व्रतोपदेशात्समयो हि नैष्ठिको
न क्रोधितव्यं नरदेव कस्यचित् ।
एवंप्रतिज्ञस्य ममेह भूपते
निवासबुद्धिर्भविता तु नान्यथा ॥ ५०

एवं वरं मात्स्य वृणे प्रदापितं
कृती भविष्यामि वरेण तेऽनघ ॥ ५१

वैशंपायन उवाच ।

एवं तु राज्ञः प्रथमः समागमो
बभूव मात्स्यस्य युधिष्ठिरस्य च ।
विराटराजस्य हि तेन सङ्गमो
बभूव विष्णोरिव वज्रपाणिना ॥ ५२

तमासनस्थं प्रियरूपदर्शनं
निरीक्षमाणो न ततर्प भूमिपः ।
सभां च तां प्रज्वलयन्युधिष्ठिरः
श्रिया यथा शक्रइव त्रिविष्टपम् ॥ ५३

एवं स लब्ध्वा नृपतिः समागमं
विराटराजेन नरर्षभस्तदा ।
उवास वीरः परमार्चितः सुखी
न चास्य कश्चिच्चरितं बुबोध तत् ॥ ५४

॥ इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ॥ १० ॥

भीमेन सूदवेषपरिग्रहेण विराटसभाप्रवेशः ॥ १ ॥ विराटेन भीमस्य पाकाधिकारे नियोजनम् ॥ २ ॥

वैशंपायन उवाच ।
अथापरस्यां दिशि भीमदर्शनो
वृकोदरोऽदृश्यत सिंहविक्रमः ।
असिप्रवेके प्रतिमुच्य शाणिते
खजां च दर्वीं च करेण धारयन् ॥ १
त्वचं च गोचर्ममयीं सुमर्दितां
समुक्षितां पानकरागषाडवैः ।
किलासमालम्ब्य करेण चायसं
सशृङ्गिबेरार्द्रकभूस्तृणाङ्कुरम् ॥ २
गम्भीररूपः परमेण तेजसा
रविर्यथा लोकमिमं प्रकाशयन् ।
स कृष्णवासा गिरिराजसारवान्
स मत्स्यराजं समुपेत्य तस्थिवान् ॥ ३
सभागतो वारणयूथपोपम-
स्तमिस्रहा रात्रिमिवावभासयन् ।
सहस्रनेत्रावरजान्तकोपम-
स्त्रिलोकपालाधिपतिर्यथा हरिः ॥ ४
तमाव्रजन्तं गजयूथपोपमं
निरीक्षमाणो नवसूर्यवर्चसम् ।
भयात्समुद्विग्नविषण्णचेतनो
दिशश्च सर्वाः प्रसमीक्ष्य चासकृत् ॥ ५
तमेकवस्त्रं परसैन्यवारणं
सभाऽविदूरान्नृपतिर्नृपात्मजम् ।
समीक्ष्य वैक्लव्यमुपेयिवाञ्शनै-
र्जनाश्च भीताः परिसर्पिरे भृशम् ॥ ६
अथाब्रवीन्मात्स्यपतिः सभागतान्
भृशातुरोष्णं परिनिश्वसन्निव ।
कोऽयं युवा वारणराजसन्निभः
सभामभिप्रैति हि मामिकामिमाम् ॥ ७
को वा विजानाति पुराऽस्य दर्शनं
मृगेन्द्रशार्दूलगतिं हि मामकः ।
व्यूढान्तरांसो मृगराडिवोत्कटो
य एष दिव्यः पुरुषः प्रकाशते ॥ ८
राजश्रिया ह्येष विभाति राजव-
द्विरोचते रुक्मगिरिप्रभोपमः ।
नाक्षत्रियो नूनमयं भविष्यति
सहस्रनेत्रप्रतिमस्तथा ह्यसौ ॥ ९
रूपेण यश्चाप्रतिमो ह्ययं महा-
न्महीमिमां शक्र इवाभिपालयेत् ।
नाभूमिपोऽयं हि मतिर्ममेति च
च्युतः समृद्ध्या नभसीव नाहुषः ॥ १०
वैशंपायन उवाच ।
वितर्कमाणस्य च तस्य पाण्डवः
सभामतिक्रम्य वृकोदरोऽब्रवीत् ।
जयेति राजानमभिप्रमोदय-
न्मुखेन सभ्यं च सभागतं जनम् ॥ ११
ततो नृपं वाक्यमुवाच पाण्डवो
यथाऽनुपूर्व्यात्कृपयान्वितोत्तरम् ।
त्वां जीवितुं शत्रुहन्नागतोऽहं
त्वमेव लोके परमो हि संश्रयः ॥ १२
नरेन्द्र शूद्रोसि चतुर्थवर्णभा-
ग्गुरूपदेशात्परिचारकर्मकृत् ।
जानामि सूपांश्च रसांश्च संस्कृता-
न्मांसान्यपूपांश्च पचामि शोभनान् ।

राजोपचारांश्च बहूनिति ध. पाठः ॥ १३ ॥

रागप्रकाराश्च बहून्फलाश्रया-
न्महानसे मे न समोस्ति सूपकृत् ॥ १३

वैशंपायन उवाच ।

तमब्रवीन्मत्स्यपतिः प्रहृष्टव-
त्प्रियं प्रगल्भं मधुरं विनीतवत् ।
न शूद्रतां कांचन लक्षयामि ते
कुबेरचन्द्रेन्द्रदिवाकरप्रभ ॥ १४

हुताशनाशीविषतुल्यतेजसो
न कर्म ते योग्यमिदं महानसे ।
न सूपकारो भवितुं त्वमर्हसि
सुपर्णगन्धर्वमहोरगोपम ॥ १५

अनीककर्णाग्रधरो ध्वजी रथी
भवाद्य मे वारणवाहिनीपतिः ।
न नीचकर्मा भवितुं त्वमर्हसि
प्रशासितुं भूमिमिमां त्वमर्हसि ॥ १६

भीम उवाच ।

चतुर्थवर्णोस्म्यहमुग्रशासन
न वै वृणे त्वामहमीदृशं पदम् ।
जात्याऽस्मि शूद्रो बललेति नाम्ना
जिजीविषुस्त्वद्विषयं समागतः ॥ १७

युधिष्ठिरस्यास्मि महानसे पुरा
बभूव सर्वप्रभुरन्नपानदः ।
अथापि मामुत्सृजसे महीपते
व्रजाम्यहं यावदितो यथागतम् ॥ १८

त्वमन्नसंस्कारविधौ प्रशाधि मां
भवामि तेऽहं नरदेव सूपकृत् ।
बलेन तुल्यश्च न विद्यते मया
नियुद्धशीलोस्मि सदा हि पार्थिव ॥ १९

गजांश्च सिंहांश्च समेयिवानहं
सदा करिष्यामि तवानघ प्रियम् ।
न नीचकर्मा तव मादृशः प्रभो
बलस्य नेताऽप्यबलो भवेदिति ॥ २०

स्वकर्मतुष्टाश्च वयं नराधिप
प्रशाधि मां सूदपदे यदीच्छसि ।
ये सन्ति मल्ला बलवीर्यसंमता-
स्तानेव योत्स्यामि तवाभिहर्षयन् ॥ २१

वैशंपायन उवाच ।

तमेवमुक्ते वचने नराधिपः
प्रत्यब्रवीन्मत्स्यपतिः प्रहृष्टवत् ।
सोहं न मन्ये तव कर्म तत्समं
समुद्रनेमिं पृथिवीं त्वमर्हसि ॥ २२

त्रिलोकपालो हि यथा विराजसे
तथाऽद्य मे विष्णुरिवातिरोचसे ।
यथा तु कामस्तव तत्तथा कृतं
महानसे मे भव मे पुरस्कृतः ।
नराश्च मे तत्र मया सदाऽर्चिता
भवाद्य तेषामधिपो मया कृतः ॥ २३

तथा स भीमो विहितो महानसे
विराटराजस्य बभूव वै प्रियः ।
उवास राजन्न च तं पृथग्जनो
बुबोध तस्यानुचरश्च कश्चन ॥ २४

॥ इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः ॥ ११ ॥

अर्जुनेन षण्डवेषपरिग्रहेण विराटसभांप्रवेशः ॥ १ ॥ विराटेनार्जुनस्य कन्यानाटने नियोजनम् ॥ २ ॥

वैशंपायन उवाच ।

अथापरोऽदृश्यत वर्णवान्युवा
स्त्रीवेषधारी समलंकृतो भृशम् ।
प्रवालचित्रे प्रविमुच्य कुण्डले
उभे च कम्बू परिपातुके तथा ॥ १

अनीककण्ठाग्रसरोध्वजीति ध. पाठः ॥ १६ ॥

कृष्णे च रक्ते च निबध्य वाससी
शरीरवाञ्शुक्रबृहस्पतिप्रभः ।
बहूंश्च दीर्घांश्च विकीर्य मूर्धजा-
न्महाभुजो मत्तगजेन्द्रविक्रमः ॥ २

क्लैब्येन वेषेण न भाति भाति च
ग्रहाभिपन्नो नभसीव चन्द्रमाः ।
गतेन चोर्वीं परिकम्पयंस्तदा
विराटमासाद्य सभासमीपतः ॥ ३

तं प्रेक्ष्य राजोपगतं सभातले
व्याजाप्रतिच्छन्नममित्रमर्दनम् ।
विराजमानं सुरराजवर्चसं
सुतं सुरेन्द्रस्य गजेन्द्रविक्रमम् ॥ ४

सर्वानपृच्छच्च समीपचारिणः
कुतोऽयमायाति न मे पुरा श्रुतः ।
न चैनमूचुर्विदितं नरास्तदा
सविस्मयं वाक्यमिदं नृपोऽब्रवीत् ॥ ५

विराट उवाच ।

गजेन्द्रलीलो मृगराजगामी
वृषेक्षणो देवसुतोग्रतेजाः ।
पीनांसबाहुः कनकावदातः
कोऽयं नरो मे नगरं प्रविष्टः ॥ ६

किमेष देवेन्द्रसुतः किमेष
ब्रह्मात्मजो वा किमयं स्वयंभूः ।
उमासुतो वैश्रवणात्मजो वा
प्रेक्ष्यैनमासीदिति मे वितर्कः ॥ ७

वैशंपायन उवाच ।

सभामतिक्रम्य स वासवोपमो
निरीक्षमाणो बहुभिः सभागतैः ।
स तत्र राजानममित्रहाऽब्रवी-
द्बृहन्नलाहं नरदेव नर्तकी ॥ ८

वेणीं प्रकुर्यां रुचिरे च कुण्डले
ग्रथे स्रजः प्रावरणानि संहरे ।
स्नानं चरेयं विमृजे च दर्पणं
विशेषकेष्वेव च कौशलं मम ॥ ९

क्लीबेषु बालेषु जनेषु नर्तने
शिक्षाप्रदानेषु च योग्यता मम ।
करोमि वेणीषु च पुष्पपूरकं
न मे स्त्रियः कर्मणि कौशलाधिकाः ॥ १०

इत्यर्जुनस्तं नरदेवमोजसा
विज्ञाप्य तस्थौ विधिनाऽऽत्मनः क्रियाम् ।
तमब्रवीत्पांशुमुदीक्ष्य विस्मितो
विराटराजोपसृतं महायशाः ॥ ११

नार्हस्तु वेषोऽयमनूर्जितस्ते
नापुंस्त्वमर्हं नरदेवसिंह ।
तवैव वेषः शुभवेषभूषणै-
र्विभूषितो भूतपतेरिव प्रभो ॥ १२

विभाति भानोरिव रश्मिमालिनो
घनावरुद्धे गगने घनैरिव ।
धनुर्हि मन्ये तव शोभयेद्भुजौ
तथाहि पीनावतिमात्रमायतौ ॥ १३

प्रगृह्य चापं त्वनुरूपमात्मनो
रक्षस्व देशं पुरमद्य सुस्थिरः ।
पुत्रेण तुल्यो भव मे बृहन्नले
वृद्धोस्मि वित्तं प्रतिपादयामि ते ॥ १४

त्वं रक्ष मे सर्वमिदं पुरं प्रभो
न षण्डतां कांचन लक्षयामि ते ।
प्रशाधि मत्स्यांस्तरसा विवर्धय-
न्ददामि राज्यं तव सत्यवागहम् ॥ १५

वैशंपायन उवाच ।

तस्याग्रतः स्वानि धनूंषि पार्थिवो
बहूनि दीर्घाणि च वर्णवन्ति च ।
ददौ स सज्यानि बलान्वितानि
जिज्ञासमानः किमयं करिष्यति ॥ १६

ततोऽर्जुनः क्लीबतरं वचोऽब्रवी-
न्न मे धनुर्धारितमीदृशं विभो ।
न चापि दृष्टं धनुरीदृशं कचि-
न्न मादृशाः सन्ति धनुर्धरा भुवि ॥ १७

नृत्यामि गायामि च वादयाम्यहं
प्रानर्तने कौशलनैपुणं मम ।
तदुत्तरायाः परिधत्स्व नर्तने
भवामि देव्या नरदेव नर्तकी ॥ १८

विराट उवाच ।

ददामि ते तं हि वरं बृहन्नले
सुतां हि मे नर्तय याश्च तादृशीः ।
ततो विराटः स्वयमाह्वयत्सुतां
नराधिपस्तां च सुमध्यसुन्दरीम् ॥ १९
उवाच चैनां मुदितेन चेतसा
बृहन्नला नाम सखी भवत्वियम् ।
सुगात्रि संप्रीतिसुबद्धसौहृदा
तवाङ्गने प्राणसमा च नित्यदा ॥ २०
प्रकामभक्ष्याभरणाम्बरा शुभा
चरत्वियं सर्वजनेष्ववारिता ।
न दुष्कुलानामियमाकृतिर्भवे-
न्न वृत्तभेदी भवतीदृशो जनः ॥ २१

वैशंपायन उवाच ।

संमन्त्र्य राजा विविधैः स्वमन्त्रिभिः
परीक्ष्य चैनं प्रमदाभिराशु वै ।
अपुंस्त्वमप्यस्य निशम्य च स्थिरं
ततः कुमारीपुरमुत्ससर्ज तम् ॥ २२
स शिक्षयामास च गीतवादनं
सुतां विराटस्य धनंजयः प्रभुः ।
सखीश्च तस्याः परिचारिकास्तथा
प्रियश्च तस्याः स बभूव पाण्डवः ॥ २३
तथा स तत्रैव धनंजयोऽवस-
त्प्रियाणि कुर्वन्सह ताभिरात्मवान् ।
तथा गतं तत्र न जज्ञिरे जना
बहिश्चरा वाऽप्यथवेतरे जनाः ॥ २४

॥ इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि एकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः ॥ १२ ॥

नकुलेन विराटमेत्य स्वस्याश्वशास्त्रे कौशलाभिधानम् ॥ १ ॥ विराटेन नकुलस्याश्वपालने नियोजनम् ॥ २ ॥

वैशंपायन उवाच ।

अथापरोऽदृश्यत पाण्डवः प्रभु-
र्विराटराजे तुरगान्समीक्षति ।
तमापतन्तं ददृशुः पृथग्जनाः
प्रमुक्तमभ्रादिव चन्द्रमण्डलम् ॥ १
स वै हयानैक्षत तानितस्ततः
समीक्षमाणं च ददर्श मत्स्यराट् ।
दृष्ट्वा तथैनं स कुरूत्तमं तमः
पप्रच्छ तान्सर्वसभासदस्तदा ॥ २
को वा विजानाति पुराऽस्य दर्शनं
योऽयं युवाऽभ्येति हि मामिकां सभाम् ।
प्रियो हि मे दर्शनतोपि संमतो
ब्रवीतु कश्चिद्यदि दृष्टवानिमम् ॥ ३
अयं हयान्पश्यति मामकान्मुहु-
र्ध्रुवं हयज्ञो भविता विचक्षणः ।
प्रवेश्यतामेष समीपमाशु वै
विभाति वीरो हि यथाऽमरस्तथा ॥ ४
वितर्कयत्येव हि मत्स्यराजनि
त्वरन्कुरूणामृषभः सभामगात् ।
ततः प्रणम्योपनतः कुरूत्तमो
विराटराजानमुवाच पार्थिवम् ॥ ५
तवागतोऽहं पुरमद्य भूपते
जिजीविषुर्वेतनभोजनार्थिकः ।
तवाश्वबन्धः सुभृतो भवाम्यहं
कुरुष्व मामश्वपतिं यदीच्छसि ॥ ६

विराट उवाच ।

ददानि यानानि धनानि वेतनं
न चाश्वसूतो भवितुं त्वमर्हसि ।
कुतोसि कस्यासि कथं त्वमागतो
ब्रवीहि शिल्पं तव विद्यते च यत् ॥ ७

नकुल उवाच ।

पञ्चानां पाण्डुपुत्राणां ज्येष्ठो राजा युधिष्ठिरः ।
तेनाहमश्वेषु पुरा प्रकृतः शत्रुकर्शन ॥ ८

अश्वानां प्रकृतिं वेद्मि विनयं चापि सर्वशः ।
दुष्टानां प्रतिपत्तिं च कृत्स्नं चैव चिकित्सितम् ॥ ९

न कातरं स्यान्मम वाजिवाहनं
न मेऽस्ति दुष्टा बडवा कुतो हयः ।
जानंस्तु मामाह स चापि पाण्डवो
युधिष्ठिरो ग्रन्थिकमेव नामतः ॥ १०

मातलिरिव देवपते-
र्दशरथनृपतेः सुमन्त्र इव यन्ता ।
सुमह इव जामदग्ने-
स्तथैव तव शिक्षयाम्यश्वान् ॥ ११

युधिष्ठिरस्य राजेन्द्र नरराजस्य शासनात् ।
शतसाहस्रकोटीनामश्वानामस्मि रक्षिता ॥ १२

विराट उवाच ।

यदस्ति किंचिन्मम वाजिवाहनं
तदस्तु सर्वं त्वदधीनमद्य वै ।
ये चापि केचिन्मम वाजियोधा-
स्त्वदाश्रयाः सारथयश्च सन्तु मे ॥ १३

इदं तवेष्टं विहितं सुरोपम
प्रब्रूहि यत्ते प्रसमीक्षितं वरम् ।
न तेऽनुरूपं हयकर्म दृश्यते
विभासि राजेव न कर्म वाजिनाम् ॥ १४

युधिष्ठिरस्यैव हि दर्शनेन मे
समं तवेदं प्रियदर्श दर्शनम् ।
कथं नु भृत्यैः स विनाकृतो वने
चरत्यनिन्द्यो रमते च पाण्डवः ॥ १५

वैशंपायन उवाच ।

तथा स गन्धर्ववरोपमो युवा
विराटराज्ञा मुदितेन पूजितः ।
न चैवमन्येऽपि विदुः कथंचन
प्रियाभिरामं विचरन्तमन्तरा ॥ १६

॥ इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः ॥ १३ ॥

सहदेवेन गोपालवेषधारणेन विराटंप्रति गमनम् ॥ १ ॥ विराटेन सहदेवस्य गोपालने नियोजनम् ॥ २ ॥

वैशंपायन उवाच ।

अथापरोऽदृश्यत वै शशी यथा
हुतो हविर्भिर्हि यथाऽध्वरे शिखी ।
तथा समालक्ष्यत चारुदर्शनः
प्रकाशयन्सूर्य इवाचिरोदितः ॥ १

तमाव्रजन्तं सहदेवमग्रणी-
र्नृपो विराटो नचिरात्समैक्षत ।
प्रैक्षन्त तं तत्र पृथक्समागताः
सभागताः सर्वमनोहरप्रभम् ।
युवानमायान्तममित्रकर्शनं
प्रमुक्तमभ्रादिव चन्द्रमण्डलम् ॥ २

यष्ट्या प्रमाणान्वितया सुदर्शनं
दामानि पाशं च निबद्ध्य पृष्ठतः ।
मौर्वीं च तन्त्रीं महतीं सुसंहितां
बालैश्च तारैर्बहुभिः समावृताम् ॥ ३

स चापि राजानमुवाच वीर्यवा-
न्कुरुष्व मां पार्थिव गोष्ववस्थितम् ।
मया हि गुप्ताः पशवो भवन्तु ते
प्रसन्ननिद्राः प्रभवोसि वल्लवः ॥ ४

न श्वापदेभ्यो न च रोगतो भयं
न चापि दावान्न च तस्कराद्भयम् ।
पयःप्रभूता बहुला निरामया
भवन्ति गावः सुभृता नराधिप ॥ ५

निशम्य राजा सहदेवभाषितं
निरीक्ष्य माद्रीसुतमभ्यनन्दत् ।

उवाच हृष्टो मुदितेन चेतसा
न बल्लवत्वं त्वयि वीर लक्षये ॥ ६
धैर्याद्वपुः क्षात्रमिवेह ते दृढं
प्रकाशते कौरववंशजस्य वा ।
नापण्डितेयं तव दृश्यते तनु-
र्भवेह राज्ये मम मन्त्रधर्मभृत् ॥ ७
प्रशाधि मत्स्यान्सहराजकानिमा-
न्बृहस्पतिः शक्रयुतानिवामरान् ।
बलं च मे रक्ष सुवेष सर्वशो
गृहाण खड्गं प्रतिरूपमात्मः ॥ ८
अनीककर्णाग्रधरो बलस्य मे
प्रभुर्भवानस्तु गृहाण कार्मुकम् ॥ ९
वैशंपायन उवाच ।
विराटराज्ञाऽभिहितः कुरूत्तमः
प्रशस्य राजानमभिप्रणम्य च ।
उवाच मत्स्यप्रवरं महामतिः
शृणुष्व राजन्मम वाक्यमुत्तमम् ॥ १०
बालो ह्यहं जातिविशेषदूषितः
कुतोऽद्य मे नीतिषु युक्तमन्त्रता ।
स्वकर्मतुष्टाश्च वयं नराधिप
प्रशाधि मां गोपरिरक्षणेऽनघ ॥ ११
वैश्योस्मि नाम्नाऽहमरिष्टनेमि-
र्गोसङ्ख्य आसं कुरुपुङ्गवानाम् ।
वस्तुं त्वयीच्छामि विशांवरिष्ठ
तान्राजसिंहान्न हि वेद्मि पार्थान् ॥ १२
न जीवितुं शक्यमतोऽन्यकर्मणा
न च त्वदन्यो मम रोचते विभो ॥ १३
विराट उवाच ।
त्वं ब्राह्मणो वा यदि वाऽपि भूमिपः
समुद्रनेमीश्वररूपवानसि ।
आचक्ष्व तत्वं त्वममित्रकर्शन
न बल्लवत्वं त्वयि विद्यते समम् ॥ १४
कस्यासि राज्ञो विषयादिहागतः
किं चापि शिल्पं तव विद्यते कृतम् ।
कथं त्वमस्मासु निवत्स्यसे सदा
वदस्व किं चापि तवेह वेतनम् ॥ १५
सहदेव उवाच ।
पञ्चानां पाण्डुपुत्राणां ज्येष्ठो राजा युधिष्ठिरः ।
तस्याष्टौ शतसाहस्रं गवां वर्गाः शतंशतम् ॥१६
अपरे दशसाहस्रा द्विस्तावन्तस्तथा परे ।
तेषां गोसङ्ख्य आसं वै तन्त्रीपालेति मां विदुः॥१७
भूतं भव्यं भविष्यच्च यच्चान्यद्गोगतं क्वचित् ।
न मेऽस्त्यविदितं किंचित्समन्ताद्दशयोजनम्॥१८
गुणाः सुविदिता ह्यासन्मया तस्य महात्मनः ।
आसीच्च स मया तुष्टः कुरुराजो युधिष्ठिरः ॥ १९
अनेन गणिता गावो दुर्विज्ञेया महत्तराः ।
बहुक्षीरतरास्ता वै बह्व्यः सत्यः सपुत्रिकाः ॥२०
क्षिप्रं च गावो बहुला भवन्ति
न तासु रोगो भवतीह कश्चित् ।
तैस्तैरुपायैर्विदितं मयैत-
देतानि शिल्पानि मयि स्थितानि ॥ २१
ऋषभानपि जानामि राजन्पूजितलक्षणान् ।
येषां मूत्रमुपाघ्राय वन्ध्या अपि प्रसूयते ॥ २२
वैशंपायन उवाच ।
मत्स्याधिपो हर्षकलेन चेतसा
माद्रीसुतं पाण्डवमभ्यभाषत ।
नैवानुमन्ये तव कर्म कुत्सितं
महीं समग्रामभिपातुमर्हसि ॥ २३
अथ त्विदानीं तव रोचते विभो
यथेष्टतो गव्यमवेक्ष मामकम् ।
त्वदर्पणा मे पशवो भवन्तु वै
पशून्सपालान्भवते ददाम्यहम् ॥ २४
शतं सहस्राणि गवां हि सन्ति
वर्णस्यवर्णस्य पृथग्गणानाम् ।
ददामि तेऽहं वरमीप्सितं च य-
त्त्वदर्पणा मे पशवो भवन्त्विति ॥ २५

वैशंपायन उवाच ।
एवं विराटेन समेत्य पाण्डवो
लब्ध्वा च गोबल्लवतां यथेष्टतः ।
अज्ञातचर्यामवसन्महात्मा
यथा रविश्चास्तगिरिं प्रविष्टः ॥ २६
एवं विराटे न्यवसंश्च पाण्डवा
यथा प्रतिज्ञाभिरमोघविक्रमाः ।
अबुद्धचर्यां चरितुं यथातथं
समुद्रनेमीमभिशास्तुमुद्यताः ॥ २७

॥ इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः ॥ १४ ॥

द्रौपद्या सैरन्ध्रीवेषधारणेन सुदेष्णागृहे निवासः ॥ १ ॥

वैशंपायन उवाच ।
ततः कृष्णा सुकेशी सा दर्शनीया शुचिस्मिता ।
वेणीकेशान्समुत्क्षिप्य पीनवृत्तकुचा शुभा ।
जुगूहे दक्षिणे पार्श्वे मृदूनसितलोचना ॥ १
वासश्च परिधायैकं कृष्णा सुमलिनं महत् ।
कृत्वा वेषं च सैरन्ध्र्याः कृष्णा व्यचरदार्तवत् ॥ २
प्रविष्टा नगरं भीरूः सैरन्ध्रीवेषसंयुता ।
तां नराः परिधावन्तः स्त्रियश्च समुपाद्रवन् ॥ ३
अपृच्छंस्ते च तां दृष्ट्वा का त्वं किं च चिकीर्षसि ।
सा तानुवाच राजेन्द्र सैरन्ध्र्यहमुपागता ।
कर्म चेच्छामि वै कर्तुं तस्या या मां भरिष्यति ॥ ४
वैशंपायन उवाच ।
तस्या रूपेण वेषेण श्लक्ष्णया च गिरा तथा ।
न श्रद्दधानास्तां देवीमन्नहेतोरुपस्थिताम् ॥ ५
विराटस्य तु कैकेयी भार्या परमसंमता ।
आलोकयन्ती ददृशे प्रासादाद्द्रुपदात्मजाम् ॥ ६
सा समीक्ष्य तथारूपामनाथामेकवाससम् ।
स्त्रीभिश्च पुरुषैश्चापि सर्वतः परिवारिताम् ॥ ७
विराटभार्या तां देवी कारुण्याज्जातसंभ्रमा ।
अप्रेषयत्समीपस्थाः स्त्रियो वृद्धाश्च तत्पराः ॥ ८
अपनीय ततः सर्वा आनयध्वमिहैव ताम् ।
यदा दृष्टा मया साध्वी कम्पते मे मनस्तदा ।
तस्माच्छीघ्रमिहानाय्य दर्शयध्वं यदीच्छथ ॥ ९
तास्तथोक्ता उपागम्य द्रौपदीं परिसंगताः ।
आनीय सर्वथा त्वेनामब्रुवन्मधुराक्षरम् ॥ १०
भद्रे त्वां द्रष्टुमिच्छन्ती सुदेष्णा हर्म्यभूतले ।
त्वदर्थं प्रैषयच्चास्मान्द्रष्टुं तां त्वं यदीच्छसि ।
आयाह्यस्माभिरेवाद्य रक्ष्यमाणा यथेष्टतः ॥ ११
तच्छ्रुत्वा द्रौपदी तासां वचनं वाक्यकोविदा ।
ईप्सितार्थातिलाभेन हृष्टाऽऽयाता गृहोत्तमम् १२
राजवेश्म ह्युपाक्रम्य यत्राग्र्यमहिषी स्थिता ।
सुदेष्णामगमत्कृष्णा राजभार्यां यशस्विनीम् ॥ १३
कृष्णान्केशान्मृदून्दीर्घान्समुद्ग्रथ्यासितेक्षणा ।
कुञ्चिताग्रांस्तु सूक्ष्माग्रान्दर्शनीयान्निबध्य च ।
जुगूहे दक्षिणे पार्श्वे मृदूनायतलोचना ॥ १४
सा प्रविश्य विराटस्य द्रौपद्यन्तःपुरं शुभा ।
ह्रीनिषेवान्विता बाला कम्पमाना लतेव सा ॥ १५
अभिगम्य च सुश्रोणी सर्वलक्षणसंयुता ।
ददर्शावस्थितां हैमे पीठे रत्नपरिच्छदे ॥ १६
रक्तसूक्ष्माम्बरधरां मेघे सौदामिनीमिव ।
नानावर्णविचित्रां च सर्वाभरणभूषिताम् ॥ १७
सुभ्रूं सुकेशीं सुश्रोणीं कुब्जवामनमध्यगाम् ।
बहुपुष्पोपकीर्णायां भूम्यां वेदिमिवाध्वरे ॥ १८
सुदेष्णां राजमहिषीं सर्वालंकारभूषिताम् ।
श्रीमतीं राजपुत्रीणां शतेन परिवारिताम् ॥ १९
ताः सर्वा द्रौपदीं दृष्ट्वा सन्तप्ताः परमाङ्गनाः ।

१. समुत्क्षिप्य वलिगताग्राननिन्दितानिति ख. थ. ध. पाठः ॥ १ ॥ चतुर्दशोऽध्यायः ॥ १४ ॥

परितश्चोपतस्थुस्ताः सहसोत्थाय चासनात् ॥२०
निरीक्षमाणाः सर्वास्ताः शचीं देवीमिवागताम् ।
गूढगुल्फां वरारोहां कृष्णां ताम्रायतेक्षणाम् ।
अतिसर्वानवद्याङ्गीं नतगात्रीं सुमध्यमाम् ॥ २१
न ह्रस्वां नातिमहतीं जातां बहुतृणे वने ।
ऋश्यरोहीमिवानिन्द्यां सुकेशीं मृगलोचनाम् ॥२२
तां मृगीमिव वित्रस्तां यूथभ्रष्टामिव द्विपाम् ।
लक्ष्मीमिव विशालाक्षीं विद्यामिव यशस्विनीम् २३
रोहिणीमिव ताराणां दीप्तामग्निशिखामिव ।
पार्वतीमिव रुद्राणीं वेलामिव महोदधेः ॥ २४
सुलभामिव नागीनां मृगीणामिव किन्नरीम् ।
गङ्गामिव विशुद्धाङ्गीं शारदीमिव शर्वरीम् ॥ २५
तामचिन्त्यतमां लोके इलामिव यशस्विनीम् ।
सावित्रीमिव दुर्धर्षां ब्राह्मया लक्ष्म्या समन्वितां २६
सीतामिव सतीं शुद्धामरुन्धतीमिव प्रियाम् ।
सुदेष्णा पर्यपृच्छत्तां विस्मयोत्फुल्ललोचना ॥ २७
का त्वं सर्वानवद्याङ्गि कुतोसि त्वमिहागता ।
कस्य वा त्वं विशालाक्षि किं वा ते करवाण्यहम् २८
गूढगुल्फा समानोरूस्त्रिगम्भीरा षडुन्नता ।
स्निग्धा पञ्चसु रक्तेषु हंसगद्गदभाषिणी ॥ २९
शुकेशी सुस्वरा श्यामा पीनश्रोणीपयोधरा ।
अरालपक्ष्मनयना बिम्बोष्ठी तनुमध्यमा ॥ ३०
कम्बुग्रीवा गूढसिरा पूर्णचन्द्रनिभानना ।
दानवी किन्नरी वा त्वं गन्धर्वी वनदेवता ॥ ३१
अप्सरा वाऽसि नागी वा तारा वा त्वं विलासिनी ।
अलम्बुसा मिश्रकेशी पुण्डरीकाऽथ मालिनी ॥३२
तेनतेनैव संपन्ना काश्मीरीव तुरंगमा ।
इन्द्राणी त्वथ रुद्राणी स्वधा वाऽप्यथवा रतिः॥३३
देवि देवेषु विख्याता ब्रूहि का त्वमिहागता ।
तव ह्यनुपमं रूपं भूषणैरपि वर्जितम् ॥ ३४
त्वां सृष्ट्वोपरतं मन्ये लोककर्तारमीश्वरम् ।
न तृप्यन्ति स्त्रियो दृष्ट्वा का न पुंसां रतिर्भवेत् ३५
प्रवालपुष्पस्तबकैराचिता वनदेवताः ।
त्वामेव हि निरीक्षन्ते विस्मिता रूपसंपदा ॥ ३६
अन्तःपुरगता नार्यो मृगाः पक्षिगणा नराः ।
सर्वे त्वामेव कल्याणि निरीक्षन्ते सुविस्मिताः ३७
न त्वादृशी काचन मे त्रिषु लोकेषु सुन्दरी ।
दृष्टपूर्वा श्रुता वाऽपि चक्षुषा विद्यते शुभा ॥ ३८
द्रौपद्युवाच ।
नास्मि देवी न गन्धर्वी न यक्षी न च किन्नरी ।
सैरन्ध्री नाम मे जातिर्वन्यमूलफलाशना ॥ ३९
पतीनां प्रेक्षमाणानां कस्मिंश्चित्कारणान्तरे ।
केशपाशे परामृष्टा साऽहं त्रस्ता वनं गता ॥ ४०
तत्र द्वादशवर्षाणि वन्यमूलफलाशना ।
चराम्यनिलया सुभ्रूः सा तवान्तिकमागता ॥४१
जानामि केशान्ग्रथितुं विचित्रान्ग्रथितुं मणीन् ।
मल्लिकोत्पलपद्मानां जानामि ग्रथितुं स्रजः ॥४२
सिन्धुवारकजातीनां रचयाम्यवतंसकान् ।
पत्रं मृगाङ्कमगरुं पिषे च हरिचन्दनम् ।
ग्रथयिष्यामि चित्राश्च स्रजः परमशोभनाः ॥ ४३
आराधयं सत्यभामां कृष्णस्य महिषीं प्रियाम् ।
कृष्णां च भार्यां पार्थानां नारीणामुत्तमां तथा ४४
तथाऽस्मि सुभ्रुवा चाहमिष्टलाभेन तोषिता ।
मालिनी चेति मे नाम स्वयं देवी चकार ह ।
कृष्णा कमलपत्राक्षी सा मे प्राणसमा सखी ॥४५
न चाहं चिरमिच्छामि क्वचिद्वस्तुं शुभानने ।
व्रतं किलैतदस्माकं कुलधर्मोऽयमीदृशः ॥ ४६
योऽस्माकं तु हरेद्द्रव्यं देशं वसनमेव वा ।
न क्रोद्धव्यं किलास्माभिरसद्गुरुरमर्षणः ॥ ४७
साऽहं वनानि दुर्गाणि तीर्थानि च सरांसि च ।
शैलांश्च विविधान्रम्यान्सरितश्च समुद्रगाः ॥ ४८
भर्तृशोकपरीताङ्गी भर्तृसब्रह्मचारिणी ।
विचरामि महीं दुर्गां यत्र सायंनिवेशना ॥ ४९
वीरपत्नी यदा देवी चरमाणेषु भर्तृषु ।
साऽहं विवत्सा विधिना गन्धमादनपर्वतात् ।
शृणोमि तव सौशील्यं भर्तुर्मधुरभाषिणि ॥ ५०
माहात्म्यं च ततः श्रुत्वा ब्राह्मणानां समीपतः ।
त्वामुपस्थातुमिच्छामि ततश्चाहमिहागता ॥ ५१

गुरवो मम धर्मश्च वायुः शक्रस्तथाऽश्विनौ ।
तेषां प्रसादाच्च न मां कश्चिद्धर्षयते पुमान् ॥ ५२
वैशंपायन उवाच ।
एवमुक्त्वा सुदेष्णां तां कृताञ्जलिपुटा स्थिता ।
साऽब्रवीद्विस्मयाविष्टा द्रौपदीं योषितां वराम् ॥ ५३
न भरेयमहं भद्रे संशयो मम विद्यते ।
राजा त्वयं हि त्वां दृष्ट्वा मतिं पापां करिष्यति ५४
साऽहं त्वां न क्षमां मन्ये वसन्तीमिह वेश्मनि ।
एष दोषोऽस्ति सुश्रोणि कथं वा भीरु मन्यसे ॥ ५५
स्थिता राजकुले नार्यो याश्चेमा मम वेश्मनि ।
त्वामेवैकां निरीक्षन्ते विस्मयाद्वरवर्णिनि ॥ ५६
वृक्षांश्चोपस्थितान्पश्य य इमे मम वेश्मनि ।
विनमन्ते हि त्वां दृष्ट्वा पुमांसं कं न लोभयेः ॥ ५७
बिभर्षि परमं रूपमतिमानुषमद्भुतम् ।
तिर्यग्योनिगताश्चापि निरीक्षन्ते सविस्मयाः ।
तव रूपमनिन्द्याङ्गि किं पुनर्मानवा भुवि ॥ ५८
राजा विराटः सुश्रोणि दृष्ट्वा ते परमं वपुः ।
मां विहाय वरारोहे त्वां गच्छेत्सर्वचेतसा ॥ ५९
यं हि त्वमनवद्याङ्गी नरमायतलोचने ।
सुप्रसन्ना हि वीक्षेथाः स कामवशगो भवेत् ॥ ६०
सुस्नाताऽलंकृता हि त्वं यमीक्षेथा हि मानुषम् ।
ग्लानिर्न तस्य दुःखं वा न तन्द्रिर्न पराजयः ॥ ६१
न शोको न च सन्तापो न क्रोधो नानृतं वदे ।
यं त्वं सर्वानवद्याङ्गि भजेथाः समलंकृता ॥ ६२
न व्याधिर्न जरा तस्य न तृष्णा न क्षुधा भवेत् ।
यस्य त्वं वशगा सुभ्रु भवेरङ्कगता सती ॥ ६३
पञ्चत्वमपि संप्राप्तं यं च त्वं परिषस्वजेः ।
बाहुभ्यामनुरूपाभ्यां स जीवेदिति मे मतिः ॥ ६४
यस्य हि त्वं भवेर्भार्या यं च हृष्टा परिष्वजेः ।
अतिजीवेत्स सर्वेषु देवेष्विव पुरन्दरः ॥ ६५
अध्यारोहेद्यथा वृक्षं यथा वाऽऽरुह्य तक्षति ।
राजवेश्मनि वामोरु ननु स्यास्त्वं तथा मम ॥ ६६
यथा कर्कटकी गर्भमाधत्ते मृत्युमात्मनः ।
तथाविधमहं मन्ये तव सुभ्रु समागमम् ॥ ६७
अनुमानये त्वां सैरन्ध्रि नावमन्ये कथंचन ।
भर्तृशीलभयाद्भद्रे तव वासं न रोचये ॥ ६८
सैरन्ध्र्युवाच ।
नाहं शक्या विराटेन यद्वा चान्येन केनचित् ।
देवगन्धर्वयक्षैर्वा द्रष्टुं दुष्टेन चेतसा ॥ ६९
गन्धर्वाः पालयन्ते मां सुकुलाः पञ्च सुव्रताः ।
पुत्रा देवादिदेवानां सूर्यपावकवर्चसः ॥ ७०
यश्च दुःशीलवान्मर्त्यो मां स्पृशेद्दुष्टचेतसा ।
स तामेव निशां शीघ्रं शयीत मुसलैर्हतः ॥ ७१
यस्यापि हि शतं पूर्णं बान्धवानां भवेदपि ।
सहस्रं वा विशालाक्षि कोटिर्वापि सहस्रिका ।
दुष्टचित्तश्च मां ब्रूयान्न स जीवेत्तवाग्रतः ॥ ७२
न तस्य त्रिदशा देवा नासुरा न च पन्नगाः ।
तेभ्यो गन्धर्वराजेभ्यस्त्राणं कुर्युरसंशयम् ॥ ७३
सुदेष्णे विश्वस त्वं मां स्वजने बान्धवेऽपि वा ।
नाहं शक्या नरैर्द्रष्टुं न च मे वृत्तमीदृशम् ॥ ७४
यो मे न दद्यादुच्छिष्टं न च पादौ प्रधावयेत् ।
प्रीयेरंस्तेन वासेन गन्धर्वाः पतयो मम ॥ ७५
यो हि मां पुरुषो गृद्ध्येद्यथाऽन्याः प्राकृतस्त्रियः ।
तामेव स इमां रात्रिं प्रविशेदपरां तनुम् ॥ ७६
न चाप्यहं चालयितुं शक्या केनचिदङ्गने ।
दुःखशीलाश्च गन्धर्वास्त इमे बलिनः प्रियाः ।
एवं निवसमानायां मयि मा ते भयं हि भूत् ॥ ७७
वैशंपायन उवाच ।
एवमुक्ता तु सैरन्ध्र्या सुदेष्णा वाक्यमब्रवीत् ।
वसेह मयि कल्याणि यदि ते वृत्तमीदृशम् ॥ ७८
कश्च ते दातुमुच्छिष्टं पुमानर्हति भामिनि ।
प्रसारयेच्च कः पादौ लक्ष्मीं दृष्ट्वेव बुद्धिमान् ॥ ७९
एवमाचारसंपन्ना एवं देवपरायणा ।
रक्ष्या त्वमसि भूतानां सावित्रीव द्विजन्मनाम् ८०
देवता इव कल्याणि पूजिता वरवर्णिनी ।
वस भद्रे मयि प्रीता प्रीतिर्हि मयि वर्तते ।
सर्वकामैः प्रमुदिता निरुद्विग्नमनाः सुखम् ॥ ८१

वैशंपायन उवाच ।
सुदेष्णयैवमुक्ता सा संप्रीता चारुहासिनी ।
निर्विशङ्का विराटस्य विवेशान्तःपुरं सुखम् ॥ ८२
याज्ञसेनी सुदेष्णां तु शुश्रूषन्ती विशांपते ।
अवसत्परिचारार्हा सुदुःखं जनमेजय ॥ ८३

एवं विराटे न्यवसंस्तु पाण्डवाः
कृष्णा तथाऽन्तःपुरमेत्य शोभना ।
अज्ञातचर्यां प्रतिरुद्धमानसा
यथाऽग्नयो भस्मनि गूढतेजसः ॥ ८४

॥ इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

समाप्तं च पाण्डवप्रवेशपर्व ॥ १ ॥

---

# ( अथ समयपालनपर्व ॥ २ ॥ )

## पञ्चदशोऽध्यायः ॥ १५ ॥

पाण्डवैः स्वस्वव्यापारैर्विराटपरितोषणम् ॥ १ ॥ भीमेन शङ्करोत्सवे महामल्लमारणम् ॥ २ ॥

जनमेजय उवाच ।
एवं विराटनगरे वसन्तः सत्यविक्रमाः ।
अत ऊर्ध्वं नरव्याघ्राः किमकुर्वत पाण्डवाः ॥ १
वैशंपायन उवाच ।
एवं ते न्यवसंस्तत्र प्रच्छन्नाः कुरुनन्दनाः ।
आराधयन्तो राजानं यदकुर्वत तच्छृणु ॥ २
युधिष्ठिरः सभास्तारः सभ्यानामभवत्प्रियः ।
तथैव च विराटस्य सपुत्रस्य विशांपते ॥ ३
स ह्यक्षहृदयज्ञस्तान्क्रीडयामास पाण्डवः ।
अक्षवद्धान्यथाकामं सूत्रबद्धानिव द्विजान् ॥ ४
अज्ञातं च विराटस्य विजित्य वसु धर्मराट् ।
भ्रातृभ्यः पुरुषव्याघ्रो यथेष्टं संप्रयच्छति ॥ ५
भीमसेनोपि मांसानि भक्ष्याणि विविधानि च ।
अतिसृष्टानि मत्स्येन विक्रीणन्निव भ्रातृषु ॥ ६
वासांसि परिजीर्णानि लब्धान्यन्तःपुरेऽर्जुनः ।
विक्रीणन्निव सर्वेभ्यः पाण्डवेभ्यः प्रयच्छति ॥ ७
नकुलोपि धनं लब्ध्वा कृते कर्मणि वाजिनाम् ।
तुष्टे तस्मिन्नरपतौ पाण्डवेभ्यः प्रयच्छति ॥ ८
सहदेवोपि गोपानां वेषमास्थाय पाण्डवः ।
दधि क्षीरं घृतं चैव पाण्डवेभ्यः प्रयच्छति ॥ ९
कृष्णा तु सर्वान्भ्रातृंस्तान्निरीक्षन्ती तपस्विनी ।
यथा पुनरविज्ञाता तथा चरति भामिनी ॥ १०
एवं संभावयन्तस्ते तदाऽन्योन्यं महारथाः ।
विराटनगरे चेरुः पुनर्गर्भधृता इव ॥ ११
साशङ्का धार्तराष्ट्रस्य भयात्पाण्डुसुतास्तदा ।
प्रेक्षमाणास्तदा कृष्णामूषुश्छन्ना नराधिप ॥ १२
अथ मासे चतुर्थे तु शङ्करस्य महोत्सवः ।
आसीत्समृद्धो मत्स्येषु पुरुषाणां सुसंमतः ॥ १३
तत्र मल्लाः समापेतुर्दिग्भ्यो राजन्सहस्रशः ॥ १४
महाकाया महावीर्याः कालकेया इवासुराः ।
वीर्योन्मत्ता बलोदग्रा राज्ञा समभिपूजिताः ॥ १५
सिंहस्कन्धकटिग्रीवाः स्ववदाता मनस्विनः ।
असकृल्लब्धलक्षास्ते रङ्गे पार्थिवसन्निधौ ॥ १६
तेषामेको महानासीत्सर्वमल्लानथाह्वयत् ।
व्यावल्गमानो ददृशे गर्जितोद्धतिभिः स्थितः १७
वित्रस्तमनसः सर्वे मल्लास्ते हतचेतसः ।
अवाङ्मुखाश्च भीताश्च मल्लाश्चान्ये विचेतसः ॥ १८
व्यसुत्वमपरे चैव वाञ्छन्ति प्रतिविह्वलाः ।
गां प्रवेष्टुमथेच्छन्ति खं गन्तुमिव चोत्थिताः॥१९
त्रस्ताः शान्ता विषण्णाङ्गा निःशब्दं विह्वलेक्षणाः।
विराटराजमल्लास्ते भग्नदर्पा हतप्रभाः ॥ २०
मल्लेन्द्रनिहताः सर्वे न किंचित्प्रवदन्ति ते ।

मल्ल उद्वीक्ष्य तान्मल्लांस्त्रस्तान्वाक्यमुवाच ह ॥ २१
आगतं मल्लराजं मां कृत्स्ने पृथिविमण्डले ।
सिंहव्याघ्रगणैः सार्धं क्रीडन्तं विद्धि भूपते ॥ २२
मल्लेन्द्रस्य वचः श्रुत्वा बलदर्पसमन्वितम् ।
विराटो वीक्ष्य तान्मल्लांस्त्रस्तान्वाक्यमुवाच ह ॥ २३
अनेन सह मल्लेन को योद्धुं शक्तिमान्नरः ॥ २४
इत्युक्तास्ते विराटेन सर्वे मल्ला विशांपते ।
तूष्णीमासंस्ततो राजा क्रोधाविष्ट उवाच ह ॥ २५
ग्रामांश्च वेतनान्येषां मल्लानां हारयाम्यहम् ।
ततो युधिष्ठिरोऽब्रवीच्छ्रुत्वा मात्स्यपतेर्वचः ॥ २६
अस्ति मल्लो महाराज मया दृष्टो युधिष्ठिरे ।
अनेन सह मल्लेन योद्धुं शक्नोति भूपते ॥ २७
योसौ मल्लो मया दृष्टः पूर्वं यौधिष्ठिरे पुरे ।
सोयं मल्लो वसत्येष राजंस्तव महानसे ॥ २८

वैशंपायन उवाच ।

युधिष्ठिरवचः श्रुत्वा व्यक्तमाहेति पार्थिवः ।
सोप्यथाहूयतां क्षिप्रं योद्धुं मल्लेन संप्रति ॥ २९
भीमसेनो विराटेन आहूतश्चोदितस्तथा ।
योद्धुं ततोऽब्रवीद्वाक्यं योद्धुं शक्नोमि भूपते ३०
नरेन्द्र ते प्रभावेन श्रिया शक्त्या च शासनात् ।
अनेन सह मल्लेन योद्धुं राजेन्द्र शक्नुयाम् ॥ ३१
युधिष्ठिरकृतं ज्ञात्वा श्रिया तव विशांपते ।
महादेवस्य भक्त्या च तं मल्लं पातयाम्यहम् ॥ ३२

वैशंपायन उवाच ।

चोदितो भीमसेनस्तु मल्लमाहूय मण्डले ।
योद्धुं व्यवस्थितो वीरो रेणुं संमृज्य हस्तयोः ।
मत्तो गज इवान्यं तु योद्धुं समुपचक्रमे ॥ ३३
अथ सूदेन तं मल्लं योधयामास मत्स्यराट् ॥ ३४
नोद्यमानस्तदा भीमो दुःखेनेवाकरोन्मतिम् ।
न हि शक्नोम्यशक्तोपि प्रत्याख्यातुं नराधिपं ३५
ततः स पुरुषव्याघ्रः शार्दूलशिथिलं चरन् ।
प्रविवेश महारङ्गं विराटमभिहर्षयन् ॥ ३६
बबन्ध कक्षां कौन्तेयस्ततः संहर्षयञ्जनम् ।
ततस्तु वृत्रसङ्काशं भीमो मल्लं समाह्वयत् ॥ ३७
जीमूतं नाम तं तत्र मल्लप्रख्यातविक्रमम् ।
कक्षे मल्लं गृहीत्वाऽथ ननाद बहु सिंहवत् ॥ ३८
तावुभौ सुमहोत्साहावुभौ भीमपराक्रमौ ।
मत्ताविव महाकायौ वारणौ षष्ठिहायनौ ॥ ३९
ततस्तौ नरशार्दूलौ बाहुयुद्धं समीयतुः ।
वीरौ परमसंहृष्टावन्योन्यजयकाङ्क्षिणौ ॥ ४०
उभौ परमसंहृष्टौ बलेनातिबलावुभौ ।
अन्योन्यस्यान्तरं प्रेप्सू परस्परजयैषिणौ ॥ ४१
कृतप्रतिकृतैश्चित्रैर्बाहुभिश्च सुसङ्कटैः ।
सन्निपातावधूतैश्च प्रमाथोन्मथनैस्तथा ॥ ४२
क्षेपणैर्मुष्टिभिश्चैव वराहोद्धूतनिस्स्वनैः ।
तलैर्वज्रनिपातैश्च प्रसृष्टाभिस्तथैव च ॥ ४३
शलाकानखपातैश्च पादोद्धूतैश्च दारुणैः ।
जानुभिश्चाश्मनिर्घोषैः शिरोभिश्चावघट्टनैः ॥ ४४
तद्युद्धमभवद्धोरमशस्त्रं बाहुतेजसा ।
बलप्राणेन शूराणां समाजोत्सवसन्निधौ ॥ ४५
अरज्यत जनः सर्वः सोत्कृष्टनिनदोत्थितः ।
बलिनोः संयुगे राजन्वृत्रवासवयोरिव ॥ ४६
प्रकर्षणाकर्षणयोरभ्याकर्षविकर्षणैः ।
आकर्षतुरथान्योन्यं जानुभिश्चापि जघ्नतुः ॥ ४७
ततः शब्देन महता भर्त्सयन्तौ परस्परम् ।
व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ ।
बाहुभिः समसज्जेतामायसैः परिघैरिव ॥ ४८
उत्पपाताथ वेगेन मल्लं कक्षे गृहीतवान् ।
पार्श्वे निगृह्य हस्तेन पातयामास मल्लकम् ॥ ४९
चकर्ष दोर्भ्यामुत्पात्य भीमो मल्लममित्रहा ।
निनदं तमभिक्रोशञ्शार्दूल इव वारणम् ॥ ५०
समुद्यम्य महाबाहुर्भ्रामयामास वीर्यवान् ।
ततो मल्लाश्च मत्स्याश्च विस्मयं चक्रिरे परम् ॥ ५१
भ्रामयित्वा शतगुणं गतसत्वमचेतनम् ।
प्रत्यपिंषन्महाबाहुर्मल्लं भुवि वृकोदरः ॥ ५२
तस्मिन्विनिहते वीरे जीमूते लोकविश्रुते ।

पञ्चदशोऽध्यायः ॥ १५ ॥

कृतप्रतिकृतादयो मल्लयुद्धविशेषाः ॥ ४२ ॥

विराटः परमं हर्षमगच्छद्बान्धवैः सह ॥ ५३
प्रहर्षात्प्रददौ वित्तं बहु राजा महामनाः ।
बल्लाय महारङ्गे यथा वैश्रवणस्तथा ॥ ५४
एवं स सुबहून्मल्लान्पुरुषांश्च महाबलान् ।
विनिघ्नन्मत्स्यराजस्य प्रीतिमाहरदुत्तमाम् ॥ ५५
यदाऽस्य तुल्यः पुरुषो न कश्चित्तत्र विद्यते ।
ततो व्याघ्रैश्च सिंहैश्च द्विरदैश्चाप्ययोधयत् ॥ ५६
विराटेन प्रदत्तानि चित्राणि विविधानि च ।
स्थितेभ्यः पुरुषेभ्यश्च दत्त्वा द्रव्याणि जग्मिवान् ॥
पुनरन्तःपुरगतः स्त्रीणां मध्ये वृकोदरः ।
योध्यते स विराटस्य गजैः सिंहैर्महाबलैः ॥ ५८
बीभत्सुरपि गीतेन नृत्तेनापि च पाण्डवः ।
विराटं तोषयामास सर्वाश्चान्तःपुरस्त्रियः ॥ ५९
अश्वैर्विनीतैर्जवनैस्तत्रतत्र समागतैः ।
तोषयामास राजानं नकुलो नृपसत्तमम् ।
तस्मै प्रदेयं प्रायच्छत्प्रीतो राजा धनं बहु ॥ ६०
विनीतान्वृषभान्दृष्ट्वा सहदेवस्य चाभितः ।
धनं ददौ बहुविधं विराटः पुरुषर्षभः ॥ ६१
द्रौपदी प्रेक्ष्य तान्सर्वान्क्लिश्यमानान्महारथान् ।
नातिप्रीतमना राजन्निश्वासपरमाऽभवत् ॥ ६२
एवं ते न्यवसंस्तत्र प्रच्छन्नाः पुरुषर्षभाः ।
कर्माणि तस्य कुर्वाणा विराटनृपतेस्तदा ॥ ६३

॥ इति श्रीमन्महाभारते विराटपर्वणि समयपालनपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

समाप्तं चेदं समयपालनपर्व ॥ २ ॥

---

# (अथ कीचकवधपर्व ॥ ३ ॥)

## षोडशोऽध्यायः ॥ १६ ॥

द्रौपद्या स्वात्मानं कामयमानस्य कीचकस्य परुषभाषणैः प्रत्याख्यानम् ॥ १ ॥

वैशंपायन उवाच ।
वसमानेषु पार्थेषु मत्स्यस्य नगरे तदा ।
महारथेषु च्छन्नेषु मासा दश समाययुः ॥ १
याज्ञसेनी सुदेष्णां तु शुश्रूषन्ती विशांपते ।
आवसत्परिचारार्हा सुदुःखं जनमेजय ॥ २
तथा चरन्ती पाञ्चाली सुदेष्णाया निवेशने ।
तां देवीं तोषयामास तथा चान्तःपुरस्त्रियः ॥ ३
तस्मिन्वर्षे गतप्राये कीचकस्तु महाबलः ।
सेनापतिर्विराटस्य ददर्श द्रुपदात्मजाम् ॥ ४
तां दृष्ट्वा देवगर्भाभां चरन्तीं देवतामिव ।
कीचकः कामयामास कामबाणप्रपीडितः ॥ ५
स तु कामाग्निसंतप्तः सुदेष्णामभिगम्य वै ।
प्रहसन्निव सेनानीरिदं वचनमब्रवीत् ॥ ६
नेयं मया जातु पुरेह दृष्टा
राज्ञी विराटस्य निवेशने शुभा ।
रूपेण चोन्मादयतीव मां भृशं
गन्धेन जाता मदिरेव भामिनी ॥ ७
का देवरूपा हृदयंगमा शुभे
ह्याचक्ष्व मे कस्य कुतोऽत्र शोभने ।
चित्तं हि निर्मथ्य करोति मां वशे
न चान्यदत्रौषधमस्ति मे मतम् ॥ ८
अहो तवेयं परिचारिका शुभा
प्रत्यग्ररूपा प्रतिभाति मामियम् ।
अयुक्तरूपं हि करोति कर्म ते
प्रशास्तु मां यच्च ममास्ति किंचन ॥ ९
प्रभूतनागाश्वरथं महाजनं
समृद्धियुक्तं बहुपानभोजनम् ।
मनोहरं काञ्चनचित्रभूषणं
गृहं महच्छोभयतामियं मम ॥ १०
ततः सुदेष्णामनुमन्त्र्य कीचक-
स्ततः समभ्येत्य नराधिपात्मजाम् ।

उवाच कृष्णामभिसान्त्वयंस्तदा
मृगेन्द्रकन्यामिव जम्बुको वने ॥ ११
का त्वं कस्यासि कल्याणि कुतो वा त्वं वरानने ।
प्राप्ता विराटनगरं तत्त्वमाचक्ष्व शोभने ॥ १२
रूपमग्र्यं तथा कान्तिः सौकुमार्यमनुत्तमम् ।
कान्त्या विभाति वक्त्रं ते शशाङ्क इव निर्मलं १३
नेत्रे सुविपुले सुभ्रु पद्मपत्रनिभे शुभे ।
वाक्यं ते चारुसर्वाङ्गि परपुष्टरुतोपमम् ॥ १४
एवंरूपा मया नारी काचिदन्या महीतले ।
न दृष्टपूर्वा सुश्रोणि यादृशी त्वमनिन्दिते ॥ १५
लक्ष्मीः पद्मालया का त्वमथ भूतिः सुमध्यमे ।
ह्रीः श्रीः कीर्तिरथो कान्तिरासां का त्वं वरानने ॥
अतीव रूपिणी किं त्वमनङ्गाङ्गविहारिणी ।
अतीव भ्राजसे सुभ्रु प्रभेवेन्दोरनुत्तमा ॥ १७
अपि चेक्षणपक्ष्माणां स्मितज्योत्स्नोपमं शुभम् ।
दिव्यांशुरश्मिभिर्वृत्तं दिव्यकान्तिमनोरमम् ॥१८
निरीक्ष्य वक्त्रचन्द्रं ते लक्ष्म्याऽनुपमया युतम् ।
कृत्स्ने जगति को नेह कामस्य वशगो भवेत् ॥१९
हारालंकारयोग्यौ तु स्तनौ चोभौ सुशोभनौ ।
सुजातौ सहितौ लक्ष्म्या पीनौ वृत्तौ निरन्तरौ २०
कुड्मलाम्बुरुहाकारौ तव सुभ्रु पयोधरौ ।
कामप्रतोदाविव मां तुदतश्चारुहासिनि ॥ २१
वलीविभङ्गचतुरं स्तनभारविनामितम् ।
कराग्रसंमितं मध्यं तवेदं तनुमध्यमे ॥ २२
दृष्ट्वैव चारुजघनं सरित्पुलिनसंनिभम् ।
कामव्याधिरसाध्यो मामप्याक्रामति भामिनि २३
जज्वाल चाग्निमदनो दावाग्निरिव निर्दयः ।
त्वत्सङ्गमाभिसंकल्पविवृद्धो मां दहत्ययम् ॥ २४
आत्मप्रदानवर्षेण संगमाम्भोधरेण च ।
शमयस्व वरारोहे ज्वलन्तं मन्मथानलम् ॥ २५
मच्चित्तोन्मादनकरा मन्मथस्य शरोत्कराः ।
त्वत्सङ्गमाशानिशितास्तीव्राः शशिनिभानने ।
मह्यं विदार्य हृदयमिदं निर्दयवेगिताः ॥ २६
प्रविष्टा ह्यसितापाङ्गि प्रचण्डाश्चण्डदारुणाः ।
अत्युन्मादसमारम्भाः प्रीत्युन्मादकरा मम ।
आत्मप्रदानसंभोगैर्मामुद्धर्तुमिहार्हसि ॥ २७
चित्रमाल्याम्बरधरा सर्वाभरणभूषिता ।
कामं प्रकामं सेव त्वं मया सह विलासिनि ॥ २८
नार्हसीहासुखं वस्तुं सुखार्हा सुखवर्जिता ।
प्राप्नुह्यनुत्तमं सौख्यं मत्तस्त्वं मत्तगामिनि ॥ २९
स्वादून्यमृतकल्पानि पेयानि विविधानि च ।
पिबमाना मनोज्ञानि रममाणा यथासुखम् ॥ ३०
भोगोपचारान्विविधान्सौभाग्यं चाप्यनुत्तमम् ।
पानं पिब महाभागे भोगैश्चानुत्तमैः शुभैः ॥ ३१
इदं हि रूपं प्रथमं तवानघे
निरर्थकं केवलमद्य भामिनि ।
अधार्यमाणा स्रगिवोत्तमा शुभा
न शोभसे सुन्दरि शोभना सती ॥ ३२
त्यजामि दारान्मम ये पुरातना
भवन्तु दास्यस्तव चारुहासिनि ।
अहं च ते सुन्दरि दासवत्स्थितः
सदा भविष्ये वशगो वरानने ॥ ३३

॥ इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि षोडशोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः ॥ १७ ॥

द्रौपद्या स्वात्मानं कामयमानस्य कीचकस्य परुषभाषणैः प्रत्याख्यानम् ॥ १ ॥

वैशंपायन उवाच ।

एवमुक्ताऽनवद्याङ्गी कीचकेन दुरात्मना ।

भूतिः ईश्वरी ऐश्वर्याभिमानिनी देवता ॥ १६ ॥ अनङ्गाङ्गविहारिणी रतिरित्यर्थः ॥ १७ ॥ ईक्षणपक्ष्माणां नेत्रपक्ष्मणां स्मितं ईषदुन्मीलनं तदेव ज्योत्स्नोपमं मनस आह्लादकरम् ॥१८॥ सुजातौ उन्नतौ । निरन्तरौ पृथुलात्संश्लिष्टौ ॥ २० ॥ कुड्मलेति मुकुलीभूतपद्माकारौ ॥ २१ ॥ अग्निमदनो मदनाग्निः ॥ २४ ॥ कामं स्मरम् । प्रकाममतिशयितम् ॥२८॥ षोडशोऽध्यायः॥१६॥

द्रौपदी तमुवाचेदं सैरन्ध्रीवेषधारिणी ॥ १
अप्रार्थनीयामिह मां सूतपुत्राभिमन्यसे ।
निहीनवर्णां सैरन्ध्रीं बीभत्सां केशकारिणीम् ॥२
परदाराऽसि भद्रं ते न युक्तं तव सांप्रतम् ।
दयिताः प्राणिनां दारा धर्मं समनुचिन्तय ॥ ३
परदारे न ते बुद्धिर्जातु कार्या कथंचन ।
विवर्जनं ह्यकार्याणामेतत्सुपुरुषव्रतम् ॥ ४
मिथ्याभिगृध्नो हि नरः पापात्मा मोहमास्थितः ।
अयशः प्राप्नुयाद्घोरं महद्वा प्राप्नुयाद्भयम् ॥ ५
वैशंपायन उवाच ।
एवमुक्तस्तु सैरन्ध्र्या कीचकः काममोहितः ।
जानन्नपि सुदुर्बुद्धिः परदाराभिमर्शने ॥ ६
दोषान्बहून्प्राणहरान्सर्वलोकविगर्हितान् ।
प्रोवाचेदं सुदुर्बुद्धिर्द्रौपदीमजितेन्द्रियः ॥ ७
नार्हस्येवं वरारोहे प्रत्याख्यातुं वरानने ।
मां मन्मथसमाविष्टं त्वत्कृते चारुहासिनि ॥ ८
प्रत्याख्याय च मां भीरु वशगं प्रियवादिनम् ।
नूनं त्वमसितापाङ्गि पश्चात्तापं करिष्यसि ॥ ९
अहं हि सुभ्रु राज्यस्य कृत्स्नस्यास्य सुमध्यमे ।
प्रभुर्वासयिता चैव वीर्ये चाप्रतिमः क्षितौ ॥ १०
पृथिव्यां मत्समो नास्ति कश्चिदन्यः पुमानिह ।
रूपयौवनसौभाग्यैर्भोगैश्चानुत्तमैः शुभैः ॥ ११
सर्वकामसमृद्धेषु भोगेष्वनुपमेष्विह ।
भोक्तव्येषु च कल्याणि कस्माद्दास्ये रता ह्यसि ॥
मया दत्तमिदं राज्यं स्वामिन्यसि शुभानने ।
भजस्व मां वरारोहे भुङ्क्ष्व भोगाननुत्तमान् ॥ १३
एवमुक्ता तु सा साध्वी कीचकेनाशुभं वचः ।
कीचकं प्रत्युवाचेदं गर्हयन्त्यस्य तद्वचः ॥ १४
सैरन्ध्र्युवाच ।
मा सूतपुत्र मुह्यस्व माऽद्य त्यक्ष्यस्व जीवितम् ।
जानीहि पञ्चभिर्घोरैर्नित्यं मामभिरक्षिताम् ॥ १५
न चाप्यहं त्वया लभ्या गन्धर्वाः पतयो मम ।
ते त्वां निहन्युः कुपिताः साध्वलं मा व्यनीनशः ॥
अशक्यरूपं पुरुषैरध्वानं गन्तुमिच्छसि ॥ १७
यथा निश्चेतनो बालः कूलस्थः कूलमुत्तरम् ।
तर्तुमिच्छति मन्दात्मा तथा त्वं कर्तुमिच्छसि ॥ १८
अन्तर्महीं वा यदि वोर्ध्वमुत्पतेः
समुद्रपारं यदि वा प्रधावसि ।
तथापि तेषां न विमोक्षमर्हसि
प्रमाथिनो देवसुता हि खेचराः ॥ १९
त्वं कालरात्रीमिव कश्चिदातुरः
किं मां दृढं प्रार्थयसेऽद्य कीचक ।
किं मातुरङ्के शयितो यथा शिशु-
श्चन्द्रं जिघृक्षुरिव मन्यसे हि माम् ॥ २०
तेषां प्रियां प्रार्थयतो न ते भुवि
गत्वा दिवं वा शरणं भविष्यति ।
न वर्तते कीचक ते दृशा शुभं
या तेन संजीवनमर्थयेत सा ॥ २१

॥ इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

## अष्टादशोऽध्यायः ॥ १८ ॥

कीचकेन सुदेष्णांप्रति द्रौपद्याः स्ववशीकरणप्रार्थना ॥ १ ॥ सुदेष्णया कीचके सुराहरणव्याजेन तद्गृहंप्रति द्रौपदीप्रेषणप्रतिज्ञानम् ॥ २ ॥ तथा बलात्कारेण द्रौपद्याः सुरानयनाय कीचकगृहंप्रति गमनचोदना ॥ ३ ॥

वैशंपायन उवाच ।
प्रत्याख्यातश्च पाञ्चाल्या कीचकः काममोहितः ।
प्रविश्य राजभवनं भगिन्या अग्रतः स्थितः ॥ १
सोभिवीक्ष्य सुकेशान्तां सुदेष्णां भगिनीं प्रियाम् ।

अभिमन्यसे कामयसे ॥२॥ मिथ्याभिगृध्नः वितथाभिनिवेशी। महद्भयं मृत्युम् ॥५॥ मन्यसे लिप्ससे शिशोश्चन्द्रवदहं तव दुर्लभास्मीति भावः ॥२०॥ या शुभं स्त्रीयं अर्थयेत कामयेत शुभेच्छारूपा तव नास्तीत्यर्थः । तेन च शुभेन परदारनिवृत्तिरूपेण कामितेन संजीवनं भवतीति शेषः । अन्यथा मरिष्यसीत्यर्थः ॥ २१ ॥ सप्तदशोऽध्यायः ॥ १७ ॥

अमर्यादेन कामेन घोरेणाभिपरिप्लुतः ॥ २
स तु मूर्ध्न्यञ्जलिं कृत्वा भगिन्याश्चरणावुभौ ।
संमोहाभिहतस्तूर्णं वातोद्धूत इवार्णवः ॥ ३
स प्रोवाच सुदुःखार्तो भगिनीं निश्वसन्मुहुः ।
अव्यक्तमृदुना साम्ना शुष्यता च पुनःपुनः ॥ ४
यथा सुदेष्णे सैरन्ध्र्या संगच्छेयं सकामया ।
तथा शीघ्रं कुरुष्वाद्य माऽहं प्राणान्प्रहासिषम् ॥ ५
यदीयमनवद्याङ्गी न मामद्यापि काङ्क्षते ।
चेतसाऽभिप्रसन्नेन गतोस्मि यमसादनम् ॥ ६
वैशंपायन उवाच ।
तमुवाच परिष्वज्य सुदेष्णा भ्रातरं प्रियम् ।
भ्रातुर्जीवितरक्षार्थं समाश्वास्यासितेक्षणा ॥ ७
शरणागतेयं सुश्रोणी मया दत्ताभया च सा ।
शुभाचारा च भद्रं ते नैनां वक्तुमिहोत्सहे ॥ ८
एषा हि शक्या नान्येन स्प्रष्टुं पापेन चेतसा ।
गन्धर्वाः किल पञ्चेमां रक्षन्ति रमयन्ति च ॥ ९
एवमेषा ममाचष्टे तथा प्रथमसंगमे ।
तथैव गजनासोरूः सत्यमाह ममान्तिके ।
ते हि क्रुद्धा महात्मानो नाशयेयुर्हि जीवितम् १०
राजा चैव समीक्ष्यैनां संमोहं गतवानिह ।
मया च सत्यवचनैरनुनीतो महीपतिः ॥ ११
सोप्येनामनिशं दृष्ट्वा मनसैवाभ्यनन्दत ।
भयाद्गन्धर्वमुख्यानां जीवितस्योपघातिनाम् ।
मनसाऽपि ततस्त्वेनां न चिन्तयति पार्थिवः ॥ १२
ते हि क्रुद्धा महात्मानो गरुडानिलतेजसः ।
दहेयुरपि लोकांस्त्रीन्युगान्तेष्विव भास्करः ॥ १३
सैरन्ध्र्या ह्येतदाख्यातं मम तेषां महद्बलम् ।
तव चाहमिदं गुह्यं स्नेहाद्वक्ष्यामि बन्धुवत् ॥ १४
मा गमिष्यसि वै कृच्छ्रां गतिं परमदुर्गमाम् ।
बलिनस्ते रुजं कुर्युः कुलस्य च धनस्य च ॥ १५
तस्मान्नास्यां मनः कर्तुं यदि प्राणा प्रियास्तव ।
न चिन्तयेथा मागास्त्वं मत्प्रियं च यदीच्छसि १६
वैशंपायन उवाच ।
एवमुक्तस्तु दुष्टात्मा भगिनीं कीचकोऽब्रवीत् ।

गन्धर्वाणां शतं वाऽपि सहस्रमयुतानि वा ।
अहमेको वधिष्यामि गन्धर्वान्पञ्च किं पुनः ॥ १७
न च त्वमभिजानीषे स्त्रीणां गुह्यमनुत्तमम् ।
पुत्रं वा किल पौत्रं वा भ्रातरं वा मनस्विनम् ॥ १८
रहसीह नरं दृष्ट्वा नानागन्धविभूषितम् ।
योनिरुत्क्लिद्यते स्त्रीणां सतीनामपि च श्रुतम् १९
मां निरीक्ष्यानुलिप्ताङ्गं सर्वाभरणभूषितम् ।
वशमेष्यति सैरन्ध्री मन्मथेनाभिपीडिता ।
सा त्वं दृष्ट्वा ब्रूहि चैनां मम चेज्जीवितं प्रियं २०
वैशंपायन उवाच ।
एवमुक्ता सुदेष्णा तु शोकेनाभिप्रपीडिता ।
अहो दुःखमहो कृच्छ्रमहो पापमिति स्म ह ॥ २१
प्रारुदच्चशदुःखार्ता विपाकं तस्य वीक्ष्य सा ।
पातालेषु पतत्येष विलपन्वडवामुखे ॥ २२
त्वत्कृते विनशिष्यन्ति भ्रातरः सुहृदश्च मे ।
किंनु शक्यं मया कर्तुं यत्त्वमेवमभिप्लुतः ॥ २३
न च श्रेयोऽभिजानीषे काममेवानुवर्तसे ।
ध्रुवं गतायुस्त्वं पाप यदेवं काममोहितः ।
अकर्तव्ये हि मां पापे नियुनङ्क्षि नराधम ॥ २४
अपि चैतत्पुरा प्रोक्तं निपुणैर्मनुजोत्तमैः ।
एकस्तु कुरुते पापं स्वजातिस्तेन हन्यते ॥ २५
गतस्त्वं धर्मराजस्य विषयं नात्र संशयः ।
अदूषितमिदं सर्वं स्वजनं घातयिष्यसि ॥ २६
एतत्तु मे दुःखतरं येनाहं भ्रातृसौहृदात् ।
विदितार्था करिष्यामि तुष्टो भव कुलक्षये ॥ २७
गच्छ शीघ्रमितस्त्वं हि स्वमेव भवनं शुभम् ।
किंचित्कार्यं समुद्दिश्य सुरामन्नं च कारय ॥ २८
कृते चान्ने सुरायां च प्रेषयिष्यसि मे पुनः ।
तामहं प्रेषयिष्यामि मध्वन्नार्थं तवान्तिकम् ॥ २९
ततः संप्रेषितामेनां विजने निरवग्रहाम् ।
सान्त्वयेथा यथान्यायं यदि साम सहिष्यति ॥ ३०
सद्यः कृतमिदं सर्वं शेषमत्रानुचिन्तय ॥ ३१
वैशंपायन उवाच ।
सुदेष्णयैवमुक्तस्तु कीचकः कालचोदितः ।

त्वरमाणः प्रचक्राम स्वगृहं राजवेश्मनः ॥ ३२
आगम्य च गृहं रम्यं सुरामन्नं चकार ह ।
अजैडकं च सुकृतं बहु चोच्चावचान्मृगान् ॥ ३३
भक्षांश्च विविधाकारान्बहूंश्चोच्चावचांस्तदा ।
कारयामास कुशलैरन्नपानैः सुसंस्कृतम् ॥ ३४
त्वरावान्कालपाशेन कण्ठे बद्धः पशुर्यथा ।
नावबुध्यत मूढात्मा मरणं समुपस्थितम् ॥ ३५
आनीतायां सुरायां तु कृते चान्ने सुसंस्कृते ।
कीचकः पुनरागम्य सुदेष्णां वाक्यमब्रवीत् ॥ ३६
मधु मांसं च बहुधा भक्ष्याश्च बहुधा कृताः ।
सुदेष्णे ब्रूहि सैरन्ध्रीं यथा सा मे गृहं व्रजेत् ॥३७
केनचित्त्वद्य कार्येण त्वर शीघ्रं मम प्रियम् ।
अहं हि शरणं देवं प्रतिपद्ये वृषध्वजम् ।
समागमं मे सैरन्ध्र्या मरणं वा दिशेति वै ॥ ३८
वैशंपायन उवाच ।
सा तमाह विनिःश्वस्य प्रतिगच्छ स्वकं गृहम् ।
एषाऽहमपि सैरन्ध्रीं सुरार्थे तूर्णमादिशे ॥ ३९
एवमुक्तस्तु पापात्मा कीचकस्त्वरितः पुनः ।
स्वगृहं प्राविशत्तूर्णं सैरन्ध्रीगतमानसः ॥ ४०
कीचकं तु गतं ज्ञात्वा त्वरमाणं स्वकं गृहम् ।
सैरन्ध्रीं तत आहूय सुदेष्णा वाक्यमब्रवीत् ॥४१
गच्छ सैरन्ध्रि मत्प्रीत्यै कीचकस्य निवेशनम् ।
सुरामानय सुश्रोणि तृषिताऽहं विलासिनि ॥ ४२
वैशंपायन उवाच ।
सुदेष्णयैवमुक्ता सा निःश्वसन्ती नृपात्मजा ।
अब्रवीच्छोकसन्तप्ता नाहं तत्र व्रजामि वै ॥ ४३
सूतपुत्रो हि मां भद्रे कामात्मा चाभिमन्यते ।
न गच्छेयमहं तस्य राजपुत्रि निवेशनम् ।
त्वमेव भद्रे जानासि यथा स निरपत्रपः ॥ ४४
समयश्च कृतो भद्रे यथा प्रथमसंगमे ।
तथा निवसमानायां यथाऽहं नान्यचारिणी ॥४५
कीचकश्च सुकेशान्ते मूढो मदनगर्वितः ।
स मामिह गतां दृष्ट्वा व्यवस्यति निराकृतिम् ।
कथं नु वै तत्र गतां मर्षयेन्मामबान्धवाम् ॥४६
बह्वयः सन्ति तव प्रेष्या राजपुत्रि वशानुगाः ।
अन्यां प्रेषय कैकेयि संरक्ष्याऽहमिह त्वया ॥ ४७
कीचकस्यालयं देवि न यामि भयकम्पिता ।
यद्यदन्यच्च मे कर्म करोमि च सुदुष्करम् ॥ ४८
एवमुक्ता तु पाञ्चाल्या दैवयोगेन कैकयी ।
तां विराटस्य महिषी क्रुद्धा भूयोऽन्वशासत ॥४९
कीचकं चैव गच्छ त्वं बलात्कारेण चोदिता ।
नास्ति मेऽन्या त्वया तुल्या सा त्वं शीघ्रतरं व्रज ॥
अवश्यं त्वेव गन्तव्यं किमर्थं मां विवक्षसि ।
शीघ्रं गच्छ त्वरस्वेति मत्प्रीतिवशमाचर ॥ ५१
न हीदृशो मम भ्राता किं त्वं समभिशङ्कसे ।
उक्त्वा चैनां बलाच्चैव विनियुज्य प्रभुत्वतः ॥५२
भाजनं प्रददौ चास्यै सपिधानं हिरण्मयम् ।
या सुजाता सुगन्धा च तामानय सुरामिति ५३
सा शङ्कमाना रुदती वेपन्ती द्रुपदात्मजा ।
दैवतेभ्यो नमस्कृत्वा श्वशुरेभ्यस्तथाऽब्रवीत् ॥५४
यथाऽहमन्यं पार्थेभ्यो नाभिजानामि मानवम् ।
तेन सत्येन मां दृष्ट्वा कीचको मा वशं नयेत् ॥ ५५
यथाऽहं पाण्डुपुत्रेभ्यः पञ्चभ्यो नान्यगामिनी ।
तेन सत्येन मां दृष्ट्वा कीचको मा वशं नयेत्५६

॥ इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

## एकोनविंशोऽध्यायः ॥ १९ ॥

कीचकगृहंप्रति प्रस्थितया द्रौपद्या तेन स्वस्यादूषणाय सूर्यादिदेवताप्रार्थना ॥ १ ॥ सूर्येण तद्रक्षणाय निगूढस्य रक्षसः प्रेषणम् ॥ २ ॥ कीचकेन द्रौपदींप्रति स्ववशीभवनयाचनम् ॥ ३ ॥ तथा तदनङ्गीकाररोषात्तस्याः पादेन ताडनम् ॥ ४ ॥ सूर्यदूतेन रक्षसा कीचकस्य भूमौ निपातनम् ॥ ५ ॥ युधिष्ठिरेण कीचकजिघांसोर्भीमस्य संकेतेन प्रतिषेधनम् ॥ ६ ॥

वैशंपायन उवाच ।
अकीर्तयत सुश्रोणी धर्मं शक्रं दिवाकरम् ।
मारुतं चाश्विनौ देवौ कुबेरं वरुणं यमम् ॥ १
रुद्रमग्निं भगं विष्णुं स्कन्दं पूषणमेव च ।

सावित्रीसहितं चापि ब्रह्माणं पर्यकीर्तयत् ॥ २
इत्येवं मृगशावाक्षी सुश्रोणी धर्मचारिणी ।
उपातिष्ठत सा सूर्यं मुहूर्तमबला तदा ॥ ३
तदस्यास्तनुमध्यायाः सर्वं सूर्योऽवबुद्धवान् ।
अन्तर्हितं ततस्तस्या रक्षो रक्षार्थमादिशत् ॥ ४
तच्चैनां नाजहात्तत्र सर्वावस्थास्वनिन्दिताम् ॥ ५
प्रतस्थे सा सुकेशान्ता त्वरमाणा पुनःपुनः ।
विलम्बमाना विवशा कीचकस्य निवेशनम् ॥ ६
तां मृगीमिव वित्रस्तां दृष्ट्वा कृष्णां समागताम् ।
उत्पपातासनात्तूर्णं नावं लब्ध्वेव पारगः ॥ ७
श्लक्ष्णं चोवाच वाक्यं स कीचकः काममूर्च्छितः ।
स्वागतं ते सुकेशान्ते सुव्युष्टा रजनी मम ॥ ८
स्वामिनी त्वमनुप्राप्ता चिरस्य भवनं शुभे ।
कुरुष्व च मयि प्रीतिं वशं चोपानयस्व माम् ॥ ९
प्रतिगृह्णीष्व मे भोगांस्त्वदर्थमुपकल्पितान् ।
सर्वरत्नमयीं मालां कुण्डले च हिरण्मये ॥ १०
वासांसि चन्दनं माल्यं धूपशुद्धां च वारुणीम् ।
प्रतिगृह्णीष्व भद्रं ते विहर त्वं यथेच्छसि ।
प्रीत्या मे कुरु पद्माक्षि प्रसादं प्रियदर्शने ॥ ११
स्वास्तीर्णमस्ति शयनं सितसूक्ष्मोत्तरच्छदम् ।
अत्रारुह्य मया सार्धं पिबेमां वरवारुणीम् ॥ १२
भजस्व मां विशालाक्षि भर्ता ते सदृशोऽस्म्यहम् ।
उपसर्प वरारोहे मेरुमर्कप्रभा यथा ॥ १३
वैशंपायन उवाच ।
स मूढः कीचकस्तत्र प्राप्तां राजीवलोचनाम् ।
अब्रवीद्द्रौपदीं दृष्ट्वा दुरात्मा ह्यात्मसंमतः ॥ १४
कीचकेनैवमुक्ता सा द्रौपदी वरवर्णिनी ।
अब्रवीत्तमनाचारं नेदृशं वक्तुमर्हसि ॥ १५
नाहं शक्या त्वया स्प्रष्टुं श्वपचेनेव ब्राह्मणी ।
गन्तुमिच्छसि दुर्बुद्धे गतिं दुर्गतरान्तराम् ॥ १६
यत्र गच्छन्ति बहवः परदाराभिमर्शकाः ।
नराः संभिन्नमर्यादाः कीटवच्चाशुभाश्रयाः ॥ १७
अप्रैषीन्मां सुराहारीं सुदेष्णा त्वन्निवेशनम् ।

कीटवच्च गुहाश्रया इति क. थ. पाठः ॥ १७ ॥

तस्यै नयिष्ये मदिरां भगिनी तृषिता तव ॥ १८
पिपासिता च कैकेयी तूर्णं मामादिशत्ततः ।
दीयतां मे सुरा शीघ्रं सूतपुत्र व्रजाम्यहम् ॥ १९
कीचक उवाच ।
अन्या भद्रे हरिष्यन्ति राजपुत्र्याः सुरामिमाम् ।
किं त्वं यास्यसि कल्याणि मदर्थं त्वमिहागता २०
वैशंपायन उवाच ।
इत्युक्त्वा दक्षिणे पाणौ सूतपुत्रः परामृशत् ।
सा गृहीता विधून्वन्ती भूमौ निक्षिप्य भाजनम् ।
सभां शरणमाधावद्यत्र राजा युधिष्ठिरः ॥ २१
तां कीचकः प्रधावन्तीं केशपक्षे परामृशत् ।
पातयित्वा तु तां भूमौ सूतपुत्रः पदाऽवधीत् २२
सभायां पश्यतो राज्ञो विराटस्य महात्मनः ।
ब्राह्मणानां च वृद्धानां क्षत्रियाणां च पश्यतां २३
तस्याः पादाभितप्ताया मुखाद्रुधिरमास्रवत् ॥ २४
ततो दिवाकरेणाशु राक्षसः संनियोजितः ।
स कीचकमपोवाह वातवेगेन भारत ॥ २५
स पपात तदा भूमौ रक्षोबलसमीरितः ।
विघूर्णमानो निश्चेष्टश्छिन्नमूल इव द्रुमः ॥ २६
तां दृष्ट्वा तत्र ते सभ्या हाहाभूताः समन्ततः ।
न युक्तं सूतपुत्रेति कीचकेति च तेऽवदन् ।
किमियं वध्यते बाला कृपणा चाप्यबान्धवा २७
तस्यामासन्हि ते पार्थाः सभायां भ्रातरस्तथा ।
अमृष्यमाणाः कृष्णायाः कीचकेन पदा वधं २८
तां दृष्ट्वा भीमसेनस्य क्रोधादास्रमवर्तत ।
धूमोच्छ्वासः समभवन्नेत्रे चोच्छ्रितपक्ष्मणी ।
सस्वेदा भ्रुकुटी चोग्रा ललाटे समवर्तत ॥ २९
तस्य भीमो वधप्रेप्सुः कीचकस्य दुरात्मनः ।
दन्तैर्दन्तांस्तदा रोषान्निष्पिपेष महामनाः ॥ ३०
भूयः संचरितः क्रुद्धः सहसोत्थाय चासनात् ।
निरैक्षत द्रुमं दीर्घं राजानं चाप्यवैक्षत ॥ ३१
वधमाकाङ्क्षमाणं तं कीचकस्य दुरात्मनः ।
आकारेणैव भीमं स प्रत्यषेधद्युधिष्ठिरः ॥ ३२

एकोनविंशोऽध्यायः ॥ १९ ॥

तस्य राजा शनैः संज्ञां कुन्तीपुत्रो युधिष्ठिरः ।
चकार भीमसेनस्य रोषाविष्टस्य धीमतः ॥ ३३
प्रत्याख्यानं तदा चाह कङ्को नाम युधिष्ठिरः ३४
सूद मा साहसं कार्षीः फलितोऽयं वनस्पतिः ।
नात्र शुष्काणि काष्ठानि सन्ति यानि च कानि च॥
यदि ते दारुकृत्यं स्यान्निष्क्रम्य नगराद्बहिः ।
समूलं शातयेर्वृक्षं श्रमस्ते न भविष्यति ॥ ३६
यस्य चार्द्रस्य वृक्षस्य शीतच्छायां समाश्रयेत् ।
न तस्य पर्णं द्रुह्येत पूर्ववृत्तमनुस्मरन् ॥ ३७
न क्रोधकालसमयः सूद मा चापलं कृथाः ।
अपूर्णोऽयं द्विपक्षोनो नेदं बलवतां बहु ॥ ३८
अथाङ्गुष्ठेनावमृद्नादङ्गुष्ठं तत्र धर्मराट् ।
प्रबोधनभयाद्राज्ञो भीमं तं प्रत्यषेधयत् ॥ ३९
भीमसेनस्तु तद्वाक्यं श्रुत्वा परपुरञ्जयः ।
सहसोत्पतितं क्रोधं न्ययच्छद्धृतिमान्बलात् ।
इङ्गितज्ञः स तु भ्रातुस्तूष्णीमासीद्वृकोदरः ॥४०
भीमस्य च समारम्भं दृष्ट्वा राज्ञोऽस्य चेष्टितम् ।
द्रौपदी चाधिकं क्रोधात्प्रारुदत्सा पुनःपुनः ४१
कीचकेनानुगमनात्कृष्णा ताम्रायतेक्षणा ।
सभाद्वारमुपागम्य रुदन्ती वाक्यमब्रवीत् ॥ ४२
अवेक्षमाणा सुश्रोणी पतींस्तान्दीनचेतसः ।
आकारं परिरक्षन्ती प्रतिज्ञां धर्मसंयुताम् ।
दह्यमानेव रौद्रेण चक्षुषा द्रुपदात्मजा ॥ ४३
प्रजारक्षणशीलानां राज्ञां ह्यमिततेजसाम् ।
कार्योऽनुपालनं नित्यं धर्मे सत्ये च तिष्ठताम् ४४
स्वप्रजायां प्रजायां च विशेषं नाधिगच्छताम् ।
प्रियेष्वपि च वध्येषु समत्वं ये समाश्रिताः ॥४५
विवादेषु प्रवृत्तेषु समं कार्यानुदर्शिना ।
राज्ञा धर्मासनस्थेन जितौ लोकावुभावपि ॥ ४६
राजन्धर्मासनस्थो हि रक्ष मां त्वमनागसम् ॥४७
अहं त्वनपराध्यन्ती कीचकेन दुरात्मना ।
पश्यतस्ते महाराज हता पादेन दासिवत् ॥ ४८
त्वत्समक्षं नृपश्रेष्ठ निष्पिष्टा वसुधातले ।
अनागसं कृपार्हां मां स्त्रियं त्वं परिपालय ॥ ४९
रक्ष मां कीचकाद्भीतां धर्मं रक्ष नरेश्वर ।
मत्स्याधिप प्रजा रक्ष पिता पुत्रानिवौरसान् ५०
यस्त्वधर्मेण कार्याणि मोहात्मा कुरुते नृपः ।
अचिरात्तं दुरात्मानं वशे कुर्वन्ति शत्रवः ॥ ५१
मत्स्यानां कुलजस्त्वं हि तेषां सत्यं परायणम् ।
त्वं किलैवंविधो जातः कुले धर्मपरायणे ॥ ५२
अतस्त्वाहमभिक्रन्दे शरणार्थं नराधिप ।
त्राहि मामद्य राजेन्द्र कीचकात्पापपूरुषात् ॥५३
अनाथामिह मां ज्ञात्वा कीचकः पुरुषाधमः ।
प्रहरत्येव नीचात्मा न तु धर्ममवेक्षते ॥ ५४
अकार्याणामनारम्भात्कार्याणामनुपालनात् ।
प्रजासु ये सुवृत्तास्ते स्वर्गमायान्ति भूमिपाः ५५
कार्याकार्यविशेषज्ञाः कामकारेण पार्थिवाः ।
प्रजासु किल्बिषं कृत्वा नरकं यान्त्यधोमुखाः ५६
नैव यज्ञैर्न वा दानैर्न गुरोरुपसेवनात् ।
प्राप्नुवन्ति तथा धर्मं यथा कार्यानुपालनात् ॥५७
अपि चेदं पुरा ब्रह्मा प्रोवाचेन्द्राय पृच्छते ।
द्वन्द्वं कार्यमकार्यं च लोके चासीत्परं यथा ॥५८
धर्माधर्मौ पुनर्द्वन्द्वं विनियुक्तमथापि वा ।
क्रियाणामक्रियाणां च प्रापणे पुण्यपापयोः ॥५९
प्रजायां सृज्यमानायां पुरा ह्येतदुदाहृतम् ।
एतद्वो मानुषाः सम्यक्कार्यं द्वन्द्वत्रयं भुवि ॥ ६०
अस्मिन्सुनीते दुर्नीते लभते कर्मजं फलम् ।
कल्याणकारी कल्याणं पापकारी च पापकम् ६१
तेन गच्छति संसर्गं स्वर्गाय नरकाय वा ।
सुकृतं दुष्कृतं वाऽपि कृत्वा मोहेन मानवः ।
पश्चात्तापेन तप्येत स्वबुद्ध्या मरणं गतः ॥ ६२
एवमुक्त्वा परं वाक्यं विससर्ज शतक्रतुम् ।
शक्रोप्यापृच्छ्य ब्रह्माणं देवराज्यमपालयत् ॥६३
यथोक्तं देवराजेन ब्रह्मणा परमेष्ठिना ।
तथा त्वमपि राजेन्द्र कार्याकार्ये स्थिरो भव ॥ ६४

॥ इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

## विंशोऽध्यायः ॥ २० ॥

विराटेन कीचकस्य दण्डाप्रयोगाद्दुष्ट्या द्रौपद्या तंप्रत्युपालम्भनम् ॥ १ ॥ युधिष्ठिरेण द्रौपद्याः सान्त्वनम् ॥ २ ॥ द्रौपद्याऽज्ञानादिव स्वशोकहेतुं पृच्छन्तीं सुदेष्णांप्रति गन्धर्वैः कीचकवधस्य भावित्वकथनम् ॥ ३ ॥

वैशंपायन उवाच ।
एवं विलपमानायां पाञ्चाल्यां मत्स्यपुङ्गवः ।
अशक्तः कीचकं तत्र शासितुं बलदर्पितम् ।
विराटराजः सूतं तु सान्त्वेनैव न्यवारयत् ॥ १
कीचकं मत्स्यराजेन कृतागसमनिन्दिता ।
नापराधानुरूपेण दण्डेन प्रतिपादितम् ॥ २
पाञ्चालराजस्य सुता दृष्ट्वा सुरसुतोपमा ।
धर्मज्ञा व्यवहाराणां कीचके कृतकिल्बिषे ।
पुनः प्रोवाच राजानं स्मरन्ती धर्ममुत्तमम् ॥ ३
संप्रेक्ष्य च वरारोहा सर्वांस्तत्र सभासदः ।
राजानुवर्तनपरान्कीचकं च कृतागसम् ।
विराटं चाह पाञ्चाली दुःखेनाविष्टचेतना ॥ ४
न राजन्राजवत्किंचित्समाचरसि कीचके ।
दस्यूनामिव ते धर्मो न सत्सु परिवर्तते ॥ ५
न कीचकः स्वधर्मस्थो न च मत्स्यः कथंचन ।
सभासदोऽप्यधर्मज्ञा य इमं पर्युपासते ॥ ६
न धर्मं कीचको वेत्ति राजभृत्यास्तथैव च ।
न राजा विनयं ब्रूते अमात्याश्च न जानते ॥ ७
नोपालभे त्वां नृपते विराटं नृपसंसदि ।
नाहमेतेन युक्ता वै हन्तुं मात्स्य तवान्तिके ॥ ८
सभासदस्तु पश्यन्तु कीचकं धर्मलङ्घिनम् ।
विराटनृपते पश्य मामनाथामनागसम् ॥ ९
न साम फलते दुष्टे दुष्टे दण्डः प्रयुज्यते ॥ १०
अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
स राजा न भवेल्लोके राजशब्दस्य भाजनम् ॥ ११
दीनान्धकृपणाशक्तपङ्गुकुब्जजडादिकान् ।
अनाथबालवृद्धांश्च पुरुषान्वा स्त्रियोऽपि वा ।
दुष्टचोराभिभूतांश्च पालयेदवनीपतिः ॥ १२
अनाथानां च नाथः स्यादपितॄणां पिता नृपः ।
माता भवेदमातॄणामगुरूणां गुरुर्भवेत् ।
अगतीनां गती राजा नृणां राजा परायणम् ॥ १३
विशेषतः परैर्दुष्टैः परामृष्टां नरोत्तमः ।
स्त्रियं साध्वीमनाथां च पालयेत्स्वसुतामिव ॥ १४
त्वद्गृहावसतिं राजन्नेतावत्कालपर्ययम् ।
अधिकां त्वत्सुतायाश्च पश्य मां कीचकाहतां १५
विराट उवाच ।
परोक्षं नाभिजानामि विग्रहं युवयोरहम् ।
अर्थतत्त्वमविज्ञाय किं स्यादकुशलं मम ॥ १६
द्रौपद्युवाच ।
येषां न वैरी स्वपिति पदा भूमिमुपस्पृशन् ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदाऽवधीत् १७
ये च दद्युर्न याचेयुर्ब्रह्मण्याः सत्यवादिनः ।
येषां दुन्दुभिनिर्घोषो ज्याघोषः श्रूयते भृशम् ।
तेषां मां दयितां भार्यां सूतपुत्रः पदाऽवधीत् ॥ १८
तेजस्विनस्तथा क्षान्ता बलवन्तश्च मानिनः ।
महेष्वासा रणे शूरा गर्विता मानतत्पराः ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदाऽवधीत् १९
सर्वलोकमिमं हन्युर्यदि क्रुद्धा महाबलाः ।
तेषां मां दयितां भार्यां सूतपुत्रः पदाऽवधीत् २०
येषां नास्ति समः कश्चिद्वीर्ये सत्ये बले दमे ।
तेषां मां दयितां भार्यां सूतपुत्रः पदाऽवधीत् ॥ २१
येषां न सदृशः कश्चिद्धनाद्यैर्भुवि मानवः ।
तेषां मां दयितां भार्यां सूतपुत्रः पदाऽवधीत् २२
तवाग्रतो विशेषेण प्रजानां च हितैषिणः ।
पश्यतो निहता राजंस्तेनेह जगतीपते ॥ २३
शरणं ये प्रपन्नानां भवन्ति शरणार्थिनाम् ।
चरन्ति लोके प्रच्छन्नाः क्व नु तेऽद्य महाबलाः २४
कथं ते सूतपुत्रेण वध्यमानां प्रियां सतीम् ।
मर्षयन्ति यथा क्लीबा बलवन्तोऽतितेजसः ॥ २५
क्व नु तेषाममर्षश्च वीर्यं तेषां च तद्बलम् ।
न परीप्सन्ति ये भार्यां वध्यमानां दुरात्मना २६
मयाऽपि शक्यं किं कर्तुं विराटे धर्मदूषणे ।

मां मर्षयति यः पश्यन्वध्यमानामनागसम् ॥ २७
धर्मो विद्धो ह्यधर्मेण सभां यत्रोपतिष्ठति ।
न चेद्विशल्यः क्रियते सर्वे विद्धाः सभासदः ॥२८
यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च ।
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ॥ २९
वैशंपायन उवाच ।
तस्यास्तत्कृपणं श्रुत्वा सैरन्ध्र्याः परिदेवितम् ।
ततः सभ्यास्तु ते सर्वे भूयः कृष्णामपूजयन् ।
साधुसाध्विति चाप्याहुः कीचकं चाप्यगर्हयन्३०
केचित्कृष्णां प्रशंसन्ति केचिन्निन्दन्ति कीचकम् ।
केचिन्निन्दन्ति राजानं केचिद्देवीं च तां नराः ३१
सभ्या ऊचुः ।
यस्येयं चारुसर्वाङ्गी भार्या स्यादायतेक्षणा ।
परो लाभश्च तस्य स्यान्न स शोचेत्कदाचन ॥ ३२
यस्या गात्रं शुभं पीनं मुखं जयति पङ्कजम् ।
गतिर्हंसं स्मितं कुन्दं सैषा नार्हति पद्वधम् ॥ ३३
द्वात्रिंशद्दशना यस्याः श्वेता मांसनिबन्धनाः ।
स्निग्धाश्च मृदवः केशाः सैषा नार्हति पद्वधम् ३४
पद्मं चक्रं ध्वजं शङ्खं प्रासादो मकरस्तथा ।
यस्याः पाणितले सन्ति सैषा नार्हति पद्वधम्॥३५
आवर्ताः खलु चत्वारः सर्वे चैव प्रदक्षिणाः ।
समं गात्रं शुभं स्निग्धं यस्या नार्हति पद्वधम् ॥३६
अच्छिद्रहस्तपादा च अच्छिद्रदशना च या ।
कन्या कमलपत्राक्षी कथमर्हति पद्वधम् ॥ ३७
सेयं लक्षणसंपन्ना पूर्णचन्द्रनिभानना ।
सुरूपिणी सुवदना नेयं योग्या पदा वधम् ॥ ३८
देवदेवीव सुभगा शक्रदेवीव शोभना ।
अप्सरा इव सारूप्यान्नेयं योग्या पदा वधम् ३९
इति सापूजयंस्तत्र कृष्णां प्रेक्ष्य सभासदः ॥ ४०
सा विनिःश्वस्य सुश्रोणी भूमावन्तर्मुखी स्थिता ।
तूष्णीमासीत्तदा दृष्ट्वा विवक्षन्तं युधिष्ठिरम् ॥ ४१
युधिष्ठिरस्य कोपात्तु ललाटे स्वेद आस्रवत् ।
अब्रवीद्धर्मपुत्रोऽथ सैरन्ध्रीं महिषीं प्रियाम् ।
कृष्णां तत्र नृपाभ्याशे परिव्राजकरूपधृत् ॥ ४२

गच्छ सैरन्ध्रि मा भैस्त्वं सुदेष्णाया निवेशनम् ।
राजा ह्ययं धर्मशीलो विराटः परलोकभीः ।
यतस्त्वां न परित्राति सत्ये धर्मपथे स्थितः ॥ ४३
भर्तारमनुरुन्धन्त्यः क्लिश्यन्ते वीरपत्नयः ।
शुश्रूषया क्लिश्यमानाः पतिलोकं जयन्त्युत ॥ ४४
मन्ये न कालः क्रोधस्य पश्यन्ति पतयस्तव ।
तेन त्वां नाभिधावन्ति गन्धर्वाः सूर्यवर्चसः ४५
श्रूयन्तां ते सुकेशान्ते मोक्षधर्माश्रयाः कथाः ।
यथा धर्मः कुलस्त्रीणां दृष्टो धर्मानुरोधनात् ॥४६
नास्ति यज्ञः स्त्रियाः कश्चिन्न श्राद्धं नाप्युपोषणम् ।
या तु भर्तरि शुश्रूषा सा स्वर्गायाभिजायते ॥४७
पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति॥४८
भीरु भर्तृभयात्पत्न्यो न क्रुध्यन्ति कदाचन ।
बहुभिश्च परिक्लेशैरवज्ञाताश्च शत्रुभिः ।
अनन्यभावाः शुद्धाश्च पुण्यलोकं जयन्त्युत ॥४९
न क्रोधकालं नियतं पश्यन्ति पतयस्तव ।
न क्रुद्धान्प्रतियायाद्धि पतींस्ते वृत्रहा अपि ।
तेन त्वां नाभिधावन्ति गन्धर्वाः कामरूपिणः ५०
यदि ते समयः कश्चित्कृतो ह्यायतलोचने ।
तं स्मरस्व क्षमाशीले क्षमा धर्मो ह्यनुत्तमः ॥ ५१
क्षमा धर्मः क्षमा सत्यं क्षमा दानं क्षमा तपः ।
क्षमावतामयं लोकः परलोकः क्षमावताम् ॥ ५२
ध्वंशिनो द्वादशाङ्गस्य चतुर्विंशतिपर्वणः ।
कश्चित्रिषष्ठिशतारस्य मासोनस्याक्षमी भवेत् ॥ ५३
गच्छ सैरन्ध्रि गन्धर्वाः करिष्यन्ति तव प्रियम् ।
व्यपनेष्यन्ति ते दुःखं येन ते विप्रियं कृतम्॥५४
इत्येवमुक्ते तिष्ठन्तीं पुनरेवाह धर्मराट् ।
विघ्नं करोषि वै भद्रे दीव्यतां राजसंसदि ॥ ५५
तस्मात्त्वमपि सुश्रोणि शैलूषीव विभासि नः ।
एवमुक्ता तु सा भर्त्रा समुद्वीक्ष्याब्रवीदिदम् ५६
सत्यमुक्तं त्वया विद्वञ्शैलूषीं विद्धि मां पुनः ।
शैलूषकस्य तस्याहं येषां ज्येष्ठोऽक्षकोविदः ॥ ५७
एवमुक्त्वा वरारोहा परिमृज्याननं शुभम् ।

केशान्विमुक्तान्संयम्य रुधिरेण समुक्षितान् ॥ ५८
पांसुकुण्ठितसर्वाङ्गी गजराजवधूरिव ।
प्रतस्थे नागनासोरूर्भर्तुराज्ञाय शासनम् ॥ ५९
विमुक्ता मृगशावाक्षी निरन्तरपयोधरा ।
प्रभा नक्षत्रराजस्य कालमेघैरिवावृता ॥ ६०
यस्यार्थे पाण्डवेयास्तु त्यजेयुरपि जीवितम् ।
तां ते दृष्ट्वा तथा कृष्णां क्षमिणो धर्मचारिणः ।
समयं नातिवर्तन्ते वेलामिव महोदधिः ॥ ६१
सा प्रविश्य प्रवेपन्ती सुदेष्णाया निवेशनम् ।
रुदन्ती चारुसर्वाङ्गी तस्यास्तस्थावथाग्रतः ॥ ६२
तामुवाच विराटस्य महिषी शाठ्यमास्थिता ।
किमिदं पद्मसंकाशं सुदन्तोष्ठाक्षिनासिकम् ॥ ६३
रुदन्त्या अवमृष्टास्रं पूर्णेन्दुसमवर्चसम् ।
बिम्बोष्ठं कृष्णताराभ्यामत्यन्तरुचिरप्रभम् ।
नयनाभ्यामजिह्माभ्यां मुखं ते मुञ्चते जलम् ६४
कस्त्वाऽवधीद्वरारोहे कस्माद्रोदिषि शोभने ।
को विप्रयुज्यते दारैः सपुत्रैः सहबान्धवैः ॥ ६५
कस्याद्य राजा कुपितो वधमाज्ञापयिष्यति ।
ब्रूहि किं ते प्रियं कर्म कं त्यजे घातयामि वा ६६
वैशंपायन उवाच ।
तां निःश्वस्याब्रवीत्कृष्णा जानन्ती नाम पृच्छसि।
भ्रातुस्त्वं मामनुप्रेष्य किमेवं हि विकत्थसे ॥ ६७
कीचको माऽवधीत्तत्र सुराहारीमितोगताम् ।
सभायां पश्यतो राज्ञो यथा वै निर्जने वने ॥ ६८
सुदेष्णोवाच ।
घातयामि सुदन्तोष्ठि कीचकं यदि मन्यसे ।
भ्राता यद्येष मे व्यक्तं योऽतीतो धर्मचारिणीम् ।
यस्त्वां कामाभिभूतात्मा दुर्लभामवमन्यते ॥ ६९
द्रौपद्युवाच ।
अद्यैव तं हनिष्यन्ति येषामागस्करो हि सः ।
मन्येऽहमद्य वा श्वो वा परलोकं गमिष्यति ॥ ७०
भ्रातुः प्रयच्छ त्वरिता जीवच्छ्राद्धं त्वमद्य वै ।
सुहृष्टं कुरु वै चैनं नासून्मन्ये धरिष्यति ॥ ७१
तेषां हि मम भर्तॄणां पञ्चानां धर्मचारिणाम् ।
एको दुर्धर्षणोऽत्यर्थं बले चाप्रतिमो भुवि ॥ ७२
निर्मनुष्यमिमं लोकं कुर्यात्क्रुद्धो निशामिमाम् ।
न स संक्रुध्यते तावद्गन्धर्वः कामरूपधृत् ॥ ७३
नूनं ज्ञास्यति यावद्वै ममैतत्पादघातनम् ।
तत्क्षणात्कीचकः पापः सपुत्रभ्रातृबान्धवः ।
विनशिष्यति दुष्टात्मा यथा दुष्कृतकर्मकृत् ॥ ७४
अपि चैतत्पुरा प्रोक्तं निपुणैर्मनुजोत्तमैः ।
एकस्तु कुरुते पापं कालपाशवशं गतः ।
नीचेनात्मापराधेन कुलं तेन विनश्यति ॥ ७५
वैशंपायन उवाच ।
सुदेष्णामेवमुक्त्वा तु सैरन्ध्री दुःखमोहिता ।
कीचकस्य वधार्थाय व्रतदीक्षामुपागमत् ॥ ७६
अभ्यर्थिता च नारीभिर्मानिता च सुदेष्णया ।
न च स्नाति न चाश्नाति न पांसून्परिमार्जति ।
रुधिरक्लिन्नवदना बभूव मृदितेक्षणा ॥ ७७
तां तथा शोकसन्तप्तां दृष्ट्वा प्ररुदितां स्त्रियः ।
कीचकस्य वधं सर्वा मनोभिश्च शशंसिरे ॥ ७८

॥ इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि विंशोऽध्यायः ॥ २० ॥

---

## एकविंशोऽध्यायः ॥ २१ ॥

वैशंपायनेन जनमेजयंप्रति कीचकोत्पत्तिप्रकारादिकथनम् ॥ १ ॥

जनमेजय उवाच ।
अहो दुःखतरं प्राप्ता कीचकेन पदा हता ।
पतिव्रता महाभागा द्रौपदी योषितांवरा ॥ १
दुःशलां स्मारयन्ती सा भर्तॄणां भगिनीं शुभाम् ।
नाशपत्सिन्धुराजं सा बलात्कारेण वाहिता ॥ २
किमर्थमिह संप्राप्ता कीचकेन दुरात्मना ।
नाशपत्तं महाभागा कृष्णा पादेन ताडिता ॥ ३
तेजोराशिरियं देवी धर्मज्ञा सत्यवादिनी ।

केशपाशे परामृष्टा मर्षयन्ती ह्यशक्तवत् ॥ ४
नैतत्कारणमल्पं हि श्रोतुकामोऽस्मि सत्तम ।
कृष्णायास्तु परिक्लेशान्मनो मे दूयते भृशम् ॥ ५
कस्य वंशे समुद्भूतः स च दुर्ललितो मुने ।
बलोन्मत्तः कथं चासीत्स्यालो मात्स्यस्य कीचकः ६
दृष्ट्वापि तां प्रियां भार्यां सूतपुत्रेण ताडिताम् ।
नैव चुक्षुभिरे वीराः किमकुर्वन्त तं प्रति ॥ ७
वैशंपायन उवाच ।
त्वदुक्तोऽयमनुप्रश्नः कुरूणां कीर्तिवर्धनः ।
एतत्सर्वं यथा वक्ष्ये विस्तरेणेह पार्थिव ॥ ८
ब्राह्मण्यां क्षत्रियाज्जातः सूतो भवति पार्थिव ।
प्रातिलोम्येन जातानां स ह्येको द्विज एव तु ॥ ९
रथकारमितीमं हि क्रियायुक्तं द्विजन्मनाम् ।
क्षत्रियादवरो वैश्याद्विशिष्ट इति चक्षते ॥ १०
सह सूतेन संबन्धः कृतः पूर्वं नराधिपैः ।
तेन तु प्रातिलोम्येन राजशब्दो न लभ्यते ॥ ११
तेषां तु सूतविषयः सूतानां नामतः कृतः ।
उपजीव्यं च यत्क्षेत्रं राजन्सूतेन वै पुरा ॥ १२
सूतानामधिपो राजा केकयो नाम विश्रुतः ।
राजकन्यासमुद्भूतः सारथ्येऽनुपमोऽभवत् ॥ १३
पुत्रास्तस्य कुरुश्रेष्ठ मालव्यां जज्ञिरे तदा ।
कीचका इति विख्याताः शतं षट् चैव भारत १४
तेषामासीद्बलश्रेष्ठः कीचकः सर्वजित्प्रभो ।
अग्रजो बलसंमत्तस्तेनासीत्सूतषट्शतम् ॥ १५
मालव्या एव कौरव्य तत्र ह्यवरजाऽभवत् ।
तस्यां केकयराज्ञस्तु सुदेष्णा दुहिताऽभवत् ॥ १६
तां विराटस्य मात्स्यस्य केकयः प्रददौ मुदा ।
सुरथायां मृतायां तु कौसल्यां श्वेतमातरि ॥ १७
श्वेते विनष्टे शङ्खे च गते मातुलवेश्मनि ।
सुदेष्णां महिषीं लब्ध्वा राजा दुःखमपानुदत् १८
उत्तरं चोत्तरां चैव विराटात्पृथिवीपते ।
सुदेष्णा सुषुवे देवी कैकेयी कुलवृद्धये ॥ १९
मातृष्वसृसुतां राजन्कीचकस्तामनिन्दिताम् ।
सदा परिचरन्प्रीत्या विराटे न्यवसत्सुखी ॥ २०
भ्रातरश्चास्य विक्रान्ताः सर्वे च तमनुव्रताः ।
विराटस्यैव संहृष्टा बलं कोशं त्ववर्धयन् ॥ २१
कालेया नाम ते दैत्याः मायशो भुवि विश्रुताः ।
जज्ञिरे कीचका राजन्बाणो ज्येष्ठस्तथाऽभवत् २२
स हि सर्वास्त्रसंपन्नो बलवान्भीमविक्रमः ।
कीचको नष्टमर्यादो बभूव भयदो नृणाम् ॥ २३
तं प्राप्य बलसंमत्तं विराटः पृथिवीपतिः ।
जिगाय सर्वांश्च रिपून्यथेन्द्रो दानवान्पुरा ॥ २४
मेखलांश्च त्रिगर्तांश्च दशार्णांश्च कशेरुकान् ।
मालवांश्चैव यवनान्सिलिन्दान्काशिकोसलान् २५
करदांश्च निषिद्धांश्च शिवान्मचुलकांस्तथा ।
पुलिन्दांश्च कलिङ्गांश्च तङ्कणान्परतङ्कणान् ॥ २६
अन्ये च बहवः शूरा नानाजनपदेश्वराः ।
कीचकेन रणे भग्ना विद्रवन्ति दिशो दश ॥ २७
तमेवंवीर्यसंपन्नं नागायुतसमं बले ।
विराटस्तत्र सेनायाश्चकार पतिमात्मनः ॥ २८
विराटभ्रातरश्चैव दश दाशरथेः समाः ।
ते चैनानन्ववर्तन्त कीचकान्बलवत्तरान् ॥ २९
एवंविधबलो भीमः कीचकस्ते च तद्विधाः ।
राज्ञः स्याला महात्मानो विराटस्य हितैषिणः ३०
एतत्ते कथितं सर्वं कीचकस्य पराक्रमम् ।
द्रौपदी न शशापैनं यस्मात्तद्वदतः शृणु ॥ ३१
रक्षन्ति हि तपः क्रोधादृषयो न शपन्ति च ।
जानन्ती तद्यथातत्त्वं द्रौपदी न शशाप तम् ॥३२
क्षमा धर्मः क्षमा दानं क्षमा यज्ञः क्षमा तपः ।
क्षमा सत्यं क्षमा शीलं क्षमा सर्वमिति श्रुतिः ३३
क्षमावतामयं लोकः परश्चैव क्षमावताम् ।
एतत्सर्वं विजानन्ती सा क्षमामन्वपद्यत ॥ ३४
भर्तॄणां मतमाज्ञाय क्षमिणां धर्मचारिणाम् ।
नाशपत्तं विशालाक्षी सती शक्ताऽपि भारत ३५
पाण्डवाश्चापि ते सर्वे द्रौपदीं प्रेक्ष्य दुःखिताम् ।
क्रोधाग्निनाऽप्यदह्यन्त तदा लज्जाव्यपेक्षया ॥३६

एकविंशोऽध्यायः ॥ २१ ॥

विनष्टे अदर्शनं गते ॥ १८ ॥

अथ भीमो महाबाहुः सूदयिष्यंस्तु कीचकम् ।
वारितो धर्मपुत्रेण वेलयेव महोदधिः ॥ ३७

संधार्य मनसा रोषं दिवारात्रं विनिश्वसन् ।
महानसे तदा कृच्छ्रात्सुष्वाप रजनीं च ताम्३८

॥ इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

## द्वाविंशोऽध्यायः ॥ २२ ॥

कीचकं जिघांसन्त्या द्रौपद्या रात्रौ महानसमेत्य स्वपतो भीमस्य प्रबोधनम् ॥ १ ॥ तथा कीचकमारणाभावे स्वप्राणविमोक्षणप्रतिज्ञानम् ॥ २ ॥ तथा युधिष्ठिरादीन्प्रति प्रत्येकं नामनिर्देशपूर्वकमनुशोचनम् ॥ ३ ॥

वैशंपायन उवाच ।
सा सूतपुत्राभिहता राजपुत्री सुदुःखिता ।
वधं कृष्णा परीप्सन्ती सूतपुत्रस्य भामिनी ॥ १
जगामावासमेवाथ तदा सा द्रुपदात्मजा ।
कृत्वा शौचं यथान्यायं कृष्णा सा तनुमध्यमा ॥२
गात्राणि वाससी चैव प्रक्षाल्य सलिलेन सा ।
चिन्तयामास रुदती तस्य दुःखस्य निर्णयम् ॥ ३
किं करोमि क्व गच्छामि कथं कार्यं भवेन्मम ।
इत्येवं चिन्तयित्वा सा भीमं तं मनसाऽगमत् ।
अन्यः कर्ता विना भीमान्न मेऽद्य मनसेप्सितम् ४
प्रादुर्भूते क्षणे रात्रौ विहाय शयनं स्वकम् ।
दुःखेन महता युक्ता मानसेन मनस्विनी ।
प्राद्रवन्नाथमिच्छन्ती तथा नाथवती सती ॥ ५
सा वै महानसं प्राप्य भीमसेनं शुचिस्मिता ।
उपासर्पत पाञ्चाली वासितेव महागजम् ॥ ६
सर्वश्वेतेव माहेयी वने वृद्धा त्रिहायणी ।
महर्षभं यथा सुप्तमर्थिनी वननिर्झरे ।
संप्रसुप्तं तथा सिंहं मृगराजवधूरिव ॥ ७
अभिप्रसार्य बाहुभ्यां पतिं सुप्तं समाश्लिषत् ।
सुजातं गोमतीतीरे सालं वल्लीव पुष्पिता ॥ ८
परिस्पृश्य च पाणिभ्यां पतिं सुप्तमबोधयत् ।
श्रीरिवान्या महोत्साहं सुप्तं विष्णुमिवार्णवे ।
क्षौमावदाते शयने शयानं वृषभेक्षणम् ॥ ९
यथा शची देवराजं रुद्राणी शंकरं यथा ।
ब्रह्माणमिव सावित्री देवसेना गुहं यथा ॥ १०
दिशागजसमाकारं गजं गजवधूरिव ।
भीमं प्राबोधयत्कान्ता लक्ष्मीर्दामोदरं यथा ॥११
वीणेव मधुरालापा स्वरं गान्धारमाश्रिता ।
अभ्यभाषत पाञ्चाली कौरवं पाण्डुनन्दनम् ॥ १२
उत्तिष्ठोत्तिष्ठ किं शेषे भीमसेन मृतो यथा ।
न मृतः स हि पापीयान्भार्यामालम्ब्य जीवति १३
तस्मिञ्जीवति पापिष्ठे सेनावाहे मम द्विषि ।
तत्कर्म कृतवत्यद्य कथं निद्रां निषेवसे ॥ १४
वैशंपायन उवाच ।
सुखसुप्तश्च तं शब्दं निशम्य स वृकोदरः ।
संवेदितः कुरुश्रेष्ठः तोत्रैरिव महागजः ॥ १५
स वै विहाय शयनं यस्मिन्सुप्तः प्रबोधितः ।
उदतिष्ठदमेयात्मा पर्यङ्के सोत्तरच्छदे ॥ १६
उपवेश्य च दुर्धर्षः पाञ्चालकुलवर्धनीम् ।
अथाब्रवीद्राजपुत्रीं कौरव्यो महिषीं प्रियाम् ॥१७
केनार्थेन च संप्राप्ता त्वरितेव समान्तिकम् ।
न ते प्रकृतिमान्वर्णः कृशा त्वमभिलक्ष्यसे ॥१८
प्रकाशं यदि वा गुह्यं सर्वमाख्यातुमर्हसि ।
आचक्ष्व त्वमशेषेण सर्वं विद्यामहं यथा ॥ १९
सुखं वा यदि वा दुःखं शुभं वा यदि वाऽशुभम् ।
यद्यप्यसुकरं कर्म कृतमित्यवधारय ॥ २०
अहमेव हि ते कृष्णे विश्वास्यः सर्वकर्मसु ।
अहमापत्सु चापि त्वां मोक्षयामि पुनःपुनः २१
शीघ्रमुक्त्वा यथाकामं यत्ते कार्यं विवक्षितम् ।
गच्छ वै शयनायैव यावदन्यो न बुध्यते ॥ २२

सर्वश्वेता वकी इति नीलकण्ठः ॥ ७ ॥ यथा षष्ठी गुहं तथा इति ख. पाठः ॥ १० ॥ नामृतस्य हि पापीयान्भार्यामालभ्य जीवतीति झ. पाठः ॥ १३ ॥

वैशंपायन उवाच ।
सा लज्जमाना भीता च अधोमुखमुखी ततः ।
नोवाच किंचिद्वचनं बाष्पदूषितलोचना ॥ २३
अथाब्रवीद्भीमपराक्रमो बली
वृकोदरः पाण्डवमुख्यसंमतः ।
प्रब्रूहि किं ते करवाणि सुन्दरि
प्रियं प्रिये वारणमत्तगामिनि ॥ २४
द्रौपद्युवाच ।
अशोच्यता कुतस्तस्या यस्या भर्ता युधिष्ठिरः ।
जानन्सर्वाणि दुःखानि किं मां भीमानुपृच्छसि॥
यन्मां दासीप्रवादेन प्रातिकामी तदाऽनयत् ।
सभायां परिषन्मध्ये तन्मे मर्माणि कृन्तति ॥ २६
विक्रुष्टा हास्तिनपुरे सभायां राजसंसदि ।
दुःशासनेन केशान्ते परामृष्टा रजस्वला ॥ २७
क्षत्रियैस्तत्र कर्णाद्यैर्दृष्टा दुर्योधनेन च ।
श्वशुराभ्यां च भीष्मेण विदुरेण च धीमता ।
द्रोणेन च महाबाहो कृपेण च परंतप ॥ २८
साऽहं श्वशुरयोर्मध्ये भ्रातृमध्ये च पाण्डव ।
केशे गृहीत्वा च सभां नीता जीवति वै त्वयि २९
विप्रमुक्ता ततश्चाहं वने राज्याद्वनं गता ।
साऽहं वने दुर्वसतिं वसती त्वध्वकर्शिता ।
जटासुरपरिक्लेशात्प्राप्तापि सुमहद्भयम् ॥ ३०
पार्थिवस्य सुता नाम कानु जीवेत मादृशी ।
अनुभूय भृशं दुःखमन्यत्र द्रौपदीं प्रभो ॥ ३१
वनवासगता चाहं सैन्धवेन दुरात्मना ।
परामृष्टा द्वितीयं च सोढुमुत्सहते नु का ॥ ३२
पद्भ्यां पर्यचरं चाहं देशान्विषमसंस्थितान् ।
दुर्गान्श्वापदसंकीर्णांस्त्वयि जीवति पाण्डवे ॥३३
ततोऽहं द्वादशे वर्षे वन्यमूलफलाशना ।
इदं पुरमनुप्राप्ता सुदेष्णापरिचारिका ।
परस्त्रियमुपातिष्ठे सत्यधर्मपरायणा ॥ ३४
गोशीर्षकं पद्मकं च हरिश्यामं च चन्दनम् ।
नित्यं पिषे विराटस्य त्वयि जीवति पाण्डव ३५
साऽहं बहूनि दुःखानि गणयामि न ते कृते ॥३६
मत्स्यराजसमक्षं तु तस्य धूर्तस्य पश्यतः ।
कीचकेन पदा स्पृष्टा का नु जीवेत मादृशी॥३७
एवं बहुविधैर्दुःखैः क्लिश्यमाना च पाण्डव ।
न मां जानासि कौन्तेय किं फलं जीवितेन मे३८
द्रुपदस्य सुता चाहं धृष्टद्युम्नस्य चानुजा ।
अग्निकुण्डात्समुद्भूता नोर्व्यां जातु चराम्यहम् ३९
कीचकं चेन्न हन्यास्त्वं ग्रीवां बद्ध्वा जले प्रिये ।
विषमालोड्य पास्यामि प्रवेक्ष्याम्यथवाऽनलं॥४०
आत्मानं नाशयिष्यामि वृक्षमारुह्य वा पते ।
शस्त्रेणाङ्गं च भेत्स्यामि किं फलं जीवितेन मे ४१
योऽयं राज्ञो विराटस्य कीचको नाम भारत ।
सेनानीः पुरुषव्याघ्र स्यालः परमदुर्मतिः ॥ ४२
स मां सैरन्ध्रिवेषेण वसन्तीं राजवेश्मनि ।
नित्यमेवाह दुष्टात्मा भार्या मम भवेति वै ॥४३
तेनैवमुच्यमानाया वधार्हेणारिसूदन ।
कालेनेव फलं पक्वं हृदयं मे विदीर्यते ॥ ४४
शरणं भव कौन्तेय मा स्म गच्छे युधिष्ठिरम् ।
निरुद्योगं निरामर्षं निर्वीर्यमरिमर्दन ॥ ४५
मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ४६
विजानामि तवामर्षं बलं वीर्यं च पाण्डव ।
ततोऽहं परिदेवामि चाग्रतस्ते महाबल ॥ ४७
यथा यूथपतिर्मत्तः कुञ्जरः षाष्टिहायनः ।
भूमौ निपतितं बिल्वं पद्भ्यामाक्रम्य पीडयेत् ४८
तथैव च शिरस्तस्य निपात्य धरणीतले ।
वामेन पुरुषव्याघ्र मर्द पादेन पाण्डव ॥ ४९
स चेदुद्यन्तमादित्यं प्रातरुत्थाय पश्यति ।
कीचकः शर्वरीं व्युष्टां नाहं जीवितुमुत्सहे ॥ ५०
शापितोसि मम प्राणैः सुकृतेनार्जुनस्य च ।
युधिष्ठिरस्य पादाभ्यां यमयोर्जीवितेन च ।
कीचकस्य वधं नाद्य प्रतिजानासि भारत ॥ ५१
भ्रातरं च विगर्हस्व ज्येष्ठं दुर्द्यूतदेविनम् ।
यस्यास्मि कर्मणा प्राप्ता दुःखमेतदनन्तकम् ॥५२
येषां मुख्यतमो ज्येष्ठो भवेत्तु कुलपांसनः ।
भ्रातरं परमन्वीयुस्तेऽपि शालीनबुद्धयः ॥ ५३

को हि राज्यं परित्यज्य सपुत्रपशुबान्धवम् ।
प्रव्रजेत महारण्यमजिनैः परिवारितः ॥ ५४
यदि निष्कसहस्राणि यद्वाऽन्यत्सारवद्धनम् ।
सायं प्रातरदेविष्यदपि संवत्सरायुतम् ॥ ५५
रुक्मं हिरण्यं वासांसि यानं युग्यमजाविकम् ।
अश्वाश्वतरसङ्घाश्च न जातु क्षयमाव्रजेत् ॥ ५६
सोयं द्यूतप्रवादेन श्रियश्चैवावरोपितः ।
तूष्णीमास्ते यथा मूढः स्वानि कर्माणि चिन्तयन् ॥
पुरा दशसहस्राणि दन्तिनां वाजिनामपि ।
यं यान्तमनुयान्ति स्म सोयं द्यूतेन जीवति ॥ ५८
तथा शतसहस्राणि स्त्रीणाममिततेजसाम् ।
उपासते स्म राजानमिन्द्रप्रस्थे युधिष्ठिरम् ॥ ५९
शतं दासीसहस्राणां यस्य नित्यं महानसे ।
पात्रहस्ता दिवारात्रमतिथीन्भोजयन्त्युत ॥ ६०
एष निष्कसहस्राणि दत्त्वा प्रातर्दिनेदिने ।
द्यूतजेन ह्यनर्थेन महता समुपावृतः ॥ ६१
एनं सुस्वरसंपन्ना वहवः सूतमागधाः ।
सुप्तं प्रातरुपातिष्ठन्सुमृष्टमणिकुण्डलाः ॥ ६२
[*सहस्रं वालखिल्यानां सहस्रमुदवासिनाम् ।
सहस्रमश्मकुट्टानां सहस्रं वायुभोजिनाम् ॥ ६३
सहस्रं मुनिपत्नीनां सहस्रं ब्रह्मचारिणाम् ।
सहस्रं मौनशीलानां सहस्रं गृहमेधिनाम् ॥ ६४
हंसाः परमहंसाश्च योगिनश्च द्विजातयः ।
कुटीरकाः परिव्राजो ये चान्ये वनचारिणः ॥६५
संविभक्तात्मकाश्चैव बहवश्चोर्ध्वरेतसः ।
चतुर्वेदविदो विप्राः शिक्षामीमांसपारगाः ।
क्रमपाठाश्च ये विप्राः सामाध्यायनिकाश्च ये॥]६६
सहस्रमृषयो यस्य नित्यमासन्सभासदः ।
तपःश्रुतोपसंपन्नाः सर्वकामैरुपास्थिताः ॥ ६७
अन्धान्वृद्धाननाथांस्तु सर्वराष्ट्रेषु दुःखितान् ।
बिभर्त्यन्नार्थिनो नित्यमानृशंस्याद्युधिष्ठिरः ॥ ६८
स एष निलयं प्राप्तो मत्स्यस्य परिचारकः ।

महारण्यमनुजैः परिवारितः इति ख. पाठः ॥ ५४ ॥

सभायां विनतो राज्ञः कङ्को नाम युधिष्ठिरः ६९
इन्द्रप्रस्थे निवसतः समये यस्य पार्थिवाः ।
आसन्बलिकराः सर्वे सोन्येभ्यो भृतिमिच्छति७०
पार्थिवाः पृथिवीपाला यस्यासन्वशवर्तिनः ।
स वशे विवशो राज्ञां परेषामद्य वर्तते ॥ ७१
संप्राप्य पृथिवीं कृत्स्नां रश्मिवानिव तेजसा ।
सोद्य राज्ञो विराटस्य सभास्तारो युधिष्ठिरः ॥७२
यमुपासत राजानं सभायामृषिसत्तमाः ।
तमुपासीनमद्यान्यं पश्य पाण्डव पाण्डवम् ॥ ७३
अनवद्यं महाप्राज्ञं जीवितार्थेन संवृतम् ।
दृष्ट्वा कस्य न दुःखं स्याद्धर्मराजं युधिष्ठिरम्॥७४
उपास्ते स्म सभायां यं कृत्स्नाऽपि च वसुन्धरा ।
तमुपासीनमद्यान्यं पश्य भारत भारतम् ॥ ७५
एवं बहुविधैर्दुःखैः पीड्यमानामनाथवत् ।
शोकसागरमध्यस्थां किं मां भीम न पश्यसि॥७६
इदं तु मे दुःखतरं यत्त्वां वक्ष्यामि भारत ।
न मेऽभ्यसूया कर्तव्या दुःखादेतद्ब्रवीम्यहम् ७७
शार्दूलैर्महिषैर्नागैरगारे योत्स्यसे सदा ।
कैकेय्याः प्रेक्षमाणायास्तदा मे कश्मलोऽभवत् ॥
हसन्त्यन्तःपुरे नार्यो मम चेष्टां निरीक्ष्य च ॥७९
तत उत्थाय कैकेयी सर्वास्ताः प्रत्यभाषत ।
प्रेक्ष्य मामनवद्याङ्गीं कश्मलाभिहतामिव ॥ ८०
स्नेहात्संवासजादेव तदा वै चारुहासिनी ।
युध्यमानं महावीर्यमिमं समनुशोचति ॥ ८१
कल्याणरूपा सैरन्ध्री वललश्चापि सुन्दरः ।
स्त्रीणां चित्तं हि दुर्ज्ञेयं युक्तरूपौ हि मे मतौ ॥८२
सैरन्ध्री प्रियसंवासान्नित्यं करुणवादिनी ।
अस्मिन्राजकुले चैतौ तुल्यकालनिवासिनौ ॥ ८३
इति ब्रुवाणा वाक्यानि सा मां नित्यमजीजपत् ।
क्रुध्यन्तीं मां च संप्रेक्ष्य पर्यशङ्कत मां त्वयि ॥८४
तस्यां तथा ब्रुवन्त्यां तु भीमो भीमपराक्रमः ।
नोवाच किंचिद्वचनं संरम्भाद्रक्तलोचनः ॥ ८५

द्वाविंशोऽध्यायः ॥ २२ ॥

* इमे चत्वारः श्लोकाः ध. पुस्तकएव वर्तन्ते ॥

ज्ञात्वा तु रुषितं भीमं द्रौपदी पुनरब्रवीत् ।
शोके यौधिष्ठिरे मग्ना नाहं जीवितुमुत्सहे ॥ ८६
यस्तु देवान्मनुष्यांश्च सर्वानेकरथोऽजयत् ।
सोयं राज्ञो विराटस्य कन्यानां नर्तको युवा ।
आस्ते वेषप्रतिच्छन्नः कन्यानां परिचारकः ॥ ८७
योऽतर्पयदमेयात्मा खाण्डवे जातवेदसम् ।
सोऽन्तःपुरगतः पार्थः कूपेऽग्निरिव संवृतः ॥ ८८
यस्माद्भयममित्राणां सदैव पुरुषर्षभात् ।
स लोकपरिभूतेन वेषेणास्ते धनंजयः ॥ ८९
यस्य ज्यातलनिर्घोषात्समकम्पन्त शत्रवः ।
षण्डरूपं वहन्तं तं गीतं नृत्तावलम्बनम् ।
कुर्वन्तमर्जुनं दृष्ट्वा न मे स्वास्थ्यं मनो व्रजेत् ॥ ९०
स्त्रियो गीतस्वरात्तस्य मुदिताः पर्युपासते ॥ ९१
किरीटं सूर्यसंकाशं यस्य मूर्धन्यशोभत ।
वेणीविकृतकेशान्तः सोऽयमद्य धनंजयः ॥ ९२
यस्मिन्नस्त्राणि दिव्यानि समस्तानि महात्मनि ।
आधारः सर्वविद्यानां यो धारयति कुण्डले ॥ ९३
यं वै राजसहस्राणि तेजसाऽप्रतिमं भुवि ।
समरे नातिवर्तन्ते वेलामिव महोर्मयः ॥ ९४
सोयं राज्ञो विराटस्य कन्यानां नर्तको युवा ।
आस्ते वेषप्रतिच्छन्नः कन्यानां परिचारकः ॥ ९५
यस्य स्म रथनिर्घोषात्समकम्पत मेदिनी ।
सपर्वतवनाकाशा सहस्थावरजङ्गमा ॥ ९६
यस्मिञ्जाते महेष्वासे कुन्त्याः प्रीतिरवर्धत ।
न स शोचति मामद्य भीमसेन तवानुजः ॥ ९७
विभूषितमलंकारैः कुण्डलैः परिपातुकैः ।
कम्बुपाणिमथायान्तं दृष्ट्वा सीदति मे मनः ॥ ९८
वेणीविकृतकेशान्तं भीमधन्वानमर्जुनम् ।
कन्यापरिवृतं दृष्ट्वा शोकं गच्छति मे मनः ॥ ९९
यदा ह्येनं परिवृतं कन्याभिर्देवरूपिणम् ।
प्रच्छन्नमिव मातङ्गं परिपूर्णं करेणुभिः ॥ १००
मात्स्यं पार्थं च गायन्तं विराटं समुपस्थितम् ।
पश्यामि तूर्यमध्यस्थं दृष्ट्वा मुह्यति मे मनः ॥ १०१
नूनमार्या न जानाति कृच्छ्रं प्राप्तं धनंजयम् ।
अजातशत्रुं कौरव्यं मग्नं दुर्द्यूतदेविनम् ॥ १०२
ऐन्द्रवारुणवायव्यब्रह्माग्नेयैः सवैष्णवैः ।
अग्नीन्संतर्पयन्पार्थः सर्वशत्रुनिबर्हणः ।
दिव्यैरस्त्रैरमेयात्मा सर्वांश्चैकरथोऽजयत् ॥ १०३
कौबेरं वैष्णवं शैवमस्त्राण्यन्यानि भारत ।
दर्शयन्नस्त्रवीर्यं च वासुदेवसहायवान् ॥ १०४
दिव्यं गान्धर्वमस्त्रं च वायव्यमथ वैष्णवम् ।
ब्राह्मं पाशुपतं चैव स्थूणाकर्णं च दर्शयन् ॥ १०५
पौलोमान्कालकेयांश्च इन्द्रशत्रून्महाबलान् ।
निवातकवचैः सार्धं घोरानेकरथोऽजयत् ।
सोन्तःपुरगतः पार्थः कूपेऽग्निरिव संवृतः ॥ १०६
यो वै महातपः कुर्वन्महाबलपराक्रमः ।
युद्धेन तोषयामास शंकरं शूलपाणिनम् ॥ १०७
कन्यापुरगतं दृष्ट्वा गोष्ठेष्विव महावृषम् ।
स्त्रीवेषविकृतं पार्थं कुन्तीं गच्छति मे मनः ॥ १०८
यः स्त्रीभिर्नित्यसंपन्नो रूपेणास्त्रेण मेधया ।
सोऽश्वबन्धो विराटस्य पश्य कालस्य पर्ययम् ॥ १०९
राजकन्याश्च वेश्याश्च विशां दुहितरश्च याः ।
सर्वाः सारयुता नार्यो दामग्रन्थिवशं गताः ।
प्रेष्यकर्मणि तं दृष्ट्वा शोचामि विलपामि च ॥
विराटमुपतिष्ठन्तं दर्शयन्तं च वाजिनम् ।
अभ्यकीर्यन्त बृन्दानि दामग्रन्थिमुदीक्षितुम् ।
विनयन्तं जवेनाश्वान्धर्मराजस्य पश्यतः ॥ १११
किंनु मां मन्यसे पार्थ सुखितेति परन्तप ।
तथा दृष्ट्वा यवीयांसं सहदेवं युधांपतिम् ॥ ११२
तं दृष्ट्वा गोषु गोसङ्ख्यं वत्सचर्मक्षितीशयम् ।
दुःखशोकपरीताङ्गी पाण्डुभूताऽस्मि पाण्डव ११३
सहदेवस्य वृत्तानि चिन्तयन्ती पुनःपुनः ।
न पश्यामि महाभाग सहदेवस्य दुष्कृतम् ।
यस्मादेवंविधं क्लेशं प्राप्नुयात्सत्यविक्रमः ॥ ११४
दूयामि भरतश्रेष्ठ दृष्ट्वा ते भ्रातरं प्रियम् ।
गोषु गोवृषसंकाशं मात्स्येनापि निवेशितम् ११५
संरब्धतररक्ताक्षं गोपालानां पुरोगमम् ।
विराटमभिनन्दन्तं चित्ते मे भवति ज्वरः ॥ ११६

सहदेवं हि मे नित्यं वीरमार्या प्रशंसति ।
महाभिजनसंपन्नो नीतिमान्कुलवानपि ॥ ११७
हीनिषेवो ह्यनवमो धार्मिकश्च प्रियश्च मे ।
स तेऽरण्येषु वोढव्यः पाञ्चालि रजनीष्वपि११८
सुकुमारश्च शूरश्च राजानं चाप्यनुव्रतः ।
ज्येष्ठापचायिनं वीरं स्वयं पाञ्चालि भोजयेः११९
इत्युवाच हि मां कुन्ती रुदती पुत्रगृद्धिनी ।
प्रव्रजन्तं महारण्यं तं परिष्वज्य तिष्ठती ॥ १२०
तं दृष्ट्वा गोषु गोपालवेषमास्थाय धिष्ठितम् ।
सहदेवं युधांश्रेष्ठं किंनु जीवामि पाण्डव ॥१२१
एवं दुःखशताविष्टा युधिष्ठिरनिमित्ततः ॥ १२२
पुनः प्रतिविशिष्टानि दुःखानि शृणु भारत ।
वर्धन्ते मयि कौन्तेय वक्ष्याम्यन्यानि तानि वै॥
युष्मासु ध्रियमाणेषु दुःखानि विविधान्युत ।
शोषयन्ति शरीरं मे किंनु दुःखतरं ततः॥१२४
एकभर्ता तु या नारी सा सुखेनैव वर्तते ।
पञ्च मे पतयः सन्ति मम दुःखमनन्तकम् ॥१२५

॥ इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥

## त्रयोविंशोऽध्यायः ॥ २३ ॥

द्रौपद्या भीमंप्रति स्ववैभवानुस्मारणेन परिशोचनपूर्वकं कीचकहननचोदना ॥ १ ॥

द्रौपद्युवाच ।
अहं सैरन्ध्रिवेषेण वसन्ती राजवेश्मनि ।
वशगाऽस्मि सुदेष्णाया अक्षधूर्तस्य कारणात् ॥१
विक्रियां पश्य मे तीव्रां राजपुत्र्याः परन्तप ।
आसे कालमुपासीना सर्वदुःखसहा पुनः ॥ २
अनित्याः खलु मर्त्यानामर्थाश्च व्यसनानि च ।
इति मत्वा प्रतीक्षामि भर्तॄणामुदयं पुनः ॥ ३
चक्रवत्परिवर्तन्ते ह्यर्थाश्च व्यसनानि च ।
इति कृत्वा प्रतीक्षामि भर्तॄणामुदयं पुनः ॥ ४
य एव हेतुर्भवति पुरुषस्य जयावहः ।
पराजये च हेतुः स इति च प्रतिपालये ॥ ५
दत्त्वा याचन्ति पुरुषा हत्वा हन्यन्त एव ते ।
पातयित्वा च पात्यन्ते परैरिति च मे श्रुतम् ॥६
न दैवस्यातिभारोस्ति न चैवास्यातिवर्तनम् ।
इति चाप्यागमं भूयो दैवस्य प्रतिपालये ॥ ७
स्थितं पूर्वं जलं यत्र न पुनस्तत्र तिष्ठति ।
इति पर्यायमिच्छन्ती प्रतीक्षाम्युदयं पुनः ॥ ८
दैवेन किल यस्यार्थः सुनीतोपि विपद्यते ।
सदा दैवागमे यत्नस्तेन कार्यो विजानता ॥ ९
किंनु मे वचनस्याद्य कथितस्य प्रयोजनम् ।
पृच्छ मां दुःखितामेनामपृष्टाऽपि ब्रवीमि ते १०
महिषी पाण्डुपुत्राणां दुहिता द्रुपदस्य च ।
इमामवस्थां संप्राप्ता मदन्या का जिजीविषेत् ॥११
कुरून्परिहरन्सर्वान्पाञ्चालानपि भारत ।
पाण्डवेयांश्च संप्राप्तो मम शोको ह्यरिन्दम ॥ १२
भ्रातृभिः श्वशुरैः पुत्रैर्बहुभिः परिवारिता ।
एवं समुदिता नारी कान्वेवं दुःखभागिनी ॥१३
नूनं बालतया धातुर्मया वै विप्रियं कृतम् ।
तस्य प्रभावाद्दुर्नीतं प्राप्ताऽस्मि भरतर्षभ ॥ १४
वर्णं विकारमपि मे पश्य पाण्डव यादृशम् ।
ईदृशो मे न तत्रासीद्दुःखे परमके पुरा ॥ १५
त्वमेव भीम जानीषे यन्मे पार्थ सुखं पुरा ।
साऽहं दासीत्वमापन्ना न शान्तिं मनसा लभे ॥
तद्दैविकमिदं मन्ये यत्र पार्थो धनञ्जयः ।
भीमधन्वा महारङ्गे चास्ते शान्त इवानलः ॥ १७
अशक्या वेदितुं पार्थ प्राणिनां वै गतिर्नरैः ।
विनिपातमिमं पश्य युष्माकमविचिन्तितम् ॥१८
यस्या मम मुखप्रेक्षा यूयमिन्द्रसमाः सदा ।

मानयित्वा च मान्यन्ते नरा दैवविपर्यये इति थ. पाठः॥६॥

सा प्रेक्ष्य मुखमन्यासामवराणां वरा सती ॥ १९
पश्य पाण्डव मेऽवस्थां यथा नार्हामि वै तथा ।
युष्मासु ध्रियमाणेषु पाञ्चालेषु च मानद ॥ २०
यस्याः सागरपर्यन्ता पृथिवी वशवर्तिनी ।
आसीत्साऽद्य सुदेष्णायाः पाञ्चाली वशवर्तिनी ॥
यस्याः पुरश्चरा ह्यासन्पृष्ठतश्चानुगामिनः ।
साहमद्य सुदेष्णायाः पुरः पश्चाच्च गामिनी ॥२२
इदं तु दुःखं कौन्तेय ममासह्यं निबोध तत् ।
या न जातु स्वयं पिंषे गात्रोद्वर्तनमात्मनः ।
अन्यत्र कुन्त्या भद्रं ते सा पिनष्म्यद्य चन्दनं २३
पश्य कौन्तेय पाणी मे नैवं वै भवतः पुरा ।
इत्यसौ दर्शयामास किणवन्तौ करावुभौ ॥ २४
बिभेमि कुन्त्या या नाऽहं युष्माकं वा कदाचन ।
साऽद्याग्रतो विराटस्य भीता तिष्ठामि किंकरी २५
किंनु वक्ष्यति सम्राण्मां वर्णकः सुकृतो न वा ।
नान्यपिष्टं विराटस्य चन्दनं किल रोचते ॥ २६

वैशंपायन उवाच ।
सा कीर्तयन्ती दुःखानि भीमसेनस्य भामिनी ।
रुरोद शनकैः कृष्णा भीमस्योरस्समाश्रिता ॥२७
सा बाष्पकलया वाचा निश्वसन्ती पुनःपुनः ।
हृदयं भीमसेनस्य घटयन्तीदमब्रवीत् ॥ २८
नाल्पं कृतं मया भीम देवानां किल्बिषं पुरा ।
अभाग्या या तु जीवामि मर्तव्ये सति पाण्डव २९
कीचकं चेन्न हन्यास्त्वं स्वात्मानं नाशयाम्यहम् ।
विषमालोड्य पास्यामि प्रवेक्ष्याम्यथवाऽनलम् ।
अभाग्याऽहमपुण्याऽहं नित्यदुःखा च विक्लवा ॥
पापे निपतितायाश्च किं फलं जीवितेन मे ।
इत्यसौ दर्शयामास किणबद्धौ करावुभौ ॥ ३१
ततस्तस्याः करौ पीनौ किणबद्धौ वृकोदरः ।
मुखमानीय वेपन्त्या रुरोद परवीरहा ॥ ३२
तौ गृहीत्वा च कौन्तेयो बाष्पमुत्सृज्य वीर्यवान् ।
ततः परमदुःखार्त इदं वचनमब्रवीत् ॥ ३३

॥ इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## चतुर्विंशोऽध्यायः ॥ २४ ॥

द्रौपदीभीमसंवादः ॥ १ ॥ द्रौपद्या भीमंप्रति हठात्कीचकसंहारचोदना ॥ २ ॥

वैशंपायन उवाच ।
आश्वासयंस्तां पाञ्चालीं भीमसेन उवाच ह ।
शृणु भद्रे वरारोहे क्रोधात्तत्र तु चिन्तितम् ॥ १
त्वां वै सभागतां दृष्ट्वा मात्स्यानां कदनं महत् ।
कर्तुकामेन भद्रं ते वृक्षश्चावेक्षितो मया ॥ २
तत्र मां धर्मराजस्तु कटाक्षेण न्यवारयत् ।
तज्ज्ञात्वाऽवाङ्मुखस्तूष्णीमास्थितोसि महानसं३
शृणुष्वान्यत्प्रतिज्ञातं यद्वदामीह भामिनि ।
धिगस्तु मे बाहुबलं गाण्डीवं फल्गुनस्य च ।
यत्ते रक्तौ पुरा भूत्वा पाणी कृतकिणाविमौ ॥४
तदद्य मां तु तपति यत्कृतं न मया पुरा ।
सभायां स विराटस्य करोमि कदनं महत् ॥ ५
तत्र मे कारणं भाति कौन्तेयो यत्प्रतीक्षते ।
तदहं तस्य विज्ञाय स्थितो धर्मस्य शासने ॥ ६

यच्च राज्यात्प्रच्यवनं कुरूणामवधश्च यः ।
सुयोधनस्य कर्णस्य शकुनेः सौबलस्य च ॥ ७
दुःशासनस्य पापस्य यन्मया न हृतं शिरः ।
तन्मां दहति कल्याणि हृदि शल्यमिवार्पितम् ८
अपि चान्यद्वरारोहे सरिष्यसि वचो मम ।
पुण्ये तीरे सरस्वत्या यत्प्रतिष्ठाम संगताः ।
तत्राहमब्रवं कृष्णे सर्वक्लेशाननुस्मरन् ॥ ९
न चाहमनुगच्छेयं धर्मराजं युधिष्ठिरम् ।
धनञ्जयं च पाञ्चालि माद्रिपुत्रौ च भ्रातरौ ।
कृत्वैतां च मतिं कृष्णे युधिष्ठिरमगर्हयम् ॥ १०
परुषं वचनं श्रुत्वा मम धर्मात्मजस्तदा ।
ह्रीमान्वाक्यमहीनार्थं ब्रुवन्राजा युधिष्ठिरः ।
सर्वानन्वनयद्भ्रातॄन्मुनेर्धौम्यस्य पश्यतः ॥ ११
मा रोदी राज्ञि लोकानां सर्वागमगुणान्विता ।

रक्षितव्यं सहास्माभिः सत्यमप्रतिमं भुवि ॥ १२
अनुनीतेषु चास्मासु अनुनीता त्वमप्यसि ।
मा धर्मं जहि सुश्रोणि क्रोधं जहि महामते॥१३
इमं तु समुपालम्भं त्वत्तो राजा युधिष्ठिरः ।
शृणुयाद्यदि कल्याणि कृत्स्नं जह्यात्स जीवितं १४
धनञ्जयो वा सुश्रोणि यमौ चापि सुमध्यमे ।
लोकान्तरगतेष्वेषु नाहं शक्ष्यामि जीवितुम्॥१५
धर्मं शृणुष्व पाञ्चालि यत्ते वक्ष्यामि मानिनि ॥
दुहिता जनकस्यासीद्वैदेही यदि ते श्रुता ।
पतिमन्वचरत्सीता महारण्यनिवासिनम् ॥ १७
वसन्ती च महारण्ये रामस्य महिषी प्रिया ।
रावणेन हृता सीता राक्षसीभिश्च तर्जिता ।
सा क्लिश्यमाना सुश्रोणी राममेवान्वपद्यत ॥१८
लोपामुद्रा तथा भीरु भर्तारमृषिसत्तमम् ।
भगवन्तमगस्त्यं सा वनायैवान्वपद्यत ॥ १९
सुकन्या नाम शर्यातेर्भार्गवच्यवनं वने ।
वल्मीकभूतं साध्वी तमन्वपद्यत भामिनी ॥ २०
नालायनी चेन्द्रसेना रूपेणाप्रतिमा भुवि ।
पतिमन्वचरद्वृद्धं पुरा वर्षसहस्रिणम् ॥ २१
नलं राजानमेवाथ दमयन्ती वनान्तरे ।
अन्वगच्छत्पुरा कृष्णे तथा भर्तृस्त्वमन्वगाः॥२२
यथैताः कीर्तिता नार्यो रूपवत्यः पतिव्रताः ।
तथा त्वमपि कल्याणि सर्वैः समुदिता गुणैः २३
मा दीर्घं क्षम कालं त्वं त्रिंशद्रात्रमनिन्दिते ।
पूर्णे त्रयोदशे वर्षे राज्ञां राज्ञी भविष्यसि ॥ २४
सत्येन ते शपे चाहं भविता नान्यथेति च ॥२५
सर्वासां परमस्त्रीणां प्रामाण्यं कर्तुमर्हसि ।
सर्वेषां च नरेन्द्राणां मूर्ध्नि स्थास्यसि भामिनि २६
भर्तृभक्त्या च वृत्तेन भोगानाप्स्यसि दुर्लभान् ।
यातायां तु प्रतिज्ञायां महान्तं भोगमाप्नुयाः २७
गुरुभक्तिकृतं ज्ञात्वा राज्ञां मूर्ध्नि स्थिता भवेः २८
द्रौपद्युवाच ।
आर्तप्रलापा कौन्तेय न राजानमुपालभे ।
अपारयन्त्या दुःखानि कृतं बाष्पप्रमोचनम् ॥२९
इदं तु दुःखं कौन्तेय ममासह्यं निबोध तत्॥३०
योऽयं राज्ञो विराटस्य सूतपुत्रस्तु कीचकः ।
स्यालो नाम प्रवादेन भोजस्त्रैगर्तदेशजः ॥ ३१
त्यक्तधर्मो नृशंसश्च सर्वार्थेषु च वल्लभः ।
नित्यमेवाह दुष्टात्मा भार्या मे भव शोभने ।
अविनीतः सुदुष्टात्मा मामनाथेति चिन्तयन् ३२
किमुक्तेन व्यतीतेन भीमसेन महाबल ।
प्रत्युपस्थितकालस्य कार्यस्यानन्तरो भव ॥ ३३
ममेह भीम कैकेयी रूपाढ्ढि भयशङ्किता ।
नित्यमुद्विजते राजा कथं नेयादिमामिति ॥ ३४
तस्या विदित्वा तं भावं स्वयं चानृतदर्शनः ।
कीचकोपि च दुष्टात्मा पुनः प्रार्थयते च मां ३५
तमहं कुपिता भीम पुनः कोपं नियम्य च ।
अब्रवं कामसंमूढमात्मानं रक्ष कीचक ॥ ३६
गन्धर्वाणामहं भार्या पञ्चानां महिषी प्रिया ।
ते त्वां निहन्युर्दुर्धर्षाः शूराः साहसकारिणः ३७
एवमुक्तस्तु दुष्टात्मा कीचकः प्रत्युवाच ह ।
नाहं बिभेमि सैरन्ध्रि गन्धर्वाणां शुचिस्मिते ३८
शतं सहस्रमपि वा गन्धर्वाणामहं रणे ।
समागतं हनिष्यामि त्वं भीरु कुरु मे क्षणम्॥३९
इत्युक्ता चाब्रवं सूतं कामातुरमहं पुनः ।
न त्वं प्रतिबलस्तेषां गन्धर्वाणां यशस्विनाम्॥४०
धर्मे स्थिताऽसि सततं कुलशीलसमन्विता ।
नेच्छामि किंचिद्वध्यं त्वां तस्माज्जीवसि कीचक ॥
एवमुक्तस्तु दुष्टात्मा प्रहस्य स्वनवत्ततः ।
न तिष्ठति स सन्मार्गे न च धर्मं बुभूषति ॥४२
पापात्मा पापकारी च कामराजवशानुगः ।
अविनीतश्च दुष्टात्मा प्रत्याख्यातः पुनःपुनः ४३
दर्शनेदर्शने हन्याद्यदि जह्यां च जीवितम् ।
धर्मे प्रयतमानानां महान्धर्मो नशिष्यति ॥ ४४
समयं रक्षमाणानां दारा वो न भवन्ति च ।

मा दीर्घं क्षम कालं त्वं मासमर्धं च संमितमिति झ. पाठः ॥ २४ ॥ प्राधान्यं कर्तुमर्हसि इति ख. पाठः ॥ २६ ॥ दुःखस्यान्तकरो भवेति ध. पाठः ॥ ३३ ॥ चतुर्विंशोऽध्यायः ॥ २४ ॥

भार्यायां रक्ष्यमाणायां प्रजा भवति रक्षिता ।
प्रजायां रक्ष्यमाणायामात्मा भवति रक्षितः॥४५
वदतां वर्णधर्मांश्च ब्राह्मणानां च मे श्रुतम् ।
क्षत्रियस्य सदा धर्मो नान्यो दस्युनिबर्हणात् ४६
पश्यतो धर्मराजस्य कीचको माऽन्वधावत ।
तवैव च समक्षं वै भीमसेन महाबल ॥ ४७
त्वया चाहं परित्राता भीम तस्माज्जटासुरात् ४८
जयद्रथं तथैव त्वमजैषीर्भ्रातृभिः सह ।
जहीममपि पापिष्ठं योयं मामवमन्यते ।
कीचको राजवाल्लभ्याच्छोककृन्मम भारत ॥४९
कीचकं कामसन्तप्तं भिन्धि कुम्भमिवाश्मनि ।
यो निमित्तमनर्थानां बहूनां मम भारत ॥ ५०
तं चेज्जीवन्तमादित्यः प्रातरभ्युदयिष्यति ।
विषमालोड्य पास्यामि मा कीचकवशंगमम्॥५१
श्रेयो हि मरणं मह्यं भीमसेन तवाग्रतः ।
इत्युक्त्वा प्रारुदत्कृष्णा भीमस्योरसि संश्रिता ५२
भीमश्च तां परिष्वज्य महत्सान्त्वं प्रयुज्य च ।
कीचकं मनसाऽगच्छत्सृक्किणी परिलेलिहन्॥५३
आश्वासयित्वा बहुशो भृशमार्तां सुमध्यमाम् ।
हेतुतत्वार्थसंयुक्तैर्वचोभिर्द्रुपदात्मजाम् ॥ ५४
प्रमृज्य वदनं तस्याः पाणिनाऽश्रुसमाकुलम् ।
उवाच चैनां दुःखार्तां भीमः क्रोधसमन्वितः५५

॥ इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

## पञ्चविंशोऽध्यायः ॥ २५ ॥

द्रौपद्या भीमवचनात्कीचकंप्रति नर्तनशालाया उभयोः समागमे संकेतस्थानत्वनिर्धारणेन रात्रौ तत्रागमनचोदना ॥ १ ॥

भीम उवाच ।
तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे ।
अद्यैनं सूदयिष्यामि कीचकं सह बान्धवैः ॥ १
अस्याः प्रदोषे शर्वर्याः कुरुष्वानेन संविदम् ।
दुःखं शोकं च निर्धूय याज्ञसेनि शुचिस्मिते॥२
यैषा नर्तनशालेह मत्स्यराजेन कारिता ।
दिवात्र कन्या नृत्यन्ति रात्रौ यान्ति तथा गृहं ॥३
तत्रास्ति शयनं भीरु दृढाङ्गं सुप्रतिष्ठितम् ।
तत्रैनं दर्शयिष्यामि पूर्वप्रेतान्पितामहान् ।
त्वद्दर्शनसमुत्थेन कामेनाकुलितेन्द्रियम् ॥ ४
संकेतं सूतपुत्रस्य कारयस्व शुभानने ।
यथा परे न पश्येयुः कुर्वन्तीं तेन संविदम् ॥ ५
तथा कुरुष्व कल्याणि यथा सन्निहितो भवेत् ।
तथा कुर्याश्च संकेतं सूतपुत्रस्य संवृतम् ॥ ६
आवयोः संगमं भीरु यथा मर्त्यो न बुध्यति ।
कीचकस्य विनाशाय तथा कुरु नृपात्मजे ॥ ७
वैशंपायन उवाच ।
तत्र तौ कथयित्वा तु बाष्पमुत्सृज्य दुःखितौ ।
रात्रिशेषं तमत्युग्रं धारयामासतुर्हृदि ॥ ८
भीमेन च प्रतिज्ञाते कीचकस्य वधे तदा ।
द्रौपदी च सुदेष्णायाः प्रविवेश पुनर्गृहम् ॥ ९
तस्यां रजन्यां व्युष्टायां प्रातरुत्थाय कीचकः ।
गत्वा राजकुलायैव द्रौपदीमिदमब्रवीत् ॥ १०
यत्त्वाऽहं पश्यतो राज्ञः पातयित्वा पदाऽहनम् ।
न कंचिल्लभसे नाथमभिपन्ना बलीयसा ॥ ११
प्रवादेन तु मात्स्यानामयं राजेति चोच्यते ।
अहमेव हि राजा वै मात्स्यानां वाहिनीपतिः १२
सा सुखं प्रतिपद्यस्व दासो भीरु भवामि ते ।
न ह्यहं त्वामृते भीरु चिरं जीवितुमुत्सहे ॥ १३
अहन्यहनि सुश्रोणि शतनिष्कं ददामि ते ।
दासीशतं च ते दद्यां दासानामपि चापरम्॥१४
रथांश्चाश्वतरीयुक्तानस्तु नौ भीरु संगमः ।
सुदासानां सहस्रं च महिषाणां सहस्रकम्॥ १५
अन्तःपुरसहस्रं च हेमकूटसहस्रकम् ।
तुभ्यं दास्यामि सर्वाणि राजार्हाण्यम्बराणि च१६
द्रौपद्युवाच ।
एतन्मे वचनं सत्यं प्रतिपद्यस्व कीचक ।
न ते सखा वा भ्राता वा जानीयात्संगमं मया १७

अनुप्रवादाद्भीताऽसि गन्धर्वाणां यशस्विनाम् ।
अनुबोधादनर्थः स्यादयशश्च महद्भवेत् ।
एतन्मे प्रतिजानीहि ततोऽहं वशगा तव ॥ १८
कीचक उवाच ।
एवमेतत्करिष्यामि यथा सुश्रोणि भाषसे ।
एकोऽहमागमिष्यामि शून्यमावसथं तव ॥ १९
समागमार्थं रम्भोरु त्वया मदनदर्पितः ।
यथा त्वां नैव पश्येयुर्गन्धर्वाः सूर्यवर्चसः ॥ २०
द्रौपद्युवाच ।
यदेतन्नर्तनागारं मात्स्यराजेन कारितम् ।
दिवात्र कन्या नृत्यन्ति रात्रौ यान्ति स्वकं गृहं २१
निशायां तत्र गच्छेथा गन्धर्वास्तन्न जानते ।
तत्र दोषः परिहृतो भविष्यति न संशयः ॥ २२
एकस्त्वं नर्तनागारं रात्रौ संकेतमाव्रज ।
तत्राहं भविता तुभ्यं वशगा नात्र संशयः ॥ २३
कीचक उवाच ।
तथा भद्रे करिष्यामि यथा त्वं भीरु वक्ष्यसि ।
एकः सन्नर्तनागारमागमिष्यामि भामिनि ।
समागमार्थं सुश्रोणि शपे च सुकृतेन मे ॥ २४
यथा त्वां नावबुध्यन्ति गन्धर्वा वरवर्णिनि ।
सत्यं ते प्रतिजानामि गन्धर्वेभ्यो न ते भयम् ।
अलंकरिष्याम्यद्याहं त्वत्समागमनाय वै ॥ २५
वासांसि च विचित्राणि मनोज्ञानि तवापि च ।
यथा मां न त्यजेथास्त्वं तथा रंस्ये त्वया सह २६
द्रौपद्युवाच ।
तथा चेदप्यहं सूत दर्शयिष्यामि ते सुखम् ।
यन्नानुभूतं भवता जन्मप्रभृति कीचक ॥ २७
वैशंपायन उवाच ।
तमर्थमपि जल्पन्त्या द्रौपद्याः कीचकस्य ह ।
क्षणमात्रं तदभवन्मासेनैव समं नृप ॥ २८
कीचकोऽथ गृहं गत्वा भृशं हर्षपरिप्लुतः ।
सैरन्ध्रीरूपिणीं मूढो मृत्युं तां नावबुद्धवान् ॥२९
गन्धाभरणमाल्येषु व्यासक्तः स विशेषतः ।
अलंचक्रे तदाऽऽत्मानं सत्वरः काममोहितः ३०
तस्य तत्कुर्वतः कर्म कालो दीर्घ इवाभवत् ।
अनुचिन्तयतश्चापि तामेवायतलोचनाम् ॥ ३१
आसीदभ्यधिका चापि श्रीः श्रियं प्रमुमुक्षतः ।
निर्वाणकाले दीपस्य वर्तीमिव दिधक्षतः ॥ ३२
कृतसंप्रत्ययस्तस्याः कीचकः काममोहितः ।
नाजानात्पतनं स्वस्य चिन्तयंस्तां शुभाननाम् ३३
ततस्तु द्रौपदी गत्वा भीमसेनं महानसे ।
उपातिष्ठत कल्याणी कौरव्यं पतिमन्तिकात् ३४
तमुवाच सुकेशान्ता कीचकस्य कृतो मया ।
सङ्गमो नर्तनागारे यथाऽवोचः परन्तप ॥ ३५
कालेन नियतं बद्धः कामेन च बलात्कृतः ।
शून्यं स नर्तनागारमागमिष्यति कीचकः ।
एको निशि महाबाहो कीचकं तं निषूदय ॥३६
तं सूतपुत्रं कौन्तेय कीचकं मददर्पितम् ।
गत्वा त्वं नर्तनागारं निर्जीवं कुरु पाण्डव ॥ ३७
गर्वितः सूतपुत्रोऽसौ गन्धर्वानवमन्यते ।
स त्वं प्रहरतांश्रेष्ठ नालं नाग इवोद्धर ॥ ३८
अस्रं दुःखाभिभूताया मम मार्जस्व भारत ।
बाहुवीर्यानुरूपं च दर्शयाद्य पराक्रमम् ।
आत्मनश्चैव भद्रं ते कुरु मानं कुलस्य च ॥ ३९
भीम उवाच ।
स्वागतं ते वरारोहे यन्मां वेदयसे प्रियम् ।
नह्यस्य कंचिदिच्छामि सहायं वरवर्णिनि ॥ ४०
सा मे प्रीतिस्त्वयाऽऽख्याता कीचकस्य समागमे ।
हत्वा हिडिम्बं या प्रीतिर्ममासीत्सा शुचिस्मिते ४१
सत्यं भ्रातॄंश्च पुत्रांश्च पुरस्कृत्य शपामि ते ।
कीचकं निहनिष्यामि वृत्रं देवपतिर्यथा ॥ ४२
प्रसह्य निहनिष्यामि केशवः केशिनं यथा ।
रहस्यं वा प्रकाशं वा सूदयिष्यामि कीचकम् ॥ ४३
अहं भद्रे हनिष्यामि कीचकं मदनान्वितम् ।
यस्त्वां कामाभिभूतात्मा दुर्लभामभिमन्यते ॥४४
अथ चेदवबुध्यन्ति सूतपुत्रं मया हतम् ।
निर्मनुष्यं करिष्यामि मत्स्यानामिदमालयम् ॥४५
मया हतांश्चेन्मात्स्यांस्तु धार्तराष्ट्रो विबुध्यति ।
दुर्योधनं ततो हत्वा सानुबन्धं सबान्धवम् ।

कुरूणामखिलं राज्यं प्रतिपत्स्यामि भामिनि ४६
नाहं शक्तोऽनुनयितुं कुन्तीपुत्रं युधिष्ठिरम् ।
कामं सत्यमुपासीत कुन्तीपुत्रो युधिष्ठिरः ।
काममन्ये ह्युपासन्तु विनीता धर्मचारिणः ॥ ४७
त्वां तु दुःखमिदं प्राप्तां नाहं शक्तोम्युपेक्षितुम् ।
निर्वृता भव पाञ्चालि कीचकस्य वधात्पुनः ॥४८
द्रौपद्युवाच ।
कीचकस्य वधं भीम यदि जानन्ति नागराः ।
त्वया कृतं महाबाहो नाहं जीवितुमुत्सहे ॥ ४९
कथं सत्याच्च नापेयाद्राजाऽयं मत्कृते प्रभो ।
निशि गूढं तथा भीम कीचकं तं निपातय ॥ ५०
अनुबुद्धे हि कौन्तेयो धर्मराजो युधिष्ठिरः ।
पुनर्वनं व्रजेद्धीमाननुजैः परिवारितः ॥ ५१
कश्च धर्मपरं ज्येष्ठमतिवर्तेत भारत ।
भीम भीताऽस्मि संबोधात्साधु मा चापलं कृथाः ॥
यथा न कश्चिज्जानीते सूतपुत्रं त्वया हतम् ।
तथा कुरुष्व कौरव्य बलवन्नरिमर्दन ।
अदृश्यमानस्त्वं तस्य भिन्धि प्राणानरिन्दम ॥ ५३

॥ इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

---

## षड्विंशोऽध्यायः ॥ २६ ॥

भीमेन कीचकागमनात्पूर्वमेव नर्तनागारमेत्य शय्यायां शयनम् ॥ १ ॥ पश्चात्समागतेन कीचकेन भीमंप्रति द्रौपदीबुद्ध्या संस्पर्शनपूर्वकं संभाषणम् ॥ २ ॥ भीमेन नियुद्धेन कीचकमारणम् ॥ ३ ॥ पश्चाद्द्रौपद्या समाह्वानादुपकीचकानां तत्र समागमनम् ॥ ४ ॥

---

भीम उवाच ।
तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे ।
अदृश्यमानस्तस्याहं तमिस्रायां सकुण्डलम् ॥ १
नागो बिल्वमिवाक्रम्य पोथयिष्यामि तच्छिरः ।
अलभ्यामिच्छतस्तस्य कीचकस्य दुरात्मनः ॥ २
मया यदुक्तं पाञ्चालि धर्मराजसुतं प्रति ।
कोपादृते किमन्यत्तु नानुवर्तेत को नृपम् ॥ ३
वैशंपायन उवाच ।
एवमुक्त्वा महाबाहुस्तत्र पाण्डवनन्दनः ।
अर्धरात्रे तदोत्थाय सत्ववान्भीमविक्रमः ॥ ४
अवदातेन मृदुना पटेनाच्छादितस्तथा ।
द्रौपदीं पृष्ठतः कृत्वा यत्रासीन्नर्तनालयः ॥ ५
स भीमः प्रथमं गत्वा तमिस्रायामुपाविशत् ।
मृगं सिंह इवादृश्यः प्रत्याकाङ्क्षत्स कीचकम् ॥६
कीचकस्तु शिरःस्नातो निशायां समलंकृतः ।
सङ्केतमगमत्तूर्णं शून्यागारमपावृतम् ॥ ७
तदेव नर्तनागारं पाञ्चाली यदभाषत ।
तां मन्यमानः संकेते सैरन्ध्रीं काममोहितः ॥ ८
प्रविश्य नर्तनागारं ततस्तं पुरुषर्षभम् ।
पूर्वागतं भीमसेनं दृप्तमप्रतिमौजसम् ॥ ९
शयानं शयने तत्र मृत्युं मूढः परामृशत् ।
जाज्वल्यमानं कोपेन कृष्णाधर्षणजेन च ॥ १०
एकान्ते भीममासाद्य कीचकः कालचोदितः ।
हर्षोन्मथितचित्तात्मा स्मयमानोऽभ्यभाषत ॥११
प्रहितं ते मया भद्रे बहुवित्तं शुचिस्मिते ।
त्वयि तिष्ठतु तत्सर्वं यथाऽसि स्वयमागता ॥१२
अकस्मान्मां प्रशंसन्ति सदा गृहगताः स्त्रियः ।
बलवान्दर्शनीयश्च नान्यस्ते सदृशः पुमान् ॥ १३
अहं रूपेण संपन्नः स्नातो गुरुविभूषितः ।
नित्यमेव प्रियः स्त्रीणां सौभाग्यात्प्रियदर्शनः ।
रूपस्य तन्मया प्राप्तं फलं कमललोचने ॥ १४
भीम उवाच ।
दिष्ट्या त्वं दर्शनीयोसि दिष्ट्याऽऽत्मानं प्रशंससि ॥
त्वयाऽपीदृग्गुणा नारी रूपशीलसमन्विता ।
अदृष्टपूर्वा पश्य त्वं यतो जानासि सूतज ।
द्रक्ष्यसि त्वं मुहूर्तेन यथेयं स्त्री गुणान्विता ॥१६
उपरंस्यसि कामाच्च शीघ्रं त्वं स्प्रष्टुमर्हसि ।
ईदृशस्तु त्वया स्पर्शः स्पृष्टपूर्वो न कर्हिचित् ॥१७

स्पर्शं वेत्सि विदग्धस्त्वं कामधर्मविचक्षणः ।
स्त्रीणां प्रीतिकरो नान्यस्त्वत्समः पुरुषस्त्विह १८
वैशंपायन उवाच ।
इत्युक्त्वा तं महाबाहुर्भीमो भीमपराक्रमः ।
सहसोत्पत्य कौन्तेयः प्रहस्येदमुवाच ह ॥ १९
अद्य त्वां भगिनी पापं कृष्यमाणं मया भुवि ।
द्रक्ष्यतेऽद्रिप्रतीकाशं सिंहेनेव महागजम् ॥ २०
निराबाधा त्वयि हते सैरन्ध्री विचरिष्यति ।
सुखमेव चरिष्यन्ति सैरन्ध्र्याः पतयः सदा ॥ २१
ततो जग्राह केशेषु माल्यवत्सु सुगन्धिषु ॥ २२
गृहीत्वा कीचकं भीमो विरराज महाबलः ।
गृहीत्वा ग्रासकामस्तु सिंहः क्षुद्रमृगं यथा ॥२३
स केशेषु परामृष्टो बलेन बलिनां वरः ।
आक्षिप्य केशान्वेगेन बाह्वोर्जग्राह पाण्डवम् ॥२४
बाहुयुद्धं तयोरासीत्क्रुद्धयोर्नरसिंहयोः ।
वसन्ते वासिताहेतोर्बलिनोर्नागयोरिव ॥ २५
कीचकानां तु मुख्यस्य नराणामुत्तमस्य च ।
वालिसुग्रीवयोर्भ्रात्रोः पुरेव कपिसिंहयोः ॥ २६
शार्दूलाविव गर्जन्तौ तार्क्ष्यनागाविवोद्यतौ ।
समयत्तौ समक्रोधौ पतितौ भीमकीचकौ ॥ २७
गजाविव मदोन्मत्तौ नदन्तौ पतितौ क्षितौ ।
वृषभाविव वल्मीकं मृद्नन्तौ समविक्रमौ ॥ २८
ईषदागलितं चापि क्रोधाच्चावाङ्मुखं स्थितम् ।
कीचको बलवान्भीमं जानुभ्यां पातयद्भुवि ॥२९
पातितो भीमसेनस्तु कीचकेन बलीयसा ।
उत्पपाताथ वेगेन दण्डाहत इवोरगः ॥ ३०
स्पर्धया च बलोन्मत्तौ तावुभौ भीमकीचकौ ।
निश्शब्दं पर्यकर्षेतामन्योन्यस्य विनिर्जये ॥ ३१
ततस्तद्भवनश्रेष्ठं प्राकम्पत तदा भृशम् ।
तौ क्रोधवशमापन्नावन्योन्यमभिजघ्नतुः ॥ ३२
तलाभ्यां भीमसेनेन वक्षस्यभिहतो बली ।
कीचको रोषरक्ताक्षो न चचाल पदात्पदम् ॥३३
मुहूर्तमशकत्सोढुं वेगं तस्य महात्मनः ।
कीचको भीमसेनेन पश्चात्पश्चादहीयत ॥ ३४
तं हीयमानं विज्ञाय भीमसेनो महाबलः ।
वक्षस्यानीय वेगेन प्रममाथ विचेतसम् ॥ ३५
क्रोधाविष्टो विनिश्वस्य पुनश्चैनं वृकोदरः ।
जग्राह जयतांश्रेष्ठः केशेष्वेव भृशं तदा ॥ ३६
गृहीत्वा कीचकं भीमो विरराज महाबलः ।
आमिषार्थे गृहीत्वैव शार्दूलो मृगयूथपम् ॥ ३७
पुनश्चातिबलस्तत्र कीचको बलदर्पितः ।
व्यायच्छन्नेव दुर्धर्षः पाण्डवेन तरस्विना ॥ ३८
मुष्टिना भीमसेनेन शिरस्यभिहतो भृशम् ।
कीचको वृत्तरक्ताक्षो गतासुरपतद्भुवि ॥ ३९
आस्ये पाणी च पादौ च शिरोग्रीवां सकुण्डलाम् ।
काये प्रवेशयामास मृदित्वाऽङ्गानि सर्वशः ॥४०
स तं मथितसर्वाङ्गं मांसपिण्डमथाकरोत् ॥ ४१
तत्राग्निं स्वयमुज्ज्वाल्य पाणिसंघर्षजं बली ।
कृष्णायै दर्शयामास भीमसेनो महाबलः ॥ ४२
उवाच च महातेजा द्रौपदीं योषितां वराम् ।
त्वयि कामुकमत्यन्तं पापिनं पारदारिकम् ।
पश्यैनमेहि पाञ्चालि कामुकोऽयं मया हतः ॥४३
प्रार्थयन्ते सुकेशान्ते ये त्वां शीलसमन्विताम् ।
एवं स्वपन्ति ते भीरु शेतेऽयं कीचको यथा ।
यस्त्वामभ्यहनद्भद्रे पदा भूमौ निपात्य च ॥४४
एवमुक्त्वा महाबाहुर्गन्धर्वेण हतं तदा ।
विज्ञापनार्थमन्येषां विरराम महाहवम् ॥ ४५
तथा स कीचकं हत्वा गत्वा रोषस्य निष्कृतिम् ।
आमन्त्र्य द्रौपदीं पश्चात्क्षिप्रमायान्महानसम् ॥४६
स्नात्वाऽनुलेपनं कृत्वा व्यापूर्य च मनोरथम् ।
सुखोपविष्टः शयने भीमो भीमपराक्रमः ॥ ४७
ततः कृष्णा यदा मेने गतं भीमं महानसम् ।
कीचकं घातयित्वा च द्रौपदी योषितां वरा ।
प्रहृष्टा गतसंत्रासा सभापालानुवाच ह ॥ ४८
कीचको निहतः शेते गन्धर्वैः पतिभिर्मम ।
परस्त्रीकामसंतप्तः समागच्छन्त पश्यत ॥ ४९
तच्छ्रुत्वा भाषितं तस्या नर्तनागाररक्षिणः ।
सहसैव समुत्तस्थुरुल्कामादाय सर्वशः ॥ ५०

तस्यास्तं निहतं श्रुत्वा कीचकस्य सहोदराः ।
ततो गत्वा तु तद्वेश्म कीचकं विनिपातितम् ।
गतासुं ददृशुर्भूमौ रुधिरेण समुक्षितम् ॥ ५१
पार्ष्णिपाणिशिरोहीनं दृष्ट्वा ते विस्मिताऽभवन् ॥
क्वास्य ग्रीवा क्व चरणौ क्व पाणी क्व शिरः क्व दृक् ।
इति स्म ते परीक्षन्ते गन्धर्वेण हतं तदा ॥ ५३
अमानुषं कृतं कर्म तं दृष्ट्वा विनिपातितम् ।
निरीक्षन्ते ततः सर्वे परं विस्मयमागताः ॥ ५४

॥ इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

---

## सप्तविंशोऽध्यायः ॥ २७ ॥

भ्रातृवधामर्षितैरुपकीचकैः पाञ्चाल्याः कीचकेन सह चरमविमानसमारोपणेन श्मशानप्रापणम् ॥ १ ॥ द्रौपदीसमाक्रन्दनिनदश्रवणात्पितृवनमुपागतवता भीमेनोपकीचकानां पञ्चाधिकशतस्य पञ्चताप्रापणम् ॥ २ ॥ भीमेन द्रौपद्याः पतिव्रतोपाख्यानकथनात्समाश्वासनेन स्वावासप्रेषणपूर्वकं महानसप्रवेशः ॥ ३ ॥

वैशंपायन उवाच ।
तत्काले तु समागम्य सर्वे तत्रास्य बान्धवाः ।
रुरुदुः कीचकं दृष्ट्वा परिवार्योपतस्थिरे ॥ १
सर्वे संहृष्टरोमाणः संत्रस्ताः प्रेक्ष्य कीचकम् ।
तथा संभुग्नसर्वाङ्गं कूर्मं स्थल इवोद्धृतम् ॥ २
पोथितं भीमसेनेन महेन्द्रेणेव दानवम् ।
कीचकं बलसंमत्तं दुर्धर्षं येन केन चित् ॥ ३
गन्धर्वेण हतं श्रुत्वा कीचकं पुरुषर्षभम् ।
संस्कारयितुमिच्छन्तो बहिर्नेतुं प्रचक्रमुः ॥ ४
अपश्यन्नथ ते कृष्णां सूतपुत्राः समागताः ।
अदूरादनवद्याङ्गीं स्तम्भमालिङ्ग्य तिष्ठतीम् ॥ ५
समागतेषु सूतेषु तानुवाचोपकीचकः ।
हसन्निव तदाऽमर्षान्निर्दहन्निव चक्षुषा ॥ ६
हन्यतां शीघ्रमसती यत्कृते कीचको हतः ।
अथवा नैव हन्तव्या दह्यतां कामिना सह ॥ ७
मृतस्यापि प्रियं कार्यं सूतपुत्रस्य सर्वथा ।
इयं हि दुष्टचरिता मम भ्रातुरमित्रिणी ॥ ८
यत्कृते मरणं प्राप्तो नेयं जीवितुमर्हति ।
सहेयं दह्यतां सूता आमन्त्र्य च जनाधिपम् ।
हतस्यापि हि गन्धर्वैः कीचकस्य प्रियं भवेत् ॥ ९
वैशंपायन उवाच ।
ततो विराटमासाद्य सूताः प्राञ्जलयोऽब्रुवन् ।
कीचकोऽयं हतः शेते गन्धर्वैः कामरूपिभिः ॥ १०
सैरन्ध्र्या घातितो रात्रौ तं दहेम सहानया ।
मानिताः स्मस्त्वया वीर तदनुज्ञातुमर्हसि ॥ ११
पराक्रमं तु सूतानां ज्ञात्वा राजाऽन्वमन्यत ।
सैरन्ध्र्याः सूतपुत्रेण सह दाहं नराधिपः ॥ १२
ततस्ते समनुज्ञाताः सर्वे तत्रास्य बान्धवाः ।
रुरुदुः कीचकं दृष्ट्वा परिवार्याभितः स्थिताः ॥ १३
आरोप्य कृष्णां सह कीचकेन
निबध्य केशेषु च पादयोश्च ।
ते चापि सूता वचनैरवोच-
न्नुद्दिश्य चैनामभिवीक्ष्य कृष्णाम् ॥ १४
यस्याः कृतेऽयं निहतो महात्मा
तस्माद्धि सा कीचकमार्गमेतु ।
अवार्यसत्वेन च कीचकेन
गतासुना सुन्दरी स्वर्गलोकम् ॥ १५
सा तेन कृष्णा शयने निबद्धा
यशस्विनी चैव मनस्विनी च ।
अनार्यसत्त्वेन महार्यसत्त्वा
गतासुना सा प्ररुरोद कृष्णा ।
विलम्बमाना विवशा हि दुष्टै-
स्तत्रैव पर्यङ्कवरे शुभाङ्गी ॥ १६
ह्रियमाणाऽथ सुश्रोणी सूतपुत्रैरनिन्दिता ।
आक्रोशन्नाथमिच्छन्ती कृष्णा नाथवती सती ॥ १७
मृतेन सह बद्धाङ्गी निराशा जीविते तदा ।
श्मशानाभिमुखं नीता करेणुरिव रौति सा ॥ १८

द्रौपद्युवाच ।
जयो जयेशो विजयो जयत्सेनो जयद्बलः ।
ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम् १९
येषां दुन्दुभिनिर्घोषो ज्याघोषः श्रूयते महान् ।
ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम् २०
येषां ज्यातलनिर्घोषो विस्फूर्जितमिवाशनेः ।
अश्रूयत महान्युद्धे भीमघोषस्तरस्विनाम् ॥ २१
रथघोषश्च बलवान्गन्धर्वाणां तरस्विनाम् ।
ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम् २२
येषां वीर्यमतुल्यं तु शक्रस्येव बलं यशः ।
राजसिंहा इवाग्ध्यास्ते मां जानन्तु सुदुःखितां २३
इत्यस्याः कृपणा वाचः कृष्णायाः परिदेविताः ।
श्रुत्वैवाभ्युत्थितो भीमः शयनादविचारयन्॥२४
भीम उवाच ।
अहं सैरन्ध्रि ते वाचः शृणोमि तव भाषिताः ।
तस्मात्ते सूतपुत्रेभ्यो न भयं जातु विद्यते ॥ २५
वैशंपायन उवाच ।
इत्युक्त्वा स महाबाहुर्विजजृम्भे जिघांसया॥२६
ततः स व्यायतं बद्ध्वा वस्त्रं विपरिवेष्ट्य च ।
अद्वारेणाभ्यवस्कन्द्य निर्जगाम बहिस्तदा ॥ २७
स लङ्घयित्वा प्राकारमारुह्य तरसा द्रुमम् ।
श्मशानाभिमुखः प्रायाद्यत्र ते कीचका गताः२८
स लङ्घयित्वा प्राकारं निःसृत्य च पुरोत्तमात् ।
जवेनोत्पतितो भीमः सूतानामग्रतस्तदा ॥ २९
चितासमीपं गत्वा स तत्रापश्यन्महाबलः ।
तालमात्रं महास्कन्धमूर्ध्वशुष्कं वनस्पतिम् ॥३०
तं नागवदुपक्रम्य बाहुभ्यां परिरभ्य च ।
वृक्षमुत्पाटयामास भीमो भीमपराक्रमः ॥ ३१
ततो वृक्षं दशव्यामं निष्पत्रमकरोत्तदा ॥ ३२
तं महाकायमुद्यम्य भ्रामयित्वा च वेगितः ।
प्रगृह्याभ्यपतत्सूतान्दण्डपाणिरिवान्तकः ॥ ३३
ऊरुवेगेन तस्याथ न्यग्रोधाश्वत्थकिंशुकाः ।
भूमौ निपतिता वृक्षाः संभ्रमास्तत्र शेरते ॥ ३४
तं सिंहमिव संक्रुद्धं दृष्ट्वा गन्धर्वमागतम् ।
वित्रेसुश्च तदा सूता विषादभयपीडिताः ॥ ३५
तमन्तकमिव क्रुद्धं गन्धर्वभयशङ्किताः ।
दिधक्षन्तस्तथा ज्येष्ठं भ्रातरं चोपकीचकाः ।
परस्परमथोचुस्ते विषादभयमोहिताः ॥ ३६
गन्धर्वो बलवानेति क्रुद्ध उद्यम्य पादपम् ।
प्रबुद्धाः सुमहाभागा गन्धर्वाः सूर्यवर्चसः ।
सैरन्ध्री मुच्यतां शीघ्रं भयं नो महदागतम्॥३७
वैशंपायन उवाच ।
ते दृष्ट्वाऽथ समाविद्धं भीमसेनेन पादपम् ।
विमुच्य द्रौपदीं त्रस्ताः प्राद्रवन्नगरं प्रति ॥ ३८
द्रवतस्तांश्च संप्रेक्ष्य स वज्री दानवानिव ।
अथ भीमः समुत्पत्य द्रवतां पुरतोऽभवत् ॥ ३९
ते तं दृष्ट्वा भयोद्विग्ना निश्चेष्टाः समवस्थिताः ४०
दृष्ट्वा तान्शतसङ्ख्याकान्स वज्री दानवानिव ।
एकेनैव प्रहारेण दश सप्त च विंशतिम् ।
अष्टादश च पञ्चाशज्जघान स वृकोदरः ॥ ४१
शतं पञ्चाधिकं भीमः प्राहिणोद्यमसादनम् ।
वृक्षेणैकेन राजेन्द्र प्रभञ्जनसुतो बली ।
वायुवेगसमः श्रीमान्सर्वान्सूतानशेषतः ॥ ४२
तान्निहत्य महाबाहुर्भीमसेनो महाबलः ।
आश्वासयत्तदा कृष्णां प्रतिमुच्य च बन्धनात्४३
उवाच श्लक्ष्णया वाचा पाञ्चालीं भरतर्षभः ।
अश्रुपूर्णमुखीं भीतामुद्धरन्स वृकोदरः ॥ ४४
[मा खिद*स्त्वं याज्ञसेनि पातिव्रत्यव्रते स्थिता ।
पातिव्रत्ये स्थिता नारी व्रतं रक्षेत्सदाऽऽत्मनः ॥
पुरा स्त्री देवरातस्य पतिप्रीता शिरोमणिः ।
कदाचिद्भर्तृरूपेण रक्षसाऽपहृता सती ॥ ४६
कस्यचित्सरसस्तीरे तां निवेश्य स राक्षसः ।
तद्भर्तृरूपं संत्यज्य रक्षो भूत्वा सुदारुणम् ॥ ४७
साम्ना दानेन भेदेन सा यदा नान्वमन्यत ।
तदा तां पातयित्वा स मैथुनायोपचक्रमे ॥ ४८
ततः सा धैर्यमास्थाय विवरं न ददौ तदा ।

* इमे १० श्लोकाः ध. पुस्तकएव दृश्यन्ते ॥

ततः स खड्गमुत्कृष्य भीषयामास तां सतीम् ४९
साऽपि त्यक्तभया साध्वी प्राणत्यागे सुनिश्चिता।
प्रतिज्ञामकरोत्कृष्णे पातिव्रत्यपरायणा ॥ ५०
आराधितो यदि मया भर्ता मे दैवतं महत्।
कर्मणा मनसा वाचा गुरवस्तोषिता मया।
तेन सत्येन योनिर्मे भवत्वद्य शिला दृढा ॥ ५१
एवं तया प्रतिज्ञाते तद्योनिः सा शिलाऽभवत्।
अन्तरा नाभिजान्वोर्यत्तत्सर्वं च शिलाऽभवत्५२
ततः स खड्गमुद्धृत्य वेगेनास्याः शिरोऽहरत् ॥५३
जया नाम सखी साऽभूत्पार्वत्या नखमांसवत्।
तस्मात्पतिव्रतायाश्च दुःखमल्पं सुखं बहु ॥] ५४
एवं ते भीरु वध्यन्ते ये त्वां हिंसन्ति मानवाः।
गच्छ त्वं नगरं कृष्णे न भयं विद्यते तव ॥ ५५
अन्येन त्वं पथा शीघ्रं सुदेष्णाया निवेशनम्।
अन्येनाहं गमिष्यामि विराटस्य महानसम्।
यथा नौ नावबुध्येरन्नात्रावेवं व्यवस्थितौ ॥ ५६
वैशंपायन उवाच।
साऽगच्छन्नगरं कृष्णा भीमेनाश्वासिता सती ५७
कृतकृत्या सुदेष्णाया भवनं शुभलक्षणा।
शचीव नहुषे शप्ते प्रविवेश त्रिविष्टपम् ॥ ५८
भीमोऽप्यमितवीर्यस्तु बलवानरिमर्दनः।
सर्वांस्तान्कीचकांस्तत्र हत्वा धर्मात्मजानुजः ॥५९
निःशेषं कीचकान्हत्वा रामो रात्रिचरानिव।
जितशत्रुरदीनात्मा प्रविवेश पुरं ततः ॥ ६०
पञ्चाधिकं शतं तत्र निहतं तेन भारत।
महावनमिव छिन्नं शिश्ये विगलितद्रुमम् ॥ ६१
एवं ते निहता राजञ्शतं पञ्चोपकीचकाः।
स च सेनापतिः सूत इत्येतत्सूतषट्शतम् ॥ ६२
न गन्धर्वभयात्किंचिद्वक्तुं कीचकबान्धवाः।
अशक्नुवन्तस्तां तत्र भयादप्यभिवीक्षितुम् ॥ ६३
विराटनगरे चापि सर्वे मात्स्याः समागताः।
काल्यं पञ्चशतं चैतानपश्यन्सारथीन्हतान् ॥ ६४
तद्दृष्ट्वा महदाश्चर्यं नरा नार्यश्च नागराः।
विस्मयं परमं गत्वा नोचुः किंचन भारत ॥ ६५

॥ इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

## अष्टाविंशोऽध्यायः ॥ २८ ॥

पौरैर्विराटंप्रति सानुजकीचकनिधननिवेदनपूर्वकं नगराद्द्रौपदीनिष्कासनप्रार्थना ॥ १ ॥ सुदेष्णया विराटनियोगाद्द्रौपदींप्रति स्वपुरान्निर्गमनचोदना ॥ २ ॥ तथा द्रौपद्या मासावधिस्ववासाभ्यनुज्ञानप्रार्थनायां तदङ्गीकरणम् ॥ ३ ॥

वैशंपायन उवाच।
ते दृष्ट्वा निहतान्सूतान्भीमसेनेन भारत।
पौराश्च सहिताः सर्वे राज्ञे गत्वा न्यवेदयन्।
गन्धर्वेण हता राजन्सूतपुत्राः परश्शतम् ॥ १
यथा वज्रेण दीर्णं वै पर्वतस्य महच्छिरः।
विनिकीर्णाः प्रदृश्यन्ते तथा सूता महीतले ॥ २
सैरन्ध्री चापि मुक्ता सा पुनरायाति ते गृहम्।
सर्वं संशयितं राजन्नगरं ते भविष्यति ॥ ३
तथारूपा हि सैरन्ध्री गन्धर्वाश्च महाबलाः।
पुंसामिष्टश्च विषयो मैथुनाय न संशयः ॥ ४
यथा सैरन्ध्रिदोषेण नेदं राजन्पुरं तव।
विनाशमेति वै क्षिप्रं तथा साधु विधीयताम् ॥५
सर्वाङ्गसौष्ठवयुतां रूपलावण्यशालिनीम्।
पश्यतामनिमेषेण चक्षुषा वनितां शुभाम्।
मनसश्चक्षुषश्चैव प्रतिबन्धो न विद्यते ॥ ६
तस्मात्तां यः पुमान्दृष्ट्वा रूपेणाप्रतिमां भुवि।
गच्छेत्कामवशं मूढो गन्धर्वैः स निहन्यते ॥ ७
निष्कासयैनां भवनात्पुराच्चैव विशेषतः।

तां द्रौपदीमभिवीक्षितुमपि अशक्नुवन्तः कीचकबान्धवाः तांप्रति किंचिद्वक्तुं नाशक्नुवन्नित्यध्याहारेण योजना ॥ ६३ ॥ सप्तविंशोऽध्यायः ॥ २७ ॥

गन्धर्वैर्निहता राजन्निति ख. थ. ध. पाठः ॥ १ ॥ तथा नीतिर्विधीयतामिति ध. पाठः ॥ ५ ॥ अष्टाविंशोऽध्यायः ॥ २८ ॥

कालः प्रविश्य सैरन्ध्रीं पुरं नाशयते ध्रुवम् ॥ ८
वैशंपायन उवाच ।
तेषां तद्वचनं श्रुत्वा विराटो वाहिनीपतिः ।
अब्रवीत्क्रियतामेषां सूतानामपरक्रिया ॥ ९
एकस्मिन्नेव ते सर्वे सुसमिद्धे हुताशने ।
दह्यन्तां कीचकाः सर्वे सर्वगन्धैश्च सर्वशः ॥ १०
इत्युक्त्वा परमोद्विग्नः प्रविश्यान्तःपुरं शुभम् ।
सुदेष्णां चाब्रवीद्राजा महिषीं जातसाध्वसः ११
सैरन्ध्रीमागतां ब्रूया ममैव वचनादिह ।
गच्छ सैरन्ध्रि भद्रं ते यथाकामं चराधुना ।
बिभेति राजा सैरन्ध्रि गन्धर्वेभ्यः पराभवात् १२
न हि तामुत्सहे वक्तुं स्वयं गन्धर्वरक्षिताम् ।
स्त्रियास्त्वदोषस्तां वक्तुमतस्त्वां ब्रवीम्यहम् १३
वैशंपायन उवाच ।
एकस्मिन्नेव ते सर्वे सुसमिद्धे हुताशने ।
अदहन्कीचकान्सर्वान्संस्कारैश्चैव सर्वशः ॥ १४
अथ मुक्ता भयात्कृष्णा सूतपुत्रान्निरस्य च ।
मोक्षिता भीमसेनेन जगाम नगरं प्रति ॥ १५
त्रासितेव मृगी बाला शार्दूलेन मनस्विनी ।
सा तु गात्राणि वासश्च प्रक्षाल्य प्रविवेश ह ॥१६
तां दृष्ट्वा पुरुषा राजन्प्राद्रवन्त दिशो दश ।
गन्धर्वाणां भयत्रस्ताः केचिद्दृष्टिं न्यमीलयन् १७

प्रदुद्रुवुश्चाप्यपरे तथा जना
हस्तैश्च चक्षूंषि पिधाय मोहिताः ।
मा पश्यत स्मेति च तां ब्रुवन्त-
स्तथा जनाश्चुक्रुशुरार्तरूपाः ॥ १८
तामद्य यः पश्यति रूपशालिनीं
शयीत भग्नोऽत्र यथैव कीचकाः ।
इति ब्रुवन्तो भयविग्नचेतसो
भयेन गन्धर्वगतेन मोहिताः ॥ १९

ततो महानसद्वारे भीमसेनमवस्थितम् ।
ददर्श राजन्पाञ्चाली यथा मत्तं महाद्विपम् ॥२०
सोपहासं तु शनकैः संज्ञाभिरिदमब्रवीत् ।
नमो गन्धर्वराजाय येनास्मि परिमोक्षिता ॥ २१
कीचकेभ्यो विनिर्दोषामनाथां वसतीं गृहे ।
यो मां रक्षति सन्त्रस्तां गन्धर्वाय नमोस्तु ते २२
भीम उवाच ।
ये यस्या विचरन्तीह पुरुषा वशवर्तिनः ।
तेषां च वशगा नित्यं विचर त्वं यथेष्टतः॥ २३
ये पुरा विचरन्तीह पुरुषा वशवर्तिनः ।
तस्यास्ते वचनं श्रुत्वा ह्यनृणा विहरन्त्वितः ॥२४
वैशंपायन उवाच ।
तयोस्तद्वचनं श्रुत्वा जज्ञिरे नेतरे जनाः ।
ततः पाञ्चालराजस्य सुता चापि जगाम ह ॥२५
ततः सा नर्तनागारे धनंजयमपश्यत ।
राज्ञः कन्या विराटस्य नर्तयन्तं महाभुजम् ॥२६
ततस्ता नर्तनागाराद्विनिष्क्रम्य सहार्जुनाः ।
कन्या ददृशुरायान्तीं कृष्णां क्लिष्टामनागसम् २७
कन्या ऊचुः ।
दिष्ट्या सैरन्ध्रि मुक्ताऽसि दिष्ट्याऽसि पुनरागता ।
दिष्ट्या च निहताः सूता ये त्वां क्लिश्यन्त्यनागसम्
बृहन्नलोवाच ।
कथं सैरन्ध्रि मुक्ताऽसि कथं पापाश्च ते हताः ।
इच्छामि ते कथां श्रोतुं कथयस्व यथातथम् २९
सैरन्ध्र्युवाच ।
बृहन्नले किंनु तव सैरन्ध्र्या कार्यमद्य वै ।
या त्वं रंस्यसि कल्याणि सदा कन्यापुरे सुखं ३०
न हि दुःखं समाप्नोषि सैरन्ध्री यदुपाश्नुते ।
सुखेन वर्तसे येह न तद्दुःखमवाप्यते ।
तेन मां दुःखितामेवं पृच्छसि प्रहसन्त्यपि ॥३१
बृहन्नलोवाच ।
बृहन्नलाऽपि कल्याणि दुःखमाप्नोत्यनन्तकम् ।
तिर्यग्योनिगतेवेयं न चैनामवबुध्यसे ॥ ३२
त्वया सहोषिता चास्मि त्वं च सर्वैः सहोषिता ।
त्वत्तः कृच्छ्रतरं वासं वसेयमहमङ्गने ।
क्लिश्यन्त्यां त्वयि सुश्रोणि कोनु दुःखं न चिन्तयेत्
न तु केनचिदत्यन्तं कस्यचिद्धृदयं क्वचित् ।
वेदितुं शक्यते नूनं तेन मां नावबुध्यसे ॥ ३४

वैशंपायन उवाच ।
ततः सहैव कन्याभिर्द्रौपदी राजवेश्म तत् ।
प्रविवेश सुदेष्णायाः समीपमनसूयिनी ॥ ३५
तामब्रवीद्राजपत्नी विराटवचनादिदम् ।
सैरन्ध्रि गम्यतां शीघ्रं यत्र कामयसे गतिम् ।
राजा बिभेति सैरन्ध्रि गन्धर्वेभ्यः पराभवात् ॥३६
त्वं चापि तरुणी सुभ्रू रूपेणाप्रतिमा भुवि ।
चित्तानि च नृणां भद्रे रक्तानि स्पर्शजे सुखे ॥३७
तस्मात्त्वत्तो भयं मह्यं राष्ट्रस्य नगरस्य च ।
गच्छाद्यैव यथेष्टं त्वं नगराद्यत्र रंस्यसे ॥ ३८
त्वन्निमित्तं शुभे मह्यं सर्वो बन्धुजनो हतः ।
नृशंसा खलु ते बुद्धिर्भ्रातॄणां मे कृतो वधः ॥ ३९
तस्माद्गन्धर्वराजेभ्यो भयमद्य प्रवर्तते ।
यथेष्टं गच्छ सैरन्ध्रि स्वस्ति चेह यथा भवेत् ॥४०
वैशंपायन उवाच ।
सुदेष्णाया वचः श्रुत्वा सैरन्ध्री चेदमब्रवीत् ।
त्रयोदशाहमात्रं तु राजा क्षाम्यतु भामिनि ॥ ४१
कृतकृत्या भविष्यन्ति गन्धर्वास्ते न संशयः ।
ततो मामुपनेष्यन्ति करिष्यन्ति च ते प्रियम् ४२
ध्रुवं च श्रेयसा राजा योक्ष्यते सह बान्धवैः ।
राज्ञः कृतोपकाराश्च कृतज्ञाश्च सदा शुभे ।
साधवश्च बलोत्सिक्ताः कृतप्रतिकृतेप्सवः ॥ ४३
अर्थिनी मा ब्रवीत्येषा यद्वातद्वेति चिन्तय ।
भरस्व तदहर्मात्रं तत्ते श्रेयो भविष्यति ॥ ४४
वैशंपायन उवाच ।
तस्यास्तद्वचनं श्रुत्वा कैकेयी दुःखमोहिता ।
उवाच द्रौपदीमार्ता भ्रातृव्यसनकर्शिता ॥ ४५
वस भद्रे यथेष्टं त्वं त्वामहं शरणं गता ।
त्रायस्व मम भर्तारं पुत्रांश्चैव विशेषतः ॥ ४६
इत्युक्त्वा राजशार्दूल राज्ञे सर्वं न्यवेदयत् ।
त्रिंशद्रात्रिमिमां भीरुः कृतकृत्या निवासये ॥४७

॥ इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

समाप्तं च कीचकवधपर्व ॥ ३ ॥

---

# ( अथ गोग्रहणपर्व ॥ ४ ॥ )

## एकोनत्रिंशोऽध्यायः ॥ २९ ॥

पाण्डवान्वेषणाय क्रमेण विराटपुरमागतैश्चारैर्हास्तिनपुरमेत्य दुर्योधनंप्रति स्वेषां पाण्डवानवगतिनिवेदनपूर्वकं कीचकवधनिवेदनम् ॥ १ ॥

---

वैशंपायन उवाच ।
कीचके तु हते राजा विराटः परवीरहा ।
शोकमाहारयत्तीव्रं सामात्यः सपुरोहितः ॥ १
कीचकस्य वधं घोरं सानुजस्य विशांपते ।
अत्याहितं चिन्तयित्वा व्यस्मयन्त पृथग्जनाः ॥२
तस्मिन्पुरे जनपदे जजल्पुश्चापि सर्वशः ।
वीर्यवान्दयितो राज्ञो दर्पोत्सिक्तश्च कीचकः ॥३
सांपराये परिक्रुष्टो बलवान्दुर्जयो रणे ।
आसीत्प्रहर्ता शत्रूणां दारदर्शी च दुर्मतिः ।
स हतः किल गन्धर्वैः सैरन्ध्रीकारणान्निशि ॥ ४
इत्यजल्पन्महाराज कीचकस्य विनाशनम् ।
देशेदेशे मनुष्याश्च विस्मिताः कीचके हते ॥ ५
अथ वै धार्तराष्ट्रेण प्रयुक्ता ये बहिश्चराः ।
मृगयित्वा बहून्देशान्ग्रामांश्च नगराणि च ॥ ६
संविधाय यथाऽऽदिष्टं यथादेशं प्रदर्शकाः ।
कृतसंकेतनाः सर्वे न्यवर्तन्त पुरं ततः ॥ ७
आगम्य हास्तिनपुरं धार्तराष्ट्रमरिन्दमम् ।
तत्र दृष्ट्वा तु राजानं कौरव्यं धृतराष्ट्रजम् ॥ ८

द्रोणकर्णकृपैः सार्धं भीष्मेण च महात्मना ।
संगतं भ्रातृभिः सार्धं त्रिगर्तैश्च महारथैः ॥ ९
प्रणम्य शिरसा भूमौ वर्धयित्वा जयाशिषा ।
आसीनं सूर्यसंकाशे काञ्चने परमासने ॥ १०
उपास्यमानं सचिवैर्मरुद्भिरिव वासवम् ।
विद्वद्भिर्गायकैः सार्धं कविभिः स्तुतिपाठकैः ॥ ११
अनेकैरपि राजन्यैः सेवितं सपरिच्छदैः ।
दुर्योधनं सभामध्ये आसीनमिदमब्रुवन् ॥ १२
कृतोऽस्माभिः परो यत्नस्तेषामन्वेषणे सदा ।
पाण्डवानां मनुष्येन्द्र तस्मिन्महति कानने ॥ १३
निर्जने व्यालसंकीर्णे नानाश्रमरसंकुले ।
लताप्रतानगहने नानागुल्मसमावृते ॥ १४
न च विद्मो गता येन पार्थाः सुदृढविक्रमाः ।
मार्गमाणाः पदन्यासमाश्रमेषु वनेषु च ॥ १५
गिरिकूटेषु तुङ्गेषु नानाजनपदेषु च ।
जनाकीर्णेषु देशेषु चत्वरेषु पुरेषु च ॥ १६
नरेन्द्र सहसा नष्टान्नैव विद्म च पाण्डवान् ।
अत्यन्तादर्शनान्नष्टा भद्रं तुभ्यं नरर्षभ ॥ १७
गिरीणां कूटकुञ्जेषु कन्दरोदरसानुषु ।
नदीप्रस्रवणेष्वेव ह्रदेषु च सरस्सु च ॥ १८
गह्वरेषु च दुर्गेषु ग्रामेषू पवनेषु च ।
दुर्विज्ञेया गतिस्तेषां मृग्यतेऽस्माभिरेव च ।
गजव्याघ्रसमीपेषु सिंहान्ते शरभान्तरे ॥ १९
वर्त्मन्यन्विच्छमानास्तु रथानां रथिसत्तम ।
कंचित्कालं मनुष्येन्द्र सूतानुगता वयम् ॥ २०
मृगयित्वा यथान्यायं विदितार्थाश्च तत्वतः ।
प्राप्ता द्वारवतीं सूता विना पार्थैः परंतप ॥ २१
न तत्र कृष्णा राजेन्द्र पाण्डवाश्च महाव्रताः ।
नरदेव यथोद्दिष्टं न च विद्मात्र पाण्डवान् ॥ २२
निर्वृतो भव नष्टास्ते स्वस्थो भव परंतप ।
सर्वथैव प्रनष्टास्ते नमस्ते भरतर्षभ ॥ २३
सर्वा च पृथिवी कृत्स्ना सशैलवनकानना ।
सराष्ट्रनगरग्रामा पत्तनैश्च समन्विता ।
अन्वेषिता च सर्वत्र न च पश्याम पाण्डवान् २४
पुनः शाधि मनुष्येन्द्र अत ऊर्ध्वं विशांपते ।
अन्वेषणे पाण्डवानां भूयः किं करवामहे ॥ २५
इमां च नः प्रियां वीर वाचं भद्रवतीं शृणु ॥ २६
येन त्रिगर्ता निहता बलेन बहुशो नृप ।
सूतेन राज्ञो मत्स्यस्य कीचकेन बलीयसा ।
स हतः पतितः शेते गन्धर्वैर्निशि भारत ॥ २७
स्यालो राज्ञो विराटस्य सेनापतिरुदारधीः ।
सुदेष्णायानुजः क्रूरः शूरो वीरो गतव्यथः ॥ २८
उत्साहवान्महावीर्यो नीतिमान्बलवानपि ।
युद्धज्ञो रिपुवीर्यघ्नः सिंहतुल्यपराक्रमः ॥ २९
प्रजारक्षणदक्षश्च शत्रुग्रहणशक्तिमान् ।
विजितारिर्महायुद्धे प्रचण्डो मानतत्परः ॥ ३०
नरनारीमनोह्लादी धीरो वाग्मी रणप्रियः ।
पुण्यकर्माऽर्थकामानां भाजनं मनुजोत्तमः ॥ ३१
स हतो निशि गन्धर्वैः स्त्रीनिमित्तं नराधिप ।
अमृष्यमाणो दुष्टात्मा निशीथे सह सोदरैः ।
सुहृदश्चास्य निहता योधाश्च प्रहरैर्हताः ॥ ३२
गन्धर्वाणां च महिषी काचिदस्ति नितम्बिनी ।
सैरन्ध्री नाम तां दृष्टो दुष्टात्माऽकामयद्बली ॥ ३३
इत्येवं श्रुतमस्माभिर्गन्धर्वैर्निहतो निशि ॥ ३४
बान्धवैर्बहुभिः सार्धं कीचको निहतो यतः ।
अद्यप्रभृति राजेन्द्र पाण्डवान्वेषणं प्रति ।
चारांश्च सर्वतश्चर्तुं प्रेषयेति मतिर्हि नः ॥ ३५
निहतो निशि गन्धर्वैर्दुष्टात्मा भ्रातृभिः सह ।
एतावच्छ्रुतमस्माभिर्भद्रं तेऽस्तु नराधिप ॥ ३६
प्रियमेतदुपश्रुत्य शत्रूणां च पराभवम् ।
कृतकृत्यश्च कौरव्य विधत्स्व यदनन्तरम् ॥ ३७

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## त्रिंशोऽध्यायः ॥ ३० ॥

दुर्योधनादिभिः पाण्डवान्वेषणाय समालोचनम् ॥ १ ॥

वैशंपायन उवाच ।
ततो दुर्योधनो राजा श्रुत्वा तेषां वचस्तदा ।
चिरमन्तर्मना भूत्वा इदमाह सभासदः ॥ १
अशक्यं खलु कार्यस्य गतिं ज्ञातुं हि तत्वतः ।
तस्मात्सर्वे परीक्षध्वं क्व नु स्युः पाण्डवा गताः ॥ २
अल्पावशिष्टः कालस्तु गतो भूयिष्ठ एव च ।
तेषामज्ञातचर्यायामस्मिन्वर्षे त्रयोदशे ॥ ३
अपि वर्षस्य शेषं ते ह्यतीयुरिह पाण्डवाः ।
निवृत्तसमयास्ते हि सत्यव्रतपरायणाः ॥ ४
क्षरन्त इव नागेन्द्राः सर्वे ह्याशीविषोपमाः ।
दुःखाद्भवेयुः संरब्धाः कौरवान्प्रति ते ध्रुवम् ॥ ५
विज्ञातव्या मनुष्येन्द्रास्तर्कया सुप्रणीतया ।
निपुणैश्चारपुरुषैः प्राज्ञैर्दक्षैः सुसंवृतैः ॥ ६
अज्ञातसमये ज्ञाताः कृच्छ्ररूपसमाश्रिताः ।
प्रविशेयुर्जितक्रोधास्तावदेव पुनर्वनम् ॥ ७
तस्मात्क्षिप्रं विचिन्वध्वं यथा चात्यन्तमव्ययम् ।
राज्यं निर्द्वन्द्वमव्यग्रं निःसपत्नं चिरं भवेत् ॥ ८
दुर्योधनेनैवमुक्ते वचनेऽतीव दुःखिना ।
ततः कर्णोऽब्रवीद्वाक्यं सत्यधर्मार्थसंयुतम् ॥ ९
एते पुनर्न गच्छन्तु अन्ये गच्छन्तु भारत ।
शीघ्रवृत्ता नरा योग्या निपुणाश्छन्नचारिणः ॥ १०
चरन्तु देशान्विविधान्स्फीताञ्जनपदाकुलान् ।
तत्र गोष्ठीषु रम्यासु सिद्धा ब्राह्मणरूपिणः ॥ ११
परिवाहेषु तीर्थेषु विविधेष्वाकरेषु च ।
अन्वेष्टव्या मनुष्येन्द्र पाण्डवाश्छन्नचारिणः ॥ १२
नदीकुञ्जेषु तीर्थेषु ग्रामेषु नगरेषु च ।
आश्रमेषु च रम्येषु पर्वतेषु गुहासु च ॥ १३
विज्ञातव्या मनुष्येन्द्र तर्कया सुविनीतया ।
विविधैस्तत्परैः सम्यङ्निपुणैस्तज्ज्ञसंमतैः ॥ १४
अथाग्रजानन्तरजो भ्रातुः प्रियहिते रतः ।
ज्येष्ठं दुःशासनस्तत्र भ्राता भ्रातरमब्रवीत् ॥ १५
येषु नः प्रत्ययो राजंश्चारेषु मनुजाधिप ।
ते यान्तु दत्तदेया वै भूयस्तान्परिमार्गितुम् ॥ १६
यदाह कर्णो राजेन्द्र सर्वमेतदवेक्ष्यताम् ।
यथोद्दिष्टं चराः सर्वे मृगयन्तु यतस्ततः ॥ १७
घ्राणैः पश्यन्ति पशवो वेदैरेव द्विजोत्तमाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ १८
यथोक्ताश्चारपुरुषा मृगयन्तु पुनःपुनः ।
एते चान्ये च बहवो देशांश्च नगराणि च ॥ १९
न हि तेषां गतिर्वासः प्रवृत्तिर्वोपलभ्यते ।
अत्यन्तं वा निगूढास्ते पारं वोर्मिमतो गताः ॥ २०
व्यालैर्वाऽपि महारण्ये भक्षिताः शूरमानिनः ।
द्वीपं वा परमं प्राप्ता गिरिदुर्गवनेष्वपि ॥ २१
हीनदर्पा निराशास्ते भक्षिता वाऽपि राक्षसैः ।
अथवा विषमं प्राप्य विनष्टाः शाश्वतीः समाः ॥ २२
तस्मान्मानसमव्यग्रं कृत्वाऽऽत्मानं नियम्य च ।
कुरु कार्यं महोत्साहं मन्यसे यन्नराधिप ॥ २३

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

## एकत्रिंशोऽध्यायः ॥ ३१ ॥

द्रोणेन दुर्योधनंप्रति पाण्डवानां धार्मिकत्वादिगुणशालितया विनाशाभावनिर्धारणेन तदन्वेषणविधानम् ॥ १ ॥ भीष्मेण पाण्डवावासदेशस्य लक्षणाभिधानपूर्वकं तेषां दुर्ज्ञेयत्वस्यापि कथनेन तैः सह सन्धिविधानम् ॥ २ ॥

वैशंपायन उवाच ।
अथाऽब्रवीत्सभामध्ये द्रोणः सूक्ष्मार्थदर्शिवान् ।
न तादृशा विनश्यन्ति नापि यान्ति पराभवम् ॥ १
शूराश्च कृतविद्याश्च बुद्धिमन्तो जितेन्द्रियाः ।

धर्मज्ञाः सत्यसन्धाश्च युधिष्ठिरमनुव्रताः ॥ २
नीतिधर्मार्थतत्त्वज्ञं पितृवच्च समाहितम् ।
धर्मे स्थितं सत्यधृतिं ज्येष्ठं श्रेष्ठापचायिनम् ॥ ३
अनुव्रता महात्मानो भ्रातरो भ्रातरं प्रियम् ।
अजातशत्रुं श्रीमन्तं सर्वभ्रातृननुव्रतम् ॥ ४
तेषां तथाविधेयानां निभृतानां महात्मनाम् ।
किमर्थं नीतिमान्प्राज्ञः श्रेयो नैषां करिष्यति ॥५
तस्माद्यत्नात्परीक्षध्वं न तावत्समयो गतः ।
न ते विनाशमृच्छेयुरिति मे नैष्ठिकी मतिः ॥ ६
चिन्त्यतां चैव यत्कार्यं तच्च क्षिप्रमकालिकम् ।
क्रियतां साधु संचिन्त्य वासश्चैषां प्रचिन्त्यताम् ॥७
यथा च पाण्डुपुत्राणां सर्वार्थेषु धृतात्मनाम् ।
प्रवृत्तिरुपलभ्येत तथा नीतिर्विधीयताम् ॥ ८
सर्वोपायैर्यतस्व त्वं यथा पश्यसि पाण्डवान् ।
दुर्ज्ञेयाः खलु शूरास्ते रक्ष्या नित्यं च दैवतैः ॥९
शुद्धात्मा मानवान्पार्थः सत्यवान्नीतिमाञ्शुचिः ।
तेजोराशिभिरापूर्णो दहेदपि च चक्षुषा ॥ १०
तस्माद्यत्नश्च क्रियतां भूयश्च मृगयामहे ।
ब्राह्मणैश्चारकैः सिद्धैस्तापसैर्निपुणैरपि ॥ ११
विविधैस्तत्परैः सम्यङ्गिर्भीकैस्तज्ज्ञसंमतैः ।
अन्वेष्टव्या मनुष्येन्द्र पाण्डवाश्छन्नचारिणः ॥ १२
ततः शान्तनवो धीमान्भारतानां पितामहः ।
श्रुतवान्देशकालज्ञो नीतिमांश्च महामतिः ॥ १३
तस्मिन्नुपरते वाक्ये आचार्यस्य महात्मनः ।
अनन्तरमुवाचेदं वाक्यं हेत्वर्थसंमितम् ॥ १४
युधिष्ठिरे समायुक्तां धर्मज्ञे धर्मसंहिताम् ।
पाण्डवे नित्यमव्यग्रां गिरं भीष्मः समाददे ॥१५
असत्सु दुर्लभां नित्यं सतां चाभिमतां सदा ।
भीष्मस्त्वभ्यवदत्तत्र गिरं साधुभिरर्चिताम् ॥१६
यथा नो ब्राह्मणोऽवादीदाचार्यः सर्वधर्मवित् ।
श्रुतवृत्तोपसंपन्ना नाशं नायान्ति पाण्डवाः ॥१७
सर्वलक्षणसंपन्नाः साधुवृत्तसमन्विताः ।
वृद्धानुशासने युक्ताः सत्यधर्मपरायणाः ॥ १८
समयं समयज्ञास्ते पालयन्तः शुभव्रताः ।
न विषीदन्ति ते पार्था उद्वहन्तः सतां धुरम् ॥१९
तपसा चैव गुप्तास्ते स्ववीर्येण च पाण्डवाः ।
न नाशमभिगच्छेयुरिति मे नैष्ठिकी मतिः ॥२०
क्षत्रधर्मरता नित्यं केशवानुगताः सदा ।
प्रवीरपुरुषास्ते वै महात्मानो महाबलाः ॥ २१
तत्र बुद्धिं प्रवक्ष्यामि पाण्डवान्वेषणे शृणु ।
न तु नीतिः सुनीतस्य शक्यते वेदितुं परैः ॥२२
यत्तु शक्यमिहास्माभिस्तान्वै संचिन्त्य पाण्डवान् ।
बुद्ध्या प्रणेतुं तत्तेऽहं प्रवक्ष्यामि निबोध तत् २३
न त्वियं साधु वक्तव्या तस्य नीतिः कथंचन ।
वृद्धानुशासने तात तिष्ठतः सत्यशीलिनः ॥ २४
अयुक्तं तु मया वक्तुं तुल्या मे कुरुपाण्डवाः ।
निवासं पाण्डुपुत्राणां संचिन्त्य च वदाम्यहम् ।
बहुना किं प्रलापेन यतो धर्मस्ततो जयः ॥ २५
अवश्यं तु नियुक्तेन सभामध्ये विवक्षता ।
यथार्हमिह वक्तव्यं सर्वथा धर्मलिप्सया ॥ २६
यत्र नाहं तथा मन्ये यथाऽन्ये मेनिरे जनाः ।
निवासं पाण्डुपुत्राणां शृणुष्व मनुजाधिप ॥ २७
[भ्रातृभिः सहितो वीरैः कृष्णया च महायशाः ।
किमर्थं स महाराजो नात्मश्रेयो भविष्यति ॥२८
पाण्डवो निकृतः पूर्वं यथावद्विदितं तव ।
क्लेशितश्च पुरे नित्यं राज्यकामैश्च सांप्रतम् ।
छन्नश्चरति तस्मात्स प्रकृत्या नीतिमान्नृपः ॥२९
वर्षमेकं सुसंच्छन्नमुष्य वासमनुत्तमम् ।
आयाति चोदये काले क्षिप्रं द्रक्ष्यसि पाण्डवं ३०
सोदरैः सहितं वीरं द्रौपद्या च परंतप ।
संविधत्स्व महाबाहो यथा नः स्यात्सुखोदयः ॥३१
यस्मिन्स राजा वसति छन्नः सत्त्वभृतांवरः ।
भविष्यन्ति नरास्तत्र रागमोहविवर्जिताः ॥ ३२
नाधयो हि महाराज न व्याधिः क्षत्रियर्षभ] ।
पुरे जनपदे वाऽपि यत्र राजा युधिष्ठिरः ॥ ३३
दानशीलो वदान्यश्च निभृतो ह्रीनिषेवकः ।
प्रियवाक्सत्यवाक्शूरो धर्मशीलो जितेन्द्रियः ।
हृष्टः पुष्टः शुचिर्दक्षो यत्र राजा युधिष्ठिरः ॥ ३४

नासूयको न चापीर्ष्युर्नाभिमानी न मत्सरी ।
भविष्यति जनस्तत्र स्वयं धर्ममनुव्रतः ॥ ३५
ब्रह्मघोषाश्च भूयांसः पुण्यशब्दास्तथैव च ।
क्रतवश्च भविष्यन्ति भूयांसो भूरिदक्षिणाः ॥ ३६
सदा च तत्र पर्जन्यः सम्यग्वर्षी न संशयः ।
संपन्नसस्या च मही भविष्यति निरामया ॥ ३७
रसवन्ति च धान्यानि गुणवन्ति फलानि च ।
गन्धवन्ति च माल्यानि शुभशब्दा च भारती ॥
वायुश्च सुखसंस्पर्शो यत्र राजा युधिष्ठिरः ।
नीरोगास्तत्र विद्यन्ते वधबन्धा न सन्ति च ३९
न चोरा न च दण्डाश्च न च बाधा भवन्त्युत ।
नाशक्ता न च दुष्टाश्च यत्र राजा युधिष्ठिरः ४०
भयं च नाविशेत्तत्र निष्प्रतीपं च दर्शनम् ।
बहुक्षीरास्तथा गावः सुपुष्टाश्च सुदोहनाः ॥ ४१
पयांसि दधिसर्पींषि रसवन्ति हितानि च ।
सलिलानि प्रसन्नानि सर्वे भावाश्च शोभनाः ४२
गुणवन्ति च पानानि भोज्यानि विविधानि च ।
तत्र देशे भविष्यन्ति यत्र राजा युधिष्ठिरः ॥४३
रसाः स्पर्शाश्च गन्धाश्च शब्दाश्चापि गुणान्विताः ।
दृश्यानि च प्रसन्नानि यत्र राजा युधिष्ठिरः ४४
धर्माश्च तत्र सर्वैस्तु सेविताश्च द्विजातिभिः ।
स्वैःस्वैर्गुणैश्च संयुक्ता कस्मिन्वर्षे त्रयोदशे ।
देशे तस्मिन्भविष्यन्ति तत पाण्डवसंश्रिते ॥४५
संप्रीतिमाञ्जनस्तत्र संतुष्टः शुचिरव्ययः ।
देवतातिथिभूयांस्तु सर्वभूतानुरागवान् ॥ ४६
इष्टदानमहोत्साहा नित्यं धर्मपरायणाः ।
व्यक्तवाक्यास्ततस्तात शुभकल्याणमङ्गलाः ॥४७
शुभत्विषः शुभेच्छाश्च नित्यतुष्टाः श्रियाऽन्विताः ।
भविष्यन्ति जनास्तत्र यत्र राजा युधिष्ठिरः ॥ ४८
नित्योत्सवप्रमुदितो नित्यहृष्टः श्रिया वृतः ।
भविष्यति निवासोऽयं यत्र राजा युधिष्ठिरः ४९
धर्मज्ञः स तु दुर्ज्ञेयः सर्वज्ञैश्च द्विजातिभिः ।
किंपुनः प्राकृतैस्तात पार्थो विज्ञायते क्वचित् ॥५०
यस्मिन्सत्यं धृतिर्दानं परा शान्तिर्ध्रुवा क्षमा ।
ह्रीः श्रीः कीर्तिः परं तेज आनृशंस्यमथार्जवम् ५१
तस्मान्निवासः पार्थानां चिन्त्यतां यद्ब्रवीमि वः ।
गतिर्वा परमा तत्र नोत्सहे वक्तुमन्यथा ॥ ५२
एवमेतत्तु संचिन्त्य यत्कृत्यं साधु मन्यसे ।
तत्क्षिप्रं कुरु कौरव्य यद्येतच्छ्रद्दधासि मे ।
कुलस्य हि क्षमं तात यदहं प्रब्रवीमि ते ॥ ५३

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

## द्वात्रिंशोऽध्यायः ॥ ३२ ॥

दुर्योधनेन कीचकवधस्य भीमसेनकृतत्वसंभावनया पाण्डवानां तत्र स्थितिसंभावना ॥ १ ॥ तथा भीष्माद्यनुमत्या सुशर्मणो विराटनगरंप्रति प्रेषणम् ॥ २ ॥ सुशर्मणा विराटनगरमेत्य दक्षिणभागे गोग्रहम् ॥ ३ ॥

वैशंपायन उवाच ।
ततः शारद्वतो वाक्यमित्युवाच कृपस्तदा ।
युक्तं प्राप्तं च वृद्धेन पाण्डवान्प्रति भाषितम् ॥ १
धर्मार्थसहितं श्लक्ष्णं सर्वं सत्यं सहेतुकम् ।
तत्रानुरूपं भीष्मस्य ममापि वचनं शृणु ॥ २
तेषां चैव गतिस्तत्र निवासश्चानुचिन्त्यताम् ।
नीतिर्विधीयतां तत्र सांप्रतं या हिता भवेत् ॥ ३
नावज्ञेयो रिपुस्तात प्राकृतोऽपि बुभूषता ।
किं पुनः पाण्डवाः शूरा विद्वांसो बलिनस्तथा ४
तस्मात्सत्रं प्रविष्टेषु पाण्डवेषु महात्मसु ।
गूढभावेषु छन्नेषु काले चोदयमागते ॥ ५
स्वराष्ट्रे परराष्ट्रे च ज्ञातव्यं बलमात्मनः ।
उदयः पाण्डवानां च प्राप्तकालो न संशयः ॥ ६
निवृत्तसमयाः पार्था महात्मानो महाबलाः ।
महोत्साहा भविष्यन्ति पाण्डवा ह्यमितौजसः ॥७
तस्माद्बलं च कोशं च नीतिश्चापि विधीयताम् ।
यथा कालोदये प्राप्ते सम्यक् तैः संदधामहे ॥८
यत्र यन्मन्यसे श्रेयो बुध्यस्व बलमात्मनः ।

नियतं सर्वमित्रेषु बलवत्स्वबलेषु च ॥ ९
सारं फल्गु बलं ज्ञात्वा मध्यस्थं चापि भारत ।
स्वराष्ट्रपरराष्ट्रेषु ज्ञातव्यं बलमात्मनः ॥ १०
अप्रहृष्टं प्रहृष्टं वा संदधाम तथा परैः ।
साम्ना दानेन भेदेन दण्डेन बलिकर्मणा ॥ ११
न्यायेनाक्रम्य च परान्बलाच्चानम्य दुर्बलान् ।
सान्त्वयित्वा च मित्राणि बलं चाभाष्यतां सुखम्
स्वकोशबलसंवृद्धः सम्यक्सिद्धिमवाप्स्यसि ।
योत्स्यसे चापि बलिभिररिभिः प्रत्युपस्थितैः ।
अन्यैस्त्वं पाण्डवैर्वाऽपि हीनैः स्वबलवाहनैः १३
एवं सर्वं विनिश्चित्य व्यवहर्तासि न्यायतः ।
यथाकालं मनुष्येन्द्र चिरं सुखमवाप्स्यसि ॥ १४
भीष्मद्रोणकृपैरुक्ते कर्णदुःशासनादिभिः ।
ततो दुर्योधनो वाक्यं श्रुत्वा तेषां महात्मनाम् ।
मुहूर्तमनुसंचिन्त्य सचिवानिदमब्रवीत् ॥ १५
श्रुतमेतन्मया पूर्वं कथासु जनसंसदि ।
धीराणां शास्त्रविदुषां प्राज्ञानां मतिनिश्चये ।
कृतिनां सारफल्गुत्वे जानामि नयचक्षुषा ॥ १६
सत्वे बाहुबले धैर्ये प्राणे शारीरसंभवे ।
सांप्रतं मानुषे लोके सदैत्यनरराक्षसे ॥ १७
चत्वारस्तु नरव्याघ्रा बले शक्रोपमा भुवि ।
उत्तमाः प्राणिनां तेषां नास्ति कश्चिद्बले समः ।
समप्राणबला नित्यं संपूर्णबलपौरुषाः ॥ १८
बलदेवश्च भीमश्च मद्रराजश्च वीर्यवान् ।
चतुर्थः कीचकस्तेषां पञ्चमं नानुशुश्रुमः ॥ १९
अन्योन्यानन्तरबलाः परस्परजयैषिणः ।
बाहुयुद्धमभीप्सन्तो नित्यं संरब्धमानसाः ॥ २०
तेनाहमवगच्छामि प्रत्ययेन वृकोदरम् ।
मनस्यभिनिविष्टं मे व्यक्तं जीवन्ति पाण्डवाः २१
तत्राहं कीचकं मन्ये भीमसेनेन मारितम् ।
सैरन्ध्रीं द्रौपदीं मन्ये नात्र कार्या विचारणा ॥२२
शङ्के कृष्णानिमित्तं तु भीमसेनेन कीचकः ।
गन्धर्वव्यपदेशेन हतो निशि महाबलः ॥ २३
को हि शक्तः परो भीमात्कीचकं हन्तुमोजसा ।
शस्त्रं विना बाहुबलात्तथा सर्वाङ्गचूर्णने ॥ २४
मर्दितुं वा तथा तीव्रं चर्ममांसास्थिचूर्णनम् ।
रूपमन्यत्समास्थाय भीमस्यैतद्विचेष्टितम् ॥ २५
ध्रुवं कृष्णानिमित्तं तु भीमसेनेन सूतजाः ।
गन्धर्वव्यपदेशेन हता निशि न संशयः ॥ २६
पितामहेन ये चोक्ता देशस्य च जनस्य च ।
गुणास्ते मत्स्यराष्ट्रेषु बहुशोऽपि मया श्रुताः ॥२७
विराटनगरे मन्ये पाण्डवाश्छन्नचारिणः ।
निवसन्ति पुरे रम्ये तत्र यात्रा विधीयताम् ॥२८
मत्स्यराष्ट्रं गमिष्यामो ग्रहीष्यामश्च गोधनम् ।
गृहीते गोधने नूनं तेऽपि योत्स्यन्ति पाण्डवाः ॥
अपूर्णे समये चापि यदि पश्येम पाण्डवान् ।
द्वादशान्यानि वर्षाणि प्रवेक्ष्यन्ति पुनर्वनम् ॥३०
तस्मादन्यतरेणापि लाभोऽस्माकं भविष्यति ।
कोशवृद्धिरिहास्माकं शत्रूणां निधनं भवेत् ॥३१
कथं सुयोधनं गच्छेद्युधिष्ठिरभृतः पुरा ।
एतच्चापि वदत्येष मात्स्यः परिभवान्मयि ॥ ३२
तस्मात्कर्तव्यमेतद्वै तत्र यात्रा विधीयताम् ।
एतत्सुनीतं मन्येऽहं सर्वेषां यदि रोचते ॥ ३३
वैशंपायन उवाच ।
ततो राजा त्रिगर्तानां सुशर्मा रथयूथपः ।
पूर्वमाभाष्य कर्णेन तथा दुःशासनेन च ।
प्राप्तकालमिदं वाक्यमुवाच त्वरितो बली ॥ ३४
असकृन्निकृतः पूर्वं मात्स्यसाल्वेयकेकयैः ।
सूतेनैव च मात्स्यस्य कीचकेन पुनःपुनः ॥ ३५
बाधितो बन्धुभिः सार्धं बलाद्बलवता विभो ।
स कर्णमभिवीक्ष्याथ दुर्योधनमभाषत ॥ ३६
राष्ट्रं ममासकृद्राजन्राज्ञा मात्स्येन बाधितम् ॥३७
प्रणेता कीचकस्तस्य बलोत्सिक्तोऽभवत्पुरा ।
अमर्षी दुर्जयो जेता प्रख्यातबलपौरुषः ।
स हतस्तत्र गन्धर्वैः पापकर्मा नृशंसकृत् ॥ ३८
तस्मिन्विनिहते राजन्हीनदर्पो निराश्रयः ।

तस्मादनन्तरेणापि लाभोऽस्माकमिति थ. पाठः । तस्मात् गोग्रहणात् अनन्तरेण युद्धायागतपाण्डवदर्शनेन ॥ ३१ ॥

युधिष्ठिरभृतः युधिष्ठिरो भृतो येन विराटेनेति बहुव्रीहिः ॥३२॥

भविष्यति निरुत्साहो विराट इति मे मतिः ३९
तत्र यात्रा मम मता यदि ते रोचतेऽनघ ।
कौरवाणां च सर्वेषां कर्णस्य च महात्मनः ॥४०
एतत्कार्यमहं मन्ये परमात्ययिकं महत् ।
राष्ट्रं तस्याभियास्यामो धनधान्यसमाकुलम् ॥४१
आददामोऽस्य रत्नानि विविधानि वसूनि च ।
ग्रामान्राष्ट्राणि वा तस्य हरिष्यामो विभागशः ॥
अथवा गोसहस्राणि बहूनि शुभदर्शन ।
विविधानि हरिष्यामः प्रतिपीड्य पुरं बलात् ४३
कौरवैः सह संगम्य त्रिगर्तैश्च विशांपते ।
गास्तस्यापहरिष्यामः सह सर्वैर्महारथैः ॥ ४४
सन्धिं वा तेन कृत्वा तु निबध्नीमोऽस्य पौरुषम् ।
हत्वा चास्य चमूं कृत्स्नां वशमेवानयामहे ॥४५
तं वशे न्यायतः कृत्वा सुखं वत्स्यामहे वयम् ।
भवतां बलवृद्धिश्च भविष्यति न संशयः ॥ ४६
वैशंपायन उवाच ।
तच्छ्रुत्वा वचनं तस्य कर्णो राजानमब्रवीत् ॥४७
सूक्तं सुशर्मणा वाक्यं प्राप्तकालमिदं वचः ।
तस्मात्क्षिप्रं विनिर्यामो योजयित्वा वरूथिनीं ४८
यदेतत्तेऽभिरुचितं मम चैतद्धि रोचते ।
प्रविभज्य च सैन्यानि यथा वा मन्यते भवान्४९
प्रज्ञावान्कुलवृद्धश्च सर्वेषां नः पितामहः ।
आचार्यश्च कृपो विद्वाञ्शकुनिश्चापि सौबलः ५०
मन्यन्ते ते यथा सर्वे तथा यात्रा विधीयताम् ।
संमन्त्र्य चाशु गच्छामः साधनार्थं महीपते ॥५१
किंतु नः पाण्डवैः कार्यं हीनार्थबलपौरुषैः ।
अत्यन्तं हि प्रनष्टास्ते प्राप्ता वाऽपि यमक्षयम् ५२
तद्भवांश्चतुरङ्गेण बलेन महता वृतः ।
विराटनगरं यातु सर्वसैन्येन भारत ।
आदास्यामोऽथ गास्तस्य विविधानि वसूनि च५३
वैशंपायन उवाच ।
ततो दुर्योधनो राजा वचः श्रुत्वा तु तस्य तत् ।
वैकर्तनस्य कर्णस्य क्षिप्रमाज्ञापयत्स्वयम् ।
शासने नित्ययुक्तं तु दुःशासनमनन्तरम् ॥ ५४
दुर्योधन उवाच ।
सह वृद्धैस्तु संमन्त्र्य क्षिप्रं योजय वाहिनीम् ।
यथोद्देशं तु गच्छामः सहिताः सर्वकौरवैः ॥ ५५
सुशर्मा तु यथोद्दिष्टं देशं यातु महारथः ।
त्रिगर्तैः सहितः सर्वैः प्रख्यातबलपौरुषैः ।
प्रागेव हि सुसंयत्तो विराटनगरं प्रति ॥ ५६
जघन्यतो वयं तत्र यास्यामो दिवसान्तरे ।
विषयं मत्स्यराजस्य सुसमृद्धं सुसंहितम् ॥ ५७
सुशर्मणा गृहीते तु मत्स्यराजस्य गोधने ।
विराटः सैन्यमादाय त्रिगर्तैः सह योत्स्यति ॥५८
अपरं दिवसं गास्तु तत्र गृह्णन्तु कौरवाः ।
गवार्थे पाण्डवास्तत्र योत्स्यन्ति कुरुभिः सह ॥५९
तथा गत्वा यथोद्देशं विराटनगरान्तिके ।
क्षिप्रं गोष्ठं समासाद्य गृह्णन्तु विपुलं धनम् ६०
गवां शतसहस्राणि श्रीमन्ति गुणवन्ति च ।
वयमस्य निगृह्णीमो द्विधा कृत्वा च वाहिनीम् ६१
वैशंपायन उवाच ।
ते स्म गत्वा यथोद्दिष्टं देशं मत्स्यमहीपतेः ।
संनद्धा रथिनः सर्वे सपताका बलोत्कटाः ।
प्रतिवैरं चिकीर्षन्तो गोषु गृद्धा महाबलाः ॥६२
आदत्त गाः सुशर्माऽथ कृष्णपक्षस्य चाष्टमीम् ६३
अपरे दिवसे सर्वे राजन्संभूय कौरवाः ।
नवम्यां ते न्यगृह्णन्त गोकुलानि सहस्रशः ।
कौरवास्तु महावीर्या मत्स्यानां विषयान्तरे ॥६४

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

कृष्णपक्षस्य सप्तमीमिति अष्टम्यां तेऽन्यगृह्णन्तेति च. थ. पाठः ॥ ६३ ॥ विषयान्तरे उत्तरभागे ॥ ६४ ॥

द्वात्रिंशोऽध्यायः ॥ ३२ ॥

## त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

गोपैर्द्रुततरमाद्रुत्य विराटंप्रति सुशर्मणा गोग्रहणनिवेदनम् ॥ १ ॥ विराटादिभिर्युद्धाय निर्गमोद्यमः ॥ २ ॥ युधिष्ठिरेण विराटंप्रति स्वेषां युद्धकौशलनिवेदनेन भ्रातृभिः सह समराभियानम् ॥ ३ ॥

वैशंपायन उवाच ।
ततस्तेषां महाराज तत्रैवामिततेजसाम् ।
छद्मलिङ्गप्रविष्टानां पाण्डवानां महात्मनाम् ॥ १
व्यतीतः समयः सम्यग्विराटनगरे सताम् ।
कुर्वतां तस्य कर्माणि विराटस्य महीपतेः ॥ २
कीचके तु हते राजा विराटः परवीरहा ।
परां संभावनां चक्रे कुन्तीपुत्रे युधिष्ठिरे ॥ ३
ततस्त्रयोदशस्यान्ते तस्य वर्षस्य भारत ।
सुशर्मणा गृहीतं तु गोधनं तरसा बहु ॥ ४
ततः शब्दो महानासीद्रेणुश्च दिवमस्पृशत् ।
शङ्खदुन्दुभिघोषश्च भेरीणां च महास्वनः ।
गवाश्वरथनागानां निस्वनश्च पदातिनाम् ॥ ५
एवं तैस्त्वभिनिर्याय मत्स्यराजस्य गोधने ।
त्रिगर्तैर्गृह्यमाणे तु गोपालाः प्रत्यषेधयन् ॥ ६
अथ त्रिगर्ता बहवः परिगृह्य धनं बहु ।
परिक्षिप्य हयैः शीघ्रै रथव्रातैश्च भारत ।
गोपालान्प्रत्ययुध्यन्त रणे कृत्वा जये धृतिम् ॥ ७
ते हन्यमाना बहुभिः प्रासतोमरपाणिभिः ।
गोपाला गोकुले भक्ता वारयामासुरोजसा ॥ ८
परश्वथैश्च मुसलैर्भिण्डिपालैश्च मुद्गरैः ।
गोपालाः कर्षणैश्चित्रैर्जघ्नुरश्वान्समन्ततः ॥ ९
ते हन्यमानाः संक्रुद्धास्त्रिगर्ता रथयोधिनः ।
विसृज्य शरवर्षाणि गोपानद्रावयन्बलात् ॥ १०
हन्यमानेषु गोपेषु विमुखेषु विशांपते ।
ततो युवानः संभीताः श्वसन्तो रेणुगुण्ठिताः ॥ ११
जवेन महता चैव गोपालाः पुरमाव्रजन् ।
विराटनगरं प्राप्य नरा राजानमब्रुवन् ॥ १२
सभायां राजशार्दूलमासीनं पाण्डवैः सह ।
शूरैः परिवृतं योधैः कुण्डलाङ्गदधारिभिः ॥ १३
सद्भिश्च पण्डितैः सार्धं मन्त्रिभिश्चापि संवृतम् ।
दृष्ट्वा शीघ्रं तु गोपाला विराटमिदमब्रुवन् ॥ १४
अस्मान्युधि विनिर्जित्य परिभूय सबान्धवान् ।
षष्टिं गवां सहस्राणि त्रिगर्ताः कालयन्ति ते ।
ता निवर्तय राजेन्द्र मा नेशुः पशवस्तव ॥ १५
वैशंपायन उवाच ।
श्रुत्वा तु वचनं तेषां गोपालानामरिंदमः ।
स राजा महतीं सेनां मात्स्यानां समवाहयत् ।
रथनागाश्वकलिलां पत्तिध्वजसमाकुलाम् ॥ १६
राजानो राजपुत्राश्च तनुत्राण्यथ भेजिरे ।
भानुमन्ति विचित्राणि सूपसेव्यानि भागशः ॥ १७
पृथक्काञ्चनसन्नाहान्रथेष्वश्वानयोजयन् ।
उत्कृष्य पाशान्मौर्वीणां शूराश्चापेष्वयोजयन् १८
दृढमायसगर्भं तु कवचं तप्तकाञ्चनम् ।
विराटस्य प्रियो भ्राता शतानीकोऽभ्यहारयत् १९
सर्वभारसहं वर्म कल्याणपटलं दृढम् ।
शतानीकादवरजो मदिराक्षोऽभ्यहारयत् ॥ २०
उत्सेधे यस्य पद्मानि शतं सौगन्धिकानि च ।
मृष्टहाटकपर्यन्तं सूर्यदत्तोऽभ्यहारयत् ॥ २१
दृढमायसगर्भं च श्वेतं रुक्मपरिष्कृतम् ।
विराटस्य सुतो ज्येष्ठो वीरः शङ्खोऽभ्यहारयत् २२
शतसूर्यं शतावर्तं शतबिन्दु शताक्षिमत् ।
अभेद्यकल्पं मत्स्यानां राजा कवचमाहरत् ॥ २३
ततो नानातनुत्राणि स्वानिस्वानि महाबलाः ।
युयुत्सवोऽभ्यनह्यन्त देवकल्पाः प्रहारिणः ॥ २४
सोपस्करेषु शुभ्रेषु महत्सु च महारथाः ।
पृथक्काञ्चनसन्नाहान्रथेष्वश्वानयोजयन् ॥ २५
सूर्यचन्द्रप्रतीकाशे मणिहेमविभूषिते ।
महाप्रमाणं मत्स्यस्य ध्वजमुच्छ्रियते रथे ॥ २६
ध्वजान्बहुविधाकारान्सौवर्णान्हेममालिनः ।
यथास्वं क्षत्रियाः शूरा रथेषु समयोजयन् ॥ २७
रथेषु युज्यमानेषु कङ्को राजानमब्रवीत् ।
मया ह्यस्त्रं चतुर्वर्गमवाप्तमृषिसत्तमात् ॥ २८

दंशितो रथमास्थाय पदं निर्याम्यहं गवाम् ।
अयं च बलवाञ्छूरो वललो दृश्यतेऽनघ ॥ २९
गोसङ्ख्यमश्वबन्धं च संयोजय रथेषु वै ।
नैतेन जातु युध्येयुर्गवार्थमिति मे मतिः ॥ ३०
वैशंपायन उवाच ।
अथ मात्स्योऽब्रवीद्राजा शतानीकं जघन्यजम् ।
कङ्कश्च बललः सूदो दामग्रन्थिश्च वीर्यवान् ॥ ३१
तन्त्रिपालश्च गोसङ्ख्यो यथा ते पुरुषर्षभाः ।
शूराः सुवीराः पुरुषा नागराजवरोपमाः ।
युध्येयुरिति मे बुद्धिर्वर्तते नात्र संशयः ॥ ३२
एतेषामपि दीयन्तां रथा ध्वजपताकिनः ।
कवचानि विचित्राणि दृढानि च लघूनि च ३३
प्रतिमुञ्चन्तु गात्रेषु दीयन्तामायुधानि च ।
नेमे जातु न युध्येयुरिति मे धीयते मतिः ॥ ३४
वैशंपायन उवाच ।
तच्छ्रुत्वा नृपतेर्वाक्यं शीघ्रं त्वरितमानसः ।
शतानीकः स पार्थेभ्यो रथान्राजन्समादिशत् ३५
सहदेवाय राज्ञे च भीमाय नकुलाय च ।
तान्दृष्ट्वा सहसा सूता राजभक्तिपुरस्कृताः ॥ ३६
निर्दिष्टा नरदेवेन रथाञ्छीघ्रमयोजयन् ।
कवचानि विचित्राणि नवानि च दृढानि च ॥३७
विराटः प्रददौ यानि तेषामक्लिष्टकर्मणाम् ।
तान्यामुच्य शरीरेषु दंशितास्ते महारथाः ॥ ३८
तरस्विनश्छन्नरूपाः सर्वशस्त्रविशारदाः ।
रथान्हेमपरिष्कारान्समास्थाय महारथाः ।
पाण्डवा निर्ययुर्हृष्टा दंशिता राजसत्तम ॥ ३९
विराटमन्वयुः पश्चात्सहिताः कुरुपुङ्गवाः ।
चत्वारो भ्रातरः शूराः पाण्डवाः सत्यविक्रमाः॥
दीर्घाणां च दृढानां च धनुषां ते यथाबलम् ।
उत्कृष्य पाशान्मौर्वीणां वीराश्चापेष्वयोजयन् ४१
ततः सुवाससः सर्वे वीराश्चन्दनरूषिताः ।
चोदिता नरदेवेन क्षिप्रमश्वानचोदयन् ॥ ४२
ते हया हेमसंच्छन्ना बृहन्तः साधुवाहिनः ।
चोदिताः प्रत्यदृश्यन्त पत्रिणामिव पङ्क्तयः ॥४३
भीमरूपाश्च मातङ्गाः प्रभिन्नकरटामुखाः ।
स्वारूढा युद्धकुशलैर्महामात्राधिरोहिताः ॥ ४४
क्षरन्त इव जीमूताः सुदन्ताः षाष्टिहायनाः ।
राजानमन्वयुः पश्चात्क्रामन्त इव पर्वताः ॥ ४५
दृढायुधजनाकीर्णं रथाश्वगजसंकुलम् ।
तद्बलाग्रं विराटस्य शक्रस्येव तदा बभौ ॥ ४६
तं प्रयान्तं महाराज निनीषन्तं गवां पदम् ।
विशारदानां वैश्यानां प्रकृष्टानां तदा नृप ॥४७
विंशतिस्तु सहस्राणि नराणामनुयायिनाम् ।
अष्टौ रथसहस्राणि दश नागशतानि च ।
विंशचाश्वसहस्राणि मात्स्यानां त्वरितं ययुः ४८
तदनीकं विराटस्य शुशुभेऽतीव भारत ।
वसन्ते बहुपुष्पाढ्यं काननं चित्रितं यथा ॥ ४९

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

## चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

विराटसुशर्मसैन्ययोर्युद्धम् ॥ १ ॥ युधिष्ठिरादिनिहतानां परिसङ्ख्यानम् ॥ २ ॥ विराटसुशर्मणोर्युद्धम् ॥ ३ ॥

वैशंपायन उवाच ।
निर्याय नगराच्छूरा व्यूढानीकाः प्रहारिणः ।
त्रिगर्तानस्पृशन्मात्स्याः सूर्येऽस्तंगमिते सति ॥१
ते त्रिगर्ताश्च मात्स्याश्च व्यूढानीकाः प्रहारिणः ।
अन्योन्यमभिवर्तन्ते गोषु गृद्धा महाबलाः ॥ २
भीमाश्च मत्तमातङ्गास्तोमराङ्कुशचोदिताः ।
ग्रामणीयैः समारूढाः कुशलैर्हस्तिसादिभिः ॥ ३
तेषां समागमो घोरस्तुमुलो रोमहर्षणः ।
घ्नतां परस्परं राजन्यमराष्ट्रविवर्धनः ॥ ४
देवासुरसमो राजन्नासीत्सूर्येऽवलम्बति ।
पदातिरथनागेन्द्रहयारोहबलौघवान् ॥ ५
अन्योन्यमभ्यापततां निघ्नतां चेतरेतरम् ।

उदतिष्ठद्रजो भौमं न प्राज्ञायत किंचन ॥ ६
पक्षिणश्चापतन्भूमौ सैन्येन रजसा वृताः ।
इषुभिर्व्यतिसर्पद्भिरादित्योऽन्तरधीयत ॥ ७
खद्योतैरिव संयुक्तमन्तरिक्षमजायत ॥ ८
रुक्मपृष्ठानि चापानि विचेरुर्विद्युतो यथा ।
नर्दतां लोकवीराणां सव्यं दक्षिणमस्यताम् ॥ ९
रथा रथैः समाजग्मुः पत्तयश्च पदातिभिः ।
सादिनः सादिभिर्जग्मुर्गजैश्चापि महागजाः ॥१०
असिभिः पट्टसैश्चापि शक्तिभिस्तोमरैरपि ।
संरब्धाः समरे योधा निजघ्नुरितरेतरम् ॥ ११
निघ्नन्तः समरेऽन्योन्यं हृष्टाः परिघपाणयः ।
न शेकुरतिसंक्रुद्धाः शूराः कर्तुं पराङ्मुखम् ॥ १२
रक्ताधरोष्ठं सुनसं क्लृप्तश्मश्रु स्वलंकृतम् ।
अदृश्यत शिरश्छिन्नं रजोविध्वस्तकुण्डलम् ॥ १३
दृश्यन्ते तत्र गात्राणि वीरैश्छिन्नानि सर्वशः ।
सालस्कन्धनिकाशानि क्षत्रियाणां महामृधे ॥१४
नागभोगनिकाशैश्च बाहुभिश्चन्दनोक्षितैः ।
आकीर्णा वसुधा तत्र शिरोभिश्च सकुण्डलैः ॥१५
यथा वा वाससी श्लक्ष्णे महारजतरञ्जिते ।
बिभ्रती युवती श्यामा तद्वद्भाति वसुन्धरा ॥१६
उपाशाम्यद्रजो भौमं रुधिरेण प्रवर्षता ।
कश्मलं प्राविशद्घोरं निर्मर्यादमवर्तत ॥ १७
युधिष्ठिरोऽपि धर्मात्मा भ्रातृभिः सहितस्तदा ।
व्यूहं कृत्वा विराटस्य अन्वयुध्यत पाण्डवः ॥१८
आत्मानं श्येनवत्कृत्वा तुण्डमासीद्युधिष्ठिरः ।
पक्षौ यमौ च भवतः पुच्छमासीद्वृकोदरः ॥ १९
सहस्रं न्यहनत्तत्र कुन्तीपुत्रो युधिष्ठिरः ।
भीमसेनस्तु संक्रुद्धः सर्वशस्त्रभृतांवरः ।
द्विसहस्रं रथान्वीरः परलोकं प्रवेशयत् ॥ २०
नकुलस्त्रिशतं जघ्ने सहदेवश्चतुःशतम् ।
शतानीकः शतं जघ्ने मदिराश्वश्चतुःशतम् ॥ २१
प्रहृष्टां महतीं सेनां त्रिगर्तानां महाबलौ ।
आर्च्छेतां बहुसंरब्धौ केशाकेशि रथारथि ॥ २२
लक्षयित्वा त्रिगर्तानां तौ प्रविष्टौ महाचमूम् ।
जग्मतुः सूर्यदत्तश्च वललश्चापि पृष्ठतः ॥ २३
शङ्खो विराटपुत्रश्च महेष्वासो महाबलः ।
विनिघ्नन्समरे शूरान्प्रविवेश महाचमूम् ॥ २४
विराटस्तत्र संग्रामे हत्वा पञ्चशतं रथान् ।
कुञ्जराणां शतं चैव सहस्रं वाजिनां तथा ॥ २५
चरन्स विविधान्मार्गान्रथेन रथिनांवरः ।
त्रिगर्तानां सुशर्माणमार्च्छद्रुक्मरथं रणे ॥ २६
तौ तु प्राहरतां तत्र महेष्वासौ महाबलौ ।
अन्योन्यमभिनिघ्नन्तौ गोषु गोवृषभाविव ॥ २७
राजसिंहौ सुसंरब्धौ विरेजतुरमर्षणौ ।
कृतास्त्रौ निशितैर्बाणैरसिशक्तिपरश्वधैः ॥ २८
ततो रथाभ्यां रथिनौ व्यतीयातां समन्ततः ।
शरान्ससृजतुः शीघ्रं तोयधारा घनाविव ॥ २९
अन्योन्यमभिसंरब्धौ दन्ताभ्यामिव कुञ्जरौ ।
कृतास्त्रौ निशितैर्बाणैर्दारयामासतू रणे ॥ ३०
मात्स्यो राजा सुशर्माणं विव्याध निशितैः शरैः ।
पञ्चभिः पञ्चभिर्बाणैर्विव्याध चतुरो हयान् ॥३१
द्वाभ्यां सूतं च विव्याध केतुं च त्रिभिराशुगैः ।
तथैव मात्स्यराजं तु सुशर्मा युद्धदुर्मदः ।
पञ्चाशद्भिः शितैर्बाणैर्विव्याध परमास्त्रवित् ॥३२
तयोर्बलानि राजेन्द्र समस्तानि महारणे ।
नाजानन्त तदाऽन्योन्यं प्रदोषे रजसा वृते ॥३३

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

## पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

सुशर्मणा युद्धे विराटस्य ग्रहणम् ॥ १ ॥ भीमेन युधिष्ठिरचोदनया विराटस्य मोचनपूर्वकं सुशर्मणो बन्धनम् ॥ २ ॥ युधिष्ठिरेण करुणया सुशर्मणो विमोक्षणम् ॥ ३ ॥

वैशंपायन उवाच ।
तमसाऽभिप्लुते लोके रजसा चैव भारत ।
व्यतिष्ठन्त मुहूर्तं ते व्यूढानीकाः प्रहारिणम् ॥ १
ततोऽन्धकारं प्रणुदन्नुदतिष्ठन्निशाकरः ।

कुर्वाणो विमलां रात्रिं दर्शयन्क्षत्रियात्रणे ॥ २
ततः प्रकाशमासाद्य पुनर्युद्धमवर्तत ।
घोररूपं तदा तेषामवेक्ष्य तु परस्परम् ॥ ३
तथैव तेषां तुमुलानि तानि
क्रुद्धानि चान्योन्यमभिद्रवन्ति ।
गदासिपट्टैश्च परश्वथैश्च
प्रासैश्च तीक्ष्णाग्रसुधौतधारैः ॥ ४
बलं तु मात्स्यस्य बलेन राजा
सर्वं त्रिगर्ताधिपतिः सुशर्मा ।
प्रमथ्य जित्वा च निपीड्य मत्स्या-
न्विराटमोजस्विनमभ्यधावत् ॥ ५
मत्ताविव वृषौ तौ तु गजाविव मदोद्धतौ ।
सिंहाविव गजग्राहौ शक्रवृत्राविवोद्धतौ ॥ ६
उभौ तुल्यबलोत्साहावुभौ तुल्यपराक्रमौ ।
उभौ तुल्यास्त्रविक्षेपावुभौ युद्धविशारदौ ॥ ७
तौ निहत्य पृथग्धुर्यानुभयोः पार्ष्णिसारथी ।
आस्तां तुल्यधनुर्ग्राहौ कृष्णकंसाविवोद्धतौ ॥ ८
ततः सुशर्मा त्रैगर्तः सह भ्रात्रा सुवर्मणा ।
अभ्यद्रवन्मत्स्यराजं रथव्रातेन सर्वशः ॥ ९
ततो रथाभ्यां प्रस्कन्द्य भ्रातरौ क्षत्रियर्षभौ ।
गदापाणी सुसंरब्धौ समभ्यद्रवतां जवात् ॥ १०
सुशर्मा परवीरघ्नो बलवान्वीर्यवान्गदी ।
विरथं मत्स्यराजानं जीवग्राहमथाग्रहीत् ॥ ११
तमुन्मथ्य सुशर्मा तु युवतीमिव कामुकः ।
स्यन्दनं स्वं समारोप्य प्रययौ भीमविक्रमः ॥१२
तस्मिन्गृहीते विरथे विराटे बलवत्तरे ।
बलं सर्वं विभग्नं तन्निरुत्साहं निराशकम् ॥ १३
प्राद्रवन्त भयान्मात्स्यास्त्रिगर्तैरर्दिता रणे ।
विदिक्षु दिक्षु सर्वासु पलायन्ति च यान्ति च१४
तेषु विद्राव्यमाणेषु कुन्तीपुत्रो युधिष्ठिरः ।
अभ्यभाषत धर्मात्मा भीमसेनमरिन्दमम् ॥ १५
मात्स्यराजस्त्रिगर्तेन परामृष्टः सुशर्मणा ।
तं मोक्षय महाबाहो मा गमद्विषतां वशम् ॥१६

भीमसेन महाबाहो गृहीतं तु सुशर्मणा ।
त्रायस्व मोचय क्षिप्रमसत्प्रीतिकरं नृपम् ॥ १७
उषिताः स सुखं सर्वे सर्वकामैः सुपूजिताः ।
भीमसेन त्वया कार्या तस्य वासस्य निष्कृतिः १८
वैशंपायन उवाच ।
तं तथावादिनं तत्र भीमसेनो महाबलः ।
अभ्यभाषत दुर्धर्षो रणमध्ये युधिष्ठिरम् ॥ १९
अहमेनं परित्रास्ये शासनात्तव पार्थिव ।
पश्येदं सुमहत्कर्म युध्यतो मम शत्रुभिः ॥ २०
स्वबाहुबलमाश्रित्य परेषामसमं रणे ।
एकान्तमाश्रितो राजंस्तिष्ठ त्वं भ्रातृभिः सह २१
अयं वृक्षो महाशाखो गिरिमात्रो वनस्पतिः ।
अहमेनं समारुज्य पोथयिष्यामि शात्रवान् ॥२२
वैशंपायन उवाच ।
तं मत्तमिव मातङ्गं वीक्षमाणं वनस्पतिम् ।
अब्रवीद्भ्रातरं वीरं धर्मराजो युधिष्ठिरः ॥ २३
भीम मा साहसं कार्षीस्तिष्ठत्वेष वनस्पतिः ॥२४
मा त्वां वृक्षेण कर्माणि कुर्वन्तमतिमानुषम् ।
जनाः समवबुध्येरन्भीमोऽयमिति भारत ॥ २५
मा ग्रहीस्त्वमिमं वृक्षं सिंहनादं च मा नद ।
कर्मणा सिंहनादेन विज्ञास्यन्ति जना ध्रुवम् २६
इमं वृक्षं गृहीत्वा त्वं नेमां सेनामभिद्रव ।
वृक्षं च त्वां रुजन्तं वै विज्ञास्यति जनो ध्रुवं २७
अन्यदेवायुधं गृह्य प्रतिपद्यस्व मानुषम् ।
चापं वा यदि वा शक्तिं निस्त्रिंशं वा परश्वधम् २८
यदेव मानुषं भीम भवेदन्यैरलक्षितम् ।
तदेवायुधमादाय मोचयाशु महीपतिम् ॥ २९
यमौ च चक्ररक्षौ ते भवितारौ महाबलौ ।
व्यायच्छतस्ते समरे मत्स्यराजं परीप्सतः ॥ ३०
वैशंपायन उवाच ।
भ्रातुर्वचनमादाय भीमो वृक्षं विसृज्य च ।
चापमादाय संप्राप्तो रथमास्थाय पाण्डवः ॥ ३१
व्यमुञ्चच्छरवर्षाणि सतोय इव तोयदः ।

नन्दयन्क्षत्रियानिति थ. पाठः ॥ २ ॥

पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

तं भीमो भीमकर्माणं सुशर्माणमथाऽऽद्रवत् ३२
विराटमभिवीक्ष्यैनं तिष्ठतिष्ठेति चावदत् ॥ ३३
सुशर्मा चिन्तयामास कालान्तकयमोपमम् ।
तिष्ठतिष्ठेति भाषन्तं पृष्ठतो रथपुङ्गवः ॥ ३४
पश्यतां सुमहत्कर्म महद्युद्धमुपस्थितम् ।
परावृत्तो धनुर्गृह्य सुशर्मा भ्रातृभिः सह ॥ ३५
निमेषान्तरमात्रेण भीमसेनेन ते रथाः ।
रथानां च गजानां च वाजिनां च ससादिनां ३६
सहस्रशतसंघाताः शूराणामुग्रधन्विनाम् ।
पातिता भीमसेनेन विराटस्य समीपतः ॥ ३७
पत्तयो निहतास्तेषां गदां गृह्य महात्मना ॥ ३८
तद्दृष्ट्वा तादृशं युद्धं सुशर्मा युद्धदुर्मदः ।
चिन्तयामास मनसा किं शेषं हि बलस्य मे ॥३९
अपरो दृश्यते सैन्ये पुरा मग्नो महाबले ।
आकर्णपूर्णेन तदा धनुषा प्रत्यदृश्यत ॥ ४०
सुशर्मा सायकांस्तीक्ष्णान्क्षिपते च पुनःपुनः ४१
ततः समस्तास्ते सर्वे तुरगानभ्यचोदयन् ।
दिव्यमस्त्रं विकुर्वाणास्त्रिगर्तान्प्रत्यमर्षणाः ॥ ४२
तान्निवृत्तरथान्दृष्ट्वा पाण्डवास्तां महाचमूम् ।
वैराटिः परमक्रुद्धो युयुधे परमाद्भुतम् ॥ ४३
त्रिगर्ताः समभिक्रम्य अयुध्यन्त जयैषिणः ।
तान्भीमसेनः संक्रुद्धः सर्वशस्त्रभृतांवरः ।
द्विसहस्ररथान्वीरः परलोकं प्रवेशयत् ॥ ४४
सहस्रं प्राहिणोद्राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलश्चापि सप्तैव शतानि प्राहिणोच्छरैः ॥ ४५
शतानि त्रीणि शूराणां सहदेवः प्रतापवान् ।
युधिष्ठिरसमादिष्टो निजघ्ने पुरुषर्षभः ॥ ४६
प्रविश्य महतीं सेनां त्रिगर्तानां महाबलः ।
क्षोभयन्सर्वभूतानि सिंहः क्षुद्रमृगानिव ॥ ४७
ततो युधिष्ठिरो राजा त्वरमाणो महाबलः ।
अभिद्रुत्य सुशर्माणं शरैरभ्यहनद्भृशम् ॥ ४८
सुशर्माऽपि सुसंक्रुद्धस्त्वरमाणो युधिष्ठिरम् ।
अविध्यद्दशभिर्बाणैश्चतुर्भिश्चतुरो हयान् ॥ ४९
ततो राजन्क्षिप्रकारी कुन्तीपुत्रो वृकोदरः ।

समासाद्य सुशर्माणमश्वांस्तस्य न्यपातयत् ॥ ५०
पृष्ठगोपौ च तस्याथ हत्वा परमसायकैः ।
अथास्य सारथिं क्रुद्धो रथोपस्थादपातयत् ॥ ५१
चक्ररक्षस्तु शूरश्च शोणाश्वो नाम नामतः ।
स भयाद्विरथं दृष्ट्वा त्रैगर्तं व्याजहात्तदा ॥ ५२
ततो विराटः प्रस्कन्द्य रथादथ सुशर्मणः ।
गदामस्य परामृश्य तमेवाभ्यहनद्बली ॥ ५३
स चचार गदापाणिर्वृद्धोऽपि तरुणो यथा ॥५४
भीमस्तु भीमसंकाशो रथात्प्रस्कन्द्य वीर्यवान् ।
उत्प्लुत्य गत्वा वेगेन तद्रथे विनिपत्य च ।
सुशर्मणः शिरोऽगृह्णात्पुनराश्वास्य युध्यतः ॥५५
अग्राद्गिरेर्विनिक्षिप्य सिंहः क्षुद्रमृगं यथा ।
ऊर्ध्वमुत्प्लुत्य मार्जार आखोर्यद्वच्छिरो रुषा ॥५६
समुद्यम्य तु रोषात्तं निष्पिपेष महीतले ।
यदा मूर्ध्नि महाबाहुः प्राहरद्विलपिष्यतः ॥ ५७
तस्य जानु ददौ भीमो जघ्ने चैनमरत्निना ।
स मोहमगमद्राजा प्रहारवरपीडितः ॥ ५८
तस्मिन्वीरे गृहीते तु त्रिगर्तानां महारथे ।
अभज्यत बलं सर्वं त्रिगर्तानां भयातुरम् ॥ ५९
निवृत्य गास्ततः सर्वाः पाण्डुपुत्रा महारथाः ।
अवजित्य सुशर्माणं धनं चादाय सर्वशः ॥ ६०
स्वबाहुबलसंपन्ना ह्रीनिषेवा यतव्रताः ।
विराटस्य महात्मानः परिक्लेशविनाशनाः ।
स्थिताः समक्षं ते सर्वे त्वथ भीमोऽभ्यभाषत ६१
नायं पापसमाचारो मत्तो जीवितुमर्हति ।
किंतु शक्यं मया कर्तुं यद्राजा सततं घृणी ।
गले गृहीत्वा राजानमानीय विवशं वशम् ॥६२
तत एनं विचेष्टन्तं बद्ध्वा पार्थो वृकोदरः ।
रथमारोपयामास विसंज्ञं पांसुगुण्ठितम् ॥ ६३
अभ्येत्य रणमध्यस्थमभ्यगच्छद्युधिष्ठिरम् ।
दर्शयामास भीमस्तु सुशर्माणं नराधिपम् ॥ ६४
प्रोवाच पुरुषव्याघ्रो भीममाहवशोभिनम् ।
तं राजा प्राहसद्दृष्ट्वा मुच्यतां वै नराधमः ॥ ६५
एवमुक्तोऽब्रवीद्भीमः सुशर्माणं महाबलम् ।

जीवितुं चेच्छसे मूढ हेतुं मे गदतः शृणु ॥ ६६
दासोस्मीति त्वया वाच्यं संसत्सु च सभासु च ।
एवं ते जीवितं दद्यामेष युद्धजितो विधिः ॥ ६७
तमुवाच ततो ज्येष्ठो भ्राता सप्रणयं वचः ।
मुञ्चमुञ्चाधमाचारं प्रमाणं यदि ते वयम् ॥ ६८
दासभावं गतो ह्येष विराटस्य महीपतेः ।
अदासो गच्छ मुक्तोसि मैवं कार्षीः कदाचन ॥ ६९
एवमुक्ते तु सव्रीडः सुशर्माऽसीदधोमुखः ।
स मुक्तोऽभ्येत्य राजानमभिवाद्य प्रतस्थिवान् ७०
विसृज्य तु सुशर्माणं पाण्डवास्ते हतद्विषः ।
स्वबाहुबलसंपन्ना ह्रीनिषेवा यतव्रताः ।
संग्राममशिरसो मध्ये तां रात्रिं सुखिनोऽवसन् ७१

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

## षट्त्रिंशोऽध्यायः ॥ ३६ ॥

युधिष्ठिरचोदनया विराटप्रेषितैर्दूतैर्नगरमेत्य जयोद्घोषणम् ॥ १ ॥

वैशंपायन उवाच ।
ततो विराटः कौन्तेयानतिमानुषविक्रमान् ।
अर्चयामास वित्तेन मानेन च महारथान् ।
वचसा चैव सान्त्वेन स्नेहेन च मुदाऽन्वितः ॥ १
विराट उवाच ।
यथैव मम रत्नानि युष्माकं तानि वै तथा ।
कार्यं कुरुत तैः सर्वैर्यथाकामं यथासुखम् ॥ २
ददाम्यलंकृताः कन्या वसूनि विविधानि च ।
मनसा चाप्यभिमेतं यद्वः शत्रुनिबर्हणाः ॥ ३
युष्माकं विक्रमादद्य मुक्तोऽहं स्वस्तिमानिह ।
तस्माद्भवन्तो मत्स्यानामीश्वराः सर्व एव हि ॥ ४
वैशंपायन उवाच ।
तं तथावादिनं तत्र कौरवेयाः पृथक्पृथक् ।
ऊचुः प्रहृष्टमनसो युधिष्ठिरपुरोगमाः ॥ ५
प्रतिनन्दामहे वाचं सर्वथैव विशांपते ।
एतावताऽद्य प्रीताःस्मो यत्त्वं मुक्तोसि शत्रुभिः ६
यत्त्वं मुक्तोसि शत्रुभ्यो ह्येतत्कार्यं हितं हि नः ।
न किंचित्कार्यमस्माकं न धनं मृगयामहे ॥ ७
अथाब्रवीत्प्रीतमना मात्स्यराजो युधिष्ठिरम् ।
निर्भरः प्रीतिपूरेण हर्षगद्गदया गिरा ॥ ८
पुनरेव महाबाहुर्विराटो राजसत्तमः ।
एहि त्वामभिषेक्ष्यामि मत्स्यराजस्तु नो भवान् ९
मनसा चाप्यभिप्रेतं यत्ते शत्रुनिबर्हण ।
तत्तेऽहं संप्रदास्यामि सर्वमर्हति नो भवान् ॥ १०
रत्नानि गाः सुवर्णं च मणिमुक्तमथापि वा ।
वैयाघ्रपद्य विप्रेन्द्र सर्वथैव नमोस्तु ते ॥ ११
त्वत्कृते ह्यद्य पश्यामि राज्यमात्मानमेव च ।
यतश्च जातः संरम्भः स च शत्रुर्वशं गतः ॥ १२
ततो युधिष्ठिरो मात्स्यं पुनरेवाब्रवीद्वचः ।
प्रतिनन्दामि ते वाचं मनोज्ञां मात्स्य भाषितां १३
आनृशंस्यपरो नित्यं सुमुखः सततं भवान् ।
पुनरेव विराटश्च राजा कङ्कमभाषत ॥ १४
अहो शूद्रस्य कर्माणि वललस्य द्विजोत्तम ।
सोहं शूद्रेण संग्रामे वललेनाभिरक्षितः ॥ १५
त्वत्कृते सर्वमेवैतदुपपन्नं ममानघ ।
वरं वृणीष्व भद्रं ते ब्रूहि किं करवाणि ते ॥ १६
ददामि ते महाप्रीत्या रत्नान्युच्चावचान्यहम् ।
शयनासनयानानि कन्याश्च समलंकृताः ॥ १७
हस्त्यश्वरथसङ्घाश्च राष्ट्राणि विविधानि च ।
एतानि च मम प्रीत्या प्रतिगृह्ण समान्तिके ॥ १८
वैशंपायन उवाच ।
तं तथावादिनं तत्र कौरव्यः प्रत्यभाषत ।
एषैव तु मम प्रीतिर्यच्चं मुक्तोसि शत्रुभिः ॥ १९
प्रतीतश्चेत्पुरं तुष्टः प्रविशाद्य परंतप ।
दारैः पुत्रैश्च संश्लिष्य सा हि प्रीतिर्ममातुला २०
सुशर्माणं तु राजेन्द्र सभृत्यबलवाहनम् ।

विसर्जय नरश्रेष्ठं वरमेतदहं वृणे ॥ २१
वैशंपायन उवाच ।
एवमुक्ते तु कङ्केन विराटो राजसत्तमः ।
प्रत्युवाच ततः कङ्कं सुशर्मा यातु चेष्टतः ॥ २२
कङ्क उवाच ।
गच्छन्तु दूतास्त्वरिता नगरं तव पार्थिव ।
सुहृदां प्रियमाख्यातुं घोषयन्तु च ते जयम् ॥ २३
ततस्तद्वचनान्मात्स्यो दूतान्राजा समादिशत् ।
आचक्षध्वं पुरं गत्वा संग्रामे विजयं मम ॥ २४
कुमार्यः समलंकृत्य पर्यागच्छन्तु मे पुरात् ।
वादित्राणि च सर्वाणि गणिकाश्च स्वलंकृताः ।
प्रत्यायान्तु च मे शीघ्रं नागराः सर्व एव ते ॥२५
एवमुक्तास्तथा दूता रात्रौ यात्वा तु केवलम् ।
ततोऽन्तरे चानुषिता दूताः शीघ्रानुयायिनः २६
नगरं प्राविशंस्ते वै सूर्ये सम्यगथोदिते ।
विराटनगरं प्राप्य शीघ्रं नान्दीमघोषयन् ।
पताकोच्छ्रयमाल्याढ्यं पुरमप्रतिमं यथा ॥ २७

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

## सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

दुर्योधनेन भीष्मद्रोणादिभिः सह विराटनगरमेत्य उत्तरभागे गवां ग्रहणम् ॥ १ ॥ गोपालेन केनचित्पुरमेत्योत्तरंप्रति कुरुभिर्गोग्रहणस्य निवेदनम् ॥ २ ॥

वैशंपायन उवाच ।
याते त्रिगर्तान्मात्स्ये तु पशूंस्तान्वै परीप्सति ।
दुर्योधनः सहामात्यैर्विराटपुरमभ्यगात् ॥ १
भीष्मद्रोणौ च कर्णश्च कृपश्च परमास्त्रवित् ।
द्रौणिश्च सौबलश्चैव तथा दुःशासनः शलः ॥ २
विविंशतिर्विकर्णश्च चित्रसेनश्च वीर्यवान् ।
दुःसहो दुर्मुखश्चैव एते चान्ये महारथाः ॥ ३
सर्वे मत्स्यानुपागम्य विराटस्य महीपतेः ।
गोपान्विद्राव्य तरसा गोधनं जह्रुरोजसा ॥ ४
गवां शतसहस्राणि कुरवः कालयन्ति च ।
महता रथवंशेन परिगृह्य समन्ततः ॥ ५
गोपालानां तु घोषेषु हन्यतां तैर्महारथैः ।
आरावः सुमहानासीत्संप्रहारे भयंकरे ॥ ६
गवाध्यक्षस्तु संत्रस्तो रथमास्थाय सत्वरः ।
जगाम नगरायैव परिक्रोशंस्तदाऽऽर्तवत् ॥ ७
स प्रविश्य पुरं राज्ञो नृपवेश्माभ्ययात्ततः ।
अवतीर्य रथात्तूर्णमाख्यातुं प्रविवेश ह ॥ ८
दृष्ट्वा भूमिंजयं नाम पुत्रं मात्स्यस्य मानिनम् ।
तस्मै च सर्वमाचष्ट राष्ट्रस्य पशुकर्षणम् ॥ ९
गवां शतसहस्राणि कुरवः कालयन्ति ते ।
प्रतिजेतुं समुत्तिष्ठ गोधनं राष्ट्रवर्धन ॥ १०
राजपुत्र हितप्रेप्सुः क्षिप्रं निर्याहि वै स्वयम् ।
त्वां हि मत्स्यो महीपालः शून्यपालमिहाकरोत् ११
त्वां वै परिषदो मध्ये श्लाघते स नराधिपः ।
पुत्रो ममानुरूपश्च शूरश्चेति कुलोद्वहः ॥ १२
इष्वस्त्रनिपुणो योधः सदा वीरश्च मे सुतः ।
समर्थः समरे योद्धुं कौरवैः सह तादृशैः ॥ १३
तस्य तत्सत्यमेवास्तु मनुष्येन्द्रस्य भाषितम् ।
जयश्च नियतो युद्धे कौरवाश्च ध्रुवं हताः ॥ १४
आवर्तय कुरूञ्जित्वा पशून्पशुपतिर्यथा ।
निर्दहैषामनीकानि भीमेन शरतेजसा ॥ १५
धनुश्च्युतै रुक्मपुङ्खैश्चित्रैः संनतपर्वभिः ।
द्विषतां भिन्ध्यनीकानि गजानामिव यूथपः ॥१६
पाशोपधानां ज्यातन्त्रीं चापदण्डां महास्वनाम् ।
शरवर्णां धनुर्वीणां शत्रुमध्ये प्रवादय ॥ १७
निर्याहि नगराच्छीघ्रं राजपुत्र किमासते ।

पाशोपधानां पाशौ मौर्वीप्रान्तद्वयगतौ तावेव उपधाने वीणायां तन्त्रीसंधानार्थं कीलविशेषौ यस्यां सा ताम् । शरवर्णां शरास्ततो निःसरन्तस्तएव वर्णाः शब्दवत्त्वसामान्यात्स्वरस्पर्शादयो यस्याम् ॥ १७ ॥ सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

श्वेताः काञ्चनसंनाहा रथे युज्यन्तु ते हयाः ।
ध्वजं च सिंहं सौवर्णमुच्छ्रयस्व तथा विभो ॥१८
रुक्मपुङ्खाः प्रसन्नाग्रा मुक्ता हस्तवता त्वया ।
छादयन्तु शराः सूर्यं राज्ञामायुर्निरोधकाः ॥ १९
रणे जित्वा कुरून्सर्वान्वज्रपाणिरिवासुरान् ।
यशो महदवाप्य त्वं प्रविशेदं पुरं पुनः ॥ २०
त्वं हि राष्ट्रस्य परमा गतिर्मात्स्यपतेः सुतः ।
गतिमन्तो भवन्त्वद्य सर्वे विषयवासिनः ॥ २१
यथा हि पाण्डुपुत्राणामर्जुनो जयतांवरः ।
एवमेव गतिर्नूनं भवान्विषयवासिनाम् ॥ २२

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

## अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

उत्तरे समुचितसारथेरभावेन खिद्यमाने अर्जुनेन द्रौपदींप्रति उत्तराय बृहन्नलायाः सारथ्यकौशलनिवेदनचोदना ॥ १ ॥ भ्रातृचोदितया उत्तरया बृहन्नलांप्रति उत्तररथसारथ्यकरणप्रार्थना ॥ २ ॥ उत्तरेण सारथीभूतेनार्जुनेन सह कुरून्प्रति रणायाभियानम् ॥ ३ ॥

वैशंपायन उवाच ।
महाजनसमक्षं तु स्त्रीणां मध्ये विशेषतः ।
गवाध्यक्षेण संप्रोक्तो विराटतनयस्तदा ॥ १
स्त्रीमध्य उक्तस्तेनासौ वाक्यं तेजःप्रवर्धनम् ।
अन्तःपुरे श्लाघमान इदं वचनमब्रवीत् ॥ २
उत्तर उवाच ।
अद्याहमनुगच्छेयं दृढधन्वा गवां पदम् ।
यदि मे सारथिः कश्चिद्भवेदश्वेषु कोविदः ॥ ३
तमेव नाधिगच्छामि यो मे यन्ता समो भवेत् ।
पश्यध्वं सारथिं शीघ्रं मम युक्तं प्रयास्यतः ॥ ४
अष्टाविंशतिरात्रं वा मासं वा नूनमन्ततः ।
यत्तदासीन्महायुद्धं तत्र मे सारथिर्हतः ॥ ५
यद्यहं त्वधिगच्छेयं यो मे यन्ता भवेद्युधि ।
त्वरावानद्य यास्यामि समुच्छ्रितमहाध्वजः ॥ ६
विगाह्य तत्परानीकं गजवाजिरथाकुलम् ।
शस्त्रप्रतापान्निर्वीर्यान्कुरूञ्जित्वाऽऽनये पशून् ॥ ७
दुर्योधनं विकर्णं च कर्णं वैकर्तनं कृपम् ।
द्रोणं च सह पुत्रेण महेष्वासान्समागतान् ॥ ८
विद्रावयित्वा संग्रामे दानवान्मघवानिव ।
अनेनैव मुहूर्तेन पुनः प्रत्यानये पशून् ॥ ९
शून्यमाज्ञाय कुरवः प्रयान्त्यादाय गोधनम् ।
किं न शक्यं च तैः कर्तुं यदहं तत्र नाभवम् ॥१०
पश्येयुरद्य मे वीर्यं कुरवस्ते समागताः ।
किंनु पार्थोऽर्जुनः साक्षादिति मंस्यन्ति मां परे ॥११
वैशंपायन उवाच ।
तस्य तद्वचनं श्रुत्वा स्त्रीषु चात्मप्रशंसनम् ।
नामर्षयत पाञ्चाली बीभत्सोः परिकीर्तनम् ॥१२
श्रुत्वा तदर्जुनो वाक्यमुत्तरेण प्रभाषितम् ।
अतीतसमये काले प्रियां भार्यामभाषत ॥ १३
द्रुपदस्य सुतां राज्ञः पाञ्चालीं रूपसंमताम् ।
सत्यार्जवगुणोपेतां भर्तुः प्रियहितैषिणीम् ।
उवाच रहसि प्रीतः कृष्णां सर्वार्थकोविदः ॥१४
उत्तरां ब्रूहि पाञ्चालि गत्वा क्षिप्रं शुचिस्मिते १५
इयं किल पुरा युद्धे खाण्डवे सव्यसाचिनः ।
सारथिः पाण्डुपुत्रस्य पार्थस्य तु बृहन्नला ।
महाञ्जयो भवेद्युद्धे सा चेद्यन्ता बृहन्नला ॥ १६
वैशंपायन उवाच ।
सा चोदिता तदा ह्येन ह्यर्जुनेन शुचिस्मिता ।
पाञ्चाली च तदाऽऽगम्य उत्तराया निवेशनम् १७
ज्ञात्वा तु समयान्मुक्तं चन्द्रं राहुमुखादिव ।
युधिष्ठिरं धर्मपरं सत्यार्जवपथे स्थितम् ॥ १८
अमर्षयन्ती तद्दुःखं कृष्णा कमललोचना ।
उत्तरामाह वचनं सखीमध्ये विलासिनीम् ॥ १९
योऽयं युवा वारणयूथपोपमो
बृहन्नलाऽसीति जनोऽभ्यभाषत ।

पुराऽपि पार्थस्य स सारथिस्तदा
धनुर्धराणां प्रवरस्य मन्ये ॥ २०
एतेन वा सारथिना तदाऽर्जुनः
सदेवगन्धर्वमहासुरोरगान् ।
सर्वाणि भूतान्यजयत्स वीर्यवा-
नतर्पयच्चापि हिरण्यरेतसम् ॥ २१
यदस्य संस्थामपि तस्य संयुगे
जानामि वीर्यं परवीरमध्यगम् ।
संगृह्य रश्मीनपि चास्य वीर्यवा-
नादाय चापं प्रययौ रथे स्थितः ॥ २२
न सर्वभूतानि न देवदानवा
न चापि सर्वे कुरवः समागताः ।
धनं हरेयुस्तव जातु धन्विनो
बृहन्नला तूत्तरसारथिर्यदि ॥ २३
धनुष्यनवमश्चासीत्तस्य शिष्यो महात्मनः ।
सुदृष्टपूर्वो हि मया चरन्त्या पाण्डवालये ॥ २४
स चानेन सहायेन खाण्डवं चादहत्पुरा ।
अर्जुनस्य तदाऽनेन संगृहीता हयोत्तमाः ॥ २५
तेन सारथिना पार्थः सर्वभूतानि सर्वशः ।
अजयत्खाण्डवप्रस्थे न हि यन्ताऽस्ति तादृशः॥२६
वैशंपायन उवाच ।
ततः सैरन्ध्रिसहिता उत्तरा भ्रातुरब्रवीत् ।
अभ्यर्थयैनां सारथ्ये वीर शीघ्रं बृहन्नलाम् ॥२७
शिक्षितैषा हि सारथ्ये नर्तने गीतवादिते ।
सैरन्ध्र्याह महाप्राज्ञा स्तुवन्ती वै बृहन्नलाम् ॥२८
उत्तर उवाच ।
सैरन्ध्रि जानासि मम व्रतं हि
क्लीबेन पुंसा न हि संवदाम्यहम् ।
सोहं न शक्ष्यामि बृहन्नलां शुभे
वक्तुं स्वयं यच्छ हयान्ममेति ॥ २९
सैरन्ध्र्युवाच ।
भयकाले तु संप्राप्ते न व्रतं नाव्रतं पुनः ।
यथा दुःखं प्रतरति कर्तुं युक्तं चरेद्बुधः ।
इति धर्मविदः प्राहुस्तस्माद्वाच्या बृहन्नला ॥ ३०
येयं कुमारी सुश्रोणी भगिनी ते यवीयसी ।
अस्यास्तु वचनं वीर करिष्यति न संशयः ॥ ३१
यदि ते सारथिः सा स्यात्कुरून्सर्वान्न संशयः ।
जित्वा गाश्च समादाय ध्रुवमागमनं भवेत् ॥३२
वैशंपायन उवाच ।
एवमुक्तः स सैरन्ध्र्या भगिनीं प्रत्यभाषत ।
गच्छ त्वमनवद्याङ्गि तामानय बृहन्नलाम् ॥ ३३
सा प्राद्रवत्काञ्चनमाल्यधारिणी
ज्येष्ठेन भ्रात्रा प्रहिता यशस्विनी ।
भ्रातुर्नियोगं तु निशम्य सुभ्रूः
शुभानना हाटकवज्रभूषिता ॥ ३४
सा वज्रमुक्तामणिहेमकुण्डला
मृदुक्रमा भ्रातृनियोगचोदिता ।
प्रदक्षिणावर्ततनुः शिखण्डिनी
पद्मानना पद्मदलायताक्षी ॥ ३५
तन्वी समाङ्गी मृदुमन्द्रलोचना
मात्स्यस्य राज्ञो दुहिता विलासिनी ।
सा नर्तनागारमरालपक्ष्मा
शतह्रदा मेघमिवान्वपद्यत ॥ ३६
सा नागनासोपमसंहितोरू-
रनिन्दिता वेदिविलग्नमध्या ।
आसाद्य तस्थौ वरमाल्यधारिणी
पार्थं शुभा नागवधूरिव द्विपम् ॥ ३७
तामागतामायतताम्रलोचना-
मवेक्ष्य पार्थः समयेऽभ्यभाषत ॥ ३८
किमागता काञ्चनमाल्यधारिणी
सुगात्रि किंचित्त्वरिताऽसि सुभ्रु ।
किं ते मुखं सुन्दरि न प्रसन्न-
माचक्ष्व शीघ्रं मम चारुहासिनि ॥ ३९
वैशंपायन उवाच ।
सा वज्रवैडूर्यविकारकुण्डला
विनिद्रपद्मोत्पलपत्रगन्धिनी ।

शिखण्डिनी मयूरपिच्छालंकारवती ॥ ३५ ॥

अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

प्रसन्नताराधिपसंनिभानना
पार्थं कुमारी वचनं बभाषे ॥ ४०

उत्तरोवाच ।

हरन्ति वित्तं कुरवः पितुर्मे
शतं सहस्राणि गवां बृहन्नले ।
सा भ्रातुरश्वान्मम संयमस्व
पुरा परे दूरतरं हरन्ति गाः ॥ ४१
सैरन्ध्रिराख्याति बृहन्नले त्वां
सुशिक्षिता संग्रहणे रथाश्वयोः ।
अहं मरिष्यामि न मेऽत्र संशयो
मया वृता तत्र न चेद्गमिष्यसि ॥ ४२

वैशंपायन उवाच ।

तथा नियुक्तो नरदेवकन्यया
नरोत्तमः प्रीतमना धनञ्जयः ।
उवाच पार्थः शुभमन्द्रया गिरा
शुभाननां शुक्लदतीं शुचिस्मिताम् ॥ ४३
गच्छामि यत्रेच्छसि चारुहासिनि
हुताशनं प्रज्वलितं विशामि वा ।
इच्छामि तेऽहं वरगात्रि जीवितं
करोमि किं ते प्रियमद्य सुन्दरि ।
न मत्कृते द्रक्ष्यसि तत्पुरं प्रिये
वैवस्वतं प्रेतपतेर्महाभयम् ॥ ४४

वैशंपायन उवाच ।

एतावदुक्त्वा कुरुवीरपुङ्गवो
विलासिनीं शुक्लदतीं शुचिस्मिताम् ।
बृहन्नलारूपविभूषिताननो
विराटपुत्रस्य समीपमाव्रजत् ॥ ४५
तथा व्रजन्तं वरभूषणैर्वृतं
महाप्रभं वारणयूथपोपमम् ।
गजेन्द्रबाहुं कमलायतेक्षणं
कवाटवक्षस्थलमुन्नतांसम् ॥ ४६
तमागतं पार्थममित्रकर्शनं
महाबलं नागमिव प्रमाथिनम् ।
वैराटिरामन्त्र्य ततो बृहन्नलां
गवां निनीषन्पदमुत्तरोऽब्रवीत् ॥ ४७

तमाव्रजन्तं त्वरितं प्रभिन्नमिव कुञ्जरम् ।
अन्वगच्छद्विशालाक्षी गजं गजवधूरिव ॥ ४८
दूरादेव तु संप्रेक्ष्य राजपुत्रोऽभ्यभाषत ।
त्वया सारथिना पार्थः खाण्डवेऽग्निमतर्पयत् ॥ ४९
पृथिवीं चाजयत्कृत्स्नां कुन्तीपुत्रो धनञ्जयः ।
सैरन्ध्री त्वां ममाचष्ट सा हि जानाति पाण्डवान् ॥
देवेन्द्रसारथिर्वीरो मातलिः ख्यातविक्रमः ।
सुमहो जामदग्नेश्च विष्णोर्यन्ता च दारुकः ॥ ५१
सुमन्त्रो वा दाशरथेः सूर्ययन्ता तथाऽरुणः ।
सर्वे सारथयः ख्याता न बृहन्नलया समाः ॥ ५२
इत्युक्तोऽहं च सैरन्ध्र्या तेन त्वामाह्वयामि वै ।
आहूता त्वं मया सार्धं योद्धुं याहि बृहन्नले ॥ ५३
दूराद्दूरतरं गावो भवन्ति कुरुभिर्हृताः ।
तथोक्ता प्रत्युवाचेदं राजपुत्रं बृहन्नला ॥ ५४
का शक्तिर्मम सारथ्यं कर्तुं संग्राममूर्धनि ।
नृत्तं वा यदि वा गीतं वादित्रं वा पृथग्विधम् ।
तत्करिष्यामि भद्रं ते सारथ्यं तु कुतो मम ॥ ५५

उत्तर उवाच ।

त्वं नर्तको वा यदि वाऽपि गायकः
क्षिप्रं तनुत्रं परिधत्स्व भानुमत् ।
अभीक्ष्णमाहुस्तव कर्म पौरुषं
स्त्रियः प्रशंसन्ति ममाद्य चान्तिके ॥ ५६

वैशंपायन उवाच ।

इत्येवमुक्त्वा नृपसूनुसत्तम-
स्तदा स्मयित्वाऽर्जुनमभ्यनन्दयत् ।
अथोत्तरः पारशवं शताक्षिम-
त्सुवर्णचित्रं परिगृह्य भानुमत् ॥ ५७
बृहन्नलायै प्रददौ स्वयं तदा
विराटपुत्रः परवीरघातिने ।
तदाज्ञया मात्स्यसुतस्य वीर्यवा-
नकर्तुकामेव समाददे तदा ॥ ५८

बृहन्नलोवाच ।

यद्यस्ति च रणे शौर्यं शक्यः स्याद्द्विषतां वधः ।
अहं त्वामभिगच्छामि यत्र त्वं यासि तत्र भो ॥ ५९

वैशंपायन उवाच ।
ततः स नर्मसंयुक्तमकरोत्पाण्डवो बहु ।
उत्तरायाः प्रमुखतः सर्वं जानन्नरिन्दमः ॥ ६०
तमाददानं प्रमदा जहासिरे
ह्यधोमुखं वीरवरोऽभ्यधारयत् ।
ततस्तिरश्चीनकृतं सपत्नहा
ह्यधोमुखं कवचमथाभ्यकर्षत ॥ ६१
सम्यक्प्रजानन्नपि सत्यविक्रमो
ह्यज्ञातवत्सर्वकुरुप्रवीरः ।
ऊर्ध्वं क्षिपन्वीरतरोऽभ्यधारय-
त्पुनश्च यन्ता कवचं धनञ्जयः ॥ ६२
एवंप्रकाराणि बहूनि कुर्वति
तस्मिन्कुमार्यः प्रमदा जहासिरे ।
तथापि कुर्वन्तममित्रकर्शनं
नैवोत्तरः पर्यभवद्धनञ्जयम् ॥ ६३
तं राजपुत्रः समनाहयत्स्वयं
जाम्बूनदान्तेन शुभेन वर्मणा ।
कृशानुतप्तप्रतिमेन भास्वता
जाज्वल्यमानेन सहस्ररश्मिना ॥ ६४
अथास्य शीघ्रं प्रसमीक्ष्य योजय-
द्रथे हयान्काञ्चनजालसंवृतान् ।
सुवर्णजालान्तरयोक्त्रभूषणं
सिंहं च सौवर्णमुपाश्रयद्रथे ॥ ६५
धनूंषि च विचित्राणि बाणांश्च रुचिरान्बहून् ।
आयुधानि च वै तत्र रथोपस्थे च स न्यसत् ६६
आरुह्य प्रययौ वीरः सबृहन्नलसारथिः ।
अथोत्तरा च कन्याश्च सख्यश्चैवाब्रुवंस्तदा ॥ ६७
बृहन्नले आनयेथा वासांसि रुचिराणि नः ।
पाञ्चालिकार्थं सूक्ष्माणि रत्नानि विविधानि च ।
विजित्य संग्रामगतान्भीष्मद्रोणमुखान्कुरून् ॥ ६८
अथ ता ब्रुवतीः कन्याः सहिताः कुरुनन्दनः ।
प्रत्युवाच हसन्पार्थो मेघदुन्दुभिनिस्वनः ॥ ६९
यद्युत्तरोऽयं संग्रामे विजेष्यति महारथान् ।
अथाहरिष्ये वासांसि सूक्ष्माण्याभरणानि च ७०
वैशंपायन उवाच ।
अथोत्तरो वर्म महाप्रभावं
सुवर्णवैडूर्यपरिष्कृतं शुभम् ।
आमुच्य वीरः प्रययौ रथोत्तमं
धनञ्जयं सारथिनं प्रगृह्य ॥ ७१
तमुत्तरं प्रेक्ष्य रथोत्तमे स्थितं
बृहन्नलां चैव महाजनस्तदा ।
स्त्रियश्च कन्याश्च द्विजाश्च सुव्रताः
प्रदक्षिणं मङ्गलिनोऽभ्यपूजयन् ॥ ७२
यदर्जुनस्यर्षभतुल्यगामिनः
पुराऽभवत्खाण्डवदाहमङ्गलम् ।
कुरून्समासाद्य रणे बृहन्नले
सहोत्तरेणास्तु तवाद्य मङ्गलम् ॥ ७३

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

## एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

उत्तरेण कुरुसेनावलोकनमात्रेण रथादवस्कन्द्य भयात्पलायनम् ॥ १ ॥ तमनुधाविनाऽर्जुनेन तस्य केशपाशे ग्रहणेन परिसान्त्वनपूर्वकं पुना रथारोपणम् ॥ २ ॥ तथा तेन सह गाण्डीवाद्यानयनाय शमींप्रति गमनम् ॥ ३ ॥

वैशंपायन उवाच ।
स राजधान्या निर्याय वैराटिरकुतोभयः ।
प्रयाहीत्यब्रवीत्सूतं यत्र ते कुरवो गताः ॥ १
समवेतान्कुरून्सर्वाञ्जिगीषूनवजित्य वै ।
गाश्चैताः क्षिप्रमादाय पुनरेष्याम्यहं पुरम् ॥ २
ततस्तांश्चोदयामास सदश्वान्पाण्डुनन्दनः ॥ ३
ते हया नरसिंहेन चोदिता वातरंहसः ।
आलिखन्त इवाकाशमूहुः काञ्चनमालिनः ॥ ४
नातिदूरमथो गत्वा मात्स्यपुत्रधनञ्जयौ ।
अवैक्षेतामवित्रस्तौ कुरूणां बलिनां बलम् ॥ ५

श्मशानमभितो गत्वा शूरौ ददृशतुः कुरून् ॥ ६
तदनीकं महत्तेषां विस्तृतं सागरोपमम् ।
सर्पमाणमिवाकाशे वनं बहुलपादपम् ॥ ७
ददृशे पार्थिवो रेणुर्जनितस्तेन सर्पता ।
दृष्टिप्रणाशो भूतानां दिवस्पृक्कुरुसत्तम ॥ ८
तदनीकमथो वीक्ष्य गजाश्वरथसंकुलम् ।
कर्णदुर्योधनकृपैर्गुप्तं शान्तनवेन च ।
द्रोणेन सह पुत्रेण महेष्वासेन धीमता ॥ ९
हृष्टरोमा भयोद्विग्नो निमील्य स्वदृशौ तदा ।
कम्पमानशरीरश्च पार्थं वैराटिरब्रवीत् ॥ १०
नोत्सहे कुरुभिर्योद्धुं रोमहर्षं हि पश्य मे ।
बहुप्रवीरमत्युग्रं देवैरपि दुरासदम् ।
प्रतियोद्धुं न शक्नोमि कुरुसैन्यं भयानकम् ॥ ११
नाशंसे भारतीं सेनां प्रवेष्टुं भीमकार्मुकाम् ।
देवैरपि सहेन्द्रेण न शक्यं किंपुनर्नरैः ॥ १२
रथनागाश्वकलिलं पत्तिध्वजसमाकुलम् ।
दृष्ट्वैव हि परानीकं मनः प्रव्यथतीव मे ॥ १३
यत्र द्रोणश्च भीष्मश्च कृपः कर्णो विविंशतिः ।
अश्वत्थामा विकर्णश्च सोमदत्तश्च बाह्लिकः ।
दुर्योधनस्तथा राजा वीरो दुर्मर्षणः परः ॥ १४
धृतिमन्तो महेष्वासाः सर्वे युद्धविशारदाः ।
मत्ता इव महानागा युक्तध्वजपताकिनः ॥ १५
नीतिमन्तो महेष्वासाः सर्वार्थकृतनिश्चयाः ।
ताञ्जेतुं समरे शूरान्दुर्बुद्धिरहमागतः ॥ १६
दृष्ट्वैव हि कुरून्सर्वान्व्यूढानीकान्प्रहारिणः ।
हृषितानि च रोमाणि कश्मलेनाहतं मनः ॥ १७
वैशंपायन उवाच ।
दृष्ट्वा तु महतीं सेनां कुरूणां दृढधन्विनाम् ।
परिदेवयते मन्दः सकाशे सव्यसाचिनः ॥ १८
त्रिगर्तान्मे पिता यातः शून्ये वै प्रणिधाय माम् ।
सर्वा सेनामुपादाय न मे सन्तीह सैनिकाः ॥ १९
अहमेको बहून्बालः कृतास्त्रानकृतश्रमः ।
प्रतियोद्धुं न शक्नोमि निवर्तय बृहन्नले ॥ २०
वैशंपायन उवाच ।
तं तथा वादिनं तत्र बीभत्सुः प्रत्यभाषत ।
संप्रहस्य पुनस्तं वै सर्वलोकमहारथः ॥ २१
भयेन दीनरूपोऽसि द्विषतां हर्षवर्धनः ।
न च तावत्कृतं किंचित्परैः कर्म रणाजिरे ॥ २२
स्वयमेव च मामात्थ नय मां कौरवान्प्रति ।
सोऽहं त्वां तत्र नेष्यामि यत्रैते बहुला ध्वजाः ॥ २३
मध्यमामिषगृध्नूनां कुरूणामाततायिनाम् ।
नेष्यामि त्वां महाबाहो मा त्वं हि विमना भव ।
समुद्रमिव गम्भीरं कुरुसैन्यमरिन्दम ॥ २४
स्त्रीसकाशे प्रतिज्ञाय पुरुषाणां हि शृण्वताम् ।
विकत्थमानो निर्यात्वा ब्रूषि किं नात्र युध्यसे ॥ २५
तथा स्त्रीषु प्रतिश्रुत्य पौरुषं पुरुषेषु च ।
रथमारुह्य निर्यात्वा किमर्थं नावबुध्यसे ॥ २६
न चेद्विजित्य गास्त्वं हि नगरं प्रतियास्यसि ।
प्रहसिष्यन्ति वीरास्त्वां नरा नार्यश्च संगताः ॥ २७
अहमप्यस्मि सैरन्ध्या स्तुतः सारथ्यकर्मणि ।
नाहं शक्नोम्यनिर्जित्य गाः प्रयातुं पुरं प्रति ॥ २८
स्तोत्रेण चैव सैरन्ध्यास्तव वाक्येन चोदितः ।
कथं न युद्ध्येयमहं कुरूनेतान्स्थिरो भव ॥ २९
उत्तर उवाच ।
कामं हरन्तु मात्स्यानां भूयांसः कुरवो धनम् ।
प्रहसन्तु च मां नार्यो नरा वाऽपि बृहन्नले ॥ ३०
संग्रामेण न मे कार्यं गावो गच्छन्तु चापि मे ।
नगरं च प्रवेक्ष्यामि पश्यतस्ते बृहन्नले ॥ ३१
वैशंपायन उवाच ।
इत्युक्त्वा प्राद्रवद्भीतो रथात्प्रस्कन्द्य कुण्डली ।
त्यक्त्वा मानं सुसंत्रस्तो विसृज्य सशरं धनुः ३२
अर्जुन उवाच ।
नैष शूरैः स्मृतो धर्मः क्षत्रियस्य पलायनम् ।
श्रेयो हि मरणं युद्धे न भीतस्य पलायनम् ॥ ३३
वैशंपायन उवाच ।
एवमुक्त्वा तु कौरव्यः सोऽवप्लुत्य रथोत्तमात् ।
तमन्वधावद्धावन्तं राजपुत्रं धनञ्जयः ।
दीर्घां वेणीं विधून्वानः साधु रक्ते च वाससी ३४
विक्रमन्तं पदन्यासैर्नमयन्तं च भूतलम् ।

विधूय वेणीं धावन्तमजानन्तोऽर्जुनं तदा ।
सैनिकाः प्राहसन्केचिद्योषिद्रूपमवेक्ष्य तम् ॥३५
तं च शीघ्रं प्रधावन्तं संप्रेक्ष्य कुरवोऽब्रुवन् ।
कोऽयं धावत्यसङ्गेन पूर्वं मुक्त्वा रथोत्तमम् ॥३६
क एष वेषसंच्छन्नो भस्मनेव हुताशनः ।
किंचिदस्य यथा पुंसः किंचिदस्य यथा स्त्रियः ३७
इत्येवं सैनिकाः प्राहुर्द्रोणस्तानिदमब्रवीत् ।
आचार्यः कुरुपाण्डूनां मतौ शुक्राङ्गिरोपमः ॥३८
किं विचारेण वः कार्यमेतेनानुसृतेन वा ।
धावन्तमनुधावंश्च निर्भयो भयविप्लुतम् ।
वेणीकलापं निर्धूय प्रविभाति नरर्षभः ॥ ३९
आकारमर्जुनस्यैव क्लीबरूपं बिभर्ति च ।
रूपेण पार्थसदृशः स्त्रीवेषसमलंकृतः ॥ ४०
तदेवैतच्छिरोग्रीवं तौ बाहू परिघोपमौ ।
तत्तदेवास्य विक्रान्तं नायमन्यो धनञ्जयात् ॥४१
अमरेष्विव देवेन्द्रो मनुष्येषु धनञ्जयः ।
एकः कोऽस्मानुपायायादन्यो लोके धनञ्जयात् ४२
द्रोणेन चैवमुक्तस्तु कर्णः प्रोवाच बुद्धिमान् ।
एकः पुत्रो विराटस्य शून्ये संनिहितः पुरे ॥ ४३
स एष किल निर्यातो बालभावान्न पौरुषात् ।
क्लीबं वै सारथिं कृत्वा निर्यातो नगराद्बहिः ४४
छन्नं सत्रेण वै नूनं जानीध्वं यान्तमर्जुनम् ।
ते हि नः प्रतिसंयातुं संग्रामे न हि शक्नुयुः ।
कथमेकतरस्तेषां समस्तान्योधयेत्कुरून् ॥ ४५
उत्तरः सारथिं कृत्वा निर्यातो नगराद्बहिः ।
स नो मन्ये ध्वजं दृष्ट्वा भीत एष पलायति ॥४६
कृप उवाच ।
नूनं तमेव धावन्तं जिघृक्षति धनञ्जयः ।
सारथिं ह्युत्तरं कृत्वा स्वयं योद्धुमिहेच्छति ॥४७
वैशंपायन उवाच ।
इति स्म कुरवः सर्वे विमृशन्तः पृथक्पृथक् ।
न च व्यवसितुं वीरा अर्जुनं शक्नुवन्ति ते ॥४८
दुर्योधन उवाचेदं सैनिकान्त्रथसत्तमान् ।

सत्रेण वेषान्तरेण ॥ ४५ ॥

अर्जुनो वासुदेवो वा रामः प्रद्युम्न एव वा ।
ते हि नः प्रतिसंयातुं संग्रामे न हि शक्नुयुः ४९
अन्यो वै क्लीबरूपेण यद्यागच्छेद्द्रवां पदम् ।
शस्त्रैस्तीक्ष्णैरर्पयित्वा पातयिष्यामि भूतले ।
कथमेकतरस्तेषां समस्तान्योधयेत्कुरून् ॥ ५०
वैशंपायन उवाच ।
छन्नं तथा तं वेषेण पाण्डवं प्रेक्ष्य सैनिकाः ।
अर्जुनेति च नेत्येव न व्यवस्यन्ति ते पुनः ।
इति स्म कुरवः सर्वे विमृशन्तः पुनःपुनः ॥ ५१
दृढवेधी महासत्त्वः शक्रतुल्यपराक्रमः ।
अद्यागच्छति चेद्योद्धुं सर्वं संशयितं बलम् ॥५२
न चाप्यन्यतरं तत्र व्यवस्यन्ति धनञ्जयात् ॥५३
उत्तरं तु प्रधावन्तमनुद्रुत्य धनञ्जयः ।
गत्वा शतपदं तूर्णं केशपक्षे परामृशत् ॥ ५४
मा मा गृहाण भद्रं ते दासोऽहं ते बृहन्नले ।
इति वादिनमेवाशु धावन्तं तरसाऽग्रहीत् ।
विराटपुत्रं बीभत्सुर्बलवानरिमर्दनः ॥ ५५
सोऽर्जुनेन परामृष्टः पर्यदेवयदार्तवत् ।
बहुलं कृपणं चैव वित्तं प्रावेदयद्बहु ॥ ५६
सुवर्णमणिमुक्तानां यद्यदिच्छसि दद्मि ते ।
हस्तिनोश्वान्रथान्गावः स्त्रियश्च समलङ्कृताः ॥५७
शातकुम्भस्य शुद्धस्य श्रेष्ठस्य रजतस्य च ।
ददामि शतनिष्कं ते मुञ्च मां त्वं बृहन्नले ॥५८
षष्टिं स्वलंकृताः कन्या ग्राममेकं ददामि ते ।
मुञ्च मां त्वं भृशं दीनं विह्वलं भयकम्पितम् ५९
मणीनष्टौ च वैडूर्यान्हेमबद्धान्महाप्रभान् ।
हेमदण्डप्रतिच्छन्नं रथं युक्तं तु वाजिभिः ॥ ६०
मत्तांश्च दश मातङ्गान्मुञ्च मां त्वं बृहन्नले ।
गमिष्यामि पुरं षण्ड द्रष्टुं मातरमद्य ताम् ॥ ६१
एकोऽहमेव मे मातुः कुमारः किं ब्रुवे ततः ।
विधिरेवंविधे काले त्वद्वशं कुरुते हि माम् ॥ ६२
मात्स्यस्य पुत्रो बालोऽहं तेन चास्मि सुपोषितः ।
मातृपार्श्वशयानोऽहमस्पृष्टातपवायुमान् ॥ ६३
अदृष्टबालयुद्धोऽहं कुतस्ते कुरवः कुतः ।

मातृपार्श्वं गमिष्यामि मुञ्च मां त्वं बृहन्नले ॥६४
प्रलयार्णवसंकाशं दृश्यते कौरवं बलम् ॥ ६५
स्त्रीणां मध्येऽहमज्ञानाद्वीर्यशौर्याङ्कितां गिरम् ।
उक्तो यौवनगर्वेण को जेतुं शक्नुयात्कुरून् ।
अमुक्त्वा मां यदि नयेर्मरिष्यामि तवाग्रतः ॥६६
वैशंपायन उवाच ।
एवमादीनि वाक्यानि विलपन्तमचेतसम् ।
प्रसभं पुरुषव्याघ्रो रथस्यान्तिकमानयत् ॥ ६७
अथैनमब्रवीत्पार्थो भयार्तं नष्टचेतसम् ॥ ६८
अहं योत्स्यामि कौरव्यैर्हयान्संयच्छ मेति माम् ।
आददानः किमर्थं त्वं पलायनपरोऽभवः ॥ ६९
युध्यस्व कौरवैः सार्धं विजयस्ते भविष्यति ।
यस्य यन्तास्म्यहं युद्धे संयच्छामि हयोत्तमान् ।
राज्ञो वा राजपुत्रस्य तस्य युद्धे जयो ध्रुवम् ॥७०
सर्वथोत्तर युध्यस्व यत्रा सह मया कुरून् ।
जित्वा महीं यशः प्राप्य भोक्ष्यसे सकलामिमाम्
हतो वा प्राप्स्यसे स्वर्गं न श्रेयस्ते पलायनम् ७२
अद्य सर्वान्कुरूञ्जित्वा यथा जयमवाप्स्यसि ।
तथाऽहं प्रयतिष्येऽत्र सहायोऽत्र मतो ह्यहम् ॥७३
यदि नोत्सहसे योद्धुं शत्रुभिः शत्रुकर्शन ।
एहि मे त्वं हयान्यच्छ युध्यमानस्य शत्रुभिः ७४
प्रयाह्येतद्रथानीकं मद्बाहुपरिरक्षितः ।
अप्रधृष्यतमं घोरं गुप्तं घोरैर्महारथैः ।
मा भैस्त्वं राजपुत्राग्र्य क्षत्रियोसि परंतप ॥ ७५
अहं तैः कुरुभिर्योत्स्ये प्रत्यानेष्यामि ते पशून् ।
प्रविशैतद्रथानीकमप्रधृष्यं दुरासदम् ॥ ७६
यन्ता भव नरश्रेष्ठ योत्स्येऽहं कुरुभिः सह ।
शूरान्समरचण्डांश्च नयिष्ये यमसादनम् ॥ ७७
वैशंपायन उवाच ।
एवं ब्रुवाणो वैराटिं बीभत्सुरपराजितः ।
समाश्वास्य भयार्तं तमुत्तरं भरतर्षभः ॥ ७८
इतस्ततो विवेष्टन्तमकामं भयपीडितम् ।
रथमारोपयामास पार्थः परपुरंजयः ॥ ७९
तमारोप्य रथोपस्थे विलपन्तं धनञ्जयः ।
गाण्डीवं धनुरादातुमुपायाच्चां शमीं प्रति ।
उत्तरं तं समाश्वास्य कृत्वा यन्तारमर्जुनः ॥ ८०

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

## चत्वारिंशोऽध्यायः ॥ ४० ॥

उत्तरेणार्जुनचोदनया शमीमारुह्य धनुरादानम् ॥ १ ॥

वैशंपायन उवाच ।
तं दृष्ट्वा क्लीबरूपेण रथस्थं रथिपुङ्गवम् ।
शमीमभिमुखं यान्तं रथमारोप्य चोत्तरम् ॥ १
द्रोणभीष्मादयः शूराः कुरूणां रथिसत्तमाः ।
वित्रस्तमनसश्चासन्धनञ्जयकृताद्भयात् ॥ २
तानवेक्ष्य हतोत्साहानुत्पातानपि चाद्भुतान् ।
गुरुः शस्त्रभृतांश्रेष्ठो भारद्वाजोऽभ्यभाषत ॥ ३
खराश्च वाताः संयान्ति रूक्षाः परुषनिस्वनाः ।
भस्मवर्षप्रकाशेन तमसा संवृतं नभः ॥ ४
रूक्षवर्णाश्च जलदा दृश्यन्तेऽद्भुतदर्शनाः ।
निःसरन्ति च कोशेभ्यः शस्त्राणि विविधानि च ५
शिवाश्च विनदन्त्येता दीप्तायां दिशि दारुणाः ।
हयाश्चाश्रूणि मुञ्चन्ति ध्वजाः कम्पन्त्यकम्पिताः ६
यादृशान्यत्र दृश्यन्ते रूपाणि विविधानि च ।
यत्ता भवन्तस्तिष्ठन्तु युद्धं स्यात्समुपस्थितम् ॥ ७
रक्षध्वमपि राजानं व्यूहध्वं वाहिनीमपि ।
वैशसं च प्रतीक्षध्वं रक्षध्वं चापि गोधनम् ॥ ८
एष वीरो महेष्वासः सर्वशस्त्रभृतांवरः ।
आगतः क्लीबवेषेण पार्थो नास्त्यत्र संशयः ॥ ९
एतावदुक्त्वा वचनं भीष्ममालोक्य चाब्रवीत् १०

---

उक्तः उक्तवान् ॥ ६६ ॥ मेति मामिति मे इतीति च्छेदः ॥ ६९ ॥ एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

नदीज लङ्केशवनारिकेतु-
नगाह्वयो नाम नगारिसूनुः ।
गत्वा सुरेशः क्वचिदङ्गनेव
गुरुर्बभाषे वचनं तदानीम् ॥ ११
वैशंपायन उवाच ।
इत्युक्त्वा संज्ञया द्रोणस्तूष्णीमासीद्विशांपते ।
भारद्वाजवचः श्रुत्वा गाङ्गेयः संज्ञयाऽब्रवीत् ॥ १२
अतीतं चक्रमस्माकं विषयान्तरमागताः ।
अतीतः समयश्चोक्त अस्माभिर्यः सभातले ।
न भयं शत्रुतः कार्यं शङ्कां त्यज नरर्षभ ॥ १३
देवव्रतेनैवमुक्ते वचने हितकारिणा ।
दुर्योधनमथालोक्य संज्ञया द्रोण अब्रवीत् ॥ १४
एष वीरो महेष्वासः सर्वशस्त्रभृतांवरः ।
आगतः क्लीबरूपेण पार्थो नास्त्यत्र संशयः ॥ १५
एष पार्थो हि विक्रान्तः सव्यसाची परन्तपः ।
ये जेतारो महीपानामसुना कुरवो हताः ॥ १६
यस्मिञ्जाते मही कृत्स्ना निर्भरोच्छ्वासिताऽभवत् ।
येन मे दक्षिणा दत्ता बद्ध्वा द्रुपदमोजसा ॥ १७
विद्धा वियद्गतं लक्ष्यं विनिर्जित्य च पार्थिवान् ।
निर्जिता येन पाञ्चाली पुरा येन स्वयंवरे ॥ १८
खाण्डवे येन संतृप्तो वह्निर्जित्वा सुरासुरान् ।
परिणीता सुभद्रा च येन निर्जित्य यादवान् १९
निर्जितो येन युद्धेन त्रिपुरारिः स्मरार्दनः ॥ २०
गत्वा त्रिविष्टपं येन जितेन्द्रा दानवा युधि ।
निवातकवचा राजन्दानवानां त्रिकोटयः ।
निर्जिताः कालकेयाश्च हिरण्यपुरवासिनः ॥ २१
येन त्वं मोचितो बद्धश्चित्रसेनेन तद्वने ॥ २२
येन गत्वोत्तरं मेरोरानिनाय महद्धनम् ।
याजितो धर्मसूनुश्च नृपान्सर्वान्विजित्य च ॥ २३
यस्मिञ्शौर्यं च वीर्यं च तेजो धैर्यं पराक्रमः ।
औदार्यं चैव गाम्भीर्यं श्रीर्ह्रीर्धर्मो दयाऽऽर्जवम् ।
एवमादिगुणोपेतः सोयं पार्थो न संशयः ॥ २४
नाजित्वा विनिवर्तेत सर्वानपि मरुद्गणान् ॥ २५
क्लेशितश्च वने शूरो वासवेन च शिक्षितः ।
अमर्षवशमापन्नो योत्स्यते नात्र संशयः ।
न ह्यस्य प्रतियोद्धारमन्यं पश्यामि कौरव ॥ २६
महादेवोपि पार्थेन श्रूयते युद्धतोषितः ।
किरातवेषप्रच्छन्नो गिरौ हिमवति प्रभुः ॥ २७
इत्येवंवादिनं द्रोणं कर्णः क्रुद्धोऽभ्यभाषत ॥ २८
सदा भवान्फल्गुनस्य गुणानस्मासु कत्थसे ।
न चार्जुनः कलापूर्णो मम दुर्योधनस्य वा ॥ २९
दुर्योधन उवाच ।
यद्येष पार्थो राधेय कृतं कार्यं भवेन्मम ।
ज्ञाताः पुनश्चरिष्यन्ति द्वादशान्यांश्च वत्सरान् ३०
अथवा कश्चिदेवान्यः क्लीबरूपेण देवराट् ।
शरैरेनं सुनिशितैः पातयिष्यामि भूतले ॥ ३१
वैशंपायन उवाच ।
तस्मिन्वदति तां वाचं धार्तराष्ट्रे परन्तपे ।
भीष्मो द्रोणः कृपो द्रौणिः पौरुषं तदपूजयन् ३२
तां शमीमभिसंगम्य पार्थो वैराटिमब्रवीत् ।
सुखसंवर्धितं पित्रा समराणामकोविदम् ॥ ३३
एहि भूमिंजयारुह्य वैराटे महतीं शमीम् ।
समादिष्टो मया क्षिप्रं धनुर्गाण्डीवमानय ॥ ३४
नेमानीष्वासनानीह सोढुं शक्ष्यन्ति मे बलम् ।
नालं भारं गुरुं भेत्तुं कुञ्जरं वा प्रमर्दितुम् ॥ ३५
मम वा बाहुविक्षेपं शत्रूनिह विजेष्यतः ।
नेच्छामि तैरहं कर्तुं कर्म वैजयिकं त्विह ॥ ३६
अतिसूक्ष्माणि ह्रस्वानि सर्वाणि च मृदूनि च ।
आयुधानि महाबाहो तवैतानि महाबल ॥ ३७
तस्माद्भूमिंजयारुह्य शमीमेतां पलाशिनीम् ।
अस्यां हि पाण्डुपुत्राणां धनूंषि निहितान्युत ॥ ३८
युधिष्ठिरस्य भीमस्य बीभत्सोर्यमयोस्तथा ।

---

नगारिसूनुः । एषोऽङ्गनावेषधरः किरीटी जित्वाऽव यं नेष्यति चाव गा व इति झ. पाठः । हे नदीज गाङ्गेय भीष्म, लङ्केशस्य रावणस्य वनं तस्यारिर्नाशको हनूमान् स केतुर्ध्वजो यस्य सः लङ्केशवनारिकेतुः । नगो वृक्षस्तदाह्वयः वृक्षनामा । अर्जुन इत्यर्थः । शैलवृक्षौ नगावगाविमरः । नगारिरिन्द्रस्तस्य सूनुः । किरीटी तन्नामा यं जित्वा वः युष्माकं गाः धेनूः नेष्यति तं दुर्योधनं अव पालय ॥ ११ ॥

ध्वजाः शराश्च शूराणां दिव्यानि कवचानि च ॥
अत्रैव तु महावीर्यं धनुः पार्थस्य गाण्डिवम् ।
एकं शतसहस्रेण संमितं राष्ट्रवर्धनम् ॥ ४०
व्यायामसहमत्यर्थं तृणराजसमं महत् ।
सर्वायुधमहामात्रं सर्वारिक्षयकारकम् ॥ ४१
सुवर्णविकृतं दिव्यं श्लक्ष्णमायतमव्रणम् ।
अलं भारं गुरुं सोढुं वारुणं च सुदर्शनम् ॥ ४२
तादृशान्येव सर्वाणि बलवन्ति दृढानि च ।
युधिष्ठिरस्य भीमस्य बीभत्सोर्यमयोस्तथा ।
प्रथितानि विशिष्टानि दुर्दशानि भवन्त्युत ॥४३
उत्तर उवाच ।
शरीरमिह चासक्तं शम्यां शुष्कं पुरा किल ।
तदहं राजपुत्रः सन्स्पृशेयं पाणिना कथम् ॥ ४४
न मामेवंविधं कर्म कारयस्व बृहन्नले ।
कथं वा शक्यते कर्तुं बुद्ध्या त्वं मन्यसे कथं ४५
नैवंविधं मया युक्तमालब्धुं क्षत्रयोनिना ।
महता राजपुत्रेण मन्त्रयज्ञविदा सता ॥ ४६
स्पृष्टवन्तं शरीरं मां शववाहमिवाशुचिम् ।
कथं वा व्यवहार्यं वै कुर्वीथास्त्वं बृहन्नले ॥ ४७
वैशंपायन उवाच ।
तमुवाच ततः शूरः पार्थः परपुरंजयः ।
दायादं सर्वमत्स्यानां कुले जातं विशारदम् ॥४८
जानामि त्वां महाप्राज्ञ शुभं जात्या कुलेन च ।
कथं नु पापकं कर्म ब्रूयां त्वाऽहं परन्तप ॥ ४९
व्यवहार्यश्च राजेन्द्र शुद्धश्चैव भविष्यसि ।
धनूंष्येतानि मा भैस्त्वं शरीरं नात्र विद्यते ॥५०
दायादं मत्स्यराजस्य कुले जातं मनस्विनम् ।
कथं वा निन्दितं कर्म कारये त्वां नृपात्मज ५१
वैशंपायन उवाच ।
एवमुक्तः स पार्थेन रथात्प्रस्कन्द्य कुण्डली ।
आरुरोह शमीवृक्षं वैराटिरवशस्तदा ॥ ५२
तमन्वशासच्छत्रुघ्नो रथे तिष्ठन्धनञ्जयः ।
अवरोपय वृक्षाग्राद्धनूंष्येतानि माचिरम् ॥ ५३
सोपहृत्य महार्हाणि धनूंषि पृथुवक्षसाम् ।
परिवेष्टनपत्राणि विमुच्य समुपानयत् ॥ ५४
परिवेष्टनमेतेषां सर्वं मुञ्चस्व माचिरम् ।
तेषां संनहनीयानि परिमुच्य परन्तपः ।
अपश्यत्तत्र गाण्डीवं चतुर्भिरपरैः सह ॥ ५५
तेषां विमुच्यमानानां धनुषामर्कवर्चसाम् ।
विनिश्चेरुः प्रभा दिव्या ग्रहाणामुदयेष्विव ॥५६
स तेषां रूपमालोक्य भोगिनामिव जृम्भताम् ।
हृष्टरोमा भयोद्विग्नः प्रवेपिततनुस्तदा ॥ ५७
अर्जुनेन समाश्वस्तः किंचिद्धृष्टो नृपात्मजः ।
तेषां संदर्शनाभ्यासं स्पर्शाभ्यासं पुनःपुनः ॥५८
आमील्य पुनरुन्मील्य स्पृष्ट्वास्पृष्ट्वा चकार सः ।
सम्यग्घुष्टस्तदाऽऽश्वस्तः क्षणेन समपद्यत ॥ ५९
संस्पृश्य तानि चापानि भानुमन्ति बृहन्ति च ।
वैराटिरर्जुनं राजन्निदं वचनमब्रवीत् ॥ ६०

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

## एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

पाण्डवकार्मुकाद्यवलोकनविस्मितेनोत्तरकुमारेणार्जुनंप्रति तत्तदायुधवर्णनपूर्वकं तत्तत्स्वामिनां प्रश्नः ॥ १ ॥

उत्तर उवाच ।
सारथे किमिदं दिव्यं नागो वा यदि वा धनुः ।
सौवर्णान्यत्र पद्मानि शतपत्राणि भागशः ।
कुशाग्रप्रतितप्तानि भानुमन्ति बृहन्ति च ॥ १
बिन्दवश्चात्र सौवर्णा मणिप्रोताः समन्ततः ।
शशिसूर्यप्रभाः पृष्ठे भान्ति रुक्मपरिष्कृताः ॥ २
पुष्पाण्यत्र सुवर्णानि शतपत्राणि भागशः ।
विस्मापनीयरूपं च भीमं भीमप्रदर्शनम् ॥ ३
नीलोत्पलनिभं कस्य शातकुम्भपरिष्कृतम् ।
ऋषभा यस्य सौवर्णाः पृष्ठे तिष्ठन्ति शृङ्गिणः ॥ ४

आलब्धुं स्प्रष्टुम् ॥ ४६ ॥

चत्वारिंशोऽध्यायः ॥ ४० ॥

तालप्रमाणं कस्येदं मणिरुक्मविभूषितम् ।
हाटकस्य सुवर्णस्य यस्मिञ्शाखामृगा दश ॥ ५
दुरानमं महादीर्घं सुरूपं दुष्प्रधर्षणम् ।
कस्येदमीदृशं चित्रं धनुः सर्वे च दंशिताः ॥ ६
चन्द्रार्कविमलाभासः सुरूपाः सुप्रदर्शनाः ।
हंसाः पृष्ठं श्रिता यस्य कुशाग्निप्रतिमार्चिषः ।
शार्ङ्गगाण्डीवसदृशं कस्येदं सारथे धनुः ॥ ७
चतुर्थं काञ्चनवपुर्भाति विद्युद्वर्णोपमम् ।
नीलोपलिप्तमच्छिद्रं जातरूपमयं धनुः ।
मत्स्याश्चास्य हिरण्यस्य पृष्ठे तिष्ठन्ति दंशिताः॥८
शक्रचापोपमं दिव्यं कस्येदं सारथे धनुः ।
उच्छ्रितं फणिवद्दिव्यं सारवत्त्वाद्दुरानमम् ॥ ९
सहस्रगोधाः सौवर्णा द्वीपिनश्च चतुर्दश ।
बर्हिणश्चात्र सौवर्णाः शतचन्द्रार्कभूषिताः ।
जाम्बूनदविचित्राङ्गं कस्येदं पञ्चमं धनुः ॥ १०
कस्येमे क्षुरनाराचाः सहस्रं लोमवाहिनः ।
प्रक्षिप्तास्तीक्ष्णतुण्डाग्रा उपासङ्गे हिरण्मये ॥ ११
हारिद्रवर्णाः कस्येमे शिता पञ्चशतं शराः ।
आशीविषसमस्पर्शाः शिताश्चाजिह्मगा दृढाः॥१२
विपाठाः पृथवः कस्य गृध्रपत्रार्धवाजिताः ।
वराहकर्णास्तीक्ष्णाग्राः कस्येमे रुचिराः शराः १३
वज्राशनिसमस्पर्शा वैश्वानरशिखार्चिषः ।
सुवर्णपुङ्खास्तीक्ष्णाग्राः कस्य सप्तशतं शराः॥ १४
कस्यायं सायको दीर्घो गव्ये कोशे च दंशितः ।
कस्य दण्डो दृढः श्लक्ष्णो रुचिरोऽयं प्रकाशते १५
वैयाघ्रकोशः कस्यायं दिव्यः शङ्खो महाप्रभः ।
कस्यार्थमसयश्चैते पञ्च शार्दूललक्षणाः ॥ १६
कस्यायं निर्मलः खड्गो द्वीपिचर्मनिवासितः ।
नीलोत्पलसवर्णोऽयं कस्य खड्गः पृथुर्महान्॥१७
मृगेन्द्रचर्मावसितस्तीक्ष्णधारः सुनिर्मलः ।
ऋषभाजिनकोशस्तु कस्य खड्गो महानयम् ॥१८
यस्यापिधाने दृश्यन्ते सूर्याः पञ्च परिष्कृताः ।
कस्यायं विपुलः खड्गः शङ्खत्सरुमनोहरः ॥ १९
निहितः पार्षते कोशे तैलधौतः समाहितः ।
प्रमाणवर्णयुक्तश्च कस्य खड्गो महानयम् ।
एतेन प्रतिविद्धः सञ्जीवेत्कश्चिन्न कुञ्जरः ॥ २०
निर्दिशस्व यथामार्गं मया पृष्टा बृहन्नले ।
विस्मयो मे परो जातो दृष्ट्वा सर्वमिदं महत्॥२१

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

## द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

अर्जुनेनोत्तरंप्रति युधिष्ठिराद्यायुधानां पृथक्पृथङ्निर्देशेन तत्तत्स्वामिकत्वकथनम् ॥ १ ॥

वैशंपायन उवाच ।
उत्तरेणैवमुक्तस्तु पार्थो वैराटिमब्रवीत् ।
मृद्धा प्रत्याययन्वाचा भीतं शङ्कावशं गतम् ॥ १
अर्जुन उवाच ।
यत्त्वया प्रथमं पृष्टं शत्रुसेनाङ्गमर्दनम् ।
पार्थस्येदं धनुर्दिव्यं गाण्डीवमिति विश्रुतम् ॥ २
अभेद्यमभयं श्रीमद्दिव्यमच्छेद्यमव्रणम् ।
सर्वायुधमहामात्रं शातकुम्भमयं धनुः ॥ ३
एतच्छतसहस्रेण संमितं राष्ट्रवर्धनम् ।
देवदानवगन्धर्वैः पूजितं शाश्वतीः समाः ॥ ४
येन देवासुरान्पार्थः सर्वान्विषहते रणे ।
एतद्वर्षसहस्रं तु ब्रह्मा पूर्वमधारयत् ॥ ५
उमापतिश्चतुःषष्टिं शक्रोऽशीतिं च पञ्च च ।
सोमः पञ्चसहस्राणि तथा च वरुणः शतम् ॥ ६
तस्माच्च वरुणादग्निः प्रेम्णा प्राहृत्य तच्छुभम् ।
अग्निना प्रातिभाव्येन दत्तं पार्थाय गाण्डिवम् ।
पञ्चषष्टिं च वर्षाणि कौन्तेयो धारयिष्यति ॥ ७
एवंवीर्यं महावेगमेतच्च धनुरुत्तमम् ।
नीलोत्पलसमं राज्ञः कौरव्यस्य महात्मनः ॥ ८
बिन्दवश्चात्र सौवर्णाः पृष्ठे साधुनियोजिताः ।

विश्रुतं भीमसेनस्य जातरूपग्रहं दृढम् ॥ ९
सहस्रगोधाः सौवर्णा द्वीपिनश्च चतुर्दश ।
ऋषभा यत्र सौवर्णाः पृष्ठे तिष्ठन्ति शृङ्गिणः ॥१०
येन भीमोऽजयत्कृत्स्नां दिशं प्राचीं परंतपः ।
पृष्ठे विभक्ताः शोभन्ते कुशाग्निप्रतिदीपिताः ११
पूजितं सुरमर्त्येषु प्रथितं धनुरुत्तमम् ।
तालप्रमाणं भीमस्य रत्नरुक्मविभूषितम् ॥ १२
दुरानमं महद्दीर्घं सुरूपं दुष्प्रधर्षणम् ।
बर्हिणश्चात्र सौवर्णाः शतचन्द्रकभूषणाः ॥ १३
नकुलस्य धनुस्त्वेतन्माद्रीपुत्रस्य धीमतः ।
एतेन सदृशं चित्रं धनुरेतद्यवीयसः ।
हारिद्रवर्णं राज्ञस्तु कौरव्यस्य महात्मनः ॥ १४
विपाठा भीमसेनस्य गिरीणामपि दारणाः ।
सुप्रभाः सुमहाकायास्तीक्ष्णाग्राः सुतरां दृढाः ।
भीमेन प्रहिता ह्येते वारणानां निवारणाः ॥ १५
सुवर्णदण्डरुचिराः कालदण्डोपमाः शुभाः ।
नकुलस्य शरा ह्येते वज्राशनिसमप्रभाः ॥ १६
यांश्च त्वं पृच्छसे दीप्तान्समधारान्समाहितान् ।
वराहकर्णास्तीक्ष्णाग्राः सहदेवस्य ते शराः ॥ १७
यस्त्वयं सायको दीर्घो गव्ये कोशे च दंशितः ।
पार्थस्यायं महाघोरः सर्वभारसहो महान् ॥ १८
यस्त्वयं निर्मलः खड्गो द्वीपिचर्मणि दंशितः ।
राज्ञो युधिष्ठिरस्यायं कुन्तीपुत्रस्य धीमतः ॥ १९
वैयाघ्रकोशो भीमस्य पञ्चशार्दूललक्षणः ।
वारणानां सुदृप्तानां शिक्षितः स्कन्धशातने ॥२०
नीलोत्पलसवर्णाभः खड्गः पार्थस्य धीमतः ।
मृगेन्द्रचर्मपिहितस्तीक्ष्णधारः सुनिर्मलः ॥ २१
दर्शनीयः सुतीक्ष्णाग्रः कुन्तीपुत्रस्य धीमतः ।
अर्जुनस्यैष निस्त्रिंशः परसैन्याग्रदूषणः ॥ २२
यस्त्वयं पार्षते कोशे निक्षिप्तो रुचिरत्सरुः ।
नकुलस्यैष निस्त्रिंशो वैश्वानरसमप्रभः ॥ २३
यस्त्वयं पिङ्गलः खड्गश्चित्रो मणिमयत्सरुः ।
सहदेवस्य खड्गोऽयं भारसाहोऽतिदंशितः ।
भीमस्यायं महादण्डः सर्वामित्रविनाशनः ॥२४
वैशंपायन उवाच ।
भेदतो ह्यर्जुनस्तूर्णं कथयामास तत्त्वतः ।
आयुधानि कलापांश्च निस्त्रिंशांश्चातुलप्रभान् २५

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

## त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

अर्जुनेनोत्तरंप्रति स्वस्यार्जुनत्वकथनपूर्वकं कङ्कादीनां युधिष्ठिरादित्वकथनम् ॥ १ ॥ तत्प्रत्ययार्थं स्वनामदशककथनपूर्वकं तन्निर्वचनम् ॥ २ ॥

वैशंपायन उवाच ।
एतस्मिन्नन्तरे पार्थं न मूढात्मा व्यजानत ।
विराटपुत्रः प्रमुखे पप्रच्छ पुनरेव तम् ॥ १
सुवर्णरुचिराण्येषामायुधानि महात्मनाम् ।
रुचिराणि प्रकाशन्ते पार्थानामाशुकारिणाम् ॥ २
क्व नु ते पाण्डवाः शूराः संग्रामेष्वपराजिताः ।
येषामिमानि दीप्तानि श्रिया दीप्यन्ति भान्ति च
कस्मिन्वसन्ति देशे च धर्मज्ञा बन्धुवत्सलाः ।
क्व धर्मराजः कौन्तेयो धर्मपुत्रो युधिष्ठिरः ॥ ४
धर्मशीलश्च धर्मात्मा धर्मवान्धर्मवित्सुधीः ।
धर्माध्यक्षो धर्मपुत्रो धर्मज्ञो धर्ममूर्तिमान् ॥ ५
धर्मनिष्ठो धर्मकर्ता धर्मगोप्ता सुधर्मकृत् ।
सत्यार्जवक्षमाधारो घृणी धर्मपरायणः ॥ ६
भीमसेनार्जुनौ चापि सर्वे ते मातुला मम ।
नकुलः सहदेवो वा सर्वास्त्रकुशलौ रणे ॥ ७
सर्वे एव महात्मानः सर्वामित्रविनाशनाः ।
राज्यमक्षैः पराजित्य नः श्रूयन्ते वनं गताः ॥८
द्रौपदी चापि पाञ्चाली स्त्रीरत्नमिति मे श्रुता ।
जिता चाक्षैस्तदा कृष्णा तानेवान्वगमद्वने ॥ ९
उत्सृज्य राज्यं धर्म्यं ते नः श्रूयन्ते वनं गताः ॥

पाण्डवान्यदि जानीषे क्व नु ते धर्मचारिणः ।
क्व नु वा निवसन्तीति सत्यं ब्रूहि बृहन्नले ॥ ११
किमर्थमागतान्यत्र शस्त्रास्त्राणि महात्मनाम् ।
कथं ज्ञातानि भवता तथा मे ब्रूहि शोभने ॥१२
वैशंपायन उवाच ।
ततः प्रहस्य बीभत्सुः कौन्तेयः श्वेतवाहनः ।
उवाच राजपुत्रं तमुत्तरं शृणु मे वचः ॥ १३
मा भैस्त्वं राजशार्दूल सर्वं ते वर्णयाम्यहम् ।
नात्र भेतव्यमद्यापि राजपुत्र यथातथा ॥ १४
वयं ते पाण्डवा नाम वनवासस्य पारगाः ।
अतीते द्वादशे वर्षे च्छन्नवासमिहोषिताः ।
तस्मादशङ्कितमनाः शृणुष्वावहितोत्तर ॥ १५
अहमस्म्यर्जुनो नाम कङ्को नाम युधिष्ठिरः ।
भीमसेनस्तु वललः पितुस्ते रसपाचकः ।
अश्वबन्धस्तु नकुलः सहदेवस्तु गोपतिः ॥ १६
सैरन्ध्रीं द्रौपदीं विद्धि यदर्थे कीचको हतः ।
भीमसेनेन दुर्वृत्तः सहभ्रातृभिराहवे ॥ १७
श्रुत्वैतद्वचनं जिष्णोर्विस्मयस्फारितेक्षणः ।
पश्यन्ननिमिषः पार्थं शनैर्वाचमुवाच ह ॥ १८
उत्तर उवाच ।
दश पार्थस्य नामानि श्रूयन्ते मे कथासु च ।
प्रब्रूयास्तानि यदि मे श्रद्दध्यां सर्वमेव ते ॥ १९
अर्जुन उवाच ।
अहं तर्हि तवाचक्षे दश नामानि तानि मे ।
वैराटे शृणु तानि त्वं यानि पूर्वं श्रुतानि ते ।
ईशानो विदधे देवस्त्रिदिवस्येश्वरो दिवि ॥ २०
अर्जुनः फल्गुनो जिष्णुः किरीटी श्वेतवाहनः ।
बीभत्सुर्विजयः पार्थः सव्यसाची धनञ्जयः ।
एतानि मम नामानि स्थापितानि सुरोत्तमैः २१
उत्तर उवाच ।
गुणतो दश नामानि समवेतानि पाण्डवे ।
चरन्ति लोके ख्यातानि विदितानि ममानघ २२
केनासि विजयो नाम केनासि श्वेतवाहनः ।
सव्यसाची च केनासि जिष्णुर्बीभत्सुरेव च ॥२३
अर्जुनः फल्गुनः पार्थः किरीटी केन सारथे ।
धनञ्जयश्च केनासि शीघ्रं वद बृहन्नले ॥ २४
श्रुता मे तस्य वीरस्य केवला नामहेतवः ।
इतस्ततश्चलत्येतन्मनो मे चञ्चलं त्वयि ।
अर्जुनो वा भवान्नेति वद शीघ्रं बृहन्नले ॥ २५
अर्जुन उवाच ।
सर्वाञ्जित्वा जनपदान्धनं चाच्छिद्य सर्वशः ।
मध्ये धनस्य तिष्ठन्तं तन्मामाहुर्धनञ्जयम् ॥ २६
अभिप्रयामि संग्रामे यदाऽहं युद्धदुर्मदान् ।
अजित्वा न निवर्तेयं तेन वै विजयं विदुः ॥२७
श्वेताः काञ्चनसन्नाहा रथे युज्यन्ति मे हयाः ।
शत्रुभिर्युध्यमानस्य तेनाहं श्वेतवाहनः ॥ २८
किरीटं सूर्यसंकाशं भ्राजते मे शिरोगतम् ।
रणमध्ये रथस्थस्य सूर्यपावकसन्निभम् ॥ २९
अच्छेद्यं रुचिरं चित्रं जाम्बूनदपरिष्कृतम् ।
इन्द्रदत्तमनाहार्यं तेनाहुर्मां किरीटिनम् ॥ ३०
न कुर्यां कर्म बीभत्सं युध्यमानः कदाचन ।
तेन देवमनुष्येषु बीभत्सुरिति मां विदुः ॥ ३१
उभौ मे तुल्यकर्माणौ गाण्डीवस्य विकर्षणे ।
भुजौ मे भवतः सङ्ख्ये परसैन्यविनाशिनौ ।
तयोः सव्योऽधिकस्तस्मात्सव्यसाचीति मां विदुः॥
पृथिव्यां सागरान्तायां वर्णो मे दुर्लभः समः ।
शुद्धत्वाद्रूपवत्त्वाच्च तेन मामर्जुनं विदुः ॥ ३३
उत्तराभ्यां तु पूर्वाभ्यां फल्गुनीभ्यामहं दिवा ।
जातो हिमवतः पृष्ठे तेन मां फल्गुनं विदुः ॥३४
यो ममाङ्गे व्रणं कुर्याद्भ्रातुर्ज्येष्ठस्य पश्यतः ।
युधिष्ठिरस्य रुधिरं दर्शयेद्वा कदाचन ।
पराभवमहं तस्य कुले कुर्यां न संशयः ॥ ३५

बीभत्सुरिति भदि कल्याणे सुखे चेत्यस्य सनि रूपम् ॥ ३१ ॥ सव्येन वामेनापि हस्तेन सचितुं ज्याकर्षणादिक्रियायां संवर्द्धुं शीलमस्येति सव्यसाची ॥ ३२ ॥ अर्जुन इति ऋज गतिस्थानार्जनोपार्जनेष्वित्यस्य उनन्प्रत्यये भवति । दीप्तिमत्त्वात्समत्वात् शुद्धकर्मकरत्वाच्चार्जुन इत्यर्थः ॥ ३३ ॥ उत्तराभ्यां फल्गुनीभ्यां नक्षत्राभ्यामिति झ. पाठः । नक्षत्राभ्यां ताराभ्यां तत्र स्थिते चन्द्र इत्यर्थः ॥ ३४ ॥ त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

योत्स्यामि तैरहं सर्वैर्न मे तेभ्यः पराभवः ।
तेन देवमनुष्येषु जिष्णुर्नामास्मि विश्रुतः ॥ ३६
माता मम पृथा नाम तेन मां पार्थमब्रुवन् ॥३७
देवदानवगन्धर्वपिशाचोरगराक्षसान् ।
अहं पुरा रणे जित्वा खाण्डवेऽग्निमतर्पयम् ॥३८
हुताशनं तर्पयित्वा सहितः शार्ङ्गधन्वना ।
[त्रिविष्टपगतौ दृष्ट्वा पितामहमहेश्वरौ ॥ ३९
मूर्च्छया पतितं भूमावागतौ देवसत्तमौ ।
दृष्ट्वा तौ वरदौ देवौ संज्ञां लब्ध्वोत्थितः पुनः ४०
मूर्ध्ना हि प्रणतं भूमौ तौ देवौ वरदौ वरौ ।
कृष्णेत्येकादशं नाम प्रीत्या मे चक्रतुस्तदा ।
तुष्टौ च मम वीर्येण कर्मणा चाभिराधितौ ॥ ४१
सर्वदेवैः परिवृतौ भूयो मां स्वयमूचतुः ।
वरं तात वृणीष्वेति यं प्रार्थयसि पाण्डव ॥ ४२
ततोऽहमस्त्राण्यलभं दिव्यानि च दृढानि च ।
ब्राह्मं पाशुपतं चैव स्थूणाकर्णं च दुर्जयम् ।
ऐन्द्रं वारुणमाग्नेयं वायव्यमथ वैष्णवम् ॥ ४३
ततोऽहमजयं भूयो रथेनैन्द्रेण दुर्जयान् ।
मातलिं सारथिं कृत्वा निवातकवचान्रणे ।
अवध्यकवचान्देवैर्वरदृप्तान्महासुरान् ॥ ४४
तिस्रः कोटीर्दानवानां संयुगेष्वनिवर्तिनाम् ।
एको निर्जित्य संग्रामे भूयो देवानतोषयम् ॥४५
ततो मे भगवानिन्द्रः किरीटमददात्स्वयम् ।
देवाश्च शङ्खमददुः शत्रुसैन्यनिवारणम् ॥ ४६
अहं पारे समुद्रस्य हिरण्यपुरवासिनाम् ।
हत्वा षष्टिं सहस्राणि जयं संप्राप्तवान्रणे ॥ ४७
असंभ्रान्तो रथे तिष्ठन्सहस्रेषु शतेषु च ।
शत्रुमध्ये दुराधर्षो न मुह्यन्ति च मे दिशः ॥४८
अहं गन्धर्वराजेन ह्रियमाणं सुयोधनम् ।
भ्रातृभिः सहितं तात गन्धर्वैः समरे जितम् ।
चतुर्दश सहस्राणि हत्वा चैनममोचयम् ॥ ४९
एतानि मम नामानि योऽहन्यहनि कीर्तयेत् ।
तं न पश्यन्ति सत्त्वानि न तं निघ्नन्ति शत्रवः ५०
अद्य पश्य महाबाहो मम वीर्यं सुदुःसहम् ।
मा भैर्विगतसंत्रासः कुरूनेतान्समागतान् ॥ ५१
सुयोधनस्य मिषतः कर्णस्य च कृपस्य च ।
पितामहस्य भीष्मस्य द्रौणेर्द्रोणस्य च स्वयम् ।
सर्वानेव कुरूञ्जित्वा प्रत्यानेष्यामि ते पशून् ]५२

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

## चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

उत्तरेण बृहन्नलाया अर्जुनत्वविज्ञानेन तंप्रत्यज्ञानमूलकभूतपूर्वस्वापराधक्षमापनम् ॥ १ ॥ अर्जुनेनोत्तरंप्रति स्वस्य क्लैब्यप्राप्तिहेतुकथनम् ॥ २ ॥ तथोत्तरस्य सारथीकरणपूर्वकं रथारोहणेन रणायाभियानम् ॥ ३ ॥

वैशंपायन उवाच ।
ततः पार्थं स वैराटिः प्राञ्जलिस्त्वभ्यवादयत् ।
अहं भूमिंजयो नाम प्रणतोस्मि धनंजय ॥ १
दिष्ट्या त्वां पार्थ पश्यामि स्वागतं ते धनंजय ।
लोहिताक्ष महाबाहो नागराजवरोपम ॥ २
यदज्ञानादवोचं त्वां प्रमादेन नरोत्तम ।
अकृत्वा हृदये सर्वं क्षन्तुमर्हसि तन्मम ॥ ३
यतस्त्वया कृतं पूर्वं चित्रं कर्म सुदुष्करम् ।
अतो भयं व्यपेतं मे प्रीतिश्च परमा त्वयि ॥ ४
दासोऽहं ते भविष्यामि पश्य मामनुकम्पया ॥५
या प्रतिज्ञा कृता पूर्वं तव सारथ्यकारणात् ।
सेयं प्रतिज्ञा पूर्णा मे हर्षश्चार्जुन जायते ॥ ६
देवेन्द्रतनयस्येह सारथिः स्वां महामृधे ।
इति पूर्वं कृताऽस्माभिः प्रतिज्ञा युद्धदुर्मद ॥ ७
प्रतिज्ञा मम संपूर्णा तव सारथ्यकारणात् ।
मनस्स्वास्थ्यं च मे जातं जातं भाग्यं च मे महत् ॥८

* कुण्डलितः पाठो ध. पुस्तक एव दृश्यते ।

आस्थाय विपुलं वीर रथं सारथिना मया ।
दुर्योधनं च जित्वाऽऽजौ निवर्तय पशून्मम ॥ ९
अर्जुन उवाच ।
प्रीतोस्मि राजपुत्राद्य न भयं विद्यते तव ।
सर्वान्नुदामि ते शत्रून्रणे रणविशारद ॥ १०
स्वस्थो भव महान्युद्धे पश्य मां शत्रुभिः सह ।
युध्यमानं विमर्देऽस्मिन्कुर्वाणं भैरवं रवम् ॥ ११
गाण्डीवं देवदत्तं च शरान्कनकभूषणान् ।
एतान्सर्वानुपासङ्गान्क्षिप्रं बध्नीहि मे रथे ।
एकं चाहर निस्त्रिंशं जातरूपपरिष्कृतम् ॥ १२
अहं वै कुरुभिर्योत्स्ये मोक्षयिष्यामि ते पशून् ।
तोषयिष्यामि राजानं प्रवेक्ष्यामि पुरं पुनः ॥ १३
संकल्पागाधपरिघं बाहुप्राकारतोरणम् ।
त्रिदण्डतूणसंबाधं नैकध्वजसमाकुलम् ॥ १४
ज्याक्षेपनिनदारावं नेमीनिनददुन्दुभि ।
शरजालवितानाढ्यमाक्ष्वेडितमहास्वनम् ।
नगरं ते मया गुप्तं रथोपस्थं भविष्यति ॥ १५
अधिष्ठितो मया सङ्ख्ये रथो गाण्डीवधन्विना ।
अजय्यः शत्रुसैन्यानां वैराटे व्येतु ते भयम् ॥ १६
उत्तर उवाच ।
बहुना किं प्रलापेन शृणु मे परमं वचः ।
नाहं बिभेमि कौन्तेय साक्षादपि शतक्रतोः १७
यमवायुकुबेरेभ्यो द्रोणभीष्मशतादपि ।
बिभेमि नाहमेतेभ्यो जानामि त्वां स्थिरं युधि ।
केशवेनापि संग्रामे साक्षादिन्द्रेण वा समम् ॥ १८
इदं तु चिन्तयन्नेव परिमुह्यामि केवलम् ।
निश्चयं नाधिगच्छामि नावगच्छामि किंचन ॥ १९
एवं वराङ्गरूपस्य लक्षणैः सूचितस्य च ।
केन कर्मविपाकेन क्लीबत्वं त्वामुपागतम् ॥ २०
मन्ये त्वां क्लीबरूपेण चरन्तं शूलपाणिनम् ।
गन्धर्वराजप्रतिमं देवं वाऽपि शतक्रतुम् ॥ २१
अर्जुन उवाच ।
भ्रातुर्नियोगाज्ज्येष्ठस्य संवत्सरमिदं व्रतम् ।
चरामि ब्रह्मचर्यं वै सत्यमेतद्ब्रवीमि ते ॥ २२

नास्मि क्लीबो महाबाहो परवान्धर्मसंयुतः ।
उर्वशीशापसंभूतं क्लैब्यं समुपसंस्थितम् ॥ २३
पुराऽहमाज्ञया भ्रातुर्ज्येष्ठस्यास्मि सुरालयम् ।
प्राप्तवानुर्वशी दृष्टा सुधर्मायां मया तदा ॥ २४
नृत्यन्तीं परमं रूपं बिभ्रतीं वज्रिसन्निधौ ।
अपश्यं तामनिमिषं कूटस्थामन्वयस्य मे ॥ २५
रात्रौ समागता मह्यं शयनं रन्तुमिच्छया ।
अहं तामभिवाद्यैव मातृसत्कारमाचरम् ॥ २६
सा च मामशपत्क्रुद्धा शिखण्डी त्वं भवेति वै ।
श्रुत्वा तमिन्द्रो मामाह मा भैस्त्वं पार्थ षण्डता ॥
उपकारो भवेत्तुभ्यमज्ञातवसतौ पुरा ।
इतीन्द्रो मामनुग्राह्य ततः प्रेषितवान्वृषा ॥ २८
तदिदं समनुप्राप्तं व्रतं चीर्णं मयाऽनघ ।
समाप्तव्रतमुत्तीर्णं विद्धि मां त्वं नृपात्मज ॥ २९
उत्तर उवाच ।
परमोऽनुग्रहो मेऽद्य यत्प्रतर्को न मे वृथा ।
न हीदृशाः क्लीबरूपा भवन्ति तु नरोत्तमाः ३०
सहायवानस्मि रणे युद्ध्येयममरैरपि ।
साध्वसं तत्प्रनष्टं मे किं करोमि ब्रवीहि मे ॥ ३१
अहं ते संग्रहीष्यामि हयाञ्शत्रुनिबर्हण ।
शिक्षितो ह्यस्मि सारथ्ये निष्ठितः पुरुषर्षभ ॥ ३२
दारुको वासुदेवस्य यथा शक्रस्य मातलिः ।
तथा मां विद्धि सारथ्ये शिक्षितं नरपुङ्गव ॥ ३३
अश्वा ह्येते महाबाहो तवैवाहवदुर्जयाः ।
योग्या रथवरे युक्ताः प्राणवन्तो जितश्रमाः ३४
यस्य यातेन पश्यन्ति भूमौ क्षिप्तं पदंपदम् ।
दक्षिणां यो धुरं वोढा सुग्रीवेण समो हयः ॥ ३५
योऽयं हयो धुर्यवरो वामां वहति शोभनः ।
तं मन्ये मेघपुष्पस्य जवेन सदृशं हयम् ॥ ३६
योऽयं वहति वै पार्ष्णिं दक्षिणामश्वितोद्यतः ।
वलाहकादभिमतस्तेजसा वीर्यवत्तरः ॥ ३७
योऽयं काञ्चनसन्नाहो वामं वहति शोभनः ।
धुर्यं शैब्यस्य तं मन्ये जवेन बलवत्तरम् ॥ ३८
त्वामेवायं रथो वोढुं संग्रामेऽर्हति धन्विनम् ।

त्वं चेमं रथमास्थाय योद्धुमर्हो मतो मम ।
सर्वशत्रुभिरायातो देवराज इवासुरैः ॥ ३९
वैशंपायन उवाच ।
ततो रथादवस्कन्द्य वीर्यवानरिमर्दनः ।
प्रणम्य देवान्गाण्डीवमादाय रुरुचे श्रिया ॥४०
ततो विमुच्य बाहुभ्यां शङ्खचूडानि पाण्डवः ।
तौ च दुन्दुभिसन्नादौ प्रतिबद्ध्य तलावुभौ ॥४१
इन्द्रदत्ते च ते दिव्ये उद्धृत्यामुच्य कुण्डले ।
श्लक्ष्णान्केशान्मृदून्स्निग्धाञ्श्वेतेनोद्ग्रथ्य वाससा॥
अथासौ प्राङ्मुखो भूत्वा शुचिः प्रयतमानसः ।
अभिदध्यौ महाबाहुः सर्वास्त्राणि रथोत्तमे ॥ ४३
ऊचुश्च पार्थं सर्वाणि प्राञ्जलीनि नृपात्मजम् ।
इमानि स्मो महोदार किङ्कराणीन्द्रनन्दन ॥ ४४
प्रणिपत्य ततः पार्थः समालभ्य च पाणिना ।
सर्वाणि मानसानीह भवतेत्यभ्यभाषत ॥ ४५
प्रतिगृह्य ततोऽस्त्राणि प्रहृष्टवदनोऽभवत् ।
अधिज्यं तरसा कृत्वा गाण्डीवं व्याक्षिपद्धनुः ४६
तस्य विक्षिप्यमाणस्य धनुषोऽभून्महास्वनः ।
यथा शैलस्य महतः शैलानाक्षिप्य जघ्नुषः ॥ ४७
सनिर्घाताऽभवद्भूमिर्दिक्षु वायुर्ववौ भृशम् ।
भ्रान्तद्विजं खमभवत्प्राकम्पन्त महाद्रुमाः ॥ ४८
तं शब्दं कुरवो राजन्विस्फोटमशनेरिव ।
तार्क्ष्यं शब्दमिव श्रुत्वा वित्रेसुर्दीनमानसाः ॥४९
यथेन्द्रो व्याक्षिपद्धीमं विस्फोटमशनेर्भुवि ।
तथाऽर्जुनो धनुःश्रेष्ठं बाहुभ्यामाक्षिपद्बली ॥ ५०
महाशनिमहाशब्दसदृशो ज्यास्वनो महान् ।
शत्रून्वीरांश्च संतर्ज्य निग्रहस्थो रथे स्थितः ॥५१
'उत्तर उवाच ।
एकस्त्वं पाण्डवश्रेष्ठ बहूनेतान्महारथान् ।
कथं जेष्यसि संग्रामे सर्वशस्त्रास्त्रपारगान् ॥५२
असहायोऽसि कौन्तेय ससहायाश्च कौरवाः ।
अत एव महाबाहो भीतस्तिष्ठामि तेऽग्रतः ॥५३
वैशंपायन उवाच ।
उवाच पार्थो मा भैषीः प्रहस्य स्वनवत्तदा ॥५४
युध्यमानस्य मे वीर गन्धर्वैः सुमहाबलैः ।
सहायो घोषयात्रायां कस्तदासीत्सखा मम ॥५५
तथा प्रतिभये तस्मिन्देवदानवसंकुले ।
खाण्डवे युध्यमानस्य कस्तदासीत्सखा मम ॥५६
निवातकवचैः सार्धं पौलोमैश्च महाबलैः ।
युध्यतो देवराजार्थे कः सहायस्तदाऽभवत् ॥५७
स्वयंवरे तु पाञ्चाल्या राजभिः सह संयुगे ।
युध्यतो बहुभिस्तात कः सहायस्तदाऽभवत् ॥५८
उपजीव्य गुरुं द्रोणं शुक्रं वैश्रवणं यमम् ।
वरुणं पावकं चैव कृपं कृष्णं च माधवम् ।
पिनाकपाणिनं चैव कथमेतान्न योधये ॥ ५९
रथं वाहय मे शीघ्रं व्येतु ते मानसो ज्वरः ॥'६०

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

## पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

अर्जुनेन युद्धप्रस्थानसमये उत्तररथात्सिंहध्वजस्यावरोपणपूर्वकं स्वध्यानसंनिहितस्य हनुमद्ध्वजस्य रथे स्थापनम् ॥ १ ॥ तथा स्वशङ्खादिशब्दश्रवणवित्रस्तस्योत्तरस्य समाश्वासनपूर्वकं रणायाभियानम् ॥ २ ॥

वैशंपायन उवाच ।
उत्तरं सारथिं कृत्वा शमीं कृत्वा प्रदक्षिणम् ।
आयुधं सर्वमादाय ततः प्रायाद्धनञ्जयः ॥ १
ध्वजं च सिंहं मात्स्यस्य भ्रातृणामायुधानि च ।
प्रणिधाय शमीमध्ये प्रयातुमुपचक्रमे ॥ २
ततः काञ्चनलाङ्गूलं ध्वजं वानरलक्षणम् ।
दिव्यं मायामयं युक्तं विहितं विश्वकर्मणा ।
मनसा चिन्तयामास प्रसादं पावकस्य च ॥ ३
स च तच्चिन्तितं ज्ञात्वा ध्वजे भूतान्ययोजयत् ।
रथे वानरमुच्छ्रित्य गाण्डीवं व्याक्षिपद्धनुः ॥ ४
सपताकं विचित्राङ्गं सोपासङ्गं महाबलम् ।
खात्पपात रथे तूर्णं दिव्यरूपं मनोरमम् ॥ ५

रथमास्थाय बीभत्सुः कौन्तेयः श्वेतवाहनः ।
बद्धासिः सतलत्राणः प्रगृहीतशरासनः ।
ततः प्रायादुदीचीं स कपिप्रवरकेतनः ॥ ६
सैन्याभ्याशं स संप्राप्य गृहीत्वा शङ्खमुत्तमम् ।
स्वनवन्तं महाशब्दं देवदत्तं धनञ्जयः ।
शशाङ्करूपं बीभत्सुः प्राध्मापयदरिंदमः ॥ ७
[शशाङ्ककुन्दधवलं मुखे निक्षिप्य वासविः ।
उच्छ्वसद्गण्डयुगलं सिराल्याचितफालकम् ॥ ८
आरक्तनिम्ननयनं ह्रस्वस्थूलशिरोधरम् ।
अतिश्लिष्टोदरोरस्कं तिर्यगाननशोभितम् ॥ ९
यावत्स्वशक्तिसामर्थ्यं त्रैलोक्यं क्षोभयन्निव ।
मरुद्भिर्दशभिश्चैव प्राध्मापयदरिंदमः ॥] १०
शङ्खशब्दोस्य सोत्यर्थं श्रूयते कालमेघवत् ॥ ११
तस्य शङ्खस्य शब्देन धनुषो निस्वनेन च ।
वानरस्य निनादेन रथनेमिस्वनेन च ।
जङ्गमस्य भयं घोरमकरोत्पाकशासनिः ॥ १२
शङ्खशब्देन पार्थस्य मुखेनाश्वाः पतन्क्षितौ ।
उत्तरश्चापि संत्रस्तो रथोपस्थ उपाविशत् ॥ १३
अथाश्वान्रश्मिभिः पार्थः समुद्यम्य परंतपः ।
अभ्राजत रथोपस्थे भानुर्मेराविवोत्तरे ॥ १४
शङ्खघोषेण वित्रस्तं ज्याघातेन च मूर्च्छितम् ।
उत्तरं संपरिष्वज्य समाश्वासयदर्जुनः ॥ १५
मा भैस्त्वं राजपुत्राग्र्य क्षत्रियोसि परन्तप ।
कथं पुरुषशार्दूल शत्रुमध्ये विषीदसि ॥ १६
श्रुतास्ते शङ्खशब्दाश्च भेरीशब्दाश्च सर्वशः ।
कुञ्जराणां च निनदा व्यूढानीकेषु नित्यशः ॥ १७
स त्वं कथमिवानेन शङ्खशब्देन भीषितः ।
विषण्णरूपो वित्रस्तः पुरुषः प्राकृतो यथा ॥ १८

उत्तर उवाच ।
श्रुता मे शङ्खशब्दाश्च भेरीशब्दाश्च नित्यशः ।
कुञ्जराणां च निनदा व्यूढानीकेषु तिष्ठतः ॥ १९
नैवंविधाः शङ्खशब्दाः पुरा जातु मया श्रुताः ।
ध्वजस्य चापि रूपं मे दृष्टपूर्वं नहीदृशम् ।
धनुषश्चापि घोषश्च श्रुतपूर्वो न मे क्वचित् ॥ २०
अस्य शङ्खस्य शब्देन धनुषो निस्वनेन च ।
अमानुषाणां शब्देन भूतानां ध्वजवासिनाम् ।
रथनेमिप्रणादेन मनो मे मुह्यते भृशम् ॥ २१
व्याकुलाश्च दिशः सर्वा हृदयं व्यथतीव च ।
ध्वजेन पिहिताः सर्वा दिशो न प्रतिभान्ति मे ।
गाण्डीवस्य च शब्देन कर्णौ मे बधिरीकृतौ ॥ २२
वैशंपायन उवाच ।
पुनर्ध्वजं पुनः शङ्खं धनुश्चैव पुनःपुनः ।
स मूढचेता वैराटिरर्जुनं समुदैक्षत ॥ २३
स मुहूर्तं प्रयातं तु पार्थो वैराटिमब्रवीत् ॥ २४
स्थिरो भव महाबाहो संज्ञां चात्मानमानय ।
एकान्ते रथमास्थाय पद्भ्यां त्वमवपीड्य च ।
दृढं च रश्मीन्संयच्छ शङ्खं ध्मास्याम्यहं पुनः ॥ २५
एवमुक्त्वा महाबाहुः सव्यसाची परन्तपः ।
ततः शङ्खमुपाध्मासीद्दारयन्निव पर्वतान् ।
गुहा गिरीणां च तदा दिशः शैलांस्तथैव च ॥ २६
ज्याघोषं तलघोषं च कृत्वा भूतान्यमोहयत् ।
उत्तरश्चापि संलीनो रथोपस्थ उपाविशत् ।
तं समाश्वासयामास पुनरेव धनञ्जयः ॥ २७
तस्य शङ्खस्य शब्देन रथनेमिस्वनेन च ।
गाण्डीवस्य च शब्देन पृथिवी समकम्पत ॥ २८

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

## षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

द्रोणेनार्जुनशङ्खनादादिना तस्यार्जुनत्वनिर्धारणेन दुर्योधनंप्रति तन्निवेदनपूर्वकं दुर्निमित्तप्रदर्शनम् ॥ १ ॥

वैशंपायन उवाच ।
भारद्वाजस्ततो द्रोणः सर्वशस्त्रभृतांवरः ।

* इमे कुण्डलिताः ३ श्लोकाः ध. पुस्तक एव वर्तन्ते ।

राजानं चाह संप्रेक्ष्य दुर्योधनमरिंदमः ॥ १
यथा रथस्य निर्घोषो यथा शङ्ख उदीर्यते ।
कम्पते च यथा भूमिर्नैषोन्यः सव्यसाचिनः ॥२
औत्पातिकमिदं राजन्निमित्तं भवतीह नः ।
न हि पश्यामि विजयं सैन्येऽस्माकं परन्तप ॥ ३
शस्त्राणि न प्रकाशन्ते न प्रहृष्यन्ति वाहनाः ।
अग्नयश्च न भासन्ते सुसमिद्धा न शोभनाः ॥ ४
प्रत्यादित्यं च नः सर्वे मृगा घोरा नदन्ति च ।
शकुनाश्चापसव्याश्च वेदयन्ति महाभयम् ॥ ५
गोमायुरेष सैन्यानां रुदन्मध्येन धावति ।
चाषा नदन्ति चाकाशे वेदयन्तो महद्भयम् ॥ ६
भवतां चैव रोमाणि प्रहृष्टानीव लक्षये ॥ ७
अनुष्णाङ्गाश्च संखिन्ना जृम्भन्ते चाप्यभीक्ष्णशः।
विष्कम्भन्ति च मातङ्गा मुञ्चन्त्यश्रूणि वाजिनः।
सदा मूत्रं पुरीषं च उत्सृजन्ति पुनःपुनः ॥ ८
लोहितार्द्रा च पृथिवी दिशः सर्वाः प्रधूमिताः।
न च सूर्यः प्रतपति महद्वेदयते भयम् ॥ ९
हस्तिनश्चापि वित्रस्ता योधाश्चापि वितत्रसुः ।
पराभूता च वः सेना न कश्चिद्योद्धुमिच्छति॥१०
विषण्णमुखभूयिष्ठाः सर्वे योधा विचेतसः ।
दिशं ते दक्षिणां सर्वे विप्रेक्षन्ते पुनःपुनः ॥ ११
मृगाश्च पक्षिणश्चैव सव्यमेव पतन्ति नः ।
वादित्रोद्घुष्टघोषाश्च न च गाढं स्वनन्ति च ।
ध्वजाग्रेषु निलीयन्ते वायसास्तन्न शोभनम् ॥१२
यथा मेघस्य निनदो गम्भीरस्तूर्णमायतः ।
श्रूयते रथनिर्घोषो नायमन्यो धनञ्जयात् ॥ १३
अश्वानां स्वनतां शब्दो वहतां पाकशासनिम् ।
वानरस्य रथे दिव्यो निस्वनः श्रूयते महान्॥१४
शङ्खशब्देन पार्थस्य कर्णौ मे बधिरीकृतौ ।
सर्वसैन्यं च वित्रस्तं नायमन्यो धनञ्जयात् ॥१५
राजानमग्रतः कृत्वा दुर्योधनमरिन्दमम् ।
गाः प्रस्थाप्य च तिष्ठामो व्यूढानीकाः प्रहारिणः।
प्रविभज्य त्रिधा सेनां समुच्छ्रित्य ध्वजानपि १६
शितैर्बाणैः प्रताप्येमां चमूमेष धनञ्जयः ।
मूर्ध्नि सर्वनरेन्द्राणां वामपादं करिष्यति ॥ १७
न ह्येष शक्यो बीभत्सुर्जेतुं देवासुरैरपि ।
दिक्षु गुल्मा निवेश्यन्तां यत्ता योत्स्यामहेऽर्जुनं१८

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

## सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

द्रोणवचनादर्जुनस्यार्जुनत्वावधारणेन विषादात्तूष्णींभूतेषु स्वीयेषु दुर्योधनेन द्रोणानादरपूर्वकं तान्प्रति समरप्रोत्साहनम् ॥ १ ॥

वैशंपायन उवाच ।
ततो दुर्योधनो राजा समरे भीष्ममब्रवीत् ।
द्रोणं च रथिशार्दूलं कृपं च सुमहाबलम् ॥ १
उक्तोऽयमर्थ आचार्य मया कर्णेन चासकृत् ।
पुनरेव च वक्ष्यामि न हि तृप्यामि तद्ब्रुवन् ॥२
पराजितैर्विवस्तव्यं तैश्च द्वादशवत्सरान् ।
वने जनपदेऽज्ञातैरेष एव पणो हि नः ॥ ३
तेषां न तावन्निर्वृत्तो वत्सरः स त्रयोदशः ।
अज्ञातवासे बीभत्सुरथास्माभिः परिश्रुतः ॥ ४
अनिर्वृत्ते तु निर्वासे यदि बीभत्सुरागतः ।
पुनर्द्वादशवर्षाणि वने वत्स्यन्ति पाण्डवाः ॥ ५
लोभाद्वा ते न जानीयुरस्मान्वा मोह आविशत् ।
हीनातिरिक्तमेतेषां भीष्मो वेदितुमर्हति ॥ ६
अर्थानां हि पुनर्द्वैधे नित्यं भवति संशयः ।
अन्यथा चिन्तितो ह्यर्थः पुनर्भवति चान्यथा ॥७
उत्तरं मार्गमाणानां मात्स्यसेनां युयुत्सताम् ।
यदि बीभत्सुरायातः किंनु कृत्यमतः परम् ॥ ८
त्रिगर्तानां कृतं कार्यं पाण्डवानां च मार्गणम् ।
विप्रकारैर्हि मात्स्येन सुशर्मा बाधितः पुरा ॥ ९
तेषां भयाभिपन्नानां त्रस्तानां त्राणमिच्छताम् ।

अभयं याचमानानां तदाऽस्माभिः परिश्रुतम् १०
प्रथमं तैर्ग्रहीतव्यं मात्स्यानां गोधनं महत् ।
अष्टम्यामथापराह्णे तु इति नस्तैः समाहितम् ॥ ११
नवम्यां पुनरस्माभिः सूर्यस्योदयनं प्रति ।
इमा गावो ग्रहीतव्या याते मत्स्ये गवांपदम् ॥१२
इत्येवं निश्चयोऽस्माकं मन्त्रोऽभून्नागसाह्वये ।
पाण्डवानां परिज्ञाने सर्वेषां नः परस्परम् ॥ १३
ते वा गाश्च नयिष्यन्ति यदि वा स्युः पराजिताः ।
अस्मान्वाऽप्यतिसन्धाय कुर्युर्मात्स्येन संगतिम् १४
अथवा तानुपादाय मात्स्यो जानपदैः सह ।
सर्वथा सेनया सार्धमस्मानेष युयुत्सति ॥ १५
तेषामेको महावीर्यः कश्चिदेव पुरःसरः ।
अस्माञ्जेतुमिहायातो मात्स्यो वाऽपि स्वयं भवेत् १६
यद्येष राजा मात्स्यानां यदि बीभत्सुरागतः ।
सर्वैर्योद्धव्यमस्माभिरिति नः समयः कृतः ॥ १७
अथ कस्मात्स्थिता ह्येते रथेषु रथिसत्तमाः ।
भीष्मद्रोणकृपाः कर्णो विकर्णो द्रौणिरेव च ।
संभ्रान्तमनसः सर्वे प्राप्ते ह्यस्मिन्धनञ्जये ॥ १८
नान्यत्र युद्धाच्छ्रेयोस्ति तथाऽऽत्मा प्रणिधीयताम्
सर्वलोकेन वा युद्धं देवैर्वाऽस्तु सवासवैः ॥ १९
अनाच्छिन्ने धनेऽस्माकमथ शक्रेण वज्रिणा ।
यमेन वाऽपि संग्रामे को हास्तिनपुरं व्रजेत् ॥२०
शरैरभिप्रणुन्नानां भग्नानां गहने वने ।
को हि जीवेत्पदातीनां भवेदश्वेषु संशयः ॥ २१
आचार्यं पृष्ठतः कृत्वा तथा नीतिर्विधीयताम् ।
जानामि च मतं तेषामतस्त्रासयतीव नः ॥ २२
अर्जुने चापि संप्रीतिमधिकामुपलक्षये ।
तथा दृष्ट्वा हि बीभत्सुमुपायान्तं प्रशंसति ।
यथा सेना न भज्येत तथा नीतिर्विधीयताम् २३
अदेशिका ह्यरण्येऽस्मिन्कृच्छ्रे शत्रुवशं गता ।
यथा न विभ्रमेत्सेना तथा नीतिर्विधीयताम् २४
अश्वानां हेषितं श्रुत्वा का प्रशंसा भवेत्परे ।
स्थाने वाऽपि व्रजन्तो वा सदा हेषन्ति वाजिनः २५
सदा च वायवो वान्ति नित्यं वर्षति वासवः ।
स्तनयित्नोश्च निर्घोषः श्रूयते बहुशस्तथा ॥ २६
भीषयन्पाण्डवेयेभ्यो भवान्सर्वानिमाञ्जनान् ।
प्रमुखे सर्वसैन्यानामबद्धं बहु भाषते ॥ २७
यथैवाश्वान्मार्गमाणास्तानेवाभिपरीप्सवः ।
हेषितानीव शृण्वन्ति तदिदं भवतस्तथा ॥ २८
किमत्र कार्यं पार्थस्य कथं वा स प्रशस्यते ।
अन्यत्र कामाद्द्वेषाद्वा रोषाद्वाऽस्मासु केवलम् २९
आचार्या वै कारुणिकाः प्राज्ञाश्चापायदर्शिनः ।
नैते महाहवे घोरे संप्रष्टव्याः कथंचन ॥ ३०
प्रासादेषु विचित्रेषु गोष्ठीपानाशनेषु च ।
कथा विचित्राः कुर्वाणाः पण्डितास्तत्र शोभनाः॥
बहून्याश्चर्यरूपाणि कुर्वते जनसंसदि ।
इष्वस्त्रे चापसंधाने पण्डितास्तत्र शोभनाः॥ ३२
परेषां विवरज्ञाने मनुष्याचरितेषु च ।
अन्नसंस्कारदोषेषु पण्डितास्तत्र शोभनाः॥ ३३
पण्डितान्पृष्ठतः कृत्वा परेषां गुणवादिनः ।
विधीयतां तथा नीतिर्यथा वध्येत वै परः॥ ३४
गावश्चैताः प्रतिष्ठन्तां सेनां व्यूहन्तु माचिरम् ।
आरक्षाश्च विधीयन्तां यत्र योत्स्यामहे परैः॥ ३५

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

## अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

कर्णेनात्मश्लाघनपूर्वकमर्जुनपरभवनमिथ्याप्रतिज्ञानम् ॥ १ ॥

कर्ण उवाच ।
सर्वानायुष्मतो भीतान्संत्रस्तानिव लक्षये ।
अयुद्धमनसश्चैव सर्वांश्चैवानवस्थितान् ॥ १
यद्येष जामदग्न्यो वा यदि वेन्द्रः पुरंदरः ।

सप्तम्याश्चापराह्णे त्विति नवम्यां पुनरस्माभिरिति च थ. पाठः ॥ ११ ॥ सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

वासुदेवेन सहितो यदि बीभत्सुरागतः ।
अहमेनं निरोत्स्यामि वेलेव वरुणालयम् ॥ २
रुक्मपुङ्खाः प्रसन्नाग्रा मुक्ता हस्तवता मया ।
छादयन्तु शराः सूर्यं पार्थस्यायुर्निरोधकाः ॥ ३
मम चापप्रमुक्तानां शराणां नतपर्वणाम् ।
निवृत्तिर्गच्छतां नास्ति सर्पाणां श्वसतामिव ॥ ४
शराणां पुङ्खसक्तानां मौर्व्योऽभिहतयोर्भृशम् ।
श्रूयते तलयोः शब्दो भेर्योराहतयोरिव ॥ ५
एकैकं चतुरः पञ्च क्वचित्षष्टिं क्वचिच्छतम् ।
हतान्पश्यत मात्स्यानामिषुभिर्निहतान्रथान् ॥ ६
मद्बाहुमुक्तैरिषुभिस्तैलधौतैः पतत्रिभिः ।
खद्योतैरिव संपृक्तमन्तरिक्षं विराजताम् ॥ ७
ध्वजाग्राद्वानरस्तस्य भल्लेनाभिहतो मया ।
अद्यैव पततां भूमौ विनदन्भैरवान्रवान् ॥ ८
शत्रोर्मयाभिपन्नानां भूतानां ध्वजवासिनाम् ।
दिशः प्रतिष्ठमानानामस्तु शब्दो दिवं गतः ॥ ९
क्रुद्धेनास्त्रं मया मुक्तं निर्दहेत्पृथिवीमिमाम् ।
स्थितं संग्रामशिरसि पार्थमेकाकिनं किमु ॥ १०
समाहितश्च बीभत्सुर्वर्षाण्यष्टौ च पञ्च च ।
जातस्नेहश्च युद्धस्य मयि संदर्शयिष्यति ॥ ११
पात्रीभूतस्तु कौन्तेयो ब्राह्मणो गुणवानिव ।
शरमालां स गृह्णातु मत्प्रसृष्टां स्वधामिव ॥ १२
एष चापि महेष्वासस्त्रिषु लोकेषु विश्रुतः ।
अहं चापि नरश्रेष्ठादर्जुनान्नावमः क्वचित् ॥ १३
मम हस्तप्रमुक्तानां शराणां नतपर्वणाम् ।
निवृत्तिर्गच्छतां नास्ति वैश्वानरशिखार्चिषाम् १४
इतश्चेतश्च मुक्तानां शराणां नतपर्वणाम् ।
तुमुलः श्रूयतां नादः षट्पदां गायतामिव ॥ १५
अन्तरा संपतद्भिस्तु गृध्रपत्रैः शिलाशितैः ।
शलभानामिवाकाशे छाया संप्रति दृश्यताम् ॥ १६
अद्य मत्कार्मुकोत्सृष्टाः शिताः पार्थस्य मर्मगाः ।
शरीरमुपसर्पन्तु वल्मीकमिव पन्नगाः ॥ १७
बर्हिबर्हिणराजानां बर्हिणां बर्हिणामिव ।
पततां पततां घोषः पततां पततामिव ॥ १८
अद्य त्वहमृणान्मोक्ष्ये यन्मया तत्प्रतिश्रुतम् ।
धार्तराष्ट्रस्य तत्काले निहत्य समरेऽर्जुनम् ॥ १९
इन्द्राशनिसमस्पर्शं महेन्द्रसमविक्रमम् ।
अर्दयिष्याम्यहं पार्थमुल्काभिरिव कुञ्जरम् ॥ २०
शरजालमहाज्वालमसिशक्तिगदेन्धनम् ।
निर्दहन्तमनीकानि शमयिष्येऽर्जुनानलम् ॥ २१
रथादतिरथं लोके सर्वशस्त्रभृतांवरम् ।
विवशं पार्थमादास्ये गरुत्मानिव पन्नगम् ॥ २२
क्षुद्रकैर्विविधैर्भल्लैर्निपतद्भिश्च मामकैः ।
संमूढचेताः कौन्तेयः कर्तव्यं नाभिपद्यताम् ॥ २३
अद्य दुर्योधनस्याहं शोकं हृदि चिरं स्थितम् ।
समूलमपनेष्यामि हरन्पार्थशिरः शरैः ॥ २४
अद्य मत्कार्मुकोत्सृष्टैर्भल्लैश्च नतपर्वभिः ।
हताश्वं विरथं पार्थं पौरुषे पर्यवस्थितम् ।
निश्वसन्तं यथा नागमद्य पश्यन्तु कौरवाः ॥ २५
जामदग्न्यान्मया लब्धं दिव्यास्त्रमृषिसत्तमात् ।
तदुपाश्रित्य वीर्यं च युध्येयमपि वासवम् ॥ २६
ध्वजाग्रे वानरस्तिष्ठन्भल्लेन निहतो मया ।
अद्यैव पततां भूमौ विनदन्भैरवान्रवान् ॥ २७
कामं गच्छन्तु कुरवो गाः प्रगृह्य परंतपाः ।
रथेषु वाऽपि तिष्ठन्तो युद्धं पश्यन्तु मामकम् ॥ २८

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

बर्हिणां बर्हिणामिव एकैकस्य पृष्ठेपृष्ठे गच्छतां मयूराणां मयूराणामिव बर्हिबर्हिणराजानां बर्हिणो मयूरस्य बर्हिणैः शरमूले पत्ररूपेण स्थितमयूरपत्रैः राजानां राजमानानां । राजृ दीप्ताविति धातोः कर्त्रर्थे पचाद्यचि कृते रूपनिष्पत्तिः । पततां पपतां एकैकस्य शरस्य पृष्ठे पृष्ठे निपततां शराणां घोषः पततां मालारूपेण निपतमानानां पततां पक्षिणां घोषइव अखिलैः श्रूयतामिति योग्यक्रियाध्याहारेण संबन्धः । यद्वा बर्हिणां बर्हवतां उत्पन्नबर्हाणामित्यर्थः । बर्हिणां मयूराणामिव पततां पततां पुंखानुपुंखतया क्षणेक्षणे पततां पततां शराणां घोषः पततां पक्षिणां घोष इव पततां दिशिदिशि पततामिति लोडन्तक्रिया । सर्वैः श्रूयतामिति भावः । बर्हिबर्हिणवाजानामिति ट. थ. ध. पाठः ॥ १८ ॥ अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

## एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

कृपेणार्जुनचरित्रप्रशंसनपूर्वकं कर्णगर्हणम् ॥ १ ॥ तथा स्वेषु एकैकेनार्जुनस्य दुर्जयत्वकथनपूर्वकं संभूयाभियान-निर्धारणम् ॥ २ ॥

वैशंपायन उवाच ।
तस्य तद्वचनं श्रुत्वा नीतिशास्त्रविशारदः ।
आचार्यः कुरुवीराणां कृपः शारद्वतोऽब्रवीत् ॥ १
सदैव तव राधेय युद्धे क्रूरतरा मतिः ।
नार्थानां प्रकृतिं वेत्सि नानुबन्धमवेक्षसे ॥ २
नया हि बहवः सन्ति शास्त्राण्याश्रित्य चिन्तिताः ।
तेषां युद्धं सुपापिष्ठं वेदयन्ति पुराविदः ॥ ३
देशकालेन संयुक्तं युद्धं विजयदं भवेत् ।
हीनकालं तदेवेह अनर्थायोपकल्पते ॥ ४
देशे काले च विक्रान्तं कल्याणाय विधीयते ।
आनुकूल्येन कार्याणामुत्तरं तु विधीयते ॥ ५
भारं हि रथकारस्य न व्यवस्यन्ति पण्डिताः ।
परिचिन्त्य तु पार्थेन संनिपातो न नः क्षमः ॥६
एको हि शत्रून्समरे समर्थः प्रतिबाधितुम् ।
एकः कुरूनभ्यरक्षदेकश्चाग्निमतर्पयत् ॥ ७
एकश्च पञ्च वर्षाणि ब्रह्मचर्यमधारयत् ।
एकः सुभद्रामारोप्य द्वैरथे कृष्णमाह्वयत् ॥ ८
सैन्धवं वनवासे तु जित्वा कृष्णामथानयत् ।
एकश्च पञ्च वर्षाणि शक्रादस्त्राण्यशिक्षत ॥ ९
एकः सपत्नाञ्जित्वा तु कुरूणामकरोद्यशः ।
एको गन्धर्वराजानं चित्रसेनमरिन्दमः ।
विजिग्ये तरसा सङ्ख्ये सेनां चास्य सुदुर्जयाम् ॥१०
पाञ्चाली श्रीमती प्राप्ता क्षत्रं जित्वा स्वयंवरे ।
आदाय गतवान्पार्थो भवान्कनु गतस्तदा ॥ ११
तथा निवातकवचाः कालकेयाश्च दानवाः ।
दैवतैरप्यवध्यास्ते एकेन युधि पातिताः ॥ १२
एकेन हि त्वया कर्ण किं नामेह कृतं पुरा ।
एकैकेन यथा तेषां भूमिपाला वशे कृताः ॥१३
इन्द्रोपि हि न पार्थेन संयुगे योद्धुमर्हति ।
यस्तेनाशंसते योद्धुं कर्तव्यं तस्य भेषजम् ॥ १४
आशीविषस्य क्रुद्धस्य पाणिमुद्यम्य दक्षिणम् ।
अवमुच्य प्रदेशिन्या दंष्ट्रामादातुमिच्छसि ॥ १५
अथवा कुञ्जरं मत्तमेकमेकचरं वने ।
निरङ्कुशं समारुह्य नगरं यातुमिच्छसि ॥ १६
समिद्धं पावकं चापि घृतमेदोवसाहुतम् ।
घृताक्तक्षीरवासास्त्वं मध्येनोत्सर्तुमिच्छसि ॥१७
आत्मानं यः समाबध्य कण्ठे बद्ध्वा तथा शिलाम् ।
समुद्रं प्रतरेद्दोर्भ्यां तत्र किं कर्ण पौरुषम् ॥ १८
अकृतास्त्रः कृतास्त्रं वै बलवन्तं सुदुर्बलः ।
तादृशं कर्ण यः पार्थं योद्धुमिच्छेत्स दुर्मतिः १९
अस्माभिरेव निकृतो वर्षाणीह त्रयोदश ।
सिंहः पाशविनिर्मुक्तो न नः शेषं करिष्यति ॥२०
एकान्ते पार्थमासीनं कूपेऽग्निमिव संवृतम् ।
अज्ञानादभ्यवस्कन्द्य प्राप्ताः स्मो भयमुत्तमम् ॥२१
उत्सृष्टं तूलराशौ तु एकोऽग्निं शमयेत्कथम् ।
सह युद्ध्यामहे पार्थमागतं युद्धदुर्मदम् ॥ २२
यत्ता वयं पराक्रान्ता व्यूढानीकाः प्रहारिणः ।
युद्धायावस्थितं पार्थमागतं पाकशासनिम् ॥ २३
यत्ताः सर्वे रथश्रेष्ठं परिवार्य समन्ततः ।
षड्रथाः परिकीर्यन्तां वज्रपाणिमिवासुराः ॥ २४
द्रोणो दुर्योधनो भीष्मो भवान्द्रौणिस्तथा वयम् ।
सर्वे युद्ध्यामहे पार्थं कर्ण मा साहसं कृथाः ॥२५

---

भारं हीति । यथा रथकारेण दिव्योऽयं मया निर्मितो रथः सुदृढाङ्गः अनेन त्वं देवानपि सर्वथा जेष्यसीत्युक्ते तद्वचसि भारं दत्त्वा देशकालानुकूल्यमनपेक्ष्यैव न व्यवस्यन्ति । योद्धुमिति शेषः । एवं त्वद्वचसि भारं दत्त्वा देशाद्यानुकूल्यमनवेक्ष्य कथमस्माभिर्योद्धव्यम् । तवतु वचनं रथकारवचनवदर्थशून्यमिति भावः ॥ ६ ॥ एकः संयमिनीं जित्वा इति ध. पाठः ॥ १० ॥
एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

न ह्यसंगत्य समरे पार्थं जेष्यामहे वयम् । | संगत्य समरे पार्थं सर्वे जेष्यामहे वयम् ॥ २६

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

## पञ्चाशोऽध्यायः ॥ ५० ॥

कृपेण स्वगर्हणमसृष्यता कर्णेन तदुपालम्भः ॥ १ ॥ तदसहिष्णुनाऽश्वत्थाम्ना सममौद्धाटनं कर्णदुर्योधनोपालम्भः ॥ २ ॥

वैशंपायन उवाच ।
कृपस्य वचनं श्रुत्वा कर्णो राजन्युधांपतिः ।
पुनः प्रोवाच संरब्धो गर्हयन्ब्राह्मणं कृपम् ॥ १
कर्ण उवाच ।
लक्षयाम्यहमाचार्यं भयाद्भक्ति गतं रिपौ ।
भीतेन हि न योद्धव्यमहं योत्स्ये धनञ्जयम् ॥ २
ननु वारुणमाग्नेयं याम्यं वायव्यमेव च ।
अस्त्रं ब्रह्मशिरश्चैव सत्वहीनस्य ते वृथा ॥ ३
मित्रकार्यं कृतमिदं पितापुत्रैर्महारथैः ।
भर्तृपिण्डश्च निर्विष्टो यथेष्टं गन्तुमर्हथ ॥ ४
भिक्षां हरस्व नित्यं त्वं यज्ञाननुचरस्व च ।
आमन्त्रणानि भुङ्क्ष्वाद्य माऽस्मान्युद्धेन भीषय ॥ ५
भार्गवास्त्रं मया मुक्तं निर्दहेत्पृथिवीमिमाम् ।
किं पुनः पाण्डुपुत्राणामेकमर्जुनमाहवे ॥ ६
आगमिष्यन्ति पदवीं मात्स्याः पाण्डवमाश्रिताः ।
कीचकानां तु बलिनां शत्रुसेनावमर्दिनाम् ॥ ७
तानहं निहनिष्यामि भवता गम्यतां गृहम् ।
किं वेदवादिनां कार्यं परस्नेहानुभाषिणाम् ॥ ८
तस्य तद्वचनं श्रुत्वा अश्वत्थामा प्रतापवान् ।
उवाच वदतांश्रेष्ठो दुर्योधनमवेक्ष्य च ॥ ९
न च तावज्जिता गावो न च सीमान्तरं गताः ।
न हास्तिनपुरं प्राप्तास्त्वं च कर्ण विकत्थसे ॥ १०
बहूनि धर्मशास्त्राणि पठन्ति द्विजसत्तमाः ।
तेषु किंस्विदिदं दृष्टं द्यूते जीयेत यन्नृपः ॥ ११
संग्रामान्विपुलाञ्जित्वा लब्ध्वा च विपुलं धनम् ।
विजित्य च महीं कृत्स्नां नेह कत्थन्ति पण्डिताः ॥
पचत्यग्निरवाक्यस्तु तूष्णीं भाति दिवाकरः ।
तूष्णीं धारयते लोकान्वसुधा सचराचरान् ॥ १३
चातुर्वर्ण्यस्य कर्माणि विहितानि महर्षिभिः ।
धनं यैरधिगन्तव्यं यच्च कुर्वन्न दुष्यति ॥ १४
अधीत्य ब्राह्मणो वेदान्याजयेत यजेत वा ।
क्षत्रियो धनमाहृत्य यजेतैव न याजयेत् ॥ १५
वैश्योऽधिगम्य वित्तानि वार्ताकर्माणि कारयेत् ॥
शूद्रः शुश्रूषणं कुर्यात्त्रिषु वर्णेषु नित्यशः ।
वन्दनायोगविधिभिर्वैतसीं वृत्तिमाश्रितः ॥ १७
वर्तमाना यथाशास्त्रं प्राप्य चापि महीमिमाम् ।
प्रकुर्वन्ति महाभागा यज्ञान्सुविपुलानपि ॥ १८
का जातिस्तेषु सूतेयं केऽपि मन्त्राः क्रियाश्च काः ।
केयं वर्णेषु या राज्ञो वक्तृभोक्तृनियन्तृषु ॥ १९
वैशंपायन उवाच ।
दुर्योधनमभिप्रेक्ष्य कर्णं च कुरुसंसदि ।
अश्वत्थामा भृशं क्रुद्धो दुर्योधनमतर्जयत् ॥ २०
प्राप्य द्यूतेन को राज्यं क्षत्रियः स्तोष्टुमर्हति ।
तथा नृशंसरूपोयं धार्तराष्ट्रश्च निर्घृणः ॥ २१
तथाऽधिगम्य वित्तानि को विकत्थेद्विचक्षणः ।
निकृत्या वञ्चनायोगैश्चरन्वैतंसिको यथा ॥ २२
कतमद्द्वैरथं युद्धं यत्राजैषीर्धनञ्जयम् ।
नकुलं सहदेवं वा धनं येषां त्वया हृतम् ॥ २३
युधिष्ठिरो जितः कस्मिन्भीमश्च बलिनांवरः ।
इन्द्रप्रस्थं त्वया कस्मिन्संग्रामे निर्जितं पुरा ॥ २४
तथैव कतमद्युद्धं यस्मिन्कृष्णा जिता त्वया ।
एकवस्त्रा सभां नीता क्षुद्रकर्मन्रजस्वला ॥ २५
मूलमेषां महत्कृत्तं सारार्थी चन्दनं यथा ।
क्षुद्रं कर्म समास्थाय तत्र किं विदुरोऽब्रवीत् ॥ २६

यदुक्तं ब्राह्मणानां भोजनादावेव कौशलं न युद्ध इति तत्र तवापि वैश्यत्वान्न युद्धे सामर्थ्यमस्तीति दर्शयिष्यन्वर्णानां कर्माणि विभजते चातुर्वर्ण्यस्येत्यादिना ॥ १४ ॥ वैतंसिको व्याधः ॥ २२ ॥ अनृतं द्यूतं कुर्वता धार्तराष्ट्रेण धर्मस्य मूलं कृत्तं छिन्नं । तत्र तदा विदुरः किमब्रवीत् क्षयमूलं द्यूतमिति तत्स्मरेति शेषः ॥ २६ ॥

यथाशक्ति मनुष्याणाममर्षं लक्षयामहे ।
अन्येषामपि सत्वानामपि कीटपिपीलिकैः ॥२७
द्रौपद्याः संपरिक्लेशं न क्षन्तुं पाण्डवोऽर्हति ।
क्षयाय धार्तराष्ट्राणां प्रादुर्भूतो धनञ्जयः ॥ २८
त्वं पुनः पण्डितो भूत्वा ह्याचार्यं क्षेप्तुमिच्छसि ।
वैरान्तकरणो जिष्णुर्न नः शेषं करिष्यति ॥ २९
नैव देवा न गन्धर्वा नासुरा न च राक्षसाः ।
भयादिह न युद्ध्येरन्पाण्डुपुत्रेण धीमता ॥ ३०
यं यमेकोपि संक्रुद्धः संग्रामे निपतिष्यति ।
वृक्षं गरुडवद्वेगाद्विनिहत्यान्तमेष्यति ॥ ३१
त्वत्तो विशिष्टं वीर्येण धनुष्यमरराट्समम् ।
वासुदेवसमं युद्धे तं पार्थं को न पूजयेत् ॥ ३२
देवं दैवेन युद्ध्येत मानुषेण च मानुषम् ।
अस्त्रं ह्यस्त्रेण यो हन्यात्कोऽर्जुनेन समः पुमान् ॥
पुत्रादनवमः शिष्य इति धर्मविदो विदुः ।
एतेनापि निमित्तेन प्रियो द्रोणस्य पाण्डवः ॥ ३४
यथा त्वमकरोर्द्यूतमिन्द्रप्रस्थं यथाऽहरः ।
यथाऽनैषीः सभां कृष्णां तथा युध्यस्व पाण्डवं ३५
अयं ते मातुलः प्राज्ञः क्षत्रधर्मस्य कोविदः ।
दुर्द्यूतदेवी गान्धारः शकुनिर्युद्ध्यतामिह ॥ ३६
नाक्षान्क्षिपति गाण्डीवं न कृतं द्वापरं न च ।
ज्वलतो निशितान्बाणांस्तांस्तान्क्षिपति गाण्डिवं॥
न हि गाण्डीवनिर्मुक्ता गृध्रपक्षाः सुतेजनाः ।
नान्तरेष्ववतिष्ठन्ते गिरीणामपि दारणाः ॥ ३८
अन्तकः पवनो मृत्युस्तथाऽग्निर्बडवामुखः ।
कुर्युरेते क्वचिच्छेषं न तु क्रुद्धो धनञ्जयः ॥ ३९
यथा सभायां द्यूतं त्वं मातुलेन सहाकरोः ।
तथा युद्धस्व संग्रामे सौबलेन सुरक्षितः ॥ ४०
युद्ध्यतां काममाचार्यो नाहं योत्स्ये धनञ्जयम् ।
मत्स्यो ह्यस्माभिरायोध्यो यद्यागच्छेद्गवांपदम् ४१

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

---

## एकपञ्चाशोऽध्यायः ॥ ५१ ॥

कर्णकृतद्रोणकृपाधिक्षेपसंक्रुद्धमश्वत्थामानं प्रति भीष्मेण द्रोणादिप्रशंसनपूर्वकं परिसान्त्वनम् ॥ १ ॥ दुर्योधनेन भीष्मकर्णाभ्यां सह कृपद्रोणक्षमापनम् ॥ २ ॥

वैशंपायन उवाच ।
ततः शान्तनवस्तत्र धर्मार्थकुशलं हितम् ।
दुर्योधनमिदं वाक्यमब्रवीत्कुरुसंसदि ॥ १
साधु पश्यति वै द्रोणः कृपः साध्वनुपश्यति ।
आचार्यपुत्रः सहजं निश्चितं साधु भाषते ॥ २
कर्णस्तु क्षत्रधर्मेण केवलं योद्धुमिच्छति ।
आचार्यो नावमन्तव्यः पुरुषेण विजानता ।
देशकालौ तु संप्रेक्ष्य योद्धव्यमिति मे मतिः ॥ ३
यस्य सूर्यसमाः पञ्च सपत्नाः स्युः प्रहारिणः ।
कथमभ्युदये तेषां न प्रमुह्येत पण्डितः ॥ ४
स्वार्थे सर्वे विमुह्यन्ति येऽपि धर्मविदो जनाः ।
तस्मात्त्वं न जानाति यत्तु कार्यं नराधिपः ॥ ५
धार्तराष्ट्रोपि दुर्बुद्धिः पश्यन्नपि धनञ्जयम् ।
नैव पश्यति नाघ्राति मन्दः क्रोधवशं गतः ॥ ६
वैशंपायन उवाच ।
एवमुक्त्वा तु राजानं पुनर्द्रौणिमुवाच ह ।
प्राञ्जलिर्भरतश्रेष्ठः साम्ना बुद्धिमतांवरः ॥ ७
कर्णो हि यदवोचत्त्वां तेजस्संजननाय तत् ।
आचार्यपुत्रः क्षमतां महत्कार्यमुपस्थितम् ॥ ८
नायं कालो विरोधस्य कौन्तेये समुपस्थिते ।
क्षन्तव्यं भवता सर्वमाचार्येण कृपेण च ॥ ९
भवतां हि कृतास्त्रत्वं यथाऽऽदित्ये प्रभा तथा ।
यथा चन्द्रमसो लक्ष्मीः सर्वथा नापकृष्यते ।
एवं भवत्सु ब्राह्मण्यं ब्रह्मास्त्रं च प्रतिष्ठितम् ॥ १०

---

चकारात् त्रेतापि समुच्चीयते । कृतादयो द्यूतशास्त्रप्रसिद्धाः पाशकाः ॥ ३७ ॥ पञ्चाशोऽध्यायः ॥ ५० ॥

चत्वार एकतो वेदाः क्षात्रमेकत्र दृश्यते ।
नैतत्समस्तमुभयं कस्मिंश्चिदनुशुश्रुम ।
अन्यत्र भारताचार्यात्सपुत्रादिति मे मतिः ॥ ११
वेदान्ताश्च पुराणानि इतिहासं पुरातनम् ।
जामदग्न्यमृते राजन्को द्रोणादधिको भवेत् ॥ १२
ब्रह्मास्त्रं चैव वेदाश्च नैतदन्यत्र दृश्यते ॥ १३
आचार्यपुत्रः क्षमतां नायं कालो विभेदने ।
सर्वे संहत्य युद्ध्यामः पाकशासनिमागतम् ॥ १४
बलस्य व्यसनानीह यान्युक्तानि मनीषिभिः ।
मुख्यो भेदो हि तेषां तु पापिष्ठो विदुषां मतः ॥ १५
अश्वत्थामोवाच ।
नैवं न्याय्यमिदं वाच्यमस्माकं पुरुषर्षभ ।
किंतु रोषपरीतेन गुरुणा भाषिता गुणाः ॥ १६
शत्रोरपि गुणा ग्राह्या दोषा वाच्या गुरोरपि ।
सर्वथा सर्वयत्नेन पुत्रे शिष्ये हितं वदेत् ॥ १७
आचार्य एष क्षमतां शान्तिरत्र विधीयताम् ।
अभिद्यमाने तु गुरौ निवृत्तं रोषकारितम् ॥ १८
वैशंपायन उवाच ।
ततो दुर्योधनो द्रोणं क्षमयामास भारत ।
सह कर्णेन भीष्मेण कृपं चैव महाबलम् ॥ १९
द्रोण उवाच ।
यदेतत्प्रथमं वाक्यं भीष्मः शान्तनवोऽब्रवीत् ।
तेनैवाहं प्रसन्नो वै परमत्र विधीयताम् ॥ २०
यथा दुर्योधनं पार्थो नोपसर्पति संगरे ।
साहसाद्यदि वा मोहात्तथा नीतिर्विधीयताम् ॥ २१
वनवासे ह्यनिर्वृत्ते दर्शयेन्न धनञ्जयः ।
धनं चालभमानोऽत्र नाद्य तत्क्षन्तुमर्हति ॥ २२
यथा नायं समायुञ्ज्याद्धार्तराष्ट्रं कथंचन ।
न च सेनां पराजय्यात्तथा नीतिर्विधीयताम् ॥ २३
उक्तं दुर्योधनेनापि पुरस्ताद्वाक्यमीदृशम् ।
तदनुस्मृत्य गाङ्गेय यथावद्वक्तुमर्हसि ॥ २४

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥

## द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

भीष्मेण दुर्योधनंप्रति हेतूपन्यासपूर्वकं युधिष्ठिरंप्रति श्रुतवनवासादिकालस्य परिसमाप्तिकथनम् ॥ १ ॥ भीष्मेणार्जुनपराक्रमप्रशंसनपूर्वकं पाण्डवैः सह संधिविधानेपि दुर्योधनेन तत्प्रतिषेधनम् ॥ २ ॥ भीष्मेण द्रोणवचनाद्गोभिः सह दुर्योधनस्य प्रस्थापनपूर्वकं सेनाया व्यूहीकरणेन समराभियानम् ॥ ३ ॥

भीष्म उवाच ।
कलाः काष्ठाश्च युज्यन्ते मुहूर्ताश्च दिनानि च ।
अर्धमासाश्च मासाश्च नक्षत्राणि ग्रहास्तथा ॥ १
ऋतवश्चापि युज्यन्ते तथा संवत्सरा अपि ।
एवं कालविभागेन कालचक्रं प्रवर्तते ॥ २
तेषां कालातिरेकेण ज्योतिषां च व्यतिक्रमात् ।
पञ्चमे पञ्चमे वर्षे द्वौ मासावधिमासकौ ॥ ३
एषामभ्यधिका मासाः पञ्च च द्वादश क्षपाः ।
त्रयोदशानां वर्षाणामिति मे वर्तते मतिः ॥ ४
पूर्वेद्युरेव निर्वृत्तस्ततो बीभत्सुरागतः ॥ ५
सर्वं यथावच्चरितं यद्यदेभिः प्रतिश्रुतम् ।
एवमेतद्ध्रुवं ज्ञात्वा ततो बीभत्सुरागतः ॥ ६
सर्वे पञ्च महात्मानः सर्वे धर्मार्थकोविदाः ।
येषां युधिष्ठिरो राजा कस्माद्धर्मेऽपराङ्मुखः ॥ ७
कामात्क्रोधाच्च लोभाच्च कामक्रोधभयादपि ।
स्नेहाद्वा यदि वा मोहाद्धर्मं नात्येति धर्मजः ॥ ८
अलुब्धाश्चैव कौन्तेयाः कृतवन्तश्च दुष्करम् ।
न चापि केवलं राज्यमिच्छेयुस्ते ह्यधर्मतः ॥ ९
तदैव ते हि विक्रान्तुमीषुः कौरवनन्दनाः ।
धर्मपाशनिबद्धास्तु न चेलुः क्षत्रियव्रतात् ॥ १०

यथा दुर्योधनो राजा न गच्छेत्कांचिदापदमिति ट. थ. पाठः । यथा नायशसा युक्तो धार्तराष्ट्रः कथंचनेति ध. पाठः ॥ २१ ॥ एकपञ्चाशोऽध्यायः ॥ ५१ ॥

यश्चानृत इति ख्यातः स च गच्छेत्पराभवम् ।
वृणुयुर्मरणं पार्था नानृतत्वं कथंचन ॥ ११
प्राप्ते तु काले स्वानर्थान्नोत्सृजेयुर्नरर्षभाः ।
अपि वज्रभृता गुप्तांस्तथावीर्या हि पाण्डवाः ॥ १२
प्रतियुद्ध्येम समरे सर्वशस्त्रभृतांवरम् ॥ १३
तस्माद्यदत्र कल्याणं लोके सद्भिरनुष्ठितम् ।
तत्संविधीयतां शीघ्रं मा वो ह्यर्थोऽभ्यगात्परम् १४
न हि पश्यामि संग्रामे कदाचिदपि कौरव ।
एकान्तसिद्धिं राजेन्द्र संप्राप्तश्च धनञ्जयः ॥ १५
संप्रवृत्ते तु संग्रामे भावाभावौ जयाजयौ ।
अवश्यमेकं स्पृशतो दृष्टमेतदसंशयम् ॥ १६
तस्माद्युद्धोपचरितं कर्म वा धर्मसंहितम् ।
क्रियतामाशु राजेन्द्र संप्राप्तश्च धनञ्जयः ॥ १७
एको हि समरे पार्थः पृथिवीं निर्दहेच्छरैः ।
भ्रातृभिः सहितो भूत्वा किं पुनः कौरवान्रणे ।
तस्मात्सन्धिं कुरुश्रेष्ठ कुरुष्व यदि मन्यसे ॥ १८
दुर्योधन उवाच ।
नाहं राज्यं प्रदास्यामि पाण्डवेभ्यः पितामह ।
ग्रामं सेनां च दासांश्च स्वल्पं द्रव्यमपि प्रभो ।
युद्धोपचारिकं यत्तु तत्सर्वं संविधीयताम् ॥ १९
वैशंपायन उवाच ।
भीष्मस्योपरते वाक्ये तथा दुर्योधनस्य च ।
प्राप्तमर्थ्यं च यद्वाक्यं द्रोणश्चाह द्विजोत्तमः ॥ २०
यत्तु युद्धोपचरितं भवेद्वा धर्मसंहितम् ।
कस्त्वया सदृशो लोके भूयस्त्वं वक्तुमर्हसि ॥ २१
अत्र या मामिका बुद्धिः श्रूयतां यदि रोचते ।
सर्वथा हि मया श्रेयो वक्तव्यं कुरुनन्दन ॥ २२
राजा बलचतुर्भागं क्षिप्रमादाय गच्छतु ।
ततोऽपरश्चतुर्भागो गाः समादाय गच्छतु ।
वयं चार्धेन सैन्यस्य प्रतियोत्स्याम पाण्डवम् ॥ २३
अहं भीष्मश्च कर्णश्च अश्वत्थामा कृपस्तथा ।
प्रतियोत्स्याम बीभत्सुमागतं कृतनिश्चयम् ॥ २४
एवं राजा सुगुप्तः स्यान्न क्लैब्यं गन्तुमर्हति ।
मत्स्यं वा पुनरायातमथवापि शतक्रतुम् ।
अहमावारयिष्यामि वेलेव मकरालयम् ॥ २५
वैशंपायन उवाच ।
तद्वाक्यं रुरुचे तेषां द्रोणेनोक्तं महात्मना ।
तथाहि कृतवान्राजा कौरवाणामनन्तरम् ॥ २६
भीष्मः प्रस्थाप्य राजानं गोधनं तदनन्तरम् ।
सेनामुख्यान्व्यवस्थाप्य व्यूहितुं संप्रचक्रमे ॥ २७
द्रोणस्योपरते वाक्ये भीष्मः प्रोवाच बुद्धिमान् ।
आचार्य मध्ये तिष्ठ त्वमश्वत्थामा तु सव्यतः ।
कृपः शारद्वतो धीमान्पार्श्वं रक्षतु दक्षिणम् ॥ २८
विकर्णश्च महावीर्यो दुर्मुखश्च परन्तपः ।
शकुनिः सौबलश्चैव दुःसहश्च महाबलः ।
द्रोणस्य पार्श्वमजिताः पालयन्तु महाबलाः ॥२९
अग्रतः सूतपुत्रस्तु कर्णस्तिष्ठतु दंशितः ।
अहं सर्वस्य सैन्यस्य पश्चात्स्थास्यामि पालयन् ॥३०
सर्वे महारथाः शूरा महेष्वासा महाबलाः ।
युद्ध्यन्तु पाण्डवश्रेष्ठमागतं यत्नतो युधि ॥ ३१
वैशंपायन उवाच ।
अभेद्यं परसैन्यानां व्यूहं व्यूह्य कुरूत्तमः ।
वज्रगर्भं व्रीहिमुखं पद्मचन्द्रार्धमण्डलम् ॥ ३२
तस्य व्यूहस्य पश्चार्धे भीष्मश्चाथोद्यतायुधः ।
सौवर्णं तालमुच्छ्रित्य रथे तिष्ठन्नशोभत ॥ ३३

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

## त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

इन्द्रेण सुदर्शननामनि कामगामिनि प्रासादे देवगणसमारोपणपूर्वकमर्जुनकुरुरणावलोकनाय गगनाङ्गणावतरणम् ॥ १ ॥

वैशंपायन उवाच ।
ततः सुदर्शनं नाम प्रासादं हरिवाहनः ।

तस्माद्युद्धोचितं कर्मेति ध. पाठः ॥ १८ ॥ पद्मगर्भमिति थ. पाठः ॥ ३२ ॥ द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

सर्वान्देवान्समारोप्य प्रययौ यत्र पाण्डवः ॥ १
स्थूणाराजिसहस्रं तु यत्र मध्ये प्रतिष्ठितम् ।
तत्र सूर्यपथेऽतिष्ठद्विमला महती सभा ॥ २
आदित्या वसवो रुद्रा अश्विनौ च मरुद्गणाः ।
तत्र श्वेतानि चक्राणि काञ्चनस्फाटिकानि च ॥३
तथा चित्राणि छत्राणि दिव्यरूपाणि भारत ।
मणिरत्नविचित्राणि नानारूपाणि भागशः ।
आकाशे सह दृश्यन्ते भानुमन्ति शुभानि च ॥ ४
अग्नेरिन्द्रस्य सोमस्य यमस्य वरुणस्य च ।
तथा धातुर्विधातुश्च मित्रस्य धनदस्य च ।
रुद्रस्य विष्णोः सवितुस्त्रिदशानां तथैव च ॥ ५
काञ्चनानि च दामानि विविधाश्चोत्तमस्रजः ।
दिव्यपुष्पाभिसंवीतास्तत्र चित्राणि भेजिरे ॥ ६
तस्मिंस्तु राजन्प्रासादे दिव्यरत्नविभूषिते ।
दिव्यगन्धसमायुक्ताः स्रजो दिव्याश्चकाशिरे ॥७
दिव्यश्च वायुः प्रववौ गन्धमादाय सर्वशः ।
ऋतवः पुष्पमादाय समतिष्ठन्त भारत ॥ ८
प्रजानां पतयः सप्त सप्त चैव महर्षयः ।
तत्र देवर्षयश्चैव देवराजं दिवौकसः ।
इन्द्रेण सहिताः सर्वे त्रिदशाश्च व्यवस्थिताः ॥ ९
न पङ्को न रजस्तत्र प्रविवेश कथंचन ।
आदित्यश्च विरूक्षोऽत्र नातिवेलमिवातपत् ॥ १०
दिव्यगन्धं समादाय वायुस्तत्राभिगच्छति ।
आकाशं च दिशः सर्वा दर्शनीयमदृश्यत ॥ ११
तत्र देवाः समारुह्य तं दिव्यं सर्वतःप्रभम् ।
अम्बरे विमलेऽतिष्ठन्प्रासादं कामगामिनम् ॥१२
तत्र राजर्षयश्चैव समारुह्य दिवौकसः ।
श्वेतो राजा वसुमनास्तथा भद्रः प्रदर्शनः ॥ १३
नृगो ययातिर्नहुषो मान्धाता भरतः कुरुः ।
अष्टकश्च शिबिश्चोभौ स च राजा पुरूरवाः ॥ १४
डम्भोद्भवः कार्तवीर्यो ह्यर्जुनः सगरस्तथा ।
दिलीपः केरलः पूरुः शर्यातिः सोमकस्तदा ॥१५
हरिश्चन्द्रश्च तेजस्वी रघुर्दशरथस्तथा ।
भगीरथश्च राजर्षिः सर्वे च जनमेजय ॥ १६
पाण्डुश्चैव महाराजश्चामरव्यजनोज्ज्वलः ।
छत्रेण ध्रियमाणेन राजसूयश्रिया वृतः ॥ १७
एते चान्ये च बहवः पुण्यशीलाः शुचिव्रताः ।
कीर्तिमन्तो महावीर्यास्तत्रैवासन्दिवि स्थिताः १८
गणाश्चाप्सरसां सर्वे गन्धर्वाश्चापि सर्वशः ।
दैत्यराक्षसयक्षाश्च सुपर्णाः पन्नगास्तथा ॥ १९
वासवप्रमुखाः सर्वे देवाश्च सगणेश्वराः ।
आसंस्तत्र समारूढाः संग्रामं तं दिदृक्षवः ॥ २०
इत्यम्बरे व्यवस्थाय प्रासादस्था दिवौकसः ।
एकस्य च बहूनां च युद्धं द्रष्टुं व्यवस्थिताः ॥ २१

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

---

## चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

सेनामध्ये दुर्योधनमनवलोकयताऽर्जुनेनोत्तरंप्रति तत्पदवीमनु रथयापनचोदना ॥ १ ॥ तथा बाणाभ्यां द्रोणाद्यभिवादनपूर्वकं ताभ्यामेव कर्णमूले कुशलप्रश्नः ॥ २ ॥ द्रोणेन तत्कौशलश्लाघनम् ॥ ३ ॥

वैशंपायन उवाच ।
तथा व्यूढेष्वनीकेषु कौरवेयैर्महारथैः ।
उपायादर्जुनस्तूर्णं रथघोषेण नादयन् ॥ १
ददृशुस्ते ध्वजाग्रं वै शुश्रुवुश्च रथस्वनम् ।
दोधूयमानस्य भृशं गाण्डीवस्य च निस्वनम् ॥ २
त्रिक्रोशमात्रं गत्वा तु पाण्डवः श्वेतवाहनः ।
सेनामुखमभिप्रेक्ष्य पार्थो वैराटिमब्रवीत् ॥ ३
राजानं नात्र पश्यामि रथानीके व्यवस्थितम् ।
दक्षिणं पक्षमादाय कुरवो यान्त्युदङ्मुखाः ॥ ४
उत्सृज्यैतद्रथानीकं महेष्वासाभिरक्षितम् ।
गवाग्रमभितो याहि यावत्पश्यामि मे रिपुम् ॥५
गवाग्रमभितो गत्वा गाश्चैवाशु निवर्तय ।
यावदेते निवर्तन्ते कुरवो जवमास्थिताः ।
तावदेव पशून्सर्वान्निवर्तिष्ये तवाभिभो ॥ ६

वैशंपायन उवाच ।
इत्युक्त्वा समरे पार्थो वैराटिमपराजितः ।
सव्यं पक्षमनुप्राप्य जवेनाश्वानचोदयत् ॥ ७
ततोऽभ्यवादयत्पार्थो भीष्मं शान्तनवं कृपम् ।
द्वाभ्यांद्वाभ्यां तथाऽऽचार्यं द्रोणं प्रथमतः क्रमात्॥
द्रोणं कृपं च भीष्मं च पृषत्कैरभ्यवादयत् ।
ततस्तत्सर्वमालोक्य द्रोणो वचनमब्रवीत् ॥ ९
महारथमनुप्राप्तं दृष्ट्वा गाण्डीवधन्विनम् ।
न कश्चिद्योद्धुमिच्छेत न च गुप्तं स्वजीवितम् ।
अयं वीरश्च शूरश्च दुर्धर्षश्चैव संयुगे ॥ १०
एतद्ध्वजाग्रं पार्थस्य दूरतः प्रतिदृश्यते ।
मेघः सविद्युत्स्तनितो रोरवीति च वानरः ॥ ११
आस्थाय च रथं याति गाण्डीवं विक्षिपन्धनुः १२
अश्वानां स्तनतां शब्दो वहतां पाकशासनिम् ।
रथस्याम्बुधरस्येव श्रूयते भृशदारुणः ॥ १३
दारयन्निव तेजस्वी वसुधां वासवात्मजः ।
एष तिष्ठन्रथिश्रेष्ठो रथे रथिशतप्रणुत् ॥ १४
एष दृष्ट्वा रथानीकमस्माकमरिमर्दनः ।
श्रीमान्वदान्यो धृतिमान्सत्करोति च पाण्डवः १५
इमौ बाणावनुप्राप्तौ पादयोः प्रत्युपस्थितौ ।
रथस्याग्रे निखातौ मे चित्रपुङ्खावजिह्मगौ ॥ १६
इमौ चाप्यपरौ बाणावभितः कर्णमूलयोः ।
संस्पृशन्तावतिक्रान्तौ पृष्ट्वेवानामयं भृशम् ॥ १७
चिरदृष्टोऽयमस्माभिर्धर्मज्ञो बान्धवप्रियः ।
अतीव ज्वलते लक्ष्म्या पाण्डुपुत्रः प्रतापवान् १८
निरुष्य च वने वासं कृत्वा कर्म सुदुष्करम् ।
अभिवादयते पार्थः पूजयन्मामरिंदमः ॥ १९
अमर्षेण हि संपूर्णो दुःखेन प्रतिबोधितः ।
अद्येमां भारतीं सेनामेको नाशयते ध्रुवम् ॥ २०

त्र्यधिकं दशमुष्य वत्सराणां
स्वजनेनाविदितस्त्रयोदशं च ।
ज्वलते रथमास्थितः किरीटी
तम इव रात्रिजमभ्युदस्य सूर्यः ॥ २१
रथी शरी चारुमाली निषङ्गी
शङ्खी पताकी कवची किरीटी ।
खड्गी च धन्वी च विराजतेऽयं
शिखीव यज्ञेषु घृतेन सिक्तः ॥ २२

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

## पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

अर्जुनेन सेनामध्ये सुयोधनानवलोकनेन तस्य गवामादानेन गमनसंभावनया रथेन गवाग्रं प्रत्यभियानम् ॥ १ ॥ भीष्मेण पार्थभावविज्ञानात्सेनया सह तमनुधावनम् ॥ २ ॥ गवान्तिकमुपगतवताऽर्जुनेन तद्रक्षिणां बाणगणैरभिहननेन गवां विनिवर्तनम् ॥ ३ ॥

वैशंपायन उवाच ।
तमदूरमुपायान्तं दृष्ट्वा पाण्डवमर्जुनम् ।
नारयः प्रेक्षितुं शेकुस्तपन्तं हि यथा रविम् ॥ १
स तं दृष्ट्वा रथानीकं पार्थः सारथिमब्रवीत् ।
इषुपातमात्रे सेनायाः स्थापयाश्वानरिंदम ।
यावत्समीक्षे व्यूहेऽस्मिन्मम शत्रुं सुयोधनम् ॥ २
रक्तवैडूर्यविकृतं मणिप्रवरभूषितम् ।
परं जानाम्यहं तस्य ध्वजं दूरात्समुच्छ्रितम् ॥ ३
यद्येनमिह पश्यामि दुर्बुद्धिमतिमानिनम् ।
यमाय प्रेषयिष्यामि सहायः स्याद्यदीश्वरः ॥ ४
सर्वानन्याननादृत्य दृष्ट्वा तमतिमानिनम् ।
सिंहः क्षुद्रमृगस्येव पतिष्ये तस्य मूर्धनि ॥ ५
हनिष्यामि तमेवाद्य शरैर्गाण्डीवनिःसृतैः ।
तस्मिन्हते भविष्यन्ति सर्वे एव पराजिताः ॥ ६
शरैश्च शमयिष्येऽहं धार्तराष्ट्रं ससौबलम् ।
असभ्यानां च वक्तारं कुरूणां किल किल्बिषम् ॥७
राजानं नेह पश्यामि निरामिषमिदं बलम् ।
अभिद्रवे ह राजानं व्यक्तमित्यत्र निर्भयः ॥ ८

आस्थितो मध्यमाचार्योऽप्यश्वत्थामाऽप्यनन्तरम् ।
कृपकर्णौ पुरस्तात्तु महेष्वासौ व्यवस्थितौ ॥ ९
भूरिश्रवाः सोमदत्तो बाह्लीकश्च जयद्रथः ।
दक्षिणं पक्षमाश्रित्य स्थिता युद्धविशारदाः ॥१०
साल्वराजो द्युमत्सेनो वृषसेनश्च सौबलः ।
दशार्णश्चैव कालिङ्गो वामं पक्षं समाश्रितः ॥ ११
पृष्ठतः कुरुमुख्यश्च भीष्मस्तिष्ठति दंशितः ।
सोऽर्धसैन्येन बलवान्सर्वेषां नः पितामहः ॥१२
दुर्योधनं न पश्यामि क्व नु राजा स तिष्ठति ।
उत्सृज्यैतद्रथानीकं याहि यत्र सुयोधनः ॥ १३
तं हत्वा संनिवर्तिष्ये गाः स आदाय गच्छति ।
गवाग्रमभितो याहि यत्र राजा भविष्यति ॥ १४
वैशंपायन उवाच ।
इत्युक्त्वा समरे पार्थो वैराटिमपराजितः ।
संस्पृशानो धनुर्दिव्यं त्वरमाणोऽगमत्तदा ॥ १५
ततो भीष्मोऽब्रवीद्वाक्यं कुरुमध्ये परंतपः ।
चिरदृष्टोऽयमस्माभिर्धर्मज्ञो बान्धवप्रियः ॥ १६
अतीव ज्वलते लक्ष्म्या पाकशासनिरागतः ।
एष दुर्योधनं पार्थो मार्गते निकृतिं स्मरन् ॥ १७
सेनामत्यर्थमालोक्य त्वरते ग्रहणेऽस्य च ।
मृगं सिंह इवादातुमीक्षते पाकशासनिः ॥ १८
नैषोऽन्तरेण राजानं बीभत्सुः स्थातुमर्हति ।
तस्य पार्ष्णिं ग्रहीष्यामो जवेनाभिप्रधावतः ॥१९
न ह्येनमभिसंक्रुद्धमेको युद्ध्येत संयुगे ।
अन्यो देवान्महादेवात्कृष्णाद्वा देवकीसुतात् ।
आचार्याच्च सपुत्राद्वा भारद्वाजान्महारथात् ॥२०
किं नो गावः करिष्यन्ति द्रव्यं वा विपुलं तथा ।
दुर्योधनः पार्थगतः पुरा प्राणान्विमुञ्चति ॥ २१
वैशंपायन उवाच ।
इत्युक्त्वा समरे भीष्मः सेनया सह कौरवः ।
अन्वधावत्तदा पार्थं धार्तराष्ट्रस्य रक्षणे ॥ २२
विक्रोशमात्रं यात्वा तु पार्थो वैराटिमब्रवीत् ।
इषुपातमात्रे सेनायाः स्थापयाश्वानरिंदम ॥ २३
एतदग्रं गवां दृष्टं मन्दं वाहय सारथे ।
याह्युत्तरेण सेनाया गाश्चैव प्रविभज्य च ॥ २४
परिक्षिप्य गवां यूथमत्र योत्स्ये सुयोधनम् ।
गच्छन्ति सत्वरा गावः सगोपाः परिमोचय ॥२५
तत्र गत्वा पशून्वीर सगोपान्परिमोचय ।
अन्तरेण च सेनायाः प्राङ्मुखो गच्छ चोत्तर ॥२६
इमे त्वतिरथाः सर्वे मम वीर्यपराक्रमम् ।
पश्यन्तु कुरवो युद्धे महेन्द्रस्येव दानवाः ॥ २७
वैशंपायन उवाच ।
ततः स रथिनां श्रेष्ठो नाम विश्राव्य चात्मनः ।
निशिताग्राञ्शरांस्तीक्ष्णान्मुमोचांतकसन्निभान् ॥
शलभैरिव चाकाशं धाराभिरिव पर्वतम् ।
निरावकाशमभवच्छरैः क्षिप्तैः किरीटिना ॥ २९
विकीर्यमाणास्तु शरैस्ते योधा धार्तराष्ट्रिकाः ।
गाश्चैव न च पश्यन्ति पार्थमुक्तैरजिह्मगैः ॥ ३०
सा चापि बहुला सेना पार्थबाणाभिपीडिता ।
नापश्यद्विवृतां भूमिं नान्तरिक्षं दिशोपि वा ॥ ३१
अर्जुनस्तु तदा हृष्टो दर्शयन्वीर्यमात्मनः ।
पीडयामास सैन्यानि गाण्डीवप्रसृतैः शरैः ॥३२
तेषां नैवापयाने च नाभियाने भवन्मतिः ।
शीघ्रतामेव पार्थस्य पूजयन्तस्तु विस्मिताः ॥ ३३
चन्द्रावदातं सामुद्रं कुरुसैन्यभयंकरम् ।
ततः शङ्खमुपाध्मासीद्द्विषतां रोमहर्षणम् ।
ज्याघोषं तलघोषं च कृत्वा भूतान्यमोहयत् ॥ ३४
तस्य शङ्खस्य शब्देन धनुषो निस्वनेन च ।
शब्देनामानुषाणां च भूतानां ध्वजवासिनाम् ।
वियद्गतानां देवानां मानुषाणां रवेण च ॥ ३५
ऊर्ध्वं पुच्छं विधून्वाना हेषमाणाः समन्ततः ।
गावः सवत्साः संत्रस्ता निवृत्ता दक्षिणां दिशं ३६
ततः स समरे शूरो बीभत्सुः शत्रुपूगहा ।
गोपालांश्चोदयामास गावश्चोदयतेति च ॥ ३७
उत्तरं चाह बीभत्सुर्हर्षयन्पाण्डुनन्दनः ।
गवामग्रं समीक्षस्व गाश्चैवाशु निवर्तय ॥ ३८
यावदेते निवर्तन्ते कुरवो जवमास्थिताः ।
याह्युत्तरेण गाश्चैताः सैन्यानां च नृपात्मज ॥ ३९

पश्यन्तु कुरवः सर्वे मम वीर्यपराक्रमम् ॥ ४०
वैशंपायन उवाच ।
ते लाभमिव मन्वानाः कुरवोऽर्जुनमाहवे ।
दृष्ट्वा यान्तमदूरस्थं क्षिप्रमभ्यपतन्रथैः ॥ ४१
हस्त्यश्वपरिवारेण महताऽभिविराजता ।
योधैः प्रासासिहस्तैश्च चापबाणोद्यतायुधैः ॥ ४२
तान्यनीकान्यशोभन्त कुरूणामाततायिनाम् ।
संसर्पन्त इवाकाशे विद्युत्वन्तो वलाहकाः ॥ ४३
तानि दृष्ट्वाऽप्यनीकानि निवर्तितरथानि च ।
पार्थोऽपि वायुवद्घोरं सैन्याग्रं व्यधुनोच्छरैः ॥ ४४
तां शत्रुसेनां तरसा प्रणुद्य
गाश्चापि जित्वा धनुषा परेण ।
दुर्योधनायाभिमुखं प्रयान्तं
कुरुप्रवीराः सहसाऽभ्यगच्छन् ॥ ४५
गोषु प्रयातासु जवेन मात्स्या-
न्किरीटिनं प्रीतियुतं च दृष्ट्वा ।
पशून्समादाय ततो निवृत्ता
गोपाः समस्ताः प्रययुश्च राष्ट्रम् ॥ ४६

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

## षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

अर्जुनेनोत्तरंप्रति द्रोणकर्णादिरथानामसाधारणध्वजचिह्नप्रदर्शनपूर्वकं तत्तन्नामनिर्देशेन तत्तत्पराक्रमवर्णनम् ॥ १ ॥

वैशंपायन उवाच ।
ततस्त्रीणि सहस्राणि रथानां च धनुष्मताम् ।
घोराणि कुरुवीराणां पर्यकीर्यन्त भारत ॥ १
कर्णो रथसहस्रेण प्रत्यगृह्णाद्धनञ्जयम् ।
भीष्मः शान्तनवो धीमान्सहस्रेण पुरस्कृतः ॥ २
तथा रथसहस्रेण भ्रातृभिः परिवारितः ।
पश्चाद्दुर्योधनोऽतिष्ठद्यशसा च श्रिया ज्वलन् ॥ ३
अतिष्ठन्नवकाशेषु पादाताः सह वाजिभिः ।
भीमरूपाश्च मातङ्गास्तोमराङ्कुशचोदिताः ॥ ४
तानि दृष्ट्वा ह्यनीकानि विततानि महात्मनाम् ।
वैराटिमुत्तरं तं तु प्रत्यभाषत पाण्डवः ॥ ५
जाम्बूनदमयी वेदी ध्वजाग्रे यस्य दृश्यते ।
शोणाश्वाश्वा रथे युक्ता द्रोण एष प्रकाशते ॥ ६
आचार्यो निपुणो धीमान्ब्रह्मविच्छूरसत्तमः ।
आहवे चाप्रतिद्वन्द्वो दूरपाती महारथः ॥ ७
सुप्रसन्नो महावीरः कुरुष्वैनं प्रदक्षिणम् ।
अत्रैव चाविरोधेन एष धर्मः सनातनः ॥ ८
यदि मे प्रहरेद्द्रोणः शरीरे मे प्रहृष्यतः ।
ततोऽस्मिन्प्रहरिष्यामि नान्यथा बुद्धिरस्ति मे ॥ ९
भारताचार्यमुख्येन ब्राह्मणेन महात्मना ।
तेन मे युध्यमानस्य मन्दं वाहय सारथे ॥ १०
ध्वजाग्रे सिंहलाङ्गूलो दिक्षु सर्वासु शोभते ।
भारताचार्यपुत्रस्तु सोऽश्वत्थामा विराजते ॥ ११
ध्वजाग्रं दृश्यते यत्र बालसूर्यसमप्रभम् ।
दुर्जयः सर्वसैन्यानां देवैरपि सवासवैः ।
तेन मे युध्यमानस्य मन्दं वाहय सारथे ॥ १२
ध्वजाग्रे गोवृषो यस्य काञ्चनोऽभिविराजते ।
आचार्यवरमुख्यस्तु कृप एष महारथः ॥ १३
द्रोणेन च समो वीर्ये पितुर्मे परमः सखा ।
तेन मे युध्यमानस्य मन्दं वाहय सारथे ॥ १४
यस्य काञ्चनकम्बूभिर्हस्तिकक्ष्यापरिष्कृतः ।
ध्वजः प्रकाशते दूराद्रथे विद्युद्गणोपमः ॥ १५
एष वैकर्तनः कर्णः प्रतिमानं धनुष्मताम् ।
दृढवैरी सदाऽस्माकं नित्यं कटुकभाषणः ॥ १६
यस्याश्रयबलादेव धार्तराष्ट्रः ससौबलः ।
अस्मान्निरस्य राज्याच्च पुनरद्यापि योत्स्यति ॥ १७
एष वै स्पर्धते नित्यं मया सह सुदुर्जयः ।
जामदग्न्यस्य रामस्य शिष्यो ह्येष महारथः ॥ १८
सर्वास्त्रकुशलः कर्णः सर्वशस्त्रभृतांवरः ।
युद्धेऽप्रतिमवीर्यश्च दृढवेधी पराक्रमी ॥ १९

शरीरे प्रहरिष्यतः इति नान्यथा युद्धमस्ति मे-इति च. ध. पाठः ॥ ९ ॥ षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

अद्याहं युद्धमेतेन करिष्ये सूतबन्धुना ।
द्रष्टा त्वमावयोर्युद्धं बलिवासवयोरिव ॥ २०
महारथेन शूरेण सूतपुत्रेण धन्विना ।
तेन मे युध्यमानस्य शीघ्रं वाहय सारथे ॥ २१
यस्य चैव रथोपस्थे नागो मणिमयो ध्वजः ।
एष दुर्योधनस्तत्र कौरवो यशसा वृतः ॥ २२
लब्धलक्षो दृढं वेधी लघुहस्तः प्रतापवान् ।
तेन मे युध्यमानस्य शीघ्रं वाहय सारथे ॥ २३
यस्तु श्वेतावदातेन पञ्चतालेन केतुना ।
वैडूर्यमयदण्डेन तालवृक्षेण राजते ॥ २४
हस्तावापी बृहद्धन्वा सेनां तिष्ठति हर्षयन् ।
रामेण जामदग्न्येन द्वैरथेनाजितः पुरा ॥ २५
शीघ्रश्च लघुवेधी च लघुहस्तः प्रतापवान् ।
एष शान्तनवो भीष्मः सर्वेषां नः पितामहः ॥ २६
ककुदः सर्वसैन्यानां सर्वशस्त्रभृतांवरः ।
जयश्रियाऽवबद्धस्तु सुयोधनवशानुगः ।
पश्चादेष प्रयातव्यो न मे विघ्नकरो भवेत् ॥ २७
इत्येतांस्त्वरितः पार्थः कथयित्वा तु चोत्तरे ।
रूपतश्चिह्नतश्चैव युद्धाय त्वरते पुनः ॥ २८

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

## सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

अर्जुनस्य भीष्मद्रोणादिभिः सह युद्धम् ॥ १ ॥ अर्जुनेन कर्णस्य पराभवः ॥ २ ॥

वैशंपायन उवाच ।
अश्वत्थामा ततस्तत्र कर्णं संप्रेक्ष्य वीर्यवान् ।
उवाच स्मयमानोऽसौ सूतपुत्रमरिन्दमम् ॥ १
कर्ण यस्त्वं सभामध्ये बहबद्धं विकत्थसे ।
न मे युधि समोऽस्तीति तदिदं मत्युपस्थितम् ॥ २
एषोऽन्तक इव क्रुद्धः सर्वभूतावमर्दनः ।
संग्रामशिरसो मध्ये जृम्भते केसरी यथा ॥ ३
शूरोसि यदि संग्रामे दर्शयस्व सभां विना ॥ ४
यद्यशक्तोसि संग्रामे पार्थेनाद्भुतकर्मणा ।
पुनरेव सभां गत्वा धार्तराष्ट्रेण धीमता ।
मातुलं परिगृह्याशु मन्त्रयस्व यथासुखम् ॥ ५
वैशंपायन उवाच ।
एवमुक्तस्तथा कर्णः क्रोधादुद्धृत्य लोचने ।
द्रोणपुत्रमिदं वाक्यमुवाच कुरुसन्निधौ ॥ ६
नाहं बिभेमि बीभत्सोर्न कृष्णाद्देवकीसुतात् ।
पाण्डवेभ्योपि सर्वेभ्यः क्षत्रधर्ममनुव्रतः ॥ ७
सत्वाधिकानां पुंसां तु धनुर्वेदोपजीविनाम् ।
गर्जतां जायते दर्पः स्वरश्च न विषीदति ॥ ८
पश्यत्वाचार्यपुत्रो मामर्जुनेनातिरंहसा ।
युध्यमानं सुसंयुक्तं जयो वै मय्यवस्थितः ॥ ९
वैशंपायन उवाच ।
ततः प्रहस्य बीभत्सुः कौन्तेयः श्वेतवाहनः ।
दिव्यमस्त्रं विकुर्वाणः प्रत्ययाद्रथिसत्तमः ॥ १०
महात्मानं मन्दबुद्धिर्निश्वसन्धृतराष्ट्रजः ।
उवाच स महाराज राजा दुर्योधनस्तदा ॥ ११
न विद्मो ह्यर्जुनं तत्र वसन्तं मत्स्यवेश्मनि ।
तेनेदं कर्ण मत्स्यानामग्रहीष्म धनं बहु ॥ १२
एवं चेत्तर्हि गच्छामो विसृजन्तो धनं बहु ।
अयशो नातिवर्तेत लोकयोरुभयोरपि ॥ १३
किं च युद्धात्परं नास्ति क्षत्रियाणां सुखावहम् ।
तस्मात्पार्थेन संग्रामं कुर्महे न पलायनम् ॥ १४
एतावदुक्त्वा राजा वै ह्यभियानमियेष सः ।
तथा दशसहस्राणि वीराणां हि धनुष्मताम् ।
अभ्यद्रवंस्तदा पार्थं शलभा इव पावकम् ॥ १५
वर्मिता वाजिनस्तत्र संभृताश्च पदातिभिः ।
भीमरूपाश्च मातङ्गास्तोमराङ्कुशपाणिभिः ॥ १६
अधिष्ठिताः सुसंयत्तैर्हस्तिशिक्षाविशारदैः ।
अभ्यद्रवन्सुसंक्रुद्धाश्चापहस्तोद्यतायुधाः ॥ १७
पञ्च चैनं रथोदग्रास्त्वरिताः पर्यवारयन् ।
द्रोणो भीष्मश्च कर्णश्च कुरुराजश्च वीर्यवान् ॥ १८

अश्वत्थामा महाबाहुर्धनुर्वेदपरायणः ।
इषूंश्च सम्यगस्यन्तो जीमूता इव वार्षिकाः ॥१९
ते लाभमिव मन्वानाः प्रत्यगृह्णन्धनंजयम् ।
शरौघानभिवर्षन्तो नादयन्तो दिशो दश ॥ २०
ततः प्रहस्य बीभत्सुः कौन्तेयः श्वेतवाहनः ।
दिव्यमस्त्रं प्रकुर्वाणः प्रत्ययाद्रथिसत्तमान् ॥ २१
यथा रश्मिभिरादित्यः प्रच्छादयति मेदिनीम् ।
तथा गाण्डीवनिर्मुक्तैः शरैराच्छादयद्दिशः ॥२२
न रथानां न चाश्वानां न ध्वजानां न वर्मिणाम् ।
अतिविद्धैः शितैर्बाणैरासीद्व्यङ्गुलिरन्तरम् ॥ २३
दैवयोगाद्धि पार्थस्य हयानामुत्तरस्य च ।
शिक्षाबलोपपन्नत्वादस्त्राणां वै परिक्रमात् ।
ध्वजगाण्डीवयोश्चापि दैव्या शक्त्या च मायया ॥
इतस्ततश्च संयाने दूरे वाऽप्यथवाऽन्तिके ।
दुर्गे विषमजाते वा स्थले निम्ने तथा क्षितौ ।
न च रुध्येद्गतिस्तस्य रथस्य मनसो यथा ॥ २५
समरेषु तु विद्वांसस्तस्य तांस्तान्परिक्रमान् ।
वीर्यमत्यद्भुतं दृष्ट्वा तथा पार्थस्य तद्बलम् ।
त्रेसुरेवं परे भीताः पराङ्मुखरथा अपि ॥ २६
कालाग्निमिव बीभत्सुं निर्दहन्तमिव प्रजाः ।
नारयः प्रेक्षितुं शेकुर्ज्वलन्तमिव पावकम् ॥ २७
तानि भिन्नान्यनीकानि रेजुरर्जुनमार्गणैः ।
तिग्मांशोश्च घनाभ्राणि व्याप्तानीव गभस्तिभिः॥
अशोकानां वनानीव सञ्चितैः कुसुमैः शुभैः ।
पार्थः संरञ्जयामास रुधिरेणाकुलं बलम् ॥ २९
सहस्रशोऽर्जुनशरैश्छिन्नान्युच्चावचानि च ।
छत्राणि च पताकाश्च खेऽभ्युवाह सदागतिः ३०
ये ह्यर्जुनबलत्रस्ताः परिपेतुर्दिशो दश ।
रथात्तं देशमुत्सृज्य पार्थच्छिन्नयुगा हयाः॥ ३१
निकृत्तपूर्वचरणास्ते निपेतुः शितैः शरैः ।
शिरोभिः प्रथमं जग्मुर्मेदिनीं जघनैर्हयाः ॥ ३२
चक्षुर्नासाविषाणेषु दन्तवेष्टेषु च द्विपान् ।
मर्मस्वन्येषु चाहत्य तथा निघ्नन्गजोत्तमाः ॥३३
कौरवाणां गजानां च शरीरैर्गतचेतसाम् ।
क्षणेन संवृता भूमिर्मेघैरिव नभस्थलम् ॥ ३४
अस्त्रैर्दिव्यैर्महाबाहुरर्जुनः प्रहसन्निव ।
बडवामुखसंभूतः कालाग्निरिव संवृतः ॥ ३५
यथा युगान्तसमये सर्वं स्थावरजङ्गमम् ।
कालपक्वमशेषेण धक्ष्येदुग्रशिखः शिखी ॥ ३६
तद्वत्पार्थोऽस्त्रतेजोभिर्धनुषो निस्वनेन च ।
दैवाद्वीर्याच्च बीभत्सुस्तस्मिन्दौर्योधने बले ॥ ३७
रणे शक्तिममित्राणां प्रणीयोपनिनाय सः ।
चेष्टां प्रायेण भूतानां रात्रिः प्राणभृतामिव ॥३८
सोऽतीयात्सहसा शत्रून्सहसा तेऽभिपेदिरे ।
शीघ्रादूरं दृढामोघमस्त्रमस्यातिमानुषम् ।
दृष्ट्वा ते कौरवा भीता अतिमानुषविक्रमम् ॥३९
खगपत्राभिसंवीतैः खाविष्टैः खगमैरिव ।
अर्जुनस्य खमावव्रे लोहितप्राणपैः खगैः ॥ ४०
अर्जुनेन विनिर्मुक्ताः शरा गाण्डीवधन्वना ।
तार्क्ष्यवेगा इवाकाशे ससञ्जुः परमर्मसु ॥ ४१
वर्माणि सारथिश्चैव हेमजालानि वाजिनाम् ।
किरीटं सूर्यसंकाशं वैयाघ्रमथ चर्म च ॥ ४२
ततः सर्वाणि गात्राणि रथस्य द्विषतां शरैः ।
नीहारेणेव भूतानि छन्नानीह चकाशिरे ॥ ४३
सकृदेव न तं शेकुः कथमभ्यसितुं परे ।
अनभ्यस्तः पुनस्तैर्हि रथः सोभिपपात तान् ४४
तच्छरा द्विट्शरीरेषु यथा च न ससञ्जिरे ।
द्विधाऽनीकेषु बीभत्सोर्न ससञ्ज रथस्तथा ॥४५
स तद्धि क्षोभयामास विगाह्याखिलं रथी ।
अनन्तवेगो भुजगः क्रीडन्निव महार्णवे ॥ ४६
अस्यतो नित्यमत्यर्थं सर्वघोषाधिकस्तथा ।
संनादः श्रूयते भूतैर्धनुषश्च किरीटिनः ॥ ४७
संच्छिन्नास्तत्र मातङ्गा बाणैरल्पान्तरान्तरैः ।
संस्यूतास्तत्र दृश्यन्ते मेघा इव गभस्तिभिः ॥४८
दिशोऽनुभ्रमतः सर्वा सव्यदक्षिणमस्यतः ।
सततं दृश्यते युद्धे सायकासनमण्डलम् ॥ ४९
पतन्त्यरूपेषु यथा चक्षूंषि न कदाचन ।
नालक्ष्येषु शराः पेतुस्तस्य गाण्डीवधन्वनः ॥५०

महागजसहस्रस्य युगपन्मृद्नतो वनम् ।
कौन्तेयरथमार्गस्तु रणे घोरतरोऽभवत् ॥ ५१
नूनं पार्थजयैषित्वाच्छक्रः सर्वामरैः सह ।
हन्त्यस्मानिति मन्यन्ते पार्थेनैवार्दिताः परे ॥५२
घ्नन्तमत्यर्थमहितान्सव्यसाचिनमाहवे ।
कालमर्जुनरूपेण ग्रसन्तमिव च प्रजाः ॥ ५३
कुरुसेनाशरीराणि पार्थेनानाहतान्यपि ।
पेतुः पार्थहतानीव पार्थकर्मानुदर्शनात् ॥ ५४
ओषधीनां शिरांसीव कालपक्तिसमन्वयात् ।
अवनेमुः कुरूणां हि शिरांस्यर्जुनजाद्भयात् ॥५५
चकार चार्जुनः क्रोधाद्विमुखान्रुषितानपि ॥५६
अर्जुनेनापि भिन्नानि बलाग्राणि पुनः क्वचित् ।
चक्रुर्लोहितधाराभिर्धरणीं लोहितोत्तराम् ॥ ५७
लोहितेनापि संपृक्तैः पांसुभिः पवनोद्धतैः ।
तेनैव च समुद्धूतैः सूक्ष्मैर्लोहितबिन्दुभिः ॥ ५८
लोहितार्द्रैः प्रहरणैः प्रभग्ना लोहितोक्षिताः ।
लोहितेषु निमग्नास्ते निहताश्च किरीटिना ॥ ५९
बभूवुर्लोहितास्तत्र भृशमादित्यरश्मयः ।
आकाशं तत्क्षणेनासीत्सन्ध्याभ्रमिव लोहितं ६०
अप्यस्तं प्राप्य चादित्यो निवर्तेत न पाण्डवः ।
निवर्तन्ते न जित्वारिं नित्यजल्पविचक्षणाः ॥६१
तान्सर्वान्समरे शूरान्पौरुषे पर्यवस्थितान् ।
दिव्यैरस्त्रैरमोघात्मा सर्वानार्च्छद्धनुर्धरान् ॥ ६२
स तु द्रोणं त्रिसप्तत्या नाराचानां समार्पयत् ।
अशीत्या शकुनिं चैव द्रौणिमप्याशु सप्तभिः ६३
दुःसहं दशभिर्बाणैरर्जुनः समविध्यत ।
दुश्शासनं द्वादशभिः कृपं शारद्वतं त्रिभिः ।
भीष्मं शान्तनवं षष्ठ्या प्रत्यविध्यत्स्तनान्तरे ६४
स कर्णं कर्णिनाऽविध्यत्पीतेन निशितेन च ।
वासविर्द्विषतां मध्ये विव्याध परमेषुणा ॥ ६५
स कर्णं सतनुत्राणं निर्भिद्य निशितः शरः ।
अगच्छद्दारयन्भूमिं चोदितो दृढधन्वना ॥ ६६
ततोऽस्य वाहान्व्यहनच्चतुर्भिश्चतुरः क्षुरैः ।
सारथेश्च शिरः कायादपाहरदरिन्दमः ।
अर्धचन्द्रेण चिच्छेद चापं तस्य करे स्थितम् ॥६७
तस्मिन्विद्धे महाभागे कर्णे सर्वास्त्रपारगे ।
हताश्वसूते विरथे ततोऽनीकमभज्यत ॥ ६८

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

---

## अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

अर्जुनेन रणे विकर्णादिपराभवनपूर्वकं कर्णानुजहननम् ॥ १ ॥ अर्जुनपराजितेन कर्णेन रणाङ्कणादपयानम् ॥ २ ॥

वैशंपायन उवाच ।
तत्प्रभग्नं बलं सर्वं विपुलौघस्वनं तथा ।
भीष्ममासाद्य संतस्थौ वेलामिव महोदधिः ॥ १
तानि सर्वाणि गाङ्गेयः समाश्वास्य परंतपः ।
ततो व्यूह्य महाबाहुः समरेष्वपराजितः ॥ २
रथनागाश्वकलिलं युयुजे युद्धकोविदः ।
अभेद्यं परसैन्यानां शूरैरपि समीक्षितम् ॥ ३
आचार्यदुर्योधनसूतपुत्रैः
कृपेण भीष्मेण च पालितानि ।
अवध्यकल्पानि दुरासदानि
रथाश्वमातङ्गसमाकुलानि च ॥ ४
तेषामनीकानि किरीटमाली
व्यूढानि दृष्ट्वा विपुलध्वजानि ।
गाण्डीवधन्वा द्विषतां निहन्ता
वैराटिमामन्त्र्य ततोऽभ्युवाच ॥ ५
सुसंगृहीतैरथ रश्मिभिस्त्वं
हयान्नियम्य प्रसमीक्ष्य यत्तः ।
संप्रेषयाशु प्रतिवीरमेनं
वैकर्तनं योधयितुं वृणोमि ॥ ६
यां हस्तिकक्ष्यां बहुधा विचित्रां
स्तम्भे रथे पश्यसि दर्शनीयाम् ।

विवर्तमानां ज्वलनप्रकाशां
वैकर्तनस्यैतदनीकमग्र्यम् ॥ ७

एतेन शीघ्रं प्रतिपादयेमान्
श्वेतान्हयान्काञ्चनजालकक्ष्यान् ।
सर्वं जवं तत्र विदर्शयिष्ये
ह्यासादयैतद्रथवीरवृन्दम् ॥ ८

गजो गजेनेव हि योद्धुकामो
मया सदा काङ्क्षति सूतपुत्रः ।
तमेव मां प्रापय सूतपुत्रं
दुर्योधनोपाश्रयजातदर्पम् ।
तं पातयिष्यामि रथस्य मध्ये
सहस्रनेत्रोऽशनिनेव वृत्रम् ॥ ९

वैशंपायन उवाच

स तैर्हयैर्जातजवैर्बृहद्भिः
पुत्रो विराटस्य हिरण्यकक्ष्यैः ।
विध्वंसयंस्तद्रथिनामनीकं
ततोऽवहत्पाण्डवमाजिमध्ये ॥ १०

तमापतन्तं परमेण तेजसा
समीक्ष्य वैकर्तनमभ्यरक्षन् ।
अभ्यद्रवंस्ते रथवीरवृन्दा
व्याघ्रेण चाक्रान्तमिवर्षभं रणे ॥ ११

चित्राङ्गदश्चित्ररथश्च वीरः
संग्रामजिद्दुःसहचित्रसेनौ ।
विविंशतिर्दुर्मुखदुर्जयौ च
विकर्णदुःशासनसौबलाश्च ।
शोणो निषेधश्च तमन्वयुस्ते
वैकर्तनं शीघ्रतरं युवानः ॥ १२

पुत्रा ययुस्ते सहसोदराश्च
वैकर्तनं पार्थगतं समीक्ष्य ।
प्रगृह्य चापानि महाबला रणे
धनंजयं पर्यकिरञ्शरार्चिभिः ॥ १३

तेषां धनुर्ज्याकृतनैकतन्त्रीं
प्रासोपवीणां शरसङ्घकोणाम् ।
कराग्रयन्त्रां स्थिरचापदण्डां
वीणामुपावादयदाशु पार्थः ॥ १४

तस्मिंस्तु युद्धे तुमुले प्रवृत्ते
पार्थं विकर्णोऽतिरथं रथेन ।
विपाठवर्षेण कुरुप्रवीरो
भीमेन भीमानुजमाससाद ॥ १५

ततो विकर्णस्य धनुर्विकृत्य
जाम्बूनदेनोपहितं दृढज्यम् ।
न्यपातयत्तद्ध्वजमस्य विद्ध्वा
छिन्नध्वजः सोऽप्यपयाज्जवेन ॥ १६

तं शात्रवाणां गणबाधितारं
कर्माणि कुर्वाणममानुषाणि ।
शत्रुंतपो वैरममृष्यमाणः
समार्पयत्कूर्मनखेन पार्थम् ॥ १७

स तेन राज्ञाऽतिरथेन विद्धो
विगाहमानो ध्वजिनीं परेषाम् ।
शत्रुंतपं पञ्चभिराशु विद्ध्वा
ततोऽस्य सूतं दशभिर्जघान ॥ १८

ततः स विद्धो भरतर्षभेण
बाणेन कायावरणातिगेन ।
गतासुराजौ निपपात राज-
न्नगो नगाग्रादिव वातरुग्णः ॥ १९

रथर्षभास्ते तु रथर्षभेण
वीरा रणे वीरतरेण भग्नाः ।
चकम्पिरे वातवशेन काले
प्रकम्पितानीव महावनानि ॥ २०

हताश्च पार्थेन नरप्रवीरा
भूमौ युवानः सुषुपुः सुवेषाः ।
वसुप्रदा वासवतुल्यवीर्याः
पराजिता वासवजेन सङ्ख्ये ।
सुवर्णकार्ष्णायसवर्मनद्धा
नागा यथा हैमवते प्रवृद्धाः ॥ २१

तथा स शत्रून्समरे विनिघ्नन्
गाण्डीवधन्वा पुरुषप्रवीरः ।
चचार सङ्ख्ये विदिशो दिशश्च
दहन्निवाग्निर्वनमातपान्ते ॥ २२

सुजीर्णपर्णानि यथा वसन्ते
विशातयित्वा तु रजो नुदन्खे ।
तथा सपत्नान्विकिरन्किरीटी
चचार सङ्ख्येऽतिरथो रथेन ॥ २३

शोणाश्ववाहस्य हयान्निहत्य
वैकर्तनभ्रातुरदीनसत्वः ।
एकेन संग्राममजितः शरेण
शिरो जहाराथ किरीटमाली ॥ २४

तस्मिन्हते भ्रातरि सूतपुत्रो
वैकर्तनो वीर्यमदप्रतापी ।
प्रगृह्य दन्ताविव नागराजो
महाबलः सिंहमिवाजगाम ॥ २५

स पाण्डवं द्वादशभिः पृषत्कै-
र्वैकर्तनः पार्थमुपाजघान ।
विव्याध गात्रेषु हयांश्च सर्वा-
न्विराटपुत्रं च शरैर्विजघ्ने ॥ २६

तमापतन्तं समरे किरीटी
वैकर्तनं सर्वसमृद्धतेजाः ।
प्रच्छादयामास महाधनुष्मा-
न्व्यपेधयच्छत्रुगणांश्च वीरः ॥ २७

निहत्य कर्णस्य ततः किरीटी
पुरश्चरांश्चापि च पृष्ठगोपान् ।
समीपमभ्यागमदप्रमेयो
वितत्य पक्षौ गरुडो यथोरगम् ॥ २८

तावुत्तमौ सर्वधनुर्धराणां
महाबलौ सर्वसपत्नसाहौ ।
कर्णं च पार्थं च निशम्य युद्धे
दिदृक्षमाणाः कुरवोऽवतस्थुः ॥ २९

तं पाण्डवः स्पष्टमुदीर्णकोपं
कृतागसं कर्णमुदीक्ष्य कोपात् ।
क्षणेन साश्वं सरथं ससूत-
मन्तर्दधे मेघ इवातिवृष्ट्या ॥ ३०

ततः सयुग्याः सरथाः सनागा
योधा विनेदुर्भरतर्षभाणाम् ।
अन्तर्हितं भीष्ममुखाः समीक्ष्य
किरीटिना कर्णरथं पृषत्कैः ॥ ३१

स चापि तानर्जुनबाहुमुक्ता-
ञ्शराञ्शरौघैः प्रतिहत्य तूर्णम् ।
बभौ महात्मा सधनुः सबाणः
सविष्फुलिङ्गोऽग्निरिवाथ कर्णः ॥ ३२

ततस्तु जज्ञे करतालघोषः
सशङ्खभेरीपणवाकुलस्तु ।
प्रक्ष्वेलितास्फोटितसिंहनादै-
र्वैकर्तनं पूजयतां कुरूणाम् ॥ ३३

आधूतलाङ्गूलमहापताकं
रथोत्तमं श्रेष्ठतमं कुरूणाम् ।
ततः सगाण्डीवकृतप्रणादं
किरीटिनं प्रेक्ष्य ननाद कर्णः ॥ ३४

पार्थोपि वैकर्तनमर्दयित्वा
साश्वं सकेतुं सरथं ससूतम् ।
ननाद हर्षात्सहसा किरीटी
पितामहं द्रोणकृपौ च दृष्ट्वा ॥ ३५

सिषेच पार्थं बहुभिः शरौघै-
र्वैकर्तनः संयति तीक्ष्णवेगैः ।
वैकर्तनश्चापि किरीटमाली
प्रच्छादयामास शितैः शरौघैः ॥ ३६

तयोरमोघान्सृजतोः शरौघा-
नस्त्रज्ञयोरास महान्विमर्दः ।
राहुप्रमुक्ताविव चन्द्रसूर्यौ
क्षणान्तरेणानुददर्श लोकः ॥ ३७

हतास्तु पार्थेन रथप्रवीरा
भूमौ युवानः सुषुपुः सुकेशाः ।
सुवर्णलोहायसवर्मगात्रा
वृक्षा यथा हैमवते निकृत्ताः ॥ ३८

अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

वायुर्यथा खे आकाशे रजो नुदन् चरति तथेत्यध्याहारेण योजना ॥ २३ ॥ कर्णमुदीक्ष्य हर्षादिति ध. पाठः ॥ ३० ॥

तथा स शत्रून्समरे विनिघ्न-
न्गाण्डीवधन्वा व्यधमत्सपत्नान् ।
चचार सङ्ख्ये विदिशो दिशश्च
दहन्निवाग्निर्वनमातपान्ते ॥ ३९

सुशीर्णपर्णानि यथा वसन्ते
विधूनयन्वायुरिवाल्पसारान् ।
तथा सपत्नान्विधमन्किरीटी
चचार सङ्ख्येऽतिरथो रथेन ॥ ४०

शत्रूनिवेन्द्रः समरे किरीटी
विद्रावयंस्तद्रथवीरवृन्दम् ।
प्राच्छादयच्चारुकिरीटमाली
वरेषुभिः शत्रुगणाननेकान् ॥ ४१

कर्णं तदोवाच किरीटमाली
शूरः कुरूणां प्रवरोऽभिगर्जन् ॥ ४२

कर्ण यस्त्वं सभामध्ये बह्वबद्धं प्रभाषसे ।
न मे युधि समोस्तीति तदिदं मत्युपस्थितम् ४३
सभायां पौरुषं प्रोच्य धर्ममुत्सृज्य केवलम् ।
कर्तुमिच्छसि यत्कर्म तन्मन्ये दुष्करं त्वया ॥४४
यत्त्वया कथितं पूर्वं नास्ति मत्सम इत्यपि ।
तत्सत्यं कुरु राधेय कुरुमध्ये मया सह ॥ ४५
सभायां यस्तु पाञ्चालीं क्लिश्यमानां तदा त्वया।
दृष्टवानसि तस्याद्य फलमश्नुहि केवलम् ॥ ४६
धर्मपाशनिबद्धेन यन्मया मर्षितं तव ।
तस्य पापस्य राधेय फलं प्राप्नुहि दुर्मते ॥ ४७
एहि कर्ण मया सार्धमिहाद्य कुरु वैशसम् ।
प्रेक्षका कुरवः सन्तु सर्वे ते सहसैनिकाः ॥ ४८
इदानीमेव तावत्त्वमपयातो रणान्मम ।
कस्माज्जीवसि राधेय निहतस्त्वनुजस्तव ॥ ४९
यो भ्रातरं पातयित्वा कस्त्यक्त्वा च रणाजिरम्।
त्वदन्यः पुरुषः सत्सु ब्रूयादेवं व्यवस्थितः ॥५०
कर्ण उवाच ।
ब्रवीषि वाचा यत्पार्थ कर्मणा तत्समाचर ।
विशेषितो हि त्वं वाचा कर्मणाप्रतिमं भुवि ॥५१
यत्त्वया मर्षितं पूर्वं तदशक्तेन मर्षितम् ।
इति गृह्णीम ते पार्थ तमदृष्ट्वा पराक्रमम् ॥ ५२
धर्मपाशनिबद्धेन यत्त्वया मर्षितं पुरा ।
तथैव बद्धमात्मानमबद्ध इति मन्यसे ॥ ५३
न हि तावद्वने वासो यथोक्तं चरितस्त्वया ।
क्लिष्टस्त्वमर्थलोभात्तु समयं छेत्तुमिच्छसि ॥ ५४
यदि चेन्द्रः स्वयं पार्थ तव युद्ध्येत कारणात् ।
तथाऽपि न व्यथा काचिन्मम स्याद्विक्रमिष्यतः॥५५
अयं कौन्तेयकामस्ते नचिरात्समुपस्थितः ।
योत्स्यसे हि मया सार्धमत्र पश्यामि ते बलम्॥५६
वैशंपायन उवाच ।
इति कर्णो ब्रुवन्नेव बीभत्सुमपराजितम् ।
अभ्ययाद्विसृजन्बाणान्कायावरणभेदिनः ॥ ५७
प्रतिजग्राह तान्पार्थः प्रीयमाणो महारथः ॥ ५८
शरवर्षेण महता पर्जन्य इव वृष्टिमान् ।
अभीयाय हि बीभत्सुर्गाण्डीवं विक्षिपन्धनुः॥५९
जिघांसुः समरे कर्णं विससर्ज शरान्बहून् ।
तान्कर्णः प्रतिजग्राह वायुवेगमिवाचलः ॥ ६०
तयोर्दैवासुरसमः सन्निपातोऽभवन्महान् ।
किरतोः शरजालानि कृत्स्नं व्योम निरन्तरं ॥६१
उत्पेतुर्मेघजालानि घोररूपाणि सर्वशः ।
ववर्ष च रजो भौमं कर्णपार्थसमागमे ॥ ६२
न स्म सूर्यः प्रतपति न च वाति समीरणः ।
शरप्रच्छादितं व्योम छायाभूतमिवाभवत् ॥ ६३
गाण्डीवस्य च निर्घोषः कर्णस्य धनुषस्तथा ।
दह्यतामिव वेणूनामासीत्परमदारुणः ॥ ६४
अर्जुनस्तु हयान्नागान्रथांश्च विनिपातयन् ।
क्षोभयामास तत्सैन्यं कर्णं विव्याध चासकृत् ॥
ततः पार्थो महाबाहुः कर्णस्य धनुरच्छिनत् ।
छिन्नधन्वा ततः कर्णः शक्तिं चिक्षेप वेगवान्
तां शक्तिं समरे पार्थश्चिच्छेद निशितैः शरैः ६६
ततो निपेतुर्बहुशो राधेयस्य पदानुगाः ।
तांश्च गाण्डीवनिर्मुक्तैः प्राहिणोद्यमसादनम् ६७

अशेरतावृत्य महीं समग्रां
पार्थेषुमार्गे निहता द्विपेन्द्राः ।

हिरण्यकक्ष्याः शरजालचित्रा
यथा नगाः पावकजालनद्धाः ॥ ६८
तं शत्रुसेनाङ्गनिबर्हणानि
कर्माणि कुर्वाणममानुषाणि ।
वैकर्तनः पूर्वममृष्यमाणः
समार्पयल्लक्ष्यमिवाशु पार्थम् ॥ ६९
ततश्चतुर्भिस्तुरगान्विकृष्य
विव्याध कर्णोऽथ धनंजयस्य ।
षड्भिश्च सूतं दशभिर्हयांश्च
षष्ठ्या च पार्थं त्रिभिरस्य केतुम् ॥ ७०
सविस्फुलिङ्गोज्ज्वलभीमघोषः
कोपेन्धनः केतुशिखः शरार्चिः ।
कर्णाग्निरस्त्रानिलभीमवातो
बभौ दिधक्षन्निव पार्थकक्षम् ॥ ७१
स्वनेमिशङ्खस्वनभीमघोष-
श्चलत्पताकोज्ज्वलभीमविद्युत् ।
पार्थाम्बुदः शस्त्रशराम्बुधारः
कर्णानलं संशमयांचकार ॥ ७२
तेनातिविद्धः समरे किरीटी
प्रबोधितः सिंह इव प्रसुप्तः ।
गाण्डीवधन्वा प्रवरः कुरूणां
प्रतत्वरे कर्णवधाय जिष्णुः ॥ ७३
स ब्राह्ममस्त्रं समरे किरीटी
प्रादुश्चकाराद्भुतवीर्यकर्मा ।
सन्तापयन्कर्णरथं शरौघै-
र्लोकानिमान्सूर्य इवांशुमाली ॥ ७४
स हस्तिनेवाभिहतो गजेन्द्रः
प्रगृह्य भल्लान्निशितान्निषङ्गात् ।
आकर्णपूर्णे तु धनुर्विकृष्य
विव्याध बाणैरथ सूतपुत्रम् ॥ ७५
अथास्य बाहू सशिरो ललाटं
ग्रीवामुरः स्कन्धभुजान्तरं च ।
कर्णस्य पार्थो युधि निर्बिभेद
वज्रैरिवाद्रिं भगवान्महेन्द्रः ॥ ७६
स पार्थमुक्तानविषह्य बाणान्
गजो गजेनेव जितस्तरस्वी ।
विहाय संग्रामशिरोपयातो
वैकर्तनः पार्थशराभितप्तः ॥ ७७

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

## एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

द्रोणार्जुनयोर्युद्धवर्णनम् ॥ १ ॥ अर्जुनबाणाहतिविषण्णे द्रोणे अश्वत्थाम्ना तद्रक्षणायार्जुनप्रत्यभियानम् ॥ २ ॥ अत्रान्तरेऽर्जुनदत्तावकाशेन द्रोणेन रणादपयानम् ॥ ३ ॥

वैशंपायन उवाच ।
जितं वैकर्तनं दृष्ट्वा पार्थो वैराटिमब्रवीत् ।
स्थिरो भव त्वं संग्रामे जयोऽस्माकं नृपात्मज ॥ १
यावच्छङ्खमुपाध्यास्ये द्विषतां रोमहर्षणम् ।
अविक्लबमसंभ्रान्तमव्यक्तहृदयेक्षणम् ॥
याहि शीघ्रं यतो द्रोणो ममाचार्यो रणे स्थितः ॥ २
तथा संक्रीडमानस्य अर्जुनस्य रणाजिरे ।
बलं सत्वं च तेजश्च लाघवं च व्यवर्धत ॥ ३
तच्चाद्भुतमभिप्रेक्ष्य भयमुत्तरमाविशत् ॥ ४
उत्तर उवाच ।
अस्त्राणां तव दिव्यानां शरौघान्क्षिपतः शितान् ।
मनो मे मुह्यतेऽत्यर्थं तव दृष्ट्वा पराक्रमम् ॥ ५
द्वैधीभूतं मनो मह्यं भयाद्भरतसत्तम ।
अदृष्टपूर्वं पश्यामि तव गाण्डीवनिस्वनम् ॥ ६
तव बाहुबलं चैव धनुः कर्षयतो बहु ।
तव तेजो दुराधर्षं यथा विष्णोस्त्रिविक्रमे ॥ ७
वैशंपायन उवाच ।
तमुत्तरश्चित्रमवेक्ष्य गाण्डिवं
शरांश्च मुक्तान्सहसा किरीटिना ।

भीतोऽब्रवीदर्जुनमाजिमध्ये
नाहं तवाश्वान्विषहे नियन्तुम् ॥ ८
तमब्रवीत्किंचिदिव प्रहस्य
गाण्डीवधन्वा द्विषतां निहन्ता ।
मया सहायेन कुतोऽस्ति ते भयं
प्रेह्युत्तराश्वाननुमन्त्र्य वाहय ॥ ९
वैशंपायन उवाच ।
आश्वासितस्तेन धनंजयेन
वैराटिरश्वान्प्रतुतोद शीघ्रम् ।
धनंजयश्चापि विकृष्य चापं
विष्फारयामास महेन्द्रकल्पः ॥ १०
उत्तरं चैव बीभत्सुरब्रवीत्पुनरर्जुनः ।
न भेतव्यं मया सार्धं तात संग्राममूर्धनि ॥ ११
राजपुत्रोऽसि ते भद्रं कुले महति मात्स्यके ।
जातस्त्वं क्षत्रियकुले न विषीदितुमर्हसि ॥ १२
धृतिं कृत्वा सुविपुलां राजपुत्र रथं मम ।
युध्यमानस्य संग्रामे राजभिः सह वाहय ॥ १३
उक्त्वा तमेवं बीभत्सुरर्जुनः पुनरब्रवीत् ।
पाण्डवो रथिनां श्रेष्ठो भारद्वाजं समीक्ष्य तु ॥१४
यत्रैषा काञ्चनी वेदिर्दृश्यतेऽग्निशिखोपमा ।
उच्छ्रिता काञ्चने दण्डे पताकाभिरलंकृता ॥ १५
तत्र मां वह भद्रं ते द्रोणं योत्स्यामि सत्तमम् ।
भारद्वाजेन योत्स्येऽहमाचार्येण महात्मना ॥ १६
अमी शोणाः प्रकाशन्ते तुरगाः साधुवाहिनः ।
युक्ता रथवरे तस्य सर्वशिक्षाविशारदाः ॥ १७
यतो रथवरे शूरः सर्वशस्त्रभृतांवरः ।
स्निग्धवैडूर्यसंकाशस्ताम्राक्षः प्रियदर्शनः ॥ १८
आदित्य इव तेजस्वी बलवीर्यसमन्वितः ।
सर्वलोकधनुःश्रेष्ठः सर्वलोकेषु पूजितः ।
अङ्गिरोशनसोस्तुल्यो नये बुद्धिमतांवरः ॥ १९
चत्वारो निखिला वेदाः साङ्गोपाङ्गाः सलक्षणाः।
धनुर्वेदश्च कार्त्स्न्येन ब्राह्मं चास्त्रं प्रतिष्ठितम् ॥२०
पुराणमितिहासश्च अर्थविद्या च मानवम् ।
भारद्वाजे समस्तानि सर्वाण्येतानि सांप्रतम् ॥२१
क्षमा दमश्च सत्यं च तेजो मार्दवमार्जवम् ।
प्रतिष्ठिता गुणा यस्मिन्बहवो द्विजसत्तमे ॥ २२
यस्याहमिष्टः सततं मम चेष्टः सदा च सः ।
क्षत्रधर्मं पुरस्कृत्य तेन योत्स्ये हि सांप्रतम् ॥२३
आचार्यं प्रापयेदानीं ममोत्तर महारथम् ।
अपरं पश्य संग्राममद्भुतं मम तस्य च ॥ २४
उत्तरस्त्वेवमुक्तोऽश्वांश्चोदयामास तं प्रति ।
आजगामार्जुनरथो भारद्वाजरथं प्रति ॥ २५
तमापतन्तं वेगेन पाण्डवं सरथं रणे ।
द्रोणोप्यभ्यद्रवत्पार्थं मतो मत्तमिव द्विपम् ॥२६
स तु रुक्मरथं दृष्ट्वा कौन्तेयः समभिद्रुतम् ।
आचार्यं तं महाबाहुः प्राञ्जलिर्वाक्यमब्रवीत् ॥२७
उषिताः स्मो वने वासं प्रतिकर्मचिकीर्षवः ।
कोपं नार्हसि नः कर्तुं सदा समरदुर्जय ॥ २८
अहं तु ताडितः पूर्वं प्रहरेयं तवानघ ।
इति मे वर्तते बुद्धिस्तद्भवान्क्षन्तुमर्हति ॥ २९
ततः प्राध्मापयच्छङ्खं भेरीपटहवादितम् ।
व्यक्षोभत बलं सर्वमुद्धूतमिव सागरम् ॥ ३०
वैशंपायन उवाच ।
ततस्तु प्राहिणोद्द्रोणः शरानथ स विंशतिम् ।
अप्राप्तानेव तान्पार्थश्चिच्छेद कृतहस्तवान् ॥ ३१
ततः शरसहस्रेण रथं पार्थस्य वीर्यवान् ।
अवाकिरत्ततो द्रोणः शीघ्रहस्तं प्रदर्शयन् ॥ ३२
एवं प्रवृत्ते युद्धे भारद्वाजकिरीटिनोः ॥ ३३
अश्वाञ्शोणान्महावेगान्हंसवर्णैस्तु वाजिभिः ।
मिश्रितान्समरे दृष्ट्वा व्यस्मयन्त पृथग्जनाः ॥ ३४
रथं रथेन पार्थस्य समाहत्य परंतपः ।
हर्षयुक्तस्तदाऽऽचार्यः प्रत्यगृह्णात्स पाण्डवम् ॥३५
समाश्लिष्टाविवान्योन्यं द्रोणपाण्डवयोर्ध्वजौ ।
दृष्ट्वा प्राकम्पत मुहुर्भारतानां महाचमूः ॥ ३६
तत्तु युद्धं प्रवृत्ते ह्याचार्यस्यार्जुनस्य च ।
विमुञ्चतोः शरानुग्रान्विशिखान्दीप्ततेजसः ॥ ३७
तौ वीरौ वीर्यसंपन्नौ दृष्ट्वा समरमूर्धनि ।
आचार्यशिष्यौ रथिनौ कृतवीर्यौ तरस्विनौ ॥३८

उभौ विश्रुतकर्माणावुभौ श्रमगतौ जये ।
उभावतिरथौ लोके ह्युभौ परपुरंजयौ ।
क्षिपन्तौ शरजालानि क्षत्रियान्मोह आविशत् ॥ ३९
व्यस्मयन्त नराः सर्वे द्रोणार्जुनसमागमे ।
नराणां ब्रुवतां वाक्यं श्रूयते स महास्वनः ॥ ४०
द्रोणं हि समरे कोऽन्यो योद्धुमर्हत्यथार्जुनात् ।
रौद्रः क्षत्रियधर्मोऽयं गुरुं वै यदयोधयत् ॥ ४१
इत्यब्रुवञ्जनास्तत्र संग्रामशिरसि स्थिताः ।
तौ समीक्ष्य तु संरब्धौ सन्निकृष्टौ महारथौ ॥ ४२
छादयेतां शरौघैस्तावन्योन्यमपराजितौ ।
संयुगे संचकाशेतां कालसूर्याविवोदितौ ॥ ४३
विष्फार्य च महाचापं हेमपृष्ठं दुरासदम् ।
संरब्धस्तु तदा द्रोणः प्रत्ययुध्यत फल्गुनम् ॥ ४४
स सायकमयैर्जालैरर्जुनस्य रथं प्रति ।
भानुमद्भिः शिलाधौतैर्बाणैः प्राच्छादयद्दिशः ॥ ४५
अर्जुनस्तु तदा द्रोणं महावेगैर्महारथः ।
विव्याध शतशो बाणैर्धाराभिरिव पर्वतम् ॥ ४६
कालमेघ इवोष्णान्ते फल्गुनः समवाकिरत् ॥ ४७
तस्य जाम्बूनदमयैश्चित्रैश्चापच्युतैः शरैः ।
प्राच्छादयद्रथश्रेष्ठं भारद्वाजोऽर्जुनस्य वै ॥ ४८
तथैव दिव्यं गाण्डीवं धनुरानम्य चार्जुनः ।
शत्रुघ्नं वेगवत्सृष्टं भारसाधनमुत्तमम् ॥ ४९
शोभते स महाबाहुर्गाण्डीवं विक्षिपन्धनुः ।
शरांश्च विसृजंश्चित्रान्सुवर्णविकृतान्बहून् ॥ ५०
प्राच्छादयदमेयात्मा भारद्वाजरथं प्रति ।
द्रोणचापविनिर्मुक्तान्बाणान्बाणैरवारयत् ॥ ५१
सरथोऽप्यचरत्पार्थः प्रेक्षणीयो महारथः ।
युगपद्दिक्षु सर्वासु सर्वतोऽस्त्राण्यवासृजत् ॥ ५२
आददानं शरान्घोरान्संदधानं च पाण्डवम् ।
विसृजन्तं च कौन्तेयं न स्म पश्यन्ति लाघवात् ॥ ५३
एकच्छायमिवाकाशं बाणैश्चक्रे समन्ततः ।
नादृश्यत ततो द्रोणो नीहारेणेव पर्वतः ॥ ५४
मरीचिविकचस्येव राजन्भानुमतो वपुः ।
आसीत्पार्थस्य सुमहद्वपुः शरशतार्चितम् ॥ ५५
क्षिपतः शरजालानि कौन्तेयस्य महात्मनः ।
तान्विधूय शरान्घोरान्द्रोणोऽपि समितिंजयः ।
बभासे तिमिरं व्योम्नि विधूय सविता यथा ॥ ५६
अग्निचक्रोपमं घोरं मण्डलीकृतमाहवे ।
विकृष्य सुमहच्चापं मेघस्तनितनिस्वनम् ।
असकृन्मुञ्चतो बाणान्ददृशुः कुरवो युधि ॥ ५७
दिक्षु सर्वासु विपुलः शुश्रुवेऽथ जनैस्तदा ।
द्रोणस्यापि धनुर्घोषो विद्युत्स्तनितनिस्वनः ।
अभवद्विस्मयकरः सैन्यानां भरतर्षभ ॥ ५८
तप्तजाम्बूनदमयैर्दीप्तैरग्निसमैः शरैः ।
प्राच्छादयदमेयात्मा दिशः सूर्यस्य च प्रभाम् ॥ ५९
ततः काञ्चनपुङ्खानां शराणां नतपर्वणाम् ।
वियद्गतानां चरतां दृश्यन्ते बहवो व्रजाः ॥ ६०
शरासनाच्च द्रोणस्य प्रभवन्ति स्म सायकाः ।
एको दीर्घ इवाभान्तः प्रदृश्यन्ते महाशराः ।
आकाशे समदृश्यन्त हंसानामिव पङ्क्तयः ॥ ६१
एवं सुवर्णविकृतान्विमुञ्चन्तौ शरान्बहून् ।
आकाशं संवृतं वीरावुल्काभिरिव चक्रतुः ॥ ६२
तयोः शराश्च विबभुः कङ्कबर्हिणवाससः ।
पङ्क्तयः शरदि मत्तानां सारसानामिवाम्बरे ॥ ६३
तत्तु युद्धं महाघोरं तयोः संरब्धयोरभूत् ।
अत्यद्भुतमचिन्त्यं च वृत्रवासवयोरिव ॥ ६४
महागजाविवासाद्य विषाणाग्रैः परस्परम् ।
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ॥ ६५
अथ त्वाचार्यमुख्येन शरान्सृष्टाञ्शिलाशितान् ।
अवारयच्छितैर्बाणैरर्जुनो जयतांवरः ॥ ६६
दर्शयन्नैन्द्रमात्मानमुग्रमुग्रपराक्रमः ।
इषुभिस्तूर्णमाकाशं बहुभिश्च समावृणोत् ॥ ६७
जिघांसन्तं नरव्याघ्रमर्जुनं भीमदर्शनम् ।
विव्याध निशितैर्द्रोणः शरैः सन्नतपर्वभिः ॥ ६८
हृष्टः समभवद्द्रोणो रणशौण्डः प्रतापवान् ।
अर्जुनेन समं क्रीडञ्शरैः सन्नतपर्वभिः ॥ ६९
तौ व्यदारयतां शूरौ सन्नद्धौ रणशोभिनौ ।
उदीरयन्तौ दिव्यानि ब्राह्माद्यस्त्राणि भागशः ७०

पार्थस्तु समरे शूरो दर्शयन्वीर्यमात्मनः ।
स महास्त्रैर्महात्मानं द्रोणं प्राच्छादयच्छरैः ॥ ७१
अस्त्रैरस्त्राणि संवार्य पार्थो द्रोणमवारयत् ॥ ७२
तयोरासीत्संप्रहारः क्रुद्धयोर्नरसिंहयोः ।
अमृष्यमाणयोः सङ्ख्ये बलिवासवयोरिव ॥ ७३
दर्शयेतां महास्त्राणि भारद्वाजार्जुनौ रणे ॥ ७४
ऐन्द्रं वायव्यमाग्नेयमस्त्रमस्त्रेण पाण्डवः ।
मुक्तंमुक्तं द्रोणचापाद्ग्रसते स पुनःपुनः ॥ ७५
एवं शूरौ महेष्वासौ विसृजन्तौ शिलाशितान् ।
एकच्छायमकुर्वातां गगनं शरवृष्टिभिः ॥ ७६
ततोऽर्जुनेन मुक्तानां पततां च शरीरिषु ।
पर्वतेष्विव वज्राणां शराणां श्रूयते स्वनः ॥ ७७
ततो नागा रथाश्वाश्च सादिनश्च विशांपते ।
शोणिताक्ताश्च दृश्यन्ते पुष्पिता इव किंशुकाः ॥७८
बाहुभिश्च सकेयूरैर्निकृत्तैश्च महारथैः ।
सुवर्णचित्रैः कवचैर्ध्वजैश्च विनिपातितैः ॥ ७९
योधैश्च निहतैस्तत्र पार्थबाणाभिपीडितैः ।
बलमासीत्सुसंभ्रान्तं द्रोणार्जुनसमागमे ॥ ८०
विधून्वानौ तु तौ वीरौ धनुषी भारसाधने ।
प्राच्छादयेतामन्योन्यं दिधक्षन्तौ वरेषुभिः ॥८१
अथान्तरिक्षे नादोऽभूद्द्रोणं तत्र प्रशंसताम् ।
दुष्करं कृतवान्द्रोणो यदर्जुनमयोधयत् ॥ ८२
प्रमाथिनं महावीर्यं दृढमुष्टिं दुरासदम् ।
जेतारं सर्वदैत्यानां सर्वेषां च महारथम् ॥ ८३
अविभ्रमं च शिक्षां च लाघवं दूरपातनम् ।
पार्थस्य समरे दृष्ट्वा द्रोणस्यासीच्च विस्मयः ॥८४
तत्प्रवृत्तं चिरं घोरं तयोर्युद्धं महात्मनोः ।
अवर्तत महारौद्रं लोकसंक्षोभकारकम् ॥ ८५
अथ गाण्डीवमुद्यम्य दिव्यं धनुरमर्षणः ।
विचकर्ष रणे पार्थो बाहुभ्यां भरतर्षभः ॥ ८६
तस्य बाणमयं वर्षं शलभानामिवाभवत् ।
न च बाणान्तरे तस्य वायुः शक्नोति सर्पितुम् ॥८७
अभीक्ष्णं संदधानस्य बाणानुत्सृजतस्तथा ।
नान्तरं ददृशे किंचित्पार्थस्यापततोपि च ॥ ८८
युद्धे तु कृतशीघ्रास्त्रे वर्तमाने सुदारुणे ।
शीघ्राच्छीघ्रतरं पार्थः शरानन्यानुदैरयत् ॥ ८९
ततः शरसहस्राणि शराणां नतपर्वणाम् ।
युगपत्प्रापतंस्तत्र द्रोणस्य रथमन्तिकात् ॥ ९०
विकीर्यमाणे द्रोणे तु शरैर्गाण्डीवधन्वना ।
हाहाकारो महानासीत्सैन्यानां भरतर्षभ ॥ ९१
पाण्डवस्य तु शीघ्रास्त्रं मघवा समपूजयत् ।
गन्धर्वाप्सरसश्चैव ये च तत्र समागताः ॥ ९२
द्रोणं युद्धार्णवे मग्नं दृष्ट्वा पुत्रः प्रतापवान् ।
ततो वृन्देन महता रथिनां रथियूथपः ।
आचार्यपुत्रस्तु शरैः पाण्डवं प्रत्यवारयत् ॥ ९३
अश्वत्थामा तु तत्कर्म हृदयेन महात्मनः ।
पूजयामास पार्थस्य कोपं चास्य तदाऽकरोत् ॥९४
स मन्युवशमापन्नः पार्थमभ्यद्रवद्रणे ।
किरञ्शरसहस्राणि पर्जन्य इव वृष्टिमान् ॥ ९५
आवृत्य च महाबाहुर्यतो द्रोणस्ततोऽभवत् ।
अन्तरं प्रददौ पार्थो द्रोणस्य व्यपसर्पितुम् ॥ ९६
स तु लब्धान्तरस्तूर्णमपायाज्जवनैर्हयैः ।
छिन्नवर्मध्वजरथो निकृत्तः परमेषुभिः ॥ ९७
पराजिते तदा द्रोणे द्रोणपुत्रः समागतः ।
सदण्ड इव रक्ताक्षः कृतान्तः समरे स्थितः ॥९८

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

## षष्टितमोऽध्यायः ॥ ६० ॥

अर्जुनेन द्रौणिपराभवनम् ॥ १ ॥

वैशंपायन उवाच ।
तं पार्थः प्रतिजग्राह वायुवेगमिवाचलः ।
शरजालेन महता वर्षमाण इवाम्बुदः ॥ १
तयोर्देवासुरसमः संनिपातो महानभूत् ।

किरतोः शरजालानि वृत्रवासवयोरिव ॥ २
न स सूर्यस्तदा भाति न च वाति समीरणः ।
शरगाढे कृते व्योम्नि छायाभूतमिवाभवत् ॥ ३
महांश्चटचटाशब्दो योधयोर्युध्यमानयोः ।
दह्यतामिव वेणूनामासीत्परमदारुणः ॥ ४
हयांस्तस्यार्जुनः सर्वान्कृतवानल्पतेजसः ।
ते राजन्न प्रजानन्ति दिशं कांचन मोहिताः ॥५
ततो द्रौणिर्महावीर्यः पार्थस्य विचरिष्यतः ।
विवरं सूक्ष्ममालोक्य ज्यां चिच्छेद क्षुरेण सः ॥ ६
तदस्यापूजयन्देवाः कर्म दृष्ट्वातिमानुषम् ।
न शक्तोऽन्यः पुमान्स्थातुमृते द्रौणेर्धनंजयम् ॥७
ततो द्रौणिर्धनुर्व्यस्य व्यपक्रम्य नरर्षभः ।
पुनरप्यभ्यहन्पार्थं हृदये कङ्कपत्रिभिः ॥ ८
ततः पार्थो महाबाहुः प्रहसन्स्वनवत्तदा ।
योजयामास च तदा मौर्व्या गाण्डीवमोजसा ॥९
तं दृष्ट्वा क्रुद्धमायान्तं प्रभिन्नमिव कुञ्जरम् ।
क्रुद्धः समाह्वयामास द्रौणिर्युद्धाय भारत ॥ १०
ततोऽर्धचन्द्रमाहृत्य तेन पार्थः समाहतः ।
चिच्छेद तस्य चापं च सूतं चाश्वं च तेजसा ।
विव्याध निशितैश्चापि शरैराशीविषोपमैः ॥ ११
सोऽन्यं रथं समास्थाय प्रत्यायाद्रथिपुङ्गवः ।
वारणेनेव मत्तेन मत्तो वारणयूथपः ॥ १२
ततः प्रववृते युद्धं पृथिव्यामेकवीरयोः ।
रणमध्ये द्वयोरेव सुमहद्रोमहर्षणम् ॥ १३
तौ वीरौ कुरवः सर्वे ददृशुर्विस्मयान्विताः ।
युध्यमानौ महात्मानौ द्विरदाविव संगतौ ॥ १४
तौ समाजघ्नतुर्वीरौ परस्परजयैषिणौ ।
शरै राशीविषाकारैर्ज्वलद्भिरिव पावकैः ॥ १५
अक्षयाविषुधी दिव्यौ पाण्डवस्य महात्मनः ।
तेन पार्थो रणे शूरस्तस्थौ गिरिरिवाचलः ॥ १६
अश्वत्थाम्नः पुनर्बाणाः क्षिप्रमभ्यस्यतो रणे ।
जग्मुः परिक्षयं शीघ्रमभूत्तेनाधिकोऽर्जुनः ॥ १७

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

## एकषष्टितमोऽध्यायः ॥ ६१ ॥

अर्जुनेन युगपद्द्रोणादिभिः सह युद्धम् ॥ १ ॥

वैशंपायन उवाच ।
एतस्मिन्नन्तरे तत्र महावीर्यपराक्रमः ।
आजगाम महाबाहुः कृपः शस्त्रभृतांवरः ।
अर्जुनं प्रतियोद्धुं वै युद्धकामो महारथः ॥ १
अथ द्रौणे रथं त्यक्त्वा कृपस्य रथमुत्तमम् ।
आजगामार्जुनस्तूर्णं सूर्यवैश्वानरप्रभम् ॥ २
तौ वीरौ सूर्यसंकाशौ योत्स्यमानौ महारथौ ।
वार्षिकाविव जीमूतौ व्यरोचेतां व्यवस्थितौ ॥ ३
प्रगृह्य गाण्डिवं लोके विश्रुतं पुनरर्जुनः ।
अभ्ययाद्भरतश्रेष्ठो विनिघ्नञ्शरमालया ॥ ४
कृपश्च धनुरादाय तथैवार्जुनमभ्यगात् ॥ ५
प्रगृह्य बलवच्चापं नाराचान्रक्तभोजनान् ।
कृपः पार्थाय चिक्षेप शतशोऽथ सहस्रशः ॥ ६
जीमूत इव घर्मान्ते शरवर्षं विमुञ्चति ।
नन्दयन्सुहृदः सर्वान्प्रत्ययुध्यत फल्गुनम् ॥ ७
विकृष्य बलवच्चापं पाण्डवोऽमितविक्रमः ।
चचार समरे पार्थश्चित्रमार्गान्विदर्शयन् ॥ ८
सर्वाश्चैव दिशो बाणैः प्रदिशश्च महाबलः ।
एकच्छायमिवाकाशं सर्वतः कृतवान्प्रभुः ॥ ९
प्राच्छादयदमेयात्मा पार्थः शरशतैः कृपम् ।
उद्गतः समरे मेघो धाराभिरिव पर्वतम् ॥ १०
स शरैरर्पितः क्रुद्धः शितैरग्निशिखोपमैः ।
कृपो बभूव समरे विधूमोऽग्निरिव ज्वलन् ॥ ११
ततः शरसहस्रेण पार्थमप्रतिमौजसम् ।
अर्दयित्वा महाबाहुर्ननाद समरे कृपः ॥ १२
ततः कनकपुङ्खेन शरेण नतपर्वणा ।
बिभेद समरे पार्थः कृपस्य ध्वजमुत्तमम् ॥ १३
ततः पश्चान्महातेजा नाराचान्सूर्यसन्निभान् ।

जग्राह समरे पार्थो भूयो बहुशिलीमुखान् ॥ १४
तैस्तदानीं महाबाहुः कृपस्य रथरक्षिणः ।
जघान क्षत्रियश्रेष्ठो युध्यमानान्महारथान् ॥ १५
चन्द्रकेतुः सुकेतुश्च चित्राश्वो मणिमांस्तदा ।
मुञ्जमौलिश्च विक्रान्तो हेमवर्णो भयावहः ॥ १६
सुरथोऽतिरथश्चैव सुषेणोऽरिष्ट एव च ।
नृकेतुश्च सहानीकास्ते निषेदुर्गतासवः ॥ १७
तान्निहत्य ततः पार्थो निमेषादिव भारत ।
पुनरन्यान्समाधत्त त्रयोदश शिलीमुखान् ॥ १८
अथास्य युगमेकेन चतुर्भिश्चतुरो हयान् ।
षष्ठेन तु शिरः सङ्ख्ये कृपस्य रथसारथेः ॥ १९
त्रिभिस्त्रिवेणुं बलवान्द्वाभ्यामक्षं महाबलः ।
द्वादशेन तु भल्लेन कृपस्य सशरं धनुः ॥ २०
छित्त्वा वज्रनिकाशेन फल्गुनः प्रहसन्निव ।
त्रयोदशेनेन्द्रसमः प्रत्यविध्यत्स्तनान्तरे ॥ २१
स छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
अथ शक्तिं परामृश्य सूर्यवैश्वानरप्रभाम् ।
चिक्षेप सहसा क्रुद्धः पार्थायाद्भुतकर्मणे ॥ २२
तामर्जुनस्तथारूपां शक्तिं हेमपरिष्कृताम् ।
रुरोध सायकैस्तीक्ष्णैरर्धचन्द्रमुखैश्च ताम् ॥ २३
आपतन्तीं महोल्काभां चिच्छेद दशभिः शरैः ।
सापतद्दशधा भूमौ पार्थेन निहता शरैः ॥ २४
शक्त्यां तु विनिकृत्तायां विरथः शरपीडितः ।
गदापाणिरवप्लुत्य रथात्तूर्णममित्रहा ।
गदां चिक्षेप सहसा पार्थायामिततेजसे ॥ २५
सा च मुक्ता गदा गुर्वी रूपेणास्य परिष्कृता ।
अर्जुनस्य शरैर्नुन्ना प्रतिमार्गं जगाम सा ॥ २६
अथ खड्गं समुद्धृत्य शतचन्द्रं च भानुमत् ।
इयेष पाण्डवं हन्तुं कृपो लघुपराक्रमः ॥ २७
स शरद्वत्सुतस्तूर्णं महाचार्यः सुशिक्षितः ।
खेचरेव चचारैकः क्रमाच्चर्मासिधृग्भुवि ॥ २८
ततः क्षुरप्रैः कौन्तेयो दशभिः खड्गचर्मणी ।
निमेषादिव चिच्छेद तदद्भुतमिवाभवत् ॥ २९

खेचरः इवेतिच्छेदः ॥ २८ ॥

विषण्णवदनस्तत्र विनाशात्खड्गचर्मणोः ।
दन्तैर्दन्तच्छदान्दष्ट्वा चुकोप हृदि दीर्घवत् ॥३०
भवत्विति पुनश्चोक्त्वा युद्धापगमनोद्यतः ।
अश्वत्थाम्नस्तु स रथं कृपः समभिपुप्लुवे ।
स्वस्रीयस्य महातेजा जग्राह च धनुः पुनः ॥ ३१
एतस्मिन्नन्तरे क्रुद्धो भीष्मो द्रोणमथाब्रवीत् ।
दृष्ट्वा कृपं फल्गुनेन पीडितं चोर्जितं च तम् ॥३२
एकैकमस्मान्संग्रामे पराजयति फल्गुनः ।
अहं द्रोणश्च कर्णश्च द्रौणिर्गौतम एव च ।
अन्ये च बहवः शूरा वयं जेष्याम वासविम् ॥ ३३
समागम्य ततः सर्वे भीष्मद्रोणमुखा रथाः ।
अर्जुनं सहसा युक्ताः प्रत्ययुध्यन्त भारत ॥ ३४
स सायकमयैर्जालैः सर्वतस्तान्महारथान् ।
प्राच्छादयच्छरौघैस्तान्नीहार इव पर्वतान् ॥ ३५
नदद्भिश्च महानागैर्हेषमाणैश्च वाजिभिः ।
भेरीशङ्खनिनादैश्च स शब्दस्तुमुलोऽभवत् ॥ ३६
नागाश्वकायान्निर्भिद्य लौहानि कवचानि च ।
पार्थस्य शरवर्षाणि न्यपतञ्शतशः क्षितौ ॥ ३७
त्वरमाणः शरानस्यन्पाण्डवस्तु प्रकाशते ।
मध्यंदिनगतोऽर्चिष्माञ्छरदीव दिवाकरः ॥ ३८
अविषह्य शरान्सर्वे पार्थचापच्युतान्रणे ।
उदक्प्रयान्ति विध्वस्ता रथेभ्यो रथिनस्तदा ।
सादिनश्चाश्वपृष्ठेभ्यो भूमौ चापि पदातयः ॥३९
शरैस्तु ताड्यमानानां कवचानां महात्मनाम् ।
ताम्रराजतलौहानां प्रादुरासीन्महास्वनः ॥ ४०
छन्नमायोधनं जज्ञे शरीरैर्गतचेतसाम् ।
श्रान्त्या गलितशस्त्राणां पततामश्वसादिनाम् ॥४१
शून्यान्कुर्वन्रथोपस्थान्मानवैरास्तृणोन्महीम् ।
प्रनृत्यन्निव संग्रामे चापहस्तो धनंजयः ।
शिरांस्यपातयत्सङ्ख्ये क्षत्रियाणां नरर्षभः ॥ ४२
श्रुत्वा गाण्डीवनिर्घोषं विस्फूर्जितमिवाशनेः ।
त्रस्तानि सर्वसैन्यानि व्यलीयन्त च भागशः ॥४३
कुण्डलोष्णीषधारीणि जातरूपस्रजानि च ।

एकषष्टितमोऽध्यायः ॥ ६१ ॥

पतितानि स्म दृश्यन्ते शिरांसि रणमूर्धनि ॥ ४४
विशिखोन्मथितैर्गात्रैर्बाहुभिश्च सकार्मुकैः ।
सहस्ताभरणैश्चान्यैः प्रच्छन्ना भाति मेदिनी ॥४५
शिरसां पात्यमानानां समरे निशितैः शरैः ।
अश्मवृष्टिरिवाकाशादभवद्भरतर्षभ ॥ ४६
दर्शयित्वा तदाऽऽत्मानं रौद्रं रौद्रपराक्रमः ।
जघान समरे शूराञ्छतशोऽथ सहस्रशः ॥ ४७
तथावरुद्धश्चारण्ये दशवर्षाणि त्रीणि च ।
क्रोधाग्निमुत्ससर्जाजौ धार्तराष्ट्रेषु पाण्डवः ॥ ४८
तस्य तद्दहतः सैन्यं दृष्ट्वा चास्य पराक्रमम् ।
सर्वे शान्तिपरा योधा धार्तराष्ट्रस्य भारत ॥ ४९
यथा नलवनं नागः प्रभिन्नः षाष्टिहायनः ।
एवं सर्वानपामृद्नादर्जुनः शस्त्रतेजसा ॥ ५०
विद्राव्य च ततः सैन्यं त्रासयित्वा महारथान् ।
अर्जुनो जयतांश्रेष्ठः पर्यावर्तत भारत ॥ ५१
तस्य मार्गान्विचरतो निघ्नतश्च रणाजिरे ।
प्रावर्तत नदी घोरा शोणितान्त्रतरङ्गिणी ॥ ५२
अस्थिशैवालसंबाधां संग्रामे पार्थनिर्मिताम् ।
शरचापप्लवां घोरां मांसशोणितकर्दमाम् ॥ ५३
रथोडुपां चान्त्रसर्पां केशशैवालशाड्वलाम् ।
करवालासिपाठीनां चामरोष्णीषफेनिलाम् ॥५४
अश्वग्रीवामहावर्तां कबन्धजलमानुषाम् ।
काककङ्करुतां तीव्रां सारसक्रौञ्चनादिताम् ॥५५
सिंहनादमहानादां शङ्खस्वनमहास्वनाम् ।
वीरोत्तमाङ्गपद्माढ्यां शरचापमहानलाम् ॥ ५६
पदातिमत्स्यकलुषां गजशीर्षककच्छपाम् ।
गोमायुमृगसंघुष्टां मांसमज्जाभिकर्दमाम् ॥ ५७
प्रावर्तयन्नदीं घोरां पिशाचगणसेविताम् ।
अपारामनिवारां च रक्तोदां सर्वतो वृताम् ॥५८
अभीक्ष्णमकरोत्पार्थो नदीमुत्तमशोणिताम् ।
गजवर्ष्मंमहाद्वीपामश्वदेहमहाशिलाम् ॥ ५९
पदातिदेहसंघाटां रथावलिमहातरुम् ।
केशशाद्वलसंछन्नां सुतरां भीतिदां नृणाम् ॥ ६०
अगाधरक्तोदवहां यमसागरगामिनीम् ।
दुस्तरां भीरुमर्त्यानां शूराणां सुतरां नृप ।
प्रावर्तयन्नदीमेवं भीषणां पाकशासनिः ॥ ६१
तस्याददानस्य शरान्सन्दधानस्य मुञ्चतः ।
विकर्षतश्च गाण्डीवं न किंचिद्दृदृशेऽन्तरम् ॥ ६२

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

---

## द्विषष्टितमोऽध्यायः ॥ ६२ ॥

रणाय भीष्मार्जुनयोः समागमे देवैस्तयोः प्रशंसनम् ॥ १ ॥

वैशंपायन उवाच ।
एवं विद्राव्य तत्सैन्यं पार्थो भीष्ममुपाद्रवत् ।
त्रस्तेषु सर्वसैन्येषु कौरव्यस्य महात्मनः ॥ १
बाणान्धनुषि संधाय चतुरः पाकशासनिः ।
भीष्मं च प्राहिणोद्धीतस्तं द्वाभ्यामभ्यवादयत् ॥२
तस्य कर्णान्तिकं गत्वा द्वावभूतां च कौशलम् ।
सोऽप्याशीरवदद्भीष्मः कौन्तेयो जयतामिति ॥३
नरसिंहमुपायान्तं जिगीषन्तं परान्रणे ।
वृषसेनोऽभ्ययात्तूर्णं योद्धुकामो धनंजयम् ॥ ४
वैकर्तनात्मजो वीरः संग्रामे लोकविश्रुतः ।
शौर्यवीर्यादिभिः कर्णाद्बिम्बाद्बिम्ब इवोद्धृतः ॥५
आत्मना युध्यतस्तस्य वृषसेनस्य पाण्डवः ।
मुहूर्तं तस्य तद्दृष्ट्वा हस्तलाघवपौरुषे ।
तुतोष च ततः पार्थो वृषसेनपराक्रमम् ॥ ६
तस्य पार्थस्तदा क्षिप्रं क्षुरधारेण कार्मुकम् ।
न्यकृन्तद्गृध्रपत्रेण जाम्बूनदपरिष्कृतम् ॥ ७
अथैनं पञ्चभिर्भूयः प्रत्यविध्यत्स्तनान्तरे ।
स पार्थबाणाभिहतो रथात्प्रस्कन्द्य दुद्रुवे ॥ ८
दुःशासनो विकर्णश्च शकुनिश्च विविंशतिः ।
आयान्तं भीमधन्वानं पर्यकीर्यन्त पाण्डवम् ॥९
तेषां पार्थो रणे क्रुद्धः शरैः सन्नतपर्वभिः ।
युगं ध्वजं शरासं च चिच्छेद तरसा रणे ॥ १०

ते निकृत्तध्वजाः सर्वे छिन्नकार्मुकवेष्टनाः ।
रणमध्यादपययुः पार्थबाणाभिपीडिताः ॥ ११
ततः प्रहस्य बीभत्सुर्वैराटिमिदमब्रवीत् ।
एतं मे प्रापयेदानीं तालं सौवर्णमुच्छ्रितम् ॥१२
मेघमध्ये यथा विद्युदुज्ज्वलन्ती पुनः पुनः ।
असौ शान्तनवो भीष्मस्तत्र याहि परंतप ॥ १३
अस्त्राणि तस्य दिव्यानि दर्शयिष्यामि संयुगे ।
घोररूपाणि चित्राणि लघूनि च गुरूणि च ॥१४
अस्माकं पोषको नित्यमाबाल्यान्मत्स्यभूमिप ।
श्रेयस्कामी सदाऽस्माकं योगक्षेमकरः सदा ॥१५
तस्याङ्के विर्धितो बाल्ये तद्योत्स्येऽनेन सांप्रतम् ।
अस्माकं धार्तराष्ट्राणां शमकामो दिवानिशम् ॥१६
वैशंपायन उवाच ।
तस्य तद्वचनं श्रुत्वा वैराटिः पार्थसारथिः ।
वाहयच्चोदितस्तेन रथं भीष्मरथं प्रति ॥ १७
तं रथं चोदितं दृष्ट्वा फल्गुनस्य रथोत्तमम् ।
वायुनेव महामेघं सहसाऽभिसमीरितम् ।
तं प्रत्ययाच्च गाङ्गेयो रथेनादित्यवर्चसा ॥ १८
आयान्तमर्जुनं दृष्ट्वा भीष्मः परपुरंजयः ।
प्रत्युज्जगाम युद्धार्थी महर्षभमिवर्षभः ॥ १९
तथा हि गुप्त एतेषां दुराधर्षः पितामहः ।
हन्यमानेषु योधेषु धनंजयमुपाद्रवत् ॥ २०
प्रगृह्य कार्मुकश्रेष्ठं जातरूपपरिष्कृतम् ।
शरानादाय तीक्ष्णाग्रान्मर्मदेहप्रमाथिनः ॥ २१
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
शुशुभे स नरव्याघ्रो गिरिः सूर्योत्तरो यथा ॥२२
प्राध्माप्य शङ्खं गाङ्गेयो धार्तराष्ट्रान्प्रहर्षयन् ।
प्रदक्षिणमुपावृत्य बीभत्सुं प्रत्यवारयत् ॥ २३
तमवेक्ष्य समायान्तं कौन्तेयः परवीरहा ।
प्रत्यगृह्णादमेयात्मा प्रियातिथिमिवागतम् ।
देवदत्तं महाशङ्खं प्रदध्मौ युधि वीर्यवान् ॥ २४
तौ शङ्खनादावत्यर्थं भीष्मपाण्डवयोस्तदा ।
नादयामासतुर्द्यां च खं च भूमिं च सर्वशः ॥२५
अन्तरिक्षे च जल्पन्ति सर्वे देवाः सवासवाः ।
यदर्जुनः कुरून्सर्वान्प्राकृन्तच्छस्त्रतेजसा ॥ २६
कुरुश्रेष्ठाविमौ वीरौ रणे भीष्मधनंजयौ ।
सर्वास्त्रकुशलौ वीरावप्रमत्तौ रणे सदा ॥ २७
उभौ देवमनुष्येषु विश्रुतौ स्वपराक्रमैः ।
उभौ परमसंरब्धावुभौ दीप्तधनुर्धरौ ॥ २८
समागतौ नरव्याघ्रौ व्याघ्राविव तरस्विनौ ।
उभौ सदृशकर्माणौ सूर्यस्याग्नेश्च भारत ॥ २९
वासुदेवस्य सदृशौ कार्तवीर्यसमावुभौ ।
उभौ विश्रुतकर्माणावुभौ शूरौ महाबलौ ।
सर्वास्त्रविदुषां श्रेष्ठौ सर्वशस्त्रभृतां वरौ ॥ ३०
अग्नेरिन्द्रस्य सोमस्य यमस्य धनदस्य च ।
अनयोः सदृशं वीर्यं मित्रस्य वरुणस्य च ॥ ३१
को वा कुन्तीसुतं युद्धे द्वैरथेनोपयास्यति ।
ऋते शान्तनवादन्यः क्षत्रियो भुवि विद्यते ॥३२
इति संपूजयामासुर्भीष्मं दृष्ट्वाऽर्जुनं गतम् ।
तं रणे संप्रहृष्यन्तं दृष्ट्वा देवाः सवासवाः ॥३३
अथ बहुविधतूर्यशङ्खघोषै-
र्विविधरवैः सह सिंहनादमिश्रैः ।
कुरुवृषभमपूजयत्कुरूणां
बलममराधिपसैन्यसप्रभं तत् ॥ ३४

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

## त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

अर्जुनेन भीष्मपराजयः ॥ १ ॥

वैशंपायन उवाच ।
ततो भीष्मः शरानष्टौ ध्वजे पार्थस्य वीर्यवान् ।
समार्पयन्महावेगाञ्ज्वलतः पन्नगानिव ॥ १
ते ध्वजं पाण्डुपुत्रस्य समासाद्य पतत्रिणः ।
ध्वजस्थं कपिमाजघ्नुः ध्वजाग्रनिलयांश्च तान् ॥२
सारथिं च हयांश्चास्य विव्याध दशभिः शरैः ।

उरस्यताडयत्पार्थं त्रिभिरेवायसैः शरैः ॥ ३
ततोऽर्जुनः शरैस्तीक्ष्णैर्विद्ध्वा कुरुपितामहम् ।
ध्वजं च सारथिं चापि विव्याध दशभिः शरैः ॥४
तद्युद्धमभवद्घोरं रोमहर्षणमद्भुतम् ।
भीष्मस्य सह पार्थेन बलिवासवयोरिव ॥ ५
सन्ततं शरजालाभिराकाशं समपद्यत ।
अम्बुदैरिव धाराभिस्तयोः कार्मुकनिःसृतैः ॥ ६
भल्लैर्भल्लाः समाहत्य कुरुपाण्डवयो रणे ।
अन्तरिक्षे व्यराजन्त खद्योताः प्रावृषीव हि ॥ ७
अग्निचक्रोपमं घोरं मण्डलीकृतमाहवे ।
गाण्डीवमभवज्जिष्णोः सव्यं दक्षिणमस्यतः ॥ ८
पर्वतं वारिधाराभिश्छादयन्निव तोयदः ।
अर्जुनश्छादयद्भीष्मं शरवर्षैरनेकशः ॥ ९
तां समुद्रमिवोद्धूतां शरवृष्टिं समुद्यताम् ।
व्यधमत्सायकैर्भीष्मः सोर्जुनं च न्यवारयत् ॥१०
ततस्तानि विसृष्टानि शरजालानि सङ्घशः ।
आहतानि व्यशीर्यन्त अर्जुनस्य रथं प्रति ॥ ११
ततः कनकपुङ्खाग्रैः शितैः संनतपर्वभिः ।
पतद्भिः खगवाजैश्च द्यौरासीत्संवृता शरैः ॥ १२
ततः प्रासृजदुग्राणि शरजालानि पाण्डवः ।
तावन्ति शरजालानि भीष्मः पार्थाय प्राहिणोत् ॥

साश्वं ससूतं सरथं स पार्थं
समाचिनोद्धारतो वत्सदन्तैः ।
प्रच्छादयामास दिशश्च सर्वा
नभश्च बाणैस्तपनीयपुङ्खैः ॥ १४

ततो देवर्षिगन्धर्वाः साधुसाध्वित्यपूजयन् ।
दुष्करं कृतवान्भीष्मो यदर्जुनमवारयत् ॥ १५
बलवानर्जुनो दक्षः क्षिप्रकारी च पाण्डवः ।
कोऽन्यः समर्थः पार्थस्य वेगं धारयितुं रणे ॥ १६
ऋते शान्तनवाद्भीष्मात्कृष्णाद्वा देवकीसुतात् ।
आचार्यवरमुख्याद्वा भारद्वाजान्महाबलात् ॥ १७
अस्त्रैरस्त्राणि संवार्य क्रीडतः पुरुषोत्तमौ ।
चक्षूंषि सर्वभूतानां मोदयन्तौ महाबलौ ॥ १८
प्राजापत्यं तथैवैन्द्रमाग्नेयं च सुदारुणम् ।
कौबेरं वारुणं चैव याम्यं वायव्यमेव च ।
प्रयुञ्जानौ महात्मानौ समरे तौ विरेजतुः ॥ १९
विस्मितान्यथ भूतानि तौ दृष्ट्वा संयुगे तदा ।
साधु पार्थ महाबाहो साधु भीष्मेति चाब्रुवन् ॥२०
नैतदन्यो मनुष्येषु प्रदर्शयितुमाहवे ।
महास्त्राणां संप्रयोगं समरे भीष्मपार्थयोः ॥ २१
एवं सर्वास्त्रविदुषोरस्त्रयुद्धमवर्तत ॥ २२
अथ जिष्णुरुदावृत्य शितधारेण कार्मुकम् ।
न्यकृन्तद्गृध्रपत्रेण शातकुम्भपरिष्कृतम् ॥ २३
निमेषान्तरमात्रेण भीष्मोऽन्यत्कार्मुकं रणे ।
समादाय नरव्याघ्रः सज्यं चक्रे महाबलः ॥२४
शरांश्च सुबहून्क्रुद्धो मुमोचाशु धनंजये ।
अर्जुनोपि शरांस्तीक्ष्णान्भीष्माय निशितान्बहून् ।
चिक्षेप च महातेजास्तथा भीष्मश्च पाण्डवे ॥२५
तयोर्दिव्यास्त्रविदुषोरस्यतोरनिशं शरान् ।
न विशेषस्तदा राजन्दृश्यते सुमहात्मनोः ॥ २६
अथावृणोद्दश दिशः शरैरतिरथस्तदा ।
किरीटमाली कौन्तेयः शूरं शान्तनवं तथा ॥२७
अतीव पाण्डवो भीष्मं भीष्मश्चातीव पाण्डवम् ।
बभूव तत्र सङ्ग्रेऽस्मिन्लोके राजंस्तदद्भुतम् ॥ २८
पाण्डवेन हताः शूरा भीष्मस्य रथरक्षिणः ।
शेरते स्म महाबाहो कौन्तेयस्याभितो रथम् ॥२९
ततो गाण्डीवनिर्मुक्ता निरमित्रं चिकीर्षवः ।
असक्ताः पुङ्खसंसक्ताः श्वेतवाहनपत्रिणः ॥ ३०
निष्पतन्तो रथात्तस्य धौता हैरण्यवाससः ।
आकाशे प्रत्यदृश्यन्त हंसानामिव पङ्क्तयः ॥ ३१
तस्य तद्दिव्यमस्त्रं हि प्रगाढं चित्रमस्यतः ।
प्रेक्षन्ते सान्तरिक्षस्थाः सर्वे देवाः सवासवाः ॥३२
तं दृष्ट्वा परमप्रीतो गन्धर्वश्चित्रमद्भुतम् ।
शशंस देवराजाय चित्रसेनः प्रतापवान् ॥ ३३
पश्येमानरिनिर्दारान्संसक्तानिव गच्छतः ।
चित्ररूपमिदं जिष्णोर्दिव्यमस्त्रमुदीर्यतः ॥ ३४
नेदं मनुष्याः श्रद्दध्युर्न हीदं तेषु विद्यते ।
सौराणां च महास्त्राणां विचित्रोऽयं समागमः ॥३५

मध्यन्दिनगतं सूर्यं प्रतपन्तमिवाम्बरे ।
न शक्नुवन्ति सैन्यानि पाण्डवं प्रसमीक्षितुम् ॥३६
उभौ विश्रुतकर्माणावुभौ शूरौ महीक्षिताम् ।
उभौ विचित्रकर्माणावुभौ युधि दुरासदौ ॥ ३७
इत्युक्तो देवराजस्तु पार्थभीष्मसमागमम् ।
पूजयामास दिव्येन पुष्पवर्षेण भारत ॥ ३८
[*अश्वत्थामा ततोऽभ्येत्य द्रुतं कर्णमभाषत ।
अहमेको हनिष्यामि समेतान्सर्वपाण्डवान् ॥३९
इति कर्ण समक्षं मे सभामध्ये त्वयोदितम् ।
न तु तत्कृतमेकस्माद्भीतो धावसि सूतज ॥ ४०
वैचित्रवीर्यजाः सर्वे त्वामाश्रित्य पृथासुतान् ।
जेतुमिच्छन्ति संग्रामे भवान्युध्यस्व फल्गुनम् ॥४१
अश्वत्थामोदितं वाक्यं श्रुत्वा दुर्योधनस्तदा ।
प्रत्युवाच रुषा द्रौणिं कर्णप्रियचिकीर्षया ॥ ४२
मा मानभङ्गं विप्रेन्द्र कुरु विश्रुतकर्मणः ।
मानभङ्गेन राज्ञां तु बलहानिर्भविष्यति ॥ ४३
शूरा वदन्ति संग्रामे वाचा कर्माणि कुर्वते ।
पराक्रमन्ति संग्रामे स्वस्य वीर्यानुसारतः ॥ ४४
तस्मात्त्वं नार्हति भवान्गर्हितुं शूरसंमतम् ।
राज्ञैवमुक्तः स द्रौणिर्गतरोषोऽभवत्तदा ॥] ४५
ततो भीष्मः शान्तनवो बाणान्पार्श्वे समार्पयत् ।
अस्यतः प्रतिसन्धाय विवृतं सव्यसाचिनः ॥४६
ततः प्रसह्य बीभत्सुः पृथुधारेण कार्मुकम् ।
न्यकृन्तद्गृध्रपत्रेण भीष्मस्यामिततेजसः ॥ ४७
अथैनं दशभिः पश्चात्प्रत्यविध्यत्स्तनान्तरे ।
यतमानं पराक्रान्तं कुन्तीपुत्रो धनञ्जयः ॥ ४८
स पीडितो महाबाहुर्गृहीत्वा रथकूबरम् ।
गाङ्गेयो युधि दुर्धर्षस्तस्थौ दीप इवातुरः ॥ ४९
तं विसंज्ञमपोवाह संयन्ता रथवाजिनाम् ।
उपदेशमनुस्मृत्य रक्षमाणो महारथम् ॥ ५०
पराक्रमे च शौर्ये च वीर्ये सत्त्वे बले रणे ।
शस्त्रास्त्रेषु च सर्वेषु लाघवे दूरपातने ॥ ५१
यस्य नास्ति समो लोके पितृदत्तवरश्च यः ।
जितश्रमो जितारातिर्निस्तन्द्रिः खेदवर्जितः ।
यः स्वेच्छामरणः शूरः पितृशुश्रूषणे रतः ॥ ५२
दुर्योधनहितार्थाय युद्ध्वा पार्थेन संगरे ।
पृथासुतहितार्थाय पराजित इवाभवत् ॥ ५३

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

## चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

अर्जुनेन द्रोणादिपञ्चरथान्प्रत्यभियानम् ॥ १ ॥

वैशंपायन उवाच ।
भीष्मं विजित्य संग्रामे कुरूणां मिषतां रणे ।
ततो युद्धमनाः प्रायात्पार्थः पञ्च महारथान् ॥ १
आददानश्च नाराचान्विमृशन्निषुधी अपि ।
संस्पृशानश्च गाण्डीवं भूयः कर्ण समभ्यगात् ॥२
द्रौणिरुवाच ।
कर्ण यत्तत्सभामध्ये बह्वबद्धं प्रभाषसे ।
न मे युधि समोऽस्तीति तदिदं प्रत्युपस्थितम् ॥३
एषोऽन्तक इव क्रुद्धः सर्वभूतावमर्दनः ।
अदूरात्प्रत्युपस्थाय जृम्भते केसरी यथा ।
न पलायस्व शूरश्चेत्स्थित्वा युध्यस्व फल्गुनम् ॥४
कर्ण उवाच ।
नाहं बिभेमि बीभत्सोः कृष्णाद्वा देवकीसुतात् ।
पाण्डवेभ्योपि सर्वेभ्यः क्षत्रधर्ममनुव्रतः ॥ ५
सत्वाधिकानां शूराणां धनुर्वेदोपजीविनाम् ।
दर्शनाज्जायते दर्पः स्वरश्च न विषीदति ॥ ६
पश्यत्वाचार्यपुत्रो मामर्जुनेन समं युधि ।

गास्ता विजित्येति थ. ध. पाठः ॥ १ ॥

* इमे कुण्डलिताः श्लोकाः ध. पुस्तके वर्तन्ते ।

युध्यमानं सुसंयुक्तं दैवं तु दुरतिक्रमम् ॥ ७
अश्वत्थामोवाच ।
को दोषः कर्ण शूराणां वाचा साकं हि पौरुषम् ।
विद्यते यदि तल्लोके गुणोत्तरमिहोच्यते ॥ ८
युध्यस्व त्वमभीः पार्थ प्रपलायस्व मा रणात् ।
उक्तं वचः स्मरन्कर्ण नाहमित्यादि संयुगे ॥ ९
वैशंपायन उवाच ।
तं समन्ताद्रथाः पञ्च परिवार्य धनञ्जयम् ।
त इषून्सम्यगस्यन्तो मुमुक्षन्तोपि जीवितात् ॥१०
ते लाभमिव मन्वानाः क्षिप्रमार्च्छन्धनञ्जयम् ।
शरौघान्सम्यगस्यन्तो जीमूता इव वार्षिकाः ॥११
बहुभिर्निशितैर्बाणैर्विविधैर्लोमवापिभिः ।
आद्रवन्प्रत्यवस्थाय प्रत्यविध्यन्धनञ्जयम् ॥ १२
ततः प्रहस्य बीभत्सुः सर्वशस्त्रभृतांवरः ।
दिव्यमस्त्रं विकुर्वाणः प्रत्ययाद्रथसत्तमान् ॥ १३
यथा रश्मिभिरादित्यः प्रच्छादयति मेदिनीम् ।
एवं गाण्डीवनिर्मुक्तैः शरैः प्राच्छादयद्दिशः ॥१४
न रथानां न नागानां न ध्वजानां न वाजिनाम् ।
अविद्धं निशितैर्बाणैरासीद्व्यङ्गुलमन्तरम् ॥ १५
सर्वे शान्तिपरा योधाः स्वचित्तं नाभिजज्ञिरे ।
हस्तिनोऽश्वाश्च वित्रस्ता व्यवलीयन्त भारत ॥१६
यथा नलवनं नागः प्रभिन्नः षाष्टिहायनः ।
एवं सर्वानपामृद्नादर्जुनः शस्त्रतेजसा ॥ १७
गाण्डीवस्य तु घोषेण पृथिवी समकम्पत ।
मनांसि धार्तराष्ट्राणामप्यकृन्तद्धनञ्जयः ॥ १८
ततो विगाह्य सैन्यानां मध्यं शस्त्रभृतांवरः ।
सारथिं समरे शूरस्त्वभ्यभाषत वीर्यवान् ॥ १९
संनियम्य हयानेतान्मन्दं वाहय सारथे ।
आचार्यपुत्रं समरे योधयिष्येऽपराजितम् ॥ २०
पुरा ह्येष मया युक्तः स मे भवति पृष्ठतः ॥ २१
एवमुक्तेऽर्जुनेनासावश्वत्थामरथं प्रति ।
विराटपुत्रो जवनान्भृशमश्वानचोदयत् ॥ २२
कर्ण उवाच ।
एषोपयाति बीभत्सुर्व्यथितो गाढवेदनः ।
तं तु तत्रैव यास्यामि नासौ मुच्येत जीवितात् २३
द्रोण उवाच ।
नासौ भयेन निर्यातो महात्मा पाकशासनिः ।
नैवं भीता निवर्तन्ते न पुनर्गाढवेदनाः ॥ २४
यद्येनमभिसंरब्धं पुनरेवाभियास्यसि ।
बहून्यस्त्राणि जानीते न पुनर्मोक्ष्यते भवान् ॥२५
दिष्ट्या दुर्योधनो मुक्तो दिष्ट्या गावः पलायिताः ।
मुक्तो दिष्ट्या च संग्रामे किं रणेन करिष्यसि ॥ २६
क्रोशमात्रमपाक्रम्य बलमन्वानयामहे ।
अन्वागतबलाः पार्थं पुनरेवाभियास्यथ ॥ २७

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

## पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

अर्जुनेनोत्तरंप्रति भीष्मादिसकाशे रथप्रापणप्रेरणापूर्वकं तदाप्यायनाय स्वपराक्रमप्रकथनम् ॥ १ ॥ तदा दुःशासनादिपराभवनपूर्वकं भीष्मादिभिः सहायोधनम् ॥ २ ॥

वैशंपायन उवाच ।
कर्णं पराजितं दृष्ट्वा पार्थो वैराटिमब्रवीत् ।
एतं मां प्रापयेदानीं रथवृन्दं महारिणाम् ॥ १
यत्र शान्तनवो भीष्मः सर्वेषां नः पितामहः ।
सुयुद्धं काङ्क्षमाणो वै रथे तिष्ठति दंशितः ॥ २
तालो वै काञ्चनो यत्र वज्रवैडूर्यभूषितः ।
अतीव समरे भाति मातरिश्वप्रकम्पितः ॥ ३
दारुणं प्रहरिष्यामि रथवृन्दानि धन्विनाम् ।
आदास्याम्यहमेतेषां धनुर्ज्यावेष्टनानि च ॥ ४
अस्यन्तं दिव्यमस्त्राणि चित्रमुत्तर पश्यसि ॥ ५
शतह्रदां जृम्भमाणां मेघस्थां प्रावृषीव च ।
सुवर्णपृष्ठं गाण्डीवं पश्यन्तु कुरवो मम ॥ ६

पुरा ह्येष मया मुक्त इति ख. पाठः ॥ २१ ॥

दक्षिणेनाथ वामेन कतमेन स्विदस्यति ।
इति मां शत्रवः सर्वे न विज्ञास्यन्ति सारथे ॥७
अस्त्रोदकां हयावर्तां नागनक्रां रथह्रदाम् ।
नदीं प्रस्कन्दयिष्यामि परलोकापहारिणीम् ॥ ८
पाणिपादशिरःपृष्ठबाहुशङ्खचराचरम् ।
वनं कुरूणां छेत्स्यामि भल्लैः सन्नतपर्वभिः ॥ ९
तूणीशयाः सुपुङ्खाग्रा विशिखा दुन्दुभिस्वनाः ।
मया प्रमुक्ताः संग्रामे कुरून्धक्ष्यन्ति सायकाः १०
ध्वजवृक्षं शरतृणं नागाश्वश्वापदाकुलम् ।
रथसिंहगणैर्युक्तं धनुर्वल्लिसमाकुलम् ।
वनमादीपयिष्यामि कुरूणामस्त्रतेजसा ॥ ११
जयतो भारतीं सेनामेकस्य मम संयुगे ।
शतं मार्गा भविष्यन्ति पावकस्येव कानने ॥१२
मया चक्रमिवाविद्धं सैन्यं द्रक्ष्यसि केवलम् ।
तानहं रथनीडेभ्यः परलोकाय शात्रवान् ।
एकः प्रद्रावयिष्यामि चक्रपाणिरिवासुरान् ॥१३
असंभ्रान्तो रथे तिष्ठन्समेषु विषमेषु च ।
मार्गमावृत्य तिष्ठन्तमपि भेत्स्यामि पर्वतम् ॥ १४
अहमिन्द्रस्य संग्रामे द्विषतो बलदर्पितान् ।
मातलिं सारथिं कृत्वा निवातकवचान्रणे ।
हतवान्सर्वतः सर्वान्धावतो युध्यतस्तदा ॥ १५
निवातकवचान्हत्वा गाण्डीवास्त्रैः सहस्रशः ।
परं पारे समुद्रस्य हिरण्यपुरमारुजम् ॥ १६
हत्वा षष्टिसहस्राणि रथानामुग्रधन्विनाम् ।
पौलोमान्कालकेयांश्च समरे भृशदारुणान् ।
असुरानहनं घोरान्रौद्रेणास्त्रेण सारथे ॥ १७
अहमिन्द्राद्दृढां मुष्टिं ब्रह्मणः क्षिप्रहस्तताम् ।
प्रगाढनिपुणं चित्रमतिविद्धं प्रजापतेः ॥ १८
रौद्रं रुद्रादहं वेद्मि वारुणं वरुणादपि ।
सौर्यं सूर्यादहं वेद्मि याम्यं दण्डधरादपि ॥ १९
अस्त्रमाग्नेयमग्नेश्च वायव्यं मातरिश्वनः ।
अन्यैर्देवैरहं प्राप्तः को मां विषहते पुमान् ॥ २०
अद्य गाण्डीवनिर्मुक्तैःशरौघै रोमहर्षणैः ।
कुरूणां पातयिष्यामि रथवृन्दानि धन्विनाम् २१

वैशंपायन उवाच ।
एवमाश्वासितस्तेन वैराटिः सव्यसाचिना ।
व्यगाहत रथानीकं भीमं भीष्मस्य वाजिभिः ॥२२
रथिसिंहमनाधृष्यं जिगीषन्तं परात्रणे ।
अभ्यधावत्तदैवोग्रो ज्यां विकर्षन्धनञ्जयः ॥ २३
दुःशासनोऽभ्ययात्तूर्णमर्जुनं भरतर्षभ ॥ २४
अन्येऽपि चित्राभरणा युवानो मृष्टकुण्डलाः ।
अभ्ययुर्भीमधन्वानो मौर्वीं पर्यस्य बाहुभिः ॥२५
दुःशासनो विकर्णश्च वृषसेनो विविंशतिः ।
अभीता भीमधन्वानं पाण्डवं पर्यवारयन् ॥ २६
तस्य दुःशासनः षष्टिं वामपार्श्वे समार्पयत् ।
अस्यतः प्रतिसन्धाय कुन्तीपुत्रस्य धीमतः ॥ २७
पुनश्चैव स भल्लेन विद्ध्वा वैराटिमुत्तरम् ।
द्वितीयेनार्जुनं वीरं प्रत्यविध्यत्स्तनान्तरे ॥ २८
तस्य जिष्णुरुदावृत्य क्षुरधारेण कार्मुकम् ।
प्राकृन्तद्गृध्रपत्रेण जातरूपपरिष्कृतम् ॥ २९
अथैनं पञ्चभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ।
सोपयातो रथोपस्थात्पार्थबाणाभिपीडितः ॥ ३०
सर्वा दिशश्चाभ्यपतद्बीभत्सुरपराजितः ।
तं विकर्णः शरैस्तीक्ष्णैर्गृध्रपक्षैः शिलाशितैः ।
विव्याध परवीरघ्नमर्जुनं धृतराष्ट्रजः ॥ ३१
ततस्तमपि कौन्तेयः शरेण नतपर्वणा ।
ललाटेऽभ्यहनद्गाढं स विद्धः प्राद्रवद्भयात् ॥ ३२
ततः पार्थमुपाद्रुत्य दुस्सहः सविविंशतिः ।
अवाकिरच्छरैस्तीक्ष्णैः परीप्सन्भ्रातरं रणे ॥ ३३
तावुभौ गृध्रपत्राभ्यां निशिताभ्यां धनञ्जयः ।
विव्याध युगपद्व्यग्रस्तयोर्वाहानसूदयत् ॥ ३४
तौ हताश्वौ तु विद्धाङ्गौ धृतराष्ट्रात्मजावुभौ ।
अभिपत्य रथैरन्यैरपनीतौ पदानुगैः ॥ ३५
व्यद्रावयदशेषांश्च धृतराष्ट्रसुतांस्तदा ।
विद्राव्य च रणे पार्थो रणभूमिं व्यराजयत् ॥ ३६
किरीटमाली कौन्तेयो लब्धलक्षः प्रतापवान् ।
पातयन्नुत्तमाङ्गानि बाहूंश्च परिघोपमान् ॥ ३७
अशेरत महावीराः शतशो रुक्ममालिनः ॥ ३८

कमलदिनकरेन्दुसन्निभैः
सितदशनैः सुमुखाक्षिनासिकैः ।
रुचिरमकरकुण्डलैर्मही
पुरुषशिरोभिरथास्तृता बभौ ॥ ३९
सुनसं चारुदीप्ताक्षं क्लृप्तश्मश्रु स्वलंकृतम् ।
अदृश्यत शिरश्छिन्नमनेकं हेमकुण्डलम् ॥ ४०
एवं तत्प्रहतं सैन्यं समन्तात्प्रद्रुतं भयात् ॥ ४१
अथ दुर्योधनः कर्णः सौबलः शकुनिस्तदा ।
द्रोणश्च द्रोणपुत्रश्च कृपश्चातिरथो रणे ॥ ४२
सहिता विजयं तत्र योधयन्तो महारथाः ।
विष्फारयन्तश्चापानि बलवन्ति महाबलाः ॥ ४३
ततः कीर्णपताकेन रथेनादित्यवर्चसा ।
पुनरावृत्य मार्गस्थं ददृशुर्वानरध्वजम् ॥ ४४
ते महास्त्रैर्महेष्वासाः परिवार्य धनञ्जयम् ।
अभ्यवर्षन्सुसंक्रुद्धा महामेघा इवाचलम् ॥ ४५
शरौघान्सम्यगस्यन्तो जीमूता इव शारदाः ।
युद्धे तस्थुर्महावीर्याः प्रतपन्तः किरीटिनम् ॥ ४६
इषुभिर्बहुभिस्तूर्णं निशितैर्लोमवापिभिः ।
अदूरात्प्रत्यवस्थाय पाण्डवं समयोधयन् ॥ ४७
ततः प्रहस्य बीभत्सुस्तमैन्द्रं पञ्चवार्षिकम् ।
अस्त्रमादित्यसंकाशं गाण्डीवे समयोजयत् ॥ ४८
नाक्षाणां न च चक्राणां न रथानां न वाजिनाम् ।
अङ्गुलाद्व्यङ्गुलाद्वापि विवृतं प्रत्यदृश्यत ॥ ४९
यथा रश्मिभिरादित्यो वृणुते सर्वतो दिशम् ।
एवं किरीटिना मुक्तं सर्वं प्राच्छादयज्जगत् ॥ ५०
यथा बलाहके विद्युत्पावको वा शिलोच्चये ।
तथा गाण्डीवमभवचक्रायुधमिवाततम् ॥ ५१
यथा वर्षति पर्जन्यो विद्युत्पतति पर्वते ।
विस्फूर्जिता दिशः सर्वा ज्वलद्गाण्डीवमावृणोत् ॥
त्रस्ताश्च रथिनः सर्वे चैन्द्रमस्त्रं विकुर्वति ।
सर्वे शान्तिपरा योधाः स्वचित्तं नाभिजज्ञिरे ।
सहिता द्रोणभीष्माभ्यां प्रमोहगतचेतनाः ॥५३
तानि सर्वाणि सैन्यानि भग्नानि भरतर्षभ ।
प्राद्रवन्त दिशः सर्वा भयाद्वै सव्यसाचिनः ॥५४

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

## षट्षष्टितमोऽध्यायः ॥ ६६ ॥

अर्जुनेन भीतमुत्तरंप्रति समाश्वासनपूर्वकं दुर्योधनंप्रति रथयापनचोदना ॥ १ ॥ तथा स्वबाणाभिघातासहनेन पलायमानं तंप्रति सोपहासमाह्वानम् ॥ २ ॥

अर्जुन उवाच ।
दक्षिणामेव तु दिशं हयानुत्तर वाहय ।
पुरा सार्थी भवत्येषामयं शब्दोऽत्र तिष्ठताम् ॥१
अश्वत्थाम्नः प्रतिरथं प्राचीमुद्याहि सारथे ।
अचिराद्द्रष्टुमिच्छामि गुरुपुत्रं यशस्विनम् ॥ २
वैशंपायन उवाच ।
मोहयित्वा तु तान्सर्वान्धनुर्घोषेण पाण्डवः ।
प्रसव्यं चैवमावृत्य क्रोशार्धं प्राद्रवत्तदा ॥ ३
यथा सततगो वायुः सुपर्णश्चापि शीघ्रगः ।
तथा पार्थरथः शीघ्रमाकाशे पर्यवर्तत ॥ ४
मुहूर्तोपरते शब्दे प्रतियाते धनञ्जये ।
हस्त्यश्वरथपादातं पुरस्कृत्य महारथाः ॥ ५
द्रोणभीष्ममुखाः सर्वे सैन्यानां जघने ययुः ।
यत्ताः पार्थमपश्यन्तः सहिताः शरविक्षताः ॥ ६
सैनिका ऊचुः ।
दिष्ट्या दुर्योधनो मुक्तः सैन्यं भूयिष्ठमागतम् ।
क्रोशमात्रमतिक्रम्य बलमन्वानयामहे ।
यात यत्र वनं गुल्मं नदीमन्वश्मकां प्रति ॥ ७
वैशंपायन उवाच ।
अथ दुर्योधनो दृष्ट्वा भग्नं स्वं बलमाहवे ।
अमृष्यमाणः क्रोधेन प्रतिमार्गन्धनञ्जयम् ॥ ८
न्यवर्तत कुरुश्रेष्ठ स्वेनानीकेन संवृतः ।
वार्यमाणो दुराधर्षैर्भीष्मद्रोणकृपैर्भृशम् ॥ ९

वार्यमाणः परिवार्यमाणः ॥ ९ ॥

ततोऽर्जुनश्चित्रमुदारवेगं
समीक्ष्य गाण्डीवमुवाच वाक्यम् ।
भोगीन्द्रकल्पं भुवनेषु रूढ-
मभेद्यमच्छेद्यमदाह्यमाजौ ॥ १०
इदं त्विदानीमनयं कुरूणां
शिवं धनुः शत्रुनिबर्हणं च ।
अत्याशुगं वेगवदाशुकर्तृ
अवारणीयं महते रणाय ॥ ११
प्रदारणं शत्रुवरूथिनीना-
मनीकजित्संयति वज्रकल्पम् ।
वैधव्यदं शत्रुनितम्बिनीनां
सुखप्रदं कौरववंशजानाम् ॥ १२
प्रयाहि यत्रैष सुयोधनो हि
तं पातयिष्यामि शरैः सुतीक्ष्णैः ।
आचार्यपुत्रं च सुयोधनं च
पितामहं सूतसुतं च सङ्ख्ये ।
द्रोणं कृपं चैव निवार्य सर्वा-
ञ्शिरो हरिष्यामि सुयोधनस्य ॥ १३

वैशंपायन उवाच ।

तदुत्तरश्चित्रमुदारवेगं
धनुश्च दृष्ट्वा निशिताञ्शरांश्च ।
भीतोऽब्रवीदर्जुनमाजिमध्ये
नाहं तवाश्वान्विषहे नियन्तुम् ॥ १४
तमब्रवीन्मात्स्यसुतं प्रहस्य
गाण्डीवधन्वा द्विषतां निहन्ता ।
मया सहायेन कुतो भयं ते
प्रेह्युत्तराश्वानुपमन्त्रयस्व ॥ १५
आश्वासितस्तेन धनञ्जयेन
वैराटिरश्वानतुदज्जवेन ।
विष्फारयंस्तद्धनुरुग्रवेगं
युयुत्समानः पुनरेव जिष्णुः ॥ १६
गाण्डीवशब्देन तु तत्रतत्र
भूमौ निषेदुर्बहवोऽतिवेलम् ।
शङ्खस्य शब्देन तु वानरस्य
शब्देन ते योधवराः समन्तात् ॥ १७

अर्जुन उवाच ।

एषोऽतिमानी धृतराष्ट्रपुत्रः
सेनामुखे सर्वसमृद्धतेजाः ।
पराजयं नित्यममृष्यमाणो
निवर्तते युद्धमनाः पुरस्तात् ॥ १८
तमेव याहि प्रसमीक्ष्य युक्तः
सुयोधनं तत्र सहानुजं च ॥ १९

वैशंपायन उवाच ।

तमापतन्तं प्रसमीक्ष्य सर्वे
कुरुप्रवीराः सहसाऽभ्यगच्छन् ।
प्रहस्य वीरः स तु तानतीत्य
दुर्योधने द्वौ निचखान बाणौ ॥ २०
तेनार्दितो नाग इव प्रभिन्नः
पार्थेन विद्धो धृतराष्ट्रपुत्रः ।
युयुत्समानोऽतिरथेन सङ्ख्ये
स्वयं विगृह्यार्जुनमाससाद ॥ २१
स भीमधन्वानमुदग्रवेगो
धनञ्जयं शत्रुशतैरजेयम् ।
आकर्णपूर्णायतचोदितेन
भल्लेन विव्याध ललाटमध्ये ॥ २२
स तेन बाणेन समर्पितेन
जाम्बूनदाभेन सुसंहितेन ।
रराज पार्थो रुधिरं क्षरन्वै
यथैकरश्मिर्भगवान्दिवार्कः ॥ २३
अथास्य बाणेन विदारितस्य
प्रादुर्बभूवास्रमजस्रमुष्णम् ।
सा तस्य जाम्बूनदपुष्पचित्रा
मालेव धाराऽभिविराजते स्म ॥ २४
स तेन बाणाभिहतस्तरस्वी
दुर्योधनेनोद्धतमन्युवेगः ।
शरानुपादाय विषाग्निकल्पा-
न्विव्याध राजानमदीनसत्वः ॥ २५
दुर्योधनश्चापि तमुग्रतेजाः
पार्थश्च दुर्योधनमेकवीरः ।

अन्योन्यमाजौ पुरुषप्रवीरौ
समं समाजग्मतुराजमीढौ ॥ २६
ततः प्रभिन्नेन महागजेन
महीधराभेन पुनर्विकर्णः ।
रथैश्चतुर्भिर्गजपादरक्षैः
कुन्तीसुतं पाण्डवमभ्यधावत् ॥ २७
तमापतन्तं त्वरितं गजेन्द्रं
धनञ्जयः कुम्भललाटमध्ये ।
आकर्णपूर्णेन दृढायसेन
बाणेन विव्याध भृशं तु वीरः ॥ २८
पार्थेन सृष्टः स तु गृध्रपत्रो
ह्यापुङ्खदेशं प्रविवेश नागम् ।
विदार्य शैलप्रवरप्रकाशं
यथाऽशनिः पर्वतमिन्द्रसृष्टः ॥ २९
शरप्रतप्तः स तु नागराजः
प्रवेपिताङ्गो व्यथितान्तरात्मा ।
संसीदमानो निपपात भूमौ
वज्राहतं शृङ्गमिवाचलस्य ॥ ३०
निपातिते दन्तिवरे पृथिव्यां
त्रासाद्विकर्णः सहसाऽवतीर्य ।
तूर्णं पदान्यष्टशतानि गत्वा
विविंशतेः स्यन्दनमारुरोह ॥ ३१
निहत्य नागं तु शरेण तेन
वज्रोपमेनाद्रिवरप्रकाशम् ।
तथाविधेनैव शरेण पार्थो
दुर्योधनं वक्षसि निर्बिभेद ॥ ३२
हते गजे राजनि चैव भिन्ने
भग्ने विकर्णे च सपादरक्षे ।
गाण्डीवमुक्तैर्विशिखैः प्रभिन्ना-
स्ते योधमुख्याः सहसा प्रजग्मुः ॥ ३३
दृष्ट्वैव बाणेन हतं च नागं
योधांश्च सर्वान्नृपतिर्निरीक्ष्य ।
रथं समावृत्य कुरुप्रवीरो
रणात्प्रदुद्राव यतो न पार्थः ॥ ३४

तं भीतरूपं त्वरितं व्रजन्तं
दुर्योधनं शत्रुगणावमर्दी ।
अन्वाह्वयद्योद्धुमनाः किरीटी
बाणाभिविद्धं रुधिरं वमन्तम् ॥ ३५
तस्मिन्महेष्वासवरेऽतिविद्धे
धनञ्जयेनाप्रतिमेन युद्धे ।
सर्वाणि सैन्यानि भयार्दितानि
त्रासं ययुः पार्थमुदीक्ष्य तानि ॥ ३६
ततस्तु ते शान्तिपराश्च सर्वे
दृष्ट्वाऽर्जुनं नागमिव प्रभिन्नम् ।
उच्चैर्नदन्तं बलमत्तमाजौ
मध्ये स्थितं सिंहमिवर्षभाणाम् ॥ ३७
गाण्डीवशब्देन तु पाण्डवस्य
योधा निपेतुः सहसा रथेभ्यः ।
भयार्दिताः पार्थशराभितप्ताः
सिंहाभिपन्ना इव वारणेन्द्राः ॥ ३८
संरक्तनेत्रः पुनरिन्द्रकर्मा
वैकर्तनं द्वादशभिः पृषत्कैः ।
वित्रास्य तेषां द्रवतां समैक्ष-
द्दुःशासनं चैकरथेन पार्थः ॥ ३९
कर्णोऽब्रवीत्पार्थशराभितप्तो
दुर्योधनं दुष्प्रसहं च दृष्ट्वा ।
दृष्टोऽर्जुनोऽयं प्रतियाम शीघ्रं
श्रेयो विधास्याम इतो गतेन ॥ ४०
मन्ये त्वया तात कृतं च कार्यं
यदर्जुनोऽस्माभिरिहाद्य दृष्टः ।
भूयो वनं गच्छतु सव्यसाची
पश्यामि पूर्णं समयं न तेषाम् ॥ ४१
वैशंपायन उवाच ।
शरार्दितास्ते युधि पाण्डवेन
प्रसस्रुरन्योन्यमथाह्वयन्तः ।
कर्णोऽब्रवीदापतत्येष जिष्णु-
र्दुर्योधनं संपरिवार्य यामः ॥ ४२
सर्वास्त्रविद्वारणयूथपाभः
काले प्रहर्ता युधि शात्रवाणाम् ।

अयं च पार्थः पुनरागतो नो
मूलं च रक्ष्यं भरतर्षभाणाम् ॥ ४३
समीक्ष्य पार्थं तरसाऽऽपतन्तं
दुर्योधनः कालमिवात्तशस्त्रम् ।
भयार्तरूपः शरणं प्रपेदे
द्रोणं च कर्णं च कृपं च भीष्मम् ॥ ४४
तं भीतरूपं शरणं व्रजन्तं
दुर्योधनं शत्रुसहो निषङ्गी ।
इत्यब्रवीत्प्रीतमनाः किरीटी
बाणाभितप्तं रुधिरं वमन्तम् ॥ ४५
विहाय कीर्तिं च यशश्च लोके
युद्धात्परावृत्य पलायसे किम् ।
न नन्दयिष्यन्ति तवाहतानि
तूर्याणि युद्धादवरोपितस्य ॥ ४६
न भोक्ष्यसे सोऽद्य महीं समग्रां
यानानि वस्त्राण्यथ भोजनानि ।
कल्याणगन्धीनि च चन्दनानि
युद्धात्परावृत्य तु भोक्ष्यसे किम् ।
सुवर्णमाल्यानि च कुण्डलानि
हारांश्च वैडूर्यकृतोपधानान् ॥ ४७
च्युतस्य युद्धान्न तु शङ्खशब्दा-
स्तथा भविष्यन्ति तवाद्य पाप ।
न भोगहेतोर्वरचन्दनं च
स्त्रियश्च मुख्या मधुरप्रलापाः ।
युद्धात्प्रयातस्य नरेन्द्रसूनो
परे च लोके फलिता न चेह ॥ ४८
युधिष्ठिरस्यासि निदेशकारी
पार्थस्तृतीयो युधि च स्थिरोसि ।
तदर्थमावृत्य मुखं प्रयच्छ
नरेन्द्रवृत्तं स्मर धार्तराष्ट्र ॥ ४९
मोघं तवैतद्भुवि नामधेयं
दुर्योधनेतीह कृतं पुरस्तात् ।
दुर्योधनस्त्वं प्रथितोसि नाम्ना
सुयोधनः सन्निकृतिप्रधानः ।
नहीह दुर्योधनता तवाद्य
पलायमानस्य रणं विहाय ॥ ५०
न ते पुरस्तादथ पृष्ठतो वा
पश्यामि दुर्योधन रक्षितारम् ।
परीप्स युद्धेन कुरुप्रवीर
प्राणान्मया बाणबलाभितप्तान् ॥ ५१

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

## सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

सोपहासमर्जुनसमाहूतेन दुर्योधनेन पुनः परावृत्याभियानम् ॥ १ ॥ भीष्मादिभिस्तद्रक्षणाय परितोऽवस्थानम् ॥ २ ॥ अर्जुनेन तैः सह चिरं प्रयुध्य पश्चात्संमोहनास्त्रप्रयोगः ॥ ३ ॥ उत्तरेणार्जुनचोदनयाऽस्त्रमोहितानां द्रोणादीनां वस्त्रापहरणम् ॥ ४ ॥ अर्जुनेन बाणैर्भीष्माद्यभिवादनम् ॥ ५ ॥

वैशंपायन उवाच ।
आहूयमानस्तु स तेन सङ्ख्ये
महात्मना वै धृतराष्ट्रसूनुः ।
निवर्तितस्त्रापि गिराङ्कुशेन
गजो मदोन्मत्त इवाङ्कुशेन ॥ १
सोमृष्यमाणो वचसाऽभिमृष्टो
महारथेनातिरथस्तरस्वी ।
ततः स पर्याववृते रथेन
भोगी यथा पादतलाभिमृष्टः ॥ २
ततो दुर्योधनः क्रुद्धो विक्षिपन्धनुरुत्तमम् ।
धृतिं कृत्वा सुविपुलां प्रत्युवाच धनञ्जयम् ॥ ३
सोहमिन्द्रादभिक्रुद्धान्न बिभेमीह भारत ।
भुक्त्वा सुविपुलं राज्यं वित्तानि च सुखानि च ।
किमर्थं युद्धसमये पलायिष्ये नरोत्तम ॥ ४

---

सुयोधनस्त्वं निकृतिप्रधान इति ख. पाठः ॥ ५० ॥

षट्षष्टितमोऽध्यायः ॥ ६६ ॥

एवमुक्त्वा महाराजः प्रत्ययुध्यत भारत ।
संन्यवर्तत शीघ्राश्वस्तोत्रार्दित इव द्विपः ॥ ५
आक्रान्तभोगस्तेजस्वी धनुर्वेक्र इवोरगः ।
रथं रथेन संगम्य योधयामास पाण्डवम् ॥ ६

तं प्रेक्ष्य कर्णः परिवर्तमानं
निवृत्य संस्तम्भितसर्वगात्रम् ।
दुर्योधनं दक्षिणतोऽन्वरक्ष-
त्पार्थान्महाबाहुरधिज्यधन्वा ॥ ७
गान्धारराजः शकुनिर्निवृत्य
द्रौणिश्च सर्वास्त्रविदां वरिष्ठः ।
ररक्षतुः कौरवमभ्युपेत्य
पार्थान्नृवीरौ युधि सव्यतश्च ॥ ८
भीष्मस्ततः शान्तनवो विवृत्य
हिरण्यकक्ष्यांस्त्वरया तुरंगान् ।
दुर्योधनं पश्चिमतो ररक्ष
पार्थान्महाबाहुरधिज्यधन्वा ॥ ९
द्रोणः कृपश्चैव विविंशतिश्च
दुःशासनश्चैव निवृत्य शीघ्रम् ।
सर्वे पुरस्तात्प्रणिधाय बाणा-
न्दुर्योधनार्थं त्वरिताऽभ्युपेयुः ॥ १०
सर्वाण्यनीकानि निवर्तितानि
संप्रेक्ष्य पूर्णौघनिभानि पार्थः ।
हंसो महामेघमिवापतन्तं
धनञ्जयः प्रत्यपतत्तरस्वी ॥ ११
ते सर्वतः संपरिवार्य पार्थ-
मस्त्राणि दिव्यानि समाददानाः ।
ववर्षुरभ्येत्य शरैः समग्रै-
र्मेघा यथा भूधरमम्बुवेगैः ॥ १२
ततोऽस्त्रमस्त्रेण निवार्य तेषां
गाण्डीवधन्वा कुरुपुङ्गवानाम् ।
संमोहनं शत्रुसहोऽन्यदस्त्रं
प्रादुश्चकारैन्द्रमवारणीयम् ॥ १३
ततो दिशश्चानुदिशो निवार्य
शरैः सुघोरैर्निशितैः सुपुङ्खैः ।
गाण्डीवशब्देन मनांसि तेषां
महाबलः प्रव्यथयांचकार ॥ १४
ततः पुनर्भीमरवं निगृह्य
दोर्भ्यां महाशङ्खमुदारघोषम् ।
व्यनादयन्संप्रदिशो दिशः खं
भुवं च पार्थो द्विषतां निहन्ता ॥ १५
संमोहनास्त्रप्रभवैः शरौघै-
र्विनष्टदेहाश्च निपत्य योधाः ।
निःसत्ववेगाः कुरुराजसैन्याः
कुड्योपमास्तस्थुरनीहमानाः ॥ १६
ते शङ्खनादेन कुरुप्रवीराः
संमोहिताः पार्थसमीरितेन ।
उत्सृज्य चापानि दुरासदानि
सर्वे तदा मोहपरा बभूवुः ॥ १७
ततो विसंज्ञानि परेषु पार्थः
संस्मृत्य संदेशमथोत्तरायाः ।
निर्याहि वाहादिति मात्स्यपुत्र-
मुवाच यावत्कुरवो विसंज्ञाः ॥ १८
आचार्यशारद्वतयोः सुशुक्ले
कर्णस्य पीतं रुचिरं च वस्त्रम् ।
द्रौणेश्च राज्ञश्च तथैव नीले
वस्त्रे समादत्स्व नरप्रवीर ॥ १९
भीष्मस्य संज्ञां तु तथैव मन्ये
जानाति मेऽस्त्रप्रतिघातमेषः ।
एतस्य वाहान्कुरु सव्यतस्त्व-
मेवं प्रयातव्यममूढसंज्ञैः ॥ २०
रश्मीन्समुत्सृज्य ततो महात्मा
रथादवप्लुत्य विराटपुत्रः ।
वस्त्राण्युपादाय महारथानां
नानाविधान्यद्भुतवर्णकानि ॥ २१

पूर्णौघनिभानि पूर्णनदीप्रवाहसदृशानि॥११॥ अनीहमानाः अचेष्टमानाः॥१६॥यावद्विसंज्ञास्तावन्निर्याहीत्यध्याहारेण योजना ॥ १८ ॥ आदत्स्व गृहाण ॥ १९ ॥ अमूढसंज्ञैः अस्माभिरिति शेषः । सव्यतस्त्वमेवं हि धर्ममाहुर्जितस्येति ध. पाठः॥ २०॥

महान्ति चीनांशुदुकूलकानि
पट्टांशुकानि विविधानि मनोज्ञकानि ।
हारांश्च राज्ञां मणिभूषणानि
सुवर्णनिष्काभरणानि मारिष ॥ २२
माणिक्यबाह्वङ्गदकङ्कणानि
अन्यानि राज्ञां मणिभूषणानि ।
वस्त्राण्युपादाय महारथानां
तूर्णं पुनः स्वं रथमारुरोह ॥ २३
राज्ञश्च सर्वान्कृतसंनिकाशा-
न्संमोहनास्त्रेण विसंज्ञकल्पान् ।
नासाग्रविन्यस्तकराङ्गुलीकः
पार्थो जहास स्मयमानचेताः ॥ २४
ततोऽन्वशात्तांश्चतुरः सदश्वा-
न्पुत्रो विराटस्य हिरण्यकक्ष्यान् ।
ते तद्व्यतीयुर्द्विषतामनीकं
श्वेता वहन्तोऽर्जुनमाजिमध्यात् ॥ २५
तथा प्रयान्तं पुरुषप्रवीरं
भीष्मः शरैरभ्यहनत्तरस्वी ।
स चापि भीष्मस्य हयान्निहत्य
विव्याध भीष्मं दशभिः पृषत्कैः ॥ २६
ततोऽर्जुनो भीष्ममपास्य युद्धे
विद्ध्वाऽस्य यन्तारमरिष्टधन्वा ।
तस्थौ विमुक्तो रथवृन्दमध्या-
द्राहुं विदार्येव सहस्ररश्मिः ॥ २७
लब्ध्वा तु संज्ञां पुरुषप्रवीरः
पार्थं निरीक्ष्याथ महेन्द्रकल्पम् ।
रणात्प्रमुक्तं पुरुषप्रवीरं
स धार्तराष्ट्रस्त्वरितो बभाषे ॥ २८
अयं कथंचिद्भवतो विमुक्त-
स्तं वै प्रबध्नीत यथा न मुच्येत् ।
तमब्रवीच्छान्तनवः प्रहस्य
क्व ते गता बुद्धिरभूत्क्व वीर्यम् ॥ २९
शान्तिं परां प्राप्य यथा स्थितस्त्व-
मुत्सृज्य बाणांश्च धनुश्च चित्रम् ।
न त्वेव बीभत्सुरलं नृशंसं
कर्तुं न पापेऽस्य मनो निविष्टम् ॥ ३०
जह्यान्न धर्मं त्रिदिवस्य हेतोः
सर्वे तु तस्मान्न हता रणेऽस्मिन् ।
क्षिप्रं कुरून्याहि कुरुप्रवीर
विजित्य गाश्च प्रतियातु पार्थः ॥ ३१
संमोहनास्त्रप्रतिमोहिताः स्थ
यूयं न जानीथ धनापहारम् ।
पश्यामि वस्त्राभरणानि राज-
न्विराटपुत्रेण समाहृतानि ॥ ३२
नृपेषु सर्वेषु च मोहितेषु
हन्तुं यदीच्छेत्स हनिष्यतीति ।
तदा तु धर्मात्मतया नृवीरो
न चाहनद्वो बलभित्तनूजः ॥ ३३
भाग्येन युष्मानवधीन्न पार्थः
संधिं कुरूणामनुमन्यमानः ।
तद्यात यूयं सहसैनिकैस्तै-
र्हतावशिष्टैर्गजसाह्वयं पुरम् ॥ ३४
वैशंपायन उवाच ।
दुर्योधनस्तस्य निशम्य वाक्यं
पितामहस्यात्महितं प्रशस्य ।
अतीतकामो युधि सोऽत्यमर्षी
राजा विनिश्वस्य बभूव तूष्णीम् ॥ ३५
तद्भीष्मवाक्यं हि निशम्य सर्वे
धनञ्जयाग्निं च विवर्धमानम् ।
निवर्तनायैव मतिं निदध्यु-
र्दुर्योधनं तं परिरक्षमाणाः ॥ ३६
तान्प्रस्थितान्प्रीतमनाः समर्थो
धनञ्जयः सर्वकुरुप्रवीरः ।
आमन्त्र्य वीरोऽनुययौ मुहूर्तं
गाण्डीवघोषेण विनद्य लोकम् ॥ ३७
तेषामनीकानि निरीक्ष्य पार्थो
विकीर्णयानध्वजकार्मुकाणि ।

कृतसंनिकाशान् कृतं कृतकं प्रतिमादि निश्चेष्टतया तत्सदृशा-नित्यर्थः ॥ २४ ॥

गाण्डीवधन्वा प्रहसन्कुरूणां
शङ्खं प्रदध्मौ बलवान्बलेन ॥ ३८
ते शङ्खशब्दं तुमुलं निशम्य
ध्वजस्य शब्दं च ततोऽन्तरिक्षे ।
गाण्डीवशब्देन मुहुर्मुहुस्ते
भीता ययुः सर्वधनं विहाय ॥ ३९
तानर्जुनो दूरतरं विभज्य
धनं च सर्वं निखिलं निवर्त्य ।
आपृच्छ्य तान्दूरमनुप्रयात्वा
धनञ्जयस्तत्र कुरून्महात्मा ।
गुरूंश्च सर्वानभिवाद्य बाणै-
र्न्यवर्ततोदग्रमनाः शरैः सह ॥ ४०
पितामहं शान्तनवं महात्मा
द्वाभ्यां शराभ्यामभिवाद्य वीरः ।
द्रोणं कृपं चैव कुरूंश्च मान्या-
ञ्शरैश्च सर्वानभिवाद्य सङ्ख्ये ।
दुर्योधनस्योत्तमरत्नचित्रं
चिच्छेद पार्थो मकुटं शरौघैः ॥ ४१
अराजवंशस्य किमर्थमेत-
न्नित्यं न धार्यं मकुटं त्वयेति ।
संपातितं भूमितले सरत्नं
प्रीतस्ततो मात्स्यसुतो बभूव ॥ ४२
धनञ्जयं नागमिव प्रभिन्नं
विजित्य शत्रून्परिवर्तमानम् ।
गास्ता विजित्याभिमुखं प्रयान्तं
न शक्नुवन्तः कुरवः प्रयाताः ॥ ४३
धनञ्जयं सिंहमिवात्तशस्त्रं
गा वै विजित्याभिमुखं प्रयान्तम् ।
उदीक्षितुं पार्थिवास्ते न शेकु-
र्यथैव मध्याह्नगतं हि सूर्यम् ॥ ४४
रक्तानि वासांसि च तानि गृह्य
रणोत्कटो नाग इव प्रभिन्नः ।
जित्वा च वैराटिमुवाच पार्थः
प्रहृष्टरूपो रथिनां वरिष्ठः ॥ ४५
आवर्तयाश्वान्पशवो जितास्ते
याताः परे प्रैहि पुरं प्रहृष्टः ।
उद्घुष्यतां ते विजयोऽद्य शीघ्रं
गात्रं तु ते सेवतु माल्यगन्धः ।
माता तु ते नन्दतु बान्धवाश्च
त्वामद्य दृष्ट्वा समुदीर्णहर्षम् ॥ ४६

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

## अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

अर्जुनेनोत्तरंप्रति युधिष्ठिरादितत्वप्रकाशनप्रतिषेधनम् ॥ १ ॥ तथा श्मशानमेत्य शमीतरौ गाण्डिवादिनिधानपूर्वकं पुनर्बृहन्नलावेषपरिग्रहेण सारथ्यकरणम् ॥ २ ॥ उत्तरेणार्जुनचोदनया स्वजयोद्घोषणाय नगरंप्रति दूतप्रेषणम् ॥ ३ ॥

वैशंपायन उवाच ।
ततो विजित्य संग्रामे कुरुगोवृषभेक्षणः ।
समानयामास तदा विराटस्य धनं महत् ॥ १
गतेषु च प्रभग्नेषु धार्तराष्ट्रेषु सर्वशः ।
वनान्निष्क्रम्य गहनाद्बहवः कुरुसैनिकाः ।
भयात्संत्रस्तमनसः समाजग्मुस्ततस्ततः ॥ २
मुक्तकेशाः प्रदृश्यन्ते स्थिताः प्राञ्जलयस्तदा ।
क्षुत्पिपासापरिश्रान्ता विदेशस्था विचेतसः ।
ऊचुः प्राञ्जलयः सर्वे पार्थ किं करवामहे ॥ ३
प्राणानन्तर्मनोयातान्प्रयाचिष्यामहे वयम् ।
वयं चार्जुन ते दासा ह्यनुरक्ष्या ह्यनाथकाः ॥ ४
अर्जुन उवाच ।
अनाथान्दुःखितान्दीनान्कृशान्वृद्धान्पराजितान् ।
न्यस्तशस्त्रान्निराशांश्च नाहं हन्मि कृताञ्जलीन् ॥ ५
भवन्तो यान्तु विस्रब्धा निर्भया अमृता यथा ।
मम पादरजोलक्ष्म्या जीवन्तु सुचिरं भुवि ॥ ६

स्मित्वा च वैराटिमुवाचेति पाठान्तरम् ॥ ४५ ॥

तस्य तामभयां वाचं श्रुत्वा योधाः समागताः ।
आयुःकीर्तियशोभिस्ते तमाशीर्भिरवर्धयन् ॥ ७
ततो निवृत्ताः कुरवो भग्नाश्च दिवमास्थिताः ।
प्रयाताः सर्वतस्तत्र नमस्कृत्य धनञ्जयम् ॥ ८
एवं दत्ताभयास्तेन ततो याताः कुरून्प्रति ॥ ९
स कर्म कृत्वा परमार्यकर्मा
निहत्य शत्रून्द्विषतां निहन्ता ।
यातो महामेघ इवातपान्ते
विद्राव्य पार्थः कुरुसैन्यमेकः ॥ १०
तं मात्स्यपुत्रं द्विषतां निहन्ता
वचोऽब्रवीत्संपरिगृह्य राजन् ॥ ११
पितुः सकाशे तव तात सर्वे
वसन्ति पार्था विदितं त्वयेति ।
तान्मास्म शंसीर्नगरं प्रविश्य
भीतः प्रणश्येत्स च मत्स्यराजः ॥ १२
मया जिता सा ध्वजिनी कुरूणां
मया हि गावो विजिता द्विषद्भ्यः ।
एवं तु कामं नगरं प्रविश्य
त्वमात्मना कर्म कृतं ब्रवीहि ॥ १३
उत्तर उवाच ।
यत्ते कृतं कर्म न वारणीयं
तत्कर्म कर्तुं मम नास्ति शक्तिः ।
न त्वां प्रवक्ष्यामि पितुः सकाशे
यावन्न मां वक्ष्यसि सव्यसाचिन् ॥ १४
वैशंपायन उवाच ।
स शत्रुसेनां तरसा विजित्य
आच्छिद्य सर्वं तु धनं कुरूणाम् ।
श्मशानमागम्य पुनः शमीं ता-
मभ्येत्य तस्थौ शरविक्षताङ्गः ॥ १५
ततः स वह्निप्रतिमो महाकपिः
सहैव भूतैर्दिवमुत्पपात ।
तथा च माया विहिता बभूव सा
ध्वजं च सिंहं युयुजे रथे पुनः ॥ १६
निधाय तच्चायुधमाजिमर्दनः
कुरूत्तमानामिषुधीन्ध्वजांस्तथा ।
प्रायात्स मात्स्यो नगरं प्रवेष्टुं
किरीटिना सारथिना महात्मा ॥ १७
पार्थश्च कृत्वा परमार्यकर्म
निहत्य शत्रून्द्विषतां निहन्ता ।
विधाय भूयश्च तथैव वेषं
जग्राह रश्मीन्पुनरुत्तरस्य ।
बृहन्नलारूपमथो विधाय
प्रायात्स मात्स्यो नगरं प्रवेष्टुम् ॥ १८
वैशंपायन उवाच ।
ततो निवृत्ताः कुरवः प्रभग्नाः शममास्थिताः ।
परस्परमवेक्ष्यैव जग्मुस्ते हृतवाससः ॥ १९
पन्थानमुपसंगम्य फल्गुनो वाक्यमब्रवीत् ।
राजपुत्र प्रपद्यस्व धनानीमानि सर्वशः ।
गोकुलानि महाबाहो वीरगोपालकैः सह ॥ २०
ततोऽपराह्णे यास्यामो विराटनगरं प्रति ।
आश्वास्य पाययित्वा च परिप्लाव्य च वाजिनः २१
गच्छन्तु त्वरितं दूता गोपालाः प्रेषितास्त्वया ।
नगरे प्रियमाख्यातुं घोषयन्तु च ते जयम् ॥२२
उत्तरस्त्वरमाणोऽथ दूतानाज्ञापयत्ततः ।
वचनादर्जुनस्यैव ह्याचक्षध्वं जयं मम ॥ २३
मया जिता सा ध्वजिनी कुरूणां
मया च गावो विजिता द्विषद्भ्यः ।
एवं तु कामं नगरं प्रविश्य
मयाऽऽत्मना कर्म कृतं ब्रवीत ॥ २४

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

## एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

विराटेन युधिष्ठिरादिभिः सह सुशर्मादिजयानन्तरं पुरंप्रत्यागमनम् ॥ १ ॥ तथा उत्तरस्य कुरुविजयाय सहबृहन्नलया गमनश्रवणेन तद्रक्षणाय सेनाचोदना ॥ २ ॥ अत्रान्तरे विराटाय दूतैरुत्तरजयनिवेदनम् ॥ ३ ॥

वैशंपायन उवाच ।
स विजित्य धनं चापि विराटो वाहिनीपतिः ।
प्राविशन्नगरं हृष्टश्चतुर्भिः सह पाण्डवैः ॥ १
जित्वा त्रिगर्तान्संग्रामे गाश्चैवानाय्य केवलाः ।
अशोभत महाराजः सह पार्थैः श्रिया वृतः ॥ २
तमासनगतं वीरं सुहृदां प्रीतिवर्धनम् ।
उपतस्थुः प्रकृतयः समन्ताद्ब्राह्मणैः सह ॥ ३
सभाजितः सभासद्भिः प्रतिनन्द्य स मत्स्यराट् ।
विसर्जयामास तदा द्विजांश्च प्रकृतीस्तथा ॥ ४
ततः स राजा मात्स्यानां विराटो वाहिनीपतिः ।
प्रविश्यान्तःपुरं रम्यं स्त्रीशतैरुपशोभितम् ।
उत्तरं तत्र नापश्यत्क यात इति चाब्रवीत् ॥ ५
आचख्युस्तत्र संहृष्टाः स्त्रियः कन्याश्च वेश्मनि ।
अन्तःपुरचराश्चैव कुरुभिर्गोधनं हृतम् ॥ ६
ताञ्जेतुमभिसंरब्ध एक एवातिसाहसात् ।
बृहन्नलासहायश्च निर्यातः पृथिवींजयः ॥ ७
उपयातानतिरथान्द्रोणं शान्तनवं कृपम् ।
कर्णं दुर्योधनं चैव द्रोणपुत्रं च षड्रथान् ॥ ८
ततो विराटः परमाभितप्तः
पुत्रं निशम्यैकरथेन यातम् ।
बृहन्नलासारथिमाजिमर्दनं
प्रोवाच सर्वानथ मन्त्रिमुख्यान् ॥ ९
गवां शतसहस्राणि अभिभूय ममात्मजम् ।
कुरवः कालयन्ति स सर्वे युद्धविशारदाः ॥ १०
तस्माद्गच्छन्तु मे योधा बलेन महता वृताः ।
उत्तरस्य परीप्सार्थं ये त्रिगर्तैरविक्षताः ॥ ११
वैशंपायन उवाच ।
हयांश्च नागांश्च रथांश्च शीघ्रं
वादित्रसङ्घांश्च ततः प्रभूतान् ।
प्रस्थापयामास सुतस्य हेतो-
र्विचित्रचित्राभरणोपपन्नान् ॥ १२
एवं स राजा मात्स्यानां महानक्षोहिणिपतिः ।
व्यादिदेशाथ स क्षिप्रं वाहिनीं चतुरङ्गिणीम् ॥ १३
कुमारमाशु जानीत यदि जीवति वा नवा ।
यस्य यन्ता गतः षण्डो मन्येऽहं स न जीवति ॥ १४
तमब्रवीद्धर्मसुतो विराट-
मार्तं विदित्वा कुरुभिः प्रतप्तम् ।
बृहन्नला सारथिश्चेन्नरेन्द्र
परे न नेष्यन्ति तवाद्य गाश्च ॥ १५
सर्वान्महीपान्सहितान्कुरूंश्च
तथैव देवासुरनागयक्षान् ।
अलं विजेतुं समरे सुतस्ते
अनुष्ठितः सारथिना हि तेन ॥ १६
सर्वथा कुरवश्चापि ये चान्ये वसुधाधिपाः ।
त्रिगर्तान्निर्जिताञ्श्रुत्वा न स्थास्यन्ति कथंचन १७
वैशंपायन उवाच ।
अथोत्तरेण प्रहिता दूतास्ते शीघ्रगामिनः ।
विराटनगरं प्राप्य जयं प्रावेदयंस्तदा ॥ १८
राजानं वृतमाचख्युर्मन्त्रिभिर्जयमुत्तमम् ।
पराजयं कुरूणां च उपायान्तं तथोत्तरम् ॥ १९
सर्वा विनिर्जिता गावः कुरवश्च पराजिताः ।
उत्तरः सह सूतेन कुशली च परंतपः ॥ २०
कङ्क उवाच ।
दिष्ट्या ते निर्जिता गावः कुरवश्च पराजिताः ।
दिष्ट्या ते विजयी पुत्रः श्रूयते पार्थिवर्षभ ॥ २१
नाद्भुतं त्विह मन्येऽहं यत्ते पुत्रोऽजयत्कुरून् ।
ध्रुव एव जयस्तस्य यस्य यन्ता बृहन्नला ॥ २२
देवेन्द्रसारथिश्चैव मातलिः ख्यातविक्रमः ।
कृष्णस्य सारथिश्चैव न बृहन्नलया समौ ॥ २३

वैशंपायन उवाच ।
ततो विराटो नृपतिः संप्रहृष्टतनूरुहः ।
श्रुत्वा तु विजयं तस्य कुमारस्यामितौजसः ।
संतोषयित्वा दूतांस्तान्धनरत्नैश्च सर्वशः ॥ २४
गते त्वनुजने तस्मिन्दूतवाक्यं निशम्य च ।
उत्तरस्य जयात्प्रीतो विराटः प्रत्यभाषत ॥ २५
राजमार्गाः क्रियन्तां वै पताकाभिरलंकृताः ।
पुष्पोपहारैरर्च्यन्तां देवताश्चापि सर्वशः ॥ २६
कुमारा योधमुख्याश्च गणिकाश्च स्वलंकृताः ।
वादित्राणि च सर्वाणि प्रत्युद्यान्तु सुतं मम ॥ २७
भवन्तु ते लब्धजये सुते मे
पौराश्च मर्त्याश्च परे च नार्यः ।
ते शुक्लवस्त्राः प्रभवन्तु मार्गे
सुगन्धमाल्याभरणाश्च नार्यः ॥ २८
भजन्तु सर्वा गणिकाः सुतं मे
नार्यश्च कन्याः सहसैनिकाश्च ।
स्वलंकृतास्ताः सुभगाः सुवेषाः
पुत्रस्य पन्थानमनुव्रजन्तु ॥ २९
घण्टापणवकाः शीघ्रं मत्तमारुह्य कुञ्जरम् ।
शृङ्गाटकेषु सर्वेषु समाख्यान्तु जयं मम ॥ ३०
उत्तरा च कुमारीभिर्बह्वाभरणभूषिता ।
सखीं विजितसंग्रामां प्रत्युद्यातु बृहन्नलाम् ॥ ३१
श्रुत्वा तु वचनं तस्य पार्थिवस्य महात्मनः ।
तथैव चक्रुः संहृष्टाः पौराः स्वस्तिकपाणयः ॥ ३२
सूताश्च सर्वे सहमागधाश्च
हृष्टा विराटस्य पुरे जनौघाः ।
भेर्यश्च तूर्याणि च वारिजाश्च
वेषैः परार्ध्यैः प्रमदाजनाश्च ॥ ३३
वन्दिप्रवादाः पणवादिकाश्च
तथैव वाद्यानि च वंशशब्दाः ।
कांस्यं सतालं मधुरं च गीत-
मादाय नार्यो नगरान्निरीयुः ॥ ३४
प्रत्युद्ययुः पुत्रमनन्तवीर्यं
ते ब्राह्मणाः शान्तिपराः प्रधानाः ।
स्वाध्यायवेदाध्ययनक्रमज्ञाः
स्वस्तिक्रियागीतजपप्रधानाः ॥ ३५

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

## सप्ततितमोऽध्यायः ॥ ७० ॥

उत्तरजयश्रवणहृष्टेन विराटेन युधिष्ठिरेण सह द्यूतदेवनम् ॥ १ ॥ विराटेनोत्तरप्रशंसने कङ्केन बृहन्नलया कुरुपराजयकथनम् ॥ २ ॥ ततो रुष्टेन विराटेन कङ्कस्य कर्णमूलेऽक्षेणाभिहननम् ॥ ३ ॥ सैरन्ध्र्या क्षतात्प्रस्रवतो रक्तस्य निजोत्तरीयेण ग्रहणम् ॥ ४ ॥ तथा विराटेन तद्ग्रहणकारणप्रश्ने तत्कथनम् ॥ ५ ॥

वैशंपायन उवाच ।
प्रस्थाप्य सेनां कन्याश्च गणिकाश्च स्वलंकृताः ।
मत्स्यराजो महाराजः प्रहृष्ट इदमब्रवीत् ॥ १
त्रिगर्ताः कुरवः सर्वे संग्रामे निर्जिता मया ।
प्रविश्यान्तःपुरं हृष्टा द्यूतं दीव्याम ब्राह्मण ॥ २
अक्षानाहर सैरन्ध्रि आसनं चोपकल्पय ।
आदाय व्यजनं त्वं च पार्श्वतोऽनन्तरा भव ॥ ३
तं तथावादिनं दृष्ट्वा पाण्डवः प्रत्यभाषत ।
न देवितव्यं हृष्टेन कितवेनेति नः श्रुतम् ॥ ४
न त्वामद्य मुदा युक्तमहं देवितुमुत्सहे ।
प्रियं तु ते चिकीर्षामि वर्ततां यदि रोचते ।
द्यूतं कर्तुं न वाञ्छामि नरेन्द्र जनसंसदि ॥ ५
विराट उवाच ।
स्त्रियो गावो हिरण्यं च यच्चान्यद्वसु किंचन ।
न मे किंचित्त्वया कार्यमन्तरेणापि देवितम् ॥ ६
कङ्क उवाच ।
किं ते द्यूतेन राजेन्द्र बहुदोषेण मानद ।
देवने बहवो दोषास्तस्मात्तत्परिवर्जयेत् ॥ ७
श्रुतो वा यदि वा दृष्टो धर्मराजो युधिष्ठिरः ।
स राज्यं धनमक्षय्यं पणमेकममन्यत ॥ ८

कृष्णां च भार्यां दयितां भ्रातॄंश्च त्रिदशोपमान् ।
निःसंशयं स कितवः पश्चात्तप्यति पाण्डवः ॥ ९
विविधानां च रत्नानां धनानां च पराजये ।
अभीप्सितविनाशश्च वाक्पारुष्यमनन्तरम् ॥ १०
अविश्वास्यं बुधैर्नित्यमेकाह्ना द्रव्यनाशनम् ।
द्यूते हारितवान्सर्वं तस्माद्द्यूतं न रोचये ॥ ११
अथवा मन्यसे राजन्दीव्याव यदि रोचते ।
एवमाभाष्य वाक्यैस्तु क्रीडतस्तौ नरोत्तमौ ॥१२
प्रवर्तमाने द्यूते तु मात्स्यः पाण्डवमब्रवीत् ॥ १३
पश्य पुत्रेण मे युद्धे तादृशाः कुरवो जिताः ।
कुरवोऽतिरथाः सर्वे देवैरपि सुदुर्जयाः ॥ १४
ततोऽब्रवीद्धर्मराजो द्यूते मात्स्यं युधिष्ठिरः ।
दिष्ट्या ते विजिता गावः कुरवश्च पराजिताः १५
अत्यद्भुततमं मन्ये उत्तरश्चेत्कुरूञ्जयेत् ।
यन्ता बृहन्नला यस्य स कथंचिद्विजेष्यते ॥ १६
ततो विराटः क्षुभितो मन्युना च परिप्लुतः ।
उवाच वचनं क्रुद्धः परिव्राजमनन्तरम् ॥ १७
तादृशेन तु योधेन महेष्वासेन धीमता ।
कुरवो निर्जिता युद्धे तत्र किं ब्राह्मणाद्भुतम् ॥१८
युधिष्ठिर उवाच ।
यन्ता तथाविधो यस्य रथे तिष्ठति वीर्यवान् ।
यदि तद्दुष्करं कुर्यात्तत्र किं नाद्भुतं भवेत् ॥ १९
विराट उवाच ।
समं षण्डेन मे पुत्रं ब्रह्मबन्धो प्रशंससि ।
वाच्यावाच्यं न जानीषे नूनं मामवमन्यसे ॥ २०
पुमांसो बहवो दृष्टाः सूताश्च बहवो मया ।
विक्रम्य यन्ता योद्धा च न मे दृष्टः कदाचन ॥ २१
विप्रियं न चरेद्राज्ञामनुकूलं प्रियं वदेत् ।
आचरन्विप्रियं राज्ञां न जातु सुखमेधते ॥ २२
वयस्यत्वात्तु ते सर्वमपराधमिमं क्षमे ।
नेदृशीं प्रवदेर्वाचं यदि जीवितुमिच्छसि ॥ २३
वैशंपायन उवाच ।
ततोऽब्रवीत्पुनः कङ्कः प्रहस्य कुरुवर्धनः ।
बृहन्नलाया राजेन्द्र घुष्यतां नगरे जयः ॥ २४
उत्तरेण तु सारथ्यं कृतं नूनं भविष्यति ।
निमित्तं किंचिदुत्पन्नं तर्कश्चापि दृढो मम ।
यतो जानामि राजेन्द्र नान्यथा तद्भविष्यति २५
कुरवोऽपि महावीर्या देवैरपि सुदुर्जयाः ।
ससोमवरुणादित्यैः सयक्षेशहुताशनैः ॥ २६
यत्र शान्तनवो भीष्मो द्रोणकर्णौ सुदुर्जयौ ।
अश्वत्थामा विकर्णश्च सोमदत्तो जयद्रथः ॥ २७
भूरिश्रवाः शलो भूरिर्जलसन्धिश्च वीर्यवान् ।
दुर्योधनो दुष्प्रसहो दुःशासनविविंशती ॥ २८
वृषसेनोऽश्ववेगश्च वायुवेगसुवर्चसौ ।
बाह्लीकः शूरसेनश्च युयुत्सुश्च परन्तपः ॥ २९
सौबलः शकुनिश्चैव द्युमत्सेनश्च साल्वराट् ।
अन्ये च बहवः शूरा नानाजनपदेश्वराः ॥ ३०
कृपेणाचार्यमुख्येन सहिताः कुरवो नृपाः ।
सज्जकार्मुकनिस्त्रिंशा रथिनो रथयूथपाः ।
अन्ये चैव महावीर्या राजपुत्रा महारथाः ॥ ३१
मरुद्गणैः परिवृतः साक्षादपि पुरंदरः ।
तद्बलं न जयेत्क्रुद्धो भीष्मद्रोणादिभिर्वृतम् ॥३२
कस्तद्बृहन्नलादन्यो मनुष्यः प्रतियोत्स्यति ।
यस्य बाहुबले तुल्यो न भविष्यति कश्चन ॥ ३३
अतीव समरं दृष्ट्वा हर्षो यस्याभिवर्धते ।
किमेवं पुरुषो लोको दिवि वा भुवि विद्यते ॥३४
वैशंपायन उवाच ।
तेन संक्षुभितो राजा दीर्यमाणेन चेतसा ।
अब्रवीद्वचनं क्रूरमजानन्वै युधिष्ठिरम् ॥ ३५
कङ्क मा ब्रूहि मे वाक्यं प्रतिकूलं द्विजोत्तम ।
बहुशः प्रतिषिद्धस्त्वं न च वाचं नियच्छसि ॥ ३६
नियन्ता चेन्न विद्येत न कश्चिद्धर्ममाचरेत् ।
इति प्रक्षुभितो राजा सोऽक्षेणाभ्यहनद्भृशम् ॥३७
तस्य तक्षकभोगाभं बाहुमुत्क्षिप्य दक्षिणम् ।
विराटः प्राहनत्क्रुद्धः कर्णमाश्रित्य दक्षिणम् ॥ ३८
मुखे युधिष्ठिरं कोपान्नैवमित्यवभर्त्सयन् ।
बलवत्प्रतिविद्धस्य नस्तः शोणितमास्रवत् ॥ ३९
अक्षेणाभिहतो राजा विराटेन युधिष्ठिरः ।

: धनानां च विनाशः वाक्पारुष्यं चाभवदिति शेषपूरणेन योजना ॥ १० ॥ किं किमपि ॥ १९ ॥

तूष्णीमासीन्महाबाहुः कृष्णां पश्यन्सुदुःखिताम्॥
तस्य रक्तोत्पलनिभं शिरसः शोणितं तदा ।
प्रावर्तत महाबाहोरभिघातान्महात्मनः ॥ ४१
तदप्राप्तं महीं पार्थः पाणिभ्यां समधारयत् ।
अवैक्षत च धर्मात्मा द्रौपदीं पार्श्वतः स्थिताम्॥४२
सा वेदनामभिज्ञाय भर्तुश्चित्तवशानुगा ।
सा विषण्णा च भीता च क्रुद्धा च द्रुपदात्मजा ४३
बाष्पं नियम्य कृच्छ्रेण भर्तुर्निःश्रेयसैषिणी ।
उत्तरीयेण सूक्ष्मेण तूर्णं जग्राह शोणितम् ॥ ४४
निगृह्य रक्तं वस्त्रेण सैरन्ध्री दुःखमोहिता ।
सौवर्णं गृह्य भृङ्गारं शोणितं तदपामृजत् ।
युधिष्ठिरस्य राजेन्द्र द्रुपदेन्द्रसुता तदा ॥ ४५
विराट उवाच ।
सैरन्ध्रि किमिदं रक्तमुत्तरीयेण गृह्यते ।
कोऽत्र हेतुर्विशालाक्षि तन्ममाचक्ष्व तत्वतः॥ ४६
सैरन्ध्र्युवाच ।
रक्तबिन्दूनि यावन्ति कङ्कस्य धरणीतले ।
तावद्वर्षाणि राष्ट्रे ते अनावृष्टिर्भविष्यति ॥ ४७
एतन्निमित्तं मात्स्येन्द्र कङ्कस्य रुधिरं मया ।
गृहीतमुत्तरीयेण विनाशो मा भवेत्तव ॥ ४८
यतीशं यो विहन्येत तस्यायुर्विनशिष्यति ।
यो यतीशं नियम्येत सहस्रं यातना यमे ॥ ४९
यतौ रक्तं दर्शयति यावत्पांसुरगृह्यत ।
तावन्तः पितृलोकस्थाः पितरः प्रपतन्त्यधः ॥५०
इति ज्ञात्वा विराटेन्द्र धृतं रक्तं च वाससा ।
मया तव हितार्थाय त्वयि प्रणयकारणात् ॥ ५१

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥

## एकसप्ततितमोऽध्यायः ॥ ७१ ॥

अर्जुनकुरुयुद्धदिदृक्षया समागतैर्देवैरर्जुनं श्लाघमानैः सद्भिः पुनः स्वर्गंप्रति गमनम् ॥ १ ॥ उत्तरेण सवादित्रघोषं पौरैः प्रत्युद्गम्यमानेन स्वनगरप्रवेशनम् ॥ २ ॥

जनमेजय उवाच ।
युद्धं तु मानुषं द्रष्टुमागतास्त्रिदशाः पुरा ।
किमकुर्वन्त ते पश्चात्कथयस्व ममानघ ॥ १
वैशंपायन उवाच ।
वासवप्रमुखाः सर्वे देवाः सर्षिपुरोगमाः ।
यक्षगन्धर्वसङ्घाश्च गणा अप्सरसां तथा ॥ २
युद्धं तु मानुषं दृष्ट्वा कुरूणां फल्गुनस्य च ।
एकस्य च बहूनां च रौद्रमत्युग्रदर्शनम् ॥ ३
अस्त्राणामथ दिव्यानां प्रयोगानथ संग्रहान् ।
लघु सुष्ठु च चित्रं च कृतीनां च प्रयत्नतः ॥ ४
भीष्मं शारद्वतं द्रोणं कर्णं गाण्डीवधन्वना ।
जितानन्यान्भूमिपालान्दृष्ट्वा जग्मुर्दिवौकसः॥ ५
सर्वे ते परितुष्टाश्च प्रशस्य च मुहुर्मुहुः ।
असङ्गगतिना तेन विमानेनाशुगामिना ।
प्रतिजग्मुरसङ्गास्ते त्रिदिवं च दिवौकसः ॥ ६
[*कुरवो निर्जिताः सर्वे भीष्मद्रोणकृपादयः ।
अजय्यास्त्रिदशैः सर्वैः सेन्द्रैः सर्वैः सुरासुरैः ।
पार्थेनैकेन संग्रामे विस्मयो नो महानहो ॥ ७
कस्मिन्मुहूर्ते संजातः कस्य धर्मस्य वा फलम् ॥ ८
किमाश्चर्यं फल्गुनेऽस्मिन्यो रुद्रेण न्ययोधयत् ।
निवातकवचानाजौ यस्त्रिंशत्कोटिसंमितान् ॥ ९
तस्य चैतत्किमाश्चर्यं स्तुवन्त इति ते सुराः ।
जग्मुः सुरालयं हृष्टा विस्मयाविष्टचेतसः ॥] १०
कुरवोऽर्जुनबाणैश्च ताडिताः शरविक्षताः ।

धरणीतले पतेयुरिति शेषः ॥ ४७ ॥ नियम्येत नियमयेत् तस्येति शेषः ॥ ४९ ॥ अगृह्यत गृह्येत रक्तेनेति शेषः ॥ ५० ॥ इतीममर्थम् ॥ ५१ ॥ सप्ततितमोऽध्यायः ॥ ७० ॥

* इमे श्लोकाः थ. पुस्तकमात्रे वर्तन्ते ।

कुरूनभिमुखा याताः समग्रबलवाहनाः ॥ ११
विराटनगराच्चैव गजाश्वरथसंकुलाः ।
योधैः क्षत्रियदायादैर्बलवद्भिरधिष्ठिताः ॥ १२
विराटप्रहिता सेना नगराच्छीघ्रयायिनी ।
उत्तरं सह सूतेन प्रत्ययात्तमरिन्दमम् ॥ १३
तस्मिंस्तूर्यशताकीर्णे हस्त्यश्वरथसंकुले ।
प्रहर्षः स्त्रीकुमाराणां तुमुलः समपद्यत ॥ १४
अर्जुनस्तु ततो दृष्ट्वा सैन्यरेणुं समुत्थितम् ।
सैन्यध्वजं निशम्याथ वैराटिं समभाषत ॥ १५
नगरे तुमुलः शब्दो रेणुश्चाक्रमते नभः ।
किंनु खल्वपयातास्ते कुरवो नगरं गताः ॥ १६
ते चैव निर्जिताऽस्माभिर्महेष्वासाः सुतेजसः ।
आमुञ्च कवचं वीर चोदयस्व च वाजिनः ।
जवेनाभिप्रपद्यस्व विराटनगरं प्रति ॥ १७
न तावत्तलनिर्घोषं गाण्डीवस्य च निस्वनम् ।
ध्वजं वा दर्शयिष्यामि अथवा स्वजनो भवेत् ॥१८

उत्तर उवाच ।

सेनाग्रमेतन्मात्स्यानां गणिकाश्च स्वलंकृताः ।
कन्या रथेषु दृश्यन्ते योधा विविधवाससः ॥१९
उत्तरामत्र पश्यामि सखीभिः परिवारिताम् ।
अनीकिन्यः प्रदृश्यन्ते हस्तिनोश्वाश्च वर्मिताः २०
रथिनश्च पदाताश्च बहवो न च शस्त्रिणः ।
विराटवचनात्सर्वे संहृष्टाः प्रतिभान्ति मे ।
न च मेऽत्र प्रतीघातश्चित्तस्य स्वजने यथा ॥२१

वैशंपायन उवाच ।

ततः शीघ्रं समासाद्य उत्तरं स्वजनो बहु ।
परस्परममित्रघ्नं सस्वजे तं समागतम् ॥ २२

जना ऊचुः ।

प्रीतिमान्पुरुषव्याघ्रो हर्षयुक्तः पुनःपुनः ।
दिष्ट्या जयसि भद्रं ते दिष्ट्या सूतो बृहन्नला ।
दिष्ट्या संग्राममागम्य भयं तव न किंचन ॥२३

उत्तर उवाच ।

अजैषीदेष ताञ्जिष्णुः कुरूनेकरथो रणे ।
एतस्य बाहुवीर्येण तद्येन गावो जिता मया ।
कुरवो निर्जिता यस्मात्संग्रामेऽमिततेजसः ॥ २४
अकार्षीदेष तत्कर्म देवपुत्रोपमो युवा ।
एष तत्पुरुषव्याघ्रो विक्षोभ्य कुरुमण्डलम् ।
गावः प्रसह्य विजिता रणे मां चाभ्यपालयत् ॥ २५

वैशंपायन उवाच ।

उत्तरस्य वचः श्रुत्वा शंसमानस्य चार्जुनम् ।
चोदिता राजपुत्रेण जयं मङ्गलवादिनः ॥ २६
ततो गन्धैश्च माल्यैश्च धूपैश्च वसुसंभृतैः ।
कन्याः पार्थममित्रघ्नं किरन्त्यः समपूजयन् ॥२७
आपूर्यमाणो माल्यैश्च गन्धैश्च विविधैः शुभैः ।
संपूज्यमानो लोकेन नगरद्वारमागमत् ॥ २८

भेर्यश्च तूर्याणि च वेणवश्च
विचित्रवेषाः प्रमदाजनाश्च ।
पुरो विराटस्य महाबलस्य
निष्क्रम्य भूमिंजयमभ्यनन्दन् ॥ २९
प्रशस्यमानस्तु जयेन तत्र
पुत्रो विराटस्य न हृष्यति स्म ।
संभाष्यमाणस्तु जयेन तत्र
सोऽन्तर्मनाः पाण्डवमीक्षमाणः ॥ ३०
पुत्र्यै विराटस्य ततो वराणि
वस्त्राण्यदात्पाण्डुसुतः सखीभ्यः ।
सभाजयंश्चापि समागतास्ता
दृष्ट्वा जयं तच्च बलं कुमार्यः ॥ ३१

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

जिष्णुः जयशीलः ॥ २४ ॥ जयं घोषयन्निति शेषः ॥२६॥ | अन्तर्मनाः दुर्मनाः ॥ ३० ॥ एकसप्ततितमोऽध्यायः ॥ ७१ ॥

## द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

उत्तरेण राजाभ्यनुज्ञयाऽन्तःपुरमेत्य तदभिवादनम् ॥ १ ॥ युधिष्ठिरव्रणावलोकनभीतोत्तरचोदनया विराटेन युधिष्ठिरक्षमापनम् ॥ २ ॥ ततोऽर्जुनस्यान्तःप्रवेशः ॥ ३ ॥ उत्तरस्यैव जेतृत्वभ्रमहृष्टेन विराटेन तत्प्रशंसनम् ॥ ४ ॥ तेन तंप्रति कस्यचिद्देवपुत्रस्यैव जेतृत्वकथनम् ॥ ५ ॥ ततोऽर्जुनेनोत्तराप्रभृतिभ्यः कुरुवस्त्रप्रदानम् ॥ ६ ॥

वैशंपायन उवाच ।

सभाज्यमानः पौरैश्च स्त्रीभिर्जानपदैरपि ।
आसाद्यान्तःपुरद्वारं पित्रे संप्रत्यवेदयत् ॥ १

ततो द्वाःस्थः समासाद्य प्रणिपत्य कृताञ्जलिः ।
वर्धयित्वा जयाशीर्भिरिदं वचनमब्रवीत् ॥ २

राजन्पृथुयशस्तुभ्यं जित्वा शत्रून्समागतः ।
उत्तरः सह सूतेन द्वारि तिष्ठति वारितः ॥ ३

कुमारो योधमुख्यैश्च गणिकाभिश्च संवृतः ।
पौरजानपदैर्युक्तः पूज्यमानो जयाशिषा ॥ ४

ततो हृष्टो महीपालः क्षत्तारमिदमब्रवीत् ।
प्रवेशयोभौ तौ तूर्णं दर्शनेप्सुरहं तयोः ॥ ५

क्षत्तारं कुरुराजस्तु शनैः कर्ण उपाजपत् ।
उत्तरः प्रविशत्वेको न प्रवेश्या बृहन्नला ॥ ६

एतस्य हि महाबाहोर्व्रतं नित्यं महात्मनः ।
यो ममाङ्गे व्रणं कुर्याच्छोणितं वा प्रदर्शयेत् ।
अन्यत्र संग्रामगतान्न स जीवेत्कथंचन ॥ ७

व्यक्तं भृशं सुसंक्रुद्धो मां दृष्ट्वैव सशोणितम् ।
विराटमिह सामात्यं हन्यात्सबलवाहनम् ॥ ८

इन्द्रं वापि कुबेरं वा यमं वा वरुणं तथा ।
मम शोणितकर्तारं मृद्नीयात्किं पुनर्नरम् ॥ ९

क्षणमात्रं तु तत्रैव द्वारि तिष्ठतु वीर्यवान् ।
इति प्रोवाच धर्मात्मा युधिष्ठिर उदारधीः ॥ १०

इत्युक्त्वा क्षमया युक्तो धर्मराजो घृणान्वितः ।
सभायां सह मात्स्येन तूष्णीमुपविवेश ह ॥ ११

ततो राजसुतो ज्येष्ठः प्राविशत्पृथिवींजयः ।
ववन्दे स पितुः पादौ कङ्कं चाप्युपतिष्ठत ॥ १२

पश्यन्युधिष्ठिरं दृष्ट्या वक्रया चरणौ पितुः ।
अभिवाद्य ततो दृष्ट्वा कङ्कस्य रुधिरप्लुतम् ।
हृदयेऽदह्यत तदा मृत्युग्रस्त इवोत्तरः ॥ १३

ततो रुधिरसिक्ताङ्गमनेकाग्रमनागसम् ।
भूमावेकान्त आसीनं सैरन्ध्र्या समुपासितम् ।
ततः पप्रच्छ राजानं त्वरमाण इवोत्तरः ॥ १४

केनायं ताडितः कङ्कः केन पापमिदं कृतम् ।
को वा जिगमिषुर्मृत्युं केन स्पृष्टः पदोरगः ॥ १५

श्रोत्रियो ब्राह्मणश्रेष्ठ इन्द्रासनरतिक्षमः ।
पूजनीयोऽभिवाद्यश्च न प्रबाध्योऽयमीदृशः ॥ १६

वैशंपायन उवाच ।

स पुत्रस्य वचः श्रुत्वा विराटो राष्ट्रवर्धनः ।
प्रत्युवाचोत्तरं वाक्यं साध्वसाद्ध्वस्तमानसः ॥ १७

पुत्र ते विजयं श्रुत्वा प्रहृष्टोऽहं मुदा भृशम् ।
अक्षक्रीडनयाऽनेन कालक्षेपमकारिषम् ॥ १८

तत्राजयत्कुरून्सर्वानुत्तरो राष्ट्रवर्धनः ।
इत्युक्तं हि मया पुत्र नेति कङ्को बृहन्नला ।
अजयत्सा कुरून्सर्वानिति मामब्रवीन्मुहुः ॥ १९

प्रशंसिते मया पुत्र विजये तव विश्रुते ।
बृहन्नलाया विजयं कङ्कोऽस्तुवत वै रुषा ॥ २०

मया प्रशस्यमाने तु त्वयि षण्डं प्रशंसति ।
बृहन्नलाप्रशंसाभिरभ्यसूयमहं तदा ।
ताडितोऽयं मया पुत्र दुरात्मा शत्रुपक्षकृत् ॥ २१

ताडितोऽयं यतिः कङ्क इत्युक्तं तद्वचोत्तरः ।
श्रुत्वा पितुर्भृशं क्रुद्धः पितरं वाक्यमब्रवीत् ॥ २२

अकार्यं ते कृतं राजन्क्षिप्रमेष प्रसाद्यताम् ।
मा त्वा ब्रह्मविषं घोरं समूलमुपनिर्दहेत् ॥ २३

यावन्न क्षयमायाति कुलं सर्वमशेषतः ।
स्फीतं वृद्धं च मात्स्यानामयं तावत्प्रसाद्यताम् २४

प्रणम्य पादयोरस्य दण्डवत्क्षितिमण्डले ।

---

क्षत्तारं सारथिम् ॥ ५ ॥ कर्णं उपाजपत् कर्णे इति च्छेदः ॥ ६ ॥ ममाङ्ग इति मम युधिष्ठिरस्य । संग्रामाय गतात् गमनात् ॥ ७ ॥ रुधिरप्लुतं रुधिरस्रावम् ॥ १३ ॥ अनेकाग्रं व्यग्रम् । युधिष्ठिरं दृष्ट्वा राजानं पप्रच्छेत्यन्वयः ॥ १४ ॥ तद्वचः इति च्छेदः संधिरार्षः ॥ २२ ॥

प्रगृह्य पादौ पाणिभ्यामयं तावत्प्रसाद्यताम् ॥ २५
दक्षेण पाणिना स्पृष्ट्वा शपे त्वां क्षपितं मया ।
इति यावद्वदेत्कङ्क अयं तावत्प्रसाद्यताम् ॥ २६
स पुत्रस्य वचः श्रुत्वा विराटः साध्वसाकुलः ।
क्षमयामास कौन्तेयं छन्नं ब्राह्मणवर्चसा ॥ २८
क्षमयन्तं तु राजानं पाण्डवः प्रत्यभाषत ।
चिरं क्षान्तं मया राजन्मन्युर्मम न विद्यते ॥ २७
यदि स तत्पतेद्भूमौ रुधिरं मम पार्थिव ।
सराष्ट्रस्त्वमिहोच्छेदमापद्येथा नरर्षभ ॥ २९
न दूषयामि राजेन्द्र यस्तु हन्याददूषकम् ।
फलं तस्य महाराज क्षिप्रं दारुणमाप्नुयात् ॥ ३०

वैशंपायन उवाच ।

शोणिते तु व्यतिक्रान्ते प्रविवेश बृहन्नला ।
अभिवाद्य महाराजं कङ्कं चाप्युपतिष्ठत ॥ ३१
क्षमयित्वा तु कौरव्यं रणादुत्तरमागतम् ।
परिष्वज्य दृढं राजा प्रवेश्य भवनोत्तमम् ।
प्रशशंस ततो मात्स्यः शृण्वतः सव्यसाचिनः ॥ ३२

विराट उवाच ।

त्वया दायादवानस्मि कैकेयीनन्दिवर्धन ।
त्वया मे सदृशः पुत्रो न भूतो न भविष्यति ॥ ३३
पदं पदसहस्रेण यश्चरन्नापराध्नुयात् ।
तेन कर्णेन ते तात कथमासीत्समागमः ॥ ३४
रणे यं प्रेक्ष्य सीदन्ति हृतवीर्यपराक्रमाः ।
कृपेन तेन ते तात कथमासीत्समागमः ॥ ३५
यस्य तद्विश्रुतं लोके महद्वृत्तमनुत्तमम् ।
पितुः कृते कृतं घोरं ब्रह्मचर्यमनुत्तमम् ॥ ३६
योऽयोधीत्समरे रामं जामदग्न्यं प्रतापिनम् ।
भीष्मोसौ पुरुषव्याघ्र न च युद्धे पराजितः ॥ ३७
पराक्रमी च दुर्धर्षो विद्वाञ्शूरो जितेन्द्रियः ।
दृढवेधी क्षिप्रकारी विश्रुतः सर्वकर्मसु ॥ ३८
तेन ते सह भीष्मेण कुरुवृद्धेन संयुगे ।
युद्धमासीत्कथं तात सर्वमेतद्ब्रवीहि मे ॥ ३९
पर्वतं यो विनिर्भिन्द्याद्राजपुत्रो वरेषुभिः ।
दुर्योधनेन ते तात कथमासीत्समागमः ॥ ४०
आचार्यो वृष्णिवीराणां पाञ्चालानां च यः प्रभुः ।
कुरूणां पाण्डवानां च सर्वक्षत्रस्य यो गुरुः ॥ ४१
सर्वशस्त्रभृतां श्रेष्ठः सर्वलोकेषु विश्रुतः ।
तेन द्रोणेन ते तात कथमासीत्समागमः ॥ ४२
आचार्यपुत्रो यः शूरो द्रोणादनवमो रणे ।
तेन वीरेण ते तात कथमासीत्समागमः ॥ ४३
सर्वे चैव महावीर्या धार्तराष्ट्रा महारथाः ।
तैस्तैर्वीरैश्च ते तात कथमासीत्समागमः ॥ ४४

उत्तर उवाच ।

न मया निर्जिता गावो न मया कुरवो जिताः ।
कृतं च कर्म तत्सर्वं देवपुत्रेण केनचित् ॥ ४५
स हि भीतं द्रवन्तं मां भीष्मद्रोणमुखान्कुरून् ।
दृष्ट्वा विषण्णं संग्रामे देवपुत्रो न्यवारयत् ॥ ४६
स हि तिष्ठन्रथोपस्थे वज्रपाणिनिभो युवा ।
तेन ते निर्जिता गावस्तेन ते कुरवो जिताः ॥ ४७
तस्य तत्कर्म वीरस्य न मया तात तत्कृतम् ।
स हि शारद्वतं द्रोणं द्रोणपुत्रं च वीर्यवान् ।
सूतपुत्रं च भीष्मं च चकार विमुखाञ्शरैः ॥ ४८
दुर्योधनं च समरे प्रभिन्नमिव कुञ्जरम् ।
प्रभग्नमब्रवीद्भीतं राजपुत्रं महाबलम् ॥ ४९
न हास्तिनपुरे त्राणं तव पश्यामि किंचन ।
न हास्तिनपुरे भोगा भोक्तुं शक्याः पलायता ॥ ५०
व्यायामेन परीप्सस्व जीवितं कौरवात्मज ।
न मोक्ष्यसे पलायंस्त्वं लोके युद्धमना भव ।
पृथिवीं भोक्ष्यसे जित्वा हतो वा स्वर्गमाप्स्यसि ५१
स निवृत्तो नरव्याघ्रो मुञ्चन्वज्रनिभाञ्शरान् ।
सचिवैः संवृतो राजा भीष्मद्रोणकृपादिभिः ।
ततो मे रोमहर्षोऽभूदूरुस्तम्भश्च मेऽभवत् ॥ ५२

---

तस्येति । स इति शेषः । स हन्ता तस्य स्वकृतहननस्य ॥ ३० ॥ उपतिष्ठत उपातिष्ठत असेवत ॥ ३१ ॥ दायादवान्पुत्रवान् ॥ ३३ ॥ पदसहस्रेण लक्ष्यसहस्रार्थम् । हेत्वर्थे तृतीया । युगपत्सहस्रलक्ष्याणि वेद्धुमित्यर्थः । चरन् बाणैः । पदं एकमपि लक्ष्यं नापराध्नुयात् लक्ष्यात् च्युतसायको न भवेदित्यर्थः ॥ ३४ ॥ तिष्ठन् अयुध्यतेति शेषः ॥ ४७ ॥ स निवृत्तोऽभूदित्यन्वयः

यदभूद्धनसंकाशमनीकं व्यधमच्छरैः ।
तत्प्रगृह्य रथानीकं सिंहदर्पसमो युवा ।
तान्कुरूंन्द्रावयद्राजन्रणे नाग इव श्वसन् ॥ ५३
एकेन तेन शूरेण षड्रथाः परिनिर्जिताः ।
शार्दूलेनेव मत्तेन मृगास्तृणचरा यथा ॥ ५४
हयानां च गजानां च शूराणां च धनुष्मताम् ।
निहतानि सहस्राणि भग्ना च कुरुवाहिनी ॥ ५५
सूतपुत्रं शतैर्विद्ध्वा हयान्हत्वा महारथः ।
अस्त्रेण मोहयित्वा तं रक्तवस्त्रं समाददे ॥ ५६
चतुर्भिः पुनरानर्च्छद्भीष्मं शान्तनवं शरैः ।
स तं विद्ध्वा हयांश्चाशु नास्य वस्त्रं समाददे ॥ ५७
दुर्योधनं च बलवान्बाणैर्विव्याध सप्तभिः ।
तं स विद्ध्वा हयांश्चास्य पीतवस्त्रं समाददे ॥ ५८
द्रोणं कृपं च बलवान्सोमदत्तं जयद्रथम् ।
भूरिश्रवसमिन्द्राभं शकुनिं च महारथम् ॥ ५९
त्रिभिस्त्रिभिः स विद्ध्वा तु दुःशासनमुखानपि ।
विविधानि च वस्त्राणि महार्हाण्याजहार सः ६०
द्वाभ्यां शराभ्यां विद्ध्वाऽथ तथाऽऽचार्यसुतं रणे ।
चापं छित्त्वा विकर्णस्य नीले चादत्त वाससी ६१

विराट उवाच ।
क्व स वीरो महाबाहुर्देवपुत्रो महायशाः ।
यो ममामोचयत्पुत्रं कुरुभिर्ग्रस्तमाहवे ॥ ६२
इच्छामि तममित्रघ्नं द्रष्टुमर्चितुमेव च ।
येन मे त्वं च गावश्च मोक्षिता देवसूनुना ॥ ६३
तस्मै दास्यामि तां पुत्रीं ग्रामांश्चैव तु हाटकान् ।
स्फुरितं कटिसूत्रं च स्त्रीसहस्रशतानि च ॥ ६४
उत्तर उवाच ।
अन्तर्धानं गतस्तात देवपुत्रः प्रतापवान् ।
अद्य श्वो वा परश्वो वा मन्ये प्रादुर्भविष्यति ॥ ६५
वैशंपायन उवाच ।
एवमाख्यायमानस्तु छन्नं सत्रेण पाण्डवम् ।
वसन्तं तं तु नाज्ञासीद्विराटः पार्थमर्जुनम् ॥ ६६
ततः पार्थोऽभ्यनुज्ञातो विराटेन महात्मना ।
सह पुत्रेण मात्स्यस्य मन्त्रयित्वा धनंजयः ॥ ६७
इत्येवं ब्रूहि राजानं विराटं समुपस्थितम् ।
इत्युक्त्वा सहसा पार्थः प्रविश्यान्तःपुरं शुभम् ।
ददौ वस्त्राणि रत्नानि विराटदुहितुः स्वयम् ॥ ६८
उत्तरा तु महार्हाणि वस्त्राण्याभरणानि च ।
प्रगृह्य तानि सर्वाणि प्रीता सानुचराऽभवत् ॥ ६९

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

---

## त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

भीमार्जुनादिभी रात्रौ युधिष्ठिरसमीपगमनम् ॥ १ ॥ युधिष्ठिरेण सहर्षं स्वानभिभाषणे अर्जुनेन भीमंप्रति तत्कारणप्रश्नः ॥ २ ॥ युधिष्ठिरेण तंप्रति विराटेनाक्षताडनस्य तत्कारणत्वकथनम् ॥ ३ ॥ भीमादिभिः क्रोधाद्विराटवधाध्यवसाये युधिष्ठिरेण हेतुकथनेन तत्प्रतिषेधनम् ॥ ४ ॥

वैशंपायन उवाच ।
प्रदाय वस्त्राणि किरीटमाली
　विराटगेहे मुदितः सखीभ्यः ।
कृत्वा महत्कर्म तदाऽऽजिमध्ये
　दिदृक्षया सोऽभिजगाम पार्थम् ॥ १
तं प्रेक्षमाणस्त्वथ धर्मराजं
　पप्रच्छ पार्थोऽथ स भीमसेनम् ।
किं धर्मराजो हि यथापुरं मां
　मुखं प्रतिच्छाद्य न चाह किंचित् ॥ २
तमेवमुक्त्वा परिशङ्कमानं
　दृष्ट्वाऽर्जुनं भीमसेनं च राजा ।
तदाऽब्रवीत्तावभिवीक्ष्य राज-
　न्युधिष्ठिरस्तत्परिमृज्य रक्तम् ॥ ३

---

॥ ५२ ॥ सिंहेन दर्पे समः । द्रावयत् अद्रावयत् ॥ ५३ ॥ तृणचरास्तृणभक्षकाः ॥ ५४ ॥ सत्रेण वेषान्तरेण ॥ ६६ ॥ * इतो ब्रूहि राजानं विराटं चेति थ. पाठः ॥ ६८ ॥ द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

दुरात्मना त्वय्यभिपूज्यमाने
विराटराज्ञाऽभिहतोऽस्मि पार्थ ।
तस्मात्प्रहाराद्रुधिरस्य बिन्दू-
न्पश्यन्न चेमे पृथिवीं स्पृशेयुः ।
इति प्रतिच्छाद्य मुखं ततोऽहं
मन्युं नियच्छन्नुपविष्ट आसम् ॥ ४
शुभार्ह राष्ट्रं न खिलीकृतं भवे-
द्वयं तु यस्मिन्सुखिनोऽभवाम ।
क्रुद्धे तु वीरे त्वयि चाप्रतीते
राजा विराटो न लभेत शर्म ॥ ५
अजानता तेन च शौर्यमाजौ
छन्नस्य सत्रेण बलं च पार्थ ।
इदं विराटेन मयि प्रयुक्तं
त्वां वीक्षमाणो न गतोस्मि हर्षम् ॥ ६

वैशंपायन उवाच ।

तेनाप्रमेयेन महाबलेन
तस्मिंस्तथोक्ते शममास्थितेन ।
तं भीमसेनो बलवानमर्षी
धनंजयं क्रुद्धमुवाच वाक्यम् ॥ ७
न पार्थ नित्यं क्षमकालमाह
बृहस्पतिर्ज्ञानवतां वरिष्ठः ।
क्षमीह सर्वैः परिभूयतेसौ
यथा भुजङ्गो विषवीर्यहीनः ॥ ८
विराटमद्यैव निहत्य शीघ्रं
सपुत्रपौत्रं सकुलं ससैन्यम् ।
योक्ष्यामहे धर्मसुतं च राज्ये
अद्यैव शीघ्रं त्वरितेष मात्स्यः ॥ ९
अनेन पाञ्चालसुताऽथ कृष्णा
उपेक्षिता कीचकेनाभियुक्ता ।
तस्मादयं नार्हति राजशब्दं
राजा भव त्वं नृप पार्थवीर्यात् ॥ १०
राजा कुरूणां च युधिष्ठिरोऽयं
मात्स्येषु राजा भवतु प्रवीरः ।
तं मात्स्यदेहं शतधा भिनद्मि
पूर्णोदकं कुम्भमिवाश्मनीह ॥ ११

अर्जुन उवाच ।

भवतः क्षमया राजन्त्सर्वे दोषाश्च नोऽभवन् ।
तं मात्स्यं सबलं हत्वा सपुत्रज्ञातिबान्धवम् ।
पश्चाच्चैव कुरून्सर्वान्हनिष्यामि न संशयः ॥ १२
भीमसेनश्च ये चान्ये तथैवेति तमब्रुवन् ॥ १३
तमब्रवीद्धर्मसुतो महात्मा
क्षमी वदान्यः कुपितं च भीमम् ।
न प्रत्युपस्थास्यति चेत्सदारः
प्रसादने सम्यगथास्तु वध्यः ॥ १४
न हन्तव्यो दुरात्माऽयं विराटश्चापि तेऽर्जुन १५
श्वः प्रभाते प्रवेक्ष्यामः सभां सिंहासनेष्वपि ।
राजवेषेण संयुक्ताः स्थानमस्य स्वलंकृताः ॥ १६
विराटो यदि तत्रस्थान्राजालङ्कारशोभितान् ।
राजलक्षणसंपन्नान्यदि तत्र न मंस्यते ।
पश्चाद्धन्यामहे पार्थ विराटं सहबान्धवम् ॥ १७
इतिकर्तव्यतां सर्वे मन्त्रयित्वा तु पाण्डवाः ।
न्यवसंश्चैव तां रात्रिं धर्मज्ञा धर्मवत्सलाः ॥ १८
सहपुत्रेण मात्स्यः स संप्रहृष्टो नराधिपः ।
तां रात्रिमवसत्प्रीतः संप्रहृष्टेन चेतसा ॥ १९

॥ इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

समाप्तं च गोग्रहणपर्व ॥ ४ ॥

# ( अथ वैवाहिकपर्व ॥ ५ ॥ )

## चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

कुरुविजयदिनात्परेद्युः प्रभाते युधिष्ठिरादिभी राजलक्षणधारणेन सिंहासनादिषूपवेशनम् ॥ १ ॥ ततः सहोत्तरेण सभामागतवता विराटेन युधिष्ठिरंप्रति राजासनोपवेशनाक्षेपः ॥ २ ॥ अर्जुनेन तंप्रति युधिष्ठिरस्य याथातथ्यकथनेन तदीयगुणानुवर्णनपूर्वकं तस्य राजासनारोहणार्हत्वप्रतिपादनम् ॥ ३ ॥

वैशंपायन उवाच ।
ततो द्वितीये दिवसे भ्रातरः पञ्च पाण्डवाः ।
स्नाताः शुक्लाम्बरधराः सर्वे सुचरितव्रताः ॥ १
युधिष्ठिरं पुरस्कृत्य सर्वाभरणभूषिताः ।
अभिपन्ना महाभागा भ्राजमाना महारथाः ॥ २
विराटस्य सभां प्राप्य भूमिपालासनेषु ते ।
निषेदुः पावकप्रख्याः सत्रे धिष्ण्येष्विवाग्नयः ॥ ३
तेषु तत्रोपविष्टेषु विराटः पृथिवीपतिः ।
तस्यां रात्र्यां व्यतीतायां प्रातःकृत्यं समाप्य च ॥ ४
गोसुवर्णादिकं दत्त्वा ब्राह्मणेभ्यो यथाविधि ।
आजगाम सभां राजा उत्तरेण सह प्रभो ॥ ५
स तान्दृष्ट्वा महासत्वाञ्ज्वलतः पावकानिव ।
राजवेषाननुपादाय पार्थिवो विस्मितोऽभवत् ॥ ६
किमिदं को विधिस्त्वेष भयार्त इव पार्थिवः ।
पुरुषप्रवरान्दृष्ट्वा विषादमगमन्नृपः ॥ ७
अथ मात्स्योऽब्रवीत्कङ्कं देवराजमिव स्थितम् ।
मरुद्गणैरुपासीनं त्रिदशानामिवेश्वरम् ॥ ८
स किलाक्षनिवापस्त्वं सभास्तारो मया कृतः ।
अथ राजासने कस्मादुपविष्टोऽस्यलंकृतः ॥ ९
वैशंपायन उवाच ।
परिहासेच्छया राज्ञो विराटस्य निशम्य तत् ।
स्मयमानोऽब्रवीद्वाक्यमर्जुनः परवीरहा ॥ १०
इन्द्रस्यार्धासनं राजन्नयमारोढुमर्हति ।
ब्रह्मण्यः श्रुतवांस्त्यागी सर्वलोकाभिपूजितः ॥ ११
एष विग्रहवान्धर्म एष वीर्यवतां वरः ।
एष बुद्ध्याधिको लोके तपसां च परायणम् ॥ १२
एषोऽस्त्रं विविधं वेत्ति त्रैलोक्ये सचराचरे ।
न चैवान्यः पुमान्वेत्ति न वेत्स्यति कदाचन ॥ १३
न देवा नासुराः केचिन्न मनुष्या न राक्षसाः ।
गन्धर्वयक्षप्रवराः सकिन्नरमहोरगाः ॥ १४
दीर्घदर्शी महातेजाः पौरजानपदप्रियः ।
पाण्डवानामतिरथो यज्ञधर्मपरो वशी ॥ १५
महर्षिकल्पो राजर्षिः सर्वलोकेषु विश्रुतः ।
बलवान्धृतिमान्दक्षः सत्यवादी जितेन्द्रियः ॥ १६
धनैश्च संचयैश्चैव शक्रवैश्रवणोपमः ।
यथा मनुर्महातेजा लोकानां परिरक्षिता ।
एवमेव महातेजाः प्रजानुग्रहकारकः ॥ १७
अयं कुरूणामृषभः कुन्तीपुत्रो युधिष्ठिरः ।
यस्य कीर्तिः स्थिता लोके सूर्यस्येवोद्यतः प्रभा ॥ १८
संसरन्ति दिशः सर्वा यशसोऽस्य गभस्तयः ।
उदितस्येव सूर्यस्य तेजसोऽनुगभस्तयः ॥ १९
एनं त्रिंशत्सहस्राणि कुञ्जराणां तरस्विनाम् ।
अन्वयुः पृष्ठतो राजन्यावदध्यावसत्कुरून् ॥ २०
त्रिंशच्चैव सहस्राणि रथानां रथिनां वरम् ।
सदश्वैरुपसंपन्नाः पृष्ठतोऽनुययुस्तदा ॥ २१
वाजिनां च शतं राजन्सहस्राण्ययुतानि च ।
इममष्टशतं सूताः सुमृष्टमणिकुण्डलाः ।
तुष्टुवुर्मागधैः सार्धं पुरा शक्रमिवर्षयः ॥ २२
इमं नित्यमुपातिष्ठन्कुरवः किंकरास्तदा ।
सर्वे च नृप राजानं धनेश्वरमिवामराः ॥ २३
एष सर्वान्महीपालान्करमाहारयत्तदा ।
वैश्यानिव महाराज विवशान्स्ववशानपि ॥ २४
अष्टाशीतिसहस्राणि स्नातकानां महात्मनाम् ।
उपजीवन्ति राजानमेनं सुचरितव्रताः ॥ २५
एष वृद्धाननाथांश्च व्यङ्गान्पङ्गूंश्च वामनान् ।
पुत्रवत्पालयामास प्रजाधर्मेण चाभिभूः ॥ २६

. राजवेषाऽनुपादाय स्थितानिति शेषः ॥ ६ ॥

चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

एष धर्मे दमे चैव दाने सत्ये रतः सदा ।
महाप्रसादो ब्रह्मण्यः सत्यवादी च पार्थिवः २७
श्रीमत्संपत्प्रभावेन तप्यते यस्य कौरवः ।
सगणः सह कर्णेन सौबलेन च वीर्यवान् ॥२८
गुणा न शक्याः संख्यातुमेतस्यैव नरेश्वर ।
एष धर्मपरो नित्यमनृशंसः सुशीलवान् ॥ २९
एवं युक्तो महाराजा पाण्डवः पुरुषर्षभः ।
कथं नार्हति राजार्हमासनं पृथिवीपतिः ॥ ३०

॥ इति श्रीमन्महाभारते विराटपर्वणि वैवाहिकपर्वणि चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

## पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

अर्जुनेन विराटप्रश्नाद्बल्लादीनां भीमसेनादित्वकथनम् ॥ १ ॥ उत्तरेण विराटंप्रति तत्तल्लक्षणाभिधानपूर्वकं युधिष्ठिरादीनां निर्देशः ॥ २ ॥ तथाऽर्जुनपराक्रमवर्णनम् ॥ ३ ॥ ततो विराटेन सप्रणामं युधिष्ठिरादिप्रसादनम् ॥ ४ ॥

विराट उवाच ।
यद्येष राजा कौरव्यः कुन्तीपुत्रो युधिष्ठिरः ।
कतमोऽस्यार्जुनो भ्राता भीमश्च कतमो बली ॥१
नकुलः सहदेवो वा द्रौपदी वा यशस्विनी ।
यदा ह्यक्षैर्जिता ह्येते नान्तरा श्रूयते कथा ॥ २
अर्जुन उवाच ।
य एष बल्लोऽभूत्ते सूपकारश्च ते नृप ।
एष भीमो महाभाग भीमवेगपराक्रमः ॥ ३
एष क्रोधवशान्हत्वा पर्वते गन्धमादने ।
सौगन्धिकानि पुष्पाणि कृष्णार्थे समुपानयत् ॥४
गन्धर्वं एष वै हन्ता कीचकानां दुरात्मनाम् ।
व्याघ्रानृक्षान्गजांश्चैव हतवांश्च पुरे तव ॥ ५
हिडिम्बं च बकं चैव किर्मीरं च जटासुरम् ।
हत्वा निष्कण्टकं चक्रे अरण्यं सर्वतः शुभम् ॥६
यश्चासीदश्वबन्धस्ते नकुलोऽयं परन्तप ।
गोसङ्ख्यः सहदेवश्च माद्रीपुत्रौ महाबलौ ॥ ७
शृङ्गारवेषाभरणौ रूपवन्तौ मनस्विनौ ।
नानारथसहस्राणां समर्थौ भरतर्षभौ ॥ ८
एषा पद्मपलाशाक्षी सुमध्या चारुहासिनी ।
सैरन्ध्री द्रौपदी राजन्यत्कृते कीचका हताः ॥९
द्रुपदस्य प्रिया पुत्री धृष्टद्युम्नस्य चानुजा ।
अग्निकुण्डात्समुद्भूता द्रौपदी त्ववगम्यताम् ॥१०
भीम उवाच ।
अस्त्रज्ञो दुर्लभः कश्चित्केवलं पृथिवीमनु ।
धनुर्भृतामतिश्रेष्ठः कौन्तेयोयं धनंजयः ॥ ११
एतेन खाण्डवं तस्य ह्यकामस्य शतक्रतोः ।
दग्धं नागवनं चैव सह नागैर्नराधिप ॥ १२
वर्षं च शरवर्षेण वारितं दुर्जयेन वै ।
करमाहारिताः सर्वे पार्थिवाः पृथिवीतले ॥ १३
स्त्रीवेषं कृतवानेष तव राजन्निवेशने ।
बृहन्नलेति यामाहुरर्जुनं जयतांवरम् ॥ १४
उषिताःस्म सुखं सर्वे तव राजन्निवेशने ।
अज्ञातवासे निभृता गर्भवास इव प्रजाः ॥ १५
वैशंपायन उवाच ।
यदाऽर्जुनेन ते वीराः कथिताः पञ्च पाण्डवाः ।
पुनरेव च तान्पार्थान्दर्शयामास चोत्तरः ॥ १६
उत्तर उवाच ।
य एष जाम्बूनदशुद्धगौर-
तनुर्महान्सिंह इव प्रवृद्धः ।
प्रचण्डघोणः पृथुदीर्घनेत्र-
स्ताम्रायताक्षः कुरुराज एषः ॥ १७
अयं पुनर्मत्तगजेन्द्रगामी
प्रतप्तचामीकरशुद्धगौरः ।
पृथ्वायतांसो गुरुदीर्घबाहु-
र्वृकोदरः पश्यत पश्यतैनम् ॥ १८
यस्त्वेव पार्श्वेऽस्य महाधनुष्मा-
ञ्श्यामो युवा वारणयूथपोपमः ।
सिंहोन्नतांसो गजराजगामी
पद्मायताक्षोऽर्जुन एष वीरः ॥ १९

राज्ञः समीपे पुरुषोत्तमौ तु
यमाविमौ विष्णुमहेन्द्रकल्पौ ।
मनुष्यलोके सकले समोऽस्ति
ययोर्न रूपे न बले न शीले ॥ २०
आभ्यां तु पार्श्वे कनकोत्तमाङ्गी
यैषा प्रभा मूर्तिमतीव गौरी ।
नीलोत्पलाभा सुरदेवतेव
कृष्णा स्थिता मूर्तिमतीव लक्ष्मीः ॥ २१
वैशंपायन उवाच ।
एवं निवेद्य तान्पार्थान्पाण्डवान्पञ्च भूपतेः ।
ततोऽर्जुनस्य वैराटिः कथयामास विक्रमम् ॥ २२
अयं स द्विषतां मध्ये मृगाणामिव केसरी ।
अचरद्रथवृन्देषु निघ्नंस्तेषां परावरान् ॥ २३
अनेन विद्धा मातङ्गा महामेघोपमास्तदा ।
हिरण्यकक्ष्याः संग्रामे दन्ताभ्यामगमन्महीम् २४
अनेन विजिता गावो निर्जिताः कुरवो युधि ।
अस्य शङ्खस्य शब्देन कर्णौ मे बधिरीकृतौ ॥२५
जायते रोमहर्षो मे संस्मृत्यास्य धनुर्ध्वनिम् ।
ध्वजस्य वानरं भूतैराक्रोशन्तं सहानुगैः ॥ २६
नाददानं शरान्घोरान्न मुञ्चन्तं शरोत्करान् ।
न कार्मुकं विकर्षन्तमेनं पश्यामि संयुगे ॥ २७
एतद्धनुःप्रमुक्ताश्च शराः पुङ्खानुपुङ्खिनः ।
नालक्ष्येषु रणे पेतुर्नाराचा रक्तभोजनाः ॥ २८
तीक्ष्णनाराचसंकृत्तशिरोबाहूरुवक्षसाम् ।
कलेबराणि दृश्यन्ते योधानां साश्वसादिनां ॥२९
अनेन तटिनी तत्र शोणिताम्बुप्रवाहिनी ।
प्रवर्तिता भीमरूपा यां स्मृत्वाऽद्यापि मे मनः ।
प्रकम्पते चण्डवायुकम्पिता कदली यथा ॥ ३०
अनेन राजन्वीरेण भीष्मद्रोणमुखा रथाः ।
दुर्योधनेन सहिता निर्जिता भीमकर्मणा ॥ ३१
अयं भीतं द्रवन्तं मां देवपुत्रो न्यवारयत् ।
यस्य बाहुबलेनास्मि जीवन्प्रत्यागतः पुरम् ॥ ३२
वैशंपायन उवाच ।
तस्य तद्वचनं श्रुत्वा मात्स्यराजः प्रतापवान् ।
धनंजयं परिष्वज्य पाण्डवानथ सर्वशः ॥ ३३
धर्मराजं नमस्कृत्य राजा राज्येऽभिषेचितम् ।
नातृप्यद्दर्शने तेषां विराटो वाहिनीपतिः ॥ ३४
संप्रीयमाणो राजानं युधिष्ठिरमथाब्रवीत् ।
दिष्ट्या भवन्तः संप्राप्ताः सर्वे कुशलिनो वनात् ।
दिष्ट्या विचरितं कृच्छ्रमज्ञातं च दुरात्मभिः ३५
इदं राज्यं च वः सर्वं यच्चापि वसु किंचन ।
विभक्तमेतद्भवतां नोत्कण्ठां कर्तुमर्हथ ।
अविभक्तं भवद्भिर्मे न सन्देहो नराधिपाः ॥३६

॥ इति श्रीमन्महाभारते विराटपर्वणि वैवाहिकपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

## षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

उत्तरेण विराटंप्रति युधिष्ठिरादिकृतोपकारस्मारणपूर्वकमुत्तरायाः प्रदानेन तत्प्रसादनचोदना ॥ १ ॥ युधिष्ठिरेणोत्तरायाः पुरस्कारेण सप्रणामं प्रसादयते विराटायाभयप्रदानम् ॥ २ ॥

वैशंपायन उवाच ।
विराटस्य वचः श्रुत्वा पार्थिवस्य महात्मनः ।
उत्तरः प्रत्युवाचेदमभिपन्नो युधिष्ठिरे ॥ १
प्रसादनं प्राप्तकालं पाण्डवस्याभिरोचये ।
तेजस्वी बलवाञ्शूरो राजराजेश्वरः प्रभुः ॥ २
उत्तरां च स्वसारं मे पार्थस्यामित्रकर्शन ।
प्रणिपत्य प्रयच्छामस्ततः शिष्टा भवामहे ॥ ३
वयं च सर्वे सामात्याः कुन्तीपुत्रं युधिष्ठिरम् ।
प्रसाद्याभ्युपतिष्ठामो राजन्किं करवामहे ॥ ४
राजंस्त्वमसि संग्रामे गृहीतस्तेन मोक्षितः ।
एतेषां बाहुवीर्येण गावश्च विजितास्त्वया ॥ ५
कुरवो निर्जिता यस्मात्संग्रामेऽमिततेजसः ।

अभिपन्नोऽपराधं कृतवान् ॥ १ ॥ ततस्तुष्टा भवन्तु ते इति थ. पाठः ॥ ३ ॥ षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

एष तत्सर्वमकरोत्कुन्तीपुत्रो युधिष्ठिरः ॥ ६
अर्च्याः पूज्याश्च मान्याश्च प्रत्युत्थेयाश्च पाण्डवाः।
अर्घार्हाश्चाभिवाद्याश्च प्राप्तकालं च मे मतम् ॥ ७
पूज्यतां पूजनीयाश्च महाभागाश्च पाण्डवाः ।
न ह्येते कुपिता शेषं कुर्युराशीविषोपमाः ॥ ८
तस्माच्छीघ्रं प्रपद्येम कुन्तीपुत्रं युधिष्ठिरम् ।
प्रसादयाम्यहं तत्र सह पार्थैर्महात्मभिः ॥ ९
उत्तरामग्रतः कृत्वा शिरःस्नातां कृताञ्जलिः ।
जानाम्यहमिदं सर्वमेषां तु बलपौरुषम् ।
कुले च जन्म महति फल्गुनस्य च विक्रमम् ॥१०
वैशंपायन उवाच ।
उत्तरात्पाण्डवाञ्श्रुत्वा विराटो रिपुसूदनः ।
उत्तरं चापि संप्रेक्ष्य प्राप्तकालमचिन्तयत् ॥ ११
ततो विराटः सामात्यः सहपुत्रः सबान्धवः ।
उत्तरामग्रतः कृत्वा शिरःस्नातां कृताञ्जलिः ।
भूमौ निपतितस्तूर्णं पाण्डवस्य समीपतः ॥ १२
विराट उवाच ।
प्रसीदतु महाराजो धर्मपुत्रो युधिष्ठिरः ।
प्रच्छन्नरूपवेषत्वान्नाग्निर्दृष्टस्तृणैर्वृतः ॥ १३
शिरसाऽभिमपन्नोसि सपुत्रपरिचारकः ॥ १४
यदस्माभिरजानद्भिरधिक्षिप्तो महीपतिः ।
अवमत्य कृतं सर्वमज्ञानात्प्राकृते यथा ।
क्षन्तुमर्हसि तत्सर्वं धर्मज्ञो धर्मवत्सल ॥ १५
यदिदं मामकं राष्ट्रं पुरं राज्यं च पार्थिव ।
सदण्डकोशं विसृजे तव वश्योस्मि पार्थिव ।
वयं च सर्वे सामात्या भवन्तं शरणं गताः ॥ १६
वैशंपायन उवाच ।
तं धर्मराजः पतितं महीतले
सबन्धुवर्गं प्रसमीक्ष्य पार्थिवम् ।
उवाच वाक्यं परलोकदर्शनः
प्रनष्टमन्युर्गतशोकमत्सरः ॥ १७
न ते भयं पार्थिव विद्यते मयि
प्रतीतरूपोस्म्यनुचिन्त्य मानसम् ।
एतत्त्वया सम्यगिहोपपादितं
द्विजैरमात्यैः सदशैश्च पाण्डितैः ।
इमां च कन्यां समलंकृतां भृशं
समीक्ष्य तुष्टोसि नरेन्द्रसत्तम ॥ १८
क्षान्तमेतन्महाबाहो यन्मां वदसि पार्थिव ।
न चैव किंचित्पश्यामि विकृतं ते नराधिप ॥ १९
वैशंपायन उवाच ।
ततो विराटः परमाभितुष्टः
समेत्य राज्ञा समयं चकार ।
राज्यं च सर्वं विससर्ज तस्मै
सदण्डकोशं सपुरं महात्मा ॥ २०

॥ इति श्रीमन्महाभारते विराटपर्वणि वैवाहिकपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

## सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

विराटेनार्जुनंप्रति स्वकुमार्या उत्तराया भार्यात्वेन प्रतिग्रहणप्रार्थने तंप्रत्यर्जुनेन सहेतुकथनं स्नुषात्वेन परिग्रहाङ्गीकरणम् ॥ १ ॥ दुर्योधनेन युधिष्ठिरंप्रति दूतमुखेन त्रयोदशवत्सरस्यासंपूर्तौवेवार्जुनेनात्मप्रकाशनात्पुनर्वनवासविधेयतानिवेदनम् ॥ २ ॥ युधिष्ठिरेण तंप्रति तेनैव दूतेन भीष्ममुखात्संदेहस्य परिहरणीयताप्रतिवेदनम् ॥ ३ ॥ भीष्मेण विचार्य निर्धारणपूर्वकं संकेतकालस्य पूर्णत्वोक्तिः ॥ ४ ॥

विराट उवाच ।
यच्च वक्ष्याम्यहं तेऽद्य मा शङ्केथा युधिष्ठिर ।
इदं सनगरं राष्ट्रं सजनं सवधूजनम् ।
युष्मभ्यं संप्रदास्यामि भोक्ष्याम्युच्छिष्टमेव च ॥१
अहं वृद्धश्चिरं राजन्भुक्तभोगश्चिरं सुखम् ।
राज्यं दत्त्वा तु युष्मभ्यं प्रव्रजिष्यामि काननम् ॥२
उत्तरां प्रतिगृह्णातु सव्यसाची धनंजयः ।
अयं ह्यौपयिको भर्ता तस्याः पुरुषसत्तमः ॥ ३
वैशंपायन उवाच ।
एवमुक्तो धर्मराजः पार्थमैक्षद्धनंजयम् ।

ईक्षितं चार्जुनो ज्ञात्वा मात्स्यं वचनमब्रवीत् ॥ ४
वयं वनान्तरात्प्राप्ता न ते राज्यं गृहामहे ।
किंतु दुर्योधनादीनां राज्ञां राज्यं गृहामहे ॥ ५
प्रतिगृह्णाम्यहं राजन्स्नुषां दुहितरं तव ।
युक्तो ह्यावां हि संबन्धो मात्स्यभारतवंशयोः ६
विराट उवाच ।
किमर्थं पाण्डवश्रेष्ठ भार्यां दुहितरं मम ।
प्रतिग्रहीतुं नेमां त्वं मया दत्तमिहेच्छसि ॥ ७
अर्जुन उवाच ।
अन्तःपुरेऽहमुषितः सदा पश्यन्सुतां तव ।
रहस्यं च प्रकाशं च विश्वस्ता पितृवन्मयि ॥ ८
प्रियो बहुमतश्चाहं नर्तने गीतवादिते ।
आचार्यवच्च मां नित्यं मन्यते दुहिता तव ॥ ९
वयस्थया तया राजन्सह संवत्सरोषितः ।
अतिशङ्का ततोऽस्थाने तव लोकस्य च प्रभो ॥१०
तस्मादामन्त्रये त्वाऽद्य पुत्रार्थं मे विशांपते ।
शुद्धं जितेन्द्रियं मन्ये तस्याः शुद्धिः कृता मया ११
स्नुषायां दुहितुर्वापि पुत्रे चात्मनि वा पुनः ।
अतिशङ्कां न पश्यामि तेन शुद्धिर्भविष्यति ॥१२
अभिषङ्गादहं भीतो मिथ्याचारात्परंतप ।
स्नुषार्थमुत्तरां राजन्प्रतिगृह्णामि ते सुताम् ॥ १३
स्वस्रीयो वासुदेवस्य साक्षाद्देवसुतो यथा ।
दयितश्चक्रहस्तस्य बलवानस्त्रकोविदः ॥ १४
अभिमन्युर्महाबाहुः पुत्रो मम विशांपते ।
जामाता तव युक्तो वै भर्ता च दुहितुस्तव ॥ १५
विराट उवाच ।
उपपन्नं कुरुश्रेष्ठे कुन्तीपुत्रे धनंजये ।
सदैव धर्मनित्यश्च ज्ञातज्ञानश्च पाण्डवः ॥ १६
यत्कृत्यं मन्यसे पार्थ क्रियतां तदनन्तरम् ।
सर्वे कामाः समृद्धा मे संबन्धी यस्य मेऽर्जुनः ॥
वैशंपायन उवाच ।
एवं ब्रुवति राजेन्द्रे कुन्तीपुत्रो युधिष्ठिरः ।
अन्वजानत संबन्धं समये कृष्णमात्स्ययोः ॥१८

आवां आवयोः ॥ ६ ॥ सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

दूतान्सर्वेषु मित्रेषु वासुदेवे च भारत ।
प्रेषयामास कौन्तेयो विराटश्च महीपतिः ॥ १९
प्रतिगृह्य स्नुषार्थं वै दर्शयन्व्रतमात्मनः ।
शीलशौचसमाचारं लोकस्यावेद्य फल्गुनः ॥ २०
लोके विख्याप्य माहात्म्यं यशश्च स परंतपः ।
कृतार्थः शुचिरव्यग्रस्तुष्टिमानभवत्तदा ॥ २१
युधिष्ठिर उवाच ।
राजन्प्रीतोसि भद्रं ते सखा मेऽसि परन्तप ।
सुखमध्युषिताः सर्वे अज्ञातास्त्वयि पार्थिव ॥२२
वैशंपायन उवाच ।
विराटनगरे राजा धर्मात्मा संशितव्रतः ।
पूजितश्चाभिषिक्तश्च रत्नैश्च शतशोर्चितः ॥ २३

तथा ब्रुवन्तं प्रसमीक्ष्य राजा
परं प्रहृष्टः स्वजनेन तेन ।
स्नेहात्परिष्वज्य नृपो भुजाभ्यां
ददौ महार्थं कुरुपाण्डवानाम् ॥ २४
युद्धात्प्रयाताः कुरवो हि मार्गे
समेत्य सर्वे हितमेव तत्र ।
आचार्यपुत्रः शकुनिश्च राजा
दुर्योधनः सूतपुत्रश्च कर्णः ।
संमन्त्र्य राजन्सहिताः समर्थाः
समादिशन्दूतमथो समग्राः ॥ २५
युधिष्ठिरश्चापि सुसंप्रहृष्टो
दुर्योधनाद्दूतमपश्यदागतम् ।
स चाब्रवीद्धर्मराजं समेत्य
युधिष्ठिरं पाण्डवमुग्रवीर्यम् ॥ २६
धनञ्जयेनासि पुनर्वनाय
प्रव्राजितः समये तिष्ठ पार्थ ।
त्रयोदशे ह्येव किरीटमाली
संवत्सरे पाण्डवेयोऽद्य दृष्टः ॥ २७
वैशंपायन उवाच ।
ततोऽब्रवीद्धर्मसुतः प्रहस्य
क्षिप्रं गत्वा ब्रूहि सुयोधनं तम् ।
पितामहः शान्तनवो ब्रवीतु
पूर्णो न पूर्णोऽद्य त्रयोदशो नः ॥ २८

संवत्सरान्ते तु धनञ्जयेन
विष्फारितं गाण्डिवमाजिमध्ये ।
पूर्णो न पूर्णो न इति ब्रवीतु
यदस्य सत्यं मम तत्प्रमाणम् ॥ २९
तेनैवमुक्तः स निवृत्य दूतो
दुर्योधनं प्राप्य शशंस तत्त्वम् ॥ ३०
समेत्य दूतेन स राजपुत्रो
दुर्योधनो मन्त्रयामास तत्र ।
भीष्मेण कर्णेन कृपेण चैव
द्रोणेन भूरिश्रवसा च सार्धम् ॥ ३१
संमन्त्र्य रात्रौ बहुभिः सुहृद्भि-
र्भीष्मोऽब्रवीद्धार्तराष्ट्रं महात्मा ।
तीर्णप्रतिज्ञेन धनंजयेन
विष्फारितं गाण्डिवमाजिमध्ये ॥ ३२
वैशंपायन उवाच ।
नेच्छन्त्यसत्येन सुरेन्द्रलोकं
पाण्डोः सुता ब्रह्मणश्चापि लोकम् ।
तथ्यं च ते पथ्यमहं ब्रवीमि
स्वर्ग्यं यशस्यं परलोकपथ्यम् ॥ ३३
कुन्तीसुतैस्त्वं समुपैहि सन्धिं
भुङ्क्ष्व स्वराज्यं सह पाण्डवेयैः ।
युध्यस्व नोचेत्स्थिरबुद्धिराजौ
कुन्तीसुतैर्यद्यपि राज्यमिच्छेः ॥ ३४
आन्तं न शक्यं कपटेन भोक्तुं
राज्यं परेषां महतां बलीनाम् ।
जित्वा शत्रून्भुङ्क्ष्व राज्यं समग्रं
हतो भवान्भोक्ष्यति वत्रिलोकम् ॥ ३५
वैशंपायन उवाच ।
ततः स भागीरथिसूनुवाक्यं
निशम्य गान्धारितनूद्भवो नृपः ।
उवाच भीष्मं प्रमुखे च पित्रो-
र्महीं न दद्यामणुमात्रिकामपि ।
निहन्मि पाण्डूदरसंभवान्वा
हतोस्मि तैर्वा सुरलोकमेमि ॥ ३६
ते धार्तराष्ट्राः समयं निशम्य
तीर्णप्रतिज्ञस्य धनंजयस्य ।
संचिन्त्य सर्वे सहिताः सुहृद्भिः
सपार्थिवाः स्वानि गृहाणि जग्मुः ॥ ३७

॥ इति श्रीमन्महाभारते विराटपर्वणि वैवाहिकपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

---

## अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

अज्ञातवासपरिसमापनानन्तरमुपप्लाव्यनगरे वसद्भिः पाण्डवैर्दूतमुखेन समाहूतैः रामकृष्णादिभिः सुभद्राभिमन्युप्रभृतिभिः सहोपप्लाव्यं प्रत्यागमनम् ॥ १ ॥ तथा द्रौपदेयादिभिः सह द्रुपदादिभिरागमनम् ॥ २ ॥ तत उत्तरयाऽभिमन्योरुद्वाहः ॥ ३ ॥

---

वैशंपायन उवाच ।
ततस्त्रयोदशे वर्षे निवृत्ते पञ्च पाण्डवाः ।
उपप्लाव्ये विराटस्य वासं चक्रुः पुरोत्तमे ॥ १
दूतान्मित्रेषु सर्वेषु ज्ञातिसंबन्धिकेष्वपि ।
प्रेषयामास कौन्तेयो विराटश्च महीपतिः ॥ २
तेषु तत्रोपविष्टेषु प्रेषितेषु ततस्ततः ।
तत्रागमन्महाबाहुर्वनमाली बलानुजः ॥ ३
तस्मिन्काले निशम्याथ दूतवाक्यं जनार्दनः ।
दयितं स्वस्रियं पुत्रं सुभद्रायाः सुमानितम् ।
अभिमन्युं समादाय रामेण सहितस्तदा ॥ ४
सर्वयादवमुख्यैश्च संवृतः परवीरहा ।
शङ्खदुन्दुभिनिर्घोषैर्विराटनगरं ययौ ॥ ५
कृतवर्मा च हार्दिक्यो युयुधानश्च सात्यकिः ।
अनाधृष्टिस्तथाऽक्रूरः सांबो निशठ एव च ।
प्रद्युम्नश्च महाबाहुरुल्मुकश्च महाबलः ॥ ६
अभिमन्युमुपादाय सह मात्रा परन्तपाः ।
कृष्णेन सहिताः सर्वे पाण्डवान्द्रष्टुमागताः ॥ ७
इन्द्रसेनादयश्चैव रथैस्तैः सुसमाहितैः ।

उपेयुः सहिताः सर्वे परिसंवत्सरोषिताः ॥ ८
दशनागसहस्राणि हयानां द्विगुणं तथा ।
रथानां नियुतं पूर्णं निखर्वं च पदातयः ॥ ९
वृष्ण्यन्धकाश्च शतशो भोजाश्च परमौजसः ।
अन्वयुर्वृष्णिशार्दूलं वासुदेवं महाबलम् ॥ १०
वासुदेवं तथाऽऽयान्तं श्रुत्वा पाण्डुसुतास्तदा ।
मात्स्येन सहिताः सर्वे प्रत्युद्याता जनार्दनम् ११
शङ्खदुन्दुभिनिर्घोषैर्मङ्गलैश्च जनार्दनम् ।
ववन्दुर्मुदिताः सर्वे पादयोस्तस्य पाण्डवाः ।
मात्स्येन सहिताः सर्वे आनन्दाश्रुपरिप्लुताः॥ १२
पाण्डवा ऊचुः ।
तव कृष्ण प्रसादाद्वै वर्षाण्येतानि सर्वशः ।
त्रयोदशोपि दाशार्ह यथा स समयः कृतः ॥१३
उषिताः स्मो जगन्नाथ त्वं नाथो नो जनार्दन ।
रक्षस्व देवदेवेश त्वामार्य शरणं गताः ॥ १४
वैशंपायन उवाच ।
तान्वन्दमानान्सहसा परिष्वज्य जनार्दनः ।
विराटस्य सहायांस्तान्सर्वयादवसंवृतः ॥ १५
यथार्हं पूजयामास मुदा परमया युतः ।
वृष्णिवीराश्च तान्सर्वान्यथार्हं प्रतिपेदिरे ॥ १६
कृष्णा च देवकीपुत्रं ववन्दे पादयोस्तथा ।
तामुद्यम्य सुकेशान्तां नयने परिमृज्य च ।
उवाच वाक्यं देवेशः सर्वयादवसन्निधौ ॥ १७
मा शोकं कुरु कल्याणि धार्तराष्ट्रान्समाहितान् ।
अचिराद्घातयित्वाऽहं पार्थेन सहितः क्षितिम्॥१८
युधिष्ठिराय दास्यामि यातु ते मानसो ज्वरः ।
अभिमन्युना च पार्थेन रौक्मिणेयेन ते शपे ॥ १९
सत्यमेतद्वचो मह्यमवेहि त्वमनिन्दिते ।
इत्युक्त्वा तां विसृज्याथ प्रीयमाणो युधिष्ठिरम् ।
अन्वास्त वृष्णिशार्दूलः सह वृष्ण्यन्धकैस्तथा ॥२०
काशिराजश्च शैब्यश्च भजमानौ युधिष्ठिरम् ।
अक्षौहिणीभ्यां सहितावागतौ पृथिवीपती ॥२१
अक्षौहिणीभिः पाञ्चालस्तिसृभिश्च महाबलः ।
द्रौपद्याश्च सुता वीराः शिखण्डी चापराजितः॥२२
धृष्टद्युम्नश्च दुर्धर्षः सर्वशस्त्रभृतांवरः ।
उपप्लाव्यं ययुः शीघ्रं पाण्डवार्थे महाबलाः ॥ २३
ततः शतसहस्राणि प्रयुतान्यर्बुदानि च ।
समीपमभिवर्तन्ते योधा यौधिष्ठिरं बलम् ॥ २४
समुद्रमिव घर्मान्ते स्रोतःश्रेष्ठाः पृथक्पृथक् ।
आपूरयन्महीपाला यज्वानो भूरिदक्षिणैः ।
वेदावभृथसंपन्नाः शूराः सर्वे तनुत्यजः ॥ २५
तानागतानभिप्रेक्ष्य पार्थो ज्ञानभृतां वरः ।
पूजयामास विधिवद्यथार्हं राजसत्तमान् ॥ २६
पारिबर्हं ददौ कृष्णः पाण्डवानां महात्मनाम् ।
स्त्रियो वासांसि रत्नानि पृथक्पृथगनेकशः ॥ २७
राजानो राजपुत्राश्च निवृत्ते समये तथा ।
यथार्हं पाण्डवश्रेष्ठैरवर्तन्ताभिपूजिताः ।
आसन्प्रहृष्टमनसः पारिबर्हं ददुस्तदा ॥ २८
सर्वेषु समवेतेषु राजभिर्वृष्णिभिः सह ।
विवाहो विधिवद्राजन्ववृधे कुरुमात्स्ययोः ॥ २९
ततः शङ्खा मृदङ्गाश्च गोमुखा डिण्डिमास्तदा ।
अभिमन्योर्विवाहे तु नेदुर्मात्स्यस्य वेश्मनि॥ ३०
उच्चावचान्मृगाञ्जघ्नुर्मेध्यांश्च शतशस्तथा ।
भक्ष्यान्नभोज्यपानानि प्रभूतान्यभ्यहारयन्॥३१
गायनाख्यानशीलाश्च नटा वैतालिकास्तथा ।
स्तुवन्तस्तानुपातिष्ठन्सूताश्च सह मागधैः ॥ ३२
स्त्रियो वृद्धास्तरुण्यश्च उत्सवे तस्य मङ्गले ।
द्रौपद्यन्तःपुरे चैव विराटस्य गृहे स्त्रियः ॥ ३३
सुदेष्णां तु पुरस्कृत्य मत्स्यानामपि च स्त्रियः ।
आजग्मुश्चारुपीनाङ्ग्यः सुमृष्टमणिकुण्डलाः ॥ ३४
वर्णोपपन्नास्ता नार्यो रूपवत्यः स्वलंकृताः ।
सर्वासामभवत्कृष्णा रूपेण वपुषाऽधिका ॥ ३५
परिवार्योत्तरां श्लाघ्यां राजपुत्रीमलंकृताम् ।
सुतामिव महेन्द्रस्य पुरस्कृत्योपतस्थिरे ॥ ३६
भृङ्गारुं तु समादाय सौवर्णं जलपूरितम् ।
पार्थस्य हस्ते सहसा सुतामिन्दीवरेक्षणाम् ।
स्नुषार्थे प्राक्षिपद्द्वारि विराटो वाहिनीपतिः ॥३७
तां प्रत्यगृह्णात्कौन्तेयः सुतस्यार्थे महामनाः ।

सौभद्रश्चानवद्याङ्गो विराटतनयां तदा ॥ ३८
तत्रातिष्ठद्गृहीत्वा तु रूपमिन्द्रस्य धारयन् ।
स्नुषां तां परिगृह्णानः कुन्तीपुत्रो युधिष्ठिरः ॥ ३९
द्रुपदश्च विराटश्च शिखण्डी च महाबलः ।
युयुधानश्च शैब्यश्च धृष्टद्युम्नश्च सात्यकिः ॥ ४०
सप्तैतेऽक्षौहिणीपाला यज्वानो भूरिदक्षिणाः ।
पाण्डवं परिवार्यैते निवेशं चक्रिरे तदा ॥ ४१
तत्रस्थायां तु सेनायां मात्स्यो धर्मभृतांवरः ।
प्रीतो दुहितरं गृह्य प्रददावभिमन्यवे ॥ ४२
प्रतिगृह्योत्तरां पार्थः पुरस्कृत्य जनार्दनम् ।
विवाहं कारयामास सौभद्रस्य महात्मनः ॥ ४३
ततो विवाहो ववृधे स्फीतः सर्वगुणान्वितः ।
सौभद्रस्याद्भुतं कर्म पितुस्तव पितुस्तदा ॥ ४४
धौम्यः शिष्यैः परिवृतो जुहावाग्नौ विधानतः ।
अग्निं प्रदक्षिणीकुर्वन्सौभद्रः पाणिमग्रहीत् ॥ ४५
ततः पार्थाय संहृष्टो मात्स्यराजो धनं महत् ।
तस्मै शतसहस्राणि हयानां वातरंहसाम् ॥ ४६
द्वे च नागशते मुख्ये धनं बहुविधं तदा ।
प्रादान्मात्स्यपतिर्हृष्टः कन्याधनमनुत्तमम् ॥ ४७
पारिबर्हं च पार्थेभ्यः प्रददौ मत्स्यपुङ्गवः ।
कृष्णेन सह कौन्तेयः प्रत्यगृह्णात्प्रभूतवत् ॥ ४८
कृते विवाहे तु तदा धर्मपुत्रो युधिष्ठिरः ।
ब्राह्मणेभ्यो ददौ वित्तं यदुपाहरदच्युतः ॥ ४९
गोसहस्राणि वस्त्राणि रत्नानि विविधानि च ।
भूषणानि च सर्वाणि यानानि शयनानि च ॥ ५०
नागरान्प्रीतिभिर्दिव्यैस्तर्पयामास भूपतिः ॥ ५१
तन्महोत्सवसंकाशं हृष्टपुष्टजनाकुलम् ।
नगरं मत्स्यराजस्य शुशुभे भरतर्षभ ॥ ५२
पुरोहितैरमात्यैश्च पौरैर्जानपदैः सह ।
विराटो नृपतिः श्रीमान्सौभद्रायाभिमन्यवे ।
तां सुतामुत्तरां दत्त्वा मुमुदे परमं तदा ॥ ५३
जनमेजय उवाच ।
वृत्ते विवाहे हृष्टात्मा यदुवाच युधिष्ठिरः ।
तत्सर्वं कथयस्वेह कृतवन्तो यदुत्तरम् ॥ ५४

॥ इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां विराटपर्वणि वैवाहिकपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

वैवाहिकपर्व समाप्तम् ॥ ५ ॥ समाप्तं च विराटपर्व ॥ ४ ॥

---

अतः परमुद्योगपर्व भविष्यति । तस्यायमाद्यः श्लोकः ।

कृत्वा विवाहं तु कुरुप्रवीरा-
स्तदाऽभिमन्योर्मुदिताः सपक्षाः ।
विश्रम्य रात्रावुषसि प्रतीताः
सभां विराटस्य ततोऽभिजग्मुः ॥ १

इदं विराटपर्व कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शकाब्दाः १८३१ सन १९०९.